# RIGVEDA SAMHITA
# PADA TEXT



EDITED BY
G. R. JOSYER, M.A. F.R.E.S.
FELLOW MYSORE UNIVERSITY 1929-39.
EDITOR, YAJURVEDA 11 VOLS.

WITH THE AID OF PANDITS

CORONATION PRESS, CHAMARAJA ROAD, MYSORE.

Price Rs. 15.

# ऋग्वेदसंहितापदपाठः



महाविद्वद्भिः वेदरत्नं कृष्णावधानिभिः
वेदविद्वद्भिः किक्केरि सुब्रायशास्त्रिभिः वेङ्कटकृष्णभट्टैश्च
संशोधितः

मैसूर्महाराजास्थान ऋत्विग्वरेण्य
गोमठं श्रीनिवास ज्यौतिषिक तनूजेन
गोमठं रामानुज ज्यौतिषिकेण



मैसूर् राजधान्यां
कारोनेषन् मुद्रणालये मुद्रापितो विजयतेतराम्
१९४७

मूल्यं रूप्य 15.

# RIGVEDA SAMHITA
# PADA TEXT



EDITED BY

G. R. JOSYER, M.A., F.R.E.S.,

FELLOW, MYSORE UNIVERSITY 1929-39,

EDITOR, YAJURVEDA 11 VOLS.

WITH THE ASSISTANCE OF PANDITS

CORONATION PRESS, CHAMARAJA ROAD, MYSORE.

Price Rs. 15

श्रीमन्महाराज श्रीजयचामराजेन्द्र सार्वभौमः
जि.सि.बि., जि.सि.एस्.ऐ.



His Highness Sri Jayachamarajendra Wadiyar Bahadur,
G.C.B., G.C.S.I.,
Maharaja of Mysore.

# Foreword



The Bible, the Koran, the Talmud, the Zend-Avesta, are works of deep veneration to their followers. Compared with the "Rigveda", the sacred work of the Hindus, they are rather modern. Their origin is in the historic past, of a thousand, two thousand, or three thousand years. They do not date back to the dim distance of prehistoric antiquity. And, they are written records, not liable to be crippled, mangled, or interpolated.

But the Rigveda is the world's oldest religious composition. How old God alone knows. Professor Max-Muller, by guess-work, assumes that it should have come into being about 1000 B.C. Bal Gangadhar Tilak, cultured patriot, from astronomical evidence based on planetary conjunctions mentioned in the Rigveda, opines that the Rigveda should have been formulated between 6000 and 5000 B.C. According to him the marking of the changes in the position of heavenly bodies "is the best measurement of time for determining the periods of antiquity, only if we have reliable records about the position of heavenly bodies in early days; fortunately such records of the time, when the Hellenic, the Iranian, and the Indian Aryans lived together, have been preserved in the Rigveda, and with the help of Greek and Parsi traditions, we can now decipher these records."

Indian tradition, however, has always held that the Vedas were *Apourusheya*, or not man-made, and that the Rishis whose names are associated with the hymns are but their propagators. The ages of the Rishis are not known either. Great Sayana has written a thesis, cogent, eloquent, logical, to prove the Divine origin of the Vedas.

But be it 6000, 10000, or 100000 years old, the Rigveda presents the marvellous phenomenon of being handed down from generation to generation, from century to century, from æon to æon, by oral transmission. Over 10000 crystallised stanzas, word-perfect, letter-perfect, and accent-perfect, have been passed down from disciple to disciple, during all these years, in their pristine purity. Far later works, the Mahabharata, Ramayana, Geeta, have passed into several recensions, with additions and omissions. But the Rigveda has been unchanged and unchangeable, either by the hand of time, or by the remissness of reciters.

To ensure this the Rishis built four kinds of protective fortresses, or Maginot Lines, round the Rigveda, the Pada, Krama, Jata, and Ghana forms. The reciter was warned from mispronouncing it in its accented stanza form. Then the words in the stanzas were separated serially, and known as the Pada form, the student had to get them up too by heart. In Krama the separated words were strung together in the order, a b, b c, c d. In *Jata* the order of combination was a b b, a a b, b c c, b b c, and so on. And in *Ghana*, the most sonorous of the versions, the repetitions and combinations are more complex.

These four forms served as protective coatings to the original text, and any errors that cropped up in the reciting of the original could be checked up and corrected quickly by reference to these other forms.

In this publication we have sought to present the Pada Text for the use of Vedic students.

The *Suktas* or hymns of the Rigveda consist of prayer and praise, and describe the power, the vastness, the generosity, the goodness, and even the personal beauty of the Deity invoked.

The Deities invoked are three, Agni, or Fire, on the earth, Vayu, Wind, or Indra in the sky, and Surya or the Sun in heaven. Yaska, the Vedic writer, observes, "All the deities are but parts of one Atman or Soul, subservient to the diversification of his praises through the immensity and variety of his attributes." To the Rishis of the Rigveda, Indra only, or Agni, or Surya, or all of them, together with the Powers of Nature, did not complete the conception of God. Nor was any of them regarded as the Supreme Ruler of the Universe, Omniscient and Omnipotent. They represented merely the various energies of the All Powerful Providence manifested to humanity through diverse natural phenomena.

In the opinion of the European literary world "The Rigveda is the most sublime conception of the great high-ways of humanity," according to a French writer. "There is no monument of Greece or Rome more precious than the Rigveda," says another. And in the eloquent words of Max Muller, "In the history

of the world, the Vedas fill a gap which no literary work in any other language could fill. I maintain that to every-body who cares for himself, for his ancestors, for history, for his intellectual development, a study of Vedic literature is indispensable."

This publication was undertaken in order to meet the long-felt want of students and teachers of Sanskrit Colleges, who urged that the lack of the Pada text was hampering their studies, and that its publication would be a boon to them.

I have received generous help in the course of the undertaking from two illustrious quarters. The Dewan of Mysore, Pradhanashiromani N. Madhava Rao, C.I.E. on hearing of the venture readily granted a donation from Government, which facilitated the publication of the first volume. Amatyashiromani Sir. T. Thumboo Chetty, Kt. O.B.E., on being informed of the undertaking, was good enough to submit the facts to His Highness the Maharaja, who was graciously pleased to extend to it his generous support.

H. H. Sri Jayachamarajendra Wadiyar Bahadur, G.C.B., G.C.S.I., is the most illustrious of the Hindus belonging to the School of Rigveda. His scholarship, erudition, and broad-minded patronage of Arts and Letters are an inspiration to many of his subjects. My grateful thanks, and the thanks of all Vedic students, are due to His Highness for his timely and generous encouragement for the publication.

Pradhanashiromani N. Madhava Rao's ready support and the enlightened interest of Sir T. Thumboo Chetty, are worthy of all praise, and I tender to them my most sincere thanks.

MYSORE,
*1st July 1946.*

**G. R. Josyer,**
M.A. HONS.,
Member, Royal Society of Literature, Gt. Brn.,
Hon. Member and Medalist, Institut Historique de France, Paris,
Fellow, Mysore University 1929-39.
Editor, Yajurveda 11 Vols.

॥ श्रीः ॥

# ॥ अथ श्री ऋक्संहितापदपाठः ॥

## ॥ प्रथमाष्टके प्रथमाध्यायः ॥

॥ हरिः ॐ ॥ अग्निं । ईळे । पुरःऽहितं । यज्ञस्य । देवं । ऋत्विजं । होतारं । रत्नऽधातमं ॥ अग्निः । पूर्वेभिः । ऋषिऽभिः । ईड्यः । नूतनैः । उत । सः । देवान् । आ । इह । वक्षति ॥ अग्निना । रयिं । अश्नवत् । पोषं । एव । दिवेऽदिवे । यशसं । वीरवत्ऽतमं ॥ अग्ने । यं । यज्ञं । अध्वरं । विश्वतः । परिऽभूः । असि । सः । इत् । देवेषु । गच्छति ॥ अग्निः । होता । कविऽक्रतुः । सत्यः । चित्रश्रवःऽतमः । देवः । देवेभिः । आ । गमत् ॥ १ ॥ यत् । अंग । दाशुषे । त्वं । अग्ने । भद्रं । करिष्यसि । तव । इत् । तत् । सत्यं । अंगिरः ॥ उप । त्वा । अग्ने । दिवेऽदिवे । दोषाऽवस्तः । धिया । वयं । नमः । भरंतः । आ । इमसि ॥ राजंतं । अध्वराणां । गोपां । ऋतस्य । दीदिविं । वर्धमानं । स्वे । दमे ॥ सः । नः । पिताऽइव । सूनवे । अग्ने । सुऽउपायनः । भव । सचस्व । नः । स्वस्तये ॥ २ ॥ वायोइति । आ । याहि । दर्शत । इमे । सोमाः । अरंऽकृताः । तेषां । पाहि । श्रुधि । हवं ॥ वायोइति । उक्थेभिः । जरंते । त्वां । अच्छ । जरितारः । सुतऽसोमाः । अहःऽविदः ॥ वायोइति । तव । प्रऽपृंचती । धेना । जिगाति । दाशुषे । उरूची । सोमऽपीतये ॥ इंद्रवायूइति । इमे । सुताः । उप । प्रयःऽभिः । आ । गतं । इंदवः । वां । उशंति । हि ॥ वायोइति । इंद्रः । च । चेतथः । सुतानां । वाजिनीवसूइतिवाजिनीऽवसू । तौ । आ । यातं । उप । द्रवत् ॥ ३ ॥ वायोइति । इंद्रः । च । सुन्वतः । आ । यातं । उप । निःऽकृतं । मक्षु । इत्था । धिया । नरा ॥ मित्रं । हुवे । पूतऽदक्षं । वरुणं । च । रिशादसं । धियं । घृताचीं । साधंता ॥ ऋतेन ।

मित्रावरुणौ । ऋतऽवृधौ । ऋतऽस्पृशा । क्रतुं । बृहंतं । आशाथेइति ।
कवीइति । नः । मित्रावरुणा । तुविऽजातौ । उरुऽक्षया । दक्षं ।
दधातेइति । अपसं ॥ ४ ॥ अश्विना । यज्वरीः । इषः । द्रवत्पाणी-
इतिद्रवत्ऽपाणी । शुभः । पतीइति । पुरुऽभुजा । चनस्यतं ॥ अश्विना ।
पुरुऽदंससा । नरा । शवीरया । धिया । धिष्ण्या । वनतं । गिरः ॥
दस्रा । युवाकवः । सुताः । नासत्या । वृक्तऽबर्हिषः । आ । यातं ।
रुद्रवर्तनीइतिरुद्रऽवर्तनी ॥ इंद्र । आ । याहि । चित्रभानोइतिचित्रऽभानो ।
सुताः । इमे । त्वाऽयवः । अण्वीभिः । तना । पूतासः ॥ ० ॥ धिया ।
इषितः । विप्रऽजूतः । सुतऽवतः । उप । ब्रह्माणि । वाघतः ॥ ० ॥
तूतुजानः । उप । ब्रह्माणि । हरिऽवः । सुते । दधिष्व । नः । चनः ॥ ५ ॥
ओमासः । चर्षणिऽधृतः । विश्वे । देवासः । आ । गत । दाश्वांसः ।
दाशुषः । सुतं ॥ विश्वे । देवासः । अप्ऽतुरः । सुतं । आ । गंत । तूर्णयः ।
उस्राःऽइव । स्वसराणि ॥ विश्वे । देवासः । अस्रिधः । एहिऽमायासः ।
अद्रुहः । मेधं । जुषंत । वह्नयः ॥ पावका । नः । सरस्वती । वाजेभिः । वाजि-
नीऽवती । यज्ञं । वष्टु । धियाऽवसुः ॥ चोदयित्री । सूनृतानां । चेतंती ।
सुऽमतीनां । यज्ञं । दधे । सरस्वती ॥ महः । अर्णः । सरस्वती । प्र । चेतयति ।
केतुना । धियः । विश्वाः । वि । राजति ॥ ६ ॥ सरूपऽकृत्नुं । ऊतये ।
सुदुघांऽइव । गोऽदुहे । जुहूमसि । द्यविऽद्यवि ॥ उप । नः । सवना ।
आ । गहि । सोमस्य । सोमऽपाः । पिब । गोऽदाः । इत् । रेवतः ।
मदः ॥ अथ । ते । अंतमानां । विद्याम । सुऽमतीनां । मा । नः । अति ।
ख्यः । आ । गहि ॥ परा । इहि । विग्रं । अस्तृतं । इंद्रं । पृच्छ ।
विपःऽचितं । यः । ते । सखिऽभ्यः । आ । वरं ॥ उत । ब्रुवंतु । नः ।
निदः । निः । अन्यतः । चित् । आरत । दधानाः । इंद्रे । इत् ।
दुवः ॥ ७ ॥ उत । नः । सुऽभगान् । अरिः । वोचेयुः । दस्म । । कृष्टयः ।
स्याम । इत् । इंद्रस्य । शर्मणि ॥ आ । ईं । आशुं । आशवे । भर ।

यज्ञऽश्रियं । नृऽमादनं । पतयत् । मंदयत्ऽसखं । अस्य । पीत्वा । शतक्रतोइतिशतऽक्रतो । घनः । वृत्राणां । अभवः । प्र । आवः । वाजेषु । वाजिनं ॥ तं । त्वा । वाजेषु । वाजिनं । वाजयामः । शतक्रतोइति-शतऽक्रतो । धनानां । इन्द्र । सातये ॥ यः । रायः । अवनिः । महान् । सुऽपारः । सुन्वतः । सखा । तस्मै । इन्द्राय । गायत ॥ ८ ॥ आ । तु । आ । इत । नि । सीदत । इन्द्रं । अभि । प्र । गायत । सखायः । स्तोमऽवाहसः ॥ पुरुऽतमं । पुरूणां । ईशानं । वार्याणां । इन्द्रं । सोमे । सचा । सुते ॥ सः । घ । नः । योगे । आ । भुवत् । सः । राये । सः । पुरंऽध्यां । गमत् । वाजेभिः । आ । सः । नः ॥ यस्य । संऽस्थे । न । वृण्वते । हरीइति । समत्ऽसु । शत्रवः ॥ ० ॥ सुतऽपाव्ने । सुताः । इमे । शुचयः । यंति । वीतये । सोमासः । दधिऽआशिरः ॥ ९ ॥ त्वं । सुतस्य । पीतये । सद्यः । वृद्धः । अजायथाः । इंद्र । ज्यैष्ठ्याय । सुक्रतोइतिसुऽक्रतो ॥ आ । त्वा । विशंतु । आशवः । सोमासः । इंद्र । गिर्वणः । शं । ते । संतु । प्रऽचेतसे ॥ त्वां । स्तोमाः । अवीवृधन् । त्वां । उक्था । शतक्रतोइतिशतऽक्रतो । त्वां । वर्धंतु । नः । गिरः ॥ अक्षितऽऊतिः ॥ सनेत् । इमं । वाजं । इंद्रः । सहस्रिणं । यस्मिन् । विश्वानि । पौंस्या ॥ मा । नः । मर्ताः । अभि । द्रुहन् । तनूनां । इंद्र । गिर्वणः । ईशानः । यवय । वधं ॥ १० ॥ युंजंति । ब्रध्नं । अरुषं । चरंतं । परि । तस्थुषः । रोचंते । रोचना । दिवि ॥ युंजंति । अस्य । काम्या । हरीइति । विऽपक्षसा । रथे । शोणा । धृष्णूइति । नृऽवा-हसा ॥ केतुं । कृण्वन् । अकेतवे । पेशः । मर्याः । अपेशसे । सं । उषत्ऽभिः । अजायथाः ॥ आत् । अह । स्वधां । अनु । पुनः । गर्भ-ऽत्वं । आऽईरिरे । दधानाः । नाम । यज्ञियं ॥ वीळु । चित् । आरु-जत्नुऽभिः । गुहा । चित् । इंद्र । वह्निऽभिः । अविंदः । उस्रियाः । अनु ॥ ११ ॥ देवऽयंतः । यथा । मतिं । अच्छ । विदत्ऽवसुं । गिरः ।

महां । अनूषत । श्रुतं ॥ इंद्रेण । सं । हि । दक्षसे । संऽजग्मानः । अबिभ्युषा । मंदूइति । समानऽवर्चसा ॥ अनवद्यैः । अभिद्युऽभिः । मखः । सहस्वत् । अर्चति । गणैः । इंद्रस्य । काम्यैः ॥ अतः । परिऽज्मन् । आ । गहि । दिवः । वा । रोचनात् । अधि । सं । अस्मिन् । ऋंजते । गिरः ॥ इतः । वा । सातिं । ईमहे । दिवः । वा । पार्थिवात् । अधि । इंद्रं । महः । वा । रजसः ॥ १२ ॥ इंद्रं । इत् । गथिनः । बृहत् । इंद्रं । अर्केभिः । अर्किणः । इंद्रं । वाणीः । अनूषत । इंद्रः । इत् । हर्योः । सचा । संऽमिश्लः । आ । वचःऽयुजा । इंद्रः । वज्री । हिरण्ययः । इद्रः । दीर्घाय । चक्षसे । आ । सूर्यं । रोहयत् । दिवि । वि । गोभिः । अद्रिं । ऐरयत् ॥ इंद्र । वाजेषु । नः । अव । सहस्रऽप्रधनेषु । च । उग्रः । उग्राभिः । ऊतिऽभिः ॥ इंद्रं । वयं । महाऽधने । इंद्रं । अर्भे । हवामहे । युजं । वृत्रेषु । वज्रिणं ॥ १३ ॥ सः । नः । वृषन् । अमुं । चरुं । सत्राऽदावन् । अप । वृधि । अस्मभ्यं । अप्रतिऽस्कुतः ॥ तुंजेऽतुंजे । ये । उत्ऽतरे । स्तोमाः । इंद्रस्य । वज्रिणः । न । विंधे । अस्य । सुऽस्तुतिं ॥ वृषा । यूथाऽइव । वंसगः । कृष्टीः । इयर्ति । ओजसा । ईशानः । अप्रतिऽस्कुतः ॥ यः । एकः । चर्षणीनां । वसूनां । इरज्यति । इंद्रः । पंच । क्षितीनां ॥ इंद्रं । वः । विश्वतः । परि । हवामहे । जनेभ्यः । अस्माकं । अस्तु । केवलः ॥ १४ ॥ आ । इंद्र । सानसिं । रयिं । सऽजित्वानं । सदाऽसहं । वर्षिष्ठं । ऊतये । भर ॥ नि । येन । मुष्टिऽहत्यया । नि । वृत्रा । रुणधामहै । त्वाऽऊतासः । नि । अर्वता ॥ इंद्र । त्वाऽऊतासः । आ । वयं । वज्रं । घना । ददीमहि । जयेम । सं । युधि । स्पृधः ॥ वयं । शूरेभिः । अस्तृऽभिः । इंद्र । त्वया । युजा । वयं । ससह्याम । पृतन्यतः ॥ महान् । इंद्रः । परः । च । नु । महिऽत्वं । अस्तु । वज्रिणे । द्यौः । न । प्रथिना । शवः ॥ १५ ॥ संऽओहे । वा । ये । आशत । नरः । तोकस्य । सनितौ । विप्रासः । वा । धिया-

ऽयवः ॥ यः । कुक्षिः । सोमऽपातमः । समुद्रःऽइव । पिन्वते । उर्वीः । आपः । न । काकुदः ॥ एव । हि । अस्य । सूनृता । विऽरप्शी । गोऽमती । मही । पक्का । शाखा । न । दाशुषे ॥ एव । हि । ते । विऽभूतयः । ऊतयः । इंद्र । माऽवते । सद्यः । चित् । संति । दाशुषे ॥ ० ॥ काम्या । स्तोमः । उक्थं । च । शंस्या । इंद्राय । सोमऽपीतये ॥ १६ ॥ इंद्र । आ । इहि । मत्सि । अंधसः । विश्वेभिः । सोमपर्वऽभिः । महान् । अभिष्टिः । ओजसा ॥ आ । ईं । एनं । सृजत । सुते । मंदिं । इंद्राय । मंदिने । चक्रिं । विश्वानि । चक्रये ॥ मत्स्व । सुऽशिप्र । मंदिऽभिः । स्तोमेभिः । विश्वऽचर्षणे । सचा । एषु । सवनेषु । आ ॥ असृग्रं । इंद्र । ते । गिरः । प्रति । त्वां । उत् । अहासत । अजोषाः । वृषभं । पतिं ॥ सं । चोदय । चित्रं । अर्वाक् । राधः । इंद्र । वरेण्यं । असत् । इत् । ते । विऽभु । प्रऽभु ॥ १७ ॥ अस्मान् । सु । तत्र । चोदय । इंद्र । राये । रभस्वतः । तुविऽद्युम्न । यशस्वतः ॥ सं । गोऽमत् । इंद्र । वाजऽवत् । अस्मेइति । पृथु । श्रवः । बृहत् । विश्वऽआयुः । धेहि । अक्षितं ॥ अस्मेइति ॥ धेहि । श्रवः । बृहत् । द्युम्नं । सहस्र-ऽसातमं । इंद्र । ताः । रथिनीः । इषः ॥ वसोः । इंद्रं । वसुऽपतिं । गीःऽभिः । गृणंतः । ऋग्मियं । होम । गंतारं । ऊतये ॥ सुतेऽसुते । निऽओकसे । बृहत् । बृहते । आ । इत् । अरिः । इंद्राय । शूषं । अर्चति ॥ १८ ॥ गायंति । त्वा । गायत्रिणः । अर्चंति । अर्कं । अर्किणः । ब्रह्माणः । त्वा । शतक्रतोइतिशतऽक्रतो । उत् । वंशंऽइव । येमिरे ॥ यत् । सानोः । सानुं । आ । अरुहत् । भूरि । अस्पष्ट । कर्त्वं । तत् । इंद्रः । अर्थं । चेतति । यूथेन । वृष्णिः । एजति ॥ युक्ष्व । हि । केशिना । हरीइति । वृषणा । कक्ष्यऽप्रा । अथ । नः । इंद्र । सोमऽपाः । गिरां । उपऽश्रुतिं । चर ॥ आ । इहि । स्तोमान् । अभि । स्वर । अभि । गृणीहि । आ । रुव । ब्रह्म । च । नः । वसोइति । सचा । इंद्र । यज्ञं । च । वर्धय ॥ उक्थं । इंद्राय ।

शंस्यं । वर्धनं । पुरुनिःऽसिधे । शक्रः । यथा । सुतेषु । नः । ररणत् ।सख्येषु । च ॥ तम् । इत् । सखिऽत्वे । ईमहे । तं । राये । तं । सुऽवीर्ये । सः । शक्रः । उत ।नः । शकत् । इंद्रः । वसु । दयमानः ॥ १९ ॥ सुऽविवृतं । सुनिःऽअजं । इंद्र । त्वाऽदातं । इत् । यशः । गवां । अप । व्रजं । वृधि । कृणुष्व । राधः । अद्रिऽवः ॥ नहि । त्वा । रोदसीइति । उभेइति । ऋघायमाणं । इन्वतः । जेषः । स्वःऽवतीः । अपः । सं । गाः । अस्मभ्यं । धूनुहि ॥ आश्रुत्ऽकर्ण । श्रुधि । हवं । नु । चित् । दधिष्व । मे । गिरः । इंद्र । स्तोमं । इमं । मम । कृष्व । युजः । चित् । अंतरं ॥ विद्म । हि । त्वा । वृषन्ऽतमं । वाजेषु । हवनऽश्रुतं । वृषन्ऽतमस्य । हूमहे । ऊतिं । सहस्रऽसातमां ॥ आ । तु । नः । इंद्र । कौशिक । मंदसानः । सुतं । पिब । नव्यं । आयुः । प्र । सु । तिर । कृधि । सहस्रऽसां । ऋषिं ॥ परि । त्वा । गिर्वणः । गिरः । इमाः । भवंतु । विश्वतः । वृद्धऽआयुं । अनु । वृद्धयः । जुष्टाः । भवंतु जुष्टयः ॥ २० ॥ इंद्रं । विश्वाः । अवीवृधन् । समुद्रऽव्यचसं । गिरः । रथिऽतमं । रथिनां । वाजानां । सत्ऽपतिं । पतिं ॥ सख्ये । ते । इंद्र । वाजिनः । मा । भेम । शवसः । पते । त्वां । अभि । प्र । नोनुमः । जेतारं । अपराऽजितं ॥ पूर्वीः । इंद्रस्य । रातयः । न । वि । दस्यंति । ऊतयः । यदि । वाजस्य । गोऽमतः । स्तोतृऽभ्यः । मंहते । मघं ॥ पुरां । भिंदुः । युवा । कविः । अमितऽओजाः । अजायत । इंद्रः । विश्वस्य । कर्मणः । धर्ता । वज्री । पुरुऽस्तुतः ॥ त्वं । वलस्य । गोऽमतः । अप । अवः । अद्रिऽवः । बिलं । त्वां । देवाः । अबिभ्युषः । तुज्यमानासः । आविषुः ॥ तव । अहं । शूर । रातिऽभिः । प्रति । आयं । सिंधुं । आऽवदन् । उप । अतिष्ठंत । गिर्वणः । विदुः । ते । तस्य । कारवः ॥ मायाभिः । इंद्र । मायिनं । त्वं । शुष्णं । अव । अतिरः ॥ ० ॥ मेधिराः । तेषां । श्रवांसि । उत् । तिर ॥ इंद्रं । ईशानं । ओजसा । अभि । स्तोमाः । अनूषत । सहस्रं । यस्य । रातयः । उत । वा । संति । भूयसीः ॥ २१ ॥

अग्निं । दूतं । वृणीमहे । होतारं । विश्वऽवेदसं । अस्य । यज्ञस्य । सुऽक्रतुं ॥ अग्निंऽअग्निं । हवीमऽभिः । सदा । हवंत । विश्पतिं । हव्यऽवाहं । पुरु-ऽप्रियं ॥ अग्ने । देवान् । इह । आ । वह । जज्ञानः । वृक्तऽबर्हिषे । असि । होता । नः । ईड्यः ॥ तान् । उशतः । वि । बोधय । यत् । अग्ने । यासि । दूत्यं । देवैः । आ । सत्सि । बर्हिषि ॥ घृतऽआहवन । दीदिऽवः । प्रति । स्म । रिषतः । दह । अग्ने । त्वं । रक्षस्विनः ॥ अग्निना । अग्निः । सं । इध्यते । कविः । गृहऽपतिः । युवा । हव्यऽवाट् । जुहुऽआस्यः । ॥ २२ ॥ कविं । अग्निं । उप । स्तुहि । सत्यऽधर्माणं । अध्वरे । देवं । अमीवऽचातनं ॥ यः । त्वां । अग्ने । हविःऽपतिः । दूतं । देव । सपर्यति । तस्य । स्म । प्रऽअविता । भव ॥ यः । अग्निं । देवऽवीतये । हविष्मान् । आऽविवासति । तस्मै । पावक । मृळय ॥ सः । नः । पावक । दीदिऽवः । अग्ने । देवान् । इह । आ । वह । उप । यज्ञं । हविः । च । नः ॥ सः । नः । स्तवानः । आ । भर । गायत्रेण । नवीयसा । रयिं । वीरऽवतीं । इषं ॥ अग्ने । शुक्रेण । शोचिषा । विश्वाभिः । देवहूतिऽभिः । इमं । स्तोमं । जुषस्व । नः ॥ २३ ॥ सुऽसमिद्धः । नः । आ । वह । देवान् । अग्ने । हविष्मते । होतरिति । पावक । यक्षि । च ॥ मधुऽमंतं । तनूऽनपात् । यज्ञं । देवेषु । नः । कवे । अद्य । कृणुहि । वीतये ॥ नराशंसं । इह । प्रियं । अस्मिन् । यज्ञे । उप । ह्वये । मधुऽजिह्वं । हविःऽकृतं ॥ अग्ने । सुखऽतमे । रथे । देवान् । ईळितः । आ । वह । असि । होता । मनुःऽ-हितः ॥ स्तृणीत । बर्हिः । आनुषक् । घृतऽपृष्ठं । मनीषिणः । यत्र । अमृतस्य । चक्षणं । वि । श्रयतां । ऋतऽवृधः । द्वारः । देवीः । असश्चतः । अद्य । नूनं । च । यष्टवे ॥ २४ ॥ नक्तोषसा । सुऽपेशसा । अस्मिन् । यज्ञे । उप । ह्वये । इदं । नः । बर्हिः । आऽसदे ॥ ता । सुऽजिह्वौ । उप । ह्वये । होतारा । दैव्या । कवीइति । यज्ञं । नः । यक्षतां । इमं ॥ इळा । सरस्वती । मही । तिस्रः । देवीः । मयःऽभुवः । बर्हिः । सीदंतु । अस्रिधः ॥ इह ।

त्वष्टारं । अग्रियं । विश्वऽरूपं । उप । ह्वये ॥ ० ॥ अव । सृज । वनस्पते । देव । देवेभ्यः । हविः । प्र । दातुः । अस्तु । चेतनं ॥ स्वाहा । यज्ञं । कृणोतन । इंद्राय । यज्वनः । गृहे । तत्र । देवान् । उप । ह्वये ॥ २५ ॥ आ । एभिः । अग्ने । दुवः । गिरः । विश्वेभिः । सोमऽपीतये । देवेभिः । याहि । यक्षि । च ॥ आ । त्वा । कण्वाः । अहूषत । गृणंति । विप्र । ते । धियः । देवेभिः । अग्ने । आ । गहि ॥ इंद्रवायूइति । बृहस्पतिं । मित्रा । अग्निं । पूषणं । भगं । आदित्यान् । मारुतं । गणं ॥ प्र । वः । भ्रियंते । इंदवः । मत्सराः । मादयिष्णवः । द्रप्साः । मध्वः । चमूऽसदः ॥ ईळते । त्वां । अवस्यवः । कण्वासः । वृक्तऽबर्हिषः । हविष्मंतः । अरंऽकृतः ॥ घृतऽपृष्ठाः । मनःऽयुजः । ये । त्वा । वहंति । वह्नयः । आ । देवान् । सोमऽपीतये ॥ २६ ॥ तान् । यजत्रान् । ऋतऽवृधः । अग्ने । पत्नीऽवतः । कृधि । मध्वः । सुऽजिह्व । पायय ॥ ये । यजत्राः । ये । ईड्याः । ते । ते । पिबंतु । जिह्वया । मधोः । अग्ने । वषट्ऽकृति ॥ आकीं । सूर्यस्य । रोचनात् । विश्वान् । देवान् । उषःऽबुधः । विप्रः । होता । इह । वक्षति ॥ विश्वेभिः । सोम्यं । मधु । अग्ने । इंद्रेण । वायुना । पिब । मित्रस्य । धामऽभिः ॥ त्वं । होता । मनुःऽहितः । अग्ने । यज्ञेषु । सीदसि । सः । इमं । नः । अध्वरं । यज ॥ युक्ष्व । हि । अरुषीः । रथे । हरितः । देव । रोहितः । ताभिः । देवान् । इह । आ । वह ॥ २७ ॥ इंद्र । सोमं । पिब । ऋतुना । आ । त्वा । विशंतु । इंदवः । मत्सरासः । तत्ऽओकसः ॥ मरुतः । पिबत । ऋतुना । पोत्रात् । यज्ञं । पुनीतन । यूयं । हि । स्थ । सुऽदानवः ॥ अभि । यज्ञं । गृणीहि । नः । ग्नावः । नेष्टः । पिब । ऋतुना । त्वं । हि । रत्नऽधाः । असि ॥ ० ॥ सादय । योनिषु । त्रिषु । परि । भूष । पिब । ऋतुना ॥ ब्राह्मणात् । इंद्र । राधसः । पिब । सोमं । ऋतून् । अनु । तव । इत् । हि । सख्यं । अस्तृतं ॥ युवं । दक्षं । धृतऽव्रता । मित्रावरुणा । दुःऽदभं ।

ऋतुना । यज्ञं । आशाथेइति ॥ २८ ॥ द्रविणःऽदाः । द्रविणसः ।
ग्रावऽहस्तासः । अध्वरे ॥ यज्ञेषु । देवं । ईळते ॥ द्रविणःऽदाः ।
ददातु । नः । वसूनि । यानि । शृण्विरे ॥ देवेषु । ता । वनामहे ॥
द्रविणःऽदाः । पिपीषति । जुहोत । प्र । च । तिष्ठत ॥
नेष्ट्रात् । ऋतुऽभिः । इष्यत । यत् । त्वा । तुरीयं । ऋतुऽ-
भिः । द्रविणःऽदः । यजामहे ॥ अध । स्म । नः । ददिः ।
भव ॥ अश्विना । पिबतं । मधु । दीद्यग्नीइतिदीदिऽअग्नी ।
शुचिऽव्रता ॥ ऋतुना । यज्ञऽवाहसा ॥ गार्हऽपत्येन । संत्य । ऋतुना ।
यज्ञऽनीः । असि ॥ देवान् । देवऽयते । यज ॥ २९ ॥ आ । त्वा ।
वहंतु । हरयः । वृषणं । सोमऽपीतये ॥ इंद्र । त्वा । सूरऽचक्षसः ॥
इमाः । धानाः । घृतऽस्नुवः । हरीइति । इह । उप । वक्षतः ॥ इंद्रं ।
सुखऽतमे । रथे ॥ इंद्रं । प्रातः । हवामहे । इंद्रं । प्रऽयति ।
अध्वरे ॥ इंद्रं । सोमस्य । पीतये ॥ उप । नः । सुतं । आ । गहि ।
हरिऽभिः । इंद्र । केशिऽभिः ॥ सुते । हि । त्वा । हवामहे ॥ सः । इमं ।
नः । स्तोमं । आ । गहि । उप । इदं । सवनं । सुतं ॥ गौरः । न ।
तृषितः । पिब ॥ ३० ॥ इमे । सोमासः । इंदवः । सुतासः । अधि ।
बर्हिषि ॥ तान् । इंद्र । सहसे । पिब ॥ अयं । ते । स्तोमः । अग्रियः ।
हृदिऽस्पृक् । अस्तु । शंऽतमः ॥ अथ । सोमं । सुतं । पिब ॥ विश्वं ।
इत् । सवनं । सुतं । इंद्रः । मदाय । गच्छति ॥ वृत्रऽहा । सोमऽ-
पीतये ॥ ० ॥ कामं । आ । पृण । गोभिः । अश्वैः । शतक्रतोइति-
शतऽक्रतो । स्तवाम । त्वा । सुऽआध्यः ॥ ३१ ॥ इंद्रावरुणयोः ।
अहं । संऽराजोः । अवः । आ । वृणे ॥ ता । नः । मृळातः । ईदृशे ॥
गंतारा । हि । स्थः । अवसे । हवं । विप्रस्य । माऽवतः ॥ धर्तारा ।
चर्षणीनां ॥ अनुऽकामं । तर्पयेथां । इंद्रावरुणा । रायः । आ ॥ ता ।

वां । नेदिष्ठं । ईमहे ॥ युवाकु । हि । शचीनां । युवाकु । सुऽमतीनां ॥ भूयाम । वाजऽदाव्नां ॥ इंद्रः । सहस्रऽदाव्नां । वरुणः । शंस्यानां ॥ क्रतुः । भवति । उक्थ्यः ॥ ३२ ॥ तयोः । इत् । अवसा । वयं । सनेम । नि । च । धीमहि ॥ स्यात् । उत । प्रऽरेचनं ॥ इंद्रावरुणा । वां । अहं । हुवे । चित्राय । राधसे ॥ अस्मान् । सु । जिग्युषः । कृतं ॥ इंद्रावरुणा । नु । नु । वां । सिसासंतीषु । धीषु । आ ॥ अस्मभ्यं । शर्म । यच्छतं ॥ प्र । वां । अश्नोतु । सुऽस्तुतिः । इंद्रावरुणा । यां । हुवे ॥ यां । ऋधाथेइति । सधऽस्तुतिं ॥ ३३ ॥ सोमानं । स्वरणं । कृणुहि । ब्रह्मणः । पते ॥ कक्षीवंतं । यः । औशिजः ॥ यः । रेवान् । यः । अमीवऽहा । वसुऽवित् । पुष्टिऽवर्धनः ॥ सः । नः । सिसक्तु । यः । तुरः ॥ मा । नः । शंसः । अररुषः । धूर्तिः । प्रणक् । मर्त्यस्य ॥ रक्ष । नः । ब्रह्मणः । पते ॥ सः । घ । वीरः । न । रिष्यति । यं । इंद्रः । ब्रह्मणः । पतिः ॥ सोमः । हिनोति । मर्त्यं ॥ त्वं । तं । ब्रह्मणः । पते । सोमः । इंद्रः । च । मर्त्यं । दक्षिणा । पातु । अंहसः ॥ ३४ ॥ सदसः । पतिं । अद्भुतं । प्रियं । इंद्रस्य । काम्यं । सनिं । मेधां । अयासिषं ॥ यस्मात् । ऋते । न । सिध्यति । यज्ञः । विपःऽचितः । चन ॥ सः । धीनां । योगं । इन्वति ॥ आत् । ऋध्नोति । हविःऽकृतिं । प्रांचं । कृणोति । अध्वरं ॥ होत्रा । देवेषु । गच्छति ॥ नराशंसं । सुऽधृष्टमं । अपश्यं । सप्रथःऽतमं ॥ दिवः । न । सद्मऽमखसं ॥ ३५ ॥ प्रति । त्यं । चारुं । अध्वरं । गोऽपीथाय । प्र । हूयसे ॥ मरुत्ऽभिः । अग्ने । आ । गहि ॥ नहि । देवः । न । मर्त्यः । महः । तव । क्रतुं । परः ॥ ० ॥ ये । महः । रजसः । विदुः । विश्वे । देवासः । अद्रुहः ॥ ० ॥ ये । उग्राः । अर्कं । अनृचुः । अनाधृष्टासः । ओजसा ॥ ० ॥ ये । शुभ्राः । घोरऽवर्पसः । सुऽक्षत्रासः । रिशादसः ॥ ० ॥ ३६ ॥ ये ।

नाकस्य । अधि । रोचने । दिवि । देवासः । आसते ॥ ० ॥ ये । ईखयंति । पर्वतान् । तिरः । समुद्रं । अर्णवं ॥ ० ॥ आ । ये । तन्वंति । रश्मिऽभिः । तिरः । समुद्रं । ओजसा ॥ ० ॥ अभि । त्वा । पूर्वऽपीतये । सृजामि । सोम्यं । मधु ॥ ० ॥ ३७ ॥ प्रथमाष्टके प्रथमोध्यायः ॥ ॥ हरिः ॐ ॥ ॥ अयं । देवाय । जन्मने । स्तोमः । विप्रेभिः । आसया ॥ अकारि । रत्नऽधातमः ॥ ये । इंद्राय । वाचःऽयुजा ॥ ततक्षुः । मनसा । हरीइति ॥ शमीभिः । यज्ञं । आशत ॥ तक्षन् । नासत्याभ्यां । परिऽज्मानं । सुऽखं । रथं । तक्षन् । धेनुं । सबःऽदुघां ॥ युवाना । पितरा । पुनरिति । सत्यऽमंत्राः । ऋजुऽयवः ॥ ऋभवः । विष्टी । अक्रत ॥ सं । वः । मदासः । अग्मत । इंद्रेण । च । मरुत्वता । आदित्येभिः । च । राजऽभिः ॥ १ ॥ उत । त्यं । चमसं । नवं । त्वष्टुः । देवस्य । निःऽकृतं ॥ अकर्त । चतुरः । पुनरिति । ते । नः । रत्नानि । धत्तन । त्रिः । आ । साप्तानि । सुन्वते ॥ एकंऽएकं । सुशस्तिऽभिः ॥ अधारयंत । वह्नयः ॥ अभजंत । सुऽकृत्यया ॥ भागं । देवेषु । यज्ञियं ॥ २ ॥ इह । इंद्राग्नीइति । उप । ह्वये । तयोः । इत् । स्तोमं । उश्मसि ॥ ता । सोमं । सोमऽपातमा ॥ ता । यज्ञेषु । प्र । शंसत । इंद्राग्नीइति । शुंभत । नरः ॥ ता । गायत्रेषु । गायत ॥ ता । मित्रस्य । प्रऽशस्तये । इंद्राग्नीइति । ता । हवामहे ॥ सोमऽपा । सोमऽपीतये । उग्रा । संता । हवामहे । उप । इदं । सवनं । सुतं ॥ इंद्राग्नीइति । आ । इह । गच्छतां ॥ ता । महांता । सदस्पतीइति । इंद्राग्नीइति । रक्षः । उब्जतं ॥ अप्रजाः । संतु । अत्रिणः ॥ तेन । सत्येन । जागृतं । अधि । प्रऽचेतुने । पदे ॥ इंद्राग्नीइति । शर्म । यच्छतं ॥ ३ ॥ प्रातःऽयुजा । वि । बोधय । अश्विनौ । आ । इह । गच्छतां ॥ अस्य । सोमस्य । पीतये । या । सुऽरथा । रथिऽतमा । उभा । देवा । दिविऽस्पृशा ॥

अश्विना । ता । हवामहे ॥ या । वां । कशा । मधुऽमती । अश्विना । सूनृताऽवती ॥ तया । यज्ञं । मिमिक्षतं ॥ नहि । वां । अस्ति । दूरके । यत्र । रथेन । गच्छथः ॥ अश्विना । सोमिनः । गृहं ॥ हिरण्यऽपाणिं । ऊतये । सवितारं । उप । ह्वये ॥ सः । चेत्ता । देवता । पदं ॥ ४ ॥ अपां । नपातं । अवसे । सवितारं । उप । स्तुहि ॥ तस्य । व्रतानि । उश्मसि ॥ विऽभक्तारं । हवामहे । वसोः । चित्रस्य । राधसः ॥ सवितारं । नृऽचक्षसं ॥ सखायः । आ । नि । सीदत । सविता । स्तोम्यः । नु । नः ॥ दाता । राधांसि । शुंभति ॥ अग्ने । पत्नीः । इह । आ । वह । देवानां । उशतीः । उप ॥ त्वष्टारं । सोमऽपीतये ॥ आ । ग्नाः । अग्ने । इह । अवसे । होत्रां । यविष्ठ । भारतीं । वरूत्रीं । धिषणां । वह ॥ ५ ॥ अभि । नः । देवीः । अवसा । महः । शर्मणा । नृऽपत्नीः ॥ अच्छिन्नऽपत्राः । सचतां ॥ इह । इंद्राणीं । उप । ह्वये । वरुणानीं । स्वस्तये ॥ अग्नायीं । सोमऽपीतये ॥ मही । द्यौः । पृथिवी । च । नः । इमं । यज्ञं । मिमिक्षतां ॥ पिपृतां । नः । भरीमऽभिः ॥ तयोः । इत् । घृतऽवत् । पयः । विप्राः । रिहंति । धीतिऽभिः ॥ गंधर्वस्य । ध्रुवे । पदे ॥ स्योना । पृथिवि । भव । अनृक्षरा । निऽवेशनी । यच्छ । नः । शर्म । सऽप्रथः ॥ ६ ॥ अतः । देवाः । अवंतु । नः । यतः । विष्णुः । विऽचक्रमे ॥ पृथिव्याः । सप्त । धामऽभिः । इदं । विष्णुः । वि । चक्रमे । त्रेधा । नि । दधे । पदं ॥ संऽऊळ्हं । अस्य । पांसुरे ॥ त्रीणि । पदा । वि । चक्रमे । विष्णुः । गोपाः । अदाभ्यः ॥ अतः । धर्माणि । धारयन् ॥ विष्णोः । कर्माणि । पश्यत । यतः । व्रतानि । पस्पशे । इंद्रस्य । युज्यः । सखा ॥ तत् । विष्णोः । परमं । पदं । सदा । पश्यंति ।

सूरयः ॥ दिविऽइव । चक्षुः । आऽततं ॥ तत् । विप्रासः । विपन्यवः ।
जागृऽवांसः । सं । इंधते ॥ विष्णोः । यत् । परमं । पदं ॥ ७ ॥
तीव्राः । सोमासः । आ । गहि । आशीःऽवंतः । सुताः । इमे ॥
वायोइति । तान् । प्रऽस्थितान् । पिब ॥ उभा । देवा । दिविऽ-
स्पृशा ॥ इंद्रवायूइति । हवामहे ॥ ० ॥ इंद्रवायूइति । मनःऽजुवा । विप्राः ।
हवंते । ऊतये ॥ सहस्रऽअक्षा । धियः । पतीइति ॥ मित्रं ।
वयं । हवामहे । वरुणं । सोमऽपीतये ॥ जज्ञाना । पूतऽदक्षसा ॥
ऋतेन । यौ । ऋतऽवृधौ । ऋतस्य । ज्योतिषः । पतीइति ॥
ता । मित्रावरुणा । हुवे ॥ ८ ॥ वरुणः । प्रऽअविता । भुवत् ।
मित्रः । विश्वाभिः । ऊतिऽभिः ॥ करतां । नः । सुऽराधसः ॥
मरुत्वंतं । हवामहे । इंद्रं । आ । सोमऽपीतये ॥ सऽजूः ।
गणेन । तृंपतु ॥ इंद्रंऽज्येष्ठाः । मरुत्ऽगणाः । देवासः । पूषऽ-
रातयः ॥ विश्वे । मम । श्रुत । हवं । हत । वृत्रं । सुऽदानवः ।
इंद्रेण । सहसा । युजा ॥ मा । नः । दुःऽशंसः । ईशत ॥ विश्वान् ।
देवान् । हवामहे । मरुतः । सोमऽपीतये ॥ उग्राः । हि । पृश्निऽ-
मातरः ॥ ९ ॥ जयतांऽइव । तन्यतुः । मरुतां । एति । धृष्णुऽया ॥
यत् । शुभं । याथन । नरः ॥ हस्कारात् । विऽद्युतः । परि ।
अतः । जताः । अवंतु । नः । मरुतः । मृळयंतु । नः ॥ आ ।
पूषन् । चित्रऽबर्हिषं । आघृणे । धरुणं । दिवः ॥ आ । अज ।
नष्टं । यथा । पशुं ॥ पूषा । राजानं । आघृणिः । अपऽगूळ्हं ।
गुहा । हितं ॥ अविंदत् ॥ चित्रऽबर्हिषं ॥ उतोइति । सः ।
मह्यं । इंदुऽभिः । षट् । युक्तान् । अनुऽसेसिधत् ॥ गोभिः । यवं । न ।
चर्कृषत् ॥ १० ॥ अंबयः । यंति । अध्वऽभिः । जामयः । अध्वरिऽयतां ॥
पृंचतीः । मधुना । पयः ॥ अमूः । याः । उप । सूर्ये । याभिः ।

वा । सूर्यः । सह ॥ ताः । नः । हिन्वंतु । अध्वरं ॥ अपः । देवीः । उप । ह्वये । यत्र । गावः । पिबंति । नः । सिंधुऽभ्यः । कर्त्वं । हविः ॥ अप्ऽसु । अंतः । अमृतं । अप्ऽसु । भेषजं । अपां ॥ उत । प्रऽशस्तये ॥ देवाः । भवंत । वाजिनः ॥ अप्ऽसु । मे । सोमः । अब्रवीत् । अंतः । विश्वानि । भेषजा ॥ अग्निं । च । विश्वऽशंभुवं । आपः । च । विश्वऽभेषजीः ॥ ११ ॥ आपः । पृणीत । भेषजं । वरूथं । तन्वे । मम ॥ ज्योक् । च । सूर्यं । दृशे ॥ इदं । आपः । प्र । वहत । यत् । किं । च । दुःऽइतं । मयि ॥ यत् । वा । अहं । अभिऽदुद्रोह । यत् । वा । शेपे । उत । अनृतं । आपः । अद्य । अनु । अचारिषं । रसेन । सं । अगस्महि ॥ पयस्वान् । अग्ने । आ । गहि । तं । मा । सं । सृज । वर्चसा । सं । मा । अग्ने । वर्चसा । सृज । सं । प्रऽजया । सं । आयुषा ॥ विद्युः । मे । अस्य । देवाः । इंद्रः । विद्यात् । सह । ऋषिऽभिः ॥ १२ ॥ कस्य । नूनं । कतमस्य । अमृतानां । मनामहे । चारु । देवस्य । नाम ॥ कः । नः । मह्यै । अदितये । पुनः । दात् । पितरं । च । दृशेयं । मातरं । च ॥ अग्नेः । वयं । प्रथमस्य । अमृतानां । मनामहे । चारु । देवस्य । नाम ॥ सः । नः । मह्यै । अदितये । पुनः । दात् । पितरं । च । दृशेयं । मातरं । च ॥ अभि । त्वा । देव । सवितः । ईशानं । वार्याणां ॥ सदा । अवन् । भागं । ईमहे ॥ यः । चित् । हि । ते । इत्था । भगः । शशमानः । पुरा । निदः ॥ अद्वेषः । हस्तयोः । दधे ॥ भगऽभक्तस्य । ते । वयं । उत् । अशेम । तव । अवसा ॥ मूर्धानं । रायः । आऽरभे ॥ १३ ॥ नहि । ते । क्षत्रं । न । सहः । न । मन्युं । वयः । चन । अमी इति । पतयंतः । आपुः ॥ न । इमाः । आपः । अनिऽमिषं । चरंतीः । न । ये । वातस्य । प्रऽ-

मिनंति । अभ्वं ॥ अबुध्ने । राजा । वरुणः । वनस्य । ऊर्ध्वं । स्तूपं ।
ददते । पूतऽदक्षः ॥ नीचीनाः । स्थुः । उपरि । बुध्नः । एषां ।
अस्मेइति । अंतः । निऽहिताः । केतवः । स्युरितिस्युः ॥ उरुं । हि ।
राजा । वरुणः । चकार । सूर्याय । पंथां । अनुऽएतवै । ऊंइति ॥ अपदे ।
पादा । प्रतिऽधातवे । अकः । उत । अपऽवक्ता । हृदयऽविधः ।
चित् ॥ शतं । ते । राजन् । भिषजः । सहस्रं । उर्वी । गभीरा ।
सुऽमतिः । ते । अस्तु ॥ बाधस्व । दूरे । निःऽऋतिं । पराचैः । कृतं ।
चित् । एनः । प्र । मुमुग्धि । अस्मत् ॥ अमीइति । ये । ऋक्षाः ।
निऽहितासः । उच्चा । नक्तं । ददृश्रे । कुहं ॥ चित् । दिवा । ईयुः ॥
अदब्धानि । वरुणस्य । व्रतानि । विऽचाकशत् । चंद्रमाः । नक्तं ।
एति ॥ १४ ॥ तत् । त्वा । यामि । ब्रह्मणा ॥ वंदमानः । तत् । आ ।
शास्ते । यजमानः । हविःऽभिः ॥ अहेळमानः । वरुण । इह । बोधि ।
उरुऽशंस । मा । नः । आयुः । प्र । मोषीः ॥ तत् । इत् । नक्तं ।
तत् । दिवा । मह्यं । आहुः । तत् । अयं । केतः । हृदः । आ । वि ।
चष्टे ॥ शुनःशेपः । यं । अह्वत् । गृभीतः । सः । अस्मान् । राजा ।
वरुणः । मुमोक्तु ॥ शुनःशेपः । हि । अह्वत् । गृभीतः । त्रिषु ।
आदित्यं । द्रुऽपदेषु । बद्धः ॥ अव । एनं । राजा । वरुणः ।
ससृज्यात् । विद्वान् । अदब्धः । वि । मुमोक्तु । पाशान् ॥ अव ।
ते । हेळः । वरुण । नमःऽभिः । अव । यज्ञेभिः । ईमहे ।
हविःऽभिः ॥ क्षयन् । अस्मभ्यं । असुर । प्रचेतइतिप्रऽचेतः ।
राजन् । एनांसि । शिश्रथः । कृतानि ॥ उत् । उत्ऽतमं । वरुण ।
पाशं । अस्मत् । अव । अधमं । वि । मध्यमं । श्रथय ॥
अथ । वयं । आदित्य । व्रते । तव । अनागसः । अदितये ।
स्याम ॥ १५ ॥ यत् । चित् । हि । ते । विशः । यथा । प्र । देव ।

वरुण । व्रतं ॥ मिनीमसि । द्यविऽद्यवि ॥ मा । नः । वधाय । हत्नवे ।
जिहीळानस्य । रीरधः ॥ मा । हृणानस्य । मन्यवे ॥ वि । मृळीकाय ।
ते । मनः । रथीः । अश्वं । न । संऽदितं ॥ गीःऽभिः । वरुण ।
सीमहि ॥ परा । हि । मे । विऽमन्यमः । पतंति । वस्यःऽइष्टये ॥
वयः । न । वसतीः । उप ॥ कदा । क्षत्रऽश्रियं । नरं । आ । वरुणं ।
करमहे ॥ मृळीकाय । उरुऽचक्षसं ॥ १६ ॥ तत् । इत् । समानं ।
आशातेइति । वेनंता । न । प्र । युछतः ॥ धृतऽव्रताय । दशुषे ॥
वेद । यः । वीनां । पदं । अंतरिक्षेण । पततां ॥ वेद । नावः ।
समुद्रियः ॥ वेद । मासः । धृतऽव्रतः । द्वादश । प्रजाऽवतः ॥ वेद ।
यः । उपऽजायते ॥ वेद । वातस्य । वर्तनिं । उरोः । ऋष्वस्य ।
बृहतः ॥ वेद । ये । अधिऽआसते ॥ नि । ससाद । धृतऽव्रतः ।
वरुणः । पस्त्यासु । आ ॥ सांऽराज्याय । सुऽक्रतुः ॥ १७ ॥ अतः ।
विश्वानि । अद्भुता । चिकित्वान् । अभि । पश्यति ॥ कृतानि । या ।
च । कत्वा ॥ सः । नः । विश्वाहा । सुऽक्रतुः । आदित्यः । सुऽपथा ।
करत् ॥ प्र । नः । आयूंषि । तारिषत् ॥ बिभ्रत् । द्रापिं । हिरण्ययं ।
वरुणः । वस्त । निःऽनिजं । परि । स्पशः । नि । सेदिरे ॥ न । यं ।
दिप्संति । दिप्सवः । न । द्रुह्वाणः । जनानां ॥ न । देवं । अभिऽ-
मातयः ॥ उत । यः । मानुषेषु । आ । यशः । चक्रे । असामि ।
आ ॥ अस्माकं । उदरेषु । आ ॥ १८ ॥ पराः । मे । यंति ।
धीतयः । गावः । न । गव्यूतीः । अनु ॥ इछंतीः । उरुऽचक्षसं ॥
सं । नु । वोचावहै । पुनः । यतः । मे । मधु । आऽभृतं । होताऽइव ।
क्षदसे । प्रियं ॥ दर्शं । नु । विश्वऽदर्शतं । दर्शं । रथं । अधि ।
क्षमि ॥ एताः । जुषत । मे । गिरः ॥ इमं । मे । वरुण । श्रुधि ।
हवं । अद्य । च । मुळय ॥ त्वां । अवस्युः । आ । चके ॥ त्वं । विश्वस्य ।

मेधिर । दिवः । च । ग्मः । च । राजसि । सः । यामनि । प्रति । श्रुधि ॥ उतू । उत्ऽतमं । मुमुग्धि । नः । वि । पाशं । मध्यमं । चृत ॥ अव । अधमानि । जीवसे ॥ १९ ॥ वसिष्व । हि । मियेध्य । वस्त्राणि । ऊर्जां । पते ॥ ० ॥ नि । नः । होता । वरेण्यः । सदा । यविष्ठ । मन्मऽभिः ॥ अग्ने । दिवित्मता । वचः ॥ आ । हि । स्म । सूनवे । पिता । आपिः । यजति । आपये ॥ सखा । सख्ये । वरेण्यः ॥ आ । नः । बर्हिः । रिशादसः । वरुणः । मित्रः । अर्यमा ॥ सीदंतु । मनुषः । यथा ॥ पूर्व्य । होतः । अस्य । नः । मंदस्व । सख्यस्य । च ॥ इमाः । ऊंइति । सु । श्रुधि । गिरः ॥ २० ॥ ० ॥ शश्वता । तना । देवंऽदेवं । यजामहे ॥ त्वेइति । इत् । हूयते । हविः ॥ प्रियः । नः । अस्तु । विश्पतिः । होता । मंद्रः । वरेण्यः ॥ प्रियाः । सुऽअग्नयः । वयं । सुऽअग्नयः । हि । वार्यं । देवासः । दधिरे । च । नः ॥ सुऽअग्नयः । मनामहे ॥ अथ । नः । उभयेषां । अमृत । मर्त्यानां ॥ मिथः । संतु । प्रऽशस्तयः ॥ विश्वेभिः । अग्ने । अग्निऽभिः । इमं । यज्ञं । इदं । वचः ॥ चनः । धाः । सहसः । यहोइति ॥ २१ ॥ अश्वं । न । त्वा । वारऽवंतं । वंदध्यै । अग्निं । नमःऽभिः ॥ संऽराजंतं । अध्वराणां ॥ सः । घ । नः । सूनुः । शवसा । पृथुऽप्रगामा । सुऽशेवः ॥ मीढ्वान् । अस्माकं । बभूयात् ॥ सः । नः । दूरात् । च । आसात् । च । नि । मर्त्यात् । अघऽयोः ॥ पाहि । सदं । इत् । विश्वऽआयुः ॥ इमं । ऊंइति । सु । त्वं । अस्माकं । सनिं । गायत्रं । नव्यांसं ॥ अग्ने । देवेषु । प्र । वोचः ॥ आ । नः । भज । परमेषु । आ । वाजेषु । मध्यमेषु ॥ शिक्ष । वस्वः । अंतमस्य ॥ २२ ॥ विऽभक्ता । असि । चित्रभानोइति चित्रऽभानो । सिंधोः । ऊर्मौ । उपाके । आ । सद्यः । दाशुषे । क्षरसि ॥ यं । अग्ने । पृतऽसु । मर्त्यं ।

अवः । वाजेषु । यं । जुनाः ॥ सः । यंता । शश्वतीः । इषः ॥ नकिः । अस्य । सहंत्य । परिऽएता । कयस्य । चित् ॥ वाजः । अस्ति । श्रवाय्यः ॥ सः । वाजं । विश्वऽचर्षणिः । अर्वत्ऽभिः । अस्तु । तरुता । विप्रभिः । अस्तु । सनिता ॥ जराऽबोध । तत् । विविड्ढि । विशेऽविशे । यज्ञियाय ॥ स्तोमं । रुद्राय । दृशीकं ॥ २३ ॥ सः । नः । महान् । अनिऽमानः । धूमऽकेतुः । पुरुऽचंद्रः ॥ धिये । वाजाय । हिन्वतु ॥ सः । रेवान्ऽइव । विश्पतिः । दैव्यः । केतुः । शृणोतु । नः ॥ उक्थैः । अग्निः । बृहत्ऽभानुः ॥ नमः । महत्ऽभ्यः । नमः । अर्भकेभ्यः । नमः । युवऽभ्यः । नमः । आशिनेभ्यः ॥ यजाम । देवान् । यदि । शक्नवाम । मा । ज्यायसः । शंसं । आ । वृक्षि । देवाः ॥ २४ ॥ यत्र । ग्रावा । पृथुऽबुध्नः । ऊर्ध्वः । भवति । सोतवे ॥ उलूखलऽसुतानां । अव । इत् । ऊंइति । इंद्र । जल्गुलः ॥ यत्र । द्वौऽइव । जघना । अधिऽसवन्या । कृता ॥ ० ॥ यत्र । नारी । अपऽच्यवं । उपऽच्यवं । च । शिक्षते ॥ ० ॥ यत्र । मंथां । विऽबध्नते । रश्मीन् । यमितवैऽइव ॥ ० ॥ यत् । चित् । हि । त्वं । गृहेऽगृहे । उलूखलक । युज्यसे ॥ इह । द्युमत्ऽतमं । वद । जयतांऽइव । दुंदुभिः ॥ २५ ॥ उत । स्म । ते । वनस्पते । वातः । वि । वाति । अग्रं । इत् ॥ अथोइति । इंद्राय । पातवे । सुनु । सोमं । उलूखल ॥ आयजीइत्याऽयजी । वाजऽसातमा । ता । हि । उच्चा । विऽजर्भृतः ॥ हरीइवेतिहरीऽइव । अंधांसि । बप्सता । ता । नः । अद्य । वनस्पतीइति । ऋष्वौ । ऋष्वेभिः । सोतृऽभिः । इंद्राय । मधुऽमत् । सुतं ॥ उत् । शिष्टं । चम्वोः । भर । सोमं । पवित्रे । आ । सृज ॥ नि । धेहि । गोः । अधि । त्वचि ॥ २६ ॥ ० ॥ सत्य । सोमऽपाः । अनाशस्ताःऽइव । स्मसि ॥ ० ॥ शंसय । गोषु । अश्वेषु । शुभ्रिषु ।

सहस्रेषु । तुविऽमघ ॥ शिप्रिन् । वाजानां । पते । शचीऽवः । तव । दंसना ॥ ० ॥ नि । स्वापय । मिथुऽदृशा । सस्तां । अबुध्यमानेइति ॥ ० ॥ ससंतु । त्याः । अरातयः । बोधंतु । शूर । रातयः ॥ ० ॥ सं । इंद्र । गर्दभं । मृण । नुवंतं । पापया । अमुया ॥ ० ॥ पताति । कुंडृणाच्या । दूरं । वातः । वनात् । अधि ॥ ० ॥ सर्वं । परिऽक्रोशं । जहि । जंभय । कृकदाश्वं ॥ ० ॥ २७ ॥ आ वः । इन्द्रं । क्रिविं । यथा । वाजऽयंतः । शतऽक्रतुं ॥ मंहिष्ठं । सिंचे । इंदुऽभिः ॥ शतं । वा । यः । शुचीनां । सहस्रं । वा । संऽआशिरां ॥ आ । इत् । ऊंइति । निम्नं । न । रीयते ॥ सं । यत् । मदाय । शुष्मिणे । एना । हि । अस्य । उदरे ॥ समुद्रः । न । व्यचः । दधे ॥ अयं । ऊंइति । ते । सं । अतसि । कपोतःऽइव । गर्भऽधिं ॥ वचः । तत् । चित् । नः । ओहसे ॥ स्तोत्रं । राधानां । पते । गिर्वाहः । वीर । यस्य । ते । विऽभूतिः । अस्तु । सूनृता ॥ २८ ॥ ऊर्ध्वः । तिष्ठ । नः ऊतये । अस्मिन् । वाजे । शतक्रतोइतिशतऽक्रतो ॥ सं । अन्येषु । ब्रवावहै ॥ योगेऽयोगे । तवःऽतरं । वाजेऽवाजे । हवामहे ॥ सखायः । इंद्रं । ऊतये ॥ आ । घ । गमत् । यदि । श्रवत् । सहस्रिणीभिः । ऊतिऽभिः ॥ वाजेभिः । उप । नः । हवं ॥ अनु । प्रत्नस्य । ओकसः । हुवे । तुविऽप्रतिं । नरं ॥ यं । ते । पूर्वं । पिता । हुवे ॥ तं । त्वा । वयं । विश्वऽवार । आ । शास्महे । पुरुऽहूत ॥ सखे । वसोइति । जरितृऽभ्यः । ॥ २९ ॥ अस्माकं । शिप्रिणीनां । सोमऽपाः । सोमऽपाव्नां ॥ सखे । वज्रिन् । सखीनां ॥ तथा । तत् । अस्तु । सोमऽपाः । सखे । वज्रिन् । तथा । कृणु ॥ यथा । ते । उश्मसि । इष्टये ॥ रेवतीः । नः । सधऽमादे । इंद्रे । संतु । तुविऽवाजाः ॥ क्षुऽमंतः । याभिः । मदेम ॥ आ । घ । त्वाऽवान् । त्मना । आप्तः । स्तोतृऽभ्यः । धृष्णोइति ।

इयानः ॥ ऋणोः । अक्षं । न । चक्र्योः ॥ आ । यत् । दुवः ।
शतक्रतोइतिशतऽक्रतो । आ । कामं । जरितॄणां ॥ ऋणोः ।
अक्षं । न । शचीभिः ॥ ३० ॥ शश्वत् । इंद्रः । पोपृथत्ऽभिः ।
जिगाय । नानदत्ऽभिः । शाश्वसत्ऽभिः । धनानि ॥ सः । नः ।
हिरण्यऽरथं । दंसनाऽवान् । सः । नः । सनिता । सनये । सः ।
नः । अदात् ॥ आ । अश्विनौ । अश्वऽवत्या । इषा । यातं ।
शवीरया ॥ गोऽमत् । दस्रा । हिरण्यऽवत् ॥ समानऽयोजनः ।
हि । वां । रथः । दस्रौ । अमर्त्यः ॥ समुद्रे । अश्विना । ईयते ॥
नि । अघ्न्यस्य । मूर्धनि । चक्रं । रथस्य । येमथुः ॥ परि । द्यां ।
अन्यत् । ईयते ॥ कः । ते । उषः । कधऽप्रिये । भुजे । मर्तः ।
अमर्त्ये ॥ कं । नक्षसे । विभाऽवरि ॥ वयं । हि । ते । अमन्महि ।
आ । अंतात् । आ । पराकात् ॥ अश्वे । न । चित्रे । अरुषि ॥ त्वं ।
त्येभिः । आ । गहि । वाजेभिः । दुहितः । दिवः ॥ अस्मेइति । रयिं ।
नि । धारय ॥ ३१ ॥ त्वं । अग्ने । प्रथमः । अंगिराः । ऋषिः । देवः ।
देवानां । अभवः । शिवः । सखा ॥ तव । व्रते । कवयः । विद्मनाऽ-
अपसः । अजायंत । मरुतः । भ्राजत्ऽऋष्टयः ॥ ० ॥ अंगिरःऽतमः ।
कविः । देवानां । परि । भूषसि । व्रतं ॥ विऽभुः । विश्वस्मै । भुवनाय ।
मेधिरः । द्विऽमाता । शयुः । कतिधा । चित् । आयवे ॥ ० ॥
मातरिश्वने । आविः । भव । सुक्रतुऽया । विवस्वते ॥ अरेजेतां ।
रोदसीइति । होतृऽवूर्ये । असघ्नोः । भारं । अयजः । महः ।
वसोइति ॥ त्वं । अग्ने । मनवे । द्यां । अवाशयः । पुरूरवसे ।
सुऽकृते । सुकृत्ऽतरः ॥ श्वात्रेण । यत् । पित्रोः । मुच्यसे ।
परि । आ । त्वा । पूर्वं । अनयन् । आ । अपरं । पुनरितिं ॥
त्वं । अग्ने । वृषभः । पुष्टिऽवर्धनः । उद्यतऽस्रुचे । भवसि ।

श्रवाय्यः ॥ यः । आऽहुतिं । परि । वेद । वषट्ऽकृतिं । एकऽआयुः । अग्रे । विशः । आऽविवासति ॥ ३२ ॥ त्वं । अग्ने । वृजिनऽवर्तनिं । नरं । सक्मन् । पिपर्षि । विदथे । विऽचर्षणे ॥ यः । शूरऽसाता । परिऽतक्ये । धने । दभ्रेभिः । चित् । संऽऋता । हंसि । भूयसः ॥ त्वं । तं । अग्ने । अमृतऽत्वे । उत्ऽतमे । मर्तं । दधासि । श्रवसे । दिवेऽदिवे ॥ यः । ततृषाणः । उभयाय । जन्मने । मयः । कृणोषि । प्रयः । आ । च । सूरये ॥ त्वं । नः । अग्ने । सनये । धनानां । यशसं । कारुं । कृणुहि । स्तवानः ॥ ऋध्याम । कर्म । अपसा । नवेन । देवैः । द्यावापृथिवीइति । प्र । अवतं । नः ॥ ० ॥ पित्रोः । उपऽस्थे । आ । देवः । देवेषु । अनवद्य । जागृविः ॥ तनूऽकृत् । बोधि । प्रऽमतिः । च । कारवे । त्वं । कल्याण । वसु । विश्वं । आ । ऊपिषे ॥ त्वं । अग्ने । प्रऽमतिः । त्वं । पिता । असि । नः । त्वं । वयःऽकृत् । तव । जामयः । वयं ॥ सं । त्वा । रायः । शतिनः । सं । सहस्रिणः । सुऽवीरं । यंति । व्रतऽपां । अदाभ्य ॥ ३३ ॥ त्वां । अग्ने । प्रथमं । आयुं । आयवे । देवाः । अकृण्वन् । नहुषस्य । विश्पतिं ॥ इळां । अकृण्वन् । मनुषस्य । शासनीं । पितुः । यत् । पुत्रः । ममकस्य । जायते ॥ ० ॥ तव । देव । पायुऽभिः । मघोनः । रक्ष । तन्वः । च । वंद्य ॥ त्राता । तोकस्य । तनये । गवां । असि । अनिऽमेषं । रक्षमाणः । तव । व्रते । त्वं । अग्ने । यज्यवे । पायुः । अंतरः । अनिषंगाय । चतुःऽअक्षः । इध्यसे ॥ यः । रातऽहव्यः । अवृकाय । धायसे । कीरेः । चित् । मंत्रं । मनसा । वनोषि । तं ॥ त्वं । अग्ने । उरुऽशंसाय । वाघते । स्पार्हं । यत् । रेक्णः । परमं । वनोषि । तत् । आध्रस्य । चित् । प्रऽमतिः । उच्यसे । पिता । प्र ।

पाकं । शास्सि । प्र । दिशः । विदुःऽतरः ॥ त्वं । अग्ने । प्रयतऽदक्षिणं । नरं । वर्मऽइव । स्यूतं । परि । पासि । विश्वतः ॥ स्वादुऽक्षद्मा । यः । वसतौ । स्योनऽकृत् । जीवऽयाजं । यजते । सः । उपऽमा । दिवः ॥ ३४ ॥ इमां । अग्ने । शरणिं । मीमृषः । नः । इमं । अध्वानं । यं । अगाम । दूरात् । आपिः । पिता । प्रऽमतिः । सोम्यानां । भृमिः । असि । ऋषिऽकृत् । मर्त्यानां ॥ मनुष्वत् । अग्ने । अंगिरस्वत् । अंगिरः । ययातिऽवत् । सदने । पूर्वऽवत् । शुचे ॥ अच्छ । याहि । आ । वह । दैव्यं । जनं । आ । सादय । बर्हिषि । यक्षि । च । प्रियं ॥ एतेन । अग्ने । ब्रह्मणा । ववृधस्व । शक्ती । वा । यत् । ते । चकृम । विदा । वा । उत । प्र । नेषि । अभि । वस्यः । अस्मान् । सं । नः । सृज । सुऽमत्या । वाजऽवत्या ॥ ३५ ॥ इंद्रस्य । नु । वीर्याणि । प्र । वोचं । यानि । चकार । प्रथमानि । वज्री ॥ अहन् । अहिं । अनु । अपः । ततर्द । प्र । वक्षणाः । अभिनत् । पर्वतानां ॥ अहन् । अहिं । पर्वते । शिश्रियाणं । त्वष्टा । अस्मै । वज्रं । स्वर्यं । ततक्ष ॥ वाश्राःऽइव । धेनवः । स्यंदमानाः । अंजः । समुद्रं । अव । जग्मुः । आपः ॥ वृषऽयमाणः । अवृणीत । सोमं । त्रिऽकद्रुकेषु । अपिबत् । सुतस्य ॥ आ । सायकं । मघऽवा । अदत्त । वज्रं । अहन् । एनं । प्रथमऽजां । अहीनां ॥ यत् । इंद्र । अहन् । प्रथमऽजां । अहीनां । आत् । मायिनां । अमिनाः । प्र । उत । मायाः ॥ आत् । सूर्यं । जनयन् । द्यां । उषसं । तादीत्ना । शत्रुं । न । किल । विवित्से ॥ अहन् । वृत्रं । वृत्रऽतरं । विऽअंसं । इंद्रः । वज्रेण । महता । वधेन ॥ स्कंधांसिऽइव । कुलिशेन । विऽवृक्णा । अहिः । शयते । उपऽपृक् । पृथिव्याः ॥ ३६ ॥ अयोद्धाऽइव । दुःऽमदः । आ । हि । जुह्वे । महाऽवीरं । तुविऽबाधं । ऋजीषं ॥ न । अतारीत् । अस्य । संऽऋतिं । वधानां । सं । रुजानाः । पिपिषे ।

इंद्रऽशत्रुः ॥ अपात् । अहस्तः । अपृतन्यत् । इंद्रं । आ । अस्य । वज्रं । अधि । सानौ । जघान ॥ वृष्णः । वध्रिः । प्रतिऽमानं । बुभूषन् । पुरुऽत्रा । वृत्रः । अशयत् । विऽअस्तः ॥ नदं । न । भिन्नं । अमुया । शयानं । मनः । रुहाणाः । अति । यंति । आपः । याः । चित् । वृत्रः । महिना । परिऽअतिष्ठत् । तासां । अहिः । पत्सुतःऽशीः । बभूव ॥ नीचाऽवयाः । अभवत् । वृत्रऽपुत्रा । इंद्रः । अस्याः । अव । वधः । जभार ॥ उत्ऽतरा । सूः । अधरः । पुत्रः । आसीत् । दानुः । शये । सहऽवत्सा । न । धेनुः ॥ अतिष्ठंतीनां । अनिऽवेशनानां । काष्ठानां । मध्ये । निऽहितं । शरीरं ॥ वृत्रस्य । निण्यं । वि । चरंति । आपः । दीर्घं । तमः । आ । अशयत् । इंद्रऽशत्रुः ॥ ३७ ॥ दासऽपत्नीः । अहिऽगोपाः । अतिष्ठन् । निऽरुद्धाः । आपः । पणिनाऽइव । गावः ॥ अपां । बिलं । अपिऽहितं । यत् । आसीत् । वृत्रं । जघन्वान् । अप । तत् । ववार ॥ अश्व्यः । वारः । अभवः । तत् । इंद्र । सृके । यत् । त्वा । प्रतिऽअहन् । देवः । एकः ॥ अजयः । गाः । अजयः । शूर । सोमं । अव । असृजः । सर्तवे । सप्त । सिंधून् ॥ न । अस्मै । विऽद्युत् । न । तन्यतुः । सिसेध । न । यां । मिहं । अकिरत् । ह्रादुनिं । च ॥ इंद्रः । च । यत् । युयुधातेइति । अहिः । च । उत । अपरीभ्यः । मघऽवा । वि । जिग्ये ॥ अहेः । यातारं । कं । अपश्यः । इंद्र । हृदि । यत् । ते । जघ्नुषः । भीः । अगच्छत् ॥ नव । च । यत् । नवतिं । च । स्रवंतीः । श्येनः । न । भीतः । अतरः । रजांसि ॥ इंद्रः । यातः । अवऽसितस्य । राजा । शमस्य । च । शृंगिणः । वज्रऽबाहुः । सः । इत् । ऊंइति । राजा । क्षयति । चर्षणीनां । अरान् । न । नेमिः । परि । ता । बभूव ॥ ३८ ॥ प्रथमाष्टके द्वितीयोध्यायः ॥ ॥ हरिः ॐ ॥

आ । इत । अयाम । उप । गव्यंतः । इंद्रं । कुस्माकं । सु । प्रऽमतिं । वृवृधाति ॥ अनामृणः । कुवित् । आत् । अस्य । रायः । गवां । केतं । परं । आऽवर्जते । नः ॥ उप । इत् । अहं । धनऽदां । अप्रतिऽइतं । जुष्टां । न । श्येनः । वसतिं । पतामि ॥ इंद्रं । नमस्यन् । उपऽमेभिः । अर्कैः । यः । स्तोतृऽभ्यः । हव्यः । अस्ति । यामन् । नि । सर्वऽसेनः । इषुऽधीन् । असक्त । सं । अर्यः । गाः । अजति । यस्य । वष्टि ॥ चोष्कूयमाणः । इंद्र । भूरि । वामं । मा । पणिः । भूः । अस्मत् । अधि । प्रऽवृद्ध ॥ वधीः । हि । दस्युं । धनिनं । घनेन । एकः । चरन् । उपऽशाकेभिः । इंद्र ॥ धनोः । अधि । विषुणक् । ते । वि । आयन् । अयज्वानः । सनकाः । प्रऽइतिं । ईयुः ॥ परा । चित् । शीर्षा । ववृजुः । ते । इंद्र । अयज्वानः । यज्वऽभिः । स्पर्धमानाः ॥ प्र । यत् । दिवः । हरिऽवः । स्थातः । उग्र । निः । अव्रतान् । अधमः । रोदस्योः ॥ १ ॥ अयुयुत्सन् । अनवद्यस्य । सेनां । अयातयंत ॥ क्षितयः । नवऽग्वाः ॥ वृषऽयुधः । न । वध्रयः । निःऽअष्टाः । प्रवत्ऽभिः । इंद्रात् । चितयंतः । आयन् ॥ त्वं । एतान् । रुदतः । जक्षतः । च । अयोधयः । रजसः । इंद्र । पारे ॥ अव । अदहः । दिवः । आ । दस्युं । उच्चा । प्र । स्तुन्वतः । स्तुवतः । शंसं । आवः ॥ चक्राणासः । परिऽनहं । पृथिव्याः । हिरण्येन । मणिना । शुंभमानाः ॥ न । हिन्वानासः । तितिरुः । ते । इंद्रं । परि । स्पशः । अदधात् । सूर्येण ॥ परि । यत् । इंद्र । रोदसीइति । उभेइति । अबुभोजीः । महिना । विश्वतः । सीं ॥ अमन्यमानान् । अभि । मन्यमानैः । निः । ब्रह्मऽभिः । अधमः । दस्युं । इंद्र ॥ न । ये । दिवः । पृथिव्याः । अंतं । आपुः । न । मायाभिः । धनऽदां । परिऽअभूवन् ॥ युजं । वज्रं । वृषभः । चक्रे । इंद्रः । निः । ज्योतिषा ।

अधुक्षत् ॥ २ ॥ अनु । स्वधां । अक्षरन् । आपः । अस्य । अवर्धत ।
मध्ये । आ । नाव्यानां ॥ सध्रीचीनेन । मनसा । तं । इंद्रः । ओजिष्ठेन ।
हन्मना । अहन् । अभि । द्यून् ॥ नि । अविध्यत् । इलीबिशस्य ।
दृळ्हा । वि । शृंगिणं । अभिनत् । शुष्णं । इंद्रः ॥ यावत् । तरः ।
मघऽवन् । यावत् । ओजः । वज्रेण । शत्रुं । अवधीः । पृतन्युं ॥
अभि । सिध्मः । अजिगात् । अस्य । शत्रून् । वि । तिग्मेन ।
वृषभेण । पुरः । अभेत् ॥ सं । वज्रेण । असृजत् । वृत्रं । इंद्रः ।
प्र । स्वां । मतिं । अतिरत् । शाशदानः । अवः । कुत्सं । इंद्र ।
यस्मिन् । चाकन् । प्र । आवः । युध्यंतं । वृषभं । दशऽद्युं ॥
शफऽच्युतः । रेणुः । नक्षत । द्यां । उत् । श्वैत्रेयः । नृऽसह्याय ।
तस्थौ ॥ आवः । शमं । वृषभं । तुग्र्यासु । क्षेत्रऽजेषे । मघऽवन् ।
श्वित्र्यं । गां । ज्योक् । चित् । अत्र । तस्थिऽवांसः । अक्रन् ।
शत्रुऽयतां । अधरा । वेदना । अकरित्यकः ॥ ३ ॥ त्रिः । चित् ।
नः । अद्य । भवतं । नवेदसा । विऽभुः । वां । यामः । उत ।
रातिः । अश्विना ॥ युवोः । हि । यंत्रं । हिम्याऽइव । वाससः ।
अभिऽआयंसेन्या । भवतं । मनीषिऽभिः ॥ त्रयः । पवयः । मधुऽ-
वाहने । रथे । सोमस्य । वेनां । अनु । विश्वे । इत् । विदुः ॥
त्रयः । स्कंभासः । स्कभितासः । आऽरभे । त्रिः । नक्तं । याथः ।
त्रिः । ऊंइति । अश्विना । दिवा ॥ समाने । अहन् । त्रिः ।
अवद्यऽगोहना । त्रिः । अद्य । यज्ञं । मधुना । मिमिक्षतं ॥ त्रिः ।
वाजऽवतीः । इषः । अश्विना । युवं । दोषाः । अस्मभ्यं । उषसः ।
च । पिन्वतं ॥ त्रिः । वर्तिः । यातं । त्रिः । अनुऽव्रते । जने ।
त्रिः । सुप्रऽअव्ये । त्रेधाऽइव । शिक्षतं ॥ त्रिः । नांद्यं । वहतं ।
अश्विना । युवं । त्रिः । पृक्षः । अस्मेइति । अक्षराऽइव । पिन्वतं ॥

त्रिः । नः । रयिं । वहतं । अश्विना । युवं । त्रिः । देवऽताता । त्रिः । उत । अवतं । धियः ॥ त्रिः । सौभगऽत्वं । त्रिः । उत । श्रवांसि । नः । त्रिऽस्थं । वां । सूरे । दुहिता । आ । रुहत् । रथं ॥ त्रिः । नः । अश्विना । दिव्यानि । भेषजा । त्रिः । पार्थिवानि । त्रिः । ऊंइति । दत्तं । अत्ऽभ्यः ॥ ओमानं । शंऽयोः । ममकाय । सूनवे । त्रिऽधातु । शर्म । वहतं । शुभः । पतीइति ॥ ४ ॥ ० ॥ यजता । दिवेऽदिवे । परि । त्रिऽधातु । पृथिवीं । अशायतं । तिस्रः । नासत्या । रथ्या । पराऽवतः । आत्माऽइव । वातः । स्वसराणि । गच्छतं ॥ त्रिः । अश्विना । सिंधुऽभिः । सप्तमातृऽभिः । त्रयः । आऽहावाः । त्रेधा । हविः । कृतं । तिस्रः । पृथिवीः । उपरि । प्रवा । दिवः । नाकं । रक्षेथेइति । द्युऽभिः । अक्तुऽभिः । हितं ॥ क्व । त्री । चक्रा । त्रिऽवृतः । रथस्य । क्व । त्रयः । वंधुरः । ये । सऽनीळाः ॥ कदा । योगः । वाजिनः । रासभस्य । येन । यज्ञं । नासत्या । उपऽयाथः ॥ आ । नासत्या । गच्छतं । हूयते । हविः । मध्वः । पिबतं । मधुऽपेभिः ॥ असऽभिः । युवोः । हि । पूर्वं । सविता । उषसः । रथं । ऋताय । चित्रं । घृतऽवंतं । इष्यति ॥ आ । नासत्या । त्रिऽभिः । एकादशैः । इह । देवेभिः । यातं । मधुऽपेयं । अश्विना ॥ प्र । आयुः । तारिष्टं । निः । रपांसि । मृक्षतं । सेधतं । द्वेषः । भवतं । सचाऽभुवा । आ । नः । अश्विना । त्रिऽवृता । रथेन । अर्वांचं । रयिं । वहतं । सुऽवीरं ॥ शृण्वंता । वां । अवसे । जोहवीमि । वृधे । च । नः । भवतं । वाजऽसातौ ॥ ५ ॥ ह्वयामि । अग्निं । प्रथमं । स्वस्तये । ह्वयामि । मित्रावरुणौ । इह । अवसे ॥ ह्वयामि । रात्रीं । जगतः । निऽवेशनीं । ह्वयामि । देवं । सवितारं । ऊतये ॥ आ । कृष्णेन । रजसा । वर्तमानः । निऽवेशयन् । अमृतं । मर्त्यं । च ॥ हिरण्ययेन ।

सविता । रथेन । आ । देवः । याति । भुवनानि । पश्यन् ॥ याति । देवः । प्रऽवता । याति । उत्ऽवता । याति । शुभ्राभ्यां । यजतः । हरिऽभ्यां ॥ आ । देवः । याति । सविता । पराऽवतः । अप । विश्वा । दुःऽइता । बाधमानः ॥ अभिऽवृतं । कृशनैः । विश्वऽरूपं । हिरण्यऽशम्यं । यजतः । बृहंतं ॥ आ । अस्थात् । रथं । सविता । चित्रऽभानुः । कृष्णा । रजांसि । तविषीं । दधानः ॥ वि । जनान् । श्यावाः । शितिऽपादः । अख्यन् । रथं । हिरण्यऽप्रउगं । वहंतः ॥ शश्वत् । विशः । सवितुः । दैव्यस्य । उपऽस्थे । विश्वा । भुवनानि । तस्थुः ॥ तिस्रः । द्यावः । सवितुः । द्वौ । उपऽस्था । एका । यमस्य । भुवने । विराषाट् ॥ आणिं । न । रथ्यं । अमृता । अधि । तस्तुः । इह । ब्रवीतु । यः । ऊंइति । तत् । चिकेतत् ॥ ६ ॥ वि । सुऽपर्णः । अंतरिक्षाणि । अख्यत् । गभीरऽवेपाः । असुरः । सुऽनीथः ॥ क्व । इदानीं । सूर्यः । कः । चिकेत । कतमां । द्यां । रश्मिः । अस्य । आ । ततान ॥ अष्टौ । वि । अख्यत् । ककुभः । पृथिव्याः । त्री । धन्व । योजना । सप्त । सिंधून् ॥ हिरण्यऽअक्षः । सविता । देवः । आ । अगात् । दधत् । रत्ना । दाशुषे । वार्याणि ॥ हिरण्यऽपाणिः । सविता । विऽचर्षणिः । उभेइति । द्यावापृथिवीइति । अंतः । ईयते ॥ अप । अमीवां । बाधते । वेति । सूर्यं । अभि । कृष्णेन । रजसा । द्यां । ऋणोति ॥ हिरण्यऽहस्तः । असुरः । सुऽनीथः । सुऽमृळीकः । स्वऽवान् । यातु । अर्वाङ् ॥ अपऽसेधन् । रक्षसः । यातुऽधानान् । अस्थात् । देवः । प्रतिऽदोषं । गृणानः ॥ ये । ते । पंथाः । सवितरिति । पूर्व्यासः । अरेणवः । सुऽकृताः । अंतरिक्षे ॥ तेभिः । नः । अद्य । पथिऽभिः । सुऽगेभिः । रक्ष । च । नः । अधि । च । ब्रूहि । देव ॥ ७ ॥ प्र । वः । यह्वं । पुरूणां । विशां । देवऽयतीनां ॥ अग्निं । सुऽउक्तभिः । वचःऽभिः । ईमहे । यं । सीं । इत् ।

अन्ये । इळते ॥ जनासः । अग्निं । दधिरे । सहःऽवृधं । हविष्मंतः । विधेम । ते ॥ सः । त्वं । नः । अद्य । सुऽमनाः । इह । अविता । भव । वाजेषु । संत्य ॥ प्र । त्वा । दूतं । वृणीमहे । होतारं । विश्वऽवेदसं ॥ महः । ते । सतः । वि । चरंति । अर्चयः । दिवि । स्पृशंति । भानवः ॥ देवासः । त्वा । वरुणः । मित्रः । अर्यमा । सं । दूतं । प्रत्नं । इंधते ॥ विश्वं । सः । अग्ने । जयति । त्वया । धनं । यः । ते । ददाश । मर्त्यः ॥ मंद्रः । होता । गृहऽपतिः । अग्ने । दूतः । विशां । असि ॥ त्वेइति । विश्वा । संऽगतानि । व्रता । ध्रुवा । यानि । देवाः । अकृण्वत ॥ ८ ॥ त्वेइति । इत् । अग्ने । सुऽभगे । यविष्ठ्य । विश्वं । आ । हूयते । हविः ॥ ० ॥ उत । अपरं । यक्षि । देवान् । सुऽवीर्या ॥ तं । घ । ईं । इत्था । नमस्विनः । उप । स्वऽराजं । आसते ॥ होत्राभिः । अग्निं । मनुषः । सं । इंधते । तितिर्वांसः । अति । स्रिधः ॥ घ्नंतः । वृत्रं । अतरन् । रोदसीइति । अपः । उरु । क्षयाय । चक्रिरे ॥ भुवत् । कण्वे । वृषा । द्युम्नी । आऽहुतः । क्रंदत् । अश्वः । गोऽइष्टिषु ॥ सं । सीदस्व । महान् । असि । शोचस्व । देवऽवीतमः ॥ वि । धूमं । अग्ने । अरुषं । मियेध्य । सृज । प्रऽशस्त । दर्शतं ॥ यं । त्वा । देवासः । मनवे । दधुः । इह ॥ यजिष्ठं । हव्यऽवाहन । यं । कण्वः । मेध्यऽअतिथिः । धनऽस्पृतं । यं । वृषा । यं । उपऽस्तुतः ॥ ९ ॥ यं । अग्निं । मेध्यऽअतिथिः । कण्वः । ईधे । ऋतात् । अधि ॥ तस्य । प्र । इषः । दीदियुः । तं । इमाः । ऋचः । तं । अग्निं । वर्धयामसि ॥ रायः । पूर्धि । स्वधाऽवः । अस्ति । हि । ते । अग्ने । देवेषु । आप्यं ॥ त्वं । वाजस्य । श्रुत्यस्य । राजसि । सः । नः । मृळ । महान् । असि ॥ ऊर्ध्वः । ऊंइति । सु । नः । ऊतये । तिष्ठ । देवः । न । सविता ॥ ऊर्ध्वः । वाजस्य । सनिता । यत् । अंजिऽभिः ।

वाघत्ऽभिः । विऽह्वयामहे ॥ ऊर्ध्वः । नः । पाहि । अंहसः । नि । केतुना । विश्वं । सं । अत्रिणं । दह ॥ कृधि । नः । ऊर्ध्वान् । चरथाय । जीवसे । विदाः । देवेषु । नः । दुवः ॥ पाहि । नः । अग्ने । रक्षसः । पाहि । धूर्तेः । अराव्णः ॥ पाहि । रिषतः । उत । वा । जिघांसतः । बृहद्भानोइति बृहत्ऽभानो । यविष्ठ्य ॥ १० ॥ घनाऽइव । विष्वक् । वि । जहि । अराव्णः । तपुःऽजंभ । यः । अस्मऽध्रुक् ॥ यः । मर्त्यः । शिशीते । अति । अक्तुऽभिः । मा । नः । सः । रिपुः । ईशत ॥ अग्निः । वव्ने । सुऽवीर्यं । अग्निः । कण्वाय । सौभगं ॥ अग्निः । प्र । आवत् । मित्रा । उत । मेध्यऽअतिथिं । अग्निः । सतौ । उपऽस्तुतं ॥ अग्निना । तुर्वशं । यदुं । पराऽवतः । उग्रऽदेवं । हवमहे ॥ अग्निः । नयत् । नवऽवास्त्वं । बृहत्ऽरथं । तुर्वीतिं । दस्यवे । सहः ॥ नि । त्वां । अग्ने । मनुः । दधे । ज्योतिः । जनाय । शश्वते । दीदेथ । कण्वे । ऋतऽजातः । उक्षितः । यं । नमस्यंति । कृष्टयः ॥ त्वेषासः । अग्नेः । अमऽवंतः । अर्चयः । भीमासः । न । प्रतिऽतये ॥ रक्षस्विनः । सदं । इत् । यातुऽमावतः ॥ ० ॥ ॥ ११ ॥ क्रीळं । वः । शर्धः । मारुतं । अनर्वाणं । रथेऽशुभं ॥ कण्वाः । अभि । प्र । गायत ॥ ये । पृषतीभिः । ऋष्टिऽभिः । साकं । वाशीभिः । अंजिऽभिः ॥ अजायंत । स्वऽभानवः ॥ इहऽइव । शृण्वे । एषां । कशाः । हस्तेषु । यत् । वदान् ॥ नि । यामन् । चित्रं । ऋंजते ॥ प्र । वः । शर्धाय । घृष्वये । त्वेषऽद्युम्नाय । शुष्मिणे ॥ देवत्तं । ब्रह्म । गायत ॥ प्र । शंस । गोषु । अघ्न्यं । क्रीळं । यत् । शर्धः । मारुतं ॥ जंभे । रसस्य । ववृधे ॥ १२ ॥ कः । वः । वर्षिष्ठः । आ । नरः । दिवः । च । ग्मः । च । धूतयः ॥ यत् । सीं । अंतं । न । धूनुथ ॥ नि । वः । यामाय । मानुषः । दध्रे । उग्राय । मन्यवे ॥ जिहीत । पर्वतः । गिरिः ॥ येषां । अज्मेषु । पृथिवी ।

जुजुर्वान्ऽइव । विश्पतिः ॥ भिया । यामेषु । रेजंते ॥ स्थिरं । हि ।
जानं । एषां । वयः । मातुः । निःऽएतवे ॥ यत् । सीं । अनु । द्विता ।
शवः ॥ उत् । ऊंइति । त्ये । सूनवः । गिरः । काष्ठाः । अज्मेषु ।
अत्नत ॥ वाश्राः । अभिऽज्ञु । यातवे ॥ १३ ॥ त्यं । चित् । घ ।
दीर्घं । पृथुं । मिहः । नपातं । अमृध्रं । प्र । च्यवयंति । यामऽभिः ॥
मरुतः । यत् । ह । वः । बलं । जनान् । अचुच्यवीतन ॥ गिरीन् ।
अचुच्यवीतन ॥ यत् । ह । यांति । मरुतः । सं । ह । ब्रुवते । अध्वन् ।
आ ॥ शृणोति । कः । चित् । एषां ॥ प्र । यात । शीभं । आशुऽभिः ।
संति । कण्वेषु । वः ॥ दुवः ॥ तत्रोइति । सु । मादयाध्वै ॥ अस्ति ।
हि । स्म । मदाय । वः । स्मसि । स्म । वयं । एषां ॥ विश्वं । चित् ।
आयुः । जीवसे ॥ १४ ॥ कत् । ह । नूनं । कधऽप्रियः । पिता ।
पुत्रं । न । हस्तयोः ॥ दधिध्वे । वृक्तऽबर्हिषः ॥ क्व । नूनं । कत् ।
वः । अर्थं । गंत । दिवः । न । पृथिव्याः ॥ क्व । वः । गावः । न ।
रण्यंति ॥ क्व । वः । सुम्ना । नव्यांसि । मरुतः । क्व । सुविता ॥
क्वोइति । विश्वानि । सौभगा ॥ यत् । यूयं । पृश्निऽमातरः । मर्तासः ।
स्यातन ॥ स्तोता । वः । अमृतः । स्यात् ॥ मा । वः । मृगः । न ।
यवसे । जरिता । भूत् । अजोष्यः ॥ पथा । यमस्य । गात् । उप ॥ १५ ॥
मोइति । सु । नः । पराऽपरा । निःऽऋतिः । दुःऽहना । वधीत् ॥
पदीष्ट । तृष्णया । सह ॥ सत्यं । त्वेषाः । अमऽवंतः । धन्वन् ।
चित् । आ । रुद्रियासः ॥ मिहं । कृण्वंति । अवातां ॥ वाश्राऽइव ।
विऽद्युत् । मिमाति । वत्सं । न । माता । सिसक्ति ॥ यत् । एषां ।
वृष्टिः । असर्जि ॥ दिवा । चित् । तमः । कृण्वंति । पर्जन्येन । उदऽ-
वाहेन ॥ यत् । पृथिवीं । विऽउंदंति ॥ अध । स्वनात् । मरुतां ।
विश्वं । आ । सद्म । पार्थिवं ॥ अरेजंत । प्र । मानुषाः ॥ १६ ॥

मरुतः । वीळुपाणिऽभिः । चित्राः । रोधस्वतीः । अनु ॥ यात । ईं । अखिद्रयामऽभिः ॥ स्थिराः । वः । संतु । नेमयः । रथाः । अश्वासः । एषां ॥ सुऽसंस्कृताः । अभीशवः ॥ अछ । वद । तना । गिरा । जरायै । ब्रह्मणः । पतिं ॥ अग्निं । मित्रं । न । दर्शतं ॥ मिमीहि । श्लोकं । आस्ये । पर्जन्यःऽइव । ततनः ॥ गाय । गायत्रं । उक्थ्यं ॥ वंदस्व । मारुतं । गणं । त्वेषं । पनस्युं । अर्किणं ॥ अस्मेइति । वृद्धाः । असन् । इह ॥ १७ ॥ प्र । यत् । इत्था । पराऽवतः । शोचिः । न । मानं । अस्यथ ॥ कस्य । क्रत्वा । मरुतः । कस्य । वर्पसा । कं । याथ । कं । ह । धूतयः ॥ स्थिरा । वः । संतु । आयुधा । पराऽनुदे । वीळु । उत । प्रतिऽस्कभे ॥ युष्माकं । अस्तु । तविषी । पनीयसी । मा । मर्त्यस्य । मायिनः ॥ परा । ह । यत् । स्थिरं । हथ । नरः । वर्तयथ । गुरु । वि । याथन । वनिनः । पृथिव्याः । वि । आशाः । पर्वतानां ॥ नहि । वः । शत्रुः । विविदे । अधि । द्यवि । न । भूम्यां । रिशादसः ॥ ० ॥ तना । युजा । रुद्रासः । नु । चित् । आऽधृषे ॥ प्र । वेपयंति । पर्वतान् । वि । विंचंति । वनस्पतीन् ॥ प्रोइति । आरत । मरुतः । दुर्मदाःऽइव । देवासः । सर्वया । विशा ॥ १८ ॥ उपोइति । रथेषु । पृषतीः । अयुग्ध्वं । प्रष्टिः । वहति । रोहितः ॥ आ । वः । यामाय । पृथिवी । चित् । अश्रोत् । अबीभयंत । मानुषाः ॥ आ । वः । मक्षु । तनाय । कं । रुद्राः । अवः । वृणीमहे ॥ गंत । नूनं । नः । अवसा । यथा । पुरा । इत्था । कण्वाय । बिभ्युषे ॥ युष्माऽइषितः । मरुतः । मर्त्यऽइषितः । आ । यः । नः । अभ्वः । ईषते ॥ वि । तं । युयोत । शवसा । वि । ओजसा । वि । युष्माकाभिः । ऊतिऽभिः ॥ असामि । हि । प्रऽयज्यवः । कण्वं । दद । प्रऽचेतसः ॥ असामिऽभिः । मरुतः । आ । नः । ऊतिऽभिः । गंत । वृष्टिं । न ।

विऽद्युतः ॥ असामि । ओजः । विभृथ । सुऽदानवः । असामि । धूतयः । शवः । ऋषिऽद्विषे । मरुतः । परिऽमन्यवे । इषुं । न । सृजत । द्विषं ॥ १९ ॥ उत् । तिष्ठ । ब्रह्मणः । पते । देवऽयंतः । त्वा । ईमहे ॥ उप । प्र । यंतु । मरुतः । स्तुऽदानवः । इंद्र । प्राशूः । भव । सचा ॥ त्वां । इत् । हि । सहसः । पुत्र । मर्त्यः । उपऽब्रूते । धने । हिते ॥ स्तुऽवीर्यं । मरुतः । आ । सुऽअश्व्यं । दधीत । यः । वः । आऽचक्रे ॥ प्र । एतु । ब्रह्मणः । पतिः । प्र । देवी । एतु । सूनृता ॥ अच्छ । वीरं । नर्यं । पंक्तिऽराधसं । देवाः । यज्ञं । नयंतु । नः ॥ यः । वाघते । ददाति । सूनरं । वसु । सः । धत्ते । अक्षिति । श्रवः ॥ तस्मै । इळां । सुवीरां । आ । यजामहे । सुऽप्रतूर्तिं । अनेहसं ॥ प्र । नूनं । ब्रह्मणः । पतिः । मंत्रं । वदति । उक्थ्यं ॥ यस्मिन् । इंद्रः । वरुणः । मित्रः । अर्यमा । देवाः । ओकांसि । चक्रिरे ॥ २० ॥ तं । इत् । वोचेम । विदथेषु । शंऽभुवं । मंत्रं । देवाः । अनेहसं ॥ इमां । च । वाचं । प्रतिऽहर्यथ । नरः । विश्वा । इत् । वामा । वः । अश्नवत् ॥ कः । देवऽयंतं । अश्नवत् । जनं । कः । वृक्तऽबर्हिषं ॥ प्रऽप्र । दाश्वान् । पस्त्याभिः । अस्थित । अंतःऽवावत् । क्षयं । दधे ॥ उप । क्षत्रं । पृंचीत । हंति । राजऽभिः । भये । चित् । सुऽक्षितिं । दधे ॥ न । अस्य । वर्ता । न । तरुता । महाऽधने । न । अर्भे । अस्ति । वज्रिणः ॥ २१ ॥ यं । रक्षंति । प्रऽचेतसः ॥ ० ॥ नु । चित् । सः । दभ्यते । जनः ॥ यं । बाहुताऽइव । पिप्रति । पांति । मर्त्यं । रिषः ॥ अरिष्टः । सर्वः । एधते ॥ वि । दुःऽगा । वि । द्विषः । पुरः । घ्नंति । राजानः । एषां ॥ नयंति । दुःऽइता । तिरः ॥ स्तुऽगः । पंथाः । अनृक्षरः । आदित्यासः । ऋतं । यते ॥ न । अत्र । अवऽखादः । अस्ति । वः ॥ यं । यज्ञं । नयथ । नरः । आदित्याः । ऋजुना । पथा ॥

प्र । वः । सः । धीतये । नशत् ॥ २२ ॥ सः । रत्नं । मर्त्यः । वसु । विश्वं । तोकं । उत । त्मना । अच्छ । गच्छति । अस्तृतः ॥ कुथा । राधाम । सखायः । स्तोमं । मित्रस्य । अर्यम्णः ॥ महि । प्सरः । वरुणस्य ॥ मा । वः । घ्नंतं । मा । शपंतं । प्रति । वोचे । देवऽयंतं ॥ सुम्नैः । इत् । वः । आ । विवासे ॥ चतुरः । चित् । ददमानात् । विभीयात् । आ । निऽधातोः ॥ न । दुःऽउक्ताय । स्पृहयेत् ॥ २३ ॥ सं । पूषन् । अध्वनः । तिर । वि । अंहः । विऽमुचः । नपात् ॥ सक्ष्व । देव । प्र । नः । पुरः ॥ यः । नः । पूषन् । अघः । वृकः । दुःऽशेवः । आऽदिदेशति ॥ अप । स्म । तं । पथः । जहि ॥ अप । त्यं । परिऽपंथिनं । मुषीवाणं । हुरःऽचितं ॥ दूरं । अधि । स्रुतेः । अज ॥ त्वं । तस्य । द्वयाविनः । अघऽशंसस्य । कस्य । चित् ॥ पदा । अभि । तिष्ठ । तपुषिं ॥ आ । तत् । ते । दस्र । मंतुऽमः । पूषन् । अवः । वृणीमहे ॥ येन । पितॄन् । अचोदयः ॥ २४ ॥ अध । नः । विश्वऽसौभग । हिरण्यवाशीमत्ऽतम ॥ धनानि । सुऽसना । कृधि ॥ अति । नः । सश्चतः । नय । सुऽगा । नः । सुऽपथा । कृणु ॥ पूषन् । इह । क्रतुं । विदः ॥ अभि । सुऽयवसं । नय । न । नवऽज्वारः । अध्वने ॥ ० ॥ शग्धि । पूर्धि । प्र । यंसि । च । शिशीहि । प्रासि । उदरं ॥ ० ॥ न । पूषणं । मेथामसि । सुऽउक्तैः । अभि । गृणीमसि । वसूनि । दस्मं । ईमहे ॥ २५ ॥ कत् । रुद्राय । प्रऽचेतसे । मीळ्हुःऽतमाय । तव्यसे ॥ वोचेम । शंऽतमं । हृदे ॥ यथा । नः । अदितिः । करत् । पश्वे । नृऽभ्यः । यथा । गवे ॥ यथा । तोकाय । रुद्रियं ॥ यथा । नः । मित्रः । वरुणः । यथा । रुद्रः । चिकेतति ॥ यथा । विश्वे । सऽजोषसः ॥ गाथऽपतिं । मेधऽपतिं । रुद्रं । जलाषऽभेषजं ॥ तत् । शंऽयोः । सुम्नं । ईमहे ॥ यः । शुक्रःऽइव । सूर्यः । हिरण्यऽ-

इव । रोचते ॥ श्रेष्ठः । देवानां । वसुः ॥ २६ । शं । नः । करति । अर्वते । सुऽगं । मेषाय । मेष्ये ॥ नृऽभ्यः । नारिऽभ्यः । गवे ॥ अस्मेइति । सोम । श्रियं । अधि । नि । धेहि । शतस्य । नृणां ॥ महि । श्रवः । तुविऽनृम्णं ॥ मा । नः । सोमऽपरिबाधः । मा । अरातयः । जुहुरंत ॥ आ । नः । इंदोइति । वाजे । भज ॥ याः । ते । प्रऽजाः । अमृतस्य । परस्मिन् । धामन् । ऋतस्य ॥ मूर्धा । नाभा । सोम । वेनः । आऽभूषंतीः । सोम । वेदः ॥ २७ ॥ अग्ने । विवस्वत् । उषसः । चित्रं । राधः । अमर्त्य ॥ आ । दाशुषे । जातऽवेदः । वह । त्वं । अद्य । देवान् । उषःऽबुधः ॥ जुष्टः । हि । दूतः । असि । हव्यऽवाहनः । अग्ने । रथीः । अध्वराणां ॥ सऽजूः । अश्विऽभ्यां । उषसा । सुऽवीर्यं । अस्मेइति । धेहि । श्रवः । बृहत् ॥ अद्य । दूतं । वृणीमहे । वसुं । अग्निं । पुरुऽप्रियं ॥ धूमऽकेतुं । भाःऽऋजीकं । विऽउष्टिषु । यज्ञानां । अध्वरऽश्रियं ॥ श्रेष्ठं । यविष्ठं । अतिथिं । सुऽआहुतं । जुष्टं । जनाय । दाशुषे ॥ देवान् । अच्छ । यातवे । जातऽवेदसं । अग्निं । ईळे । विऽउष्टिषु ॥ स्तविष्यामि । त्वां । अहं । विश्वस्य । अमृत । भोजन ॥ अग्ने । त्रातारं । अमृतं । मियेध्य । यजिष्ठं । हव्यऽवहन ॥ २८ ॥ सुशंसः । बोधि । गृणते । यविष्ठ्य । मधुऽजिह्वः । सुऽआहुतः ॥ प्रस्कण्वस्य । प्रऽतिरन् । आयुः । जीवसे । नमस्य । दैव्यं । जनं ॥ होतारं । विश्वऽवेदसं । सं । हि । त्वा । विशः । इंधते ॥ सः । आ । वह । पुरुऽहूत । प्रऽचेतसः । अग्ने । देवान् । इह । द्रवत् ॥ सवितारं । उषसं । अश्विना । भगं । अग्निं । विऽउष्टिषु । क्षपः ॥ कण्वासः । त्वा । सुतऽसोमासः । इंधते । हव्यऽवाहं । सुऽअध्वर ॥ पतिः । हि । अध्वराणां । अग्ने । दूतः । विशां । असि ॥

उषःऽबुधः । आ । वह । सोमऽपीतये । देवान् । अद्य । स्वःऽदृशः ॥
अग्ने । पूर्वाः । अनु । उषसः । विभावसोइतिविभाऽवसो ।
दीदेथ । विश्वऽदर्शतः ॥ असि । ग्रामेषु । अविता । पुरःऽहितः ।
असि । यज्ञेषु । मानुषः ॥ २९ ॥ नि । त्वा । यज्ञस्य । साधनं ।
अग्ने । होतारं । ऋत्विजं ॥ मनुष्वत् । देव । धीमहि । प्रऽचेतसं ।
जीरं । दूतं । अमर्त्यं ॥ यत् । देवानां । मित्रऽमहः । पुरःऽहितः ।
अंतरः । यासि । दूत्यं ॥ सिंधोःऽइव । प्रऽस्वनितासः । ऊर्मयः ।
अग्नेः । भ्राजंते । अर्चयः ॥ श्रुधि । श्रुतऽकर्ण । वह्निऽभिः ।
देवैः । अग्ने । सयावऽभिः ॥ आ । सीदंतु । बर्हिषि । मित्रः ।
अर्यमा । प्रातःऽयावानः । अध्वरं ॥ शृण्वंतु । स्तोमं । मरुतः ।
सुऽदानवः । अग्निऽजिह्वाः । ऋतऽवृधः ॥ पिबतु । सोमं ।
वरुणः । धृतऽव्रतः । अश्विऽभ्यां । उषसा । सऽजूः ॥ ३० ॥
त्वं । अग्ने । वसून् । इह । रुद्रान् । आदित्यान् । उत । यज ।
सुऽअध्वरं । जनं । मनुऽजातं । घृतऽप्रुषं ॥ श्रुष्टीऽवानः । हि ।
दाशुषे । देवाः । अग्ने । विऽचेतसः ॥ तान् । रोहित्ऽअश्व । गिर्वणः ।
त्रयःऽत्रिंशतं । आ । वह ॥ प्रियमेधऽवत् । अत्रिऽवत् । जातऽवेदः ।
विरूपऽवत् ॥ अंगिरस्वत् । महिऽव्रत । प्रस्कण्वस्य । श्रुधि ।
हवं ॥ महिऽकेरवः । ऊतये । प्रियऽमेधाः । अहूषत ॥ राजंतं ।
अध्वराणां । अग्निं । शुक्रेण । शोचिषा ॥ घृतऽआहवन । संत्य ।
इमाः । ऊंइति । सु । श्रुधि । गिरः ॥ याभिः । कण्वस्य । सूनवः ।
हवंते । अवसे । त्वा ॥ ३१ ॥ त्वां । चित्रश्रवःऽतम । हवंते ।
विक्षु । जंतवः ॥ शोचिःऽकेशं । पुरुऽप्रिय । अग्ने । हव्याय । वोळ्हवे ॥
नि । त्वा । होतारं । ऋत्विजं । दधिरे । वसुवित्ऽतमं ॥ श्रुत्ऽकर्णं ।
सप्रथःऽतमं । विप्राः । अग्ने । दिविष्टिषु । आ । त्वा । विप्राः ।

अचुच्यवुः । सुतऽसोमाः । अभि । प्रयः ॥ बृहत् । भाः । बिभ्रतः ।
हविः । अग्ने । मर्ताय । दाशुषे ॥ प्रातःऽयाव्नः । सहःऽकृत । सोमऽ-
पेयाय । सन्त्य ॥ इह । अद्य । दैव्यं । जनं । बर्हिः । आ । सादय ।
वसोइति ॥ अर्वांचं । दैव्यं । जनं । अग्ने । यक्ष्व । सहूतिऽभिः ॥
अयं । सोमः । सुऽदानवः । तं । पात । तिरःऽअन्ह्यं ॥ ३२ ॥
एषोइति । उषाः । अपूर्व्या । वि । उच्छति । प्रिया । दिवः ॥ स्तुषे ।
वां । अश्विना । बृहत् ॥ या । दस्रा । सिंधुऽमातरा । मनोतरा ।
रयीणां ॥ धिया । देवा । वसुऽविदा ॥ वच्यंते । वां । ककुहासः ।
जूर्णायां । अधि । विष्टपि ॥ यत् । वां । रथः । विऽभिः । पतात् ॥
हविषा । जारः । अपां । पिपर्ति । पपुरिः । नरा ॥ पिता । कुटस्य ।
चर्षणिः ॥ आऽदारः । वां । मतीनां । नासत्या । मतऽवचसा ॥
पातं । सोमस्य । धृष्णुऽया ॥ ३३ ॥ या । नः । पीपरत् । अश्विना ।
ज्योतिष्मती । तमः । तिरः ॥ तां । अस्मेइति । रासाथां । इषं ॥
आ । नः । नावा । मतीनां । यातं । पाराय । गंतवे ॥ युंजाथां ।
अश्विना । रथं ॥ अरित्रं । वां । दिवः । पृथु । तीर्थे । सिंधूनां ।
रथः ॥ धिया । युयुज्रे । इंदवः ॥ दिवः । कण्वासः । इंदवः । वसु ।
सिंधूनां । पदे ॥ स्वं । वव्रिं । कुह । धित्सथः ॥ अभूत् । ऊंइति ।
भाः । ऊंइति । अंशवे । हिरण्यं । प्रति । सूर्यः ॥ वि । अख्यत् ।
जिह्वया । असितः ॥ ३४ ॥ अभूत् । ऊंइति । पारं । एतवे । पंथाः ।
ऋतस्य । साधुऽया ॥ अदर्शि । वि । स्रुतिः । दिवः ॥ तत्ऽतत् ।
इत् । अश्विनोः । अवः । जरिता । प्रति । भूषति ॥ मदे । सोमस्य ।
पिप्रतोः ॥ ववसाना । विवस्वति । सोमस्य । पीत्या । गिरा ॥
मनुष्वत् । शंभूइतिशंऽभू । आ । गतं ॥ युवोः । उषाः । अनु ।
श्रियं । परिऽज्मनोः । उपऽआचरत् ॥ ऋता । वनथः । अक्तुऽभिः ॥

उभा । पिबतं । अश्विना । उभा । नः । शर्म । यच्छतं ॥ अविद्रियाभिः । ऊतिऽभिः ॥ ३५ ॥

## इति प्रथमाष्टके तृतीयोध्यायः



## अथ चतुर्थोध्यायः

हरिः ॐ ॥ अयं । वां । मधुमत्ऽतमः । सुतः । सोमः । ऋतऽवृधा ॥ तं । अश्विना । पिबतं । तिरःऽअन्ह्यं । धत्तं । रत्नानि । दाशुषे । त्रिऽवंधुरेण । त्रिऽऽवृता । सुऽपेशसा । रथेन । आ । यातं । अश्विना ॥ कण्वासः । वां । ब्रह्म । कृण्वंति । अध्वरे । तेषां । सु । शृणुतं । हवं ॥ अश्विना । मधुमत्ऽतमं । पातं । सोमं । ऋतऽवृधा । अथ । अद्य । दस्रा । वसु । दिभ्रता । रथे । दाश्वांसं । उप । गच्छतं ॥ त्रिऽसधस्थे । बर्हिषि । विश्वऽवेदसा । मध्वा । यज्ञं । मिमिक्षतं ॥ कण्वासः । वां । सुतऽसोमाः । अभिऽद्यवः । युवां । हवंते । अश्विना ॥ याभिः । कण्वं । अभिष्टिऽभिः । प्र । आवतं । युवं । अश्विना ॥ ताभिः । सु । अस्मान् । अवतं । शुभः । पतीइति ॥ १ ॥ ० ॥ सुऽदासे ॥ ० ॥ पृक्षः । वहतं । अश्विना । रयिं । समुद्रात् । उत । वा । दिवः । परि । अस्मेइति । धत्तं । पुरुऽस्पृहं ॥ यत् । नासत्या । पराऽवति । यत् । वा । स्थः । अधि । तुर्वशे ॥ अतः । रथेन । सुऽवृता । नः । आ । गतं । साकं । सूर्यस्य । रश्मिऽभिः ॥ अर्वाचा । वां । सप्तयः । अध्वरऽश्रियः । वहंतु । सवना । इत् । उप ॥ इषं । पृंचंता । सुऽकृते ॥ सुऽदानवे । आ । बर्हिः । सीदतं । नरा । तेन । नासत्या । आ । गतं । रथेन । सूर्यऽत्वचा ॥ येन । शश्वत् । ऊहथुः । दाशुषे । वसु । मध्वः । सोमस्य ।

पीतये । उक्थेभिः । अर्वाक् । अवसे । पुरुवसूइतिपुरुऽवसू । अर्कैः । च । नि । ह्वयामहे ॥ शश्वत् । कण्वानां । सदसि । प्रिये । हि । कं । सोमं । पपथुः । अश्विना ॥ २ ॥ सह । वामेन । नः । उषः । वि । उच्छ । दुहितः । दिवः ॥ सह । द्युम्नेन । बृहता । विभाऽवरि । राया । देवि । दास्वती । अश्वऽवतीः । गोऽमतीः । विश्वऽसुविदः । भूरि । च्यवंत । वस्तवे ॥ उत् । ईरय । प्रति । मा । सूनृताः । उषः । चोद । राधः । मघोनां ॥ उवास ॥ उषाः । उच्छात् । च । नु । देवी । जीरा । रथानां ॥ ये । अस्याः । आऽचरणेषु । दध्रिरे । समुद्रे । न । श्रवस्यवः । उषः । ये । ते । प्र । यामेषु । युंजते । मनः । दानाय । सूरयः ॥ अत्र । अह । तत् । कण्वः । एषां । कण्वऽतमः । नाम । गृणाति । नृणां ॥ आ । घ । योषाऽइव । सूनरी । उषाः । याति । प्रऽभुंजती ॥ चरयंती । वृजनं । पत्ऽवत् । ईयते । उत् । पातयति । पक्षिणः ॥ ३ ॥ वि । या । सृजति । समनं । वि । अर्थिनः । पदं । न । वेति । ओदती ॥ वयः । नकिः । ते । पप्तिऽवांसः । आसते । विऽउष्टौ । वाजिनीऽवति ॥ एषा । अयुक्त । पराऽवतः । सूर्यस्य । उत्ऽअयनात् । अधि ॥ शतं । रथेभिः । सुऽभगा । उषाः । इयं । वि । याति । अभि । मानुषान् ॥ विश्वं । अस्याः । ननाम । चक्षसे । जगत् । ज्योतिः । कृणोति । सूनरी ॥ अप । द्वेषः । मघोनी । दुहिता । दिवः । उषाः । उच्छत् । अप । स्रिधः ॥ उषः । आ । भाहि । भानुना । चंद्रेण । दुहितः । दिवः ॥ आऽवहंती । भूरि । अस्मभ्यं । सौभगं । विऽउच्छंती । दिविष्टिषु ॥ विश्वस्य । हि प्राणनं । जीवनं । त्वेइति । वि । यत् । उच्छसि । सूनरि ॥ सा । नः । रथेन । बृहता । विभाऽवरि । श्रुधि । चित्रऽमघे । हवं ॥ ४ ॥ उषः ।

वाजं । हि । वंस्व । यः । चित्रः । मानुषे । जने ॥ तेन । आ ।
वह । सुऽकृतः । अध्वरान् । उप । ये । त्वा । गृणंति ।
वह्नयः ॥ विश्वान् । देवान् । आ । वह । सोमऽपीतये । अंतरिक्षात् ।
उषः । त्वं ॥ सा । अस्मासु । धाः । गोऽमत् । अश्वऽवत् । उक्थ्यं ॥
उषः । वाजं । सुऽवीर्यं ॥ यस्याः । रुशंतः । अर्चयः । प्रति ।
भद्राः । अदृक्षत ॥ सा । नः । रयिं । विश्वऽवारं । सुऽपेशसं ।
उषाः । ददातु । सुग्म्यं । ये । चित् । हि । त्वां । ऋषयः ।
पूर्वे । ऊतये । जुहूरे । अवसे । महि ॥ सा । नः । स्तोमान् ।
अभि । गृणीहि । राधसा । उषः । शुक्रेण । शोचिषा ॥ उषः ।
यत् । अद्य । भानुना । वि । द्वारौ । ऋणवः । दिवः ॥ प्र । नः ।
यच्छतात् । अवृकं । पृथु । छर्दिः । प्र । देवि । गोऽमतीः । इषः ॥
सं । नः । राया । बृहता । विश्वऽपेशसा । मिमिक्ष्व । सं ।
इळाभिः । आ ॥ सं । द्युम्नेन । विश्वऽतुरा । उषः । महि ।
सं । वाजैः । वाजिनीऽवति ॥ ५ ॥ उषः । भद्रेभिः । आ । गहि ।
दिवः । चित् । रोचनात् । अधि ॥ वहंतु । अरुणऽप्सवः । उप ।
त्वा । सोमिनः । गृहं ॥ सुऽपेशसं । सुऽखं । रथं । यं । अधिऽअस्थाः ।
उषः । त्वं ॥ तेन । सुऽश्रवसं । जनं । प्र । अव । अद्य । दुहितः ।
दिवः ॥ वयः । चित् । ते । पतत्रिणः । द्विऽपत् । चतुःऽपत् । अर्जुनि ॥
उषः । प्र । आरन् । ऋतून् । अनु । दिवः । अंतेभ्यः । परि ॥ विऽउच्छंती ।
हि । रश्मिऽभिः । विश्वं । आऽभासि । रोचनं ॥ तां । त्वां ।
उषः । वसुऽयवः । गीःऽभिः । कण्वाः । अहूषत ॥ ६ ॥ उत् ।
ऊं इति । त्यं । जातऽवेदसं । देवं । वहंति । केतवः । दृशे ।
विश्वाय । सूर्यं ॥ अप । त्ये । तायवः । यथा । नक्षत्रा । यंति ।
अक्तुऽभिः ॥ सूराय । विश्वऽचक्षसे ॥ अदृश्रं । अस्य । केतवः ।

वि । रश्मयः । जनान् । अनु ॥ भ्राजंतः । अग्नयः । यथा ॥ तरणिः । विश्वऽदर्शतः । ज्योतिःऽकृत् । असि । सूर्य ॥ विश्वं । आ । भासि । रोचनं ॥ प्रत्यङ् । देवानां । विशः । प्रत्यङ् । उत् । एषि । मानुषान् ॥ प्रत्यङ् । विश्वं । स्वः । दृशे ॥ ७ ॥ येन । पावक । चक्षसा । भुरण्यंतं । जनान् । अनु ॥ त्वं । वरुण । पश्यसि ॥ वि । द्यां । एषि । रजः । पृथु । अहा । मिमानः । अक्तुऽभिः ॥ पश्यन् । जन्मानि । सूर्य ॥ सप्त । त्वा । हरितः । रथे । वहंति । देव । सूर्य ॥ शोचिःऽकेशं । विऽचक्षण ॥ अयुक्त । सप्त । शुंध्युवः । सूरः । रथस्य । नप्त्यः ॥ ताभिः । याति । स्वयुक्तिऽभिः ॥ उत् । वयं । तमसः । परि । ज्योतिः । पश्यंतः । उत्ऽतरं ॥ देवं । देवऽत्रा । सूर्यं । अगन्म । ज्योतिः । उत्ऽतमं । उत्ऽयन् । अद्य । मित्रऽमहः । आऽरोहन् । उत्ऽतरां । दिवं ॥ हृत्ऽरोगं । मम । सूर्य । हरिमाणं । च । नाशय ॥ शुकेषु । मे । हरिमाणं । रोपणाकासु । दध्मसि ॥ अथोइति । हारिद्रवेषु । मे । हरिमाणं । नि । दध्मसि ॥ उत् । अगात् । अयं । आदित्यः । विश्वेन । सहसा । सह ॥ द्विषंतं । मह्यं । रंधयन् । मोइति । अहं । द्विषते । रधं ॥ ८ ॥ अभि । त्यं । मेषं । पुरुऽहूतं । ऋग्मियं । इंद्रं । गीःऽभिः । मदत । वस्वः । अर्णवं । यस्य । द्यावः । न । विऽचरंति । मानुषा । भुजे । मंहिष्ठं । अभि । विप्रं । अर्चत ॥ अभि । ईं । अवन्वन् । सुऽअभिष्टिं । ऊतयः । अंतरिक्षऽप्रां । तविषीभिः । आऽवृतं ॥ इंद्रं । दक्षासः । ऋभवः । मदऽच्युतं । शतऽक्रतुं । जवनी । सूनृता । आ । अरुहत् ॥ त्वं । गोत्रं । अंगिरःऽभ्यः । अवृणोः । अप । उत । अत्रये । शतऽदुरेषु । गातुऽवित् ॥ ससेन । चित् । विऽमदाय । अवहः । वसु । आजौ । अद्रिं । ववसानस्य । नर्तयन् ॥ त्वं ।

अपां । अपिऽधाना । अवृणोः । अप । अधारयः । पर्वते । दानुऽमत् । वसु ॥ वृत्रं । यत् । इंद्र । शवसा । अवधीः । अहिं । आत् । इत् । सूर्यं । दिवि । आ । अरोहयः । दृशे ॥ त्वं । मायाभिः । अप । मायिनः । अधमः । स्वधाभिः । ये । अधि । शुप्तौ । अजुह्वत ॥ त्वं । पिप्रोः । नृऽमनः । प्र । अरुजः । पुरः । प्र । ऋजिश्वानं । दस्युऽहत्येषु । आविथ ॥ ९ ॥ त्वं । कुत्सं । शुष्णऽहत्येषु । आविथ । अरंधयः । अतिथिऽग्वाय । शंबरं ॥ महांतं । चित् । अर्बुदं । नि । क्रमीः । पदा । सनात् । एव । दस्युऽहत्याय । जज्ञिषे ॥ त्वेइति । विश्वा । तविषी । सध्र्यक् । हिता । तव । राधः । सोमऽपीथाय । हर्षते ॥ तव । वज्रः । चिकिते । बाह्वोः । हितः । वृश्च । शत्रोः । अव । विश्वानि । वृष्ण्या ॥ वि । जानीहि । आर्यान् । ये । च । दस्यवः । बर्हिष्मते । रंधय । शासत् । अव्रतान् । शाकी । भव । यजमानस्य । चोदिता । विश्वा । इत् । ता । ते । सधऽमादेषु । चाकन ॥ अनुऽव्रताय । रंधयन् । अपऽव्रतान् । आऽभूभिः । इंद्रः । श्नथयन् । अनाभुवः ॥ वृद्धस्य । चित् । वर्धतः । द्यां । इनक्षतः । स्तवानः । वम्रः । वि । जघान । संऽदिहः ॥ तक्षत् । यत् । ते । उशना । सहसा । सहः । वि । रोदसीइति । मज्मना । बाधते । शवः । आ । त्वा । वातस्य । नृऽमनः । मनःऽयुजः । आ । पूर्यमाणं । अवहन् । अभि । श्रवः ॥ १० ॥ मंदिष्ट । यत् । उशने । काव्ये । सचा । इंद्रः । वंकूइति । वंकुऽतरा । अधि । तिष्ठति ॥ उग्रः । ययिं । निः । अपः । स्रोतसा । असृजत् । वि । शुष्णस्य । दृंहिताः । ऐरयत् । पुरः ॥ आ । स्म । रथं । वृषऽपानेषु । तिष्ठसि । शार्यातस्य । प्रऽभृताः । येषु । मंदसे ॥ इंद्र । यथा । सुतऽ-

सोमेषु । चाकनः । अनर्वाणं । श्लोकं । आ । रोहसे । दिवि । अददाः । अर्भां । महते । वचस्यवे । कक्षीवते । वृचयां । इंद्र । सुन्वते । मेना । अभवः । वृषणश्वस्य । सुक्रतोइतिसुऽक्रतो ॥ ० ॥ सवनेषु । प्रऽवाच्या ॥ इंद्रः । अश्रायि । सुऽध्यः । निरेके । पज्रेषु । स्तोमः । दुर्यः । न । यूपः ॥ अश्वऽयुः । गव्युः । रथऽयुः । वसुऽयुः । इंद्रः । इत् । रायः । क्षयति । प्रऽयंता ॥ इदं । नमः । वृषभाय । स्वऽराजे । सत्यऽशुष्माय । तवसे । अवाचि ॥ अस्मिन् । इंद्र । वृजने । सर्वऽवीराः । स्मत् । सूरिऽभिः । तव । शर्मन् । स्याम ॥ ११ ॥ त्यं । सु । मेषं । महय । स्वःऽविदं । शतं । यस्य । सुऽभ्वः । साकं । ईरते ॥ अत्यं । न । वाजं । हवनऽस्यदं । रथं । आ । इंद्रं । ववृत्यां । अवसे । सुवृक्तिऽभिः ॥ सः । पर्वतः । न । धरुणेषु । अच्युतः । सहस्रंऽऊतिः । तविषीषु । ववृधे ॥ इंद्रः । यत् । वृत्रं । अवधीत् । नदीऽवृतं । उब्जन् । अर्णांसि । जर्हृषाणः । अंधसा ॥ सः । हि । द्वरः । द्वरिषु । वव्रः । ऊधनि । चंद्रऽबुध्नः । मदऽवृद्धः । मनीषिऽभिः ॥ इंद्रं । तं । अह्वे । सुऽअपस्यया । धिया । मंहिष्ठऽरातिं । सः । हि । पप्रिः । अंधसः ॥ आ । यं । पृणंति । दिवि । सद्मऽबर्हिषः । समुद्रं । न । सुऽभ्वः । स्वाः । अभिष्टयः ॥ तं । वृत्रऽहत्ये । अनु । तस्थुः । ऊतयः । शुष्माः । इंद्रं । अवाताः । अह्रुतऽप्सवः ॥ अभि । स्वऽवृष्टिं । मदे । अस्य । युध्यतः । रघ्वीःऽइव । प्रवणे । सस्रुः । ऊतयः ॥ इंद्रः । यत् । वज्री । धृषमाणः । अंधसा । भिनत् । वलस्य । परिधीन्ऽइव । त्रितः ॥ १२ ॥ परि । ईं । घृणा । चरति । तित्विषे । शवः । अपः । वृत्वी । रजसः । बुध्नं । आ । अशयत ॥ वृत्रस्य । यत् । प्रवणे । दुःऽगृभिश्वनः । निऽजघंथ । हन्वोः । इंद्र । तन्यतुं ॥ हृदं । न । हि । त्वा । निऽऋषंति । ऊर्मयः । ब्रह्माणि । इंद्र । तव । यानि ।

वर्धना ॥ त्वष्टा । चित् । ते । युज्यं । ववृधे । शवः । ततक्ष । वज्रं ।
अभिभूतिऽओजसं ॥ जघन्वान् । ऊंइति । हरिऽभिः । संभृतक्रतोइति-
संभृतऽक्रतो । इंद्र । वृत्रं । मनुषे । गातुऽयन् । अपः । अयच्छथाः ॥
बाह्वोः । वज्रं । आयसं । अधारयः । दिवि । आ । सूर्यं । दृशे ॥ बृहत् ।
स्वऽचंद्रं । अमऽवत् । यत् । उक्थ्यं । अकृण्वत । भियसा । रोहणं ।
दिवः ॥ यत् । मानुषऽप्रधनाः । इंद्रं । ऊतयः । स्वः । नृऽसाचः ।
मरुतः । अमदन् । अनु ॥ द्यौः । चित् । अस्य । अमऽवान् । अहेः ।
स्वनात् । अयोयवीत् । भियसा । वज्रः । इंद्र । ते ॥ वृत्रस्य । यत् ।
बद्बधानस्य । रोदसीइति । मदे । सुतस्य । शवसा । अभिनत् ।
शिरः ॥ १३ ॥ यत् । इत् । नु । इंद्र । पृथिवी । दशऽभुजिः ।
अहानि । विश्वा । ततनंत । कृष्टयः ॥ अत्र । अह । ते । मघऽवन् ।
विऽश्रुतं । सहः । द्यां । अनु । शवसा । बर्हणा । भुवत् ॥ त्वं ।
अस्य । पारे । रजसः । विऽओमनः । स्वभूतिऽओजाः । अवसे ।
धृषत्ऽमनः ॥ चकृषे । भूमिं । प्रतिऽमानं । ओजसः । अपः ।
स्व१रितिस्वः । परिऽभूः । एषि । आ । दिवं ॥ त्वं । भुवः । प्रतिऽ-
मानं । पृथिव्याः । ऋष्वऽवीरस्य । बृहतः । पतिः । भूः । विश्वं ।
आ । अप्राः । अंतरिक्षं । महिऽत्वा । सत्यं । अद्धा । नकिः ।
अन्यः । त्वाऽवान् ॥ न । यस्य । द्यावापृथिवीइति । अनु ।
व्यचः । न । सिंधवः । रजसः । अंतं । आनशुः ॥ न । उत ।
स्वऽवृष्टिं । मदे । अस्य । युध्यतः । एकः । अन्यत् । चकृषे ।
विश्वं । आनुषक् ॥ आर्चन् । अत्र । मरुतः । सस्मिन् । आजौ ।
विश्वे । देवासः । अमदन् । अनु । त्वा । वृत्रस्य । यत् । भृष्टिऽमता ।
वधेन । नि । त्वं । इंद्र । प्रति । आनं । जघंथ ॥ १४ ॥ नि । ऊंइति ।
सु । वाचं । प्र । महे । भरामहे । गिरः । इंद्राय । सदने । विवस्वतः ॥

नु । चित् । हि । रत्नं । ससताम्ऽइव । अविंदत् । न । दुःऽस्तुतिः ।
द्रविणःऽदेषु । शस्यते ॥ दुरः । अश्वस्य । दुरः । इंद्र । गोः । असि ।
दुरः । यवस्य । वसुनः । इनः । पतिः ॥ शिक्षाऽनरः । प्रऽदिवः ।
अकामऽकर्शनः । सखा । सखिऽभ्यः । तं । इदं । गृणीमसि ॥
शचीऽवः । इंद्र । पुरुऽकृत । द्युमत्ऽतम । तव । इत् । इदं । अभितः ।
चेकिते । वसु ॥ अतः । संऽगृभ्य । अभिऽभूते । आ । भर । मा ।
त्वाऽयतः । जरितुः । कामं । ऊनयीः ॥ एभिः । द्युऽभिः । सुऽमनाः ।
एभिः । इंदुऽभिः । निऽरुंधानः । अमतिं । गोभिः । अश्विना ॥ इंद्रेण ।
दस्युं । दरयंतः । इंदुऽभिः । युतऽद्वेषसः । सं । इषा । रभेमहि । सं ।
इंद्र । राया । सं । इषा । रभेमहि । सं । वाजेभिः । पुरुऽचंद्रैः । अभिद्युऽ-
भिः ॥ सं । देव्या । प्रऽमत्या । वीरऽशुष्मया । गोऽअग्रया । अश्वऽवत्या ।
रभेमहि ॥ १५ ॥ ते । त्वा । मदाः । अमदन् । तानि । वृष्ण्या । ते ।
सोमासः । वृत्रऽहत्येषु । सत्ऽपते ॥ यत् । कारवे । दश । वृत्राणि ।
अप्रति । बर्हिष्मते । नि । सहस्राणि । बर्हयः ॥ युधा । युधं । उप । घ ।
इत् । एषि । धृष्णुऽया । पुरा । पुरं । सं । इदं । हंसि । ओजसा ॥
नम्या । यत् । इंद्र । सख्या । पराऽवति । निऽबर्हयः । नमुचिं ।
नाम । मायिनं ॥ त्वं । करंजं । उत । पर्णयं । वधीः । तेजिष्ठया ।
अतिथिऽग्वस्य । वर्तनी ॥ त्वं । शता । वंगृदस्य । अभिनत् । पुरः ।
अननुऽदः । परिऽसूताः । ऋजिश्वना ॥ त्वं । एतान् । जनऽराज्ञः ।
द्विः । दश । अबंधुना । सुऽश्रवसा । उपऽजग्मुषः ॥ षष्टिं । सहस्रा ।
नवतिं । नव । श्रुतः । नि । चक्रेण । रथ्या । दुःऽपदा । अवृणक् ॥
त्वं । आविथ । सुऽश्रवसं । तव । ऊतिऽभिः । तव । त्रामऽभिः ।
इंद्र । तूर्वयाणं ॥ त्वं । अस्मै । कुत्सं । अतिथिऽग्वं । आयुं । महे ।
राज्ञे । यूने । अरंधनायः ॥ ये । उत्ऽऋचि । इंद्र । देवऽगोपाः ।

सखायः । ते । शिवऽतमाः । असाम ॥ त्वां । स्तोषाम । त्वया । सुऽवीराः । द्राघीयः । आयुः । प्रऽतरं । दधानाः ॥ १६ ॥ मा । नः । अस्मिन् । मघऽवन् । पृत्ऽसु । अंहसि । नहि । ते । अंतः । शवसः । परिऽनशे ॥ अक्रंदयः । नद्यः । रोरुवत् । वना । कथा । न । क्षोणीः । भियसा । सं । आरत ॥ अर्च । शक्राय । शाकिने । शचीऽवते । शृण्वंतं । इंद्रं । महयन् । अभि । स्तुहि ॥ यः । धृष्णुना । शवसा । रोदसीइति । उभेइति । वृषा । वृषऽत्वा । वृषभः । निऽऋंजते । अर्च । दिवे । बृहते । शूष्यं । वचः । स्वऽक्षत्रं । यस्य । धृषतः । धृषत् । मनः ॥ बृहत्ऽश्रवाः । असुरः । वर्हणा । कृतः । पुरः । हरिऽभ्यां । वृषभः । रथः । हि । सः ॥ त्वं । दिवः । बृहतः । सानु । कोपयः । अव । त्मना । धृषता । शबरं । भिनत् ॥ यत् । मायिनः । व्रंदिनः । मंदिना । धृषत् । शितां । गभस्ति । अशनिं । पृतन्यसि ॥ नि । यत् । वृणक्षि । श्वसनस्य । मूर्धनि । शुष्णस्य । चित् । व्रंदिनः । रोरुवत् । वना ॥ प्रचीनेन । मनसा । वर्हणाऽवता । यत् । अद्य । चित् । कृणवः । कः । त्वा । परि ॥ १७ ॥ त्वं । आविथ । नर्यं । तुर्वशं । यदुं । त्वं । तुर्वीतिं । वय्यं । शतक्रतोइतिशतऽक्रतो ॥ त्वं । रथं । एतशं । कृत्व्ये । धने । त्वं । पुरः । नवतिं । दंभयः । नव । सः । घ । राजा । सत्ऽपतिः । शूशुवत् । जनः । रातऽहव्यः । प्रति । यः । शासं । इन्वति । उक्था । वा । यः । अभिऽगृणाति । राधसा । दानुः । अस्मै । उपरा । पिन्वते । दिवः ॥ असमं । क्षत्रं । असमा । मनीषा । प्र । सोमऽपाः । अपसा । संतु । नेमे ॥ ये । ते । इंद्र । ददुषः । वर्धयंति । महि । क्षत्रं । स्थविरं । वृष्ण्यं । च ॥ तुभ्य । इत् । एते । बहुलाः । अद्रिऽदुग्धाः । चमूऽसदः । चमसाः । इंद्रऽपानाः ॥ वि । अश्नुहि । तर्पय । कामं । एषां । अथ ।

मनः । वसुऽदेयाय । कृष्व ॥ अपां । अतिष्ठत् । धरुणऽह्वरं । तमः ।
अंतः । वृत्रस्य । जठरेषु । पर्वतः ॥ अभि । ईं । इंद्रः । नद्यः ।
वव्रिणा । हिताः । विश्वाः । अनुऽस्थाः । प्रवणेषु । जिघ्नते ॥ सः ।
शेऽवृधं । अधि । धाः । द्युम्नं । अस्मेइति । महि । क्षत्रं । जनाषाट् ।
इंद्र । तव्यं ॥ रक्ष । च । नः । मघोनः । पाहि । सूरीन् । राये । च ।
नः । सुऽअपत्ये । इषे । धाः ॥ १८ ॥ दिवः । चित् । अस्य ।
वरिमा । वि । पप्रथे । इंद्रं । न । मह्ना । पृथिवी । चन । प्रति ॥
भीमः । तुविष्मान् । चर्षणिऽभ्यः । आऽतपः । शिशीते । वज्रं ।
तेजसे । न । वंसगः ॥ सः । अर्णवः । न । नद्यः । समुद्रियः । प्रति ।
गृभ्णाति । विऽश्रिताः । वरीमऽभिः ॥ इंद्रः । सोमस्य । पीतये ।
वृषऽयते । सनात् । सः । युध्मः । ओजसा । पनस्यते ॥ त्वं । तं ।
इंद्र । पर्वतं । न । भोजसे । महः । नृम्णस्य । धर्मणां । इरज्यसि ॥
प्र । वीर्येण । देवता । अति । चकिते । विश्वस्मै । उग्रः । कर्मणे ।
पुरःऽहितः ॥ सः । इत् । वने । नमस्युऽभिः । वचस्यते । चारु ।
जनेषु । प्रऽब्रुवाणः । इंद्रियं ॥ वृषा । छंदुः । भवति । हर्यतः ।
वृषा । क्षेमेण । धेनां । मघऽवा । यत् । इन्वति ॥ सः । इत् ।
महानि । संऽइथानि । मज्मना । कृणोति । युध्मः । ओजसा ।
जनेभ्यः ॥ अध । चन । श्रत् । दधति । त्विषिऽमते । इंद्राय । वज्रं ।
निऽघनिघ्नते । वधं ॥ १९ ॥ सः । हि । श्रवस्युः । सदनानि ।
कृत्रिमा । क्ष्मया । वृधानः । ओजसा । विऽनाशयन् । ज्योतींषि ।
कृण्वन् । अवृकाणि । यज्यवे । अव । सुऽक्रतुः । सर्तवै । अपः ।
सृजत् ॥ दानाय । मनः । सोमऽपावन् । अस्तु । ते । अर्वांचा ।
हरीइति । वंदनऽश्रुत् । आ । कृधि ॥ यमिष्ठासः । सारथयः । ये ।
इंद्र । ते । न । त्वा । केताः । आ । दभ्नुवंति । भूर्णयः ॥ अप्रऽक्षितं ।

वसु । बिभर्षि । हस्तयोः । अषाळ्हं । सहः । तन्वि । श्रुतः । दधे ॥ आऽवृतासः । अवतासः । न । कर्तृऽभिः । तनूषु । ते । क्रतवः । इंद्र । भूरयः ॥ २० ॥ एषः । प्र । पूर्वीः । अव । तस्य । चम्रिषः । अत्यः । न । योषां । उत् । अयंस्त । भुर्वणिः । दक्षं । महे । पयते । हिरण्ययं । रथं । आऽवृत्य । हरिऽयोगं । ऋभ्वसं ॥ तं । गूर्तयः । नेमन्ऽइषः । परीणसः । समुद्रं । न । संऽचरणे । सनिष्यवः ॥ पतिं । दक्षस्य । विदथस्य । नु । सहः । गिरिं । न । वेनाः । अधि । रोह । तेजसा ॥ सः । तुर्वणिः । महान् । अरेणु । पौंस्ये । गिरेः । भृष्टिः । न । भ्राजते । तुजा । शवः ॥ येन । शुष्णं । मायिनं । आयसः । मदे । दुध्रः । आभूषु । रमयत् । नि । दामनि ॥ देवी । यदि । तविषी । त्वाऽवृधा । ऊतये । इंद्रं । सिसक्ति । उषसं । न । सूर्यः ॥ ० ॥ वाधते । तमः । इयर्ति । रेणुं । बृहत् । अर्हरिऽस्वनिः । वि । यत् । तिरः । धरुणं । अच्युतं । रजः । अतिस्थिपः । दिवः । आतासु । बर्हणा ॥ स्वःऽमीळ्हे । यत् । मदे । इंद्र । हर्ष्या । अहन् । वृत्रं । निः । अपां । औब्जः । अर्णवं ॥ त्वं । दिवः । धरुणं । धिषे । ओजसा । पृथिव्याः । इंद्र । सदनेषु । माहिनः ॥ त्वं । सुतस्य । मदे । अरिणाः । अपः । वि । वृत्रस्य । समया । पाष्या । अरुजः ॥ २१ ॥ प्र । मंहिष्ठाय । बृहते । बृहत्ऽरये । सत्यऽशुष्माय । तवसे । मतिं । भरे ॥ अपांऽइव । प्रवणे । यस्य । दुःऽधरं । राधः । विश्वऽआयु । शवसे । अपऽवृतं ॥ अध । ते । विश्वं । अनु । ह । असत् । इष्टये । आपः । निम्नाऽइव । सवना । हविष्मतः ॥ यत् । पर्वते । न । संऽअशीत । हर्यतः । इंद्रस्य । वज्रः । श्नथिता । हिरण्ययः ॥ अस्मै । भीमाय । नमसा । सं । अध्वरे । उषः । न । शुभ्रे । आ । भर । पनीयसे ॥ यस्य । धाम । श्रवसे । नाम । इंद्रियं । ज्योतिः ।

अकारि । हरितः । न । अयसे । इमे । ते । इंद्र । ते । वयं । पुरुऽस्तुत । ये । त्वा । आऽरभ्य । चरामसि । प्रभुवसोइतिप्रभुऽवसो ॥ नहि । त्वत् । अन्यः । गिर्वणः । गिरः । सघत् । क्षोणीःऽइव । प्रति । नः । हर्य । तत् । वचः ॥ भूरि । ते । इंद्र । वीर्यं । तव । स्मसि । अस्य । स्तोतुः । मघऽवन् । कामं । आ । पृण ॥ अनु । ते । द्यौः । बृहती । वीर्यं । ममे । इयं । च । ते । पृथिवी । नेमे । ओजसे ॥ ० ॥ महां । उरुं । वज्रेण । वज्रिन् । पर्वऽशः । चकर्तिथ ॥ अव । असृजः । निऽवृताः । सर्तवै । अपः । सत्रा । विश्वं । दधिषे । केवलं । सहः ॥ २२ ॥ नु । चित् । सहःऽजाः । अमृतः । नि । तुंदते । होता । यत् । दूतः । अभवत् । विवस्वतः ॥ वि । साधिष्ठेभिः । पथिऽभिः । रजः । ममे । आ । देवऽताता । हविषा । विवासति ॥ आ । स्वं । अद्म । युवमानः । अजरः । तृषु । अविष्यन् । अतसेषु । तिष्ठति ॥ अत्यः । न । पृष्ठं । प्रुषितस्य । रोचते । दिवः । न । सानु । स्तनयन् । अचिक्रदत् ॥ क्राणा । रुद्रेभिः । वसुऽभिः । पुरःऽहितः । होता । निऽसत्तः । रयिषाट् । अमर्त्यः ॥ रथः । न । विक्षु । ऋंजसानः । आयुषु । वि । आनुषक् । वार्या । देवः । ऋण्वति ॥ वि । वातऽजूतः । अतसेषु । तिष्ठते । वृथा । जुहूभिः । सृण्या । तुविऽस्वनिः ॥ तृषु । यत् । अग्ने । वनिनः । वृषऽयसे । कृष्णं । ते । एम । रुशत्ऽऊर्मे । अजर ॥ तपुःऽजंभः । वने । आ । वातऽचोदितः । यूथे । न । सह्वान् । अव । वाति । वंसगः ॥ अभिऽव्रजन् । अक्षितं । पाजसा । रजः । स्थातुः । चरथं । भयते । पतत्रिणः ॥ २३ ॥ दधुः । त्वा । भृगवः । मानुषेषु । आ । रयिं । न । चारुं । सुऽहवं । जनेभ्यः ॥ होतारं । अग्ने । अतिथिं । वरेण्यं । मित्रं । न । शेवं । दिव्याय । जन्मने ॥ होतारं । सप्त । जुह्वः ।

यजिष्ठं । यं । वाघतः । वृणते । अध्वरेषु ॥ अग्निं । विश्वेषां । अरतिं । वसूनां । सपर्यामि । प्रयसा । यामि । रत्नं ॥ अछिद्रा । सूनोइति । सहसः । नः । अद्य । स्तोतृऽभ्यः । मित्रऽमहः । शर्म । यछ । अग्ने । गृणंतं । अंहसः । उरुष्य । ऊर्जः । नपात् । पूःऽभिः । आयसीभिः । भव । वरूथं । गृणते । विभाऽवः । भव । मघऽवन् । मघवत्ऽभ्यः । शर्म ॥ उरुष्य । अग्ने । अंहसः । गृणतं । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥ २४ ॥ वयाः । इत् । अग्ने । अग्नयः । ते । अन्ये । त्वेइति । विश्वे । अमृताः । मादयंते ॥ वैश्वानर । नाभिः । असि । क्षितीनां । स्थूणाऽइव । जनान् । उपऽमित् । ययंथ ॥ मूर्धा । दिवः । नाभिः । अग्निः । पृथिव्याः । अथ । अभवत् । अरतिः । रोदस्योः ॥ तं । त्वा । देवासः । अजनयंत । देवं । वैश्वानर । ज्योतिः । इत् । आर्याय ॥ आ । सूर्ये । न । रश्मयः । ध्रुवासः । वैश्वानरे । दधिरे । अग्ना । वसूनि ॥ या । पर्वतेषु । ओषधीषु । अप्ऽसु । या । मानुषेषु । असि । तस्य । राजा ॥ बृहतीइवेतिबृहतीऽइव । सूनवे । रोदसीइति । गिरः । होता । मनुष्यः । न । दक्षः ॥ स्वःऽवते । सत्यऽशुष्माय । पूर्वीः । वैश्वानराय । नृऽतमाय । यह्वीः ॥ दिवः । चित् । ते । बृहतः । जातऽवेदः । वैश्वानर । प्र । रिरिचे । महिऽत्वं ॥ राजा । कृष्टीनां । असि । मानुषीणां । युधा । देवेभ्यः । वरिवः । चकर्थ ॥ प्र । नु । महिऽत्वं । वृषभस्य । वोचं । यं । पूरवः । वृत्रऽहनं । सचंते ॥ वैश्वानरः । दस्युं । अग्निः । जघन्वान् । अधूनोत् । काष्ठाः । अव । शंबरं । भेत् ॥ वैश्वानरः । महिम्ना । विश्वऽकृष्टिः । भरत्ऽवाजेषु । यजतः । विभाऽवा ॥ शातऽवनेये । शतिनीभिः । अग्निः । पुरुऽनीथे । जरते । सूनृताऽवान् ॥ २५ ॥ वह्निं । यशसं । विदथस्य । केतुं । सुप्रऽअव्यं । दूतं । सद्यःऽअर्थं ॥ द्विऽजन्मानं । रयिऽइव ।

प्रऽशस्तं । रातिं । भरत् । भृगवे । मातरिश्वा ॥ अस्य । शासुः । उभयासः । सचंते । हविष्मंतः । उशिजः । ये । च । मर्ताः ॥ दिवः । चित् । पूर्वः । नि । असादि । होता । आऽपृच्छ्यः । विश्पतिः । विक्षु । वेधाः ॥ तं । नव्यसी । हृदः । आ । जायमानं । अस्मत् । सुऽकीर्तिः । मधुऽजिह्वं । अश्याः ॥ यं । ऋत्विजः । वृजने । मानुषासः । प्रयस्वंतः । आयवः । जीजनंत ॥ उशिक् । पावकः । वसुः । मानुषेषु । वरेण्यः । होता । अधायि । विक्षु ॥ दमूनाः । गृहऽपतिः । दमे । आ । अग्निः । भुवत् । रयिऽपतिः । रयीणां ॥ तं । त्वा । वयं । पतिं । अग्ने । रयीणां । प्र । शंसामः । मतिऽभिः । गोतमासः ॥ आशुं । न । वाजंऽभरं । मर्जयंतः ॥ २६ ॥

अस्मै । इत् । ऊं इति । प्र । तवसे । तुराय । प्रयः । न । हर्मि । स्तोमं । माहिनाय ॥ ऋचीषमाय । अध्रिऽगवे । ओहं । इंद्राय । ब्रह्माणि । राततमा ॥ ० ॥ प्रयःऽइव । प्र । यंसि । भरामि । आंगूषं । बाधे । सुऽवृक्ति ॥ इंद्राय । हृदा । मनसा । मनीषा । प्रत्नाय । पत्ये । धियः । मर्जयंत ॥ ० ॥ त्यं । उपऽमं । स्वःऽसां । भरामि । आंगूषं । आस्येन ॥ मंहिष्ठं । अच्छोक्तिऽभिः । मतीनां । सुवृक्तिऽभिः । सूरिं । ववृधध्यै ॥ ० ॥ स्तोमं । सं । हिनोमि । रथं । न । तष्टाऽइव । तत्ऽसिनाय ॥ गिरः । च । गिर्वाहसे । सुऽवृक्ति । इंद्राय । विश्वऽइन्वं । मेधिराय ॥ ० ॥ सप्तिंऽइव । श्रवस्या । इंद्राय । अर्कं । जुह्वा । सं । अंजे ॥ वीरं । दानऽओकसं । वंदध्यै । पुरां । गूर्तऽश्रवसं । दर्माणं ॥ २७ ॥ ० ॥ त्वष्टा । तक्षत् । वज्रं । स्वपःऽतमं । स्वर्यं । रणाय ॥ वृत्रस्य । चित् । विदत् । येन । मर्म । तुजन् । ईशानः । तुजता । कियेधाः ॥ अस्य । इत् । ऊं इति । मातुः । सवनेषु । सद्यः । महः । पितुं ।

पपिऽवान् । चारु । अन्ना ॥ मुषायत् । विष्णुः । पचतं । सहीयान् । विध्यत् । वराहं । तिरः । अद्रिं । अस्ता ॥ ० ॥ ग्नाः । चित् । देवऽपत्नीः । इंद्राय । अर्कं । अहिऽहत्ये । ऊवुरित्यूवुः ॥ परि । द्यावापृथिवीइति । जभ्रे । उर्वीइति । न । अस्य । तेइति । महिमायं । परि । स्तइतिस्तः । अस्य । इत् । एव । प्र । रिरिचे । महिऽत्वं । दिवः । पृथिव्याः । परि । अंतरिक्षात् ॥ स्वऽराट् । इंद्रः । दमे । आ । विश्वऽगूर्तः । सुऽअरिः । अमत्रः । ववक्षे । रणाय ॥ ० ॥ शवसा । शुषंतं । वि । वृश्चत् । वज्रेण । वृत्रं । इंद्रः ॥ गाः । न । व्राणाः । अवनीः । अमुंचत् । अभि । श्रवः । दावने । सऽचेताः ॥ २८ ॥ ० ॥ त्वेषसा । रंत । सिंधवः । परि । यत् । वज्रेण । सीं । अयच्छत् ॥ ईशानऽकृत् । दाशुषे । दशस्यन् । तुर्वीतये । गाधं । तुर्वणिः । करितिकः ॥ ० ॥ भर । तूतुजानः । वृत्राय । वज्रं । ईशानः । कियेधाः ॥ गोः । न । पर्व । वि । रद । तिरश्चा । इष्यन् । अर्णांसि । अपां । चरध्यै ॥ ० ॥ प्र । ब्रूहि । पूर्व्याणि । तुरस्य । कर्माणि । नव्यः । उक्थैः ॥ युधे । यत् । इष्णानः । आयुधानि । ऋघायमाणः । निऽरिणाति । शत्रून् ॥ ० ॥ भिया । गिरयः । च । दृळ्हाः । द्यावा । च । भूम । जनुषः । तुजेतेइति ॥ उपोइति । वेनस्य । जोगुवानः । ओणिं । सद्यः । भुवत् । वीर्याय । नोधाः ॥ ० ॥ त्यत् । अनु । दायि । एषां । एकः । यत् । वव्ने । भूरेः । ईशानः ॥ प्र । एतशं । सूर्ये । पस्पृधानं । सौवश्व्ये । सुस्विं । आवत् । इंद्रः ॥ एव । ते । हारिऽयोजन । सुऽवृक्ति । इंद्रं । ब्रह्माणि । गोतमासः । अक्रन् ॥ आ । एषु । विश्वऽपेशसं । धियं । धाः ॥ ० ॥

इति प्रथमाष्टके चतुर्थोऽध्यायः



## अथ पञ्चमोऽध्यायः

हरिः ॐ ॥ प्र । मन्महे । शवसानाय । शूषं । आंगूषं । गिर्वणसे । अंगिरस्वत् ॥ सुवृक्तिऽभिः । स्तुवते । ऋग्मियाय । अर्चाम । अर्कं । नरे । विऽश्रुताय ॥ प्र । वः । महे । महि । नमः । भरध्वं । आंगूष्यं । शवसानाय । साम । येन । नः । पूर्वे । पितरः । पदऽज्ञाः । अर्चंतः । अंगिरसः । गाः । अविंदन् ॥ इंद्रस्य । अंगिरसां । च । इष्टौ । विदत् । सरमा । तनयाय । धासिं ॥ बृहस्पतिः । भिनत् । अद्रिं । विदत् । गाः । सं । उस्रियाभिः । वावशंत । नरः । सः । सुऽस्तुभा । सः । सुभा । सप्त । विप्रैः । स्वरेण । अद्रिं । स्वर्यः । नवऽग्वैः ॥ सरण्युऽभिः । फलिऽगं । इंद्र । शक्र । वलं । रवेण । दरयः । दशऽग्वैः ॥ गृणानः । अंगिरःऽभिः । दस्म । वि । वः । उषसा । सूर्येण । गोभिः । अंधः ॥ वि । भूम्याः । अप्रथयः । इंद्र । सानु । दिवः । रजः । उपरं । अस्तभायः ॥ १ ॥ तत् । ऊँ । ऊंइति । प्रयक्षऽतमं । अस्य । कर्म । दस्मस्य । चारुऽतमं । अस्ति । दंसः ॥ उपऽह्वरे । यत् । उपराः । अपिन्वत् । मधुऽअर्णसः । नद्यः । चतस्रः ॥ द्विता । वि । वव्रे । सनऽजा । सनीळेइतिसऽनीळे । अयास्यः । स्तवमानेभिः । अर्कैः ॥ भगः । न । मेनेइति । परमे । विऽओमन् । अधारयत् । रोदसीइति । सुऽदंसाः ॥ सनात् । दिवं । परि । भूम । विरूपेइतिविऽरूपे । पुनःऽभुवा । युवतीइति । स्वेभिः । एवैः ॥ कृष्णेभिः । अक्ता । उषाः । रुशत्ऽभिः । वपुःऽभिः । आ । चरतः । अन्याऽअन्या । सनेमि । सख्यं । सुऽअपस्यमानः । सूनुः । दधार । शवसा । सुऽदंसाः ॥ आमासु । चित् । दधिषे । पक्वं । अंतरिति । पयः । कृष्णासु । रुशत् । रोहिणीषु ॥ सनात् । सऽनीळाः । अवनीः ।

अवाताः । व्रता ॥ रक्षंते । अमृताः । सहःऽभिः ॥ पुरु । सहस्रा ।
जनयः । न । पत्नीः । दुवस्यंति । स्वसारः । अह्रयाणं ॥ २ ॥
सनाऽयुवः । नमसा । नव्यः । अर्कैः । वसुऽयवः । मतयः ।
दस्म । दद्रुः ॥ पतिं । न । पत्नीः । उशतीः । उशंतं । स्पृशंति ।
त्वा । शवसाऽवन् । मनीषाः ॥ सनात् । एव । तव । रायः ।
गभस्तौ । न । क्षीयंते । न । उप । दस्यंति । दस्म ॥ द्युऽमान् ।
असि । क्रतुऽमान् । इंद्र । धीरः । शिक्ष । शचीऽवः । तव ।
नः । शचीभिः ॥ सनाऽयते । गोतमः । इंद्र । नव्यं । अतक्षत् ।
ब्रह्म । हरिऽयोजनाय ॥ सुऽनीथाय । नः । शवसान । नोधाः ॥ ० ॥
॥ ३ ॥ त्वं । महान् । इंद्र । यः । ह । शुष्मैः । द्यावा । जज्ञानः ।
पृथिवीइति । अमे । धाः ॥ यत् । ह । ते । विश्वा । गिरयः । चित् ।
अभ्वा । भिया । दृळ्हासः । किरणाः । न । ऐजन् ॥ आ । यत् ।
हरीइति । इंद्र । विऽव्रता । वेः । आ । ते । वज्रं । जरिता । बाह्वोः ।
धात् ॥ येन । अविहर्यतक्रतोइत्यविहर्यतऽक्रतो । अमित्रान् । पुरः ।
इष्णासि । पुरुऽहूत । पूर्वीः ॥ त्वं । सत्यः । इंद्र । धृष्णुः । एतान् ।
त्वं । ऋभुक्षाः । नर्यः । त्वं । षाट् ॥ त्वं । शुष्णं । वृजने । पृक्षे ।
आणौ । यूने । कुत्साय । द्युऽमते । सचा । अहन् ॥ त्वं । ह । त्यत् ।
इंद्र । चोदीः । सखा । वृत्रं । यत् । वज्रिन् । वृषऽकर्मन् । उभ्नाः ॥
यत् । ह । शूर । वृषऽमनः । पराचैः । वि । दस्यून् । योनौ ।
अकृतः । वृथाषाट् ॥ ० ॥ अरिषण्यन् । दृळ्हस्य । चित् । मर्तानां ।
अजुष्टौ ॥ वि । अस्मत् । आ । काष्ठाः । अर्वते । वः । घनाऽइव ।
वज्रिन् । श्नथिहि । अमित्रान् ॥ ४ ॥ त्वां ॥ ० ॥ अर्णऽसातौ ।
स्वःऽमीळ्हे । नरः । आजा । हवंते ॥ तव । स्वधाऽवः । इयं ।
आ । सऽमर्ये । ऊतिः । वाजेषु । अतसाय्या । भूत ॥ ० ॥

सप्त । युध्यन् । पुरः । वज्रिन् । पुरुऽकुत्साय । दर्दरितिदर्दः ॥
बर्हिः । न । यत् । सुऽदासे । वृथा । वर्क् । अंहोः । राजन् ।
वरिवः । पूरवे । करितिकः ॥ त्वं । त्यां । नः । इंद्र । देव ।
चित्रां । इषं । आपः । न । पीपयः । परिऽज्मन् ॥ यया । शूर ।
प्रति । अस्मभ्यं । यंसि । त्मनं । ऊर्जं । न । विश्वधं । क्षरध्यै ॥
अकारि । ते । इंद्र । गोतमेभिः । ब्रह्माणि । आऽउक्ता । नमसा ।
हरिऽभ्यां ॥ सुऽपेशसं । वाजं । आ । भर । नः ॥ ० ॥ ५ ॥
वृष्णे । शर्धाय । सुऽमखाय । वेधसे । नोधः । सुऽवृक्ति । प्र । भर ।
मरुत्ऽभ्यः । अपः । न । धीरः । मनसा । सुऽहस्त्यः । गिरः ।
सं । अंजे । विदथेषु । आऽभुवः ॥ ते । जज्ञिरे । दिवः । ऋष्वासः ।
उक्षणः । रुद्रस्य । मर्याः । असुराः । अरेपसः ॥ पावकासः ।
शुचयः । सूर्याःऽइव । सत्वानः । न । द्रप्सिनः । घोरऽवर्पसः ॥
युवानः । रुद्राः । अजराः । अभोक्ऽहनः । ववक्षुः । अध्रिऽगावः ।
पर्वताःऽइव ॥ दृळहा । चित् । विश्वा । भुवनानि । पार्थिवा ।
प्र । च्यवयंति । दिव्यानि । मज्मना ॥ चित्रैः । अंजिऽभिः ।
वपुषे । वि । अंजते । वक्षःऽसु । रुक्मान् । अधि । येतिरे ।
शुभे ॥ अंसेषु । एषां । नि । मिमृक्षुः । ऋष्टयः । साकं ।
जज्ञिरे । स्वधया । दिवः । नरः ॥ ईशानऽकृतः । धुनयः ।
रिशादसः । वातान् । विऽद्युतः । तविषीभिः । अक्रत । दुहंति ।
ऊधः । दिव्यानि । धूतयः । भूमिं । पिन्वति । पयसा ।
परिऽज्रयः ॥ ६ ॥ पिन्वंति । अपः । मरुतः । सुऽदानवः । पयः ।
घृतऽवत् । विदथेषु । आऽभुवः ॥ अत्यं । न । मिहे । वि ।
नयंति । वाजिनं । उत्सं । दुहंति । स्तनयंतं । अक्षितं ॥
महिषासः । मायिनः । चित्रऽभानवः । गिरयः । न । स्वऽतवसः ।

रघुऽस्यदः ॥ मृगाःऽइव । हस्तिनः । खादथ । वना । यत् ।
आरुणीषु । तविषीः । अयुग्ध्वं ॥ सिंहाःऽइव । नानदति । प्रऽचेतसः ।
पिशाःऽइव । सुऽपिशः । विश्वऽवेदसः ॥ क्षपः । जिन्वंतः ।
पृषतीभिः । ऋष्टिऽभिः । सं । इत् । सऽबाधः । शवसा । अहिऽ-
मन्यवः ॥ रोदसीइति । आ । वदत । गणऽश्रियः । नृऽसाचः ।
शूराः । शवसा । अहिऽमन्यवः ॥ आ । वंधुरेषु । अमतिः ।
न । दर्शता । विऽद्युत् । न । तस्थौ । मरुतः । रथेषु । वः । विश्वऽ-
वेदसः । रयिऽभिः । संऽओकसः । संऽमिश्लासः । तविषीभिः ।
विऽरप्शिनः ॥ अस्तारः । इषुं । दधिरे । गभस्त्योः । अनंतऽशुष्माः ।
वृषऽखादयः । नरः ॥ ७ ॥ हिरण्ययेभिः । पविऽभिः । पयःऽवृधः ।
उत् । जिघ्नंते । आऽपथ्यः । न । पर्वतान् ॥ मखाः । अयासः ।
स्वऽसृतः । ध्रुवऽच्युतः । दुध्रऽकृतः । मरुतः । भ्राजत्ऽऋष्टयः ॥
घृषुं । पावकं । वनिनं । विऽचर्षणिं । रुद्रस्य । सूनुं । हवसा ।
गृणीमसि ॥ रजःऽतुरं । तवसं । मारुतं । गणं । ऋजीषिणं ।
वृषणं । सश्चत । श्रिये ॥ प्र । नु । सः । मर्तः । शवसा ।
जनान् । अति । तस्थौ । वः । ऊती । मरुतः । यं । आवत ॥
अर्वत्ऽभिः । वाजं । भरते । धना । नृऽभिः । आऽपृच्छ्यं । क्रतुं ।
आ । क्षेति । पुष्यति ॥ चर्कृत्यं । मरुतः । पृत्ऽसु । दुस्तरं ।
द्युऽमंतं । शुष्मं । मघवत्ऽसु । धत्तन ॥ धनऽस्पृतं । उक्थ्यं ।
विश्वऽचर्षणिं । तोकं । पुष्येम । तनयं । शतं । हिमाः ॥ नु ।
स्थिरं । मरुतः । वीरऽवंतं । ऋतिऽसहं । रयिं । अस्मासु । धत्त ॥
सहस्रिणं । शतिनं । शूशुऽवांसं ॥ ० ॥ ८ ॥ पश्वा । न । तायुं ।
गुहा । चतंतं । नमः । युजानं । नमः । वहंतं । सऽजोषाः ।
धीराः । पदैः । अनु । ग्मन् । उप । त्वा । सीदन् । विश्वे ।

यजत्राः ॥ ऋतस्य । देवाः । अनु । व्रता । गुः । भुवत् । परिष्टिः । द्यौः । न । भूम ॥ वर्धन्ति । ईं । आपः । पन्वा । सुऽशिश्विं । ऋतस्य । योना । गर्भे । सुऽजातं ॥ पुष्टिः । न । रण्वा । क्षितिः । न । पृथ्वी । गिरिः । न । भुज्म । क्षोदः । न । शंऽभु ॥ अत्यः । न । अज्मन् । सर्गऽप्रतक्तः । सिंधुः । न । क्षोदः । कः । ईं । वराते ॥ जामिः । सिंधूनां । भ्राताऽइव । स्वस्रां । इभ्यान् । न । राजा । वनानि । अत्ति ॥ यत् । वातऽजूतः । वना । वि । अस्थात् । अग्निः । ह । दाति । रोम । पृथिव्याः ॥ श्वसिति । अप्ऽसु । हंसः । न । सीदन् । क्रत्वा । चेतिष्ठः । विशां । उषःऽभुत् ॥ सोमः । न । वेधाः । ऋतऽप्रजातः । पशुः । न । शिश्वा ॥ विऽभुः । दूरेऽभाः ॥ ९ ॥ रयिः । न । चित्रा । सूरः । न । संऽदृक् । आयुः । न । प्राणः । नित्यः । न । सूनुः ॥ तक्वा । न । भूर्णिः । वना । सिसक्ति । पयः । न । धेनुः । शुचिः । विभाऽवा ॥ दाधार । क्षेमं । ओकः । न । रण्वः । यवः । न । पक्वः । जेता । जनानां । ऋषिः । न । स्तुभ्वा । विक्षु । प्रऽशस्तः । वाजी । न । प्रीतः । वयः । दधाति ॥ दुरोकऽशोचिः । क्रतुः । न । नित्यः । जायाऽइव । योनौ । अरं । विश्वस्मै ॥ चित्रः । यत् । अभ्राट् । श्वेतः । न । विक्षु । रथः । न । रुक्मी । त्वेषः । समत्ऽसु ॥ सेनाऽइव । सृष्टा । अमं । दधाति ॥ अस्तुः । न । दिद्युत् । त्वेषऽप्रतीका ॥ यमः । ह । जातः । यमः । जनिऽत्वं । जारः । कनीनां । पतिः । जनीनां ॥ तं । वः । चराथा । वयं । वसत्या । अस्तं । न । गावः । नक्षन्ते । इद्धं ॥ सिंधुः । न । क्षोदः । प्र । नीचीः । ऐनोत् । नवन्त । गावः । स्वः । दृशीके ॥ १० ॥ वनेषु । जायुः । मर्तेषु । मित्रः । वृणीते । श्रुष्टिं ।

राजाऽइव । अजुर्यः ॥ क्षेमः । न । साधुः । क्रतुः । न । भद्रः । भुवत् । सुऽआधीः । होता । हव्यऽवाट् ॥ हस्ते । दधानः । नृम्णा । विश्वानि । अमे । देवान् । धात् । गुहा । निऽसीदन् ॥ विदंति । ईम् । अत्र । नरः । धियंऽधाः । हृदा । यत् । तष्टान् । मंत्रान् । अशंसन् ॥ अजः । न । क्षां । दाधार । पृथिवीं । तस्तंभ । द्यां । मंत्रेभिः । सत्यैः ॥ प्रिया । पदानि । पश्वः । नि । पाहि । विश्वऽआयुः । अग्ने । गुहा । गुहं । गाः ॥ यः । ईं । चिकेत । गुहा । भवंतं । आ । यः । ससाद । धारां । ऋतस्य ॥ वि । ये । चृतंति । ऋता । सपंतः । आत् । इत् । वसूनि । प्र । ववाच । अस्मै ॥ वि । यः । वीरुत्ऽसु । रोधत् । महिऽत्वा । उत । प्रऽजाः । उत । प्रऽसूषु । अंतरिति ॥ चित्तिः । अपां । दमे । विश्वऽआयुः । सद्मऽइव । धीराः । संऽमाय । चक्रुः ॥ ११ ॥ श्रीणन् । उप । स्थात् । दिवं । भुरण्युः । स्थातुः । चरथं । अक्तून् । वि । ऊर्णोत् ॥ परि । यत् । एषां । एकः । विश्वेषां । भुवत् । देवः । देवानां । महिऽत्वा ॥ आत् । इत् । ते । विश्वे । क्रतुं । जुषंत । शुष्कात् । यत् । देव । जीवः । जनिष्ठाः ॥ भजंत । विश्वे । देवऽत्वं । नाम । ऋतं । सपंतः । अमृतं । एवैः ॥ ऋतस्य । प्रेषाः । ऋतस्य । धीतिः । विश्वऽआयुः । विश्वे । अपांसि । चक्रुः ॥ यः । तुभ्यं । दाशात् । यः । वा । ते । शिक्षात् । तस्मै । चिकित्वान् । रयिं । दयस्व ॥ होता । निऽसत्तः । मनोः । अपत्ये । सः । चित् । नु । आसां । पतिः । रयीणां ॥ इच्छंत । रेतः । मिथः । तनूषु । सं । जानत । स्वैः । दक्षैः । अमूराः ॥ पितुः । न । पुत्राः । क्रतुं । जुषंत । श्रोषन् । ये । अस्य । शासं । तुरासः ॥ वि । रायः । और्णोत् । दुरः । पुरुऽक्षुः । पिपेश । नाकं । स्तृऽभिः । दमूनाः ॥ १२ ॥ शुक्रः । शुशुकान् । उषः । न । जारः । पप्रा । समीचीइतिसंऽइची ।

दिवः । न । ज्योतिः ॥ परि । प्रऽजातः । क्रत्वा । बभूथ । भुवः । देवानां । पिता । पुत्रः । सन् ॥ वेधाः । अदृप्तः । अग्निः । विऽजानन् । ऊधः । न । गोनां । स्वाद्म । पितूनां ॥ जन । न । शेवः । आऽहूर्यः । सन् । मध्ये । निऽसत्तः । रण्वः । दुरोणे ॥ पुत्रः । न । जातः । रण्वः । दुरोणे । वाजी । न । प्रीतः । विशः । वि । तारीत् ॥ विशः । यत् । अह्वे । नृऽभिः । सऽनीळाः । अग्निः । देवऽत्वा । विश्वानि । अश्याः ॥ नकिः । ते । एता । व्रता । मिनंति । नृऽभ्यः । यत् । एभ्यः । श्रुष्टिं । चकर्थ ॥ तत् । तु । ते । दंसः । यत् । अहन् । समानैः । नृऽभिः । यत् । युक्तः । विवेः । रपांसि ॥ उषः । न । जारः । विभाऽवा । उस्रः । संज्ञातऽरूपः । चिकेतत् । अस्मै ॥ त्मना । वहंतः । दुरः । वि । ऋण्वन् । नवंत । विश्वे । स्वः । दृशीके ॥ १३ ॥ वनेम । पूर्वीः । अर्यः । मनीषा । अग्निः । सुऽशोकः । विश्वानि । अश्याः ॥ आ । दैव्यानि । व्रता । चिकित्वान् । आ । मानुषस्य । जनस्य । जन्म ॥ गर्भः । यः । अपां । गर्भः । वनानां । गर्भः । च । स्थातां । गर्भः । चरथां ॥ अद्रौ । चित् । धस्मै । अंतः । दुरोणे । विशां । न । विश्वः । अमृतः । सुऽआधीः ॥ सः । हि । क्षपाऽवान् । अग्निः । रयीणां । दाशत् । यः । अस्मै । अरं । सुऽउक्तैः ॥ एता । चिकित्वः । भूम । नि । पाहि । देवानां । जन्म । मर्तान् । च । विद्वान् ॥ वर्धान् । यं । पूवीः । क्षपः । विऽरूपाः । स्थातुः । च । रथं । ऋतऽप्रवीतं ॥ अराधि । होता । स्वः । निऽसत्तः । कृण्वन् । विश्वानि । अपांसि । सत्या ॥ गोषु । प्रऽशस्ति । वनेषु । धिषे । भरंत । विश्वे । बलिं । स्वः । नः ॥ वि । त्वा । नरः । पुरुऽत्रा । सपर्यन् । पितुः । न । जिव्रेः । वि । वेदः । भरंत ॥ साधुः । न । गृध्नुः । अस्ताऽइव । शूरः । याताऽइव । भीमः । त्वेषः । समत्ऽ-

सु ॥ १४ ॥ उप । प्र । जिन्वन् । उशतीः । उशन्तं । पतिं । न । नित्यं । जनयः । सऽनीळाः ॥ स्वसारः । श्यावीं । अरुषीं । अजुषन् । चित्रं । उच्छन्तीं । उषसं । न । गावः ॥ वीळु । चित् । दृळ्हा । पितरः । नः । उक्थैः । अद्रिं । रुजन् । अंगिरसः । रवेण ॥ चक्रुः । दिवः । बृहतः । गातुं । अस्मेइति । अहरिति । स्वः । विविदुः । केतुं । उस्राः ॥ दधन् । ऋतं । धनयन् । अस्य । धीतिं । आत् । इत् । अर्यः । दिधिष्वः । विऽभृत्राः ॥ अतृष्यंतीः । अपसः । यंति । अच्छ । देवान् । जन्म । प्रयसा । वर्धयंतीः । मथीत् । यत् । ईं । विऽभृतः । मातरिश्वा । गृहेऽगृहे । श्येतः । जेन्यः । भूत् ॥ आत् । ईं । राज्ञे । न । सहीयसे । सचा । सन् । आ । दूत्यं । भृगवाणः । विवाय ॥ महे । यत् । पित्रे । ईं । रसं । दिवे । कः । अव । त्सरत् । पृशन्यः । चिकित्वान् ॥ सृजत् । अस्ता । धृषता । दिद्युं । अस्मै । स्वायां । देवः । दुहितरि । त्विषिं । धात् ॥ १५ ॥ स्वे । आ । यः । तुभ्यं । दमे । आ । विऽभाति । नमः । वा । दाशात् । उशतः । अनु । द्यून् ॥ वर्धोइति । अग्ने । वयः । अस्य । द्विऽबर्हाः । यासत् । राया । सऽरथं । यं । जुनासि ॥ अग्निं । विश्वाः । अभि । पृक्षः । सचंते । समुद्रं । न । स्रवतः । सप्त । यह्वीः ॥ न । जामिऽभिः । वि । चिकिते । वयः । नः । विदाः । देवेषु । प्रऽमतिं । चिकित्वान् ॥ आ । यत् । इषे । नृऽपतिं । तेजः । आनट् । शुचि । रेतः । निऽसिक्तं । द्यौः । अभीके ॥ अग्निः । शर्धं । अनवद्यं । युवानं । सुऽआध्यं । जनयत् । सूदयत् । च ॥ मनः । न । यः । अध्वनः । सद्यः । एति । एकः । सत्रा । सूरः । वस्वः । ईशे ॥ राजाना । मित्रावरुणा । सुपाणीइतिसुऽपाणी । गोषु ।

प्रियं । अमृतं । रक्षमाणा ॥ मा । नः । अग्ने । सख्या । पित्र्याणि ।
प्र । मर्षिष्ठाः । अभि । विदुः । कविः । सन् । नभः । न । रूपं ।
जरिमा । मिनाति । पुरा । तस्याः । अभिऽशस्तेः । अधि । इहि ॥ १६ ॥
नि । काव्या । वेधसः । शश्वतः । कः । हस्ते । दधानः । नर्या । पुरूणि ॥
अग्निः । भुवत् । रयिऽपतिः । रयीणां । सत्रा । चक्राणः । अमृतानि ।
विश्वा ॥ अस्मेइति । वत्सं । परि । संतं । न । विंदन् । इच्छंतः ।
विश्वे । अमृताः । असूराः । श्रमऽयुवः । पदऽव्यः । धियंऽधाः ।
तस्थुः । पदे । परमे । चारु । अग्नेः ॥ तिस्रः । यत् । अग्ने । शरदः ।
त्वां । इत् । शुचिं । घृतेन । शुचयः । सपर्यान् ॥ नामानि । चित् ।
दधिरे । यज्ञियानि । असूदयंत । तन्वः । सुऽजाताः ॥ आ । रोदसी-
इति । बृहतीइति । वेविदानाः । प्र । रुद्रिया ॥ जभ्रिरे । यज्ञियासः ॥
विदत् । मर्तः । नेमऽधिता । चिकित्वान् । अग्निं । पदे । परमे ।
तस्थिऽवांसं ॥ संऽजानानाः । उप । सीदन् । अभिऽज्ञु । पत्नीऽवंतः ।
नमस्यं । नमस्यन्नितिनमस्यत् ॥ रिरिक्वांसः । तन्वः । कृण्वत । स्वाः ।
सखा । सख्युः । निऽमिषि । रक्षमाणाः ॥ १७ ॥ त्रिः । सप्त ।
यत् । गुह्यानि । त्वेइति । इत् । पदा । अविदन् । निऽहिता ।
यज्ञियासः ॥ तेभिः । रक्षंते । अमृतं । सऽजोषाः । पशून् । च ।
स्थातृन् । चरथं । च । पाहि ॥ विद्वान् । अग्ने । वयुनानि । क्षितीनां ।
वि । आनुषक् । शुरुधः । जीवसे । धाः ॥ अंतःऽविद्वान् । अध्वनः ।
देवऽयानान् । अतंद्रः । दूतः । अभवः । हविःऽवाट् ॥ सुऽआध्यः ।
दिवः । आ । सप्त । यह्वीः । रायः । दुरः । वि । ऋतऽज्ञाः ।
अजानन् ॥ विदत् । गव्यं । सरमा । दृळ्हं । ऊर्वं । येन । नु । कं ।
मानुषी । भोजते । विट् ॥ आ । ये । विश्वा । सुऽअपत्यानि । तस्थुः ।
कृण्वानासः । अमृतऽत्वाय । गातुं ॥ मन्हा । महत्ऽभिः । पृथिवी ।

वि । तस्थे । माता । पुत्रैः । अदितिः । धायसे । वेरितिवेः ॥ अधि । श्रियं । नि । दधुः । चारुं । अस्मिन् । दिवः । यत् । अक्षीइति । अमृताः । अकृण्वन् ॥ अध । क्षरंति । सिंधवः । न । सृष्टाः । प्र । नीचीः । अग्ने । अरुषीः । अजानन् ॥ १८ ॥ रयिः । न । यः । पितृऽवित्तः । वयःऽधाः । सुऽप्रनीतिः । चिकितुषः । न । शासुः ॥ स्योनऽशीः । अतिथिः । न । प्रीणानः । होताऽइव । सद्म । विधतः । वि । तारीत् ॥ देवः । न । यः । सविता । सत्यऽमन्मा । क्रत्वा । निऽपाति । वृजनानि । विश्वा ॥ पुरुऽप्रशस्तः । अमतिः । न । सत्यः । आत्माऽइव । शेवः । दिधिषाय्यः । भूत् ॥ ० ॥ पृथिवीं । विश्वऽ-धायाः । उपऽक्षेति । हितऽमित्रः । न । राजा ॥ पुरःऽसदः । शर्मऽसदः । न । वीराः । अनवद्या । पतिजुष्टाऽइव । नारी ॥ तं । त्वा । नरः । दमे । आ । नित्यं । इद्धं । अग्ने । सचंत । क्षितिषु । ध्रुवासु ॥ अधि । द्युम्नं । नि । दधुः । भूरि । अस्मिन् । भव । विश्वऽआयुः । धरुणः । रयीणां ॥ वि । पृक्षः । अग्ने । मघऽवानः । अश्युः । वि । सूरयः । ददतः । विश्वं । आयुः ॥ सनेम । वाजं । संऽइथेषु । अर्यः । भागं । देवेषु । श्रवसे । दधानाः ॥ १९ ॥ ऋतस्य । हि । धेनवः । वावशानाः । स्मत्ऽऊध्नीः । पीपयंत । द्युऽभक्ताः ॥ पराऽवतः । सुऽमतिं । भिक्षमाणाः । वि । सिंधवः । समया । सस्रुः । अद्रिं ॥ त्वेइति । अग्ने । सुऽमतिं । भिक्षमाणाः । दिवि । श्रवः । दधिरे । यज्ञियासः ॥ नक्ता । च । चक्रुः । उषसा । विरूपेइतिविऽरूपे । कृष्णं । च । वर्णं । अरुणं । च । सं । धुरितिधुः ॥ यान् । राये । मर्तान् । सुसूदः । अग्ने । ते । स्याम । मघऽवानः । वयं । च ॥ छायाऽइव । विश्वं । भुवनं । सिसक्षि । आपप्रिऽवान् । रोदसीइति । अंतरिक्षं ॥ अर्वत्ऽभिः । अग्ने । अर्वतः । नृऽभिः । नॄन् ।

वीरैः । वीरान् । वनुयाम । त्वाऽऊताः ॥ ईशानासः । पितृऽवित्तस्य ।
रायः । वि । सूरयः । शतऽहिमाः । नः । अश्युः ॥ एता । ते ।
अग्ने । उचथानि । वेधः । जुष्टानि । संतु । मनसे । हृदे । च ॥
शकेम । रायः । सुऽधुरः । यमं । ते । अधि । श्रवः । देवऽभक्तं ।
दधानाः ॥ २० ॥ उपऽप्रयंतः । अध्वरं । मंत्रं । वोचेम । अग्नये ॥
आरे । अस्मेइति । च । शृण्वते ॥ यः । स्त्रीहितीषु । पूर्व्यः ।
संऽजग्मानासु । कृष्टिषु ॥ अरक्षत् । दाशुषे । गयं । उत । ब्रुवंतु ।
जंतवः । उत् । अग्निः । वृत्रऽहा । अजनि ॥ धनंऽजयः । रणेऽरणे ॥
यस्य । दूतः । असि । क्षये । वेषि । हव्यानि । वीतये ॥ दस्मत् ।
कृणोषि । अध्वरं ॥ तं । इत् । सुऽहव्यं । अंगिरः । सुऽदेवं । सहसः ।
यहोइति । जनाः । आहुः । सुऽबर्हिषं ॥ २१ ॥ आ । च । वहासि ।
तान् । इह । देवान् । उप । प्रऽशस्तये । हव्या । सुऽचंद्र । वीतये ॥
न । योः । उपब्दिः । अश्व्यः । शृण्वे । रथस्य । कत् । चन ॥ यत् ।
अग्ने । यासि । दूत्यं ॥ त्वाऽऊतः । वाजी । अह्रयः । अभि ।
पूर्वस्मात् । अपरः ॥ प्र । दाश्वान् । अग्ने । अस्थात् ॥ इत । द्युऽमत् ।
सुऽवीर्यं । बृहत् । अग्ने । विवाससि ॥ देवेभ्यः । देव । दाशुषे ॥ २२ ॥
जुषस्व । सप्रथःऽतमं । वचः । देवप्सरःऽतमं ॥ हव्या । जुह्वानः ।
आसनि ॥ अथ । ते । अगिरःऽतम । अग्ने । वेधःऽतम । प्रियं ॥ वोचेम ।
ब्रह्म । सानसि ॥ कः । ते । जामिः । जनानां । अग्ने । कः । दाशुऽअध्वरः ॥
कः । ह । कस्मिन् । असि । श्रितः ॥ त्वं । जामिः । जनानां । अग्ने ।
मित्रः । असि । प्रियः ॥ सखा । सखिऽभ्यः । ईड्यः ॥ यज । नः ।
मित्रावरुणा । यज । देवान् । ऋतं । बृहत् ॥ अग्ने । यक्षि । स्वं ।
दमं ॥ २३ ॥ का । ते । उपऽइतिः । मनसः । वराय । भुवत् ।
अग्ने । शंऽतमा । का । मनीषा ॥ कः । वा । यज्ञैः । परि । दक्षं ।

ते । आप । केन । वा । ते । मनसा । दाशेम ॥ आ । इहि । अग्ने । इह । होता । नि । सीद । अदब्धः । सु । पुरःऽएता । भव । नः । अवतां । त्वा । रोदसीइति । विश्वमिन्वेइतिविश्वंऽइन्वे । यज । महे । सौमनसाय । देवान् । प्र । सु । विश्वान् । रक्षसः । धक्षि । अग्ने । भव । यज्ञानां । अभिशस्तिऽपावा ॥ अथ । आ । वह । सोमऽपतिं । हरिऽभ्यां । आतिथ्यं । अस्मै । चकृम । सुऽदाव्ने ॥ प्रजाऽवता । वचसा । वह्निः । आसा । आ । च । हुवे । नि । च । सत्सि । इह । देवैः ॥ वेषि । होत्रं । उत । पोत्रं । यजत्र । बोधि । प्रऽयंतः । जनितः । वसूनां ॥ यथा । विप्रस्य । मनुषः । हविःऽभिः । देवान् । अयजः । कविऽभिः । कविः । सन् ॥ एव । होतरिति । सत्यऽतर । त्वं । अद्य । अग्ने । मन्द्रया । जुह्वा । यजस्व ॥ २४ ॥ कथा । दाशेम । अग्नये । का । अस्मै । देवऽजुष्टा । उच्यते । भामिने । गीः ॥ यः । मर्त्येषु । अमृतः । ऋतऽवा । होता । यजिष्ठः । इत् । कृणोति । देवान् ॥ यः । अध्वरेषु । शंऽतमः । ऋतऽवा । होता । तं । ऊँइति । नमःऽभिः । आ । कृणुध्वं ॥ अग्निः । यत् । वेः । मर्ताय । देवान् । सः । च । बोधाति । मनसा । यजाति ॥ सः । हि । क्रतुः । सः । मर्यः । सः । साधुः । मित्रः । न । भूत् । अद्भुतस्य । रथीः ॥ तं । मेधेषु । प्रथमं । देवऽयंतीः । विशः । उप । ब्रुवते । दस्मं । आरीः ॥ सः । नः । नृणां । नृऽतमः । रिशादाः । अग्निः । गिरः । अवसा । वेतु । धीतिं ॥ तना । च । ये । मघऽवानः । शविष्ठाः । वाजऽप्रसूताः । इषयंत । मन्म ॥ एव । अग्निः । गोतमेभिः । ऋतऽवा । विप्रेभिः । अस्तोष्ट । जातऽवेदाः । सः । एषु । द्युम्नं । पीपयत् । सः । वाजं । सः । पुष्टिं । याति । जोषं । आ । चिकित्वान् ॥ २५ ॥ अभि । त्वा । गोतमाः ।

गिरा । जातऽवेदः । विऽचर्षणे ॥ द्युम्नैः । अभि । प्र । नोनुमः ॥ तं । ऊँइति । त्वा । गोतमः । गिरा । रायःऽकामः । दुवस्यति ॥ ० ॥ वाजऽसातमं । अंगिरस्वत् । हवामहे ॥ ० ॥ वृत्रहन्ऽतमं । यः । दस्यून् । अवऽधूनुषे ॥ ० ॥ अवोचाम । रहूगणाः । अग्नये । मधुऽमत् । वचः ॥ ० ॥ २६ ॥ हिरण्यऽकेशः । रजसः । विऽसारे । अहिः । धुनिः । वातःऽइव । ध्रजीमान् । शुचिऽभ्राजाः । उषसः । नवेदाः । यशस्वतीः । अपस्युवः । न । सत्याः ॥ आ । ते । सुऽपर्णाः । अमिनंत । एवैः । कृष्णः । नोनाव । वृषभः । यदि । इदं ॥ शिवाभिः । न । स्मयमानाभिः । आ । अगात् । पतंति । मिहः । स्तनयंति । अभ्रा ॥ यत् । ईं । ऋतस्य । पयसा । पियानः । नयन् । ऋतस्य । पथिऽभिः । रजिष्ठैः ॥ अर्यमा । मित्रः । वरुणः । परिऽज्मा । त्वचं । पृचंति । उपरस्य । योनौ ॥ अग्ने । वाजस्य । गोऽमतः । ईशानः । सहसः । यहोइति ॥ अस्मेइति । धेहि । जातऽवेदः । महि । श्रवः ॥ सः । इधानः । वसुः । कविः । अग्निः । ईळेन्यः । गिरा ॥ रेवत् । अस्मभ्यं । पुरुऽअनीक । दीदिहि ॥ क्षपः । राजन् । उत । त्मना । अग्ने । वस्तोः । उत । उषसः ॥ सः । तिग्मऽजंभ । रक्षसः । दह । प्रति ॥ २७ ॥ अव । नः । अग्ने । ऊतिऽभिः । गायत्रस्य । प्रऽभर्मणि ॥ विश्वासु । धीषु । वंद्य ॥ आ । नः । अग्ने । रयिं । भर । सत्राऽसहं । वरेण्यं ॥ विश्वासु । पृत्ऽसु । दुस्तरं ॥ ० ॥ सुऽचेतुना । रयिं । विश्वायुऽपोषसं ॥ मार्डीकं । धेहि । जीवसे ॥ प्र । पूताः । तिग्मऽशोचिषे । वाचः । गोतम । अग्नये ॥ भरस्व । सुम्नऽयुः । गिरः ॥ यः । नः । अग्ने । अभिऽदासति । अंति । दूरे । पदीष्ट । सः ॥ अस्माकं । इत् । वृधे । भव ॥ सहस्रऽअक्षः । विऽचर्षणिः । अग्निः । रक्षांसि ।

सेधति ॥ होता । गृणीते । उक्थ्यः ॥ २८ ॥ इत्था । हि । सोमे ।
इत् । मदे । ब्रह्मा । चकार । वर्धनं । शविष्ठ । वज्रिन् । ओजसा ।
पृथिव्याः । निः । शशाः । आहिं । अर्चन् । जनु । स्वऽराज्यं ॥
सः । त्वा । अमदत् । वृषा । मदः । सोमः । श्येनऽआभृतः । सुतः ॥
येन । वृत्रं । निः । अत्ऽभ्यः । जघंथ । वज्रिन् । ओजसा ॥ ० ॥
प्र । इहि । अभि । इहि । धृष्णुहि । न । ते । वज्रः । नि ।
यंसते ॥ इंद्र । नृम्णं । हि । ते । शवः । हनः । वृत्रं । जयाः ।
अपः ॥ ० ॥ निः । इंद्र । भूम्याः । अधि । वृत्रं । जघंथ ।
निः । दिवः ॥ सृज । मरुत्वतीः । अव । जीवऽधन्याः । इमाः ।
अपः ॥ ० ॥ इंद्रः । वृत्रस्य । दोधतः । सानुं । वज्रेण । हीळितः ।
अभिऽक्रम्य । अव । जिघ्नते । अपः । समीय । चोदयन् ॥ ० ॥ २९ ॥
अधि । सानौ । नि । जिघ्नते । वज्रेण । शतऽपर्वणा ॥ मंदानः ।
इंद्रः । अंधसः । साखिऽभ्यः । गातुं । इच्छति ॥ ० ॥ इंद्र ।
तुभ्यं । इत् । अद्रिऽवः । अनुत्तं । वज्रिन् । वीर्यं ॥ यत् । ह ।
त्यं । मायिनं । मृगं । तं । ऊँइति । त्वं । मायया । अवधीः ॥ ० ॥
वि । ते । वज्रासः । अस्थिरन् । नवतिं । नाव्याः । अनु ॥
महत् । ते । इंद्र । वीर्यं । बाह्वोः । ते । बलं । हितं ॥ ० ॥
सहस्रं । साकं । अर्चत । परि । स्तोभत । विंशतिः । शता ।
एनं । अनु । अनोनवुः । इंद्राय । ब्रह्म । उत्ऽयतं ॥ ० ॥ इंद्रः ।
वृत्रस्य । तविषीं । निः । अहन् । सहसा । सहः ॥ महत् । तत् ।
अस्य । पौंस्यं । वृत्रं । जघन्वान् । असृजत् ॥ ० ॥ ३० ॥ इमेइति ।
चित् । तव । मन्यवे । वेपेतेइति । भियसा । महीइति ॥ यत् ।
इंद्र । वज्रिन् । ओजसा । वृत्रं । मरुत्वान् । अवधीः ॥ ० ॥
न । वेपसा । न । तन्यता । इंद्रं । वृत्रः । वि । बीभयत् ।

अभि । एनं । वज्रः । आयसः । सहस्रऽभृष्टिः । आयत ॥ ० ॥ यत् । वृत्रं । तव । च । अशनिं । वज्रेण । संऽअयोधयः । अहिं । इंद्र । जिघांसतः । दिवि । ते । बद्बधे । शवः ॥ ० ॥ अभिऽस्तने । ते । अद्रिऽवः । यत् । स्थाः । जगत् । च । रेजते ॥ त्वष्टा । चित् । तव । मन्यवे । इंद्र । वेविज्यते । भिया ॥ ० ॥ नहि । नु । यात् । अधिऽइमसि । इंद्रं । कः । वीर्या । परः ॥ तस्मिन् । नृम्णं । उत । क्रतुं । देवाः । ओजांसि । सं । दधुः ॥ ० ॥ यां । अथर्वा । मनुः । पिता । दध्यङ् । धियं । अत्नत ॥ तस्मिन् । ब्रह्माणि । पूर्वऽथा । इंद्रे । उक्था । सं । अग्मत ॥ ० ॥ ३१ ॥ अध्याय ॥ ५ ॥

इति प्रथमाष्टके पञ्चमोध्यायः





## ॥ अथ षष्ठोध्यायः ॥

हरिः ॐ ॥ इंद्रः । मदाय । ववृधे । शवसे । वृत्रऽहा । नृऽभिः ॥ तं । इत् । महत्ऽसु । आजिषु । उत । ई । अर्भे । हवामहे । सः । वाजेषु । प्र । नः । अविषत् ॥ असि । हि । वीर । सेन्यः । असि । भूरि । पराऽदः ॥ असि । दभ्रस्य । चित् । वृधः । यजमानय । शिक्षसि । सुन्वते । भूरि । ते । वसु ॥ यत् । उत्ऽईरते । आजयः । धृष्णवे । धीयते । धना ॥ युक्ष्व । मदऽच्युता । हरीइति । कं । हनः । कं । वसौ । दधः । अस्मान् । इंद्र । वसौ । दधः ॥ ऋत्वा । महान् । अनुऽस्वधं । भीमः । आ । ववृधे । शवः ॥ श्रिये । ऋष्वः । उपाकयोः । नि । शिप्री । हरिऽवान् । दधे । हस्तयोः । वज्रं । आयसं ॥ आ । पप्रौ । पार्थिवं । रजः । बद्बधे । रोचना । दिवि ॥ न । त्वाऽवान् । इंद्र । कः । चन । न । जातः । न । जनिष्यते ॥ अति । विश्वं । ववक्षिथ ॥ १ ॥ यः । अर्यः । मर्तऽभोजनं । पराऽददाति । दाशुषे ॥ इंद्रः । अस्मभ्यं । शिक्षतु । वि । भज । भूरि । ते । वसु । भक्षीय । तव । राधसः ॥ मदेऽमदे । हि । नः । ददिः । यूथा । गवां । ऋजुऽऋतुः ॥ सं । गृभाय । पुरु । शता । उभयाहस्त्या । वसु । शिशीहि । रायः । आ । भर ॥ मादयस्व । सुते । सचा । शवसे ॥ शूर । राधसे ॥ विद्म । हि । त्वा । पुरुऽवसुं । उप । कामान् । ससृज्महे । अथ । नः । अविता । भव ॥ एते । ते । इंद्र । जंतवः । विश्वं । पुष्यंति । वार्यं ॥ अंतः । हि । ख्यः । जनानां । अर्यः । वेदः । अदाशुषां ।

तेषां । नः । वेदः । आ । भर ॥ २ ॥ उपोइति । सु । शृणुहि । गिरः । मघऽवन् । मा । अतथाःऽइव ॥ यदा । नः । सूनृताऽवतः । करः । आत् । अर्थयासे । इत् । योजं । नु । इंद्र । ते । हरीइति ॥ अक्षन् । अमीमदंत । हि । अव । प्रियाः । अधूषत ॥ अस्तोषत । स्वऽभानवः । विप्राः । नविष्ठया । मती ॥ ० ॥ सुऽसंदृशं । त्वा । वयं । मघऽवन् । वंदिषीमहि ॥ प्र । नूनं । पूर्णऽवंधुरः । स्तुतः । याहि । वशान् । अनु ॥ ० ॥ सः । घ । तं । वृषणं । रथं । अधि । तिष्ठाति । गोऽविदं ॥ यः । पात्रं । हारिऽयोजनं । पूर्णं । इंद्र । चिकेतति ॥ ० ॥ युक्तः । ते । अस्तु । दक्षिणः । उत । सव्यः । शतक्रतोइतिशतऽक्रतो ॥ तेन । जायां । उप । प्रियां । मंदनः । याहि । अंधसः ॥ ० ॥ युनज्मि । ते । ब्रह्मणा । केशिना । हरीइति । उप । प्र । याहि । दधिषे । गभस्त्योः ॥ उत् । त्वा । सुतासः । रभसाः । अमंदिषुः । पूषणऽवान् । वज्रिन् । सं । ऊँइति । पत्न्या । अमदः ॥ ३ ॥ अश्वऽवति । प्रथमः । गोषु । गच्छति । सुप्रऽअवीः । इंद्र । मर्त्यः । तव । ऊतिऽभिः ॥ तं । इत् । पृणक्षि । वसुना । भवीयसा । सिंधुं । आपः । यथा । अभितः । विऽचेतसः ॥ आपः । न । देवीः । उप । यंति । होत्रियं । अवः । पश्यंति । विऽततं । यथा । रजः ॥ प्राचैः । देवासः । प्र । नयंति । देवऽयुं । ब्रह्मऽप्रियं । जोषयंते । वराःऽइव ॥ अधि । द्वयोः । अदधाः । उक्थ्यं । वचः । यतऽस्रुचा । मिथुना । या । सपर्यतः ॥ असंऽयत्तः । व्रते । ते । क्षेति । पुष्यति । भद्रा । शक्तिः । यजमानाय । सुन्वते ॥ आत् । अंगिराः । प्रथमं । दधिरे । वयः । इद्धऽअग्नयः । शम्या । ये । सुऽकृत्यया ॥ सर्वं । पणेः । सं । अविंदंत । भोजनं । अश्वऽवंतं ।

गोऽमंतं । आ । पशुं । नरः ॥ यज्ञैः । अथर्वा । प्रथमः । पथः ।
तते । ततः । सूर्यः । व्रतऽपाः । वेनः । आ । अजनि । आ । गाः ।
आजत् । उशना । काव्यः । सचा । यमस्य । जातं । अमृतं ।
यजामहे ॥ बर्हिः । वा । यत् । सुऽअपत्याय । वृज्यते । अर्कः ।
वा । श्लोकं । आऽघोषते । दिवि ॥ ग्रावा । यत्र । वदति । कारुः ।
उक्थ्यः । तस्य । इत् । इंद्रः । अभिऽपित्वेषु । रण्यति ॥ ४ ॥
असावि । सोमः । इंद्र । ते । शविष्ठ । धृष्णो इति । आ । गहि । आ ।
त्वा । पृणक्तु । इंद्रियं । रजः । सूर्यः । न । रश्मिऽभिः ॥ इंद्रं । इत् ।
हरी इति । वहतः । अप्रतिधृष्टऽशवसं ॥ ऋषीणां । च । स्तुतीः ।
उप । यज्ञं । च । मानुषाणां ॥ आ । तिष्ठ । वृत्रऽहन् । रथं । युक्ता ।
ते । ब्रह्मणा । हरी इति ॥ अर्वाचीनं । सु । ते । मनः । ग्रावा ।
कृणोतु । वग्नुना ॥ इमं । इंद्र । सुतं । पिब । ज्येष्ठं । अमर्त्यं । मदं ॥
शुक्रस्य । त्वा । अभि । अक्षरन् । धाराः । ऋतस्य । सदने ॥ इंद्राय ।
नूनं । अर्चत । उक्थानि । च । ब्रवीतन ॥ सुताः । अमत्सुः । इंदवः ।
ज्येष्ठं । नमस्यत । सहः ॥ ५ ॥ नकिः । त्वत् । रथिऽतरः ।
हरी इति । यत् । इंद्र । यच्छसे ॥ नकिः । त्वा । अनु । मज्मना । नकिः ।
सुऽअश्वः । आनशे ॥ यः । एकः । इत् । विऽदयते । वसु । मर्ताय ।
दाशुषे ॥ ईशानः । अप्रतिऽस्कुतः । इंद्रः । अंग । कदा । मर्तं । अराधसं ।
पदा । क्षुंपंऽइव । स्फुरत् ॥ कदा । नः । शुश्रवत् । गिरः । इंद्रः । अंग ॥
यः । चित् । हि । त्वा । बहुऽभ्यः । आ । सुतऽवान् । आऽविवा-
सति ॥ उग्रं । तत् । पत्यते । शवः । इंद्रः । अंग ॥ स्वादोः । इत्था ।
विषुऽवतः । मध्वः । पिबंति । गौर्यः ॥ याः । इंद्रेण । सऽयावरीः ।
वृष्णा । मदंति । शोभसे । वस्वीः । अनु । स्वऽराज्यं ॥ ६ ॥ ताः ।
अस्य । पृशनऽयुवः । सोमं । श्रीणंति । पृश्नयः ॥ प्रियाः । इंद्रस्य ।

धेनवः । वज्रं । हिन्वंति । सायकं ॥ ० ॥ ताः । अस्य । नमसा । सहः । सपर्यति । प्रऽचेतसः ॥ व्रतानि । अस्य । सश्चिरे । पुरूणि । पूर्वऽचित्तये ॥ ० ॥ इंद्रः । दधीचः । अस्थऽभिः । वृत्राणि । अप्रतिऽस्कुतः ॥ जघान । नवतीः । नव ॥ इच्छन् । अश्वस्य । यत् । शिरः । पर्वतेषु । अपऽश्रितं ॥ तत् । विदत् । शर्यणाऽवति ॥ अत्र । अह । गोः । अमन्वत । नाम । त्वष्टुः । अपीच्यं ॥ इत्था । चंद्रमसः । गृहे ॥ ७ ॥ कः । अद्य । युक्ते । धुरि । गाः । ऋतस्य । शिमीऽवतः । भामिनः । दुःऽहृणायून् ॥ आसन्ऽइषून् । हृत्सुऽअसः । मयःऽभून् । यः । एषां । भृत्यां । ऋणधत् । सः । जीवात् ॥ कः । ईषते । तुज्यते । कः । बिभाय । कः । मंसते । संतं । इंद्रं । कः । अंति ॥ कः । तोकाय । कः । इभाय । उत । राये । अधि । ब्रवत् । तन्वे । कः । जनाय ॥ कः । अग्निं । ईट्टे । हविषा । घृतेन । स्रुचा । यजातै । ऋतुऽभिः । ध्रुवेभिः ॥ कस्मै । देवान् । आ । वहान् । आशु । होम । कः । मंसते । वीतिऽहोत्रः । सुऽदेवः ॥ त्वं । अंग । प्र । शंसिषः । देवः । शविष्ठ । मर्त्यं ॥ न । त्वत् । अन्यः । मघऽवन् । अस्ति । मर्डिता । इंद्र । ब्रवीमि । ते । वचः ॥ मा । ते । राधांसि । मा । ते । ऊतयः । वसोइति । अस्मान् । कदा । चन । दभन् ॥ विश्वा । च । नः । उपऽमिमीहि । मानुष । वसूनि । चर्षणिऽभ्यः । आ ॥ ८ ॥ प्र । ये । शुभंते । जनयः । न । सप्तयः । यामन् । रुद्रस्य । सूनवः । सुऽदंससः ॥ रोदसीइति । हि । मरुतः । चक्रिरे । वृधे । मदंति । वीराः । विदथेषु । घृष्वयः ॥ ते । उक्षितासः । महिमानं । आशत । दिवि । रुद्रासः । अधि । चक्रिरे । सदः ॥ अर्चंतः । अर्कं । जनयंतः । इंद्रियं । अधि । श्रियः । दधिरे ।

पृश्निऽमातरः ॥ गोऽमातरः । यत् । शुभयंते । अंजिऽभिः । तनूषु । शुभ्राः । दधिरे । विरुक्मतः ॥ बाधंते । विश्वं । अभिऽमातिनं । अप । वर्त्मानि । एषां । अनु । रीयते । घृतं ॥ वि । ये । भ्राजंते । सुऽमखासः । ऋष्टिऽभिः । प्रऽच्यवयंतः । अच्युता । चित् । ओजसा ॥ मनःऽजुवः । यत् । मरुतः । रथेषु । आ । वृषऽव्रातासः । पृषतीः । अयुग्ध्वं ॥ प्र । यत् । रथेषु । पृषतीः । अयुग्ध्वं । वाजे । अद्रिं । मरुतः । रंहयंतः ॥ उत । अरुषस्य । वि । स्यंति । धाराः । चर्मऽइव । उदऽभिः । वि । उंदंति । भूम ॥ आ । वः । वहंतु । सप्तयः । रघुऽस्यदः । रघुऽपत्वानः । प्र । जिगात । बाहुऽभिः ॥ सीदत । आ । बर्हिः । उरु । वः । सदः । कृतं । मादयध्वं । मरुतः । मध्वः । अंधसः ॥ ९ ॥ ते । अवर्धंत । स्वऽतवसः । महिऽत्वना । आ । नाकं । तस्थुः । उरु । चक्रिरे । सदः । विष्णुः । यत् । ह । आवत् । वृषणं । मदऽच्युतं । वयः । न । सीदन् । अधि । बर्हिषि । प्रिये ॥ शूराःऽइव । इत् । युयुधयः । न । जग्मयः । श्रवस्यवः । न । पृतनासु । येतिरे ॥ भयंते । विश्वा । भुवना । मरुत्ऽभ्यः । राजानःऽइव । त्वेषऽसंदृशः । नरः ॥ त्वष्टा । यत् । वज्रं । सुऽकृतं । हिरण्ययं । सहस्रऽभृष्टिं । सुऽअपाः । अवर्तयत् ॥ धत्ते । इंद्रः । नरि । अपांसि । कर्तवे । अहन् । वृत्रं । निः । अपां । औब्जत् । अर्णवं ॥ ऊर्ध्वं । नुनुद्रे । अवतं । ते । ओजसा । दादृहाणं । चित् । बिभिदुः । वि । पर्वतं ॥ धमंतः । वाणं । मरुतः । सुऽदानवः । मदे । सोमस्य । रण्यानि । चक्रिरे ॥ जिह्मं । नुनुद्रे । अवतं । तया । दिशा । असिंचन् । उत्सं । गोतमाय । तृष्णऽजे ॥ आ । गच्छंति । ईं । अवसा । चित्रऽभानवः । कामं । विप्रस्य । तर्पयंत । धामऽभिः ॥ या । वः । शर्म । शशमानाय ।

संति । त्रिऽधातूंनि । दाशुषे । यच्छत । अधि ॥ अस्मभ्यं । तानि ।
मरुतः । वि । यंत । रयिं । नः । धत्त । वृषणः । सुऽवीरं ॥ १० ॥
मरुतः । यस्य । हि । क्षये । पाथ । दिवः । विऽमहसः । सः ।
सुऽगोपातमः । जनः ॥ यज्ञैः । वा । यज्ञऽवाहसः । विप्रस्य ।
वा । मतीनां ॥ मरुतः । शृणुत । हवं ॥ उत । वा । यस्य ।
वाजिनः । अनु । विप्रं । अतक्षत ॥ सः । गंता । गोऽमति ।
व्रजे ॥ अस्य । वीरस्य । बर्हिषि । सुतः । सोमः । दिविष्टिषु ॥
उक्थं । मदः । च । शस्यते ॥ अस्य । श्रोषंतु । आ । भुवः ।
विश्वाः । यः । चर्षणीः । अभि ॥ सूरं । चित् । सस्रुषीः ।
इषः ॥ ११ ॥ पूर्वीभिः । हि । ददाशिम । शरत्ऽभिः । मरुतः ।
वयं ॥ अवःऽभिः । चर्षणीनां ॥ सुऽभगः । सः । प्रऽयज्यवः ।
मरुतः । अस्तु । मर्त्यः ॥ यस्य । प्रयांसि । पर्षथ ॥ शशमानस्य ।
वा । नरः । स्वेदस्य । सत्यऽशवसः ॥ विद । कामस्य । वेनतः ॥
यूयं । तत् । सत्यऽशवसः । आविः । कर्त । महिऽत्वना ॥
विध्यत । विऽद्युता । रक्षः ॥ गूहत । गुहां । तमः । वि ।
यात । विश्वं । अत्रिणं ॥ ज्योतिः । कर्त । यत् । उश्मसि ॥ १२ ॥
प्रऽत्वक्षसः । प्रऽतवसः । विऽरप्शिनः । अनानताः । अविथुराः ।
ऋजीषिणः ॥ जुष्टऽतमासः । नृऽतमासः । अंजिऽभिः । वि ।
आनज्रे । के । चित् । उस्राःऽइव । स्तृऽभिः ॥ उपऽह्वरेषु ।
यत् । अचिध्वं । ययिं । वयःऽइव । मरुतः । केन । चित् ।
पथा ॥ श्चोतंति । कोशाः । उप । वः । रथेषु । आ । घृतं ।
उक्षत । मधुऽवर्णं । अर्चते ॥ प्र । एषां । अज्मेषु । विथुराऽइव ।
रेजते । भूमिः । यामेषु । यत् । ह । युंजते । शुभे ॥ ते ।
क्रीळयः । धुनयः । भ्राजत्ऽऋष्टयः । स्वयं । महिऽत्वं । पनयंत ।

धूतयः ॥ सः । हि । स्वऽसृत् । पृषत्ऽअश्वः । युवा । गणः ।
अया । ईशानः । तविषीभिः । आऽवृतः ॥ असि । सत्यः ।
ऋणऽयावा । अनेद्यः । अस्याः । धियः । प्रऽअविता । अथ । वृषा ।
गणः ॥ पितुः । प्रत्नस्य । जन्मना । वदामसि । सोमस्य । जिह्वा ।
प्र । जिगाति । चक्षसा ॥ यत् । ईं । इंद्रं । शमि । ऋक्वाणः ।
आशत । आत् । इत् । नामानि । यज्ञियानि । दधिरे ॥ श्रियसे ।
कं । भानुऽभिः । सं । मिमिक्षिरे । ते । रश्मिऽभिः । ते । ऋक्वऽभिः ।
सुऽखादयः ॥ ते । वाशीऽमंतः । इष्मिणः । अभीरवः । विद्रे ।
प्रियस्य । मारुतस्य । धाम्नः ॥ १३ ॥ आ । विद्युन्मत्ऽभिः । मरुतः ।
सुऽअर्कैः । रथेभिः । यात । ऋष्टिमत्ऽभिः । अश्वऽपर्णैः ॥ आ ।
वर्षिष्ठया । नः । इषा । वयः । न । पप्तत । सुऽमायाः ॥ ते ।
अरुणेभिः । वरं । आ । पिशंगैः । शुभे । कं । यांति । रथतूःऽभिः ।
अश्वैः ॥ रुक्मः ॥ न । चित्रः । स्वधितिऽवान् । पव्या । रथस्य ।
जंघनंत । भूम ॥ श्रिये । कं । वः । अधि । तनूषु । वाशीः । मेधा ।
वना । न । कृणवंते । ऊर्ध्वा ॥ युष्मभ्यं । कं । मरुतः । सुऽजाताः ।
तुविऽद्युम्नासः । धनयंते । अद्रिं ॥ अहानि । गृध्राः । परि । आ ।
वः । आ । अगुः । इमां । धियं । वर्कार्यां । च । देवीं ॥ ब्रह्म ।
कृण्वंतः । गोतमासः । अर्कैः । ऊर्ध्वं । नुनुद्रे । उत्सऽधिं । पिबध्यै ॥
एतत् । त्यत् । न । योजनं । अचेति । सस्वः । ह । यत् । मरुतः ।
गोतमः । वः ॥ पश्यन् । हिरण्यऽचक्रान् । अयःऽदंष्ट्रान् । विऽधावतः ।
वराहून् ॥ एषा । स्या । वः । मरुतः । अनुऽभर्त्री । प्रति । स्तोभति ।
वाघतः । न । वाणी ॥ अस्तोभयत् । वृथा । आसां । अनु । स्वधां ।
गभस्त्योः ॥ १४ ॥ आ । नः । भद्राः । क्रतवः । यंतु । विश्वतः ।
अदब्धासः । अपरिऽइतासः । उत्ऽभिदः ॥ देवाः । नः । यथा ।

सदं । इत् । वृधे । असन् । अप्रऽआयुवः । रक्षितारः । दिवेऽदिवे ॥ देवानां । भद्रा । सुऽमतिः । ऋजुऽयतां । देवानां । रातिः । अभि । नः । नि । वर्ततां ॥ देवानां । सख्यं । उप । सेदिम । वयं । देवाः । नः । आयुः । प्र । तिरंतु । जीवसे ॥ तान् । पूर्वया । निऽविदा । हूमहे । वयं । भगं । मित्रं । अदितिं । दक्षं । अस्रिधं ॥ अर्यमणं । वरुणं । सोमं । अश्विना । सरस्वती । नः । सुऽभगा । मयः । करत् । तत् । नः । वातः । मयःऽभु । वातु । भेषजं । तत् । माता । पृथिवी । तत् । पिता । द्यौः ॥ तत् । ग्रावाणः । सोमऽसुतः । मयःऽभुवः । तत् । अश्विना । शृणुतं । धिष्ण्या । युवं ॥ तं । ईशानं । जगतः । तस्थुषः । पतिं । धियंऽजिन्वं । अवसे । हूमहे । वयं ॥ पूषा । नः । यथा । वेदसां । असत् । वृधे । रक्षिता । पायुः । अदब्धः । स्वस्तये ॥ १५ ॥ स्वस्ति । नः । इंद्रः । वृद्धऽश्रवाः । स्वस्ति । नः । पूषा । विश्वऽवेदाः ॥ स्वस्ति । नः । तार्क्ष्यः । अरिष्टऽनेमिः । स्वस्ति । नः । बृहस्पतिः । दधातु ॥ पृषत्ऽअश्वाः । मरुतः । पृश्निऽमातरः । शुभंऽयावानः । विदथेषु । जग्मयः ॥ अग्निऽजिह्वाः । मनवः । सूरऽचक्षसः । विश्वे । नः । देवाः । अवसा । आ । गमन् । इह । भद्रं । कर्णेभिः । शृणुयाम । देवाः । भद्रं । पश्येम । अक्षऽभिः । यजत्राः ॥ स्थिरैः । अंगैः । तुस्तुऽवांसः । तनूभिः । वि । अशेम । देवऽहितं । यत् । आयुः । शतं । इत् । नु । शरदः । अंति । देवाः ॥ यत्र । नः । चक्र । जरसं । तनूनां ॥ पुत्रासः । यत्र । पितरः । भवंति । मा । नः । मध्या । रिरिषत । आयुः । गंतोः ॥ अदितिः । द्यौः । अदितिः । अंतरिक्षं । अदितिः । माता । सः । पिता । सः । पुत्रः ॥ विश्वे । देवाः । अदितिः । पंच । जनाः । अदितिः । जातं । अदितिः । जनिऽत्वं ॥ १६ ॥ ऋजुऽनीती । नः । वरुणः । मित्रः । नयत । विद्वान् ॥ अर्यमा । देवैः । सऽजोषाः ॥ ते ।

हि । वस्वः । वसवानाः । ते । अप्रऽमूराः । महःऽभिः ॥ व्रता । रक्षंते । विश्वाहा ॥ ते । अस्मभ्यं । शर्म । यंसन् । अमृताः । मर्त्येभ्यः ॥ बाधमानाः । अप । द्विषः ॥ वि । नः । पथः । सुवितायं । चियंतु । इंद्रः । मरुतः ॥ पूषा । भगः । वंद्यासः ॥ उत । नः । धियः । गोऽअग्राः । पूषन् । विष्णोइति । एवऽयावः ॥ कर्त । नः । स्वस्तिऽमतः ॥ १७ ॥ मधु । वाताः । ऋतऽयते । मधु । क्षरंति । सिंधवः ॥ माध्वीः । नः । संतु । ओषधीः ॥ मधु । नक्तं । उत । उषसः । मधुऽमत् । पार्थिवं । रजः ॥ मधु । द्यौः । अस्तु । नः । पिता ॥ मधुऽमान् । नः । वनस्पतिः । मधुऽमान् । अस्तु । सूर्यः ॥ माध्वीः । गावः । भवंतु । नः ॥ शं । नः । मित्रः । शं । वरुणः । शं । नः । भवतु । अर्यमा ॥ शं । नः । इंद्रः । बृहस्पतिः । शं । नः । विष्णुः । उरुऽक्रमः ॥ १८ ॥ त्वं । सोम । प्र । चिकितः । मनीषा । त्वं । रजिष्ठं । अनु । नेषि । पंथां ॥ तव । प्रऽनीती । पितरः । नः । इंदोइति । देवेषु । रत्नं । अभजंत । धीराः ॥ त्वं । सोम । क्रतुऽभिः । सुऽक्रतुः । भूः । त्वं । दक्षैः । सुऽदक्षः । विश्वऽवेदाः ॥ त्वं । वृषा । वृषऽत्वेभिः । महिऽत्वा । द्युम्नेभिः । द्युम्नी । अभवः । नृऽचक्षाः ॥ राज्ञः । नु । ते । वरुणस्य । व्रतानि । बृहत् । गभीरं । तव । सोम । धाम ॥ शुचिः । त्वं । असि । प्रियः । न । मित्रः । दक्षाय्यः । अर्यमाऽइव । असि । सोम ॥ या । ते । धामानि । दिवि । या । पृथिव्यां । या । पर्वतेषु । ओषधीषु । अप्ऽसु ॥ तेभिः । नः । विश्वैः । सुऽमनाः । अहेळन् । राजन् । सोम । प्रति । हव्या । गृभाय । त्वं । सोम । असि । सत्ऽपतिः । त्वं । राजा । उत । वृत्रऽहा ॥ त्वं । भद्रः । असि । क्रतुः ॥ १९ ॥ त्वं । च । सोम । नः । वशः । जीवातुं । न । मरामहे ॥ प्रियऽस्तोत्रः । वनस्पतिः ॥ त्वं । सोम ।

महे । भगं । त्वं । यूने । ऋतऽयते ॥ दक्षं । दधासि । जीवसे ॥
त्वं । नः । सोम । विश्वतः । रक्ष । राजन् । अघऽयतः ॥ न ।
रिष्येत् । त्वाऽवतः । सखा ॥ सोम । याः । ते । मयःऽभुवः ।
ऊतयः । संति । दाशुषे ॥ ताभिः । नः । अविता । भव ॥ इमं ।
यज्ञं । इदं । वचः । जुजुषाणः । उपऽआगहि ॥ सोम । त्वं । नः ।
वृधे । भव ॥ २० ॥ सोम । गीःऽभिः । त्वा । वयं । वर्धयामः ।
वचःऽविदः ॥ सुऽमृळीकः । नः । आ । विश ॥ गयऽस्फानः ।
अमीवऽहा । वसुऽवित् । पुष्टिऽवर्धनः ॥ सुऽमित्रः । सोम । नः ।
भव ॥ सोम । ररंधि । नः । हृदि । गावः । न । यवसेषु । आ ॥
मर्यःऽइव । स्वे । ओक्ये ॥ यः । सोम । सख्ये । तव । ररणत् ।
देव । मर्त्यः ॥ तं । दक्षः । सचते । कविः ॥ उरुष्य । नः । अभिऽ-
शस्तेः । सोम । नि । पाहि । अंहसः ॥ सखा । सुऽशेवः । एधि ।
नः ॥ २१ ॥ आ । प्यायस्व । सं । एतु । ते । विश्वतः । सोम ।
वृष्ण्यं ॥ भव । वाजस्य । संऽगथे ॥ आ । प्यायस्व । मदिन्ऽतम ।
सोम । विश्वेभिः । अंशुऽभिः ॥ भव । नः । सुश्रवःऽतमः । सखा ।
वृधे ॥ सं । ते । पयांसि । सं । ऊँइति । यंतु । वाजाः । सं । वृष्ण्यानि ।
अभिमातिऽसहः ॥ आऽप्यायमानः । अमृताय । सोम । दिवि ।
श्रवांसि । उत्ऽतमानि । धिष्व ॥ ० ॥ हविषा । यजंति । ता । ते ।
विश्वा । परिऽभूः । अस्तु । यज्ञं ॥ गयऽस्फानः । प्रऽतरणः । सुऽवीरः ।
अवीरऽहा । प्र । चर । सोम । दुर्यान् ॥ सोमः । धेनुं । सोमः ।
अर्वंतं । आशुं । सोमः । वीरं । कर्मण्यं । ददाति ॥ सदन्यं । विदथ्यं ।
सभेयं । पितृऽश्रवणं । यः । ददाशत् । अस्मै ॥ २२ ॥ अषाळ्हं ।
युत्ऽसु । पृतनासु । पप्रिं । स्वःऽसां । अप्ऽसां । वृजनस्य । गोपां ॥
भरेषुऽजां । सुऽक्षितिं । सुऽश्रवसं । जयंतं । त्वां । अनु । मदेम ।

सोम ॥ त्वं । इमाः । ओषधीः । सोम । विश्वाः । त्वं । अपः । अजनयः । त्वं । गाः । त्वं । आ । ततंथ । उरु । अंतरिक्षं । त्वं । ज्योतिषा । वि । तमः । ववर्थ ॥ देवेन । नः । मनसा । देव । सोम । रायः । भागं । सहसाऽवन् । अभि । युध्य ॥ मा । त्वा । आ । तनत् । ईशिषे । वीर्यस्य । उभयेभ्यः । प्र । चिकित्स । गोऽइष्टौ ॥ २३ ॥ एताः । ऊँ इति । त्याः । उषसः । केतुं । अक्रत । पूर्वे । अर्धे । रजसः । भानुं । अंजते ॥ निःऽकृण्वानाः । आयुधानिऽइव । धृष्णवः । प्रति । गावः । अरुषीः । यंति । मातरः ॥ उत् । अपप्तन् । अरुणाः । भानवः । वृथा । सुऽआयुजः । अरुषीः । गाः । अयुक्षत ॥ अक्रन् । उषसः । वयुनानि । पूर्वऽथा । रुशंतं । भानुं । अरुषीः । अशिश्रयुः ॥ अर्चंति । नारीः । अपसः । न । विष्टिऽभिः । समानेन । योजनेन । आ । पराऽवतः ॥ इषं । वहंतीः । सुऽकृते । सुऽदानवे । विश्वा । इत् । अह । यजमानाय । सुन्वते ॥ अधि । पेशांसि । वपते । नृतूःऽइव । अप । ऊर्णुते । वक्षः । उस्राऽइव । बर्जहं ॥ ज्योतिः । विश्वस्मै । भुवनाय । कृण्वती । गावः । न । व्रजं । वि । उषाः । आवरित्यावः । तमः ॥ प्रति । अर्चिः । रुशत् । अस्याः । अदर्शि । वि । तिष्ठते । बाधते । कृष्णं । अभ्वं ॥ स्वरुं । न । पेशः । विदथेषु । अंजन् । चित्रं । दिवः । दुहिता । भानुं । अश्रेत् ॥ २४ ॥ अतारिष्म । तमसः । पारं । अस्य । उषाः । उछती । वयुना । कृणोति ॥ श्रिये । छंदः । न । स्मयते । विऽभाती । सुऽप्रतीका । सौमनसाय । अजीगरिति । भास्वती । नेत्री । सूनृतानां । दिवः । स्तवे । दुहिता । गोतमेभिः ॥ प्रजाऽवतः । नृऽवतः । अश्वऽबुध्यान् । उषः । गोऽअग्रान् । उप । मासि । वाजान् ॥ उषः । तं । अश्यां । यशसं । सुऽवीरं । दासऽप्रवर्गं । रयिं ।

अश्वऽबुध्यं ॥ सुऽदंससा । श्रवसा । या । विऽभासि । वाजऽप्रसूता । सुऽभगे । बृहंतं ॥ विश्वानि । देवी । भुवना । अभिऽचक्ष्य । प्रतीची । चक्षुः । उर्विया । वि । भाति । विश्वं । जीवं । चरसे । बोधयंती । विश्वस्य । वाचं । अविदत् । मनायोः ॥ पुनःऽपुनः । जायमाना । पुराणी । समानं । वर्णं । अभि । शुंभमाना ॥ श्वघ्नीऽइव । कृत्नुः । विजः । आऽमिनाना । मर्तस्य । देवी । जरयंती । आयुः ॥ २५ ॥ विऽऊर्णुवती । दिवः । अंतान् । अबोधि । अप । स्वसारं । सनुतः । युयोति ॥ प्रऽमिनती । मनुष्या । युगानि । योषा । जारस्य । चक्षसा । वि । भाति ॥ पशून् । न । चित्रा । सुऽभगा । प्रथाना । सिंधुः । न । क्षोदः । उर्विया । वि । अश्वैत् ॥ अमिनती । दैव्यानि । व्रतानि । सूर्यस्य । चेति । रश्मिऽभिः । दृशाना ॥ उषः । तत् । चित्रं । आ । भर । अस्मभ्यं । वाजिनीऽवति ॥ येन । तोकं । च । तनयं । च । धामहे ॥ उषः । अद्य । इह । गोऽमति । अश्वऽवति । विभाऽवरि ॥ रेवत् । अस्मेइति । वि । उच्छ । सूनृताऽवति ॥ युक्ष्व । हि । वाजिनीऽवति । अश्वान् । अद्य । अरुणान् । उषः ॥ अथ । नः । विश्वा । सौभगानि । आ । वह ॥ २६ ॥ अश्विना । वर्तिः । अस्मत् । आ । गोऽमत् । दस्रा । हिरण्यऽवत् ॥ अर्वाक् । रथं । सऽमनसा । नि । यच्छतं ॥ यौ । इत्था । श्लोकं । आ । दिवः । ज्योतिः । जनाय । चक्रथुः ॥ आ । नः । ऊर्जं । वहतं । अश्विना । युवं ॥ आ । इह । देवा । मयःऽभुवा । दस्रा । हिरण्यवर्तनीइतिहिरण्यऽवर्तनी ॥ उषःऽबुधः । वहंतु । सोमऽपीतये ॥ २७ ॥ अग्नीषोमौ । इमं । सु । मे । शृणुतं । वृषणा । हवं । प्रति । सुऽउक्तानि । हर्यतं । भवतं । दाशुषे । मयः ॥ अग्नीषोमा । यः । अद्य । वां । इदं । वचः ।

सपर्यति ॥ तस्मै । धत्तं । सुऽवीर्यं । गवां । पोषं । सुऽअश्व्यं ।
अग्नीषोमा । यः । आऽहुतिं । यः । वां । दाशात् । हविःऽकृतिं । सः ॥
प्रऽजया । सुऽवीर्यं । विश्वं । आयुः । वि । अश्नवत् ॥ अग्नीषोमा । चेति ।
तत् । वीर्यं । वां । यत् । अमुष्णीतं । अवसं । पणिं । गाः ॥
अव । अतिरतं । बृसयस्य । शेषः । अविंदतं । ज्योतिः ।
एकं । बहुऽभ्यः ॥ युवं । एतानि । दिवि । रोचनानि ।
अग्निः । च । सोम । सक्रतूइतिसऽक्रतू । अधत्तं । युवं ।
सिंधून् । अभिऽशस्तेः । अवद्यात् । अग्निषोमौ । अमुंजतं । गृभीतान् ॥
आ । अन्यं । दिवः । मातरिश्वा । जभार । अमंथ्नात् । अन्यं । परि ।
श्येनः । अद्रेः ॥ अग्नीषोमा । ब्रह्मणा । ववृधाना । उरुं । यज्ञाय ।
चक्रथुः । ऊँइति । लोकं ॥ २८ ॥ अग्नीषोमा । हविषः । प्रऽस्थितस्य ।
वीतं । हर्यतं । वृषणा । जुषेथां ॥ सुऽशर्माणा । सुऽअवसा । हि ।
भूतं । अथ । धत्तं । यजमानाय । शं । योः ॥ यः । अग्नीषोमा ।
हविषा । सपर्यात् । देवद्रीचा । मनसा । यः । घृतेन ॥ तस्य । व्रतं ।
रक्षतं । पातं । अंहसः । विशे । जनाय । महि । शर्म । यच्छतं ॥
अग्नीषोमा । सऽवेदसा । सहूतीइतिसऽहूती । वनतं । गिरः ॥ सं ।
देवऽत्रा । बभूवथुः ॥ अग्नीषोमौ । अनेन । वां । यः । वां । घृतेन ।
दाशति ॥ तस्मै । दीदयतं । बृहत् ॥ अग्नीषोमौ । इमानि । नः ।
युवं । हव्या । जुजोषतं ॥ आ । यतं । उप । नः । सचा ॥ अग्नीषोमा ।
पिपृतं । अर्वतः । नः । आ । प्यायंतां । उस्रियाः । हव्यऽसूदः ।
अस्मेइति । बलानि । मघवत्ऽसु । धत्तं । कृणुतं । नः । अध्वरं ।
श्रुष्टिऽमंतं ॥ २९ ॥ इमं । स्तोमं । अर्हते । जातऽवेदसे । रथंऽइव ।
सं । महेम । मनीषया ॥ भद्रा । हि । नः । प्रऽमतिः । अस्य । संऽ-
सदि । अग्ने । सख्ये । मा । रिषाम । वयं । तव ॥ यस्मै । त्वं ।

आऽयजसे । सः । साधति । अनर्वा । क्षेति । दधते । सुऽवीर्य ॥ सः । तूताव । न । एनं । अश्नोति । अंहतिः ॥ ० ॥ शकेम । त्वा । संऽइधं । साधय । धियः । त्वेइति । देवाः । हविः । अदंति । आऽहुतं ॥ त्वं । आदित्यान् । आ । वह । तान् । हि । उश्मसि ॥ ० ॥ भराम । इध्मं । कृणवाम । हवींषि । ते । चितयंतः । पर्वणाऽपर्वणा । वयं ॥ जीवातवे । प्रऽतरं । साधय । धियः ॥ ० ॥ विशां । गोपाः । अस्य । चरंति । जंतवः । द्विऽपत् । च । यत् । उत । चतुःऽपत् । अक्तुऽभिः । चित्रः । प्रऽकेतः । उषसः । महान् । असि ॥ ३० ॥ त्वं । अध्वर्युः । उत । होता । असि । पूर्व्यः । प्रऽशास्ता । पोता । जनुषा । पुरःऽहितः ॥ विश्वा । विद्वान् । आर्त्विज्या । धीर । पुष्यसि ॥ ० ॥ यः । विश्वतः । सुऽप्रतीकः । सऽदृङ् । असि । दूरे । चित् । सन् । तळित्ऽइव । अति । रोचसे ॥ रात्र्याः । चित् । अंधः । अति । देव । पश्यसि ॥ ० ॥ पूर्वः । देवाः । भवतु । सुन्वतः । रथः । अस्माकं । शंसः । अभि । अस्तु । दुःऽध्यः । तत् । आ । जानीत । उत । पुष्यत । वचः ॥ ० ॥ वधैः । दुःऽशंसान् । अप । दुःऽध्यः । जहि । दूरे । वा । ये । अंति । वा । के । चित् । अत्रिणः । अथ । यज्ञाय । गृणते । सुऽगं । कृधि ॥ ० ॥ यत् । अयुक्थाः । अरुषा । रोहिता । रथे । वातऽजूता । वृषभस्यऽइव । ते । रवः ॥ आत् । इन्वसि । वनिनः । धूमऽकेतुना ॥ ० ॥ २१ ॥ अध । स्वनात् । उत । बिभ्युः । पतत्रिणः । द्रप्साः । यत् । ते । यवसऽअदः । वि । अस्थिरन् ॥ सुऽगं । तत् । ते । तावकेभ्यः । रथेभ्यः ॥ ० ॥ अयं । मित्रस्य । वरुणस्य । धायसे । अवऽयातां । मरुतां । हेळः । अद्भुतः ॥ मृळ । सु । नः । भूतु । एषां । मनः । पुनः ॥ ० ॥ देवः ।

देवानां । असि । मित्रः । अद्भुतः । वसुः । वसूनां । असि । चारुः । अध्वरे ॥ शर्मन् । स्याम । तव । सप्रथःऽतमे ॥ ० ॥ तत् । ते । भद्रं । यत् । संऽइद्धः । स्वे । दमे । सोमऽआहुतः । जरसे । मृळयत्ऽतमः । दधासि । रत्नं । द्रविणं । च । दाशुषे ॥ ० ॥ यस्मै । त्वं । सुऽद्रविणः । ददाशः । अनागाःऽत्वं । अदिते । सर्वऽताता ॥ यं । भद्रेण । शवसा । चोदयासि । प्रजाऽवता । राधसा । ते । स्याम ॥ सः । त्वं । अग्ने । सौभगऽत्वस्य । विद्वान् । अस्माकं । आयुः । प्र । तिर । इह । देव ॥ तत् । नः । मित्रः । वरुणः । ममहतां । अदितिः । सिंधुः । पृथिवी । उत । द्यौः ॥ ३२ ॥ अध्यायः ॥ ६ ॥

इति प्रथमाष्टके षष्ठोध्यायः





## ॥ अथ सप्तमोध्यायः ॥

हरिः ॐ ॥ द्वेइति । विरूपेइतिविऽरूपे । चरतः । स्वर्थेइति- सुऽअर्थे । अन्याऽअन्या । वत्सं । उप । धापयेतेइति ॥ हरिः । अन्यस्यां । भवति । स्वधाऽवान् । शुक्रः । अन्यस्यां । ददृशे । सुऽवर्चाः ॥ दश । इमं । त्वष्टुः । जनयंत । गर्भं । अतंद्रासः । युवतयः । विऽभृत्रं ॥ तिग्मऽअनीकं । स्वऽयशसं । जनेषु । विऽरोचमानं । परि । सीं । नयंति ॥ त्रीणि । जाना । परि । भूषंति । अस्य । समुद्रे । एकं । दिवि । एकं । अप्ऽसु ॥ पूर्वां । अनु । प्र । दिशं । पार्थिवानां । ऋतून् । प्रऽशासत् । वि । दधौ । अनुष्टु ॥ कः । इमं । वः । निण्यं । आ । चिकेत । वत्सः । मातृः । जनयत । स्वधाभिः ॥ बह्वीनां । गर्भः । अपसां । उपऽस्थात् । महान् । कविः । निः । चरति । स्वधाऽवान् । आविःऽत्यः । वर्धते । चारुः । आसु । जिह्मानां । ऊर्ध्वः । स्वऽयशाः । उपऽस्थे ॥ उभेइति । त्वष्टुः । बिभ्यतुः । जायमानात् । प्रतीची । सिंहं । प्रति । जोषयेतेइति ॥ १ ॥ उभेइति । भद्रेइति । जोषयेतेइति । न । मेनेइति । गावः । न । वाश्राः । उप । तस्थुः । एवैः ॥ सः । दक्षाणां । दक्षऽपतिः । बभूव । अंजंति । यं । दक्षिणतः । हविःऽभिः ॥ उत् । यंयमीति । सविताऽइव । बाहूइति । उभेइति । सिचौ । यतते । भीमः । ऋंजन् ॥ उत् । शुक्रं । अत्कं । अजते । सिमस्मात् । नवा । मातृऽभ्यः । वसना । जहाति ॥ त्वेषं । रूपं । कृणुते । उत्ऽतरं । यत् । संऽपृंचानः । सदने । गोभिः । अत्ऽभिः ॥ कविः ।

बुध्नं । परि । मर्मृज्यते । धीः । सा । देवऽताता । संऽइतिः । बभूव ॥ उरु । ते । त्रयः । परि । एति । बुध्नं । विऽरोचमानं । महिषस्य । धाम ॥ विश्वेभिः । अग्ने । स्वयंशःऽभिः । इद्धः । अदब्धेभिः । पायुऽभिः । पाहि । अस्मान् ॥ धन्वन् । स्रोतः । कृणुते । गातुं । ऊर्मिं । शुक्रैः । ऊर्मिऽभिः । अभि । नक्षति । क्षां ॥ विश्वा । सनानि । जठरेषु । धत्ते । अंतः । नवासु । चरति । प्रऽसूषु ॥ एव । नः । अग्ने । संऽइधा । वृधानः । रेवत् । पावक । श्रवसे । वि । भाहि ॥ ० ॥ २ ॥ सः । प्रत्नऽथा । सहसा । जायमानः । सद्यः । काव्यानि । बट् । अधत्त । विश्वा ॥ आपः । च । मित्रं । धिषणा । च । साधन् । देवाः । अग्निं । धारयन् । द्रविणःऽदां । सः । पूर्वया । निऽविदा । कव्यता । आयोः । इमाः । प्रऽजाः । अजनयत् । मनूनां ॥ विवस्वता । चक्षसा । द्यां । अपः । च ॥ ० ॥ तं । ईळत । प्रथमं । यज्ञऽसाधं । विशः । आरीः । आऽहुतं । ऋंजसानं ॥ ऊर्जः । पुत्रं । भरतं । सृप्रऽदानुं ॥ ० ॥ सः । मातरिश्वा । पुरुवारऽपुष्टिः । विदत् । गातुं । तनयाय । स्वःऽवित् ॥ विशां । गोपाः । जनिता । रोदस्योः ॥ ० ॥ नक्तोषसा । वर्णं । आमेम्यानेइत्याऽमेम्याने । धापयेतेइति । शिशुं । एकं । समीचीइति- संऽईची ॥ द्यावाक्षामा । रुक्मः । अंतः । वि । भाति ॥ ० ॥ ३ ॥ रायः । बुध्नः । संऽगमनः । वसूनां । यज्ञस्य । केतुः । मन्मऽ- साधनः । वेरितिव्रेः ॥ अमृतऽत्वं । रक्षमाणासः । एनं । ॥ ० ॥ नु । च । पुरा । च । सदनं । रयीणां । जातस्य । च । जायमानस्य । च । क्षां । सतः । च । गोपां । भवतः । च । भूरेः ॥ ० ॥ द्राविणःऽदाः । द्रविणसः । तुरस्य । द्रविणःऽदाः । सनरस्य । प्र । यंसत् । द्रविणःऽदाः । वीरऽवतीं । इषं । नः ।

द्रविणःऽदाः । रासते । दीर्घं । आयुः ॥ ० ॥ ४ ॥ अप । नः । शोशुचत् । अघं । अग्ने । शुशुग्धि । आ । रयिं ॥ ० ॥ सुऽक्षेत्रिया । सुगातुऽया । वसुऽया । च । यजामहे ॥ ० ॥ प्र । यत् । भंदिष्ठः । एषां । प्र । अस्माकासः । च । सूरयः ॥ ० ॥ प्र । यत् । ते । अग्ने । सूरयः । जायेमहि । प्र । ते । वयं ॥ ० ॥ प्र । यत् । अग्नेः । सहस्वतः । विश्वतः । यंति । भानवः ॥ ० ॥ त्वं । हि । विश्वतःऽमुख । विश्वतः । परिऽभूः । असि ॥ ० ॥ द्विषः । नः । विश्वतःऽमुख । अति । नावाऽइव । पारय ॥ ० ॥ सः । नः । सिंधुंऽइव । नावया । अति । पर्ष । स्वस्तये ॥ ० ॥ ५ ॥ वैश्वानरस्य । सुऽमतौ । स्याम । राजा । हि । कं । भुवनानां । अभिःऽश्रीः ॥ इतः । जातः । विश्वं । इदं । वि । चष्टे । वैश्वानरः । यतते । सूर्येण ॥ पृष्टः । दिवि । पृष्टः । अग्निः । पृथिव्यां । पृष्टः । विश्वाः । ओषधीः । आ । विवेश ॥ वैश्वानरः । सहसा । पृष्टः । अग्निः । सः । नः । दिवा । सः । रिषः । पातु । नक्तं ॥ वैश्वानर । तव । तत् । सत्यं । अस्तु । अस्मान् । रायः । मघऽवानः । सचतां ॥ ० ॥ ६ ॥ जातऽवेदसे । सुनवाम । सोमं । अरातिऽयतः । नि । दहाति । वेदः ॥ सः । नः । पर्षत् । अति । दुःऽगानि । विश्वा । नावाऽइव । सिंधुं । दुःऽइता । अति । अग्निः ॥ ७ ॥ सः । यः । वृषा । वृष्ण्येभिः । संऽओकाः । महः । दिवः । पृथिव्याः । च । संऽराट् ॥ सतीनऽसत्वा । हव्यः । भरेषु । मरुत्वान् । नः । भवतु । इंद्रः । ऊती ॥ यस्य । अनाप्तः । सूर्यस्यऽइव । यामः । भरेऽभरे । वृत्रऽहा । शुष्मः । अस्ति ॥ वृषन्ऽतमः । सखिऽभिः । स्वेभिः । एवैः ॥ ० ॥ दिवः । न । यस्य । रेतसः । दुघानाः । पंथासः । यंति । शवसा । अपरिऽइताः ॥ तरत्ऽद्वेषाः ।

ससहिः । पौंस्येभिः ॥ ० ॥ सः । अंगिरःऽभिः । अंगिरःऽतमः । भूत् । वृषा । वृषऽभिः । सखिऽभिः । सखा । सन् ॥ ऋग्मिऽभिः । ऋग्मी । गातुऽभिः । ज्येष्ठः ॥ ० ॥ सः । सूनुऽभिः । न । रुद्रेभिः । ऋभ्वा । नृऽसह्ये । ससह्वान् । अमित्रान् ॥ सऽनीळेभिः । श्रवस्यानि । तूर्वन् ॥ ० ॥ ८ ॥ सः । मन्युऽमीः । सऽमदनस्य । कर्ता । अस्माकेभिः । नृऽभिः । सूर्यं । सनत् ॥ अस्मिन् । अहन् । सत्ऽपतिः । पुरुऽहूतः ॥ ० ॥ तं । ऊतयः । रणयन् । शूरऽसातौ । तं । क्षेमस्य । क्षितयः । कृण्वत । त्रां ॥ सः । विश्वस्य । करुणस्य । ईशे । एकः ॥ ० ॥ तं । अप्संत । शवसः । उत्ऽसवेषु । नरः । नरं । अवसे । तं । धनाय ॥ सः । अंधे । चित् । तमसि । ज्योतिः ॥ विदत् ॥ ० ॥ सः । सव्येन । यमति । व्राधतः । चित् । सः । दक्षिणे । संऽगृभीता । कृतानि ॥ सः । कीरिणा । चित् । सनिता । धनानि ॥ ० ॥ सः । ग्रामेभिः । सनिता । सः । रथेभिः । विदे । विश्वाभिः । कृष्टिऽभिः । नु । अद्य ॥ सः । पौंस्येभिः । अभिऽभूः । अशस्तीः ॥ ० ॥ ९ ॥ सः । जामिऽभिः । यत् । संऽअजाति । मीळ्हे । अजामिऽभिः । वा । पुरुऽहूतः । एवैः ॥ अपां । तोकस्य । तनयस्य । जेषे ॥ ० ॥ सः । वज्रऽभृत् । दस्युऽहा । भीमः । उग्रः । सहस्रऽचेताः । शतऽनीथः । ऋभ्वा ॥ चम्रीषः । न । शवसा । पांचऽजन्यः ॥ ० ॥ तस्य । वज्रः । क्रंदति । स्मत् । स्वःऽसाः । दिवः । न । त्वेषः । रवथः । शिमीऽवान् ॥ तं । सचंते । सनयः । तं । धनानि ॥ ० ॥ यस्य । अजस्रं । शवसा । मानं । उक्थं । परिऽभुजत् । रोदसीइति । विश्वतः । सीं ॥ सः । पारिषत् । क्रतुऽभिः । मंदसानः ॥ ० ॥ न । यस्य । देवाः । देवता । न । मर्ताः । आपः । चन । शवसः । अंतं । आपुः ॥ सः । प्रऽरिक्वा । त्वक्षसा । क्ष्मः । दिवः । च ॥ ० ॥ १० ॥ रोहित् । श्यावा । सुमत्ऽ-

अंशुः । ललामीः । द्युक्षा । राये । ऋज्रऽअश्वस्य । वृषण्ऽवंते । बिभ्रंती । धूःऽसु । रथं । मंद्रा । चिकेत । नाहुषीषु । विक्षु ॥ एतत् । त्यत् । ते । इंद्र । वृष्णे । उक्थं । वार्षागिराः । अभि । गृणंति । राधः ॥ ऋज्रऽअश्वः । प्रष्टिऽभिः । अंबरीषः । सहऽदेवः । भयमानः । सुऽराधाः ॥ दस्यून् । शिम्यून् । च । पुरुऽहूतः । एवैः । हत्वा । पृथिव्यां । शर्वा । नि । बर्हीत् ॥ सनंत् । क्षेत्रं । सखिऽभिः । श्वित्न्येभिः । सनंत् । सूर्यं । सनंत् । अपः । सुऽवज्रः ॥ विश्वाहा । इंद्रः । अधिऽवक्ता । नः । अस्तु । अपरिऽहृताः । सनुयाम । वाजं ॥ ० ॥ ११ ॥ प्र । मंदिने । पितुऽमत् । अर्चत । वचः । यः । कृष्णऽगर्भाः । निःऽअहन् । ऋजिश्वना ॥ अवस्यवः । वृषणं । वज्रऽदक्षिणं । मरुत्वंतं । सख्याय । हवामहे ॥ यः । विऽअंसं । जहृषाणेन । मन्युना । यः । शंबरं । यः । अहन् । पिप्रुं । अव्रतं ॥ इंद्रः । यः । शुष्णं । अशुषं । नि । अवृणक् ॥ ० ॥ यस्य । द्यावापृथिवीइति । पौंस्यं । महत् । यस्य । व्रते । वरुणः । यस्य । सूर्यः ॥ यस्य । इंद्रस्य । सिंधवः । सश्चति । व्रतं ॥ ० ॥ यः । अश्वानां । यः । गवां । गोऽपतिः । वशी । यः । आरितः । कर्मणिऽकर्मणि । स्थिरः ॥ वीळोः । चित् । इंद्रः । यः । असुन्वतः । वधः ॥ ० ॥ यः । विश्वस्य । जगतः । प्राणतः । पतिः । यः । ब्रह्मणे । प्रथमः । गाः । अविंदत् ॥ इंद्रः । यः । दस्यून् । अधरान् । अवऽअतिरत् ॥ ० ॥ यः । शूरेभिः । हव्यः । यः । च । भीरुऽभिः । यः । धावत्ऽभिः । हूयते । यः । च । जिग्युऽभिः ॥ इंद्रं । यं । विश्वा । भुवना । अभि । संऽदधुः ॥ ० ॥ १२ ॥ रुद्राणां । एति । प्रऽदिशा । विऽचक्षणः । रुद्रेभिः । योषा । तनुते । पृथु । ज्रयः ॥ इंद्रं ।

मनीषा । अभि । अर्चति । श्रुतं ॥ ० ॥ यत् । वा । मरुत्वः ।
परमे । सधऽस्थे । यत् । वा । अवमे । वृजने । मादयासे ॥
अतः । आ । याहि । अध्वरं । नः । अच्छ । त्वाऽया । हविः ।
चकृम । सत्यऽराधः ॥ त्वाऽया । इंद्र । सोमं । सुसुम । सुऽदक्ष ॥ ० ॥
ब्रह्मऽवाहः ॥ अध । नियुत्वः । सऽगणः । मरुत्ऽभिः । अस्मिन् ।
यज्ञे । बर्हिषि । मादयस्व । मदयस्व । हरिऽभिः । ये । ते । इंद्र ।
वि । स्यस्व । शिप्रेइति । वि । सृजस्व । धेनेइति ॥ आ । त्वा ।
सुऽशिप्र । हरयः । वहंतु । उशन् । हव्यानि । प्रति । नः ।
जुषस्व ॥ मरुत्ऽस्तोत्रस्य । वृजनस्य । गोपाः । वयं । इंद्रेण ।
सनुयाम । वाजं ॥ ० ॥ १३ ॥ इमां । ते । धियं । प्र । भरे ।
महः । महीं । अस्य । स्तोत्रे । धिषणा । यत् । ते । आनजे ॥
तं । उत्ऽसवे । च । प्रऽसवे । च । ससहिं । इंद्रं । देवासः ।
शवसा । अमदन् । अनु ॥ अस्य । श्रवः । नद्यः । सप्त ।
बिभ्रति । द्यावाक्षामा । पृथिवी । दर्शतं । वपुः ॥ अस्मेइति ।
सूर्याचंद्रमसा । अभिऽचक्षे । श्रद्धे । कं । इंद्र । चरतः । विऽतर्तुरं ॥
तं । स्म । रथं । मघऽवन् । प्र । अव । सातये । जैत्रं । यं । ते ।
अनुऽमदाम । संऽगमे । आजा । नः । इंद्र । मनसा । पुरुऽस्तुत ।
त्वायत्ऽभ्यः । मघऽवन् । शर्म । यच्छ । नः ॥ वयं । जयेम । त्वया ।
युजा । वृतं । अस्माकं । अंशं । उत् । अव । भरेऽभरे ॥ अस्मभ्यं ।
इंद्र । वरिवः । सुऽगं । कृधि । प्र । शत्रूणां । मघऽवन् ।
वृष्ण्या । रुज ॥ नाना । हि । त्वा । हवमानाः । जनाः । इमे ।
धनानां । धर्तः । अवसा । विपन्यवः ॥ अस्माकं । स्म । रथं ।
आ । तिष्ठ । सातये । जैत्रं । हि । इंद्र । निऽभृतं । मनः । तव ॥ १४ ॥
गोऽजिता । बाहूइति । अमितऽक्रतुः । सिमः । कर्मन्ऽकर्मन् ।

शतं॒ऽऊ॑तिः । ख॒जं॒ऽक॒रः ॥ अ॒क॒ल्पः । इंद्रः॑ । प्र॒ति॒ऽमान॑ं । ओज॑सा । अथ॑ । जना॑ः । वि । ह्व॒यं॒ते॒ । सि॒सा॒सव॑ः ॥ उत् । ते॒ । श॒तात् । म॒घ॒ऽव॒न् । उत् । च॒ । भूय॑सः । उत् । स॒हस्रा॑त् । रि॒रि॒चे॒ । कृ॒ष्टिषु॑ । श्रव॑ः ॥ अ॒मा॒त्रं । त्वा॒ । धि॒षणा॑ । ति॒त्वि॒षे॒ । म॒ही । अध॑ । वृ॒त्राणि॑ । जि॒घ्नसे॒ । पु॒रं॒ऽद॒र॒ ॥ त्रि॒वि॒ष्टि॒ऽधातु॑ । प्र॒ति॒ऽमान॑ं । ओज॑सः । ति॒स्रः । भूमी॑ः । नृ॒ऽप॒ते॒ । त्रीणि॑ । रो॒च॒ना ॥ अति॑ । इ॒दं । विश्व॑ं । भुव॑नं । व॒व॒क्षि॒थ॒ । अ॒श॒त्रुः । इं॒द्र॒ । ज॒नुषा॑ । स॒नात् । अ॒सि॒ ॥ त्वां । दे॒वेषु॑ । प्र॒थ॒मं । ह॒वा॒म॒हे॒ । त्वं । ब॒भू॒थ॒ । पृत॑नासु । स॒स॒हिः ॥ सः । इ॒मं । नः॒ । का॒रुं । उ॒प॒ऽम॒न्युं । उ॒त॒ऽभि॒दं॑ । इंद्रः॑ । कृ॒णो॒तु॒ । प्र॒ऽस॒वे । रथ॑ं । पु॒रः ॥ त्वं । जि॒गे॒थ॒ । न । धना॑ । रु॒रोधि॒थ॒ । अर्भे॑षु । आ॒जा । म॒घ॒ऽव॒न् । म॒ह॒त्ऽसु॑ । च॒ ॥ त्वां । उ॒ग्रं । अव॑से । सं । शि॒शी॒म॒सि॒ । अथ॑ । नः॒ । इं॒द्र॒ । हव॑नेषु । चो॒द॒य ॥ ० ॥ १५ ॥ तत् । ते॒ । इं॒द्रि॒यं । प॒र॒मं । प॒रा॒चैः । अधा॑रयंत । क॒वयः॑ । पु॒रा । इ॒दं ॥ क्ष॒मा । इ॒दं । अ॒न्यत् । दि॒वि । अ॒न्यत् । अ॒स्य॒ । सं । ई॒मि॒तिं॑ । पृ॒च्य॒ते॒ । स॒म॒ना॒ऽइ॑व । के॒तुः ॥ सः । धा॒र॒य॒त् । पृ॒थि॒वीं । प॒प्रथ॑त् । च॒ । वज्रे॑ण । ह॒त्वा । निः । अ॒पः । स॒स॒र्ज॒ ॥ अह॑न् । अहि॑ं । अभि॑नत् । रौ॒हि॒णं । वि । अह॑न् । वि॒ऽअं॑सं । म॒घ॒ऽवा॑ । शची॑भिः ॥ सः । जा॒तू॒ऽभ॑र्मा । श्र॒त्॒ऽद॒धा॑नः । ओजः॑ । पुरः॑ । वि॒ऽभिं॒द॒न् । अ॒च॒र॒त् । वि । दासीः॑ । वि॒द्वान् । व॒ज्रि॒न् । दस्य॑वे । हे॒तिं । अ॒स्य॒ । आर्य॑ । सहः॑ । व॒र्ध॒य॒ । द्यु॒म्नं । इं॒द्र॒ ॥ तत् । ऊ॒चुषे॑ । मानु॑षा । इ॒मा । यु॒गानि॑ । की॒र्तेन्य॑ं । म॒घ॒ऽवा॑ । नाम॑ । बिभ्र॑त् ॥ उ॒प॒ऽप्र॒यन् । द॒स्यु॒ऽह॒त्याय॑ । व॒ज्री । यत् । ह॒ । सू॒नुः । श्रव॑से । नाम॑ । द॒धे ॥ तत् । अ॒स्य॒ । इ॒दं । प॒श्य॒त॒ । भूरि॑ । पु॒ष्टं । श्रत् । इंद्र॑स्य । ध॒त्त॒न॒ । वी॒र्या॑य ॥ सः । गाः । अ॒विं॒द॒त्

सः । अविंदत् । अश्वान् । सः । ओषधीः । सः । अपः । सः । वनानि ॥ १६ ॥ भूरिऽकर्मणे । वृषभाय । वृष्णे । सत्यऽशुष्माय । सुनवाम । सोमं ॥ यः । आऽदृत्य । परिपंथीऽइव । शूरः । अयज्वनः । विऽभजन् । एति । वेदः ॥ तत् । इंद्र । प्रऽइव । वीर्यं । चकर्थ । यत् । ससंतं । वज्रेण । अबोधयः । अहिं ॥ अनु । त्वा । पत्नीः । हृषितं । वयः । च । विश्वे । देवासः । अमदन् । अनु । त्वा ॥ शुष्णं । पिप्रुं । कुयवं । वृत्रं । इंद्र । यदा । अवधीः । वि । पुरः । शंबरस्य ॥ ० ॥ १७ ॥ योनिः । ते । इंद्र । निऽसदे । अकारि । तं । आ । नि । सीद । स्वानः । न । अर्वा ॥ विऽमुच्य । वयः । अवऽसाय । अश्वान् । दोषा । वस्तोः । वहीयसः । प्रऽपित्वे ॥ ओइति । त्ये । नरः । इंद्रं । ऊतये । गुः । नु । चित् । तान् । सद्यः । अध्वनः । जगम्यात् । देवासः । मन्युं । दासस्य । श्चम्नन् । ते । नः । आ । वक्षन् । सुविताय । वर्णं ॥ अव । त्मना । भरते । केतऽवेदाः । अव । त्मना । भरते । फेनं । उदन् ॥ क्षीरेण । स्नातः । कुयवस्य । योषेइति । हतेइति । तेइति । स्यातां । प्रवणे । शिफायाः ॥ युयोप । नाभिः । उपरस्य । आयोः । प्र । पूर्वाभिः । तिरते । राष्टि । शूरः ॥ अंजसी । कुलिशी । वीरऽपत्नी । पयः । हिन्वानाः । उदऽभिः । भरंते ॥ प्रति । यत् । स्या । नीथा । अदर्शि । दस्योः । ओकः । न । अच्छ । सदनं । जानती । गात् । अध । स्म । नः । मघऽवन् । चर्कृतात् । इत् । मा । नः । मघाऽइव । निःषपी । परा । दाः ॥ १८ ॥ सः । त्वं । नः । इंद्र । सूर्ये । सः । अपऽसु । अनगाःऽत्वे । आ । भज । जीवऽशंसे ॥ मा । अंतरां । भुजं । आ । रिरिषः । नः । श्रद्धितं । ते । महते । इंद्रियाय ॥ अध । मन्ये । श्रत् । ते । अस्मै । अधायि । वृषा । चोदस्व । महते । धनाय ॥ मा । नः । अकृते ।

पुरुऽहूत । योनौ । इंद्र । क्षुध्यत्ऽभ्यः । वयः । आऽसुतिं । दाः ॥ मा । नः । वधीः । इंद्र । मा । परा । दाः । मा । नः । प्रिया । भोजनानि । प्र । मोषीः ॥ आंडा । मा । नः । मघऽवन् । शक्र । निः । भेत् । मा । नः । पात्रा । भेत् । सहऽजानुषाणि ॥ अर्वाङ् । आ । इहि । सोमऽकामं । त्वा । आहुः । अयं । सुतः । तस्य । पिब । मदाय ॥ उरुव्यचाः । जठरे । आ । वृषस्व । पिताऽइव । नः । शृणुहि । हूयमानः ॥ १९ ॥ चंद्रमाः । अप्ऽसु । अंतः । आ । सुऽपर्णः । धावते । दिवि ॥ न । वः । हिरण्यऽनेमयः । पदं । विंदंति । विऽद्युतः । वित्तं । मे । अस्य । रोदसीइति ॥ अर्थं । इत् । वै । ऊँइति । अर्थिनः । आ । जाया । युवते । पतिं ॥ तुंजातेइति । वृष्ण्यं । पयः । परिऽदाय । रसं । दुहे ॥ ० ॥ मोइति । सु । देवाः । अदः । स्वः । अव । पादि । दिवः । परि ॥ मा । सोम्यस्य । शंऽभुवः । शूने । भूम । कदा । चन ॥ ० ॥ यज्ञं । पृच्छामि । अवमं । सः । तत् । दूतः । वि । वोचति ॥ क्व । ऋतं । पूर्व्यं । गतं । कः । तत् । बिभर्ति । नूतनः ॥ ० ॥ अमीइति । ये । देवाः । स्थन । त्रिषु । आ । रोचने । दिवः ॥ कत् । वः । ऋतं । कत् । अनृतं । क्व । प्रत्ना । वः । आऽहुतिः ॥ ० ॥ २० ॥ कत् । वः । ऋतस्य । धर्णसि । कत् । वरुणस्य । चक्षणं ॥ कत् । अर्यम्णः । महः । पथा । अति । क्रामेम । दुःऽध्यः ॥ ० ॥ अहं । सः । अस्मि । यः । पुरा । सुते । वदामि । कानि । चित् ॥ तं । मा । व्यंति । आऽध्यः । वृकः । न । तृष्णऽजं । मृगं ॥ ० ॥ सं । मा । तपंति । अभितः । सपत्नीःऽइव । पर्शवः ॥ मूषः । न । शिश्ना । वि । अदंति । मा । आऽध्यः । स्तोतारं । ते । शतक्रतोइतिशतऽक्रतो ॥ ० ॥ अमीइति । ये । सप्त । रश्मयः । तत्र । मे । नाभिः । आऽतता ॥ त्रितः । तत् । वेद । आप्त्यः । सः ।

जामिऽत्वाय । रेभति ॥ ० ॥ अमीइति । ये । पंच । उक्षणः । मध्ये । तस्थुः । महः । दिवः ॥ देवऽत्रा । नु । प्रऽवाच्यं । सध्रीचीनाः । नि । ववृतुः ॥ ० ॥ २१ ॥ सुऽपर्णाः । एते । आसते । मध्ये । आऽरोधने । दिवः ॥ ते । सेधंति । पथः । वृकं । तरंतं । यह्वतीः । अपः ॥ ० ॥ नव्यं । तत् । उक्थ्यं । हितं । देवासः । सुऽप्रवाचनं ॥ ऋतं । अर्षंति । सिंधवः । सत्यं । ततान । सूर्यः ॥ ० ॥ अग्ने । तव । त्यत् । उक्थ्यं । देवेषु । अस्ति । आप्यं ॥ सः । नः । सत्तः । मनुष्वत् । आ । देवान् । यक्षि । विदुःऽतरः ॥ ० ॥ सत्तः । होता । मनुष्वत् । आ । देवान् । अच्छ । विदुःऽतरः ॥ अग्निः । हव्या । सुसूदति । देवः । देवेषु । मेधिरः ॥ ० ॥ ब्रह्म । कृणोति । वरुणः । गातुऽविदं । तं । ईमहे ॥ वि । ऊर्णोति । हृदा । मतिं । नव्यः । जायतां । ऋतं ॥ ० ॥ २२ ॥ असौ । यः । पंथाः । आदित्यः । दिवि । प्रऽवाच्यं । कृतः । न । सः । देवाः । अतिऽक्रमे । तं । मर्तासः । न । पश्यथ ॥ ० ॥ त्रितः । कूपे । अवऽहितः । देवान् । हवते । ऊतये ॥ तत् । शुश्राव । बृहस्पतिः । कृण्वन् । अंहूरणात् । उरु ॥ ० ॥ अरुणः । मा । सकृत् । वृकः । पथा । यंतं । ददर्श । हि ॥ उत् । जिहीते । निऽचाय्य । तष्टाऽइव । पृष्टिऽआमयी ॥ ० ॥ एना । आंगूषेण । वयं । इंद्रऽवंतः । अभि । स्याम । वृजने । सर्वऽवीराः ॥ ० ॥ २३ ॥ इंद्रं । मित्रं । वरुणं । अग्निं । ऊतये । मारुतं । शर्धः । अदितिं । हवामहे ॥ रथं । न । दुःऽगात् । वसवः । सुऽदानवः । विश्वस्मात् । नः । अंहसः । निः । पिपर्तन ॥ ते । आदित्याः । आ । गत । सर्वऽतातये । भूत । देवाः । वृत्रऽतूर्येषु । शंऽभुवः ॥ ० ॥ अवंतु । नः । पितरः । सुऽप्रवाचनाः । उत । देवीइति । देवपुत्रेइतिदेवऽपुत्रे । ऋतऽ-

वृधा ॥ ० ॥ नराशंसं । वाजिनं । वाजयन् । इह । क्षयत्ऽवीरं । पूषणं । सुम्नैः । ईमहे ॥ ० ॥ बृहस्पते । सदं । इत् । नः । सुऽगं । कृधि । शं । योः । यत् । ते । मनुःऽहितं । तत् । ईमहे ॥ ० ॥ इंद्रं । कुत्सः । वृत्रऽहनं । शचीऽपतिं । काटे । निऽबाळ्हः । ऋषिः । अह्वत् । ऊतये ॥ ० ॥ देवैः । नः । देवी । अदितिः । नि । पातु । देवः । त्राता । त्रायतां । अप्रऽयुछन् ॥ ० ॥ २४ ॥ यज्ञः । देवानां । प्रति । एति । सुम्नं । आदित्यासः । भवत । मृळयंतः ॥ आ । वः । अर्वाची । सुऽमतिः । ववृत्यात् । अंहोः । चित् । या । वरिवोवित्ऽतरा । असत् ॥ उप । नः । देवाः । अवसा । आ । गमंतु । अंगिरसां । सामऽभिः । स्तूयमानाः ॥ इंद्रः । इंद्रियैः । मरुतः । मरुत्ऽभिः । आदित्यैः । नः । अदितिः । शर्म । यंसत् ॥ तत् । नः । इंद्रः । तत् । वरुणः । तत् । अग्निः । तत् । अर्यमा । तत् । सविता । चनः । धात् ॥ ० ॥ २५ ॥ यः । इंद्राग्नीइति । चित्रऽतमः । रथः । वां । अभि । विश्वानि । भुवनानि । चष्टे ॥ तेन । आ । यातं । सऽरथं । तस्थिऽवांसा । अथ । सोमस्य । पिबतं । सुतस्य ॥ यावत् । इदं । भुवनं । विश्वं । अस्ति । उरुऽव्यचा । वरिमता । गभीरं ॥ तावान् । अयं । पातवे । सोमः । अस्तु । अरं । इंद्राग्नीइति । मनसे । युवऽभ्यां ॥ चक्राथेइति । हि । सध्र्यक् । नाम । भद्रं । सध्रीचीना । वृत्रऽहना । उत । स्थः ॥ तौ । इंद्राग्नीइति । सध्र्यंचा । निऽसद्य । वृष्णः । सोमस्य । वृषणा । आ । वृषेथां ॥ संऽइद्धेषु । अग्निषु । आनजाना । यतऽस्रुचा । बर्हिः । ऊँइति । तिस्तिराणा ॥ तीव्रैः । सोमैः । परिऽसिक्तेभिः । अर्वाक् । आ । इंद्राग्नीइति । सौमनसाय । यातं ॥ यानि । इंद्राग्नीइति । चक्रथुः । वीर्याणि । यानि । रूपाणि । उत । वृष्ण्यानि ॥ या । वां । प्रत्नानि । सख्या ।

शिवानि । तेभिः । सोमस्य । पिबतं । सुतस्य ॥ २६ ॥ यत् । अब्रवं ।
प्रथमं । वां । वृणानः । अयं । सोमः । असुरैः । नः । विऽहव्यः ॥
तां । सत्यां । श्रद्धां । अभि । आ । हि । यातं ॥ ० ॥ यत् ।
इंद्राग्नीइति । मदथः । स्वे । दुरोणे । यत् । ब्रह्मणि । राजनि । वा ।
यजत्रा ॥ अतः । परि । वृषणौ । आ । हि । यातं ॥ ० यत् ।
इंद्राग्नीइति । यदुषु । तुर्वशेषु । यत् । द्रुह्युषु । अनुषु । पूरुषु ।
स्थः ॥ ० ॥ यत् । इंद्राग्नीइति । अवमस्यां । पृथिव्यां । मध्यमस्यां ।
परमस्यां । उत । स्थः ॥ ० ॥ यत् । इंद्राग्नीइति । दिवि । स्थः ।
यत् । पृथिव्यां । यत् । पर्वतेषु । ओषधीषु । अप्ऽसु ॥ ० ॥ यत् ।
इंद्राग्नीइति । उत्ऽइता । सूर्यस्य । मध्ये । दिवः । स्वधया ।
मादयेथेइति ॥ ० ॥ एव । इंद्राग्नीइति । पपिऽवांसा । सुतस्य ।
विश्वा । अस्मभ्यं । सं । जयतं । धनानि ॥ ० ॥ २७ ॥ वि । हि ।
अख्यं । मनसा । वस्यः । इछन् । इंद्राग्नीइति । ज्ञासः । उत । वा ।
सऽजातान् ॥ न । अन्या । युवत् । प्रऽमतिः । अस्ति । मह्यं । सः ।
वां । धियं । वाजऽयंती । अतक्षं ॥ अश्रवं । हि । भूरिदावत्ऽतरा ।
वां । विऽजामातुः । उत । वा । घ । स्यालात् ॥ अथ । सोमस्य ।
प्रऽयंती । युवऽभ्यां । इंद्राग्नीइति । स्तोमं । जनयामि । नव्यं । मा ॥
छेद्म । रश्मीन् । इति । नाधमानाः । पितृणां । शक्तीः । अनुऽयछमानाः ॥
इंद्राग्निऽभ्यां । कं । वृषणः । मदंति । ता । हि । अद्रीइति ।
धिषणायाः । उपऽस्थे ॥ युवाभ्यां । देवी । धिषणा । मदाय । इंद्राग्नीइति ।
सोमं । उशती । सुनोति ॥ तौ । अश्विना । भद्रऽहस्ता । सुपाणीइति-
सुऽपाणी । आ । धावतं । मधुना । पृंक्तं । अप्ऽसु ॥ युवां ।
इंद्राग्नीइति । वसुनः । विऽभागे । तवःऽतमा । शुश्रव । वृत्रऽहत्ये ॥
तौ । आऽसद्य । बर्हिषि । यज्ञे । अस्मिन् । प्र । चर्षणीइति । मादयेथां ।

सुतस्य ॥ २८ ॥ प्र । चर्षणिऽभ्यः । पृतनाऽहवेषु । प्र । पृथिव्याः । रिरिचाथेइति । दिवः । च । प्र । सिंधुऽभ्यः । प्र । गिरिऽभ्यः । महिऽत्वा । प्र । इंद्राग्नीइति । विश्वा । भुवना । अति । अन्या ॥ आ । अभरतं । शिक्षतं । वज्रबाहूइतिवज्रऽबाहू । अस्मान् । इंद्राग्नीइति । अवतं । शचीभिः ॥ इमे । नु । ते । रश्मयः । सूर्यस्य । येभिः । सऽपित्वं । पितरः । नः । आसन् ॥ पुरंऽदरा । शिक्षतं । वज्रऽहस्ता ॥ ० ॥ भरेषु ॥ ० ॥ २९ ॥ ततं । मे । अपः । तत् । ऊँइति । तायते । पुनरिति । स्वादिष्ठा । धीतिः । उचथाय । शस्यते ॥ अयं । समुद्रः । इह । विश्वऽदेव्यः । स्वाहाऽकृतस्य । सं । ऊँइति । तृण्णुत । ऋभवः ॥ आऽभोगयं । प्र । यत् । इच्छंतः । ऐतन । अपाकाः । प्रांचः । मम । के । चित् । आपयः ॥ सौधन्वनासः । चरितस्य । भूमना । अगच्छत । सवितुः । दाशुषः । गृहं ॥ तत् । सविता । वः । अमृतऽत्वं । आ । असुवत् । अगोह्यं । यत् । श्रवयंतः । ऐतन ॥ त्यं । चित् । चमसं । असुरस्य । भक्षणं । एकं । संतं । अकृणुत । चतुःऽवयं ॥ विष्ट्वी । शमी । तरणिऽत्वेन । वाघतः । मर्तासः । संतः । अमृतऽत्वं । आनशुः ॥ सौधन्वनाः । ऋभवः । सूरऽचक्षसः । संवत्सरे । सं । अपृच्यंत । धीतिऽभिः ॥ क्षेत्रंऽइव । वि । ममुः । तेजनेन । एकं । पात्रं । ऋभवः । जेहमानं ॥ उपऽस्तुताः । उपऽमं । नाधमानाः । अमर्त्येषु । श्रवः । इच्छमानाः ॥ ३० ॥ आ । मनीषां । अंतरिक्षस्य । नृऽभ्यः । स्रुचाऽइव । घृतं । जुहवाम । विद्मना ॥ तरणिऽत्वा । ये । पितुः । अस्य । सश्चिरे । ऋभवः । वाजं । अरुहन् । दिवः । रजः ॥ ऋभुः । नः । इंद्रः । शवसा । नवीयान् । ऋभुः । वाजेभिः । वसुऽभिः । वसुः । ददिः । युष्माकं । देवाः । अवसा । अहनि । प्रिये । अभि । तिष्ठेम । पृत्सुतीः । असुन्वतां ॥

निः । चर्मणः । ऋभवः । गां । अपिंशत । सं । वत्सेन । असृजत । मातरं । पुनरिति ॥ सौधन्वनासः । सुऽअपस्यया । नरः । जिव्रीइति । युवाना । पितरा । अकृणोतन ॥ वाजेभिः । नः । वाजऽसातौ । अविड्ढि । ऋभुऽमान् । इंद्र । चित्रं । आ । दर्षि । राधः ॥ ० ॥ ३१ ॥ तक्षन् । रथं । सुऽवृतं । विद्मनाऽअपसः । तक्षन् । हरीइति । इंद्रऽवाहा । वृषण्वसूइतिवृषण्ऽवसू ॥ तक्षन् । पितृऽभ्यां । ऋभवः । युवत् । वयः । तक्षन् । वत्साय । मातरं । सचाऽभुवं ॥ आ । नः । यज्ञाय । तक्षत । ऋभुऽमत् । वयः । क्रत्वे । दक्षाय । सुऽप्रजावतीं । इषं ॥ यथा । क्षयाम । सर्वऽवीरया । विशा । तत् । नः । शर्धाय । धासथ । सु । इंद्रियं ॥ आ । तक्षत । सातिं । अस्मभ्यं । ऋभवः । सातिं । रथाय । सातिं । अर्वते । नरः ॥ सातिं । नः । जैत्रीं । सं । महेत । विश्वाहा । जामिं । अजामिं । पृतनासु । सक्षणिं ॥ ऋभुक्षणं । इंद्रं । आ । हुवे । ऊतये । ऋभून् । वाजान् । मरुतः । सोमऽपीतये ॥ उभा । मित्रावरुणा । नूनं । अश्विना । ते । नः । हिन्वंतु । सातये । धिये । जिषे ॥ ऋभुः । भराय । सं । शिशातु । सातिं । समर्यऽजित् । वाजः । अस्मान् । अविष्टु ॥ ० ॥ ३२ ॥ ईळे । द्यावापृथिवीइति । पूर्वऽचित्तये । अग्निं । घर्मं । सुऽरुचं । यामन् । इष्टये ॥ याभिः । भरे । कारं । अंशाय । जिन्वथः । ताभिः । ऊँइति । सु । ऊतिऽभिः । अश्विना । आ । गतं ॥ युवोः । दानाय । सुऽभराः । असश्चतः । रथं । आ । तस्थुः । वचसं । न । मंतवे ॥ याभिः । धियः । अवथः । कर्मन् । इष्टये ॥ ० ॥ युवं । तासां । दिव्यस्य । प्रऽशासने । विशां । क्षयथः । अमृतस्य । मज्मना ॥ याभिः । धेनुं । अस्वं । पिन्वथः । नरा ॥ ० ॥ याभिः ।

परिऽज्मा । तनयस्य । मज्मना । द्विऽमाता । तूर्षु । तरणिः । विऽभूषति ॥ याभिः । त्रिऽमंतुः । अभवत् । विऽचक्षणः ॥ ० ॥ याभिः । रेभं । निऽवृतं । सितं । अत्ऽभ्यः । उत् । वंदनं । एरयतं । स्वः । दृशे ॥ याभिः । कण्वं । प्र । सिसासंतं । आवतं ॥ ० ॥ ३३ ॥ याभिः । अंतकं । जसमानं । आऽअरणे । भुज्युं । याभिः । अव्यथिऽभिः । जिजिन्वथुः । याभिः । कर्कधुं । वय्यं । च । जिन्वथः ॥ ० ॥ याभिः । शुचंतिं । धनऽसां । सुऽसंसदं । तप्तं । घर्मं । ओम्याऽवंतं । अत्रये ॥ याभिः । पृश्निऽगुं । पुरुऽकुत्सं । आवतं ॥ ० ॥ याभिः । शचीभिः । वृषणा । पराऽवृजं । प्र । अंधं । श्रोणं । चक्षसे । एतवे । कृथः ॥ याभिः । वर्तिकां । ग्रसितां । अमुंचतं ॥ ० ॥ याभिः । सिंधुं । मधुऽमंतं । असश्चतं । वसिष्ठं । याभिः । अजरौ । अजिन्वतं ॥ याभिः । कुत्सं । श्रुतर्यं । नर्यं । आवतं ॥ ० ॥ याभिः । विश्पलां । धनऽसां । अथर्व्यं । सहस्रऽमीळ्हे । आजौ । अजिन्वतं ॥ याभिः । वशं । अश्व्यं । प्रेणिं । आवतं ॥ ० ॥ ३४ ॥ याभिः । सुदानूइतिसुऽदानू । औशिजाय । वणिजे । दीर्घऽश्रवसे । मधु । कोशः । अक्षरत् ॥ कक्षीवंतं । स्तोतारं । याभिः । आवतं ॥ ० ॥ याभिः । रसां । क्षोदसा । उद्नः । पिपिन्वथुः । अनश्वं । याभिः । रथं । आवतं । जिषे ॥ याभिः । त्रिऽशोकः । उस्रियाः । उत्ऽआजत ॥ ० ॥ याभिः । सूर्यं । परिऽयाथः । पराऽवति । मंधातारं । क्षैत्रऽपत्येषु । आवतं ॥ याभिः । विप्रं । प्र । भरत्ऽवाजं । आवतं ॥ ० ॥ याभिः । महां । अतिथिऽग्वं । कशःऽजुवं । दिवःऽदासं । शंबरऽहत्ये । आवतं ॥ याभिः । पूःऽभिद्ये । त्रसदस्युं । आवतं ॥ ० ॥ याभिः । वम्रं । विऽपिपानं । उपऽस्तुतं । कलिं । याभिः । वित्तऽजानिं । दुवस्यथः ॥ याभिः । विऽअश्वं । उत । पृथिं । आवतं ॥ ० ॥ ३५ ॥ याभिः । नरा ।

शयवे । याभिः । अत्रये । याभिः । पुरा । मनवे । गातुं । ईषथुः ॥ याभिः । शारीः । आजंत । स्यूमऽरश्मये ॥ ० ॥ याभिः । पठर्वा । जठरस्य । मज्मना । अग्निः । न । अदीदेत् । चितः । इद्धः । अज्मन् । आ ॥ याभिः । शर्यातं । अवथः । महाऽधने ॥ ० ॥ याभिः । अंगिरः । मनसा । निऽरण्यथः । अग्रं । गच्छथः । विऽवरे । गोऽअर्णसः ॥ याभिः । मनुं । शूरं । इषा । संऽआवतं ॥ ० ॥ याभिः । पत्नीः । विऽमदाय । निऽऊहथुः । आ । घ । वा । याभिः । अरुणीः । अशिक्षतं । याभिः । सुऽदासे । ऊहथुः । सुऽदेव्यं ॥ ० ॥ याभिः । शंतातीइतिशंऽताती । भवथः । ददाशुषे । भुज्युं । याभिः । अवथः । याभिः । अध्रिऽगुं ॥ ओम्याऽवतीं । सुऽभरां । ऋतऽस्तुभं ॥ ० ॥ ३६ ॥ याभिः । कृशानुं । असने । दुवस्यथः । जवे । याभिः । यूनः । अर्वंतं । आवतं ॥ मधु । प्रियं । भरथः । यत् । सरट्ऽभ्यः ॥ ० ॥ याभिः । नरं । गोषुऽयुधं । नृऽसह्ये । क्षेत्रस्य । साता । तनयस्य । जिन्वथः ॥ याभिः । रथान् । अवथः । याभिः । अर्वतः ॥ ० ॥ याभिः । कुत्सं । आर्जुनेयं । शतक्रतूइतिशतऽक्रतू । प्र । तुर्वीतिं । प्र । च । दभीतिं । आवतं । याभिः । ध्वसंतिं । पुरुऽसंतिं । आवतं ॥ ० ॥ अप्नस्वतीं । अश्विना । वाचं । असेइति । कृतं । नः । दस्रा । वृषणा । मनीषां ॥ अद्यूत्ये । अवसे । नि । ह्वये । वां ॥ ० ॥ द्युऽभिः । अक्तुऽभिः । परि । पातं । अस्मान् । अरिष्टेभिः । अश्विना । सौभगेभिः ॥ ० ॥ ३७ ॥ अध्यायः ॥ ७ ॥

इति प्रथमाष्टके सप्तमोध्यायः



## ॥ अथ अष्टमोध्यायः ॥

हरिः ॐ ॥ इदं । श्रेष्ठं । ज्योतिषां । ज्योतिः । आ । अगात् । चित्रः । प्रऽकेतः । अजनिष्ट । विऽभ्वा ॥ यथा । प्रऽसूता । सवितुः । सवाय । एव । रात्री । उषसे । योनिं । अरैक् ॥ रुशत्ऽवत्सा । रुशती । श्वेत्या । आ । अगात् । अरैक् । ऊँइति । कृष्णा । सदनानि । अस्याः ॥ समानबंधूइतिसमानऽबंधू । अमृतेइति । अनूचीइति । द्यावा । वर्णं । चरतः । आमिनानेइत्याऽमिनाने । समानः । अध्वा । स्वस्रोः । अनंतः । तं । अन्याऽअन्या । चरतः । देवशिष्टेइतिदेवऽशिष्टे ॥ न । मेथेतेइति । न । तस्थतुः । सुमेकेइतिसुऽमेके । नक्तोषसा । सऽमनसा । विरूपेइतिविऽरूपे ॥ ० ॥ अचेति । चित्रा । वि । दुरः । नः । आवरित्यावः ॥ प्रऽअर्प्य । जगत् । वि । ऊँइति । नः । रायः । अख्यत् । उषाः । अजीगः । भुवनानि । विश्वा ॥ जिह्मऽश्ये । चरितवे । मघोनी । आऽभोगये । इष्टये । राये । ऊँइति । त्वं ॥ दभ्रं । पश्यत्ऽभ्यः । उर्विया । विऽचक्षे ॥ ० ॥ १ ॥ क्षत्राय । त्वं । श्रवसे । त्वं । महीयै । इष्टये । त्वं । अर्थंऽइव । त्वं । इत्यै ॥ विऽसदृशा । जीविता । अभिऽप्रचक्षे ॥ ० ॥ एषा । दिवः । दुहिता । प्रति । अदर्शि । विऽउछंती । युवतिः । शुक्रऽवासाः ॥ विश्वस्य । ईशाना । पार्थिवस्य । वस्वः । उषः । अद्य । इह । सुऽभगे । वि । उछ ॥ पराऽयतीनां । अनु । एति । पाथः । आऽयतीनां । प्रथमा । शश्वतीनां ॥ विऽउछंती । जीवं । उत्ऽईरयंती । उषाः । मृतं । कं । चन । बोधयंती ॥ उषः । यत् ।

अग्निं । संऽइधे । चक्रथ । वि । यत् । आवः । चक्षसा । सूर्यस्य ॥ यत् । मानुषान् । यक्ष्यमाणान् । अजीगरिति । तत् । देवेषु । चकृषे । भद्रं । अप्नः ॥ कियति । आ । यत् । समया । भवाति । याः । विऽऊषुः । याः । च । नूनं । विऽउच्छान् ॥ अनु । पूर्वाः । कृपते । वावशाना । प्रऽदीध्याना । जोषं । अन्याभिः । एति ॥ २ ॥ ईयुः । ते । ये । पूर्वऽतरां । अपश्यन् । विऽउच्छंतीं । उषसं । मर्त्यासः ॥ अस्माभिः । ऊँइति । नु । प्रतिऽचक्ष्या । अभूत् । ओइति । ते । यंति । ये । अपरीषु । पश्यान् ॥ यवयत्ऽद्वेषाः । ऋतऽपाः । ऋतेऽजाः । सुम्नऽवरी । सूनृताः । ईरयंती ॥ सुऽमंगलीः । बिभ्रती । देवऽवीतिं । इह । अद्य । उषः । श्रेष्ठऽतमा । वि । उच्छ ॥ शश्वत् । पुरा । उषाः । वि । उवास । देवी । अथोइति । अद्य । इदं । वि । आवः । मघोनी । अथोइति । वि । उच्छात् । उत्ऽतरान् । अनु । द्यून् । अजरा । अमृता । चरति । स्वधाभिः ॥ वि । अंजिऽभिः । दिवः । आतासु । अद्यौत् । अप । कृष्णां । निःऽनिजं । देवी । आवः । आवरित्यावः ॥ प्रऽबोधयंती । अरुणेभिः । अश्वैः । आ । उषाः । याति । सुऽयुजा । रथेन ॥ आऽवहंती । पोष्या । वर्याणि । चित्रं । केतुं । कृणुते । चेकिताना ॥ ईयुषीणां । उपऽमा । शश्वतीनां । विऽभातीनां । प्रथमा । उषाः । वि । अश्वैत् ॥ ३ ॥ उत् । ईर्ध्वं । जीवः । असुः । नः । आ । अगात् । अप । प्र । अगात् । तमः । आ । ज्योतिः । एति ॥ अरैक् । पंथां । यातवे । सूर्याय । अगन्म । यत्र । प्रऽतिरंते । आयुः ॥ स्यूमना । वाचः । उत् । इयर्ति । वह्निः । स्तवानः । रेभः । उषसः । विऽभातीः ॥ अद्य । तत् । उच्छ । गृणते । मघोनि । अस्मेइति । आयुः । नि । दिदीहि । प्रजाऽवत् । याः । गोऽमतीः । उषसः । सर्वऽवीराः । विऽउच्छंति ।

दाशुषे । मर्त्याय ॥ वायोःऽइव । सूनृतानां । उतऽअर्के । ताः । अश्वऽदाः । अश्ववत् । सोमऽसुत्वा ॥ माता । देवानां । अदितेः । अनीकं । यज्ञस्य । केतुः । बृहती । वि । भाहि ॥ प्रशस्तिऽकृत् । ब्रह्मणे । नः । वि । उच्छ । आ । नः । जने । जनय । विश्वऽवारे ॥ यत् । चित्रं । अप्नः । उषसः । वहंति । ईजानाय । शशमानाय । भद्रं ॥ ० ॥ ४ ॥ इमाः । रुद्राय । तवसे । कपर्दिने । क्षयत्ऽवीराय । प्र । भरामहे । मतीः । यथा । शं । असत् । द्विऽपदे । चतुःऽपदे । विश्वं । पुष्टं । ग्रामे । अस्मिन् । अनातुरं ॥ मृळ । नः । रुद्र । उत । नः । मयः । कृधि । क्षयत्ऽवीराय । नमसा । विधेम । ते ॥ यत् । शं । च । योः । च । मनुः । आऽयेजे । पिता । तत् । अश्याम । तव । रुद्र । प्रऽनीतिषु ॥ अश्याम । ते । सुऽमतिं । देवऽयज्यया । क्षयत्ऽवीरस्य । तव । रुद्र । मीढ्वः ॥ सुम्नऽयन् । इत् । विशः । अस्माकं । आ । चर । अरिष्टऽवीराः । जुहवाम । ते । हविः ॥ त्वेषं । वयं । रुद्रं । यज्ञऽसाधं । वंकुं । कविं । अवसे । नि । ह्वयामहे ॥ आरे । अस्मत् । दैव्यं । हेळः । अस्यतु । सुऽमतिं । इत् । वयं । अस्य । आ । वृणीमहे ॥ दिवः । वराहं । अरुषं । कपर्दिनं । त्वेषं । रूपं । नमसा । नि । ह्वयामहे ॥ हस्ते । बिभ्रत् । भेषजा । वार्याणि । शर्म । वर्म । छर्दिः । अस्मभ्यं । यंसत् ॥ ५ ॥ इदं । पित्रे । मरुतां । उच्यते । वचः । स्वादोः । स्वादीयः । रुद्राय । वर्धनं ॥ रास्व । च । नः । अमृत । मर्तऽभोजनं । त्मने । तोकाय । तनयाय । मृळ ॥ मा । नः । महांतं । उत । मा । नः । अर्भकं । मा । नः । उक्षंतं । उत । मा । नः । उक्षितं ॥ मा । नः । वधीः । पितरं । मा । उत । मातरं । मा । नः । प्रियाः । तन्वः । रुद्र । रिरिषः ॥ मा । नः ।

तोके । तनये । मा । नः । आयौ । मा । नः । गोषु । मा ।
नः । अश्वेषु । रिरिषः ॥ वीरान् । मा । नः । रुद्र । भामितः ।
वधीः । हविष्मंतः । सदं । इत् । त्वा । हवामहे ॥ उप । ते ।
स्तोमान् । पशुपाःऽइव । आ । अकरं । रास्व । पितः । मरुतां ।
सुम्नं । अस्मेइति ॥ भद्रा । हि । ते । सुऽमतिः । मृळयत्ऽतमा ।
अथ । वयं । अवः । इत् । ते । वृणीमहे ॥ आरे । ते । गोऽघ्नं ।
उत । पुरुषऽघ्नं । क्षयत्ऽवीर । सुम्नं । अस्मेइति । ते । अस्तु ॥ मृळ ।
च । नः । अधि । च । ब्रूहि । देव । अध । च । नः । शर्म । यच्छ ।
द्विऽबर्हाः ॥ अवोचाम । नमः । अस्मै । अवस्यवः । शृणोतु । नः ।
हवं । रुद्रः । मरुत्वान् ॥ ० ॥ ॥ ६ ॥ चित्रं । देवानां । उत् । अगात् ।
अनीकं । चक्षुः । मित्रस्य । वरुणस्य । अग्नेः ॥ आ । अप्राः । द्यावापृ-
थिवीइति । अंतरिक्षं । सूर्यः । आत्मा । जगतः । तस्थुषः । च । सूर्यः ।
देवीं । उषसं । रोचमानां । मर्यः । न । योषां । अभि । एति ।
पश्चात् ॥ यत्र । नरः । देवऽयंतः । युगानि । विऽतन्वते । प्रति ।
भद्राय । भद्रं ॥ भद्राः । अश्वाः । हरितः । सूर्यस्य । चित्राः ।
एतऽग्वाः । अनुऽमाद्यासः ॥ नमस्यंतः । दिवः । आ । पृष्ठं । अस्थुः ।
परि । द्यावापृथिवीइति । यंति । सद्यः ॥ तत् । सूर्यस्य । देवऽत्वं ।
तत् । महिऽत्वं । मध्या । कर्तोः । विऽततं । सं । जभार ॥ यदा ।
इत् । अयुक्त । हरितः । सधऽस्थात् । आत् । रात्री । वासः । तनुते ।
सिमस्मै ॥ तत् । मित्रस्य । वरुणस्य । अभिऽचक्षे । सूर्यः । रूपं । कृणुते ।
द्योः । उपऽस्थे ॥ अनंतं । अन्यत् । रुशत् । अस्य । पाजः । कृष्णं ।
अन्यत् । हरितः । सं । भरंति ॥ अद्य । देवाः । उत्ऽइता । सूर्यस्य ।
निः । अंहसः । पिपृत । निः । अवद्यात् ॥ ० ॥ ७ ॥ नासत्याभ्यां ।
बर्हिःऽइव । प्र । वृंजे । स्तोमान् । इयर्मि । अभ्रियाऽइव । वातः ।

यौ। अभेगाय। विऽमदाय। जायां। सेनाऽजुवा। निऽऊहतुः। रथेन॥ वीळुपत्मऽभिः। आशुहेमऽभिः। वा। देवानां। वा। जूतिऽभिः। शाशदाना॥ तत्। रासभः। नासत्या। सहस्रं। आजा। यमस्य। प्रऽधने। जिगाय॥ तुग्रः। ह। भुज्युं। अश्विना। उदऽमेघे। रयिं। न। कः। चित्। ममृऽवान्। अव। अहाः॥ तं। ऊहथुः। नौभिः। आत्मन्ऽवतीभिः। अंतरिक्षप्रुत्ऽभिः। अपऽउदकाभिः॥ तिस्रः। क्षपः। त्रिः। अहा। अतिव्रजत्ऽभिः। नासत्या। भुज्युं। ऊहथुः। पतंगैः॥ समुद्रस्य। धन्वन्। आर्द्रस्य। पारे। त्रिऽभिः। रथैः। शतपत्ऽभिः। षट्ऽअश्वैः॥ अनारंभणे। तत्। अवीरयेथां। अनास्थाने। अग्रभणे। समुद्रे॥ यत्। अश्विनौ। ऊहथुः। भुज्युं। अस्तं। शतऽअरित्रां। नावं। आतस्थिऽवांसं॥ ८॥ यं। अश्विना। ददथुः। श्वेतं। अश्वं। अघऽअश्वाय। शश्वत्। इत्। स्वस्ति॥ तत्। वां। दात्रं। महि। कीर्तेन्यं। भूत्। पैद्वः। वाजी। सदं। इत्। हव्यः। अर्यः॥ युवं। नरा। स्तुवते। पज्रियाय। कक्षीवते। अरदतं। पुरंऽधिं॥ कारोतरात्। शफात्। अश्वस्य। वृष्णः। शतं। कुंभान्। असिंचतं। सुरायाः॥ हिमेन। अग्निं। घ्रंसं। अवारयेथां। पितुऽमतीं। ऊर्जं। अस्मै। अधत्तं॥ ऋबीसे। अत्रिं। अश्विना। अवऽनीतं। उत्। निन्यथुः। सर्वऽगणं। स्वस्ति॥ परा। अवतं। नासत्या। अनुदेथां। उच्चाऽबुध्नं। चक्रथुः। जिह्मऽबारं॥ क्षरन्। आपः। न। पायनाय। राये। सहस्राय। तृष्यते। गोतमस्य॥ जुजुरुषः। नासत्या। उत। वव्रिं। प्र। अमुंचतं। द्रापिंऽइव। च्यवानात्॥ प्र। अतिरतं। जहितस्य। आयुः। दस्रा। आत्। इत्। पतिं। अकृणुतं। कनीनां॥ ९॥ तत्। वां। नरा। शंस्यं। राध्यं। च। अभिष्टिऽमत्। नासत्या। वरूथं॥ यत्। विद्वांसा।

निधिऽइव । अपऽगूळ्हं । उत् । दर्शतात् । ऊपथुः । वंदनाय ॥ ० ॥
सनये । दंसः । उग्रं । आविः । कृणोमि । तन्यतुः । न । वृष्टिं ॥
दध्यङ् । ह । यत् । मधु । आथर्वणः । वां । अश्वस्य । शीर्ष्णा ।
प्र । यत् । ईं । उवाच । अजोहवीत् । नासत्या । करा । वां ।
महे । यामन् । पुरुऽभुजा । पुरंऽधिः ॥ श्रुतं । तत् । शासुःऽइव ।
वध्रिऽमत्याः । हिरण्यऽहऽस्तं । अश्विनौ । अदत्तं ॥ आस्नः । वृकस्य ।
वर्तिकां । अभीके । युवं । नरा । नासत्या । अमुमुक्तं । उतोइति ।
कविं । पुरुऽभुजा । युवं । ह । कृपमाणं । अकृणुतं । विऽचक्षे ॥
चरित्रं । हि । वेःऽइव । अछेदि । पर्णं । आजा । खेलस्य ।
परिऽतक्म्यायां ॥ सद्यः । जंघां । आयसीं । विश्पलायै । धने ।
हिते । सर्तवे । प्रति । अधत्तं ॥ १० ॥ शतं । मेषान् । वृक्ये ।
चक्षदानं । ऋज्रऽअश्वं । तं । पिता । अंधं । चकार ॥ तस्मै ।
अक्षीइति । नासत्या । विऽचक्षे । आ । अधत्तं । दस्रा । भिषजौ ।
अनर्वन् ॥ आ । वां । रथं । दुहिता । सूर्यस्य । कार्ष्मऽइव ।
अतिष्ठत् । अर्वता । जयंती ॥ विश्वे । देवाः । अनु । अमन्यंत ।
हृत्ऽभिः । सं । ऊँइति । श्रिया । नासत्या । सचेथेइति ॥ यत् ।
अयातं । दिवःऽदासाय । वर्तिः । भरत्ऽवाजाय । अश्विना ।
हयंता ॥ रेवत् । उवाह । सचनः । रथः । वां । वृषभः । च ।
शिंशुमारः । च । युक्ता ॥ रयिं । सुऽक्षत्रं । सुऽअपत्यं । आयुः ।
सुऽवीर्यं । नासत्या । वहंता ॥ आ । जन्हावीं । सऽमनसा ।
उप । वाजैः । त्रिः । अन्हः । भागं । दधतीं । अयातं ॥ परिऽविष्टं ।
जाहुषं । विश्वतः । सीं । सुऽगेभिः । नक्तं । ऊहथुः । रजःऽभिः ॥
विऽभिंदुना । नासत्या । रथेन । वि । पर्वतान् । अजरयूइति ।
अयातं ॥ ११ ॥ एकस्याः । वस्तोः । आवतं । रणाय । वशं ।

अश्विना । सनये । सहस्रा ॥ निः । अहतं । दुच्छुनाः । इंद्रऽवंता । पृथुऽश्रवसः । वृषणौ । अरातीः ॥ शरस्य । चित् । आर्चत्ऽकस्य । अवतात् । आ । नीचात् । उच्चा । चक्रथुः । पातवे । वारितिवाः ॥ शयवे । चित् । नासत्या । शचीभिः । जसुरये । स्तर्यं । पिप्यथुः । गां ॥ अवस्यते । स्तुवते । कृष्णियाय । ऋजुऽयते । नासत्या । शचीभिः ॥ पशुं । न । नष्टंऽइव । दर्शनाय । विष्णाप्वं । ददथुः । विश्वकाय ॥ दश । रात्रीः । अशिवेन । नव । द्यून् । अवऽनद्धं । श्नथितं । अपऽसु । अंतः । इति ॥ विऽप्रुतं । रेभं । उदनि । प्रऽवृक्तं । उत् । निन्यथुः । सोमंऽइव । स्रुवेण ॥ प्र । वां । दंसांसि । अश्विनौ । अवोचं । अस्य । पतिः । स्यां । सुऽगवः । सुऽवीरः ॥ उत । पश्यन् । अश्नुवन् । दीर्घं । आयुः । अस्तंऽइव । इत् । जरिमाणं । जगम्यां ॥ १२ ॥ मध्वः । सोमस्य । अश्विना । मदाय । प्रत्नः । होता । आ । विवासते । वां । बर्हिष्मती । रातिः । विऽश्रिता । गीः । इषा । यातं । नासत्या । उप । वाजैः ॥ यः । वां । अश्विना । मनसः । जवीयान् । रथः । सुऽअश्वः । विशः । आऽजिगाति । येन । गच्छथः । सुऽकृतः । दुरोणं । तेन । नरा । वर्तिः । अस्मभ्यं । यातं ॥ ऋषिं । नरौ । अंहसः । पांचऽजन्यं । ऋबीसात् । अत्रिं । मुंचथः । गणेन ॥ मिनंता । दस्योः । अशिवस्य । मायाः । अनुऽपूर्वं । वृषणा । चोदयंता ॥ अश्वं । न । गूळ्हं । अश्विना । दुःऽएवैः । ऋषिं । नरा । वृषणा । रेभं । अपऽसु ॥ सं । तं । रिणीथः । विऽप्रुतं । दंसःऽभिः । न । वां । जूर्यंति । पूर्व्या । कृतानि ॥ सुसुप्वांसं । न । निःऽऋतेः । उपऽस्थे । सूर्यं । न । दस्रा । तमसि । क्षियंतं ॥ शुभे । रुक्मं । न । दर्शतं । निऽखातं । उत् । ऊपथुः । अश्विना । वंदनाय ॥ १३ ॥ ० ॥ पज्रियेण ।

कक्षीवता । नासत्या । परिऽज्मन् ॥ शफात् । अश्वस्य । वाजिनः ।
जनाय ॥ ० ॥ मधूनां ॥ ० ॥ कृष्णियाय ॥ ० ॥ घोषायै । चित् ।
पितृऽसदे । दुरोणे । पतिं । जूर्यन्त्यै । अश्विनौ । अदत्तं । युवं ।
श्यावाय । रुशतीं । अदत्तं । महः । क्षोणस्य । अश्विना । कण्वाय ॥
प्रऽवाच्यं । तत् । वृषणा । कृतं । वां । यत् । नार्षदाय । श्रवः ।
अधिऽअधत्तं ॥ पुरु । वर्पांसि । अश्विना । दधाना । नि । पेदवे । ऊहथुः ।
आशुं । अश्वं ॥ सहस्रऽसां । वाजिनं । अप्रतिऽइतं । अहिऽहनं ।
श्रवस्यं । तरुत्रं ॥ एतानि । वां । श्रवस्या । सुदानूइतिसुऽदानू । ब्रह्म ।
आंगूषं । सदनं । रोदस्योः ॥ यत् । वां । पज्रासः । अश्विना । हवंते ।
यातं । इषा । च । विदुषे । च । वाजं ॥ १४ ॥ सूनोः । मानेन ।
अश्विना । गृणाना । वाजं । विप्राय । भुरणा । रदंता ॥ अगस्त्ये ।
ब्रह्मणा । ववृधाना । सं । विश्पलां । नासत्या । अरिणीतं ॥ कुह ।
यांता । सुऽस्तुतिं । काव्यस्य । दिवः । नपाता । वृषणा । शयुऽत्रा ॥
हिरण्यस्यऽइव । कलशं । निऽखातं । उत् । ऊपथुः । दशमे ।
अश्विना । अहन् ॥ युवं । च्यवानं । अश्विना । जरंतं । पुनः ।
युवानं । चक्रथुः । शचीभिः ॥ युवोः । रथं । दुहिता । सूर्यस्य ।
सह । श्रिया । नासत्या । अवृणीत ॥ युवं । तुग्राय । पूर्व्येभिः ।
एवैः । पुनःऽमन्यौ । अभवतं । युवाना ॥ युवं । भुज्युं । अर्णसः । निः ।
समुद्रात् । विऽभिः । ऊहथुः । ऋज्रेभिः । अश्वैः ॥ अजोहवीत् ।
अश्विना । तौग्र्यः । वां । प्रऽउळ्हः । समुद्रं । अव्यथिः । जगन्वान् ।
निः । तं । ऊहथुः । सुऽयुजा । रथेन । मनःऽजवसा । वृषणा ।
स्वस्ति ॥ १५ ॥ अजोहवीत् । अश्विना । वर्तिका । वां । आस्नः ।
यत् । सीं । अमुंचतं । वृकस्य ॥ वि । जयुषा । ययथुः । सानु ।
अद्रेः । जातं । विष्वाचः । अहतं । विषेण ॥ ० ॥ ममहानं । तमः ।

प्रऽनीतं । अशिवेन । पित्रा ॥ आ । अक्षीइति । ऋज्रऽअश्वे । अश्विनौ । अधत्तं । ज्योतिः । अंधाय । चक्रथुः । विऽचक्षे ॥ शुनं । अंधाय । भरं । अह्वयत् । सा । वृकीः । अश्विना । वृषणा । नरा । इति ॥ जारः । कनीनःऽइव । चक्षदानः । ऋज्रऽअश्वः । शतं । एकं । च । मेषान् ॥ मही । वां । ऊतिः । अश्विना । मयःऽभूः । उत । स्रामं । धिष्ण्या । सं । रिणीथः ॥ अथ । युवां । इत् । अह्वयत् । पुरंऽधिः । आ । अगच्छतं । सीं । वृषणौ । अवःऽभिः ॥ अधेनुं । दस्रा । स्तर्यं । विऽसक्तां । अपिन्वतं । शयवे । अश्विना । गां ॥ युवं । शचीभिः । विऽमदाय । जायां । नि । ऊहथुः । पुरुऽमित्रस्य । योषां ॥ १६ ॥ यवं । वृकेण । अश्विना । वपंता । इषं । दुहंता । मनुषाय । दस्रा ॥ अभि । दस्युं । बकुरेण । धमंता । उरु । ज्योतिः । चक्रथुः । आर्याय ॥ आथर्वणाय । अश्विना । दधीचे । अश्व्यं । शिरः । प्रति । ऐरयतं ॥ सः । वां । मधु । प्र । वोचत् । ऋतऽयन् । त्वाष्ट्रं । यत् । दस्रौ । अपिऽकक्ष्यं । वां ॥ सदा । कवीइति । सुऽमतिं । आ । चके । वां । विश्वाः । धियः । अश्विना । प्र । अवतं । मे ॥ अस्मेइति । रयिं । नासत्या । बृहंतं । अपत्यऽसाचं । श्रुत्यं । रराथां ॥ हिरण्यऽहस्तं । अश्विना । रराणा । पुत्रं । नरा । वध्रिऽमत्याः । अदत्तं ॥ त्रिधा । ह । श्यावं । अश्विना । विऽकस्तं । उत् । जीवसे । ऐरयतं । सुदानूइतिसुऽदानू । एतानि । वां । अश्विना । वीर्याणि । प्र । पूर्व्याणि । आयवः । अवोचन् ॥ ब्रह्म । कृण्वंतः । वृषणा । युवऽभ्यां । सुऽवीरासः । विदथं । आ । वदेम ॥ १७ ॥ आ । वां । रथः । अश्विना । श्येनऽपत्वा । सुऽमृळीकः । स्वऽवान् । यातु । अर्वाङ् ॥ यः । मर्त्यस्य । मनसः । जवीयान् । त्रिऽवंधुरः । वृषणा । वातऽरंहाः ॥ त्रिऽवंधुरेण । त्रिऽवृता ।

रथेन । त्रिऽचक्रेण । सुऽवृता । आ । यातं । अर्वाक् ॥ पिन्वतं । गाः । जिन्वतं । अर्वतः । नः । वर्धयतं । अश्विना । वीरं । अस्मेइति ॥ प्रवत्ऽयामना । सुऽवृता । रथेन । दस्रौ । इमं । शृणुतं । श्लोकं । अद्रेः ॥ किं । अंग । वां । प्रति । अवर्तिं । गमिष्ठा । आहुः । विप्रासः । अश्विना । पुराऽजाः ॥ आ । वां । श्येनासः । अश्विना । वहंतु । रथे । युक्तासः । आशवः । पतंगाः ॥ ये । अप्ऽतुरः । दिव्यासः । न । गृध्राः । अभि । प्रयः । नासत्या । वहंति ॥ ० ॥ युवतिः । तिष्ठत् । अत्र । जुष्टी । नरा । दुहिता । सूर्यस्य । परि । वां । अश्वाः । वपुषः । पतंगाः । वयः । वहंतु । अरुषाः । अभीके ॥ १८ ॥ उत् । वंदनं । ऐरतं । दंसनाभिः । उत् । रेभं । दस्रा । वृषणा । शचीभिः । निः । तौग्र्यं । पारयथः । समुद्रात् । पुनरिति । च्यवानं ॥ चक्रथुः । युवानं ॥ युवं । अत्रये । अवऽनीताय । तप्तं । ऊर्जं । ओमानं । अश्विनौ । अधत्तं ॥ युवं । कण्वाय । अपिऽरिप्ताय । चक्षुः । प्रति । अधत्तं ॥ सुऽस्तुतिं । जुषाणा ॥ युवं । धेनुं । शयवे । नाधिताय । अपिन्वतं । अश्विना । पूर्व्याय ॥ अमुंचतं । वर्तिकां । अंहसः । निः । प्रति । जंघां । विश्पलायाः । अधत्तं ॥ युवं । श्वेतं । पदवे । इंद्रऽजूतं । अहिऽहनं । अश्विना । अदत्तं । अश्वं ॥ जोहूत्रं । अर्यः । अभिऽभूतिं । उग्रं । सहस्रऽसां । वृषणं । वीळुऽअंगं ॥ ता । वां । नरा । सु । अवसे । सुऽजाता । हवामहे । अश्विना । नाधमानाः ॥ आ । नः । उप । वसुऽमता । रथेन । गिरः । जुषाणा । सुविताय । यातं ॥ आ । श्येनस्य । जवसा । नूतनेन । अस्मेइति । यातं । नासत्या । सऽजोषाः ॥ हवे । हि । वां । अश्विना । रातऽहव्यः । शश्वत्ऽतमायाः । उषसः । विऽउष्टौ ॥ १९ ॥ ० ॥ पुरुऽमायं । मनःऽजुवं । जीरऽअश्वं । यज्ञियं । जीवसे । हुवे ॥ सहस्रऽकेतुं ।

वनिनं । शतत्ऽवसुं । श्रुष्टीऽवानं । वरिवःऽधां । अभि । प्रयः ॥
ऊर्ध्वा । धीतिः । प्रति । अस्य । प्रऽयामनि । अधायि । शस्मन् ।
सं । अयंते । आ । दिशः ॥ स्वदामि । घर्मं । प्रति । यंति । ऊतयः ।
आ । वां । ऊर्जानी । रथं । अश्विना । अरुहत् ॥ सं । यत् । मिथः ।
पस्पृधानासः । अग्मत । शुभे । मखाः । अमिताः । जायवः । रणे ॥
युवोः । अह । प्रवणे । चेकिते । रथः । यत् । अश्विना । वहथः । सूरिं ।
आ । वरं ॥ युवं । भुज्युं । भुरमाणं । विऽभिः । गतं । स्वयुक्तिऽभिः ।
निऽवहंता । पितृऽभ्यः । आ ॥ यासिष्टं । वर्तिः । वृषणा । विऽजेन्यं ।
दिवःऽदासाय । महि । चेति । वां । अवः ॥ युवोः । अश्विना ।
वपुषे । युवाऽयुजं । रथं । वाणीइति । येमतुः । अस्य । शर्ध्यं ॥
आ । वां । पतिऽत्वं । सख्याय । जग्मुषी । योषा । अवृणीत ।
जेन्या । युवां । पतीइति ॥ २० ॥ युवं । रेभं । परिऽसूतेः ।
उरुष्यथः । हिमेन । घर्मं । परिऽतप्तं । अत्रये ॥ युवं । शयोः ।
अवसं । पिप्यथुः । गवि । प्र । दीर्घेण । वंदनः । तारि ।
आयुषा ॥ युवं । वंदनं । निःऽऋतं । जरण्यया । रथं । न ।
दस्रा । करणा । सं । इन्वथः ॥ क्षेत्रात् । आ । विप्रं । जनथः ।
विपन्यया । प्र । वां । अत्र । विधते । दंसना । भुवत् ॥ अगच्छतं ।
कृपमाणं । पराऽवति । पितुः । स्वस्य । त्यजसा । निऽबाधितं ॥
स्वःऽवतीः । इतः । ऊतीः । युवोः । अह । चित्राः । अभीके ।
अभवन् । अभिष्टयः ॥ उत । स्या । वां । मधुऽमत् । मक्षिका ।
अरपत् । मदे । सोमस्य । औशिजः । हुवन्यति ॥ युवं । दधीचः ।
मनः । आ । विवासथः । अथ । शिरः । प्रति । वां । अश्व्यं ।
वदत् ॥ युवं । पेदवे । पुरुऽवारं । अश्विना । स्पृधां । श्वेतं । तरुतारं ।
दुवस्यथः ॥ शर्यैः । अभिऽद्युं । पृतनासु । दुस्तरं । चर्कृत्यं । इंद्रंऽइव ।

चर्षणिऽसहं ॥ २१ ॥ का । राधत् । होत्रा । अश्विना । वां ।
कः । वां । जोषे । उभयोः ॥ कथा । विधाति । अप्रऽचेताः ॥
विद्वांसौ । इत् । दुरः । पृछेत् । अविद्वान् । इत्था । अपरः ।
अचेताः ॥ नु । चित् । नु । मर्ते । अक्रौ ॥ ता । विद्वांसा ।
हवामहे । वां । ता । नः । विद्वांसा । मन्म । वोचेतं । अद्य ॥
प्र । आर्चत् । दयमानः । युवाकुः ॥ वि । पृछामि । पाक्या ।
न । देवान् । वषट्ऽकृतस्य । अद्भुतस्य । दस्रा ॥ पातं । च ।
सह्यसः । युवं । च । रभ्यसः । नः ॥ प्र । या । घोषे ।
भृगवाणे । न । शोभे । यया । वाचा । यजति । पज्रियः ।
वां ॥ प्र । इषऽयुः । न । विद्वान् ॥ २२ ॥ श्रुतं । गायत्रं ।
तकवानस्य । अहं । चित् । हि । रिरेभ । अश्विना । वां ॥ आ ।
अक्षीइति । शुभः । पतीइति । दन् ॥ युवं । हि । आस्तं ।
महः । रन् । युवं । वा । यत् । निःऽअततंसतं । ता । नः ।
वसूइति । सुऽगोपा । स्यातं । पातं । नः । वृकात् । अघऽयोः ॥
मा । कस्मै । धातं । अभि । अमित्रिणे । नः । मा । अकुत्र । नः ।
गृहेभ्यः । धेनवः । गुः ॥ स्तनऽभुजः । अशिश्वीः ॥ दुहीयत् ।
मित्रऽधितये । युवाकु । राये । च । नः । मिमीतं । वाजऽवत्यै ॥
इषे । च । नः । मिमीतं । धेनुऽमत्यै ॥ अश्विनोः । असनं । रथं ।
अनश्वं । वाजिनीऽवतोः ॥ तेन । अहं । भूरि । चाकन ॥ अयं ।
समह । मा । तनु । ऊह्याते । जनान् । अनु ॥ सोमऽपेयं । सुऽखः ।
रथः ॥ अध । स्वप्नस्य । निः । विदे । अभुंजतः । च । रेवतः ॥
उभा । ता । बस्रि । नश्यतः ॥ २३ ॥ कत् । इत्था । नॄन् । पात्रं ।
देवऽयतां । श्रवत् । गिरः । अंगिरसां । तुरण्यन् ॥ प्र । यत् ।
आनट् । विशः । आ । हर्म्यस्य । उरु । क्रंसते । अध्वरे । यजत्राः ॥

स्तंभीत् । ह । द्यां । सः । धरुणं । प्रुषायत् । ऋभुः । वाजाय । द्रविणं । नरः । गोः ॥ अनु । स्वऽजां । महिषः । चक्षत । व्रां । मेनां । अश्वस्य । परि । मातरं । गोः ॥ नक्षत् । हवं । अरुणीः । पूर्व्यं । राट् । तुरः । विशां । अंगिरसां । अनु । द्यून् ॥ तक्षत् । वज्रं । निऽयुतं । तस्तंभत् । द्यां । चतुःऽपदे । नर्याय । द्विऽपादे ॥ अस्य । मदे । स्वर्यं । दाः । ऋताय । अपिऽवृतं । उस्रियाणां । अनीकं ॥ यत् । ह । प्रऽसर्गे । त्रिऽककुप् । निऽवर्तत् । अप । द्रुहः । मानुषस्य । दुरः । वरितिवः । तुभ्यं । पयः । यत् । पितरौ । अनीतां । राधः । सुऽरेतः । तुरणे । भुरण्यूइति ॥ शुचि । यत् । ते । रेक्णः । आ । अयजंत । सबःऽदुघायाः । पयः । उस्रियायाः ॥ २४ ॥ अध । प्र । जज्ञे । तरणिः । ममत्तु । प्र । रोचि । अस्याः । उषसः । न । सूरः ॥ इंदुः । येभिः । आष्ट । स्वऽइदुहव्यैः । स्रुवेण । सिंचन् । जरणा । अभि । धाम ॥ सुऽइध्मा । यत् । वनऽधितिः । अपस्यात् । सूरः । अध्वरे । परि । रोधना । गोः ॥ यत् । ह । प्रऽभासि । कृत्व्यान् । अनु । द्यून् । अनर्विशे । पशुऽइषे । तुराय ॥ अष्टा । महः । दिवः । आदः । हरीइति । इह । द्युम्नऽसहं । अभि । योधानः । उत्सं ॥ हरिं । यत् । ते । मंदिनं । धुक्षन् । वृधे । गोऽरभसं । अद्रिऽभिः । वाताप्यं ॥ त्वं । आयसं । प्रति । वर्तयः । गोः । दिवः । अश्मानं । उपऽनीतं । ऋभ्वा ॥ कुत्साय । यत्र । पुरुऽहूत । वन्वन् । शुष्णं । अनंतैः । परिऽयासि । वधैः ॥ पुरा । यत् । सूरः । तमसः । अपिऽइतेः । तं । अद्रिऽवः । फलिऽगं । हेतिं । अस्य ॥ शुष्णस्य । चित् । परिऽहितं । यत् । ओजः । दिवः । परि । सुऽग्रथितं । तत् । आ । अदः ॥ २५ ॥ अनु । त्वा । महीइति । पाजसीइति । अचक्रेइति । द्यावाक्षामा । मदतां । इंद्र । कर्मन् ॥ त्वं । वृत्रं ।

आऽशयानं । सिरासु । महः । वज्रेण । सिस्वपः । वराहुं ॥ त्वं । इंद्र । नर्यः । यान् । अवः । नृन् । तिष्ठं । वातस्य । सुऽयुजः । वहिष्ठान् ॥ यं । ते । काव्यः । उशना । मंदिनं । दात् । वृत्रऽहनं । पार्यं । ततक्ष । वज्रं ॥ त्वं । सूरः । हरितः । रमयः । नृन् । भरत् । चक्रं । एतशः । न । अयं । इंद्र ॥ प्रऽअस्य । पारं । नवतिं । नाव्यानां । अपि । कर्तं । अवर्तयः । अयज्यून् ॥ त्वं । नः । अस्याः । इंद्र । दुःऽहनायाः । पाहि । वज्रिऽवः । दुःऽइतात् । अभिके ॥ प्र । नः । वाजान् । रथ्यः । अश्वऽबुध्यान् । इषे । यंधि । श्रवसे । सूनृतायै ॥ मा । सा । ते । अस्मत् । सुऽमतिः । वि । दसत् । वाजऽप्रमहः । सं । इषः । वरंत ॥ आ । नः । भज । मघऽवन् । गोषु । अर्यः । मंहिष्ठाः । ते । सधऽमादः । स्याम ॥ २६ ॥ अध्यायः ॥ ८ ॥

इति प्रथमाष्टके अष्टमोध्यायः

॥ इति शाकसंहितायां प्रथमाष्टकपदस्समाप्तः ॥







॥ ॐ ॥

## वेद प्राशस्त्यम्



यज्ञानां तपसांचैव शुभानां दैवकर्मणाम् ।
वेद एव द्विजातीनां निश्रेयसकरः परः ॥

याज्ञवल्क्यः.

वेद एव द्विजातीनां साधनं श्रेयसः परम् ।
ततोऽस्याध्यापनाभ्यासात् परंब्रह्माधिगच्छति ॥

देवीपुराणे.

वेदमेव सदाभ्यस्य तपस्तप्येद्विजोत्तमः ।
श्रुत्यभ्यासोहि विप्रस्य परमं तपउच्यते ॥

काशिकाण्डे.

वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः ।
तावन्ति हरिनामानि कीर्तितानि नसंशयः ॥

विष्णुधर्मोत्तरे.

अपुत्रो लभतेपुत्र मधनो लभते धनम् ।
सदाध्ययनयुक्तस्तु परे ब्रह्मणि लीयते ॥

भविष्यपुराणे.

॥ ॐ ॥


अथ
द्वितीयाष्टके
प्रथमोध्यायः

हरिः ॐ ॥ प्र । वः । पांतं । रघुऽमन्यवः । अंधः । यज्ञं । रुद्राय । मीळहुषे । भरध्वं ॥ दिवः । अस्तोषि । असुरस्य । वीरैः । इषुध्याऽइव । मरुतः । रोदस्योः । पत्नीऽइव । पूर्वऽहूतिं । ववृधध्यै । उषसानक्ता । पुरुधा । विदानेइति ॥ स्तरीः । न । अत्कं । विऽउतं । वसाना । सूर्यस्य । श्रिया । सुऽदृशी । हिरण्यैः ॥ ममत्तु । नः । परिऽज्मा । वसर्हा । ममत्तु । वातः । अपां । वृषण्ऽवान् ॥ शिशीतं । इंद्रापर्वता । युवं । नः । तत् । नः । विश्वे । वरिवस्यंतु । देवाः ॥ उत । त्या । मे । यशसा । श्वेतनायै । व्यंता । पांता । औशिजः । हुवध्यै ॥ प्र । वः । नपातं । अपां । कृणुध्वं । प्र । मातरा । रास्पिनस्य । आयोः ॥ आ । वः । रुवण्युं । औशिजः । हुवध्यै । घोषाऽइव । शंसं । अर्जुनस्य । नंशे ॥ प्र । वः । पूष्णे । दावने । आ । अच्छ । वोचेय । वसुऽतातिं । अग्नेः ॥ १ ॥ श्रुतं । मे । मित्रावरुणा । हवा । इमा । उत । श्रुतं । सदने । विश्वतः । सीं ॥ श्रोतु । नः । श्रोतुऽरातिः । सुऽश्रोतुः । सुऽक्षेत्रा । सिंधुः । अद्भिः ॥ स्तुषे । सा । वां । वरुण । मित्र । रातिः । गवां । शता । पृक्षऽयामेषु । पज्रे ॥ श्रुतऽरथे । प्रियऽरथे । दधानाः । सद्यः । पुष्टिं । निऽरुंधानासः । अग्मन् ॥ अस्य । स्तुषे । महिऽमघस्य । राधः । सचा । सनेम । नहुषः । सुऽवीराः ॥ जनः । यः । पज्रेभ्यः । वाजिनीऽवान् ।

अश्वऽवतः । रथिनः । मह्यं । सूरिः ॥ जनः । यः । मित्रावरुणौ । अभिऽध्रुक् । अपः । न । वां । सुनोति । अक्ष्णयाऽध्रुक् ॥ स्वयं । सः । यक्ष्मं । हृदये । नि । धत्ते । आप । यत् । ईं । होत्राभिः । ऋतऽवा ॥ सः । व्राधतः । नहुषः । दंऽसुजूतः । शर्धःऽतरः । नरां । गूर्तऽश्रवाः ॥ विसृष्टऽरातिः । याति । बाळ्हऽसृत्वा । विश्वासु । पृत्ऽसु । सदं । इत् । शूरः ॥ २ ॥ अध । ग्मंत । नहुषः । हवं । सूरेः । श्रोत । राजानः । अमृतस्य । मंद्राः ॥ नभःऽजुवः । यत् । निरवस्य । राधः । प्रऽशस्तये । महिना । रथऽवते ॥ एतं । शर्धं । धाम । यस्य । सूरेः । इति । अवोचन् । दशऽतयस्य । नंशे ॥ द्युम्नानि । येषु । वसुऽतातिः । ररन् । विश्वे । सन्वंतु । प्रऽभृथेषु । वाजं ॥ मंदामहे । दशऽतयस्य । धासेः । द्विः । यत् । पंच । बिभ्रतः । यंति । अन्ना ॥ किं । इष्टऽअश्वः । इष्टऽरश्मिः । एते । ईशानासः । तरुषः । ऋंजते । नॄन् ॥ हिरण्यऽकर्णं । मणिऽग्रीवं । अर्णः ॥ ० ॥ अर्यः । गिरः । सद्यः । आ । जग्मुषीः । आ । उस्राः । चाकंतु । उभयेषु । अस्मेइति ॥ चत्वारः । मा । मशर्शारस्य । शिश्वः । त्रयः । राज्ञः । आयवसस्य । जिष्णोः ॥ रथः । वां । मित्रावरुणा । दीर्घऽअप्साः । स्यूमऽगभस्तिः । सूरः । न । अद्यौत् ॥ ३ ॥ पृथुः । रथः । दक्षिणायाः । अयोजि । आ । एनं । देवासः । अमृतासः । अस्थुः ॥ कृष्णात् । उत् । अस्थात् । अर्या । विऽहायाः । चिकित्संती । मानुषाय । क्षयाय ॥ पूर्वा । विश्वस्मात् । भुवनात् । अबोधि । जयंती । वाजं । बृहती । सनुत्री ॥ उच्चा । वि । अख्यत् । युवतिः । पुनःऽभूः । आ । उषाः । अगन् । प्रथमा । पूर्वऽहूतौ ॥ यत् । अद्य । भागं । विऽभजासि । नृऽभ्यः । उषः । देवि । मर्त्यऽत्रा । सुऽजाते ॥ देवः । नः । अत्र । सविता । दमूनाः ।

अनागसः । वोचति । सूर्याय ॥ गृहंऽगृहं । अहना । याति । अच्छ ।
दिवेऽदिवे । अधि । नाम । दधाना ॥ सिसासंती । द्योतना । शश्वत् ।
आ । अगात् । अग्रंऽअग्रं । इत् । भजते । वसूनां ॥ भगस्य ।
स्वसा । वरुणस्य । जामिः । उषः । सूनृते । प्रथमा । जरस्व ॥
पश्चा । सः । दघ्याः । यः । अघस्य । धाता । जयेम । तं ।
दक्षिणया । रथेन ॥ ४ ॥ उत् । ईरतां । सूनृताः । उत् । पुरंऽधीः ।
उत् । अग्नयः । शशुचानासः । अस्थुः ॥ स्पार्हा । वसूनि । तमसा ।
अपऽगूळ्हा । आविः । कृण्वंति । उषसः । विऽभातीः । अप ।
अन्यत् । एति । अभि । अन्यत् । एति । विषुरूपेइतिविषुऽरूपे ।
अहनीइति । सं । चरेतेइति । परिऽक्षितोः । तमः । अन्या ।
गुहा । अकः । अद्यौत् । उषाः । शोशुचता । रथेन ॥ सऽदृशीः ।
अद्य । सऽदृशीः । इत् । ऊँइति । श्वः । दीर्घं । सचंते ।
वरुणस्य । धाम ॥ अनवद्याः । त्रिंशतं । योजनानि । एकाऽएका ।
क्रतुं । परि । यंति । सद्यः ॥ जानती । अन्हः । प्रथमस्य ।
नाम । शुक्रा । कृष्णात् । अजनिष्ट । श्वितीची ॥ ऋतस्य । योषा । न ।
मिनाति । धाम । अहःऽअहः । निःऽकृतं । आऽचरंती ॥ कन्याऽइव ।
तन्वा । शाशदाना । एषि । देवि । देवं । इयक्षमाणं ॥ संऽ-
स्मयमाना । युवतिः । पुरस्तात् । आविः । वक्षांसि । कृणुषे ।
विऽभाती ॥ ५ ॥ सुऽसंकाशा । मातृमृष्टाऽइव । योषा । आविः ।
तन्वं । कृणुषे । दृशे । कं ॥ भद्रा । त्वं । उषः । विऽतरं । वि । उच्छ ।
न । तत् । ते । अन्याः । उषसः । नशंत ॥ अश्वऽवतीः । गोऽमतीः ।
विश्वऽवाराः । यतमानाः । रश्मिऽभिः । सूर्यस्य ॥ परा । च ।
यंति । पुनः । आ । च । यंति । भद्रा । नाम । वहमानाः ।
उषसः ॥ ऋतस्य । रश्मिं । अनुऽयच्छमाना । भद्रंऽभद्रं । क्रतुं ।

अस्मासु । धेहि ॥ उषः । नः । अद्य । सुऽहवा । वि । उच्छ । अस्मासु । रायः । मघवत्ऽसु । च । स्युरितिस्युः ॥ ६ ॥ उषाः । उच्छंती । संऽइधाने । अग्नौ । उत्ऽयन् । सूर्यः । उर्विया । ज्योतिः । अश्रेत् ॥ ० ॥ नु । अर्थं । प्र । असावीत् । द्विऽपत् । प्र । चतुःऽपत् । इत्यै ॥ ० ॥ आऽयतीनां ॥ ० ॥ अद्यौत् ॥ ० ॥ ज्योतिः । वसाना । समना । पुरस्तात् ॥ ऋतस्य । पंथां । अनु । एति । साधु । प्रजानतीऽइव । न । दिशः । मिनाति ॥ उपोइति । अदर्शि । शुंध्युवः । न । वक्षः । नोधाःऽइव । आविः । अकृत । प्रियाणि । अद्मऽसत् । न । ससतः । बोधयंती । शश्वत्ऽतमा । आ । अगात् । पुनः । आऽईयुषीणां ॥ पूर्वे । अर्धे । रजसः । अप्त्यस्य । गवां । जनित्री । अकृत । प्र । केतुं ॥ वि । ऊँइति । प्रथते । विऽतरं । वरीयः । आ । उभा । पृणंती । पित्रोः । उपऽस्था ॥ ७ ॥ एव । इत् । एषा । पुरुऽतमा । दृशे । कं । न । अजामिं । न । परि । वृणक्ति । जामिं ॥ अरेपसा । तन्वा । शाशदाना । न । अर्भात् । ईषते । न । महः । विऽभाती ॥ अभ्राताऽइव । पुंसः । एति । प्रतीची । गर्तऽआरुगिव । सनये । धनानां ॥ जायाऽइव । पत्ये । उशती । सुऽवासाः । उषाः । हस्राऽइव । नि । रिणीते । अप्सः ॥ स्वसा । स्वस्रे । ज्यायस्यै । योनिं । अरैक् । अप । एति । अस्याः । प्रतिचक्ष्याऽइव । विऽउच्छंती । रश्मिऽभिः । सूर्यस्य । अंजि । अंक्ते । समनगाःऽइव । व्राः ॥ आसां । पूर्वासां । अहऽसु । स्वसॄणां । अपरा । पूर्वां । अभि । एति । पश्चात् ॥ ताः । प्रत्नऽवत् । नव्यसीः । नूनं । अस्मेइति । रेवत् । उच्छंतु । सुऽदिनाः । उषसः ॥ प्र । बोधय । उषः । पृणतः । मघोनि । अबुध्यमानाः । पणयः । ससंतु ॥ रेवत् । उच्छ । मघवत्ऽभ्यः । मघोनि । रेवत् । स्तोत्रे । सूनृते । जरयंती ॥ ८ ॥

अवं । इयं । अश्वैतु । युवतिः । पुरस्तात् । युङ्क्ते । गवां । अरुणानां । अनीकं । वि । नूनं । उच्छात् । असति । प्र । केतुः । गृहंऽगृहं । उप । तिष्ठाते । अग्निः ॥ उत् । ते । वयः । चित् । वसतेः । अपप्तन् । नरः । च । ये । पितुऽभाजः । विऽउष्टौ ॥ अमा । सते । वहसि । भूरि । वामं । उषः । देवि । दाशुषे । मर्त्याय ॥ अस्तोढ्वं । स्तोम्याः । ब्रह्मणा । मे । अवीवृधध्वं । उशतीः । उषसः ॥ युष्माकं । देवीः । अवसा । सनेम । सहस्रिणं । च । शतिनं । च । वाजं ॥ ९ ॥ प्रातरित्नं । रत्नं । प्रातःऽइत्वा । दधाति । तं । चिकित्वान् । प्रतिऽगृह्य । नि । धत्ते ॥ तेन । प्रऽजां । वर्धयमानः । आयुः । रायः । पोषेण । सचते । सुऽवीरः ॥ सुऽगुः । असत् । सुऽहिरण्यः । सुऽअश्वः । बृहत् । अस्मै । वयः । इंद्रः । दधाति ॥ यः । त्वा । आऽयंतं । वसुना । प्रातःऽइत्वः । मुक्षीजयाऽइव । पदि । उत्ऽसिनाति ॥ आयं । अद्य । सुऽकृतं ॥ प्रातः । इच्छन् । इष्टेः । पुत्रं । वसुऽमता । रथेन ॥ अंशोः । सुतं । पायय । मत्सरस्य । क्षयत्ऽवीरं । वर्धय । सूनृताभिः । उप । क्षरंति । सिंधवः । मयःऽभुवः । ईजानं । च । यक्ष्यमाणं । च । धेनवः ॥ पृणंतं । च । पपुरिं । च । श्रवस्यवः । घृतस्य । धाराः । उप । यंति । विश्वतः ॥ नाकस्य । पृष्ठे । अधि । तिष्ठति । श्रितः । यः । पृणाति । सः । ह । देवेषु । गच्छति ॥ तस्मै । आपः । घृतं । अर्षंति । सिंधवः । तस्मै । इयं । दक्षिणा । पिन्वते । सदा ॥ दक्षिणाऽवतां । इत् । इमानि । चित्रा । दक्षिणाऽवतां । दिवि । सूर्यासः ॥ दक्षिणाऽवंतः । अमृतं । भजंते । दक्षिणाऽवंतः । प्र । तिरंते । आयुः ॥ मा । पृणंतः । दुःऽइतं । एनः । आ । अरन् । मा । जारिषुः । सूरयः । सुऽव्रतासः ॥ अन्यः । तेषां ।

परिऽधिः । अस्तु । कः । चित् । अपृणंतं । अभि । सं । यंतु । शोकाः ॥ १० ॥ अमंदान् । स्तोमान् । प्र । भरे । मनीषा । सिंधौ । अधि । क्षियतः । भाव्यस्य ॥ यः । मे । सहस्रं । अमिमीत । सवान् । अतूर्तः । राजा । श्रवः । इच्छमानः ॥ शतं । राज्ञः । नाधमानस्य । निष्कान् । शतं । अश्वान् । प्रऽयतान् । सद्यः । आदं ॥ शतं । कक्षीवान् । असुरस्य । गोनां । दिवि । श्रवः । अजरं । आ । ततान ॥ उप । मा । श्यावाः । स्वनयेन । दत्ताः । वधूऽमंतः । दश । रथासः । अस्थुः ॥ षष्टिः । सहस्रं । अनु । गव्यं । आ । अगात् । सनत् । कक्षीवान् । अभिऽपित्वे । अन्हां ॥ चत्वारिंशत् । दशऽरथस्य । शोणाः । सहस्रस्य । अग्रे । श्रेणिं । नयंति ॥ मदऽच्युतः । कृशनऽवतः । अत्यान् । कक्षीवंतः । उत् । अमृक्षंत । पज्राः ॥ पूर्वां । अनु । प्रऽयतिं । आ । ददे । वः । त्रीन् । युक्तान् । अष्टौ । अरिऽधायसः । गाः ॥ सुऽबंधवः । ये । विश्याःऽइव । व्राः । अनस्वंतः । श्रवः । ऐषंत । पज्राः ॥ आऽगधिता । परिऽगधिता । या । कशीकाऽइव । जंगहे ॥ ददाति । मह्यं । यादुरी । याशूनां । भोज्या । शता ॥ उपऽउप । मे । परा । मृश । मा । मे । दभ्राणि । मन्यथाः ॥ सर्वा । अहं । अस्मि । रोमशा । गंधारीणांऽइव । अविका ॥ ११ ॥ अग्निं । होतारं । मन्ये । दास्वंतं । वसुं । सूनुं । सहसः । जातऽवेदसं ॥ विप्रं । न । जातऽवेदसं । यः । ऊर्ध्वया । सुऽअध्वरः । देवः । देवाच्या । कृपा ॥ घृतस्य । विऽभ्राष्टिं । अनु । वष्टि । शोचिषा । आऽजुह्वानस्य । सर्पिषः ॥ यजिष्ठं । त्वा । यजमानाः । हुवेम । ज्येष्ठं । अंगिरसां । विप्र । मन्मऽभिः । विप्रेभिः । शुक्र । मन्मऽभिः ॥ परिज्मानंऽइव । द्यां । होतारं । चर्षणीनां । शोचिःऽकेशं । वृषणं । यं । इमाः । विशः । प्र । अवंतु । जूतये । विशः ॥ सः । हि । पुरु । चित् । ओजसा । विरुक्मता ।

दीद्यानः । भवति । द्रुहंऽतरः । परशुः । न । द्रुहंऽतरः ॥ वीळु ।
चित् । यस्य । संऽऋतौ । श्रुवत् । वनाऽइव । यत् । स्थिरं ॥
निःऽसहमानः । यमते । न । अयते । धन्वऽसहा । न । अयते ॥
दृळहा । चित् । अस्मै । अनु । दुः । यथा । विदे । तेजिष्ठाभिः ।
अरणिऽभिः । दाष्टि । अवसे ॥ अग्नये । दाष्टि । अवसे ॥
प्र । यः । पुरूणि । गाहते । तक्षत् । वनाऽइव । शोचिषा ।
स्थिरा । चित् । अन्ना । नि । रिणाति । ओजसा । नि ।
स्थिराणि । चित् । ओजसा ॥ तं । अस्य । पृक्षं । उपरासु ।
धीमहि । नक्तं । यः । सुदर्शऽतरः । दिवाऽतरात् ॥ अप्रऽआयुषे ।
दिवाऽतरात् ॥ आत् । अस्य । आयुः । ग्रभणऽवत् । वीळु । शर्म ।
न । सूनवे ॥ भक्तं । अभक्तं । अवः । व्यंतः । अजराः ॥ अग्नयः ।
व्यंतः । अजराः ॥ १२ ॥ सः । हि । शर्धः । न । मारुतं ।
तुविऽस्वनिः । अप्नस्वतीषु । उर्वरासु । इष्टनिः । आर्तनासु ।
इष्टनिः ॥ आदत् । हव्यानि । आऽददिः । यज्ञस्य । केतुः ।
अर्हणा ॥ अध । स्म । अस्य । हर्षतः । हृषीवतः । विश्वे । जुषंत ।
पंथां ॥ नरः । शुभे । न । पथां । द्विता । यत् । ईं । कीस्तासः । अभिऽ-
द्यवः । नमस्यंतः । उपऽवोचंत । भृगवः । मथ्नंतः । दाशा । भृगवः ॥
अग्निः । ईशे । वसूनां । शुचिः । यः । धर्णिः । एषां ॥ प्रियान् ।
अपिऽधीन् । वनिषीष्ट । मेधिरः । आ । वनिषीष्ट । मेधिरः ॥
विश्वासां । त्वा । विशां । पतिं । हवामहे । सर्वासां । समानं ।
दंऽपतिं । भुजे । सत्यऽगिर्वाहसं । भुजे ॥ अतिथिं । मानुषाणां ।
पितुः । न । यस्य । आसया ॥ अमीइति । च । विश्वे । अमृतासः ।
आ । वयः । हव्या । देवेषु । आ । वयः ॥ त्वं । अग्ने । सहसा ।
सहन्ऽतमः । शुष्मिन्ऽतमः । जायसे । देवऽतातये । रयिः ।

न । देवऽतातये ॥ शुष्मिन्ऽतमः । हि । ते । मदः । द्युम्निन्ऽतमः । उत । क्रतुः ॥ अध । स्म । ते । परि । चरंति । अजर । श्रुष्टीऽवानः । न । अजर ॥ प्र । वः । महे । सहसा । सहस्वते । उषःऽबुधे । पशुऽसे । न । अग्नये । स्तोमः । बभूतु । अग्नये ॥ प्रति । यत् । ईं । हविष्मान् । विश्वासु । क्षासु । जोगुवे । अग्रे । रेभः । न । जरते । ऋषूणां । जूर्णिः । होता । ऋषूणां ॥ सः । नः । नेदिष्ठं । ददृशानः । आ । भर । अग्ने । देवेभिः । सऽचनाः । सुऽचेतुना । महः । रायः । सुऽचेतुना । महि । शविष्ठ । नः । कृधि । संऽचक्षे । भुजे । अस्यै ॥ महि । स्तोतृऽभ्यः । मघऽवन् । सुऽवीर्यं । मथीः । उग्रः । न । शवसा ॥ १३ ॥ अयं । जायत । मनुषः । धरीमणि । होता । यजिष्ठः । उशिजां । अनु । व्रतं । अग्निः । स्वं । अनु । व्रतं ॥ विश्वऽश्रुष्टिः । सखिऽयते । रयिःऽइव । श्रवस्यते ॥ अदब्धः । होता । नि । सदत् । इळः । पदे । परिऽवीतः । इळः । पदे ॥ तं । यज्ञऽसाधं । अपि । वातयमसि । ऋतस्य । पथा । नमसा । हविष्मता । देवऽताता । हविष्मता ॥ सः । नः । ऊर्जा । उपऽआभृति । अया । कृपा । न । जूर्यति ॥ यं । मातरिश्वा । मनवे । पराऽवतः । देवं । भारिति भाः । पराऽवतः ॥ एवेन । सद्यः । परि । एति । पार्थिवं । मुहुःऽगीः । रेतः । वृषभः । कनिक्रदत् । दधत् । रेतः । कनिक्रदत् ॥ शतं । चक्षाणः । अक्षऽभिः । देवः । वनेषु । तुर्वणिः ॥ सदः । दधानः । उपरेषु । सानुषु । अग्निः । परेषु । सानुषु ॥ सः । सुऽक्रतुः । पुरःऽहितः । दमेऽदमे । अग्निः । यज्ञस्य । अध्वरस्य । चेतति । क्रत्वा । यज्ञस्य । चेतति ॥ क्रत्वा । वेधाः । इषुऽयते । विश्वा । जातानि । पस्पशे ॥ यतः । घृतऽश्रीः । अतिथिः । अजायत ॥ वह्निः । वेधाः ।

अजायत । क्रत्वा । यत् । अस्य । तविषीषु । पृंचते । अग्नेः । अवेन । मरुतां । न । भोज्या ॥ इषिराय । न । भोज्या । सः । हि । स्म । दानं । इन्वति । वसूनां । च । मज्मना ॥ सः । नः । त्रासते । दुःऽइतात् । अभिऽहुतः । शंसात् । अघात् । अभिऽहुतः ॥ १४ ॥ विश्वः । विऽहायाः । अरतिः । वसुः । दधे । हस्ते । दक्षिणे । तरणिः । न । शिश्रथत् । श्रवस्यया । न । शिश्रथत् ॥ विश्वस्मै । इत् । इषुध्यते । देवऽत्रा । हव्यं । आ । ऊहिषे ॥ विश्वस्मै । इत् । सुऽकृते । वारं । ऋण्वति । अग्निः । द्वारा । वि । ऋण्वति ॥ सः । मानुषे । वृजने । शंऽतमः । हितः । अग्निः । यज्ञेषु । जेन्यः । न । विश्पतिः । प्रियः । यज्ञेषु । विश्पतिः । सः । हव्या । मानुषाणां । इळा । कृतानि । पत्यते ॥ ० ॥ वरुणस्य । धूर्तेः । महः । देवस्य । धूर्तेः ॥ अग्निं । होतारं । ईळते । वसुऽधितिं । प्रियं । चेतिष्ठं । अरतिं । नि । एरिरे ॥ हव्यऽवाहं । नि । एरिरे ॥ विश्वऽआयुं । विश्वऽवेदसं । होतारं । यजतं । कविं ॥ देवासः । रण्वं । अवसे । वसुऽयवः । गीःऽभिः । रण्वं । वसुऽयवः ॥ १५ ॥ यं । त्वं । रथं । इंद्र । मेधऽसातये । अपाका । संतं । इषिर । प्रऽनयसि । प्र । अनवद्य । नयसि ॥ सद्यः । चित् । तं । अभिष्टये । करः । वशः । च । वाजिनं ॥ सः । अस्माकं । अनवद्य । तुतुजान । वेधसां । इमां । वाचं । न । वेधसां । सः । शृधि ॥ यः । स्म । पृतनासु । कासु । चित् । दक्षाय्यः । इंद्र । भरऽहूतये । नृऽभिः । असि । प्रऽतूर्तये । नृऽभिः । यः । शूरैः । स्वः१रितिस्वः । सनिता । यः । विप्रैः । वाजं । तरुता । तं । ईशानासः । इरधंत । वाजिनं । पृक्षं । अत्यं । न । वाजिनं । दस्मः । हि । स्म । वृषणं । पिन्वसि । त्वचं । कं । चित् । यावीः ।

अररुं । शूर । मर्त्यं ॥ परिऽवृणक्षि । मर्त्यं । इंद्रं । उत । तुभ्यं । तत् । दिवे । तत् । रुद्राय । स्वऽयशसे ॥ मित्राय । वोचं । वरुणाय । सऽप्रथः । सुऽमृळीकाय । सऽप्रथः ॥ अस्माकं । वः । इंद्रं । उश्मसि । इष्टये । सखायं । विश्वऽआयुं । प्रऽसहं । युजं । वाजेषु । प्रऽसहं । युजं ॥ अस्माकं । ब्रह्म । ऊतये । अव । पृत्सुषु । कासु । चित् ॥ नहि । त्वा । शत्रुः । स्तरते । स्तृणोषि । यं । विश्वं । शत्रुं । स्तृणोषि । यं ॥ नि । सु । नम । अतिऽमतिं । कयस्य । चित् । तेजिष्ठाभिः । अरणिऽभिः । न । ऊतिऽभिः । उग्राभिः । उग्र । ऊतिऽभिः ॥ नेषि । नः । यथा । पुरा । अनेनाः । शूर । मन्यसे ॥ विश्वानि । पूरोः । अप । पर्षि । वन्हिः । आसा । वन्हिः । नः । अच्छ ॥ १६ ॥ प्र । तत् । वोचेयं । भव्याय । इंदवे । हव्यः । न । यः । इषऽवान् । मन्म । रेजति । रक्षःऽहा । मन्म । रेजति ॥ स्वयं । सः । असत् । आ । निदः । वधैः । अजेत । दुःऽमतिं ॥ अव । स्रवेत् । अघऽशंसः । अवऽतरं । अव । क्षुद्रंऽइव । स्रवेत् ॥ वनेम । तत् । होत्रया । चितंत्या । वनेम । रयिं । रयिऽवः । सुऽवीर्यं । रण्वं । संतं । सुऽवीर्यं ॥ दुःऽमन्मानं । सुमंतुऽभिः । आ । ईं । इषा । पृचीमहि ॥ आ । सत्याभिः । इंद्रं । द्युम्नहूतिऽभिः । यजत्रं । द्युम्नहूतिऽभिः ॥ प्रऽअव । वः । अस्मेइति । स्वयशःऽभिः । ऊती । परिऽवर्गे । इंद्रः । दुःऽमतीनां ॥ दरीमन् । दुःऽमतीनां । स्वयं । सा । रिषयध्यै । या । नः । उपऽईषे । अत्रैः ॥ हता । ईं । असत् । न । वक्षति । क्षिप्ता । जूर्णिः । न । वक्षति ॥ त्वं । नः । इंद्र । राया । परीणसा । याहि । पथा । अनेहसा । पुरः । याहि । अरक्षसा ॥ सचस्व । नः । पराके । आ । सचस्व । अस्तंऽईके । आ ॥ पाहि । नः । दूरात् । आरात् । अभिष्टिऽभिः । सदा । पाहि ।

अभिष्टिऽभिः ॥ ० ॥ तरूषसा । उग्रं । चित् । त्वा । महिमा ।
सक्षत् । अवसे । महे । मित्रं । न । अवसे ॥ ओजिष्ठ । त्रातः ।
अवितरिति । रथं । कं । चित् । अमर्त्य । अन्यं । अस्मत् । रिरिषेः ।
कं । चित् । अद्रिऽवः । रिरिक्षंतं । चित् । अद्रिऽवः ॥ पाहि ।
नः । इंद्र । सुऽस्तुत । स्रिधः । अवऽयाता । सदं । इत् ।
दुःऽमतीनां ॥ देवः । सन् । दुःऽमतीनां ॥ हंता । पापस्य । रक्षसः ।
त्राता । विप्रस्य । माऽवतः ॥ अध । हि । त्वा । जनिता ।
जीजनत् । वसो इति । रक्षःऽहनं । त्वा । जीजनत् । वसो इति ॥ १७ ॥
आ । इंद्र । याहि । उप । नः । पराऽवतः । न । अयं ।
अच्छ । विदथानिऽइव । सत्ऽपतिः । अस्तं । राजाऽइव । सत्ऽ-
पतिः ॥ हवामहे । त्वा । वयं । प्रयस्वंतः । सुते । सचा ॥
पुत्रासः । न । पितरं । वाजऽसातये । मंहिष्ठं । वाजऽसातये ॥
पिब । सोमं । इंद्र । सुवानं । अद्रिऽभिः । कोशेन । सिक्तं ।
अवतं । न । वंसगः । ततृषाणः । न । वंसगः ॥ मदाय ।
हर्यताय । ते । तुविःऽतमाय । धायसे ॥ आ । त्वा । यच्छंतु ।
हरितः । न । सूर्यं । अहा । विश्वाऽइव । सूर्यं ॥ अविंदत् । दिवः ।
निऽहितं । गुहा । निऽधिं । वेः । न । गर्भं । परिऽवीतं । अश्मनि ।
अनंते । अंतः । अश्मनि ॥ व्रजं । वज्री । गवांऽइव । सिसासन् ।
अंगिरःऽतमः ॥ अप । अवृणोत् । इषः । इंद्रः । परिऽवृताः । द्वारः ।
इषः । परिऽवृताः ॥ दृह्हाणः । वज्रं । इंद्रः । गभस्त्योः । क्षद्मऽइव ।
तिग्मं । असनाय । सं । श्यत् । अहिऽहत्याय । सं । श्यत् ॥
संऽविव्यानः । ओजसा । शवःऽभिः । इंद्र । मज्मना ॥ तष्टाऽइव ।
वृक्षं । वनिनः । नि । वृश्चसि । परश्वाऽइव । नि । वृश्चसि ॥ त्वं ।
वृथा । नद्यः । इंद्र । सर्तवे । अच्छ । समुद्रं । असृजः । रथान्ऽइव ।

वाजऽयतः । रथान्ऽइव ॥ इतः । ऊतीः । अयुंजत । समानं । अर्थं । अक्षितं ॥ धेनूःऽइव । मनवे । विश्वऽदोहसः । जनाय । विश्वऽदोहसः ॥ १८ ॥ इमां । ते । वाचं । वसुऽयंतः । आयवः । रथं । न । धीरः । सुऽअपाः । अतक्षिषुः । सुम्नाय । त्वां । अतक्षिषुः । शुंभंतः । जेन्यं । यथा । वाजेषु । विप्र । वाजिनं ॥ अत्यंऽइव । शवसे । सातये । धना । विश्वा । धनानि । सातये । भिनत् । पुरः । नवतिं । इंद्र । पूरवे । दिवःऽदासाय । महि । दाशुषे । नृतोइति । वज्रेण । दाशुषे । नृतोऽइति । अतिथिऽग्वाय । शंबरं । गिरेः । उग्रः । अव । अभरत् ॥ महः । धनानि । दयमानः । ओजसा । विश्वा । धनानि । ओजसा ॥ इंद्रः । समत्ऽसु । यजमानं । आर्यं । प्र । आवत् । विश्वेषु । शतंऽऊतिः । आजिषु । स्वःऽमीळ्हेषु । आजिषु ॥ मनवे । शासत् । अव्रतान् । त्वचं । कृष्णां । अरंधयत् ॥ धक्षत् । न । विश्वं । ततृषाणं । ओषति । नि । अर्शसानं । ओषति ॥ सूरः । चक्रं । प्र । वृहत् । जातः । ओजसा । प्रऽपित्वे । वाचं । अरुणः । मुषायति । ईशानः । आ । मुषायति ॥ उशना । यत् । पराऽवतः । अजगन् । ऊतये । कवे ॥ सुम्नानि । विश्वा । मनुषाऽइव । तुर्वणिः । अहा । विश्वाऽइव । तुर्वणिः ॥ सः । नः । नव्येभिः । वृषऽकर्मन् । उक्थैः । पुरां । दर्तरितिदर्तः । पायुऽभिः । पाहि । शग्मैः ॥ दिवःऽदासेभिः । इंद्र । स्तवानः । ववृधीथाः । अहोभिःऽइव । द्यौः ॥ १९ ॥ इंद्राय । हि । द्यौः । असुरः । अनम्नत । इंद्राय । मही । पृथिवी । वरीमऽभिः । द्युम्नऽसाता । वरीमऽभिः ॥ इंद्रं । विश्वे । सऽजोषसः । देवासः । दधिरे । पुरः ॥ इंद्राय । विश्वा । सवनानि । मानुषा । रातानि । संतु । मानुषा ॥ विश्वेषु । हि । त्वा । सवनेषु । तुंजते । समानं

एकं । वृषऽमन्यवः । पृथक् । स्वरितिस्वः । सनिष्यवः । पृथक् ॥ तं । त्वा । नावं । न । पर्षणिं । शूषस्य । धुरि । धीमहि ॥ इंद्रं । न । यज्ञैः । चितयंतः । आयवः । स्तोमेभिः । इंद्रं । आयवः ॥ वि । त्वा । ततस्रे । मिथुनाः । अवस्यवः । व्रजस्य । साता । गव्यस्य । निःऽसृजः । सक्षंतः । इंद्र । निःऽसृजः ॥ यत् । गव्यंता । द्वा । जना । स्वः । यंता । संऽऊहसि ॥ आविः । करिक्रत् । वृषणं । सचाऽभुवं । वज्रं । इंद्र । सचाऽभुवं ॥ विदुः । ते । अस्य । वीर्यस्य । पूरवः । पुरः । यत् । इंद्र । शारदीः । अवऽआतिरः । ससहानः । अवऽआतिरः ॥ शासः । तं । इंद्र । मर्त्यं । अयज्युं । शवसः । पते ॥ महीं । अमुष्णाः । पृथिवीं । इमाः । अपः । मंदसानः । इमाः । अपः ॥ आत् । इत् । ते । अस्य । वीर्यस्य । चर्किरन् । मदेषु । वृषन् । उशिजः । यत् । आविथ । सखिऽयतः । यत् । आविथ ॥ चकर्थ । कारं । एभ्यः । पृतनासु । प्रऽवंतवे ॥ ते । अन्यांऽअन्यां । नद्यं । सनिष्णत । श्रवस्यंतः । सनिष्णत ॥ उतोइति । नः । अस्याः । उषसः । जुषेत । हि । अर्कस्य । बोधि । हविषः । हवीमऽभिः ॥ स्वःऽसाता । हवीमऽभिः । यत् । इंद्र । हंतवे । मृधः । वृषा । वज्रिन् । चिकेतसि ॥ आ । मे । अस्य । वेधसः । नवीयसः । मन्म । श्रुधि । नवीयसः । त्वं । तं । इंद्र । ववृधानः । अस्मऽयुः । अमित्रयंतं । तुविऽजात । मर्त्यं । वज्रेण । शूर । मर्त्यं ॥ जहि । यः । नः । अघऽयति । शृणुष्व । सुश्रवःऽतमः ॥ रिष्टं । न । यामन् । अप । भूतु । दुःऽमतिः । विश्वा । अप । भूतु । दुःऽमतिः ॥ २० ॥ त्वया । वयं । मघऽवन् । पूर्व्ये । धने । इंद्रत्वाऽऊताः । ससह्याम । पृतन्यतः । वनुयाम । वनुष्यतः ॥ नेदिष्ठे । अस्मिन् । अहनि । अधि । वोच । नु ।

सुन्वते ॥ अस्मिन् । यज्ञे । वि । चयेम । भरे । कृतं । वाजऽयंतः । भरे । कृतं ॥ स्वःऽजेषे । भरे । आप्रस्य । वक्मनि । उषःऽबुधः । स्वस्मिन् । अंजसि । क्राणस्य । स्वस्मिन् । अंजसि ॥ अहन् । इंद्रः । यथा । विदे । शीर्ष्णाऽशीर्ष्णा । उपऽवाच्यः ॥ अस्मऽत्रा । ते । सध्र्यक् । संतु । रातयः । भद्राः । भद्रस्य । रातयः ॥ तत् । तु । प्रयः । प्रत्नऽथा । ते । शुशुक्वनं । यस्मिन् । यज्ञे । वारं । अकृण्वत । क्षयं । ऋतस्य । वाः । असि । क्षयं ॥ वि । तत् । वोचेः । अध । द्विता । अंतरिति । पश्यंति । रश्मिऽभिः ॥ सः । घ । विदे । अनु । इंद्रः । गोऽएषणः । बंधुक्षित्ऽभ्यः । गोऽएषणः ॥ नु । इत्था । ते । पूर्वऽथा । च । प्रऽवाच्यं । यत् । अंगिरःऽभ्यः । अवृणोः । अप । व्रजं । इंद्र । शिक्षन् । अप । व्रजं ॥ आ । एभ्यः । समान्या । दिशा । अस्मभ्यं । जेषि । योत्सि । च ॥ सुन्वत्ऽभ्यः । रंधय । कं । चित् । अव्रतं । हृणायंतं । चित् । अव्रतं ॥ सं । यत् । जनान् । क्रतुऽभिः । शूरः । ईक्षयत् । धने । हिते । तरुषंत । श्रवस्यवः । प्र । यक्षत । श्रवस्यवः ॥ तस्मै । आयुः । प्रजाऽवत् । इत् । बाधे । अर्चंति । ओजसा ॥ इंद्रे । ओक्यं । दिधिषंत । धीतयः । देवान् । अच्छ । न । धीतयः ॥ युवं । तं । इंद्रापर्वता । पुरःऽयुधा । यः । नः । पृतन्यात् । अप । तंऽतं । इत् । हतं । वज्रेण । तंऽतं । इत् । हतं ॥ दूरे । चत्ताय । छंत्सत् । गहनं । यत् । इनक्षत् ॥ अस्माकं । शत्रून् । परि । शूर । विश्वतः । दर्मा । दर्षीष्ट । विश्वतः ॥ २१ ॥ उभेइति । पुनामि । रोदसीइति । ऋतेन । द्रुहः । दहामि । सं । महीः । अनिंद्राः ॥ अभिऽव्लग्य । यत्र । हताः । अमित्राः । वैलऽस्थानं । परि । तृह्वाः । अशेरन् ॥ अभिऽव्लग्य । चित् । अद्रिऽवः । शीर्षा । यातुऽमतीनां ॥ छिंधि

वटूरिणा । पदा । महाऽवटूरिणा । पदा ॥ अव । आसां । मघऽवन् । जहि । शर्धः । यातुऽमतीनां ॥ वैलऽस्थानके । अर्मके । महाऽवैलस्थे । अर्मके ॥ यासां । तिस्रः । पंचाशतः । अभिऽव्लंगैः । अपऽअवपः ॥ तत् । सु । ते । मनायति । तकत् । सु । ते । मनायति ॥ पिशंगऽभृष्टिं । अंभृणं । पिशाचिं । इंद्र । सं । मृण ॥ सर्वं । रक्षः । नि । बर्हय ॥ अवः । महः । इंद्र । ददृहि । श्रुधि । नः । शुशोच । हि । द्यौः । क्षाः । न । भीषा । अद्रिऽवः । घृणात् । न । भीषा । अद्रिऽवः ॥ शुष्मिन्ऽतमः । हि । शुष्मिऽभिः । वधैः । उग्रेभिः । ईयसे ॥ अपुरुषऽघ्नः । अप्रतिऽइत । शूर । सत्वऽभिः । त्रिऽसप्तैः । शूर । सत्वऽभिः ॥ वनोति । हि । सुन्वन् । क्षयं । परीणसः । सुन्वानः । हि । स्म । यजंति । अव । द्विषः ॥ देवानां । अव । द्विषः ॥ सुन्वानः । इत् । सिसासति । सहस्रा । वाजी । अवृतः ॥ सुन्वानाय । इंद्रः । ददाति । आऽभुवं । रयिं । ददाति । आऽभुवं ॥ २२ ॥ आ । त्वा । जुवः । ररहाणाः । अभि । प्रयः । वायोइति । वहंतु । इह । पूर्वऽपीतये । सोमस्य । पूर्वऽपीतये ॥ ऊर्ध्वा । ते । अनु । सूनृता । मनः । तिष्ठतु । जानती ॥ नियुत्वता । रथेन । आ । याहि । दावने । वायोइति । मखस्य । दावने ॥ मंदंतु । त्वा । मंदिनः । वायोइति । इंदवः । अस्मत् । क्राणासः । सुऽकृताः । अभिऽद्यवः । गोभिः । क्राणाः । अभिऽद्यवः ॥ यत् । ह । क्राणाः । इरध्यै । दक्षं । सचंते । ऊतयः ॥ सध्रीचीनाः । निऽयुतः । दावने । धियः । उप । ब्रुवते । ईं । धियः ॥ वायुः । युंक्ते । रोहिता । वायुः । अरुणा । वायुः । रथे । अजिरा । धुरि । वोळ्हवे । वहिष्ठा । धुरि । वोळ्हवे ॥ प्र । बोधय । पुरंऽधिं । जारः । आ । ससतींऽइव ॥ प्र । चक्षय ।

रोदसीइति । वासय । उषसः । श्रवसे । वासय । उषसः ॥
तुभ्यं । उषसः । शुचयः । पराऽवति । भद्रा । वस्त्रा । तन्वते ।
दंऽसु । रश्मिषु । चित्रा । नव्येषु । रश्मिषु ॥ तुभ्यं । धेनुः ।
सबःऽदुघा । विश्वा । वसूनि । दोहते ॥ अजनयः । मरुतः ।
वक्षणाभ्यः । दिवः । आ । वक्षणाभ्यः ॥ तुभ्यं । शुक्रासः ।
शुचयः । तुरण्यवः । मदेषु । उग्राः । इषणंत । भुर्वणि । अपां ।
इषंत । भुर्वणि ॥ त्वां । त्सारीः । दसमानः । भगं । ईट्टे ।
तकवीये ॥ त्वं । विश्वस्मात् । भुवनात् । पासि । धर्मणा ।
असुर्यात् । पासि । धर्मणा ॥ त्वं । नः । वायोइति । एषां ।
अपूर्व्यः । सोमानां । प्रथमः । पीतिं । अर्हसि । सुतानां । पीतिं ।
अर्हसि । उतोइति । विहुत्मतीनां । विशां । ववर्जुषीणां ॥ विश्वाः ।
इत् । ते । धेनवः । दुह्रे । आऽशिरं । घृतं । दुह्रते । आऽशिरं ॥ २३ ॥
स्तीर्णं । बर्हिः । उप । नः । याहि । वीतये । सहस्रेण ।
निऽयुता । नियुत्वते । शतिनीभिः । नियुत्वते । तुभ्यं । हि ।
पूर्वऽपीतये । देवाः । देवाय । येमिरे । प्र । ते । सुतासः ।
मधुऽमंतः । अस्थिरन् । मदाय । क्रत्वे । अस्थिरन् ॥ तुभ्यं ।
अयं । सोमः । परिऽपूतः । अद्रिऽभिः । स्पार्हा । वसानः ।
परि । कोशं । अर्षति । शुक्रा । वसानः । अर्षति । तव ।
अयं । भागः । आयुषु । सोमः । देवेषु । हूयते । वह । वायोइति ।
निऽयुतः । याहि । अस्मऽयुः । जुषाणः । याहि । अस्मऽयुः ॥ आ ।
नः । नियुत्ऽभिः । शतिनीभिः । अध्वरं । सहस्रिणीभिः । उप ।
याहि । वीतये । वायोइति । हव्यानि । वीतये ॥ ० ॥ ऋत्वियः ।
सऽरश्मिः । सूर्ये । सचा । अध्वर्युऽभिः । भरमाणाः । अयंसत ।
वायोइति । शुक्राः । अयंसत ॥ आ । वां । रथः । नियुत्वान् ।

वक्षत् । अवसे । अभि । प्रयांसि । सुऽधितानि । वीतये । वायोइति ।
हव्यानि । वीतये । पिबतं । मध्वः । अंधसः । पूर्वऽपेयं । हि । वां ।
हितं । वायोइति । आ । चंद्रेण । राधसा । आ । गतं । इंद्रः । च ।
राधसा । आ । गतं ॥ आ । वां । धियः । ववृत्युः । अध्वरान् । उप ।
इमं । इंदुं । मर्मृजंत । वाजिनं । आशुं । अत्यं । न । वाजिनं ॥ तेषां ।
पिबतं । अस्मयूइत्यस्मऽयू । आ । नः । गंतं । इह । ऊत्या ॥ इंद्रवायूइति ।
सुतानां । अद्रिऽभिः । युवं । मदाय । वाजऽदा । युवं ॥ २४ ॥ इमे ।
वां । सोमाः । अप्ऽसु । आ । सुताः । इह । अध्वर्युऽभिः । भरमाणाः ।
अयंसत । वायोइति । शुक्राः । अयंसत । एते । वां । अभि ।
असृक्षत ॥ तिरः । पवित्रं । आशवः ॥ युवाऽयवः । अति ।
रोमाणि । अव्यया । सोमासः । अति । अव्यया ॥ अति ।
वायोइति । ससतः । याहि । शश्वतः । यत्र । ग्रावा । वदति ।
तत्र । गच्छतं । गृहं । इंद्रः । च । गच्छतं ॥ वि । सूनृता ।
ददृशे । रीयते । घृतं । आ । पूर्णया । निऽयुता । याथः । अध्वरं ।
इंद्रः । च । याथः । अध्वरं ॥ अत्र । अह । तत् । वहेथेइति । मध्वः ।
आऽहुतिं । यं । अश्वत्थं । उपऽतिष्ठंत । जायवः । अस्मेइति । ते ।
संतु । जायवः ॥ साकं । गावः । सुवते । पच्यते । यवः । न । ते ।
वायोइति । उप । दस्यंति । धेनवः । न । अप । दस्यंति । धेनवः ॥
इमे । ये । ते । सु । वायोइांत । बाहुऽओजसः । अंतः । नदीइति ।
ते । पतयंति । उक्षणः । महि । व्राधंतः । उक्षणः ॥ धन्वन् । चित् ।
ये । अनाशवः । जीराः । चित् । अगिराऽओकसः ॥ सूर्यस्यऽइव ।
रश्मयः । दुःऽनियंतवः । हस्तयोः । दुःऽनियंतवः ॥ २५ ॥ प्र । सु ।
ज्येष्ठं । निऽचिराभ्यां । बृहत् । नमः । हव्यं । मतिं । भरत ।
मृळयत्ऽभ्यां । स्वादिष्ठं । मृळयत्ऽभ्यां ॥ ता । संऽराजा ।

घृतासुतीइतिघृतऽआसुती । यज्ञेऽयज्ञे । उपऽस्तुता ॥ अथ । एनोः । क्षत्रं । न । कुतः । चन । आऽधृषे । देवऽत्वं । नु । चित् । आऽधृषे ॥ अदर्शि । गातुः । उरवे । वरीयसी । पंथाः । ऋतस्य । सं । अयंस्त । रश्मिऽभिः ॥ चक्षुः । भगस्य । रश्मिऽभिः । द्युक्षं । मित्रस्य । सदनं । अर्यम्णः । वरुणस्य । च ॥ अथ । दधातेइति । बृहत् । उक्थ्यं । वयः । उपऽस्तुत्यं । बृहत् । वयः ॥ ज्योतिष्मतीं । अदितिं । धारयत्ऽक्षितिं । स्वःऽवतीं । आ । सचेतेइति । दिवेऽदिवे । जागृऽवांसा । दिवेऽदिवे ॥ ज्योतिष्मत् । क्षत्रं । आशातेइति । आदित्या । दानुनः । पतीइति ॥ मित्रः । तयोः । वरुणः । यातयत्ऽजनः । अर्यमा । यातयत्ऽजनः ॥ अयं । मित्राय । वरुणाय । शंऽतमः । सोमः । भूतु । अवऽपानेषु । आऽभगः । देवः । देवेषु । आऽभगः ॥ तं । देवासः । जुषेरत । विश्वे । अद्य । सऽजोषसः ॥ तथा । राजाना । करथः । यत् । ईमहे । ऋतऽवाना । यत् । ईमहे ॥ यः । मित्राय । वरुणाय । अविधत् । जनः । अनर्वाणं । तं । परि । पतः । अंहसः । दाश्वांसं । मर्तं । अंहसः ॥ तं । अर्यमा । अभि । रक्षति । ऋजुऽयंतं । अनु । व्रतं ॥ उक्थैः । यः । एनोः । परिऽभूषति । व्रतं । स्तोमैः । आऽभूषति । व्रतं ॥ नमः । दिवे । बृहते । रोदसीभ्यां । मित्राय । वोचं । वरुणाय । मीळ्हुषे । सुऽमृळीकाय । मीळ्हुषे ॥ इंद्रं । अग्निं । उप । स्तुहि । द्युक्षं । अर्यमणं । भगं । ज्योक् । जीवंतः । प्रऽजया । सचेमहि । सोमस्य । ऊती । सचेमहि ॥ ऊती । देवानां । वयं । इंद्रऽवंतः । मंसीमहि । स्वऽयशसः । मरुत्ऽभिः ॥ अग्निः । मित्रः । वरुणः । शर्म । यंसन् । तत् अश्याम । मघऽवानः । वयं । च ॥ २६ ॥ अध्यायः ॥ १ ॥

इति द्वितीयाष्टके प्रथमोध्ययः



## ॥ अथ द्वितीयोऽध्यायः ॥

हरिः ॐ ॥ सुसुम । आ । यातं । अद्रिऽभिः । गोऽश्रीताः । मत्सराः । इमे । सोमासः । मत्सराः । इमे ॥ आ । राजाना । दिविऽस्पृशा । अस्मऽत्रा । गंतं । उप । नः ॥ इमे । वां । मित्रावरुणा । गोऽआशिरः । सोमाः । शुक्राः । गोऽआशिरः ॥ इमे । आ । यातं । इंदवः । सोमासः । दधिऽआशिरः ॥ सुतासः । दधिऽआशिरः । उत । वां । उषसः । बुधि । साकं । सूर्यस्य । रश्मिऽभिः ॥ सुतः । मित्राय । वरुणाय । पीतये । चारुः । ऋताय । पीतये ॥ तां । वां । धेनुं । न । वासरीं । अंशुं । दुहंति । अद्रिऽभिः । सोमं । दुहंति । अद्रिऽभिः ॥ अस्मऽत्रा । गंतं । उप । नः । अर्वाचा । सोमऽपीतये ॥ अयं । वां । मित्रावरुणा । नृऽभिः ॥ सुतः । सोमः । आ । पीतये । सुतः ॥ १ ॥ प्रऽप्र । पूष्णः । तुविऽजातस्य । शस्यते । महिऽत्वं । अस्य । तवसः । न । तंदते । स्तोत्रं । अस्य । न । तंदते ॥ अर्चामि । सुम्नऽयन् । अहं । अंतिऽऊतिं । मयःऽभुवं ॥ विश्वस्य । यः । मनः । आऽयुयुवे । मखः । देवः । आऽयुयुवे । मखः ॥ प्र । हि । त्वा । पूषन् । अजिरं । न । यामनि । स्तोमेभिः । कृण्वे । ऋणवः । यथा । मृधः । उष्ट्रः । न । पीपरः । मृधः ॥ हुवे । यत् । त्वा । मयःऽभुवं । देवं । सख्याय । मर्त्यः ॥ अस्माकं । आंगूषान् । द्युम्निनः । कृधि । वाजेषु । द्युम्निनः । कृधि ॥ यस्य । ते । पूषन् । सख्ये । विपन्यवः । क्रत्वा । चित् । संतः । अवसा । बुभुज्रिरे । इति ।

क्रत्वा । बुभुज्रिरे ॥ तां । अनु । त्वा । नवीयसीं । निऽयुतं । रायः । ईमहे ॥ अहेळमानः । उरुऽशंस । सरी । भव । वाजेऽवाजे । सरी । भव । अस्याः । ऊँइति । सु । नः । उप । सातये । भुवः । अहेळमानः । ररिऽवान् । अजऽअश्व । श्रवस्यतां । अजऽअश्व ॥ ओइति । सु । त्वा । ववृतीमहि । स्तोमेभिः । दस्म । साधुऽभिः ॥ नहि । त्वा । पूषन् । अतिऽमन्ये । आघृणे । न । ते । सख्यं । अपऽह्नुवे ॥ २ ॥ अस्तु । श्रौषट् । पुरः । अग्निं । धिया । दधे । आ । नु । तत् । शर्धः । दिव्यं । वृणीमहे । इंद्रवायूइति । वृणीमहे ॥ यत् । ह । क्राणा । विवस्वति । नाभा । संऽदायि । नव्यसी ॥ अध । प्र । सु । नः । उप । यंतु । धीतयः । देवान् । अछ । न । धीतयः ॥ यत् । ह । त्यत् । मित्रावरुणौ । ऋतात् । अधि । आददाथेइत्याऽददाथे । अनृतं । स्वेन । मन्युना ॥ दक्षस्य । स्वेन । मन्युना ॥ युवोः । इत्था । अधि । सद्मऽसु । अपश्याम । हिरण्ययं । धीभिः । चन । मनसा । स्वेभिः । अक्षऽभिः । सोमस्य । स्वेभिः । अक्षऽभिः ॥ युवां । स्तोमेभिः । देवऽयंतः । अश्विना । आश्रवयंतःऽइव । श्लोकं । आयवः । युवां । हव्या । अभि । आयवः ॥ युवोः । विश्वाः । अधि । श्रियः । पृक्षः । च । विश्वऽवेदसा ॥ प्रुषायंते । वां । पवयः । हिरण्यये । रथे । दस्रा । हिरण्यये ॥ अचेति । दस्रा । वि । ऊँइति । नाकं । ऋण्वथः । युंजते । वां । रथऽयुजः । दिविष्टिषु । अध्वस्मानः । दिविष्टिषु ॥ अधि । वां । स्थाम । वंधुरे । रथे । दस्रा । हिरण्यये ॥ पथाऽइव । यंतौ । अनुऽशासता । रजः । अंजसा । शासता । रजः ॥ शचीभिः । नः । शचीवसूइतिशचीऽवसू । दिवा । नक्तं । दशस्यतं । मा । वां । रातिः । उप । दसत् । कदा । चन । अस्रत् । रातिः । कदा ।

चन ॥ ३ ॥ वृषन् । इंद्र । वृषऽपानासः । इंदवः । इमे । सुताः । अद्रिऽसुतासः । उतऽभिदः । तुभ्यं । सुतासः । उतऽभिदः ॥ ते । त्वा । मंदंतु । दावने । महे । चित्राय । राधसे ॥ गीःऽभिः । गीर्वाहः । स्तवमानः । आ । गहि । सुऽमृळीकः । नः । आ । गहि । ओइति । सु । नः । अग्ने । शृणुहि । त्वं । ईळितः । देवेभ्यः । ब्रवसि । यज्ञियेभ्यः । राजऽभ्यः । यज्ञियेभ्यः ॥ यत् । ह । त्यां । अंगिरःऽभ्यः । धेनुं । देवाः । अदत्तन ॥ वि । तां । दुहे । अर्यमा । कर्तरि । सचा । एषः । तां । वेद । मे । सचा ॥ मोइति । सु । वः । अस्मत् । अभि । तानि । पौंस्या । सना । भूवन् । द्युम्नानि । मा । उत । जारिषुः । अस्मत् । पुरा । उत । जारिषुः ॥ यत् । वः । चित्रं । युगेऽयुगे । नव्यं । घोषात् । अमर्त्यं ॥ अस्मासु । तत् । मरुतः । यत् । च । दुस्तरं । दिधृत । यत् । च । दुस्तरं ॥ दध्यङ् । ह । मे । जनुषं । पूर्वः । अंगिराः । प्रियऽमेधः । कण्वः । अत्रिः । मनुः । विदुः । ते । मे । पूर्वे । मनुः । विदुः ॥ तेषां । देवेषु । आऽयतिः । अस्माकं । तेषु । नाभयः ॥ तेषां । पदेन । महि । आ । नमे । गिरा । इंद्राग्नीइति । आ । नमे । गिरा ॥ होता । यक्षत् । वनिनः । वंत । वार्यं । बृहस्पतिः । यजति । वेनः । उक्षऽभिः । पुरुऽवारेभिः । उक्षऽभिः ॥ जगृभ्म । दूरेऽआदिशं । श्लोकं । अद्रेः । अध । त्मना ॥ अधारयत् । अररिंदानि । सुऽक्रतुः । पुरु । सद्मानि । सुऽक्रतुः ॥ ये । देवासः । दिवि । एकादश । स्थ । पृथिव्यां । अधि । एकादश । स्थ ॥ अप्सुऽक्षितः । महिना । एकादश । स्थ । ते । देवासः । यज्ञं । इमं । जुषध्वं ॥ ४ ॥ वेदिऽसदे । प्रियऽधामाय । सुऽद्युते । धासिंऽइव । प्र । भर । योनिं । अग्नये ॥ वस्त्रेणऽइव ।

वासय । मन्मंना । शुचिं । ज्योतिःऽरथं । शुक्रऽवर्णं । तमःऽहनं ॥ अभि । द्विऽजन्मा । त्रिऽवृत् । अन्नं । ऋज्यते । संवत्सरे । वर्वृधे । जग्धं । ईमिति ॥ पुनरिति ॥ अन्यस्य । आसा । जिह्वया । जेन्यः । वृषा । नि । अन्येन । वनिनः । मृष्ट । वारणः ॥ कृष्णऽप्रुतौ । वेविजेइति । अस्य । सऽक्षितौ । उभा । तरेतेइति । अभि । मातरा । शिशुं ॥ प्राचाऽजिह्वं । ध्वसयंतं । तृषुऽच्युतं । आ । साच्यं । कुपयं । वर्धनं । पितुः ॥ मुमुक्ष्वः । मनवे । मानवस्यते । रघुऽद्रुवः । कृष्णऽसीतासः । ऊँइति । जुवः ॥ असमनाः । अजिरासः । रघुऽस्यदः । वातऽजूताः । उप । युज्यंते । आशवः । आत् । अस्य । ते । ध्वसयंतः । वृथा । ईरते । कृष्णं । अभ्वं । महि । वर्पः । करिक्रतः ॥ यत् । सीं । महीं । अवनिं । प्र । अभि । मर्मृशत् । अभिऽश्वसन् । स्तनयन् । एति । नानदत् ॥ ५ ॥ भूषन् । न । यः । अधि । बभ्रूषु । नम्नते । वृषाऽइव । पत्नीः । अभि । एति । रोरुवत् ॥ ओजायमानः । तन्वः । च । शुंभते । भीमः । न । शृंगा । दविध्राव । दुःऽगृभिः । सः । संऽस्तिरः । विऽस्तिरः । सं । गृभायति । जानन् । एव । जानतीः । नित्यः । आ । शये ॥ पुनः । वर्धते । अपि । यंति । देव्यं । अन्यत् । वर्पः । पित्रोः । कृण्वते । सचा ॥ तं । अग्रुवः । केशिनीः । सं । हि । रभिरे । ऊर्ध्वाः । तस्थुः । मम्रुषीः । प्र । आयवे । पुनरिति ॥ तासां । जरां । प्रऽमुंचन् । एति । नानदत् । असुं । परं । जनयन् । जीवं । अस्तृतं ॥ अधीवासं । परि । मातुः । रिहन् । अह । तुविऽग्रेभिः । सत्वऽभिः । याति । वि । ज्रयः ॥ वयः । दधत् । पत्ऽवते । रेरिहत् । सदा । अनु । श्येनी । सचते । वर्तनिः । अह ॥ अस्माकं । अग्ने । मघवत्ऽसु । दीदिहि । अध ।

श्वसीवान् । वृषभः । दमूनाः ॥ अवऽअस्य । शिशुऽमतीः । अदीदेः । वर्मऽइव । युत्ऽसु । परिऽजर्भुराणः ॥ ६ ॥ इदं । अग्ने । सुऽधितं । दुःऽधितात् । अधि । प्रियात् । ऊँइति । चित् । मन्मनः । प्रेयः । अस्तु । ते ॥ यत् । ते । शुक्रं । तन्वः । रोचते । शुचिं । तेन । अस्मभ्यं । वनसे । रत्नं । आ । त्वं ॥ रथाय । नावं । उत । नः । गृहाय । नित्यऽअरित्रां । पत्ऽवतीं । रासि । अग्ने ॥ अस्माकं । वीरान् । उत । नः । मघोनः । जनान् । च । या । पारयात् । शर्म । या । च ॥ अभि । नः । अग्ने । उक्थं । इत् । जुगुर्यात् । द्यावाक्षामा । सिंधवः । च । स्वऽगूर्ताः ॥ गव्यं । यव्यं । यंतः । दीर्घा । अहा । इषं । वरं । अरुण्यः । वरंत ॥ ७ ॥ वट् । इत्था । तत् । वपुषे । धायि । दर्शतं । देवस्य । भर्गः । सहसः । यतः । जनि ॥ यत् । ईं । उप । ह्वरते । साधते । मतिः । ऋतस्य । धेनाः । अनयंत । सऽस्रुतः ॥ पृक्षः । वपुः । पितुऽमान् । नित्यः । आ । शये । द्वितीयं । आ । सप्तऽशिवासु । मातृषु ॥ तृतीयं । अस्य । वृषभस्य । दोहसे । दशऽप्रमतिं । जनयंत । योषणः ॥ निः । यत् । ईं । बुध्नात् । महिषस्य । वर्पसः । ईशानासः । शवसा । क्रंत । सूरयः ॥ यत् । ईं । अनु । प्रऽदिवः । मध्वः । आऽधवे । गुहा । संतं । मातरिश्वा । मथायति ॥ प्र । यत् । पितुः । परमात् । नीयते । परि । आ । पृक्षुधः । वीरुधः । दंऽसु । रोहति ॥ उभा । यत् । अस्य । जनुषं । यत् । इन्वतः । आत् । इत् । यविष्ठः । अभवत् । घृणा । शुचिः ॥ आत् । इत् । मातृः । आ । अविशत् । यासु । आ । शुचिः । अहिंस्यमानः । उर्विया । वि । ववृधे ॥ अनु । यत् । पूर्वाः । अरुहत् । सनाऽजुवः । नि । नव्यसीषु । अवरासु । धावते ॥ ८ ॥ आत् । इत् । होतारं । वृणते । दिविष्टिषु । भगंऽइव ।

पपृचानासः । ऋजते ॥ देवान् । यत् । क्रत्वा । मज्मना । पुरुऽस्तुतः ।
मर्तं । शंसं । विश्वधा । वेति । धायसे । वि । यत् । अस्थात् ।
यजतः । वातऽचोदितः । ह्वारः । न । वक्वा । जरणाः । अनाकृतः ॥
तस्य । पत्मन् । धक्षुषः । कृष्णऽजंहसः । शुचिऽजन्मनः । रजः ।
आ । विऽअध्वनः ॥ रथः । न । यातः । शिक्वऽभिः । कृतः ।
द्यां । अंगेभिः । अरुषेभिः । ईयते ॥ ० ॥ कृष्णासः । धक्षि ।
सूरयः । शूरस्यऽइव । त्वेषथात् । ईषते । वयः ॥ त्वया । हि ।
अग्ने । वरुणः । धृतऽव्रतः । मित्रः । शाशद्रे । अर्यमा ।
सुऽदानवः ॥ यत् । सीं । अनु । क्रतुना । विश्वऽथा । विऽभुः ॥ ० ॥
परिऽभूः । अजायथाः ॥ त्वं । अग्ने । शशमानाय । सुन्वते । रत्नं ।
यविष्ठ । देवऽतातिं । इन्वसि ॥ तं । त्वा । नु । नव्यं । सहसः ।
युवन् । वयं । भगं । न । कारे । महिऽरत्न । धीमहि ॥ अस्मेइति ।
रयिं । न । सुऽअर्थं । दमूनसं । भगं । दक्षं । न । पपृचासि ।
धर्णसिं । रश्मीन्ऽइव । यः । यमति । जन्मनीइति । उभेइति ।
देवानां । शंसं । ऋते । आ । च । सुऽक्रतुः । उत । नः ।
सुऽद्योत्मा । जीरऽअश्वः । होता । मंद्रः । शृणवत् । चंद्रऽरथः ॥ सः ।
नः । नेषत् । नेषऽतमैः । अमूरः । अग्निः । वामं । सुवितं । वस्यः ।
अच्छ ॥ अस्तावि । अग्निः । शिमीवत्ऽभिः । अर्कैः । सांऽराज्याय ।
प्रऽतरं । दधानः ॥ अमीइति । च । ये । मघऽवानः । वयं । च ।
मिहं । न । सूरः । अति । निः । ततन्युः ॥ ९ ॥ संऽइद्धः । अग्ने । आ ।
वह । देवान् । अद्य । यतऽस्रुचे ॥ तंतुं । तनुष्व । पूर्व्यं । सुतऽ
सोमाय । दाशुषे ॥ घृतऽवंतं । उप । मासि । मधुऽमंतं । तनूऽनपात् ॥
यज्ञं । विप्रस्य । माऽवतः । शशमानस्य । दाशुषः ॥ शुचिः । पावकः ।
अद्भुतः । मध्वा । यज्ञं । मिमिक्षति । नराशंसः । त्रिः । आ ।

दिवः । देवः । देवेषु । यज्ञियः ॥ इळितः । अग्ने । आ । वह । इंद्रं । चित्रं । इह । प्रियं ॥ इयं । हि । त्वा । मतिः । मम । अच्छ । सुऽजिह्व । वच्यते ॥ स्तृणानासः । यतऽस्रुचः । बर्हिः । यज्ञे । सुऽअध्वरे ॥ वृंजे । दवव्यचःऽतमं । इंद्राय । शर्म । सऽप्रथः ॥ ० ॥ प्रऽयै । देवेभ्यः । महीः ॥ पावकासः । पुरुऽस्पृहः । द्वारः । देवीः । असश्चतः ॥ १० ॥ आ । भंदमानेइति । उपाकेइति । नक्तोषसा । सुऽपेशसा ॥ यह्वीइति । ऋतस्य । मातरा । सीदतां । बर्हिः । आ । सुऽमत् ॥ मंद्रऽजिह्वा । जुगुर्वणीइति ॥ ० ॥ सिध्रं । अद्य । दिविऽस्पृशा ॥ शुचिः । देवेषु । अर्पिता । होत्रा । मरुत्ऽसु । भारती ॥ ० ॥ बर्हिः । सीदंतु । यज्ञियाः ॥ तत् । नः । तुरीपं । अद्भुतं । पुरु । वा । अरं । पुरु । त्मना ॥ त्वष्टा । पोषाय । वि । स्यतु । राये । नाभा । नः । अस्मऽयुः ॥ अवऽसृजन् । उप । त्मना । देवान् । यक्षि । वनस्पते ॥ ० ॥ पूषण्ऽवते । मरुत्वते । विश्वऽदेवाय । वायवे ॥ स्वाहा । गायत्रऽवेपसे । हव्यं । इंद्राय । कर्तन ॥ स्वाहाऽकृतानि । आ । गहि । उप । हव्यानि । वीतये ॥ इंद्र । आ । गहि । श्रुधि । हवं । त्वां । हवंते । अध्वरे ॥ ११ ॥ प्र । तव्यसीं । नव्यसीं । धीतिं । अग्नये । वाचः । मतिं । सहसः । सूनवे । भरे ॥ अपां । नपात् । यः । वसुऽभिः । सह । प्रियः । होता । पृथिव्यां । नि । असीदत् । ऋत्वियः ॥ सः । जायमानः । परमे । विऽओमनि । आविः । अग्निः । अभवत् । मातरिश्वने ॥ अस्य । क्रत्वा । संऽइधानस्य । मज्मना । प्र । द्यावा । शोचिः । पृथिवीइति । अरोचयत् ॥ अस्य । त्वेषाः । अजराः । अस्य । भानवः । सुऽसंदृशः । सुऽप्रतीकस्य । सुऽद्युतः ॥ भाऽत्वक्षसः । अति । अक्तुः । न । सिंधवः । अग्नेः । रेजंते । अससंतः । अजराः ॥ यं । आऽइरिरे । भृगवः । विश्वऽवेदसं ।

नाभा । पृथिव्याः । भुवनस्य । मज्मना ॥ अग्निं । तं । गीःऽभिः । हिनुहि । स्वे । आ । दमे । यः । एकः । वस्वः । वरुणः । न । राजति ॥ न । यः । वराय । मरुताऽइव । स्वनः । सेनाऽइव । सृष्टा । दिव्या । यथा । अशनिः ॥ अग्निः । जंभैः । तिगितैः । अत्ति । भर्वति । योधः । न । शत्रून् । सः । वना । नि । ऋंजते । कुवित् । नः । अग्निः । उचथस्य । वीः । असत् । वसुः । कुवित् । वसुऽभिः । कामं । आऽवरत् ॥ चोदः । कुवित् । तुतुज्यात् । सातये । धियः । शुचिऽप्रतीकं । तं । अया । धिया । गृणे ॥ घृतऽप्रतीकं । वः । ऋतस्य । धूःऽसदं । अग्निं । मित्रं । न । संऽइधानः । ऋंजते । इंधानः । अक्रः । विदथेषु । दीद्यत् । शुक्रऽवर्णां । उत् । ऊँइति । नः । यंसते । धियं ॥ अप्रऽयुछन् । अप्रयुछत्ऽभिः । अग्ने । शिवेभिः । नः । पायुऽभिः । पाहि । शग्मैः ॥ अदब्धेभिः । अदृपितेभिः । इष्टे । अनिमिषत्ऽभिः । परि । पाहि । नः । जाः ॥ १२ ॥ एति । प्र । होता । व्रतं । अस्य । मायया । ऊर्ध्वां । दधानः । शुचिऽपेशसं । धियं ॥ अभि । स्रुचः । क्रमते । दक्षिणाऽआवृतः । याः । अस्य । धाम । प्रथमं । ह । निंसते ॥ अभि । ईं । ऋतस्य । दोहनाः । अनूषत । योनौ । देवस्य । सदने । परिऽवृताः ॥ अपां । उपऽस्थे । विऽभृतः । यत् । आ । अवसत् । अध । स्वधाः । अधयत् । याभिः । ईयते ॥ युयूषतः । सऽवयसा । तत् । इत् । वपुः । समानं । अर्थं । विऽतरित्रता । मिथः ॥ आत् । ईं । भगः । न । हव्यः । सं । अस्मत् । आ । वोळ्हुः । न । रश्मीन् । सं । अयंस्त । सारथिः ॥ यं । ईं । द्वा । सऽवयसा । सपर्यतः । समाने । योना । मिथुना । संऽओकसा ॥ दिवा । न । नक्तं । पलितः । युवा ।

अजति । पुरु । चरन् । अजरः । मानुषा । युगा ॥ तं । ईं । हिन्वंति । धीतयः । दश । व्रिशः । देवं । मर्तासः । ऊतये । हवामहे । धनोः । अधि । प्रऽवतः । आ । सः । ऋण्वति । अभिव्रजत्ऽभिः । वयुना । नवा । अधित ॥ त्वं । हि । अग्ने । दिव्यस्य । राजसि । त्वं । पार्थिवस्य । पशुपाःऽइव । त्मना ॥ एनीइति । ते । एतेइति । बृहतीइति । अभिऽश्रिया । हिरण्ययीइति । वक्करीइति । बर्हिः । आशातेइति ॥ अग्ने । जुषस्व । प्रति । हर्य । तत् । वचः । मंद्र । स्वधाऽवः । ऋतऽजात । सुक्रतोइतिसुऽक्रतो ॥ यः । विश्वतः । प्रत्यङ् । असि । दर्शतः । रण्वः । संऽदृष्टौ । पितुमान्ऽइव । क्षयः ॥ १३ ॥ तं । पृच्छत । सः । जगाम । सः । वेद । सः । चिकित्वान् । ईयते । सः । नु । ईयते ॥ तस्मिन् । संति । प्रऽशिषः । तस्मिन् । इष्टयः । सः । वाजस्य । शवसः । शुष्मिणः । पतिः ॥ तं । इत् । पृच्छंति । न । सिमः । वि । पृच्छति । स्वेनऽइव । धीरः । मनसा । यत् । अग्रभीत् ॥ न । मृष्यते । प्रथमं । न । अपरं । वचः । अस्य । क्रत्वा । सचते । अप्रऽदृपितः ॥ तं । इत् । गच्छंति । जुह्वः । तं । अर्वतीः । विश्वानि । एकः । शृणवत् । वचांसि । मे ॥ पुरुऽप्रैषः । ततुरिः । यज्ञऽसाधनः । अछिद्रऽऊतिः । शिशुः । आ । अदत्त । सं । रभः ॥ उपऽस्थाय । चरति । यत् । संऽआरत । सद्यः । जातः । तत्सार । युज्येभिः ॥ अभि । श्वांतं । मृशते । नांद्ये । मुदे । यत् । ईं । गच्छंति । उशतीः । अपिऽस्थितं ॥ स । ईं । मृगः । अप्यः । वनर्गुः । उप । त्वचि । उपऽमस्यां । नि । धायि ॥ वि । अब्रवीत् । वयुना । मर्त्येभ्यः । अग्निः । विद्वान् । ऋतऽचित् । हि । सत्यः ॥ १४ ॥ त्रिऽमूर्धानं । सप्तऽरश्मिं । गृणीषे । अनूनं । अग्निं । पित्रोः । उपऽस्थे ॥ निऽसत्तं । अस्य । चरतः । ध्रुवस्य । विश्वा ।

दिवः । रोचना । आपप्रिऽवांसं ॥ उक्षा । महान् । अभि । ववक्षे । एनेइति । अजरः । तस्थौ । इतःऽऊतिः । ऋष्वः ॥ उर्व्याः । पदः । नि । दधाति । सानौ । रिहंति । ऊधः । अरुषासः । अस्य ॥ समानं । वत्सं । अभि । संचरंतीइतिसंऽचरंती । विष्वक् । धेनूइति । वि । चरतः । सुमेकेइतिसुऽमेके ॥ अनपऽवृज्यान् । अध्वनः । मिमानेइति । विश्वान् । केतान् । अधि । महः । दधानेइति । धीरासः । पदं । कवयः । नयंति । नाना । हृदा । रक्षमाणाः । अजुर्यं ॥ सिसासंतः । परि । अपश्यंत । सिंधुं । आविः । एभ्यः । अभवत् । सूर्यः । नॄन् ॥ दिदृक्षेण्यः । परि । काष्ठासु । जेन्यः । ईळेन्यः । महः । अभीय । जीवसे ॥ पुरुऽत्रा । यत् । अभवत् । सूः । अह । एभ्यः । गर्भेभ्यः । मघऽवा । विश्वऽदर्शतः ॥ १५ ॥ कथा । ते । अग्ने । शुचयंतः । आयोः । ददाशुः । वाजेभिः । आशुपाणाः । उभेइति । यत् । तोकेइति । तनये । दधानाः । ऋतस्य । सामन् । रणयंत । देवाः ॥ बोध । मे । अस्य । वचसः । यविष्ठ । मंहिष्ठस्य । प्रऽभृतस्य । स्वधाऽवः ॥ पीयति । त्वः । अनु । त्वः । गृणाति । वंदारुः । ते । तन्वं । वंदे । अग्ने ॥ ये । पायवः । मामतेयं । ते । अग्ने । पश्यंतः । अंधं । दुःऽइतात् । अरक्षन् ॥ ररक्ष । तान् । सुऽकृतः । विश्वऽवेदाः । दिप्संतः । इत् । रिपवः । न । अह । देभुः । यः । नः । अग्ने । अररिऽवान् । अघऽयुः । अरातिऽवा । मर्चयति । द्वयेन ॥ मंत्रः । गुरुः । पुनः । अस्तु । सः । अस्मै । अनु । मृक्षीष्ट । तन्वं । दुःऽउक्तैः ॥ उत । वा । यः । सहस्य । प्रऽविद्वान् । मर्तः । मर्तं । मर्चयति । द्वयेन ॥ अतः । पाहि । स्तवमान । स्तुवंतं । अग्ने । माकिः । नः । दुःऽइताय । धायीः ॥ १६ ॥ ० । विष्टः । मातरिश्वा । होतारं । विश्वऽअप्सुं । विश्वऽदेव्यं ॥ नि । यं ।

दधुः । मनुष्यासु । विक्षु । स्वः । न । चित्रं । वपुषे । विभाऽवं ॥
ददानं । इत् । न । ददभंत । मन्म । अग्निः । वरूथं । मम ।
तस्य । चाकन् ॥ जुषंत । विश्वानि । अस्य । कर्म । उपऽस्तुतिं ।
भरमाणस्य । कारोः । नित्ये । चित् । नु । यं । सदने । जगृभ्रे ।
प्रशस्तिऽभिः । दधिरे । यज्ञियासः ॥ प्र । सु । नयंत । गृभयंतः ।
इष्टौ । अश्वासः । न । रथ्यः । ररहाणाः ॥ पुरूणि । दस्मः ।
नि । रिणाति । जंभैः । आत् । रोचते । वने । आ । विभाऽवा ॥
आत् । अस्य । वातः । अनु । वाति । शोचिः । अस्तुः । न ।
शर्यां । असनां । अनु । द्यून् । न । यं । रिपवः । न ।
रिषण्यवः । गर्भे । संतं । रेषणाः । रेषयंति । अंधाः । अपश्याः ।
न । दभन् । अभिऽख्या । नित्यासः । ईं । प्रेतारः । अरक्षन् ॥ १७ ॥
महः । सः । रायः । आ । ईषते । पतिः । दन् । इनः । इनस्य ।
वसुनः । पदे । आ ॥ उप । ध्रजंतं । अद्रयः । विधन् । इत् ॥
सः । यः । वृषा । नरां । न । रोदस्योः । श्रवःऽभिः । अस्ति ।
जीवपीतऽसर्गः ॥ प्र । यः । सस्राणः । शिश्रीत । योनौ ॥ आ ।
यः । पुरं । नार्मिणीं । अदीदेत् । अत्यः । कविः । नभन्यः ।
न । अर्वा ॥ सूरः । न । रुरुक्वान् । शतऽआत्मा ॥ अभि । द्विजऽन्मा ।
त्री । रोचनानि । विश्वा । रजांसि । शुशुचानः । अस्थात् ॥
होता । यजिष्ठः । अपां । सधऽस्थे ॥ अयं । सः । होता । यः ।
द्विऽजन्मा । विश्वा । दधे । वार्याणि । श्रवस्या ॥ मर्तः । यः ।
अस्मै । सुऽतुकः । ददाश ॥ १८ ॥ पुरु । त्वा । दाश्वन् । वोचे ।
अरिः । अग्ने । तव । स्वित् । आ ॥ तोदस्यऽइव । शरणे ।
आ । महस्य ॥ वि । अनिनस्य । धनिनः । प्रऽहोषे । चित् ।
अररुषः ॥ कदा । चन । प्रऽजिगतः । अदेवऽयोः ॥ सः । चंद्रः ।

विप्र । मर्त्यः । महः । व्राधन्ऽतमः । दिवि ॥ प्रऽप्र । इत् । ते । अग्ने । वनुषः । स्याम ॥ १९ ॥ मित्रं । न । यं । शिम्या । गोषु । गव्यवः । सुऽआध्यः । विदथे । अपऽसु । जीजनन् ॥ अरेजेतां । रोदसीइति । पाजसा । गिरा । प्रति । प्रियं । यजतं । जनुषां । अवः ॥ यत् । ह । त्यत् । वां । पुरुऽमीळ्हस्य । सोमिनः । प्र । मित्रासः । न । दधिरे । सुऽआभुवः । अध । क्रतुं । विदतं । गातुं । अर्चते । उत । श्रुतं । वृषणा । पस्त्यऽवतः ॥ आ । वां । भूषन् । क्षितयः । जन्म । रोदस्योः । प्रऽवाच्यं । वृषणा । दक्षसे । महे ॥ यत् । ईं । ऋताय । भरथः । यत् । अर्वते । प्र । होत्रया । शिम्या । वीथः । अध्वरं ॥ प्र । सा । क्षितिः । असुरा । या । महि । प्रिया । ऋतऽवानौ । ऋतं । आ । घोषथः । बृहत् ॥ युवं । दिवः । बृहतः । दक्षं । आऽभुवं । गां । न । धुरि । उप । युजाथेइति । अपः ॥ महीइति । अत्र । महिना । वारं । ऋण्वथः । अरेणवः । तुजः । आ । सद्मन् । धेनवः ॥ स्वरंति । ताः । उपरऽताति । सूर्यं । आ । निऽम्रुचः । उषसः । तक्वीःऽइव ॥ २० ॥ आ । वां । ऋताय । केशिनीः । अनूषत । मित्र । यत्र । वरुण । गातुं । अर्चथः ॥ अव । त्मना । सृजतं । पिन्वतं । धियः । युवं । विप्रस्य । मन्मनां । इरज्यथः ॥ यः । वां । यज्ञैः । शशमानः । ह । दाशति । कविः । होता । यजति । मन्मऽसाधनः ॥ उप । अह । तं । गच्छथः । वीथः । अध्वरं । अच्छ । गिरः । सुऽमतिं । गंतं । अस्मयूइत्यस्मऽयू ॥ युवां । यज्ञैः । प्रथमा । गोभिः । अंजते । ऋतऽवाना । मनसः । न । प्रऽयुक्तिषु ॥ भरंति । वां । मन्मना । संऽयता । गिरः । अदृप्यता । मनसा । रेवत् । आशाथेइति ॥ रेवत् । वयः ।

दधाथेइति । रेवत् । आशाथेइति । नरा । मायाभिः । इतःऽऊति ।
माहिनं ॥ न । वां । द्यावः । अहऽभिः । न । उत । सिंधवः । न ।
देवऽत्वं । पणयः । न । आनशुः । मघं ॥ २१ ॥ युवं । वस्त्राणि ।
पीवसा । वसाथेइति । युवोः । अच्छिद्राः । मंतवः । ह । सर्गाः ॥
अव । अतिरतं । अनृतानि । विश्वा । ऋतेन । मित्रावरुणा ।
सचेथेइति ॥ एतत् । चन । त्वः । वि । चिकेतत् । एषां । सत्यः ।
मंत्रः । कविऽशस्तः । ऋघावान् ॥ त्रिःऽअश्रिं । हंति । चतुःऽअश्रिः ।
उग्रः । देवऽनिदः । ह । प्रथमाः । अजूर्यन् ॥ अपात् । एति ।
प्रथमा । पत्ऽवतीनां । कः । तत् । वां । मित्रावरुणा । आ ।
चिकेत ॥ गर्भः । भारं । भरति । आ । चित् । अस्य । ऋतं ।
पिपर्ति । अनृतं । नि । तारीत् ॥ प्रऽयंतं । इत् । परि । जारं ।
कनीनां । पश्यामसि । न । उपऽनिपद्यमानं ॥ अनवऽपृग्णा ।
विऽतता । वसानं । प्रियं । मित्रस्य । वरुणस्य । धाम ॥ अनश्वः ।
जातः । अनभीशुः । अर्वा । कनिक्रदत् । पतयत् । ऊर्ध्वऽसानुः ॥
अचित्तं । ब्रह्म । जुजुषुः । युवानः । प्र । मित्रे । धाम । वरुणे ।
गृणंतः ॥ आ । धेनवः । मामतेयं । अवंतीः । ब्रह्मऽप्रियं । पीपयन् ।
सस्मिन् । ऊधन् ॥ पित्वः । भिक्षेत । वयुनानि । विद्वान् ।
आसा । आऽविवासन् । अदितिं । उरुष्येत् ॥ आ । वां । मित्रावणा ।
हव्यऽजुष्टिं । नमसा । देवौ । अवसा । ववृत्यां ॥ अस्माकं ।
ब्रह्म । पृतनासु । सह्याः । अस्माकं । वृष्टिः । दिव्या ।
सुऽपारा ॥ २२ ॥ यजामहे । वां । महः । सऽजोषाः । हव्येभिः ।
मित्रावरुणा । नमःऽभिः ॥ घृतैः । घृतस्नूइतिघृतऽस्नू । अध ।
यत् । वां । अस्मेइति । अध्वर्यवः । न । धीतिऽभिः ॥ भरंति ।
प्रऽस्तुतिः । वां । धाम । न । प्रऽयुक्तिः । अयामि । मित्रावरुणा ।

सुऽवृक्तिः ॥ अनक्ति । यत् । वां । विदथेषु । होता । सुम्नं । वां । सूरिः । वृषणौ । इयक्षन् ॥ पीपाय । धेनुः । अदितिः । ऋताय । जनाय । मित्रावरुणा । हविःऽदे ॥ हिनोति । यत् । वां । विदथे । सपर्यन् । सः । रातऽहव्यः । मानुषः । न । होता ॥ उत । वां । विक्षु । मद्यासु । अंधः । गावः । आपः । च । पीपयंत । देवीः ॥ उतोइति । नः । अस्य । पूर्व्यः । पतिः । दन् । वीतं । पातं । पयसः । उस्रियायाः ॥ २३ ॥ विष्णोः । नु । कं । वीर्याणि । प्र । वोचं । यः । पार्थिवानि । विऽममे । रजांसि ॥ यः । अस्कंभायत् । उत्ऽतरं । सधऽस्थं । विऽचक्रमाणः । त्रेधा । उरुऽगायः ॥ प्र । तत् । विष्णुः । स्तवते । वीर्येण । मृगः । न । भीमः । कुचरः । गिरिऽस्थाः ॥ यस्य । उरुषु । त्रिषु । विऽक्रमणेषु । अधिऽक्षियंति । भुवनानि । विश्वा ॥ प्र । विष्णवे । शूषं । एतु । मन्म । गिरिऽक्षिते । उरुऽगायाय । वृष्णे ॥ यः । इदं । दीर्घं । प्रऽयतं । सधऽस्थं । एकः । विऽममे । त्रिऽभिः । इत् । पदेभिः ॥ यस्य । त्री । पूर्णा । मधुना । पदानि । अक्षीयमाणा । स्वधया । मदंति ॥ यः । ऊँइति । त्रिऽधातु । पृथिवीं । उत । द्यां । एकः । दाधार । भुवनानि । विश्वा ॥ तत् । अस्य । प्रियं । अभि । पाथः । अश्यां । नरः । यत्र । देवऽयवः । मदंति ॥ उरुऽक्रमस्य । सः । हि । बंधुः । इत्था । विष्णोः । पदे । परमे । मध्वः । उत्सः ॥ ता । वां । वास्तूनि । उश्मसि । गमध्यै । यत्र । गावः । भूरिऽशृंगाः । अयासः ॥ अत्र । अह । तत् । उरुऽगायस्य । वृष्णः । परमं । पदं । अव । भाति । भूरि ॥ २४ ॥ ० ॥ अंधसः । धियाऽयते । महे । शूराय । विष्णवे । च । अर्चत ॥ या । सानुनि । पर्वतानां । अदाभ्या । महः । तस्थतुः ।

अवंताऽइव । साधुना ॥ त्वेषं । इत्था । संऽअरंणं । शिमीऽवतोः । इंद्राविष्णूइति । सुतऽपाः । वां । उरुष्यति ॥ या । मर्त्याय । प्रतिऽधीयमानं । इत् । कृशानोः । अस्तुः । असनां । उरुष्यथः ॥ ताः । ईं । वर्धंति । महि । अस्य । पौंस्यं । नि । मातरा । नयति । रेतसे । भुजे ॥ दधाति । पुत्रः । अवरं । परं । पितुः । नाम । तृतीयं । अधि । रोचने । दिवः ॥ तत्ऽतत् । इत् । अस्य । पौंस्यं । गृणीमसि । इनस्य । त्रातुः । अवृकस्य । मीळ्हुषः ॥ यः । पार्थिवानि । त्रिऽभिः । इत् । विगामऽभिः । उरु । क्रमिष्ट । उरुऽगायाय । जीवसे ॥ द्वेइति । इत् । अस्य । क्रमणेइति । स्वःऽदृशः । अभिऽख्याय । मर्त्यः । भुरण्यति ॥ तृतीयं । अस्य । नकिः । आ । दधर्षति । वयः । चन । पतयंतः । पतत्रिणः ॥ चतुःऽभिः । साकं । नवतिं । च । नामऽभिः । चक्रं । न । वृत्तं । व्यतीन् । अवीविपत् । बृहत्ऽशरीरः । विऽमिमानः । ऋक्कऽभिः । युवा । अकुमारः । प्रति । एति । आऽहवं ॥ २५ ॥ भव । मित्रः । न । शेव्यः । घृतऽआसुतिः । विभूतऽद्युम्नः । एवऽयाः । ऊँइति । सऽप्रथाः । अध । ते । विष्णोइति । विदुषा । चित् । अर्ध्यः । स्तोमः । यज्ञः । च । राध्यः । हविष्मता ॥ यः । पूर्व्याय । वेधसे । नवीयसे । सुमत्ऽजानये । विष्णवे । ददाशति ॥ यः । जातं । अस्य । महतः । महि । ब्रवत् । सः । इत् । ऊँइति । श्रवःऽभिः । युज्यं । चित् । अभि । असत् ॥ तं । ऊँइति । स्तोतारः । पूर्व्यं । यथा । विद । ऋतस्य । गर्भं । जनुषा । पिपर्तन ॥ आ । अस्य । जानंतः । नाम । चित् । विवक्तन । महः । ते । विष्णोइति । सुऽमतिं । भजामहे ॥ तं । अस्य । राजा । वरुणः । तं । अश्विना । क्रतुं । सचंत ।

मारुतस्य । वेधसः ॥ दधार । दक्षं । उत्ऽतमं । अहःऽविदं । व्रजं । च । विष्णुः । सखिऽवान् । अपऽऊर्णुते ॥ आ । यः । विवाय । सचथाय । दैव्यः । इंद्राय । विष्णुः । सुऽकृते । सुऽकृत्ऽतरः ॥ वेधाः । अजिन्वत् । त्रिऽसधस्थः । आर्यं । ऋतस्य । भागे । यजमानं । आ । अभजत् ॥ २६ ॥ अबोधि । अग्निः । ज्मः । उत् । एति । सूर्यः । वि । उषाः । चंद्रा । मही । आवः । अर्चिषा ॥ अयुक्षातां । अश्विना । यातवे । रथं । प्र । असावीत् । देवः । सविता । जगत् । पृथक् ॥ यत् । युंजाथेइति । वृषणं । अश्विना । रथं । घृतेन । नः । मधुना । क्षत्रं । उक्षतं ॥ अस्माकं । ब्रह्म । पृतनासु । जिन्वतं । वयं । धना । शूरऽसाता । भजेमहि ॥ अर्वाङ् । त्रिऽचक्रः । मधुऽवाहनः । रथः । जीरऽअश्वः । अश्विनोः । यातु । सुऽस्तुतः ॥ त्रिऽवंधुरः । मघऽवा । विश्वऽसौभगः । शं । नः । आ । वक्षत् । द्विऽपदे । चतुःऽपदे ॥ ० ॥ मधुऽमत्या । नः । कशया । मिमिक्षतं ॥ ० ॥ युवं । ह । गर्भं । जगतीषु । धत्थः । युवं । विश्वेषु । भुवनेषु । अंतरिति ॥ युवं । अग्निं । च । वृषणौ । अपः । च । वनस्पतीन् । अश्विनौ । ऐरयेथां ॥ युवं । ह । स्थः । भिषजा । भेषजेभिः । अथोइति । ह । स्थः । रथ्या । रथ्येभिरितिरथ्येभिः ॥ अथोइति । ह । क्षत्रं । अधि । धत्थः । उग्रा । यः । वां । हविष्मान् । मनसा । ददाश ॥ २७ ॥ अध्यायः ॥ २ ॥

इति द्वितीयाष्टके द्वितीयोध्यायः



## ॥ अथ तृतीयोऽध्यायः ॥

हरिः ॐ ॥ वसूइति । रुद्रा । पुरुमंतूइतिपुरुऽमंतू । वृधंता । दशस्यतं । नः । वृषणौ । अभिष्टौ ॥ दस्रा । ह । यत् । रेक्णः । औचथ्यः । वां । प्र । यत् । सस्राथेइति । अकवाभिः । ऊती ॥ कः । वां । दाशत् । सुऽमतये । चित् । अस्यै । वसूइति । यत् । धेथेइति । नमसा । पदे । गोः ॥ जिगृतं । अस्मेइति । रेवतीः । पुरंऽधीः । कामप्रेणऽइव । मनसा । चरंता ॥ युक्तः । ह । यत् । वां । तौग्र्याय । पेरुः । वि । मध्ये । अर्णसः । धायि । पज्रः ॥ उप । वां । अवः । शरणं । गमेयं । शूरः । न । अज्म । पतयत्ऽभिः । एवैः ॥ उपऽस्तुतिः । औचथ्यं । उरुष्येत् । मा । मां । इमेइति । पतत्रिणीइति । वि । दुग्धां ॥ मा । मां । एधः । दशऽतयः । चितः । धाक् । प्र । यत् । वां । बद्धः । त्मनि । खादति । क्षां ॥ न । मा । गरन् । नद्यः । मातृऽतमाः । दासाः । यत् । ईं । सुऽसमुब्धं । अवऽअधुः ॥ शिरः । यत् । अस्य । त्रैतनः । विऽतक्षत् । स्वयं । दासः । उरः । अंसौ । अपि । ग्धेतिग्ध ॥ दीर्घऽतमाः । मामतेयः । जुजुर्वान् । दशमे । युगे ॥ अपां । अर्थं । यतीनां । ब्रह्मा । भवति । सारथिः ॥ १ ॥ प्र । द्यावा । यज्ञैः । पृथिवीइति । ऋतऽवृधा । महीइति । स्तुषे । विदथेषु । प्रऽचेतसा ॥ देवेभिः । येइति । देवपुत्रेइतिदेवऽपुत्रे । सुऽदंससा ॥ इत्था । धिया । वार्याणि । प्रऽभूषतः ॥ उत । मन्ये । पितुः । अद्रुहः । मनः । मातुः । महि । स्वऽतवः । तत् । हवीमऽभिः । सुऽरेतसा । पितरा । भूम । चक्रतुः । उरु । प्रऽजायाः ।

अमृतं । वरीमऽभिः । ते । सूनवः । सुऽअपसः । सुऽदंससः । महीइति । जज्ञुः । मातरा । पूर्वऽचित्तये ॥ स्थातुः । च । सत्यं । जगतः । च । धर्मणि । पुत्रस्य । पाथः । पदं । अद्वयाविनः ॥ ते । मायिनः । ममिरे । सुऽप्रचेतसः । जामीइति । सयोनीइतिसऽयोनी । मिथुना । संऽओकसा ॥ नव्यंऽनव्यं । तंतुं । आ । तन्वते । दिवि । समुद्रे । अंतरिति । कवयः । सुऽदीतयः ॥ तत् । राधः । अद्य । सवितुः । वरेण्यं । वयं । देवस्य । प्रऽसवे । मनामहे ॥ अस्मभ्यं । द्यावापृथिवीइति । सुऽचेतुना । रयिं । धत्तं । वसुऽमंतं । शतऽग्विनं ॥ २ ॥ तेइति । हि । द्यावापृथिवीइति । विश्वऽशंभुवा । ऋतवरीइत्यृतऽवरी । रजसः । धारयत्कवीइतिधारयत्ऽकवी ॥ सुजन्मनीइतिसुऽजन्मनी । धिषणेइति । अंतः । ईयते । देवः । देवीइति । धर्मणा । सूर्यः । शुचिः ॥ उरुऽव्यचसा । महिनीइति । असश्चता । पिता । माता । च । भुवनानि । रक्षतः ॥ सुधृष्टमेइतिसुऽधृष्टमे । वपुष्ये३इति । न । रोदसीइति । पिता । यत् । सीं । अभि । रूपैः । अवासयत् ॥ सः । वह्निः । पुत्रः । पित्रोः । पवित्रऽवान् । पुनाति । धीरः । भुवनानि । मायया ॥ धेनुं । च । पृश्निं । वृषभं । सुऽरेतसं । विश्वाहा । शुक्रं । पयः । अस्य । धुक्षत ॥ अयं । देवानां । अपसां । अपःऽतमः । यः । जजान । रोदसीइति । विश्वऽशंभुवा ॥ वि । यः । ममे । रजसीइति । सुक्रतुऽयया । अजरेभिः । स्कंभनेभिः । सं । आनृचे ॥ तेइति । नः । गृणानेइति । महिनीइति । महि । श्रवः । क्षत्रं । द्यावापृथिवीइति । धासथः । बृहत् ॥ येन । अभि । कृष्टीः । ततनाम । विश्वहा । पनाय्यं । ओजः । अस्मेइति । सं । इन्वतं ॥ ३ ॥ किं । ऊँइति । श्रेष्ठः । किं । यविष्ठः । नः । आ । अजगन् । किं । ईयते । दूत्यं । कत् । यत् । ऊचिम ॥ न । निंदिम । चमसं । यः

महाऽकुलः । अग्ने । भ्रातः । द्रुणः । इत् । भूतिं । ऊदिम ॥ एकं । चमसं । चतुरः । कृणोतन । तत् । वः । देवाः । अब्रुवन् । तत् । वः । आ । अगमं ॥ सौधन्वनाः । यदि । एव । करिष्यथ । साकं । देवैः । यज्ञियासः । भविष्यथ ॥ अग्निं । दूतं । प्रति । यत् । अब्रवीतन । अश्वः । कर्त्वः । रथः । उत । इह । कर्त्वः ॥ धेनुः । कर्त्वा । युवशा । कर्त्वा । द्वा । तानि । भ्रातः । अनु । वः । कृत्वी । आ । इमसि । चकृऽवांसः । ऋभवः । तत् । अपृच्छत । क्व । इत् । अभूत् । यः । स्यः । दूतः । नः । आ । अजगन् ॥ यदा । अवऽअख्यत् । चमसान् । चतुरः । कृतान् । आत् । इत् । त्वष्टा । ग्नासु । अंतः । नि । आनजे ॥ हनाम । एनान् । इति । त्वष्टा ॥ यत् । अब्रवीत् । चमसं । ये । देवऽपानं । अनिंदिषुः ॥ अन्या । नामानि । कृण्वते । सुते । सचा । अन्यैः । एनान् । कन्या । नामऽभिः । स्परत् ॥ ४ ॥

इंद्रः । हरीइति । युयुजे । अश्विना । रथं । बृहस्पतिः । विश्वऽरूपां । उप । आजत ॥ ऋभुः । विऽभ्वा । वाजः । देवान् । अगच्छत । सुऽअपसः । यज्ञियं । भागं । ऐतन ॥ निः । चर्मणः । गां । अरिणीत । धीतिऽभिः । या । जरंता । युवशा । ता । अकृणोतन ॥ सौधन्वनाः । अश्वात् । अश्वं । अतक्षत । युक्त्वा । रथं । उप । देवान् । अयातन ॥ इदं । उदकं । पिबत । इति । अब्रवीतन । इदं । वा । घ । पिबत । मुंजऽनेजनं ॥ सौधन्वनाः । यदि । तत् । नऽइव । हर्यथ । तृतीये । घ । सवने । मादयाध्वै ॥ आपः । भूयिष्ठाः । इति । एकः । अब्रवीत् । अग्निः । भूयिष्ठः । इति । अन्यः । अब्रवीत् ॥ वधःऽयतीं । बहुऽभ्यः । प्र । एकः । अब्रवीत् । ऋता । वदंतः । चमसान् । अपिंशत ॥ श्रोणां । एकः । उदकं । गां । अव । अजति । मांसं । एकः । पिंशति । सूनया । आऽभृतं ॥ आ । निऽम्रुचः ।

शकृत् । एकः । अप । अभरत् । किं । स्वित् । पुत्रेभ्यः ।
पितरौ । उप । आवतुः ॥ ५ ॥ उद्वत्ऽसु । अस्मै । अकृणोतन ।
तृणं । निवत्ऽसु । अपः । सुऽअपस्यया । नरः । अगोह्यस्य ।
यत् । अशस्तन । गृहे । तत् । अद्य । इदं । ऋभवः । न ।
अनु । गच्छथ ॥ संऽमील्य । यत् । भुवना । परिऽअसर्पत । क्व ।
स्वित् । तात्या । पितरा । वः । आसतुः ॥ अशपत । यः ।
करस्नं । वः । आऽददे । यः । प्र । अब्रवीत् । प्रो इति । तस्मै ।
अब्रवीतन ॥ सुसुप्वांसः । ऋभवः । तत् । अपृच्छत । अगोह्य ।
कः । इदं । नः । अबूबुधत् ॥ श्वानं । बस्तः । बोधयितारं ।
अब्रवीत् । संवत्सरे । इदं । अद्य । वि । अख्यत ॥ दिवा ।
यांति । मरुतः । भूम्या । अग्निः । अयं । वातः । अंतरिक्षेण ।
याति ॥ अत्ऽभिः । याति । वरुणः । समुद्रैः । युष्मान् ।
इच्छंतः । शवसः । नपातः ॥ ६ ॥ मा । नः । मित्रः । वरुणः ।
अर्यमा । आयुः । इंद्रः । ऋभुक्षाः । मरुतः । परि । ख्यन् ॥
यत् । वाजिनः । देवऽजातस्य । सप्तेः । प्रऽवक्ष्यामः । विदथे ।
वीर्याणि ॥ यत् । निःऽनिजा । रेक्णसा । प्रावृतस्य । रातिं ।
गृभीतां । मुखतः । नयंति ॥ सुऽप्राङ् । अजः । मेम्यत् ।
विश्वऽरूपः । इंद्रापूष्णोः । प्रियं । अपि । एति । पाथः ॥ एषः ।
छागः । पुरः । अश्वेन । वाजिना । पूष्णः । भागः । नीयते ।
विश्वऽदेव्यः ॥ अभिऽप्रियं । यत् । पुरोळाशं । अर्वता । त्वष्टा ।
इत् । एनं । सौश्रवसाय । जिन्वति ॥ यत् । हविष्यं । ऋतुऽशः ।
देवऽयानं । त्रिः । मानुषाः । परि । अश्वं । नयंति ॥ अत्र ।
पूष्णः । प्रथमः । भागः । एति । यज्ञं । देवेभ्यः । प्रतिऽवेदयन् ।
अजः ॥ होता । अध्वर्युः । आऽवयाः । अग्निऽइंधः । ग्रावऽग्राभः ।

उत । शंस्ता ॥ सुऽविप्रः ॥ तेन । यज्ञेन । सुऽअरंकृतेन । सुऽइष्टेन । वक्षणाः । आ । पृणध्वं ॥ ७ ॥ यूपऽव्रस्काः । उत । ये । यूपऽवाहाः । चषालं । ये । अश्वऽयूपाय । तक्षति ॥ ये । च । अर्वते । पचनं । संऽभरंति । उतोइति । तेषां । अभिऽगूर्तिः । नः । इन्वतु ॥ उप । प्र । अगात् । सुऽमत् । मे । अधायि । मन्म । देवानां । आशाः । उप । वीतऽपृष्ठः ॥ अनु । एनं । विप्राः । ऋषयः । मदंति । देवानां । पुष्टे । चकृम । सुऽबंधुं ॥ यत् । वाजिनः । दाम । संऽदानं । अर्वतः । या । शीर्षण्या । रशना । रज्जुः । अस्य ॥ यत् । वा । घ । अस्य । प्रऽभृतं । आस्ये । तृणं । सर्वा । ता । ते । अपि । देवेषु । अस्तु ॥ यत् । अश्वस्य । क्रविषः । मक्षिका । आश । यत् । वा । स्वरौ । स्वऽधितौ । रिप्तं । अस्ति । यत् । हस्तयोः । शमितुः । यत् । नखेषु ॥ ० ॥ यत् । ऊवध्यं । उदरस्य । अपऽवाति । यः । आमस्य । क्रविषः । गंधः । अस्ति ॥ सुऽकृता । तत् । शमितारः । कृण्वंतु । उत । मेधं । शृतऽपाकं । पचंतु ॥ ८ ॥ यत् । ते । गात्रात् । अग्निना । पच्यमानात् । अभि । शूलं । निऽहतस्य । अवऽधावति ॥ मा । तत् । भूम्यां । आ । श्रिषत् । मा । तृणेषु । देवेभ्यः । तत् । उशत्ऽभ्यः । रातं । अस्तु ॥ ये । वाजिनं । परिऽपश्यंति । पक्वं । ये । ईं । आहुः । सुरभिः । निः । हर । इति ॥ ये । च । अर्वतः । मांसऽभिक्षां । उपऽआसते ॥ ० ॥ यत् । निऽईक्षणं । मांस्पचन्याः । उखायाः । या । पात्राणि । यूष्णः । आऽसेचनानि ॥ ऊष्मण्या । अपिऽधाना । चरूणां । अंकाः । सूनाः । परि । भूषंति । अश्वं ॥ निऽक्रमणं । निऽसदनं । विऽवर्तनं । यत् । च । पड्बीशं । अर्वतः ॥ यत् । च । पपौ । यत् । च । घासिं ।

जघास ॥ ० ॥ मा । त्वा । अग्निः । ध्वनयीत् । धूमऽगंधिः । मा । उखा । भ्राजंती । अभि । विक्त । जघ्रिः ॥ इष्टं । वीतं । अभिऽगूर्तं । वषट्ऽकृतं । तं । देवासः । प्रति । गृभ्णंति । अश्वं ॥ ९ ॥ यत् । अश्वाय । वासः । उपऽस्तृणंति । अधीवासं । या । हिरण्यानि । अस्मै ॥ संऽदानं । अर्वंतं । पड्वीशं । प्रिया । देवेषु । आ । यमयंति ॥ यत् । ते । सादे । महसा । शूकृतस्य । पार्ष्ण्या । वा । कशया । वा । तुतोद ॥ स्रुचाऽइव । ता । हविषः । अध्वरेषु ॥ ० ॥ ब्रह्मणा । सूदयामि ॥ चतुःऽत्रिंशत् । वाजिनः । देवऽबंधोः । वंक्रीः । अश्वस्य । स्वऽधितिः । सं । एति ॥ अच्छिद्रा । गात्रा । वयुना । कृणोत । परुःऽपरुः । अनुऽघुष्य । वि । शस्त ॥ एकः । त्वष्टुः । अश्वस्य । विऽशस्ता । द्वा । यंतारा । भवतः । तथा । ऋतुः ॥ या । ते । गात्राणां । ऋतुऽथा । कृणोमि । ताऽता । पिंडानां । प्र । जुहोमि । अग्नौ ॥ मा । त्वा । तपत् । प्रियः । आत्मा । अपिऽयंतं । मा । स्वऽधितिः । तन्वः । आ । तिस्थिपत् । ते ॥ मा । ते । गृध्नुः । अविऽशस्ता । अतिऽहाय । छिद्रा । गात्राणि । असिना । मिथु । करितिकः ॥ न । वै । ऊँइति । एतत् । म्रियसे । न । रिष्यसि । देवान् । इत् । एषि । पथिऽभिः । सुऽगेभिः ॥ हरीइति । ते । युंजा । पृषतीइति । अभूतां । उप । अस्थात् । वाजी । धुरि । रासभस्य ॥ सुऽगव्यं । नः । वाजी । सुऽअश्व्यं । पुंसः । पुत्रान् । उत । विश्वऽपुषं । रयिं । अनागाःऽत्वं । नः । अदितिः । कृणोतु । क्षत्रं । नः । अश्वः । वनतां । हविष्मान् ॥ १० ॥ यत् । अक्रंदः । प्रथमं । जायमानः । उत्ऽयन् । समुद्रात् । उत । वा । पुरीषात् ॥ श्येनस्य । पक्षा । हरिणस्य । बाहूइति । उपऽस्तुत्यं । महि । जातं । ते । अर्वन् ॥ यमेन । दत्तं । त्रितः । एनं । अयुनक् ।

इंद्रः । एनं । प्रथमः । अधि । अतिष्ठत् ॥ गंधर्वः । अस्य । रशनां । अगृभ्णात् । सूरात् । अश्वं । वसवः । निः । अतष्ट ॥ असि । यमः । असि । आदित्यः । अर्वन् । असि । त्रितः । गुह्येन । व्रतेन ॥ असि । सोमेन । समया । विऽपृक्तः । आहुः । ते । त्रीणि । दिवि । बंधनानि ॥ त्रीणि । ते । आहुः । दिवि । बंधनानि । त्रीणि । अप्ऽसु । त्रीणि । अंतरिति । समुद्रे ॥ उतऽइव । मे । वरुणः । छन्त्सि । अर्वन् । यत्र । ते । आहुः । परमं । जनित्रं ॥ इमा । ते । वाजिन् । अवऽमार्जनानि । इमा । शफानां । सनितुः । निऽधाना ॥ अत्र । ते । भद्राः । रशनाः । अपश्यं । ऋतस्य । याः । अभिऽरक्षंति । गोपाः ॥ ११ ॥ आत्मानं । ते । मनसा । आरात् । अजानां । अवः । दिवा । पतयंतं । पतंगं ॥ शिरः । अपश्यं । पथिऽभिः । सुऽगेभिः । अरेणुऽभिः । जेहमानं । पतत्रि ॥ अत्र । ते । रूपं । उत्ऽतमं । अपश्यं । जिगीषमाणं । इषः । आ । पदे । गोः ॥ यदा । ते । मर्तः । अनु । भोगं । आनट् । आत् । इत् । ग्रसिष्ठः । ओषधीः । अजीगरिति ॥ अनु । त्वा । रथः । अनु । मर्यः । अर्वन् । अनु । गावः । अनु । भगः । कनीनां ॥ अनु । व्रातासः । तव । सख्यं । ईयुः । अनु । देवाः । ममिरे । वीर्यं । ते ॥ हिरण्यऽशृंगः । अयः । अस्य । पादाः । मनःऽजवाः । अवरः । इंद्रः । आसीत् ॥ देवाः । इत् । अस्य । हविःऽअद्यं । आयन् । यः । अर्वंतं । प्रथमः । अधिऽअतिष्ठत् ॥ ईर्मऽअंतासः । सिलिकऽमध्यमासः । सं । शूरणासः । दिव्यासः । अत्याः ॥ हंसाःऽइव । श्रेणिऽशः । यतंते । यत् । आक्षिषुः । दिव्यं । अज्मं । अश्वाः ॥ १२ ॥ तव । शरीरं । पतयिष्णु । अर्वन् । तव । चित्तं । वातःऽइव । ध्रजीमान् । तव ।

शृंगाणि । विऽस्थिता । पुरुऽत्रा । अरण्येषु । जर्भुराणा । चरंति ॥ ० ॥ शसनं । वाजी । अर्वा । देवद्रीचा । मनसा । दीध्यानः ॥ अजः । पुरः । नीयते । नाभिः । अस्य । अनु । पश्चात् । कवयः । यंति । रेभाः ॥ ० ॥ परमं । यत् । सधऽस्थं । अर्वान् । अच्छ । पितरं । मातरं । च । अद्य । देवान् । जुष्टऽतमः । हि । गम्याः । अथ । आ । शास्ते । दाशुषे । वार्याणि ॥ १३ ॥ अस्य । वामस्य । पलितस्य । होतुः । तस्य । भ्राता । मध्यमः । अस्ति । अश्नः ॥ तृतीयः । भ्राता । घृतऽपृष्ठः । अस्य । अत्र । अपश्यं । विश्पतिं । सप्तऽपुत्रं ॥ सप्त । युंजंति । रथं । एकऽचक्रं । एकः । अश्वः । वहति । सप्तऽनामा ॥ त्रिऽनाभि । चक्रं । अजरं । अनर्वं । यत्र । इमा । विश्वा । भुवना । अधि । तस्थुः ॥ इमं । रथं । अधि । ये । सप्त । तस्थुः । सप्तऽचक्रं । सप्त । वहंति । अश्वाः ॥ सप्त । स्वसारः । अभि । सं । नवंते । यत्र । गवां । निऽहिता । सप्त । नाम ॥ कः । ददर्श । प्रथमं । जायमानं । अस्थन्ऽवंतं । यत् । अनस्था । बिभर्ति ॥ भूम्याः । असुः । असृक् । आत्मा । क्व । स्वित् । कः । विद्वांसं । उप । गात् । प्रष्टुं । एतत् ॥ पाकः । पृच्छामि । मनसा । अविऽजानान् । देवानां । एना । निऽहिता । पदानि ॥ वत्से । बष्कये । अधि । सप्त । तंतून् । वि । तत्निरे । कवयः । ओतवै । ऊँइति ॥ १४ ॥ अचिकित्वान् । चिकितुषः । चित् । अत्र । कवीन् । पृच्छामि । विद्मने । न । विद्वान् ॥ वि । यः । तस्तंभ । षट् । इमा । रजांसि । अजस्य । रूपे । किं । अपि । स्वित् । एकं ॥ इह । ब्रवीतु । यः । ईं । अंग । वेद । अस्य । वामस्य । निऽहितं । पदं । वेरितिवेः ॥ शीर्ष्णः । क्षीरं । दुह्रते । गावः । अस्य । व्रव्रिं । वसानाः । उदकं । पदा । अपुः ॥ माता ।

पि॒तरं॑ । ऋ॒ते । आ । ब॒भा॒ज॒ । धी॒ती । अग्रे॑ । मन॑सा । सं । हि । ज॒ग्मे ॥ सा । बी॒भ॒त्सुः । गर्भ॑ऽरसा । निऽवि॑द्धा । नम॑स्वंतः । इत् । उ॒प॒ऽवा॒कं । ई॒यु॒ः ॥ यु॒क्ता । मा॒ता । आ॒सी॒त् । धु॒रि । दक्षि॑णायाः । अति॑ष्ठत् । गर्भः॑ । वृ॒ज॒नीषु॑ । अं॒तरिति॑ ॥ अमी॑मेत् । व॒त्सः । अनु॑ । गां । अ॒प॒श्य॒त् । वि॒श्व॒ऽरू॒प्यं॑ । त्रि॒षु । योज॑नेषु ॥ ति॒स्रः । मा॒तॄः । त्रीन् । पि॒तॄन् । बिभ्र॑त् । एकः॑ । ऊ॒र्ध्वः । त॒स्थौ॒ । न । ई॒ं । अव॑ । ग्ल॒प॒यं॒ति॒ ॥ म॒त्र॒यं॑ते । दि॒वः । अ॒मुष्य॑ । पृ॒ष्ठे । वि॒श्व॒ऽवि॒दं॑ । वाचं॑ । अवि॑श्वऽमिन्वां । ॥ १५ ॥ द्वाद॑शऽअरं । न॒हि । तत् । जरा॑य । वर्व॑र्ति । च॒क्रं । परि॑ । द्यां । ऋ॒तस्य॑ । आ । पु॒त्राः ॥ अ॒ग्ने॒ । मि॒थु॒नासः॑ । अत्र॑ । स॒प्त । श॒तानि॑ । विं॒श॒तिः । च॒ । त॒स्थु॒ः ॥ पंच॑ऽपादं । पि॒तरं॑ । द्वाद॑शऽआकृतिं । दि॒वः । आ॒हु॒ः । परे॑ । अर्धे॑ । पु॒री॒षिणं॑ ॥ अथ॑ । इ॒मे । अ॒न्ये । उप॑रे । वि॒ऽच॒क्ष॒णं । स॒प्तऽच॑क्रे । षट्ऽअ॑रे । आ॒हु॒ः । अर्पि॑तं ॥ पंच॑ऽअरे । च॒क्रे । प॒रि॒ऽवर्त॑माने । तस्मि॑न् । आ । त॒स्थु॒ः । भुव॑नानि । विश्वा॑ ॥ तस्य॑ । न । अक्षः॑ । त॒प्य॒ते॒ । भूरि॑ऽभारः । स॒नात् । ए॒व । न । शी॒र्य॒ते॒ । स॒ऽना॑भिः । स॒ऽने॑मि । च॒क्रं । अ॒जरं॑ । वि । व॒वृ॒ते॒ । उ॒त्ता॒नायां॑ । दश॑ । यु॒क्ताः । व॒हं॒ति॒ ॥ सूर्य॑स्य । चक्षुः॑ । रज॑सा । ए॒ति॒ । आऽवृ॑तं । तस्मि॑न् । आर्पि॑ता । भुव॑नानि । विश्वा॑ ॥ सा॒क॒ंऽजानां॑ । स॒प्तथं॑ । आ॒हु॒ः । ए॒क॒ऽजं । ष॒ट् । इत् । य॒माः । ऋष॑यः । दे॒व॒ऽजाः । इति॑ ॥ तेषां॑ । इ॒ष्टानि॑ । विऽहि॑तानि । धा॒म॒ऽशः । स्था॒त्रे । रे॒जं॒ते॒ । विऽकृ॑तानि । रू॒प॒ऽशः ॥ १६ ॥ स्त्रियः॑ । स॒तीः । तान् । ऊँइति॑ । मे॒ । पुं॒सः । आ॒हु॒ः । पश्य॑त् । अ॒क्ष॒ण॒ऽवान् । न । वि । चे॒त॒त् । अं॒धः ॥ क॒विः । यः । पु॒त्रः । सः । ई॒ं । आ । चि॒के॒त॒ । यः । ता । वि॒ऽजा॒नात् । सः । पि॒तुः । पि॒ता । अ॒स॒त् । अ॒वः । परे॑ण । प॒रः । ए॒ना । अव॑रेण । प॒दा । व॒त्सं । बि॒भ्र॒ती । गौः ।

उत् । अस्थात् ॥ सा । कद्रीची । कं । स्वित् । अर्धं । परा ।
अगात् । कं । स्वित् । सूते । नहि । यूथे । अंतरिति ॥ अवः ।
परेण । पितरं । यः । अस्य । अनुऽवेद । परः । एना । अवरेण ॥
कविऽयमानः । कः । इह । प्र । वोचत् । देवं । मनः । कुतः । अधि ।
प्रऽजातं ॥ ये । अर्वांचः । तान् । ऊँइति । पराचः । आहुः ।
ये । पराचः । तान् । ऊँइति । अर्वाचः । आहुः ॥ इंद्रः । च ।
या । चक्रथुः । सोम । तानि । धुरा । न । युक्ताः । रजसः ।
वहंति ॥ द्वा । सुऽपर्णा । सऽयुजा । सखाया । समानं । वृक्षं ।
परि । सस्वजातेइति ॥ तयोः । अन्यः । पिप्पलं । स्वादु । अत्ति ।
अनश्नन् । अन्यः । अभि । चाकशीति ॥ १७ ॥ यत्र । सुऽपर्णाः ।
अमृतस्य । भागं । अनिऽमेषं । विदथा । अभिऽस्वरंति ॥ इनः ।
विश्वस्य । भुवनस्य । गोपाः । सः । मा । धीरः । पाकं ।
अत्र । आ । विवेश ॥ यस्मिन् । वृक्षे । मधुऽअदः । सुऽपर्णाः ।
निऽविशंते । सुवते । च । अधि । विश्वे ॥ तस्य । इत् ।
आहुः । पिप्पलं । स्वादु । अग्रे । तत् । न । उत् । नशत् ।
यः । पितरं । न । वेद ॥ यत् । गायत्रे । अधि । गायत्रं ।
आऽहितं । त्रैस्तुभात् । वा । त्रैस्तुभं । निःऽअतक्षत ॥ यत् ।
वा । जगत् । जगति । आऽहितं । पदं । ये । इत् । विदुः ।
ते । अमृतऽत्वं । आनशुः ॥ गायत्रेण । प्रति । मिमीते । अर्कं ।
अर्केण । साम । त्रैस्तुभेन । वाकं । वाकेन । वाकं । द्विऽपदा ।
चतुःऽपदा । अक्षरेण । मिमते । सप्त । वाणीः ॥ जगता ।
सिंधुं । दिवि । अस्तभायत् । रथंऽतरे । सूर्यं । परि । अपश्यत् ।
गायत्रस्य । संऽइधः । तिस्रः । आहुः । ततः । मह्ना । प्र ।
रिरिचे । महिऽत्वा ॥ १८ ॥ उप । ह्वये । सुऽदुघां । धेनुं । एतां ।

सुऽहस्तः । गोऽधुक् । उत । दोहत् । एनां ॥ श्रेष्ठं । सवं । सविता । साविषत् । नः । अभिऽइंद्धः । घर्मः । तत् । ऊँइति । सु । प्र । वोचं ॥ हिङ्कृऽकृण्वती । वसुऽपत्नी । वसूनां । वत्सं । इच्छंती । मनसा । अभि । आ । अगात् ॥ दुहां । अश्विऽभ्यां । पयः । अघ्न्या । इयं । सा । वर्धतां । महते । सौभगाय ॥ गौः । अमीमेत् । अनु । वत्सं । मिषंतं । मूर्धानं । हिङ् । अकृणोत् । मातवै । ऊँइति ॥ सृक्काणं । घर्मं । अभि । वावशाना । मिमाति । मायुं । पयते । पयःऽभिः ॥ अयं । सः । शिङ्क्ते । येन । गौः । अभिऽवृता । मिमाति । मायुं । ध्वसनौ । अधि । श्रिता ॥ सा । चित्तिऽभिः । नि । हि । चकार । मर्त्यं । विऽद्युत् । भवंती । प्रति । वव्रिं । औहत ॥ अनत् । शये । तुरऽगातु । जीवं । एजत् । ध्रुवं । मध्ये । आ । पस्त्यानां ॥ जीवः । मृतस्य । चरति । स्वधाभिः । अमर्त्यः । मर्त्येन । सऽयोनिः ॥ १९ ॥ अपश्यं । गोपां । अनिऽपद्यमानं । आ । च । परा । च । पथिऽभिः । चरंतं ॥ सः । सध्रीचीः । सः । विषूचीः । वसानः । आ । वरीवर्ति । भुवनेषु । अंतरिति ॥ यः । ईं । चकार । न । सः । अस्य । वेद । यः । ईं । ददर्श । हिरुक् । इत् । नु । तस्मात् ॥ सः । मातुः । योना । परिऽवीतः । अंतः । बहुऽप्रजाः । निःऽऋतिं । आ । विवेश ॥ द्यौः । मे । पिता । जनिता । नाभिः । अत्र । बंधुः । मे । माता । पृथिवी । मही । इयं ॥ उत्तानयोः । चम्वोः । योनिः । अंतः । अत्र । पिता । दुहितुः । गर्भं । आ । अधात् ॥ पृच्छामि । त्वा । परं । अंतं । पृथिव्याः । पृच्छामि । यत्र । भुवनस्य । नाभिः ॥ पृच्छामि । त्वा । वृष्णः । अश्वस्य । रेतः । पृच्छामि । वाचः । परमं । विऽओम ॥ इयं । वेदिः । परः । अंतः । पृथिव्याः । अयं । यज्ञः । भुवनस्य । नाभिः ॥ अयं ।

सोमः । वृष्णः । अश्वस्य । रेतः । ब्रह्मा । अयं । वाचः । परमं । विऽओम ॥ २० ॥ सप्त । अर्धऽगर्भाः । भुवनस्य । रेतः । विष्णोः । तिष्ठंति । प्रऽदिशा । विऽधर्मणि ॥ ते । धीतिऽभिः । मनसा । ते । विपःऽचितः । परिऽभुवः । परि । भवंति । विश्वतः ॥ न । वि । जानामि । यत्ऽइव । इदं । अस्मि । निण्यः । संऽनद्धः । मनसा । चरामि ॥ यदा । मा । आ । अगन् । प्रथमऽजाः । ऋतस्य । आत् । इत् । वाचः । अश्नुवे । भागं । अस्याः ॥ अपाङ् । प्राङ् । एति । स्वधया । गृभीतः । अमर्त्यः । मर्त्येन । सऽयोनिः ॥ ता । शश्वंता । विषूचीना । विऽयंता । नि । अन्यं । चिक्युः । न । नि । चिक्युः । अन्यं ॥ ऋचः । अक्षरे । परमे । विऽओमन् । यस्मिन् । देवाः । अधि । विश्वे । निऽसेदुः ॥ यः । तत् । न । वेद । किं । ऋचा । करिष्यति । ये । इत् । तत् । विदुः । ते । इमे । सं । आसते ॥ सुयवसऽअत् । भगंऽवती । हि । भूयाः । अथोइति । वयं । भगंऽवंतः । स्याम । अद्धि । तृणं । अघ्न्ये । विश्वऽदानीं । पिब । शुद्धं । उदकं । आऽचरंती ॥ २१ ॥ गौरीः । मिमाय । सलिलानि । तक्षती । एकंऽपदी । द्विऽपदी । सा । चतुःऽपदी । अष्टाऽपदी । नवंऽपदी । बभूवुषी । सहस्रंऽअक्षरा । परमे । विऽओमन् ॥ तस्याः । समुद्राः । अधि । वि । क्षरंति । तेन । जीवंति । प्रऽदिशः । चतस्रः ॥ ततः । क्षरति । अक्षरं । तत् । विश्वं । उप । जीवति ॥ शकऽमयं । धूमं । आरात् । अपश्यं । विषुऽवता । परः । एना । अवरेण ॥ उक्षाणं । पृश्निं । अपचंत । वीराः । तानि । धर्माणि । प्रथमानि । आसन् ॥ त्रयः । केशिनः । ऋतुऽथा । वि । चक्षते । संवत्सरे । वपते । एकः । एषां । विश्वं । एकः । अभि । चष्टे ।

शचीभिः । ध्राजिः । एकस्य । ददृशे । न । रूपं ॥ चत्वारि । वाक् । परिऽमिता । पदानि । तानि । विदुः । ब्राह्मणाः । ये । मनीषिणः ॥ गुहा । त्रीणि । निऽहिता । न । इंगयंति । तुरीयं । वाचः । मनुष्याः । वदंति ॥ ० ॥ अहुः । अथोइति । दिव्यः । सः । सुऽपर्णः । गरुत्मान् ॥ एकं । सत् । विप्राः । बहुधा । वदंति । अग्निं । यमं । मातरिश्वानं । आहुः ॥ २२ ॥ कृष्णं । निऽयानं । हरयः । सुऽपर्णाः । अपः । वसानाः । दिवं । उत् । पतंति ॥ ते । आ । अववृत्रन् । सदनात् । ऋतस्य । आत् । इत् । घृतेन । पृथिवी । वि । उद्यते ॥ द्वादश । प्रऽधयः । चक्रं । एकं । त्रीणि । नभ्यानि । कः । ऊँइति । तत् । चिकेत ॥ तस्मिन् । साकं । त्रिऽशताः । न । शंकवः । अर्पिताः । षष्टिः । न । चलाचलासः ॥ यः । ते । स्तनः । शशयः । यः । मयःऽभूः । येन । विश्वा । पुष्यसि । वार्याणि ॥ यः । रत्नऽधाः । वसुऽवित् । यः । सुऽदत्रः । सरस्वति । तं । इह । धातवे । कुरितिकः ॥ यज्ञेन । यज्ञं । अयजंत । देवाः । तानि । धर्माणि । प्रथमानि । आसन् ॥ ते । ह । नाकं । महिमानः । सचंत । यत्र । पूर्वे । साध्याः । संति । देवाः ॥ समानं । एतत् । उदकं । उत् । च । एति । अव । च । अहऽभिः ॥ भूमिं । पर्जन्याः । जिन्वंति । दिवं । जिन्वति । अग्नयः ॥ दिव्यं । सुऽपर्णं । वायसं । बृहंतं । अपां । गर्भं । दर्शतं । ओषधीनां ॥ अभीपतः । वृष्टिऽभिः । तर्पयंतं । सरस्वंतं । अवसे । जोहवीमि ॥ २३ ॥ कया । शुभा । सऽवयसः । सऽनीळाः । समान्या । मरुतः । सं । मिमिक्षुः ॥ कया । मती । कुतः । आऽइतासः । एते । अर्चंति । शुष्मं । वृषणः । वसुऽया ॥ कस्य । ब्रह्माणि । जुजुषुः । युवानः । कः । अध्वरे । मरुतः । आ । ववर्त ॥ श्येनान्ऽइव । ध्रजतः । अंतरिक्षे । केन ।

महा । मनसा । रीरमाम ॥ कुतः । त्वं । इंद्र । माहिनः । सन्
एकः । यासि । सत्ऽपते । किं । ते । इत्था ॥ सं । पृच्छसे
संऽअराणः । शुभानैः । वोचेः । तत् । नः । हरिऽवः । यत् । ते
अस्मेइति ॥ ब्रह्माणि । मे । मतयः । शं । सुतासः । शुष्मः । इयर्ति
प्रऽभृतः । मे । अद्रिः ॥ आ । शासते । प्रति । हर्यंति । उक्था
इमा । हरीइति । वहतः । ता । नः । अच्छ ॥ अतः । वयं
अंतमेभिः । युजानाः । स्वऽक्षत्रेभिः । तन्वः । शुंभमानाः ॥ महःऽभिः
एतान् । उप । युज्महे । नु । इंद्र । स्वधां । अनु । हि । नः
बभूथ ॥ २४ ॥ क्व । स्या । वः । मरुतः । स्वधा । आसीत् । यत्
मां । एकं । संऽअधत्त । अहिऽहत्ये ॥ अहं । हि । उग्रः । तविषः
तुविष्मान् । विश्वस्य । शत्रोः । अनमं । वधऽस्नैः ॥ भूरि । चकर्थ
युज्येभिः । अस्मेइति । समानेभिः । वृषभ । पौंस्येभिः ॥ भूरीणि
हि । कृणवाम । शविष्ठ । इंद्र । क्रत्वा । मरुतः । यत् । वशाम
वधीं । वृत्रं । मरुतः । इंद्रियेण । स्वेन । भामेन । तविषः । बभूवान्
अहं । एताः । मनवे । विश्वऽचंद्राः । सुऽगाः । अपः । चकर
वज्रऽबाहुः ॥ अनुत्तं । आ । ते । मघऽवन् । नकिः । नु
न । त्वाऽवान् । अस्ति । देवता । विदानः ॥ न । जायमानः
नशते । न । जातः । यानि । करिष्या । कृणुहि । प्रऽवृद्ध
एकस्य । चित् । मे । विऽभु । अस्तु । ओजः । या । नु
दधृष्वान् । कृणवै । मनीषा ॥ ० ॥ मरुतः । विदानः । यानि
च्यवं । इंद्रः । इत् । ईशे । एषां ॥ २५ ॥ अमंदत् । मा
मरुतः । स्तोमः । अत्र । यत् । मे । नरः । श्रुत्यं । ब्रह्म
चक्र ॥ इंद्राय । वृष्णे । सुऽमखाय । मह्यं । सख्ये । सखायः
तन्वे । तनूभिः ॥ एव । इत् । एते । प्रति । मा । रोचमानाः

अनेद्यः । श्रवः । आ । इषः । दधानाः ॥ सम्ऽचक्ष्य । मरुतः । चंद्रऽवर्णाः । अच्छांत । मे । छदयाथ । च । नूनं ॥ कः । नु । अत्र । मरुतः । ममहे । वः । प्र । यातन । सखीन् । अच्छ । सखायः ॥ मन्मानि । चित्राः । अपिऽवातयंतः । एषां । भूत । नवेदाः । मे । ऋतानां ॥ आ । यत् । दुवस्यात् । दुवसे । न । कारुः । अस्मान् । चक्रे । मान्यस्य । मेधा ॥ ओइति । सु ॥ वर्त । मरुतः । विप्रं । अच्छ । इमा । ब्रह्माणि । जरिता । वः । अर्चत् ॥ एषः । वः । स्तोमः । मरुतः । इयं । गीः । मांदार्यस्य । मान्यस्य । कारोः ॥ आ । इषा । यासीष्ट । तन्वे । वयां । विद्याम । इषं । वृजनं । जीरऽदानुं ॥ २६ ॥

इति द्वितीयाष्टके तृतीयोध्यायः





## ॥ अथ चतुर्थोध्यायः ॥

हरिः ॐ ॥ तत् । नु । वोचाम । रभसाय । जन्मने । पूर्वं । महिऽत्वं । वृषभस्य । केतवे ॥ ऐधाऽइव । यामन् । मरुतः । तुविऽस्वनः । युधाऽइव । शक्राः । तविषाणि । कर्तन ॥ नित्यं । न । सूनुं । मधु । बिभ्रतः । उप । क्रीळंति । क्रीळाः । विदथेषु । घृष्वयः ॥ नक्षंति । रुद्राः । अवसा । नमस्विनं । न । मर्धंति । स्वऽतवसः । हविःऽकृतं ॥ यस्मै । ऊमासः । अमृताः । अरासत ।

रायः । पोषं । च । हविषा । ददाशुषे ॥ उक्षंति । अस्मै
मरुतः । हिताःऽइव । पुरु । रजांसि । पयसा । मयःऽभुवः
आ । ये । रजांसि । तविषीभिः । अव्यंत । प्र । वः । एवासः
स्वऽयंतासः । अध्रजन् ॥ भयंते । विश्वा । भुवनानि । हर्म्या
चित्रः । वः । यामः । प्रऽयंतासु । ऋष्टिषु ॥ यत् । त्वेषऽयामाः
नदयंत । पर्वतान् । दिवः । वा । पृष्ठं । नर्याः । अचुच्यवुः
विश्वः । वः । अज्मन् । भयते । वनस्पतिः । रथियंतीऽइव
प्र । जिहीते । ओषधिः ॥ १ ॥ यूयं । नः । उग्राः । मरुतः
सुऽचेतुना । अरिष्टऽग्रामाः । सुऽमतिं । पिपर्तन ॥ यत्र । वः
दिद्युत् । रदति । क्रिविःऽदती । रिणाति । पश्वः । सुधिताऽइव
बर्हणा ॥ प्र । स्कंभऽदेष्णाः । अनवभ्रऽराधसः । अलातृणासः
विदथेषु । सुऽस्तुताः ॥ अर्चंति । अर्कं । मदिरस्य । पीतये
विदुः । वीरस्य । प्रथमानि । पौंस्या ॥ शतभुजिऽभिः । तं
अभिऽह्रुतेः । अघात् । पूःऽभिः । रक्षत । मरुतः । यं । आवत
जनं । यं । उग्राः । तवसः । विऽरप्शिनः । पाथन । शंसात् । तनयस्य
पुष्टिषु ॥ विश्वानि । भद्रा । मरुतः । रथेषु । वः । मिथस्पृध्याऽइव
तविषाणि । आऽहिता ॥ अंसेषु । आ । वः । प्रऽपथेषु । खादयः
अक्षः । वः । चक्रा । समया । वि । ववृते ॥ भूरीणि । भद्रा
नर्येषु । बाहुषु । वक्षःऽसु । रुक्माः । रभसासः । अंजयः
अंसेषु । एताः । पविषु । क्षुराः । अधि । वयः । न । पक्षान्
वि । अनु । श्रियः । धिरे ॥ २ ॥ महांतः । मह्ना । विऽभ्वः
विऽभूतयः । दूरेऽदृशः । ये । दिव्याःऽइव । स्तृऽभिः ॥ मंद्राः
सुऽजिह्वाः । स्वरितारः । आसऽभिः । संऽमिश्लाः । इंद्रे । मरुतः
परिऽस्तुभः ॥ तत् । वः । सुऽजाताः । मरुतः । महिऽत्वनं

दीर्घं । वः । दात्रं । अदितेःऽइव । व्रतं ॥ इंद्रः । चन । त्यजसा ।
वि । हुणाति । तत् । जनाय । यस्मै । सुऽकृते । अराध्वं ॥
तत् । वः । जामिऽत्वं । मरुतः । परे । युगे । पुरु । यत् ।
शंसं । अमृतासः । आवत ॥ अया । धिया । मनवे । श्रुष्टिं ।
आव्य । साकं । नरः । दंसनैः । आ । चिकित्रिरे ॥ येन । दीर्घं ।
मरुतः । शूशवाम । युष्माकेन । परीणसा । तुरासः ॥ आ । यत् ।
ततनन् । वृजने । जनासः । एभिः । यज्ञेभिः । तत् । अभि । इष्टिं ।
अश्यां ॥ एषः । स्तोमः । मरुतः । इयं । गीः । मांदार्यस्य । मान्यस्य ।
कारोः ॥ आ । वः । इषा । यासीष्ट । तन्वे । वयां । विद्याम । इषं । वृजनं ।
जीरऽदानुं ॥ ० ॥ ३ ॥ सहस्रं । ते । इंद्र । ऊतयः । नः । सहस्रं ।
इषः । हरिऽवः । गूर्तऽतमाः ॥ सहस्रं । रायः । मादयध्यै । सहस्रिणः ।
उप । नः । यंतु । वाजाः ॥ आ । नः । अवःऽभिः । मरुतः । यांतु ।
अच्छ । ज्येष्ठेभिः । वा । बृहत्ऽदिवैः । सुऽमायाः ॥ अध । यत् ।
एषां । निऽयुतः । परमाः । समुद्रस्य । चित् । धनयंत । पारे ॥
मिम्यक्ष । येषु । सुऽधिता । घृताची । हिरण्यऽनिर्निक् । उपरा ।
न । ऋष्टिः ॥ गुहा । चरंती । मनुषः । न । योषा । सभाऽवती ।
विदथ्याऽइव । सं । वाक् ॥ परा । शुभ्राः । अयासः । यव्या ।
साधारण्याऽइव । मरुतः । मिमिक्षुः ॥ न । रोदसीइति । अप ।
नुदंत । घोराः । जुषंत । वृधं । सख्याय । देवाः ॥ जोषत् । यत् । ईं ।
असुर्या । सचध्यै । विसितऽस्तुका । रोदसीइति । नृऽमनाः ॥ आ ।
सूर्याऽइव । विधतः । रथं । गात् । त्वेषऽप्रतीका । नभसः । न ।
इत्या ॥ ४ ॥ आ । अस्थापयंत । युवतिं । युवानः । शुभे ।
निऽमिश्लां । विदथेषु । पज्रां ॥ अर्कः । यत् । वः । मरुतः ।
हविष्मान् । गायत् । गाथं । सुतऽसोमः । दुवस्यन् ॥ प्र । तं ।

विवक्ति । वक्म्यः । यः । एषां । मरुतां । महिमा । सत्यः । अस्ति ॥
सचा । यत् । ईं । वृषऽमनाः । अहंऽयुः । स्थिरा । चित् । जनीः ।
वहते । सुऽभागाः ॥ पांति । मित्रावरुणौ । अवद्यात् । चयते । ईं ।
अर्यमोइति । अप्रऽशस्तान् ॥ उत । च्यवंते । अच्युता । ध्रुवाणि ।
ववृधे । ईं । मरुतः । दातिऽवारः ॥ नहि । नु । वः । मरुतः ।
अंति । अस्मेइति । आरात्तात् । चित् । शवसः । अंतं । आपुः ॥ ते ।
धृष्णुना । शवसा । शुशुऽवांसः । अर्णः । न । द्वेषः । धृषता । परि ।
स्थुः ॥ वयं । अद्य । इंद्रस्य । प्रेष्ठाः । वयं । श्वः । वोचेमहि ।
सऽमर्ये ॥ वयं । पुरा । महि । च । नः । अनु । द्यून् । तत् । नः ।
ऋभुक्षाः । नरां । अनु । स्यात् ॥ एषः । वः । स्तोमः । मरुतः । इयं ।
गीः । मांदार्यस्य । मान्यस्य । कारोः ॥ आ । इषा । यासीष्ट । तन्वे ।
वयां । विद्याम । इषं । वृजनं । जीरऽदानुं ॥ ५ ॥ यज्ञाऽयज्ञा । वः ।
समना । तुतुर्वणिः । धियंऽधियं । वः । देवऽयाः । ऊँइति । दधिध्वे ॥
आ । वः । अर्वाचः । सुविताय । रोदस्योः । महे । ववृत्यां । अवसे ।
सुवृक्तिऽभिः । वव्रासः । न । ये । स्वऽजाः । स्वऽतवसः । इषं ।
स्वः । अभिऽजायंत । धूतयः ॥ सहस्रियासः । अपां । न । ऊर्मयः ।
आसा । गावः । वंद्यासः । न । उक्षणः ॥ सोमासः । न । ये ।
सुताः । तृप्तऽअंशवः । हृत्ऽसु । पीतासः । दुवसः । न । आसते ।
आ । एषां । अंसेषु । रंभिणीऽइव । ररभे । हस्तेषु । खादिः ।
च । कृतिः । च । सं । दधे ॥ अव । स्वऽयुक्ताः । दिवः ।
आ । वृथा । ययुः । अमर्त्याः । कशया । चोदत । त्मना ॥
अरेणवः । तुविऽजाताः । अचुच्यवुः । दृळ्हानि । चित् । मरुतः ।
भ्राजत्ऽऋष्टयः ॥ कः । वः । अंतः । मरुतः । ऋष्टिऽविद्युतः ।
रेजति । त्मना । हन्वाऽइव । जिह्वया ॥ धन्वऽच्युतः । इषां ।

न । यामनि । पुरुऽप्रैषाः । अहन्यः । न । एतशः ॥ ६ ॥ क्व । स्वित् । अस्य । रजसः । महः । परं । क्व । अवरं । मरुतः । यस्मिन् । आऽयय ॥ यत् । च्यवयथ । विथुराऽइव । संऽहितं । वि । अद्रिणा । पतथ । त्वेषं । अर्णवं ॥ सातिः । न । वः । अमऽवती । स्वःऽवती । त्वेषा । विऽपाका । मरुतः । पिपिष्वती ॥ भद्रा । वः । रातिः । पृणतः । न । दक्षिणा । पृथुऽज्रयी । असुर्याऽइव । जंजती ॥ प्रति । स्तोभंति । सिंधवः । पविऽभ्यः । यत् । अभ्रियां । वाचं । उत्ऽईरयंति ॥ अव । स्मयंत । विऽद्युतः । पृथिव्यां । यदि । घृतं । मरुतः । प्रुष्णुवंति ॥ असूत । पृश्निः । महते । रणाय । त्वेषं । अयासां । मरुतां । अनीकं ॥ ते । सप्सरासः । अजनयंत । अभ्वं । आत् । इत् । स्वधां । इषिरां । परि । अपश्यन् ॥ ० ॥ ७ ॥ एषः । वः । स्तोमः । मरुतः । इयं । गीः । मांदार्यस्य । मान्यस्य । कारोः ॥ आ । इषा । यासीष्ट । तन्वे । वयां । विद्याम । इषं । वृजनं । जीरऽदानुं ॥ महः । चित् । त्वं । इंद्र । यतः । एतान् । महः । चित् । असि । त्यजसः । वरूता ॥ सः । नः । वेधः । मरुतां । चिकित्वान् । सुम्ना । वनुष्व । तव । हि । प्रेष्ठा ॥ अयुंजन् । ते । इंद्र । विश्वऽकृष्टीः । विदानासः । निःऽसिधः । मर्त्यऽत्रा ॥ मरुतां । पृत्सुतिः । हासमाना । स्वःऽमीळ्हस्य । प्रऽधनस्य । सातौ ॥ अम्यक् । सा । ते । इंद्र । ऋष्टिः । अस्मेइति । सनेमि । अभ्वं । मरुतः । जुनंति ॥ अग्निः । चित् । हि । स्म । अतसे । शुशुक्वान् । आपः । न । द्वीपं । दधति । प्रयांसि ॥ त्वं तु । नः । इंद्र । तं । रयिं । दाः । ओजिष्ठया । दक्षिणयाऽइव । रातिं ॥ स्तुतः । च । याः । ते । चकनंत । वायोः । स्तनं । न । मध्वः । पीपयंत । वाजैः ।

त्वेइति । रायः । इंद्र । तोशऽतमाः । प्रऽनेतारः । कस्य । चित् ।
ऋतऽयोः ॥ ते । सु । नः । मरुतः । मृळयंतु । ये । स्म ।
पुरा । गातुयंतिऽइव । देवाः ॥ ८ ॥ प्रति । प्र । याहि । इंद्र ।
मीळ्हुषः । नॄन् । महः । पार्थिवे । सदने । यतस्व ॥ ० ॥ अध । यत् ।
एषां । पृथुऽबुध्नासः । एताः । तीर्थे । न । अर्यः । पौंस्यानि । तस्थुः ॥
प्रति । घोराणां । एतानां । अयासां । मरुतां । शृण्वे । आऽयतां ।
उपब्दिः ॥ ये । मर्त्यं । पृतनाऽयंतं । ऊमैः । ऋणऽवानं । न । पतयंत ।
सर्गैः ॥ त्वं । मानेभ्यः । इंद्र । विश्वऽजन्याः । रद । मरुत्ऽभिः ।
शुरुधः । गोऽअग्राः ॥ स्तवानेभिः । स्तवसे । देव । देवैः । विद्याम ।
इषं । वृजनं । जीरदानुं ॥ ० ॥ ९ ॥ न । नूनं । आस्ति । नोइति । श्वः ।
कः । तत् । वेद । यत् । अद्भुतं ॥ अन्यस्य । चित्तं । अभि । संऽ
चरेण्यं । उत । आऽधीतं । वि । नश्यति ॥ किं । नः । इंद्र । जिघां-
ससि । भ्रातरः । मरुतः । तव ॥ तेभिः । कल्पस्व । साधुऽया । मा ।
नः । संऽअरणे । वधीः ॥ किं । नः । भ्रातः । अगस्त्य । सखा । सन् ।
अति । मन्यसे ॥ विद्म । हि । ते । यथा । मनः । अस्मभ्यं । इत् । न ।
दित्ससि ॥ अरं । कृण्वंतु । वेदिं । सं । अग्निं । इंधतां । पुरः ॥ तत्र ।
अमृतस्य । चेतनं । यज्ञं । ते । तनवावहै ॥ त्वं । ईशिषे । वसुऽपते ।
वसूनां । त्वं । मित्राणां । मित्रऽपते । धेष्ठः ॥ इंद्र । त्वं । मरुत्ऽभिः ।
सं । वदस्व । अध । प्र । अशान । ऋतुऽथा । हवींषि ॥ १० ॥ प्रति ।
वः । एना । नमसा । अहं । एमि । सुऽउक्तेन । भिक्षे । सुऽमतिं ।
तुराणां ॥ रराणता । मरुतः । वेद्याभिः । नि । हेळः । धत्त । वि ।
मुचध्वं । अश्वान् ॥ ० ॥ एष । वः । स्तोमः । मरुतः । नमस्वान् । हृदा ।
तष्टः । मनसा । धायि । देवाः ॥ उप । ईं । आ । यात । मनसा ।
जुषाणाः । यूयं । हि । स्थ । नमसः । इत् । वृधासः ॥ स्तुतासः । नः ।

मरुतः । मृळयंतु । उत । स्तुतः । मघऽवा । शंऽभविष्ठः ॥ ऊर्ध्वा ।
नः । संतु । कोम्या । वनानि । अहानि । विश्वा । मरुतः । जिगीषा ॥
अस्मात् । अहं । तविषात् । ईषमाणः । इंद्रात् । भिया । मरुतः ।
रेजमानः ॥ युष्मभ्यं । हव्या । निऽशितानि । आसन् । तानि । आरे ।
चकृम । मृळत । नः ॥ येन । मानासः । चितयंते । उस्राः ।
विऽउष्टिषु । शवसा । शश्वतीनां ॥ सः । नः । मरुत्ऽभिः । वृषभ ।
श्रवः । धा । उग्रः । उग्रेभिः । स्थविरः । सहःऽदाः ॥ त्वं । पाहि ।
इंद्र । सहीयसः । नॄन् । भव । मरुत्ऽभिः । अवयातऽहेळाः ॥
सुऽप्रकेतेभिः । ससहिः । दधानः । विद्याम । इषं । वृजनं ।
जीरदानुं ॥ ० ॥ ११ ॥ चित्रः । वः । अस्तु । यामः । चित्रः ।
ऊती । सुऽदानवः ॥ मरुतः । अहिऽभानवः ॥ आरे । सा ।
वः । सुऽदानवः । मरुतः । ऋंजती । शरुः ॥ आरे । अश्मा ।
यं । अस्यथ ॥ तृणऽस्कंदस्य । नु । विशः । परि । वृंक्त ।
सुऽदानवः ॥ ऊर्ध्वान् । नः । कर्त । जीवसे ॥ १२ ॥ गायत् ।
साम । नभन्यं । यथा । वेः । अर्चाम । तत् । ववृधानं । स्वःऽवत् ॥
गावः । धेनवः । बर्हिषि । अदब्धाः । आ । यत् । सद्मानं । दिव्यं ।
विवासान् ॥ अर्चत् । वृषा । वृषऽभिः । स्वऽइदुहव्यैः ॥ मृगः । न ।
अश्नः । अति । यत् । जुगुर्यात् ॥ प्र । मंदयुः । मना । गूर्त । होता ।
भरते । मर्यः । मिथुना । यजत्रः ॥ नक्षत् । होता । परि । सद्म ।
मिता । यन् । भरत् । गर्भं । आ । शरदः । पृथिव्याः ॥ क्रंदत् ।
अश्वः । नयमानः । रुवत् । गौः । अंतः । दूतः । न । रोदसीइति ।
चरत् । वाक् ॥ ता । कर्म । अवऽतरा । अस्मै । प्र । च्यौत्नानि ।
देवऽयंतः । भरंते ॥ जुजोषत् । इंद्रः । दस्मऽवर्चाः । नासत्याऽइव ।
सुग्म्यः । रथेऽस्थाः ॥ तं । ऊँइति । स्तुहि । इंद्रं । यः । ह ।

सत्वा । यः । शूरः । मघऽवा । यः । रथेऽस्थाः । प्रतीचः । चित् । योधीयान् । वृषण्ऽवान् । ववव्रुषः । चित् । तमसः । विऽहंता ॥ १३ ॥ प्र । यत् । इत्था । महिना । नृऽभ्यः । अस्ति । अरं । रोदसीइति । कक्ष्येइति । न । अस्मै ॥ सं । विव्ये । इंद्रः । वृजनं । न भूमं । भर्ति । स्वधाऽवान् । ओपशंऽइव । द्यां ॥ समत्ऽसु । त्वा । शूर । सतां । उराणं । प्रपथिन्ऽतमं । परिऽतंसयध्यै ॥ सऽजोषसः । इंद्रं । मदे । क्षोणीः । सूरिं । चित् । ये । अनुऽमदंति । वाजैः ॥ एव । हि । ते । शं । सवना । समुद्रे । आपः । यत् । ते । आसु । मदंति । देवीः ॥ विश्वा । ते । अनु । जोष्या । भूत् । गौः । सूरीन् । चित् । यदि । धिषा । वेषि । जनान् ॥ असाम । यथा । सुऽसखायः । एन । सुऽअभिष्टयः । नरां । न । शंसैः ॥ असत् । यथा । नः । इंद्रः । वंदनेऽस्थाः । तुरः । न । कर्म । नयमानः । उक्थ्या ॥ विस्पर्धसः । नरां । न । शंसैः । अस्माकं । असत् । इंद्रः । वज्रऽहस्तः । मित्रऽयुवः । न । पूःपति । सुऽशिष्टौ । मध्यऽयुवः । उप । शिक्षंति । यज्ञैः ॥ १४ ॥ यज्ञः । हि । स्म । इंद्रं । कः । चित् । ऋंधन् । जुहुराणः । चित् । मनसा । परिऽयन् ॥ तीर्थे । न । अच्छ । ततृषाणं । ओकः । दीर्घः । न । सिध्रं । आ । कृणोति । अध्वा ॥ मोइति । सु । नः । इंद्र । अत्र । पृत्ऽसु । देवैः । अस्ति । हि । स्म । ते । शुष्मिन् । अवऽयाः ॥ महः । चित् । यस्य । मीळ्हुषः । यव्या । हविष्मते । मरुतः । वंदते । गीः ॥ एषः । स्तोमः । इंद्र । तुभ्यं । अस्मेइति । एतेन । गातुं । हरिऽवः । विदः । नः । आ । नः । ववृत्याः । सुविताय । देव । विद्याम । इषं । वृजनं । जीरऽदानुं ॥ ० ॥ ॥ १५ ॥ त्वं । राजा । इंद्र । ये । च । देवाः । रक्ष ।

नॄन् । पाहि । असुर । त्वं । अस्मान् ॥ त्वं । सत्ऽपतिः । मघऽवा । नः । तरुत्रः । त्वं । सत्यः । वसवानः । सहःऽदाः ॥ दर्नः । विशः । इंद्र । मृध्रऽवाचः । सप्त । यत् । पुरः । शर्म । शारदीः । दर्त् ॥ ऋणोः । अपः । अनवद्य । अर्णाः । यूने । वृत्रं । पुरुऽकुत्साय । रंधीः ॥ अजः । वृतः । इंद्र । शूरऽपत्नीः । द्यां । च । येभिः । पुरुऽहूत । नूनं ॥ रक्षोइति । अग्निं । अशुषं । तूर्वयाणं । सिंहः । न । दमे । अपांसि । वस्तोः ॥ शेषन् । नु । ते । इंद्र । सस्मिन् । योनौ । प्रऽशस्तये । पवीरवस्य । मह्ना ॥ सृजत् । अर्णांसि । अव । यत् । युधा । । गाः । तिष्ठत् । हरीइति । धृषता । मृष्ट । वाजान् ॥ वह । कुत्सं । इंद्र । यस्मिन् । चाकन् । स्युमन्यूइति । ऋज्रा । वातस्य । अश्वा ॥ प्र । सूरः । चक्रं । वृहतात् । अभीके । अभि । स्पृधः । यासिषत् । वज्रऽबाहुः ॥ १६ ॥ जघन्वान् । इंद्र । मित्रेरून् । चोदऽप्रवृद्धः । हरिऽवः । अदाशून् ॥ प्र । ये । पश्यन् । अर्यमणं । सचा । आयोः । त्वया । शूर्ताः । वहमानाः । अपत्यं ॥ रपत् । कविः । इंद्र । अर्कऽसातौ । क्षां । दासाय । उपऽबर्हणीं । करितिकः ॥ करत् । तिस्रः । मघऽवा । दानुऽचित्राः । नि । दुर्योणे । कुयवाचं । मृधि । श्रेत् ॥ सना । ता । ते । इंद्र । नव्याः । आ । अगुः । सहः । नभः । अविऽरणाय । पूर्वीः ॥ भिनत् । पुरः । न । भिदः । अदेवीः । ननमः । वधः । अदेवस्य । पीयोः ॥ त्वं । धुनिः । इंद्र । धुनिऽमतीः । ऋणोः । अपः । सीराः । न । स्रवंतीः ॥ प्र । यत् । समुद्रं । अति । शूर । पर्षि । पारय । तुर्वशं । यदुं । स्वस्ति ॥ त्वं । अस्माकं । इंद्र । विश्वध । स्याः । अवृकऽतमः । नरां । नृऽपाता ॥ सः । नः । विश्वासां । स्पृधां । सहःऽदाः ॥ ० ॥ १७ ॥ मत्सि । अपायि ।

ते । महः । पात्रस्यऽइव । हरिऽवः । मत्सरः । मदः ॥ वृषा । ते । वृष्णे । इंदुः । वाजी । सहस्रऽसातमः ॥ आ । नः । ते । गंतु । मत्सरः । वृषा । मदः । वरेण्यः ॥ सहऽवान् । इंद्र । सानसिः । पृतनाषाट् । अमर्त्यः ॥ त्वं । हि । शूरः । सनिता । चोदयः । मनुषः । रथं ॥ सहऽवान् । दस्युं । अव्रतं । ओषः । पात्रं । न । शोचिषा ॥ मुषाय । सूर्यं । कवे । चक्रं । ईशानः । ओजसा । वह । शुष्णाय । वधं । कुत्सं । वातस्य । अश्वैः ॥ ० ॥ वृत्रऽघ्ना । वरिवःऽविदा । मंसीष्ठाः । अश्वऽसातमः ॥ यथा । पूर्वेभ्यः । जरितृऽभ्यः । इंद्र । मयःऽइव । आपः । न । तृष्यते । बभूथ ॥ तां । अनु । त्वा । निऽविदं । जोहवीमि ॥ ० ॥ १८ ॥ मत्सि । नः । वस्यःऽइष्टये । इंद्रं । इंदोइति । वृषा । आ । विश ॥ ऋघायमाणः । इन्वसि । शत्रुं । अंति । न । विंदसि ॥ तस्मिन् । आ । वेशय । गिरः ॥ ० ॥ अनु । स्वधा । यं । उप्यते । यवं । न । चर्कृषत् । वृषा ॥ यस्य । विश्वानि । हस्तयोः । पंच । क्षितीनां । वसु ॥ स्पाशयस्व । यः । अस्मऽध्रुक् । दिव्याऽइव । अशनिः । जहि ॥ असुन्वतं । सम । जहि । दुःऽनशं । यः । न । ते । मयः ॥ अस्मभ्यं । अस्य । वेदनं । दद्धि । सूरिः । चित् । ओहते ॥ आ । वः । यस्य । द्विऽबर्हसः । अर्केषु । सानुषक् । असत् ॥ आजौ । इंद्रस्य । इंदोइति ॥ ० ॥ १९ ॥ आ । चर्षणिऽप्राः । वृषभः । जनानां । राजा । कृष्टीनां । पुरुऽहूतः । इंद्रः ॥ स्तुतः । श्रवस्यन् । अवसा । उप । मद्रिक् । युक्त्वा । हरीइति । वृषणा । आ । याहि । अर्वाङ् ॥ ये । ते । वृषणः । वृषभासः । इंद्र । ब्रह्मऽयुजः । वृषऽरथासः । अत्याः । तान् । आ । तिष्ठ । तेभिः । आ । याहि । अर्वाङ् । हवामहे । त्वा ।

सुते । इंद्र । सोमे ॥ आ । तिष्ठ । रथं । वृषणं । वृषा । ते । सुतः । सोमः । परिऽसिक्ता । मधूनि ॥ युक्त्वा । वृषऽभ्यां । वृषभ । क्षितीनां । हरिऽभ्यां । याहि । प्रऽवता । उप । मद्रिक् ॥ अयं । यज्ञः । देवऽयाः । अयं । मियेधः । इमा । ब्रह्माणि । अयं । इंद्र । सोमः ॥ स्तीर्णं । बर्हिः । आ । तु । शक्र । प्र । याहि । पिब । निऽसद्य । वि । मुच । हरीइति । इह ॥ ओइति । सुऽस्तुतः । इंद्र । याहि । अर्वाङ् । उप । ब्रह्माणि । मान्यस्य । कारोः ॥ विद्याम । वस्तोः । अवसा । गृणंतः ॥ ० ॥ २० ॥

यत् । ह । स्या । ते । इंद्र । श्रुष्टिः । अस्ति । यया । बभूथ । जरितृऽभ्यः । ऊती ॥ मा । नः । कामं । महयंतं । आ । धक् । विश्वा । ते । अश्यां । परि । आपः । आयोः ॥ न । घ । राजा । इंद्रः । आ । दभत् । नः । या । नु । स्वसारा । कृणवंत । योनौ ॥ आपः । चित् । अस्मै । सुऽतुकाः । अवेषन् । गमत् । नः । इंद्रः । सख्या । वयः । च ॥ जेता । नृऽभिः । इंद्रः । पृत्ऽसु । शूरः । श्रोता । हवं । नाधमानस्य । कारोः ॥ प्रऽभर्ता । रथं । दाशुषः । उपाके । उत्ऽयंता । गिरः । यदि । च । त्मना । भूत् ॥ एव । नृऽभिः । इंद्रः । सुऽश्रवस्या । प्रऽखादः । पृक्षः । अभि । मित्रिणः । भूत् ॥ सऽमर्ये । इषः । स्तवते । विऽवाचि । सत्राऽकरः । यजमानस्य । शंसः ॥ त्वया । वयं । मघऽवन् । इंद्र । शत्रून् । अभि । स्याम । महतः । मन्यमानान् ॥ त्वं । त्राता । त्वं । ऊँइति । नः । वृधे । भूः ॥ ० ॥ २१ ॥ पूर्वीः । अहं । शरदः । शश्रमाणा । दोषाः । वस्तोः । उषसः । जरयंतीः ॥ मिनाति । श्रियं । जरिमा । तनूनां । अपि । ऊँइति । नु । पत्नीः । वृषणः । जगम्युः ॥ ये । चित् । हि । पूर्वे । ऋतऽसापः । आसन् । साकं । देवेभिः ।

अवदन् । ऋतानि ॥ ते । चित् । अव । असुः । नहि । अंतं । आपुः । सं ॥ ० ॥ वृषऽभिः । जगम्युः ॥ न । मृषा । श्रांतं । यत् । अवंति । देवाः । विश्वाः । इत् । स्पृधः । अभि । अश्नवाव ॥ जयाव । इत् । अत्र । शतऽनीथं । आजिं । यत् । सम्यंचा । मिथुनौ । अभि । अजाव ॥ नदस्य । मा । रुधतः । कामः । आ । अगन् । इतः । आऽजातः । अमुतः । कुतः । चित् ॥ लोपामुद्रा । वृषणं । निः । रिणाति । धीरं । अधीरा । धयति । श्वसंतं ॥ इमं । नु । सोमं । अंतितः । हृत्ऽसु । पीतं । उप । ब्रुवे ॥ यत् । सीं । आगः । चकृम । तत् । सु । मृळतु । पुलुऽकामः । हि । मर्त्यः ॥ अगस्त्यः । खनमानः । खनित्रैः । प्रऽजां । अपत्यं । बलं । इच्छमानः ॥ उभौ । वर्णौ । ऋषिः । उग्रः । पुपोष । सत्याः । देवेषु । आऽशिषः । जगाम ॥ २२ ॥ युवोः । रजांसि । सुऽयमासः । अश्वाः । रथः । यत् । वां । परि । अर्णांसि । दीयत् ॥ हिरण्ययाः । वां । पवयः । प्रुषायन् । मध्वः । पिबंतौ । उषसः । सचेथेइति । युवं । अत्यस्या । अव । नक्षथः । यत् । विऽपत्मनः । नर्यस्य । प्रऽयज्योः । स्वसा । यत् । वां । विश्वगूर्तीइतिविश्वऽगूर्ती । भराति । वाजाय । ईट्टे । मधुऽपौ । इषे । च । युवं । पयः । उस्रियायां । अधत्तं । पक्कं । आमायां । अव । पूर्व्यं । गोः ॥ अंतः । यत् । वनिनः । वां । ऋतप्सूइत्यृतऽप्सू । ह्वारः । न । शुचिः । यजते । हविष्मान् ॥ युवं । ह । घर्मं । मधुऽमंतं । अत्रये । अपः । न । क्षोदः । अवृणीतं । एषे । तत् । वां । नरौ । अश्विना । पश्वःऽइष्टिः । रथ्याऽइव । चक्रा । प्रति । यंति । मध्वः ॥ आ । वां । दानाय । ववृतीय । दस्रा । गोः । ओहेन । तौग्र्यः । न । जिव्रिः ॥ अपः । क्षोणीइति । सचते । माहिना । वां । जूर्णः । वां । अक्षुः ।

अंहसः । यजत्रा ॥ २३ ॥ नि । यत् । युवेथेइति । निऽयुतः ।
सुदानूइतिसुऽदानू । उप । स्वधाभिः । सृजथः । पुरंऽधिं ॥
प्रेषत् । वेषत् । वातः । न । सूरिः । आ । महे । ददे ।
सुऽव्रतः । न । वाजं ॥ वयं । चित् । हि । वां । जरितारः ।
सत्याः । विपन्यामहे । वि । पणिः । हितऽवान् ॥ अध । चित् ।
हि । स्म । अश्विनौ । अनिंद्या । पाथः । हि । स्म । वृषणौ ।
अंतिऽदेवं ॥ युवां । चित् । हि । स्म । अश्विनौ । अनु । द्यून् ।
विऽरुद्रस्य । प्रऽस्रवणस्य । सातौ । अगस्त्यः । नरां । नृषु ।
प्रऽशस्तः । काराधुनीऽइव । चितयत् । सहस्रैः ॥ प्र । यत् ।
वहेथेइति । महिना । रथस्य । प्र । स्पंद्रा । याथः । मनुषः ।
न । होता ॥ धत्तं । सूरिऽभ्यः । उत । वा । सुऽअश्व्यं ।
नासत्या । रयिऽसाचः । स्याम ॥ तं । वां । रथं । वयं । अद्य ।
हुवेम । स्तोमैः । अश्विना । सुविताय । नव्यं ॥ अरिष्टऽनेमिं ।
परि । द्यां । इयानं ॥ ० ॥ २४ ॥ कत् । ऊँइति । प्रेष्ठौ । इषां ।
रयीणां । अध्वर्यंता । यत् । उत्ऽनिनीथः । अपां ॥ अयं । वां । यज्ञः ।
अकृत । प्रऽशस्ति । वसुधितीइतिवसुऽधिती । अवितारा । जनानां ॥
आ । वां । अश्वासः । शुचयः । पयःऽपाः । वातऽरंहसः ।
दिव्यासः । अत्याः ॥ मनःऽजुवः । वृषणः । वीतऽपृष्ठाः । आ । इह ।
स्वऽराजः । अश्विना । वहंतु ॥ ० ॥ अवनिः । न । प्रवत्वान् ।
सृप्रऽवंधुरः । सुविताय । गम्याः ॥ वृष्णः । स्थातारा । मनसः ।
जवीयान् । अहंऽपूर्वः । यजतः । धिष्ण्या । यः ॥ इहऽइह । जाता ।
सं । अवावशीतां । अरेपसा । तन्वा । नामऽभिः । स्वैः ॥ जिष्णुः ।
वां । अन्यः । सुऽमखस्य । सूरिः । दिवः । अन्यः । सुऽभगः । पुत्रः ।
ऊहे ॥ प्र । वां । निऽचेरुः । ककुहः । वशान् । अनु । पिशंगऽरूपः ।

सदनानि । गम्याः ॥ हरीइति । अन्यस्य । पीपयंत । वाजैः । मथा । रजांसि । अश्विना । वि । घोषैः ॥ २५ ॥ प्र । वां । शरत्ऽवान् । वृषभः । न । निष्षाट् । पूर्वीः । इषः । चरति । मध्वः । इष्णन् ॥ एवैः । अन्यस्य । पीपयंत । वाजैः । वेषंतीः । ऊर्ध्वाः । नद्यः । नः । आ । अगुः ॥ असर्जि । वां । स्थविरा । वेधसा । गीः । बाळ्हे । अश्विना । त्रेधा । क्षरंती ॥ उपऽस्तुतौ । अवतं । नाधमानं । यामन् । अयामन् । शृणुतं । हवं । मे ॥ उत । स्या । वां । रुशतः । वप्संसः । गीः । त्रिऽबर्हिषि । सदसि । पिन्वते । नॄन् ॥ वृषा । वां । मेघः । वृषणा । पीपाय । गोः । न । सेके । मनुषः । दशस्यन् ॥ युवां । पूषाऽइव । अश्विना । पुरंऽधिः । अग्निं । उषां । न । जरते । हविष्मान् ॥ हुवे । यत् । वां । वरिवस्या । गृणानः ॥ ० ॥ २६ ॥ अभूत् । इदं । वयुनं । ओइति । सु । भूषत । रथः । वृषण्ऽवान् । मदंत । मनीषिणः ॥ धियंऽजिन्वा । धिष्ण्या । विश्पलावसूइति । दिवः । नपाता । सुऽकृते । शुचिऽव्रता । इंद्रऽतमा । हि । धिष्ण्या । मरुत्ऽतमा । दस्रा । दंसिष्ठा । रथ्या । रथिऽतमा ॥ पूर्णं । रथं । वहेथेइति । मध्वः । आऽचितं । तेन । दाश्वांसं । उप । याथः । अश्विना ॥ किं । अत्र । दस्रा । कृणुथः । किं । आसाथेइति । जनः । यः । कः । चित् । अहविः । महीयते ॥ अति । क्रमिष्टं । जुरतं । पणेः । असुं । ज्योतिः । विप्राय । कृणुतं । वचस्यवे ॥ जंभयतं । अभितः । रायतः । शुनः । हतं । मृधः । विदथुः । तानि । अश्विना ॥ वाचंऽवाचं । जरितुः । रत्निनीं । कृतं । उभा । शंसं । नासत्या । अवतं । मम ॥ युवं । एतं । चक्रथुः । सिंधुषु । प्लवं । आत्मन्ऽवंतं । पक्षिणं । तौग्र्याय । कं ॥ येन । देवऽत्रा । मनसा । निःऽऊहथुः ।

सुऽपत्मनि । पेतथुः । क्षोदसः । महः ॥ २७ ॥ अवऽविद्धं । तौग्र्यं । अप्ऽसु । अंतः । अनारंभणे । तमसि । प्रऽविद्धं ॥ चतस्रः । नावः । जठलस्य । जुष्टाः । उत् । अश्विऽभ्यां । इषिताः । पारयंति ॥ कः । स्वित् । वृक्षः । निःऽस्थितः । मध्ये । अर्णसः । यं । तौग्र्यः । नाधितः । परिऽअसस्वजत् ॥ पर्णा । मृगस्य । पतरोःऽइव । आऽरभे । उत् । अश्विनौ । ऊहथुः । श्रोमताय । कं ॥ तत् । वां । नरा । नासत्यौ । अनु । स्यात् । यत् । वां । मानासः । उचथं । अवोचन् ॥ अस्मात् । अद्य । सदसः । सोम्यात् । आ ॥ ० ॥ ॥ २८ ॥ तं । युंजाथां । मनसः । यः । जवीयान् । त्रिऽवंधुरः । वृषणा । यः । त्रिऽचक्रः ॥ येन । उपऽयाथः । सुऽकृतः । दुरोणं । त्रिऽधातुना । पतथः । विः । न । पर्णैः ॥ सुऽवृत् । रथः । वर्तते । यन् । अभि । क्षां । यत् । तिष्ठथः । क्रतुऽमंता । अनु । पृक्षे ॥ वपुः । वपुष्या । सचतां । इयं । गीः । दिवः । दुहित्रा । उषसा । सचेथेइति । ॥ आ । तिष्ठतं । सुऽवृतं । यः । रथः । वां । अनु । व्रतानि । वर्तते । हविष्मान् ॥ येन । नरा । नासत्या । इषयध्यै । वर्तिः । याथः । तनयाय । त्मने । च ॥ मा । वां । वृकः । मा । वृकीः । आ । दधर्षीत् । मा । परि । वर्क्तं । उत । मा । अति । धक्तं ॥ अयं । वां । भागः । निऽहितः । इयं । गीः । दस्रौ । इमे । वां । निऽधयः । मधूनां ॥ युवां । गोतमः । पुरुऽमीळ्हः । अत्रिः । दस्रा । हवते । अवसे । हविष्मान् ॥ दिशं । न । दिष्टां । ऋजुयाऽइव । यंता । आ । मे । हवं । नासत्या । उप । यातं ॥ ० ॥ प्रति । वां । स्तोमः । अश्विनौ । अधायि ॥ आ । इह । यातं । पथिऽभिः । देवऽयानैः ॥ ० ॥ २९ ॥

इति द्वितीयाष्टके चतुर्थोऽध्यायः

## ॥ अथ पञ्चमोऽध्यायः ॥

हरिः ॐ ॥ ता । वां । अद्य । तौ । अपरं । हुवेम । उच्छन्त्यां । उषसि । वह्निः । उक्थैः ॥ नासत्या । कुह । चित् । संतौ । अर्यः । दिवः । नपाता । सुदाःऽतराय ॥ अस्मेइति । ऊँइति । सु । वृषणा । मादयेथां । उत् । पणीन् । हतं । उर्म्या । मदंता ॥ श्रुतं । मे । अच्छोक्तिऽभिः । मतीनां । एष्टा । नरा । निऽचेतारा । च । कर्णैः । श्रिये । पूषन् । इषुकृताऽइव । देवा । नासत्या । वहतुं । सूर्यायाः । वच्यंते । वां । ककुहाः । अप्ऽसु । जाताः । युगा । जूर्णाऽइव । वरुणस्य । भूरेः ॥ अस्मेइति । सा । वां । माध्वीइति । रातिः । अस्तु । स्तोमं । हिनोतं । मान्यस्य । कारोः ॥ अनु । यत् । वां । श्रवस्या । सुदानूइतिसुऽदानू । सुऽवीर्याय । चर्षणयः । मदंति । एषः । वां । स्तोमः । अश्विनौ । अकारि । मानेभिः । मघऽवाना । सुऽवृक्ति ॥ यातं । वर्तिः । तनयाय । त्मने । च । अगस्त्ये । नासत्या । मदंता ॥ ० ॥ १ ॥ कतरा । पूर्वा । कतरा । अपरा । अयोः । कथा । जातेइति । कवयः । कः । वि । वेद ॥ विश्वं । त्मना । बिभृतः । यत् । ह । नाम । वि । वर्तेतेइति । अहनीइति । चक्रियाऽइव ॥ भूरिं । द्वेइति । अचरंतीइति । चरंतं । पत्ऽवंतं । गर्भं । अपदीइति । दधातेइति ॥ नित्यं । न । सूनुं । पित्रोः । उपऽस्थे । द्यावा । रक्षतं । पृथिवीइति । नः । अभ्वात् ॥ अनेहः । दात्रं । अदितेः । अनर्वं । हुवे । स्वःऽवत् । अवधं । नमस्वत् ॥ तत् । रोदसीइति । जनयतं । जरित्रे ॥ ० ॥ अतप्यमानेइति । अवसा । अवंतीइति

अनु । स्याम । रोदसीइति । देवपुत्रेइतिदेवऽपुत्रे ॥ उभेइति । देवानां । उभयेभिः । अह्नां ॥ ० ॥ संगच्छमानेइतिसंऽगच्छमाने । युवतीइति । समंतेइतिसंऽअंते । स्वसारा । जामीइति । पित्रोः । उपऽस्थे ॥ अभिजिघ्रंतीइत्यभिऽजिघ्रंती । भुवनस्य । नाभिं ॥ ० ॥ ॥ २ ॥ उर्वीइति । सद्मनीइति । बृहतीइति । ऋतेन । हुवे । देवानां । अवसा । जनित्रीइति ॥ दधातेइति । येइति । अमृतं । सुप्रतीकेइतिसुऽप्रतीके ॥ ० ॥ उर्वीइति । पृथ्वीइति । बहुलेइति । दूरेअंतेइतिदूरेऽअंते । उप । ब्रुवे । नमसा । यज्ञे । अस्मिन् । दधातेइति । येइति । सुभगेइतिसुऽभगे । सुप्रतूर्तीइतिसुऽप्रतूर्ती ॥ ० ॥ देवान् । वा । यत् । चकृम । कत् । चित् । आगः । सखायं । वा । सदं । इत् । जाःपतिं । वा ॥ इयं । धीः । भूयाः । अवऽयानं । एषां ॥ ० ॥ उभा । शंसा । नर्या । मां । अविष्टां । उभेइति । मां । ऊतीइति । अवसा । सचेतां ॥ भूरि । चित् । अर्यः । सुदाःऽतराय । इषा । मदंतः । इषयेम । देवाः ॥ ऋतं । दिवे । तत् । अवोचं । पृथिव्यै । अभिऽश्रावाय । प्रथमं । सुऽमेधाः ॥ पातां । अवद्यात् । दुःऽइतात् । अभीके । पिता । माता । च । रक्षतां । अवःऽभिः ॥ इदं । द्यावापृथिवीइति । सत्यं । अस्तु । पितः । मातः । यत् इह । उपऽब्रुवे । वां ॥ भूतं । देवानां । अवमेइति । अवःऽभिः ॥ ० ॥ ३ ॥ आ । नः । इळाभिः । विदथे । सुऽशस्ति । विश्वानरः । सविता । देवः । एतु ॥ अपि । यथा । युवानः । मत्सथ । नः । विश्वं । जगत् । अभिऽपित्वे । मनीषा ॥ आ । नः । विश्वे । आस्क्राः । गमंतु । देवाः । मित्रः । अर्यमा । वरुणः । सऽजोषाः ॥ भुवन् । यथा । नः । विश्वे । वृधासः । करन् । सुऽसहा । विथुरं । न । शवः ॥ प्रेष्ठं । वः । अतिथिं । गृणीषे । अग्निं । शस्तिऽभिः । तुर्वणिः । सऽजोषाः । असत् ।

यथा । नः । वरुणः । सुऽकीर्तिः । इषः । च । पर्षत् । अरिऽगूर्तः सूरिः ॥ उप । वः । आ । ईषे । नमसा । जिगीषा । उषसानक्ता सुदुघाऽइव । धेनुः ॥ समाने । अहन् । विऽमिमानः । अर्कं । विषुरूपे । पयसि । सस्मिन् । ऊधन् ॥ उत । नः । अहिः । बुध्न्यः मयः । करितिकः । शिशुं । न । पिप्युषीऽइव । वेति । सिंधुः ॥ येन नपातं । अपां । जुनाम । मनःऽजुवः । वृषणः । यं । वहंति ॥ ४ उत । नः । ईं । त्वष्टा । आ । गंतु । अछ । स्मत् । सूरिऽभिः अभिऽपित्वे । सऽजोषाः ॥ आ । वृत्रऽहा । इंद्रः । चर्षणिऽप्राः तुविःऽतमः । नरां । नः । इह । गम्याः ॥ ० ॥ मतयः । अश्वयोगाः । शिशुं । न । गावः । तरुणं । रिहंति ॥ तं । ईं । गिरः जनयः । न । पत्नीः । सुरभिःऽतमं । नरां । नसंत ॥ ० ॥ मरुतः वृद्धऽसेनाः । स्मत् । रोदसीइति । सऽमनसः । सदंतु ॥ पृषत्ऽअश्वासः । अवनयः । न । रथाः । रिशादसः । मित्रऽयुजः । न देवाः ॥ प्र । नु । यत् । एषां । महिना । चिकित्रे । प्र । युंजते प्रऽयुजः । ते । सुऽवृक्ति ॥ ० ॥ सुऽदिनें । न । शरुः । विश्वं । आ इरिणं । प्रुषायंत । सेनाः ॥ प्रोइति । अश्विनौ । अवसे । कृणुध्वं प्र । पूषणं । स्वऽतवसः । हि । संति ॥ अद्वेषः । विष्णुः । वातः ऋभुक्षाः । अछ । सुम्नाय । ववृतीय । देवान् ॥ इयं । सा । वः अस्मेइति । दीधितिः । यजत्राः । अपिऽप्राणी । च । सदनी । च भूयाः ॥ नि । या । देवेषु । यतते । वसुऽयुः ॥ ० ॥ ५ ॥ पितुं । नु स्तोषं । महः । धर्माणं । तविषीं । यस्य । त्रितः । वि । ओजसा वृत्रं । विऽपर्वं । अर्दयत् ॥ स्वादोइति । पितोइति । मधोइति पितोइति । वयं । त्वा । ववृमहे ॥ अस्माकं । अविता । भव ॥ उप नः । पितोइति । आ । चर । शिवः । शिवाभिः । ऊतिऽभिः ॥ मयःऽ

भुः । अद्विषेण्यः । सखा । सुऽशेवः । अद्वयाः ॥ तव । त्ये । पितोइति । रसाः । रजांसि । अनु । विऽस्थिताः ॥ दिवि । वाताःऽइव । श्रिताः ॥ ० ॥ ददतः । तव । स्वादिष्ठ । ते । पितोइति ॥ प्र । स्वाद्मानः । रसानां । तुविग्रीवाःऽइव । ईरते ॥ ६ ॥ त्वेइति । पितोइति । महानां । देवानां । मनः । हितं ॥ अकारि । चारु । केतुना । तव । अहिं । अवसा । अवधीत् ॥ यत् । अदः । पितोइति । अजगन् । विवस्व । पर्वतानां ॥ अत्र । चित् । नः । मधोइति । पितोइति । अरं । भक्षाय । गम्याः ॥ यत् । अपां । ओषधीनां । परिशं । आऽरिशामहे ॥ वातापे । पीवः । इत् । भव ॥ यत् । ते । सोम । गोऽआशिरः । यवऽआशिरः । भजामहे ॥ ० ॥ करंभः । ओषधे । भव । पीवः । वृक्कः । उदारथिः ॥ ० ॥ तं । त्वा । वयं । पितोइति । वचःऽभिः । गावः । न । हव्या । सुसूदिम ॥ देवेभ्यः । त्वा । सधऽमादं । अस्मभ्यं । त्वा । सधऽमादं ॥ ७ ॥ संऽइद्धः । अद्य । राजसि । देवः । देवैः । सहस्रऽजित् ॥ दूतः । हव्या । कविः । वह ॥ तनूऽनपात् । ऋतं । यते । मध्वा । यज्ञः । सं । अज्यते ॥ दधत् । सहस्रिणीः । इषः ॥ आऽजुह्वानः । नः । ईड्यः । देवान् । आ । वक्षि । यज्ञियान् ॥ अग्ने । सहस्रऽसाः । असि ॥ प्रचीनं । बर्हिः । ओजसा । सहस्रऽवीरं । अस्तृणन् ॥ यत्र । आदित्याः । विऽराजथ ॥ विऽराट् । संऽराट् । विऽभ्वीः । प्रऽभ्वीः । बह्वीः । च । भूयसीः । च । याः ॥ दुरः । घृतानि । अक्षरन् ॥ ८ ॥ सुरुक्मेइतिसुऽरुक्मे । हि । सुऽपेशसा । अधि । श्रिया । विऽराजतः ॥ उषसौ । आ । इह । सीदतां ॥ प्रथमा । हि । सुऽवाचसा ॥ ० ॥ भारति । इळे । सरस्वति । याः । वः । सर्वाः । उपऽब्रुवे ॥ ताः । नः । चोदयत । श्रिये ॥ त्वष्टा । रूपाणि । हि । प्रऽभुः । पशून् । विश्वान् । संऽआनजे ॥ तेषां । नः ।

स्फातिं । आ । यज ॥ उप । त्मन्या । वनस्पते । पाथः । देवेभ्यः सृज ॥ अग्निः । हव्यानि । सिस्वदत् ॥ पुरःऽगाः । अग्निः । देवानां गायत्रेण । सं । अज्यते ॥ स्वाहाऽकृतीषु । रोचते ॥ ९ ॥ अग्ने । नय सुऽपथा । राये । अस्मान् । विश्वानि । देव । वयुनानि । विद्वान् । युयोधि । अस्मत् । जुहुराणं । एनः । भूयिष्ठां । ते । नमःऽउक्तिं विधेम ॥ अग्ने । त्वं । पारय । नव्यः । अस्मान् । स्वस्तिऽभिः । अति दुःऽगानि । विश्वा ॥ पूः । च । पृथ्वी । बहुला । नः । उर्वी । भव तोकाय । तनयाय । शं । योः ॥ अग्ने । त्वं । अस्मत् । युयोधि अमीवाः । अनग्निऽत्राः । अभि । अमंत । कृष्टीः ॥ पुनः । अस्मभ्यं सुवितायं । देव । क्षां । विश्वेभिः । अमृतेभिः । यजत्र ॥ पाहि । नः अग्ने । पायुऽभिः । अजस्रैः । उत । प्रिये । सदने । आ । शुशुक्वान् मा । ते । भयं । जरितारं । यविष्ठ । नूनं । विदत् । मा । अपरं सहस्वः ॥ मा । नः । अग्ने । अव । सृजः । अघाय । अविष्यवे रिपवे । दुच्छुनायै ॥ मा । दत्वते । दशते । मा । अदते । नः । मा रिषते । सहसाऽवन् । परा । दाः ॥ १० ॥ वि । घ । त्वाऽवान् ऋतऽजात । यंसत् । गृणानः । अग्ने । तन्वे । वरूथं ॥ विश्वात् रिरिक्षोः । उत । वा । निनित्सोः । अभिऽहुतां । असि । हि । देव विष्पट् ॥ त्वं । तान् । अग्ने । उभयान् । वि । विद्वान् । वेषि । प्रऽपित्वे । मनुषः । यजत्र ॥ अभिऽपित्वे । मनवे । शास्यः । भूः मर्मृजेन्यः । उशिक्ऽभिः । न । अक्रः ॥ अवोचाम । निऽवचनानि अस्मिन् । मानस्य । सूनुः । सहसाने । अग्नौ ॥ वयं । सहस्रं ऋषिऽभिः । सनेम ॥ ० ॥ ११ ॥ अनर्वाणं । वृषभं । मंद्रऽजिह्वं बृहस्पतिं । वर्धय । नव्यं । अर्कैः ॥ गाथान्यः । सुऽरुचः । यस्य देवाः । आऽशृण्वंति । नवमानस्य । मर्ताः ॥ तं । ऋत्वियाः । उप

वाचः । सचंते । सर्गः । न । यः । देवऽयतां । असर्जि ॥ बृहस्पतिः ।
सः । हि । अंजः । वरांसि । विऽभ्वा । अभवत् । सं । ऋते । मातरिश्वा ॥
उपऽस्तुतिं । नमसः । उत्ऽयतिं । च । श्लोकं । यंसत् । सविताऽ-
इव । प्र । बाहूइति ॥ अस्य । क्रत्वा । अहन्यः । यः । अस्ति । मृगः ।
न । भीमः । अरक्षसः । तुविष्मान् ॥ अस्य । श्लोकः । दिवि ।
ईयते । पृथिव्यां । अत्यः । न । यंसत् । यक्षऽभृत् । विऽचेताः ॥
मृगाणां । न । हेतयः । यंति । च । इमाः । बृहस्पतेः । अहिऽमायान् ।
अभि । द्यून् ॥ ये । त्वा । देव । उस्रिकं । मन्यमानाः । पापाः ।
भद्रं । उपऽजीवंति । पज्राः ॥ न । दुःऽध्ये । अनु । ददासि । वामं ।
बृहस्पते । चयसे । इत् । पियारुं ॥ १२ ॥ सुऽप्रैतुः । सुऽयवसः ।
न । पंथाः । दुःऽनियंतुः । परिऽप्रीतः । न । मित्रः ॥ अनर्वाणः ।
अभि । ये । चक्षते । नः । अपिऽवृताः । अपऽऊर्णुवंतः । अस्थुः ॥
सं । यं । स्तुभः । अवनयः । न । यंति । समुद्रं । न । स्रवतः ।
रोधऽचक्राः ॥ सः । विद्वान् । उभयं । चष्टे । अंतः । बृहस्पतिः । तरः ।
आपः । च । गृध्रः ॥ एव । महः । तुविऽजातः । तुविष्मान् । बृहस्पतिः ।
वृषभः । धायि । देवः ॥ सः । नः । स्तुतः । वीरऽवत् । धातु । गोऽ-
मत् ॥ ० ॥ १३ ॥ कंकतः । न । कंकतः । अथोइति । सतीनऽकंकतः ॥
द्वौ । इति । प्लुषीइति । इति । नि । अदृष्टाः । अलिप्सत ॥ अदृष्टान् ।
हंति । आऽयती । अथोइति । हंति । पराऽयती ॥ अथोइति । अवऽ-
घ्नती । हंति । अथोइति । पिनष्टि । पिंषती ॥ शरासः । कुशरासः ।
दर्भासः । सैर्याः । उत ॥ मौंजाः । अदृष्टाः । वैरिणाः । सर्वे । साकं ।
नि । अलिप्सत ॥ नि । गावः । गोऽस्थे । असदन् । नि । मृगासः ।
अविक्षत ॥ नि । केतवः । जनानां । नि । अदृष्टाः । अलिप्सत ॥ एते ।
ऊँइति । त्ये । प्रति । अदृश्रन् । प्रऽदोषं । तस्कराःऽइव ॥ अदृष्टाः ।

विश्वऽदृष्टाः । प्रतिऽबुद्धाः । अभूतन ॥ १४ ॥ द्यौः । वः । पिता । पृथिवी । माता । सोमः । भ्राता । अदितिः । स्वसा ॥ अदृष्टाः । विश्वऽदृष्टाः । तिष्ठत । इलयत । सु । कं ॥ ये । अंस्याः । ये । अंग्याः । सूचीकाः । ये । प्रऽकंकताः ॥ अदृष्टाः । किं । चन । इह । वः । सर्वे । साकं । नि । जस्यत ॥ उत् । पुरस्तात् । सूर्यः । एति । विश्वऽदृष्टः । अदृष्टऽहा ॥ अदृष्टान् । सर्वान् । जंभयन् । सर्वाः । च । यातुऽधान्यः ॥ उत् । अपप्तत् । असौ । सूर्यः । पुरु । विश्वानि । जूर्वन् ॥ आदित्यः । पर्वतेभ्यः । विश्वऽदृष्टः । अदृष्टऽहा ॥ सूर्ये । विषं । आ । सजामि । दृतिं । सुराऽवतः । गृहे ॥ सः । चित् । नु । न । मराति । नो इति । वयं । मराम । आरे । अस्य । योजनं । हरिऽस्थाः । मधु । त्वा । मधुला । चकार ॥ १५ ॥ इयत्तिका । शकुंतिका । सका । जघास । ते । विषं ॥ सो इति ॥ ० ॥ त्रिः । सप्त । विष्पुलिंगकाः । विषस्य । पुष्पं । अक्षन् ॥ ताः ॥ ० ॥ मरंति ॥ ० ॥ नवानां । नवतीनां । विषस्य । रोपुषिणां ॥ सर्वासां । अग्रभं । नाम ॥ ० ॥ त्रिः । सप्त । मयूर्यः । सप्त । स्वसारः । अग्रुवः ॥ ताः । ते । विषं । वि । जभ्रिरे । उदकं । कुंभिनीःऽइव ॥ इयत्तकः । कुषुंभकः । तकं । भिनद्मि । अश्मना ॥ ततः । विषं । प्र । ववृते । पराचीः । अनु । संऽवतः । कुषुंभकः । तत् । अब्रवीत् । गिरेः । प्रऽवर्तमानकः ॥ वृश्चिकस्य । अरसं । विषं । अरसं । वृश्चिक । ते । विषं ॥ १६ ॥ इति समाप्तं प्रथमंमंडलं ॥ त्वं । अग्ने । द्युऽभिः । त्वं । आशुशुक्षणिः । त्वं । अत्ऽभ्यः । त्वं । अश्मनः । परि ॥ त्वं । वनेभ्यः । त्वं । ओषधीभ्यः । त्वं । नृणां । नृऽपते । जायसे । शुचिः ॥ तव । अग्ने । होत्रं । तव । पोत्रं । ऋत्वियं । तव । नेष्ट्रं । त्वं । अग्नित् । ऋतऽयतः ॥ तव । प्रऽशास्त्रं । त्वं । अध्वरिऽयसि । ब्रह्मा । च ।

असि । गृहऽपतिः । च । नः । दमे ॥ त्वं । अग्ने । इंद्रः । वृषभः । सतां । असि । त्वं । विष्णुः । उरुऽगायः । नमस्यः ॥ त्वं । ब्रह्मा । रयिऽवित् । ब्रह्मणः । पते । त्वं । विधर्तरितिविऽधर्तः । सचसे । पुरंऽध्या ॥ त्वं । अग्ने । राजा । वरुणः । धृतऽव्रतः । त्वं । मित्रः । भवसि । दस्मः । ईड्यः ॥ त्वं । अर्यमा । सत्ऽपतिः । यस्य । संऽभुजं । त्वं । अंशः । विदथे । देव । भाजयुः ॥ त्वं । अग्ने । त्वष्टा । विधते । सुऽवीर्यं । तव । ग्नावः । मित्रऽमहः । सऽजात्यं ॥ त्वं । आशुऽहेमा । ररिषे । सुऽअश्व्यं । त्वं । नरां । शर्धः । असि । पुरुऽवसुः ॥ १७ ॥ त्वं । अग्ने । रुद्रः । असुरः । महः । दिवः । त्वं । शर्धः । मारुतं । पृक्षः । ईशिषे ॥ त्वं । वातैः । अरुणैः । यासि । शंऽगयः । त्वं । पूषा । विधतः । पासि । नु । त्मना ॥ त्वं । अग्ने । द्रविणःऽदाः । अरंऽकृते । त्वं । देवः । सविता । रत्नऽधाः । असि ॥ त्वं । भगः । नृऽपते । वस्वः । ईशिषे । त्वं । पायुः । दमे । यः । ते । अविधत् ॥ त्वां । अग्ने । दमे । आ । विश्पतिं । विशः । त्वां । राजानं । सुऽविदत्रं । ऋंजते ॥ त्वं । विश्वानि । सुऽअनीक । पत्यसे । त्वं । सहस्राणि । शता । दश । प्रति ॥ त्वां । अग्ने । पितरं । इष्टिऽभिः । नरः । त्वां । भ्रात्राय । शम्या । तनूऽरुचं ॥ त्वं । पुत्रः । भवसि । यः । ते । अविधत् । त्वं । सखा । सुऽशेवः । पासि । आऽधृषः ॥ त्वं । अग्ने । ऋभुः । आके । नमस्यः । त्वं । वाजस्य । क्षुऽमतः । रायः । ईशिषे ॥ त्वं । वि । भासि । अनु । धक्षि । दावने । त्वं । विऽशिक्षुः । असि । यज्ञं । आऽतनिः ॥ १८ ॥ त्वं । अग्ने । अदितिः । देव । दाशुषे । त्वं । होत्रा । भारती । वर्धसे । गिरा ॥ त्वं । इळा । शतऽहिमा । असि । दक्षसे । त्वं । वृत्रऽहा । वसुऽपते । सरस्वती ॥ त्वं । अग्ने । सुऽभृतं । उत्ऽ-

तमं । वयं । तव । स्पार्हे । वर्णे । आ । संऽदृशिं । श्रियः ॥ त्वं । वाजः । प्रऽतरणः । बृहन् । असि । त्वं । रयिः । बहुलः । विश्वतः । पृथुः ॥ त्वां । अग्ने । आदित्यासः । आस्यं । त्वां । जिह्वां । शुचयः । चक्रिरे । कवे ॥ त्वां । रातिऽसाचः । अध्वरेषु । सश्चिरे । त्वेइति । देवाः । हविः । अदंति । आऽहुतं ॥ त्वेइति । अग्ने । विश्वे । अमृतासः । अद्रुहः । आसा । देवाः । हविः । अदंति । आऽहुतं । त्वया । मर्तासः । स्वदंते । आऽसुतिं । त्वं । गर्भः । वीरुधां । जज्ञिषे । शुचिः ॥ त्वं । तान् । सं । च । प्रति । च । असि । मज्मना । अग्ने । सुऽजात । प्र । च । देव । रिच्यसे ॥ पृक्षः । यत् । अत्र । महिना । वि । ते । भुवत् । अनु । द्यावापृथिवीइति । रोदसीइति । उभेइति ॥ ये । स्तोतृऽभ्यः । गोऽअग्रां । अश्वऽपेशसं । अग्ने । रातिं । उपऽसृजंति । सूरयः ॥ अस्मान् । च । तान् । च । प्र । हि । नेषि । वस्यः । आ ॥ बृहत् । वदेम । विदथे । सुऽवीराः ॥ १९ ॥ यज्ञेन । वर्धत । जातऽवेदसं । अग्निं । यजध्वं । हविषा । तना । गिरा ॥ संऽइधानं । सुऽप्रयसं । स्वःऽनरं । द्युक्षं । होतारं । वृजनेषु । धूःऽसदं ॥ अभि । त्वा । नक्तीः । उषसः । ववाशिरे । अग्ने । वत्सं । न । स्वसरेषु । धेनवः ॥ दिवःऽइव । इत् । अरतिः । मानुषा । युगा । आ । क्षपः । भासि । पुरुऽवार । संऽयतः ॥ तं । देवाः । बुध्ने । रजसः । सुऽदंससं । दिवःपृथिव्योः । अरतिं । नि । एरिरे ॥ रथंऽइव । वेद्यं । शुक्रऽशोचिषं । अग्निं । मित्रं । न । क्षितिषु । प्रऽशंस्यं ॥ तं । उक्षमाणं । रजसि । स्वे । आ । दमे । चंद्रंऽइव । सुऽरुचं । ह्वारे । आ । दधुः ॥ पृश्न्याः । पतरं । चितयंतं । उक्षऽभिः । पाथः । न । पायुं । जनसीइति । उभेइति । अनु । सः । होता । विश्वं । परि । भूतु । अध्वरं । तं । ऊँइति । हव्यैः ।

मनुषः । ऋंजते । गिरा ॥ हिरिऽशिप्रः । वृधसानासु । जर्भुरत् । द्यौः । न । स्तृऽभिः । चितयत् । रोदसीइति । अनु ॥ २० ॥ सः । नः । रेवत् । संऽइधानः । स्वस्तये । संऽददस्वान् । रयिं । अस्मासु । दीदिहि ॥ आ । नः । कृणुष्व । सुवितायं । रोदसीइति । अग्ने । हव्या । मनुषः । देव । वीतये ॥ दाः । नः । अग्ने । बृहतः । दाः । सहस्रिणः । दुरः । न । वाजं । श्रुत्यै । अप । वृधि ॥ प्राचीइति । द्यावापृथिवीइति । ब्रह्मणा । कृधि । स्वः । न । शुक्रं । उषसः । वि । दिद्युतः ॥ सः । इधानः । उषसः । राम्याः । अनु । स्वः । न । दीदेत् । अरुषेण । भानुना ॥ होत्राभिः । अग्निः । मनुषः । सुऽअध्वरः । राजा । विशां । अतिथिः । चारुः । आयवे ॥ एव । नः । अग्ने । अमृतेषु । पूर्व्य । धीः । पीपाय । बृहत्ऽदिवेषु । मानुषा । दुहाना । धेनुः । वृजनेषु । कारवे । त्मना । शतिनं । पुरुऽरूपं । इषणि ॥ वयं । अग्ने । अर्वता । वा । सुऽवीर्यं । ब्रह्मणा । वा । चितयेम । जनान् । अति । अस्माकं । द्युम्नं । अधि । पंच । कृष्टिषु । उच्चा । स्वः । न । शुशुचीत । दुस्तरं ॥ सः । नः बोधि । सहस्य । प्रऽशंस्यः । यस्मिन् । सुऽजाताः । इषयंत । सूरयः ॥ यं । अग्ने । यज्ञं । उपऽयंति । वाजिनः । नित्ये । तोके । दीदिऽवांसं । स्वे । दमे ॥ उभयासः । जातऽवेदः । स्याम । ते । स्तोतारः । अग्ने । सूरयः । च । शर्मणि ॥ वस्वः । रायः । पुरुऽचंद्रस्य । भूयसः । प्रजाऽवतः । सुऽअपत्यस्य । शग्धि । नः ॥ ० ॥ ॥ २१ ॥ संऽइद्धः । अग्निः । निऽहितः । पृथिव्यां । प्रत्यङ् । विश्वानि । भुवनानि । अस्थात् ॥ होता । पावकः । प्रऽदिवः । सुऽमेधाः । देवः । देवान् । यजतु । अग्निः । अर्हन् ॥ नराशंसः । प्रति । धामानि । अंजन् । तिस्रः । दिवः । प्रति । मह्ना । सुऽअर्चिः ॥ घृतऽप्रुषा । मनसा । हव्यं । उंदन् । मूर्धन् । यज्ञस्य । सं । अनक्तु ।

देवान् ॥ इळितः । अग्ने । मनसा । नः । अर्हन् । देवान् । यक्षि
मानुषात् । पूर्वः । अद्य ॥ सः । आ । वह । मरुतां । शर्धः
अच्युतं । इंद्रं । नरः । बर्हिऽसदं । यजध्वं ॥ देव । बर्हिः । वर्धमानं
सुऽवीरं । स्तीर्णं । राये । सुऽभरं । वेदीइति । अस्यां ॥ घृतेन
अक्तं । वसवः । सीदत । इदं । विश्वे । देवाः । आदित्याः । यज्ञि
यासः ॥ वि । श्रयतां । उर्विया । हूयमानाः । द्वारः । देवीः । सुप्र
अयनाः । नमःऽभिः ॥ व्यचस्वतीः । वि । प्रथंतां । अजुर्याः । वर्णं
पुनानाः । यशसं । सुऽवीरं ॥ २२ ॥ साधु । अपांसि । सनतां । नः
उक्षितेइति । उषसानक्ता । वय्यांऽइव । रण्वितेइति ॥ तंतुं । ततं
संवयंतीइतिसंऽवयंती । समीचीइतिसंऽईची । यज्ञस्य । पेशः । सुदु
घेइतिसुऽदुघे । पयस्वतीइति ॥ दैव्या । होतारा । प्रथमा । विदुःऽतरा
ऋजु । यक्षतः । सं । ऋचा । वपुःऽतरा ॥ देवान् । यजंतौ । ऋतुऽथा
सं । अंजतः । नाभा । पृथिव्याः । अधि । सानुषु । त्रिषु ॥ सरस्वती
साधयंती । धियं । नः । इळा । देवी । भारती । विश्वऽतूर्तिः
तिस्रः । देवीः । स्वधया । बर्हिः । आ । इदं । अछिद्रं । पांतु
शरणं । निऽसद्य ॥ पिशंगऽरूपः । सुऽभरः । वयःऽधाः । श्रुष्टी
वीरः । जायते । देवऽकामः ॥ प्रऽजां । त्वष्टा । वि । स्यतु । नाभिं
अस्मेइति । अथ । देवानां । अपि । एतु । पाथः ॥ वनस्पतिः । अवऽ
सृजन् । उप । स्थात् । अग्निः । हविः । सूदयति । प्र । धीभिः ॥ त्रिधा
संऽअक्तं । नयतु । प्रऽजानन् । देवेभ्यः । दैव्यः । शमिता । उप
हव्यं ॥ घृतं । मिमिक्षे । घृतं । अस्य । योनिः । घृते । श्रितः । घृतं
ऊँइति । अस्य । धाम । अनुऽस्वधं । आ । वह । मादयस्व । स्वाहाऽ
कृतं । वृषभ । वक्षि । हव्यं ॥ २३ ॥ हुवे । वः । सुऽद्योत्मानं । सुऽ
वृक्तिं । विशां । अग्निं । अतिथिं । सुऽप्रयसं ॥ मित्रःऽइव । यः

दिधिषाय्यः । भूत् । देवः । आऽदेवे । जने । जातऽवेदाः ॥ इमं । विधंतः । अपां । सधऽस्थे । द्विता । अदधुः । भृगवः । विक्षु । आयोः ॥ एषः । विश्वानि । अभि । अस्तु । भूम । देवानां । अग्निः । अरतिः । जीरऽअश्वः ॥ अग्निं । देवासः । मानुषीषु । विक्षु । प्रियं । धुः । क्षेष्यंतः । न । मित्रं ॥ सः । दीदयत् । उशतीः । ऊर्म्याः । आ । दक्षाय्यः । यः । दास्वते । दमे । आ ॥ अस्य । रण्वा । स्वस्यऽइव । पुष्टिः । संऽदृष्टिः । अस्य । हियानस्य । धक्षोः ॥ वि । यः । भरि-भ्रत् । ओषधीषु । जिह्वां । अत्यः । न । रथ्यः दोधवीति । वारान् ॥ आ । यत् । मे । अभ्वं । वनदः । पनंतः । उशिक्ऽभ्यः । न । अमि-मीत । वर्णं ॥ सः चित्रेण । चिकिते । रंऽसु । भासा । जुजुर्वान् । यः । मुहुः । आ । युवा । भूत् ॥ २४ ॥ आ । यः । वना । ततृषाणः । न । भाति । वाः । न । पथा । रथ्याऽइव । स्वानीत् ॥ कृष्णऽ-अध्वा । तपुः । रण्वः । चिकेत । द्यौःऽइव । स्मयमानः । नभःऽभिः ॥ सः । यः । वि । अस्थात् । अभि । धक्षत् । उर्वीं । पशुः । न । एति । स्वऽयुः । अगोपाः ॥ अग्निः । शोचिष्मान् । अतसानि । उष्णन् । कृष्णऽव्यथिः । अस्वदयत् । न । भूम ॥ नु । ते । पूर्वस्य । अवसः । अधिऽइतौ । तृतीये । विदथे । मन्म । शंसि । अस्मेइति । अग्ने । संयत्ऽवीरं । बृहंतं । क्षुऽमंतं । वाजं । सुऽअपत्यं । रयिं । दाः । त्वया । यथा । गृत्सऽमदासः । अग्ने । गुहा । वन्वंतः । उपरान् । अभि । स्युरि-तिस्युः ॥ सुऽवीरासः । अभिमातिऽसहः । स्मत् । सूरिऽभ्यः । गृणते । तत् । वयः । धाः ॥ २५ ॥ होता । अजनिष्ट । चेतनः । पिता । पितृऽभ्यः । ऊतये ॥ प्रऽयक्षन् । जेन्यं । वसु । शकेम । वाजिनः । यमं ॥ आ । यस्मिन् । सप्त । रश्मयः । तताः । यज्ञस्य । नेतरि ॥ मनुष्वत् । दैव्यं । अष्टमं । पोता । विश्वं । तत् । इन्वति ॥ दधन्वे ।

वा । यत् । ईं । अनु । वोचत् । ब्रह्माणि । वेः । ऊँइति । तत् । परि
विश्वानि । काव्या । नेमिः । चक्रम्ऽइव । अभवत् ॥ साकं । हि
शुचिना । शुचिः । प्रऽशास्ता । क्रतुना । अजनि ॥ विद्वान् । अस्य
व्रता । ध्रुवा । वयाःऽइव । अनु । रोहते ॥ ताः । अस्य । वर्णं
आयुवः । नेष्टुः । सचंत । धेनवः ॥ कुवित् । तिसृऽभ्यः । आ । वरं
स्वसारः । याः । इदं । ययुः ॥ यदि । मातुः । उप । स्वसा । घृतं
भरंती । आस्थित ॥ तासां । अध्वर्युः । आऽगतौ । यवः । वृष्टीऽइव
मोदते ॥ स्वः । स्वाय । धायसे । कृणुतां । ऋत्विक् । ऋत्विजं
स्तोमं । यज्ञं । च । आत् । अरं । वनेम । ररिम । वयं ॥ यथा
विद्वान् । अरं । करत् । विश्वेभ्यः । यजतेभ्यः ॥ अयं । अग्ने
त्वेइति । अपि । यं । यज्ञं । चकृम । वयं ॥ २६ ॥ इमां । मे । अग्ने
संऽइधं । इमां । उपऽसदं । वनेरितिवनेः ॥ ० ॥ अया । ते । अग्ने
विधेम । ऊर्जः । नपात् । अश्वंऽइष्टे ॥ एना । सुऽउक्तेन । सुऽजात ॥ तं
त्वा । गीःऽभिः । गिर्वणसं । द्रविणस्युं । द्रविणःऽदः । सपर्येम । सप
र्यवः ॥ सः । बोधि । सूरिः । मघऽवा । वसुऽपते । वसुऽदावन् ॥ युयो
धि । अस्मत् । द्वेषांसि ॥ सः । नः । वृष्टिं । दिवः । परि । सः । नः
वाजं । अनर्वाणं ॥ सः । नः । सहस्रिणीः । इषः ॥ ईळानाय
अवस्यवे । यविष्ठ । दूत । नः । गिरा । यजिष्ठः । होतः । आ । गहि
अंतः । हि । अग्ने । ईयसे । विद्वान् । जन्म । उभया । कवे । दूतः
जन्याऽइव । मित्र्यः ॥ सः । विद्वान् । आ । च । पिप्रयः । यक्षि
चिकित्वः । आनुषक् ॥ आ । च । अस्मिन् । सत्सि । बर्हिषि ॥ २७
श्रेष्ठं । यविष्ठ । भरत । अग्ने । द्युऽमंतं । आ । भर ॥ वसोइति
पुरुऽस्पृहं । रयिं ॥ मा । नः । अरातिः । ईशत । देवस्य । मर्त्यस्य
च ॥ पर्षि । तस्याः । उत । द्विषः । विश्वाः । उत । त्वया । वयं

धाराः । उदन्याःऽइव ॥ अति । गाहेमहि । द्विषः ॥ शुचिः । पावक । वंद्यः । अग्ने । बृहत् । वि । रोचसे ॥ त्वं । घृतेभिः । आऽहुतः । त्वं । नः । असि । भारत । अग्ने । वशाभिः । उक्षऽभिः ॥ अष्टाऽपदीभिः । आऽहुतः ॥ द्रुऽअन्नः । सर्पिःऽआसुतिः । प्रत्नः । होता । वरेण्यः । सहसः । पुत्रः । अद्भुतः ॥ २८ ॥ वाजयन्ऽइव । नु । रथान् । योगान् । अग्नेः । उप । स्तुहि ॥ यशःऽतमस्य । मीळ्हुषः ॥ यः । सुऽनीथः । ददाशुषे । अजुर्यः । जरयन् । अरिं ॥ चारुऽप्रतीकः । आऽहुतः ॥ यः । ऊँइति । श्रिया । दमेषु । आ । दोषा । उषसि । प्रऽशस्यते ॥ यस्य । व्रतं । न । मीयते ॥ आ । यः । स्वः । न । भानुना । चित्रः । विऽभाति । अर्चिषा ॥ अंजानः । अजरैः । अभि ॥ आत्रिं । अनु । स्वऽराज्यं । अग्निं । उक्थानि । ववृधुः ॥ विश्वाः । अधि । श्रियः । दधे ॥ अग्नेः । इंद्रस्य । सोमस्य । देवानां । ऊतिऽभिः । वयं ॥ अरिष्यंतः । सचेमहि । अभि । स्याम । पृतन्यतः ॥ ॥ २९ ॥

इति द्वितीयाष्टके पञ्चमोऽध्यायः



## ॥ अथ षष्ठोऽध्यायः ॥

हरिः ॐ ॥ नि होता । होतृऽसदने । विदानः । त्वेषः । दीदिऽवान् । असदत् । सुऽदक्षः ॥ अदब्धव्रतऽप्रमतिः । वसिष्ठः । सहस्रंऽभरः । शुचिऽजिह्वः । अग्निः ॥ त्वं । दूतः । त्वं । ऊँइति ।

नः । पुरःऽपाः । त्वं । वस्यः । आ । वृषभ । प्रऽनेता ॥ अग्ने । तोकस्य । नः । तने । तनूनां । अप्रंऽयुछन् । दीद्यत् । बोधि । गोपाः ॥ विधेम । ते । परमे । जन्मन् । अग्ने । विधेम । स्तोमैः । अवरे । सधऽस्थे ॥ यस्मात् । योनेः । उत्ऽआरिथ । यजे । तं । प्र । त्वेइति । हवींषि । जुहुरे । संऽइद्धे ॥ अग्ने । यजस्व । हविषा । यजीयान् । श्रुष्टी । देष्णं । अभि । गृणीहि । राधः ॥ त्वं । हि । असि । रयिऽपतिः । रयीणां । त्वं । शुक्रस्य । वचसः । मनोता ॥ उभयं । ते । न । क्षीयते । वसव्यं । दिवेऽदिवे । जायमानस्य । दस्म ॥ कृधि । क्षुऽमंतं । जरितारं । अग्ने । कृधि । पतिं । सुऽअपत्यस्य । रायः ॥ सः । एना । अनीकेन । सुऽविदत्रः । अस्मेइति । यष्टा । देवान् । आऽयजिष्ठः । स्वस्ति ॥ अदब्धः । गोपाः । उत । नः । पुरःऽपाः । अग्ने । द्युऽमत् । उत । रेवत् । दिदीहि ॥ १ ॥ जोहूत्रः । अग्निः । प्रथमः । पिताऽइव । इळः । पदे । मनुषा । यत् । संऽइद्धः ॥ श्रियं । वसानः । अमृतः । विऽचेताः । मर्मृजेन्यः । श्रवस्यः । सः वाजी । श्रुयाः । अग्निः । चित्रऽभानुः । हवं । मे । विश्वाभिः । गीःऽभिः । अमृतः । विऽचेताः ॥ श्यावा । रथं । वहतः । रोहिता । वा । उत । अरुषा । अह । चक्रे । विऽभृत्रः ॥ उत्तनायां । अजनयन् । सुऽसूतं । भुवत् । अग्निः । पुरुऽपेशासु । गर्भः ॥ शिरिणायां । चित् । अक्तुना । महःऽभिः । अपरिऽवृतः । वसति । प्रऽचेताः ॥ जिघर्मि । अग्निं । हविषा । घृतेन । प्रतिऽक्षियंतं । भुवनानि । विश्वा ॥ पृथुं । तिरश्चा । वयसा । बृहंतं । व्यचिष्ठं । अन्नैः । रभसं । दृशानं ॥ आ । विश्वतः । प्रत्यंचं । जिघर्मि । अरक्षसा । मनसा । तत् । जुषेत ॥ मर्यऽश्रीः । स्पृहयत्ऽवर्णः । अग्निः । न । अभिऽमृशे । तन्वा । जर्भुराणः ॥ ज्ञेयाः । भागं । सहसानः । वरेण । त्वाऽदूतासः । मनुऽवत्

वदेम ॥ अनूनं । अग्निं । जुह्वा । वचस्या । मधुऽपृचं । धनऽसाः । जोहवीमि ॥ २ ॥ श्रुधि । हवं । इंद्र । मा । रिषण्यः । स्याम । ते । दावने । वसूनां ॥ इमाः । हि । त्वां । ऊर्जः । वर्धयंति । वसुऽयवः । सिंधवः । न । क्षरंतः ॥ सृजः । महीः । इंद्र । याः । अपिन्वः । परिऽस्थिताः । अहिना । शूर । पूर्वीः ॥ अमर्त्यं । चित् । दासं । मन्यमानं । अव । अभिनत् । उक्थैः । ववृधानः ॥ उक्थेषु । इत् । नु । शूर । येषु । चाकन् । स्तोमेषु । इंद्र । रुद्रियेषु । च ॥ तुभ्यं । इत् । एताः । यासु । मंदसानः । प्र । वायवे । सिस्रते । न । शुभ्राः ॥ शुभ्रं । नु । ते । शुष्मं । वर्धयंतः । शुभ्रं । वज्रं । बाह्वोः । दधानाः ॥ शुभ्रः । त्वं । इंद्र । ववृधानः । अस्मेइति । दासीः । विशः । सूर्येण । सह्याः ॥ गुहा । हितं । गुह्यं । गूळ्हं । अप्ऽसु । अपिऽवृतं । मायिनं । क्षियंतं ॥ उतोइति । अपः । द्यां । तस्तभ्वांसं । अहन् । अहिं । शूर । वीर्येण ॥ ३ ॥ स्तव । नु । ते । इंद्र । पूर्व्या । महानि । उत । स्तवाम । नूतना । कृतानि ॥ स्तव । वज्रं । बाह्वोः । उशंतं । स्तव । हरीइति । सूर्यस्य । केतूइति ॥ हरीइति । नु । ते । इंद्र । वजयंता । घृतऽश्चुतं । स्वारं । अस्वार्ष्टां । वि । समना । भूमिः । अप्रथिष्ट । अरंस्त । पर्वतः । चित् । सरिष्यन् ॥ नि । पर्वतः । सादि । अप्रऽयुच्छन् । सं । मातृऽभिः । वावशानः । अक्रान् ॥ हरे । पारे । वाणीं । वर्धयंतः । इंद्रऽइषितां । धमनिं । पप्रथन् । नि ॥ इंद्रः । महां । सिंधुं । आऽशयानं । मायाऽविनं । वृत्रं । अस्फुरत् । निः ॥ अरेजेतां । रोदसीइति । भियानेइति । कनिक्रदतः । वृष्णः । अस्य । वज्रात् ॥ अरोरवीत् । वृष्णः । अस्य । वज्रः । अमानुषं । यत् । मानुषः । निऽजूर्वात् ॥ नि । मायिनः । दानवस्य । मायाः । अपादयत् । पपिऽवान् । सुतस्य ॥ ४ ॥ पिबऽपिब । इत् । इंद्र । शूर ।

सोमं । मंदंतु । त्वा । मंदिनः । सुतासः ॥ पृणंतः । ते । कुक्षीइति
वर्धयंतु । इत्था । सुतः । पौरः । इंद्रं । आव ॥ त्वेइति । इंद्र
अपि । अभूम । विप्राः । धियं । वनेम । ऋतऽया । सपंतः ॥ अव
स्यवः । धीमहि । प्रऽशस्ति । सद्यः । ते । रायः । दावने । स्याम
स्याम । ते । ते । इंद्र । ये । ते । ऊती । अवस्यवः । ऊर्जं । वर्धयंतः
शुष्मिन्ऽतमं । यं । चाकनाम । देव । अस्मेइति । रयिं । रासि
वीरऽवंतं ॥ रासि । क्षयं । रासि । मित्रं । अस्मेइति । रासि । शर्धः
इंद्र । मारुतं । नः ॥ सऽजोषसः । ये । च । मंदसानाः । प्र
वायवः । पांति । अग्रऽनीतिं ॥ व्यंतु । इत् । नु । येषु । मंदसानः
तृपत् । सोमं । पाहि । द्रह्यत् । इंद्र ॥ अस्मान् । सु । पृत्ऽसु । आ
तरुत्र । अवर्धयः । द्यां । बृहत्ऽभिः । अर्कैः ॥ ५ ॥ बृहंतः । इत्
नु । ये । ते । तरुत्र । उक्थेभिः । वा । सुम्नं । आऽविवासान्
स्तृणानासः । बर्हिः । पस्त्यऽवत् । त्वाऽऊताः । इत् । इंद्र । वाजं
अग्मन् ॥ उग्रेषु । इत् । शूर । मंदसानः । त्रिऽकद्रुकेषु । पाहि
सोमं । इंद्र ॥ प्रऽदोधुवत् । श्मश्रुषु । प्रीणानः । याहि । हरिऽभ्यां
सुतस्य । पीतिं ॥ धिष्व । शवः । शूर । येन । वृत्रं । अवऽअभिनत्
दानुं । और्णऽवाभं ॥ अप । अवृणोः । ज्योतिः । आर्याय ॥ नि
सव्यतः । सादि । दस्युः । इंद्र ॥ सनेम । ये । ते । ऊतिऽभिः
तरंतः । विश्वाः । स्पृधः । आर्येण । दस्यून् ॥ अस्मभ्यं । तत् । त्वाष्ट्रं
विश्वऽरूपं । अरंधयः । साख्यस्य । त्रिताय ॥ अस्य । सुवानस्य
मंदिनः । त्रितस्य । नि । अर्बुदं । ववृधानः । अस्तरित्यस्तः ॥ अवर्त
यत् । सूर्यः । न । चक्रं । भिनत् । वलं । इंद्रः । अंगिरस्वान् ॥ नूनं
सा । ते । प्रति । वरं । जरित्रे । दुहीयत् । इंद्र । दक्षिणा । मघोनी
शिक्ष । स्तोतृऽभ्यः । मा । अति । धक् । भगः । नः ॥ ० ॥ ६

यः । जातः । एव । प्रथमः । मनस्वान् । देवः । देवान् । क्रतुना । परिऽअभूषत् ॥ यस्य । शुष्मात् । रोदसीइति । अभ्यसेतां । नृम्णस्य । मह्ना । सः । जनासः । इंद्रः ॥ यः । पृथिवीं । व्यथमानां । अदृंहत् । यः । पर्वतान् । प्रऽकुपितान् । अरम्णात् ॥ यः । अंतरिक्षं । विऽममे । वरीयः । यः । द्यां । अस्तभ्नात् ॥ ० ॥ यः । हत्वा । अहिं । अरि-णात् । सप्त । सिंधून् । यः । गाः । उत्ऽआजत् । अपऽधा । वलस्य ॥ यः । अश्मनोः । अंतः । अग्निं । जजान । संऽवृक् । समत्ऽसु ॥ ० ॥ येन । इमा । विश्वा । च्यवना । कृतानि । यः । दासं । वर्णं । अधरं । गुहा । अकरित्यकः ॥ श्वघ्नीऽइव । यः । जिगीवान् । लक्षं । आदत् । अर्यः । पुष्टानि ॥ ० ॥ यं । स्म । पृच्छंति । कुह । सः । इति । घोरं । उत । ईं । आहुः । न । एषः । अस्ति । इति । एनं ॥ सः । अर्यः । पुष्टीः । विजःऽइव । आ । मिनाति । श्रत् । अस्मै । धत्त ॥ ० ॥ ७ ॥ यः । रध्रस्य । चोदिता । यः । कृशस्य । यः । ब्रह्मणः । नाधमानस्य । कीरेः ॥ युक्तऽग्राव्णः । यः । अविता । सुऽशिप्रः । सुतऽसोमस्य ॥ ० ॥ यस्य । अश्वासः । प्रऽदिशि । यस्य । गावः । यस्य । ग्रामाः । यस्य । विश्वे । रथासः ॥ यः । सूर्यं । यः । उषसं । जजान । यः । अपां । नेता ॥ ० ॥ यं । क्रंदसीइति । संयती-इतिसंऽयती । विह्वयेतेइतिविऽह्वयेते । परे । अवरे । उभयाः । अमि-त्राः ॥ समानं । चित् । रथं । आतस्थिऽवांसा । नाना । हवेतेइति ॥ ० ॥ यस्मात् । न । ऋते । विऽजयंते । जनासः । यं । युध्यमानाः । अवसे । हवंते ॥ यः । विश्वस्य । प्रतिऽमानं । बभूव । यः । अच्युतऽच्युत् ॥ ० ॥ यः । शश्वतः । महि । एनः । दधानान् । अमन्यमानान् । शर्वा । जघान ॥ यः । शर्धते । न । अनुऽददाति । शृध्यां । यः । दस्योः । हंता ॥ ० ॥ ८ ॥ यः । शंबरं । पर्वतेषु । क्षियंतं । चत्वा-

रिश्यां । शरदि । अनुऽआविंदत् ॥ ओजायमानं । यः । अहिं । जघान । दानुं । शयानं ॥ ० ॥ यः सप्तऽरश्मिः । वृषभः । तुविष्मान् । अवऽअसृजत् । सर्तवे । सप्त । सिंधून् ॥ यः । रौहिणं । अस्फुरत् । वज्रऽबाहुः । द्यां । आऽरोहंतं ॥ ० ॥ द्यावा । चित् । अस्मै । पृथिवीइति । नमेतेइति । शुष्मात् । चित् । अस्य । पर्वताः । भयंते ॥ यः । सोमऽपाः । निऽचितः । वज्रऽबाहुः । यः । वज्रऽहस्तः ॥ ० ॥ यः । सुन्वंतं । अवति । यः । पचंतं । यः । शंसंतं । यः । शशमानं । ऊती ॥ यस्य । ब्रह्म । वर्धनं । यस्य । सोमः । यस्य । इदं । राधः ॥ ० ॥ यः । सुन्वते । पचते । दुध्रः । आ । चित् । वाजं । दर्दर्षि । सः । कील । असि । सत्यः । वयं । ते । इंद्र । विश्वह । प्रियासः । सुऽवीरासः । विदथं । आ । वदेम ॥ ९ ॥ ऋतुः । जनित्री । तस्याः । अपः । परि । मक्षु । जातः । आ । अविशत् । यासु । वर्धते ॥ तत् । आहनाः । अभवत् । पिप्युषी । पयः । अंशोः । पीयूषं । प्रथमं । तत् । उक्थ्यं । सध्री । ईं । आ । यंति । परि । बिभ्रतीः । पयः । विश्वऽप्स्न्याय । प्र । भरंत । भोजनं ॥ समानः । अध्वा । प्रऽवतां । अनुऽस्यदे । यः । ता । अकृणोः । प्रथमं । सः । असि । उक्थ्यः ॥ अनु । एकः । वदति । यत् । ददाति । तत् । रूपा । मिनन् । तत्ऽअपाः । एकः । ईयते ॥ विश्वाः । एकस्य । विऽनुदः । तितिक्षते ॥ ० ॥ प्रऽजाभ्यः । पुष्टिं । विऽभजंतः । आसते । रयिंऽइव । पृष्ठं । प्रऽभवंतं । आऽयते । असिन्वन् । दंष्ट्रैः । पितुः । अत्ति । भोजनं ॥ ० ॥ अध । अकृणोः । पृथिवीं । संऽदृशे । दिवे । यः । धौतीनां । अहिऽहन् । अरिणक् । पथः । तं । त्वा । स्तोमेभिः । उदऽभिः । न । वाजिनं । देवं । देवाः । अजनन् ॥ ० ॥ १० ॥ यः । भोजनं । च । दयसे । च । वर्धनं । आर्द्रात् । आ । शुष्कं । मधुऽमत् । दुदोहिथ ॥ सः । शेवऽधिं । नि । दधिषे ।

विवस्वति । विश्वस्य । एकः । ईशिषे ॥ ० ॥ यः । पुष्पिणीः । च । प्रऽस्वः । च । धर्मणा । अधि । दाने । वि । अवनीः । अधारयः ॥ यः । च । असमाः । अजनः । दिद्युतः । दिवः । उरुः । ऊर्वान् । अभितः ॥ ० ॥ यः । नार्मरं । सहऽवसुं । निऽहंतवे । पृक्षाय । च । दासऽवेशाय । च । अवहः ॥ ऊर्जयंत्याः । अपरिऽविष्टं । आस्यं । उत । एव । अद्य । पुरुऽकृत् ॥ ० ॥ शतं । वा । यस्य । दश । साकं । आ । अद्यः । एकस्य । श्रुष्टौ । यत् । ह । चोदं । आविथ ॥ अरज्जौ । दस्यून् । सं । उनप् । दभीतये । सुप्रऽअव्यः । अभवः ॥ ० ॥ विश्वा । इत् । अनु । रोधनाः । अस्य । पौंस्यं । ददुः । अस्मै । दधिरे । कृत्नवे । धनं ॥ षट् । अस्तभ्नाः । विऽस्तिरः । पंच । संऽदृशः । परि । परः । अभवः ॥ ० ॥ ११ ॥ सुऽप्रवाचनं । तव । वीर । वीर्यं । यत् । एकेन । क्रतुना । विंदसे । वसु ॥ जातूऽस्थिरस्य । प्र । वयः । सहस्वतः । या । चकर्थ । सः । इंद्र । विश्वा । असि । उक्थ्यः । अरमयः । सरःऽअपसः । तराय । कं । तुर्वीतये । वय्याय । च । स्रुतिं ॥ नीचा । संतं । उत् । अनयः । पराऽवृजं । प्र । अंधं । श्रोणं । श्रवयन् ॥ ० ॥ अस्मभ्यं । तत् । वसोइति । दानाय । राधः । सं । अर्थयस्व । बहु । ते । वसव्यं ॥ इंद्र । यत् । चित्रं । श्रवस्याः । अनु । द्यून् ॥ ० ॥ १२ ॥ अध्वर्यवः । भरत । इंद्राय । सोमं । आ । अमत्रेभिः । सिंचत । मद्यं । अंधः ॥ कामी । हि । वीरः । सदं । अस्य । पीतिं । जुहोत । वृष्णे । तत् । इत् । एषः । वष्टि ॥ अध्वर्यवः । यः । अपः । वव्रिऽवांसं । वृत्रं । जघान । अशन्याऽइव । वृक्षं ॥ तस्मै । एतं । भरत । तत्ऽवशाय । एषः । इंद्रः । अर्हति । पीतिं । अस्य ॥ अध्वर्यवः । यः । दृभीकं । जघान । यः । गाः । उत्ऽआजत् । अप । हि । वलं । वरितिवः ॥ तस्मै । एतं । अंतरिक्षे । न । वातं । इंद्रं ।

सोमैः । आ । ऊर्णुत । जूः । न । वस्त्रैः ॥ अध्वर्यवः । यः । उरणं
जघान । नव । चख्वांसं । नवतिं । च । बाहून् ॥ यः । अर्बुदं । अव
नीचा । बबाधे । तं । इंद्रं । सोमस्य । भृथे । हिनोत ॥ अध्वर्यवः । सु
अश्नं । जघान । यः । शुष्णं । अशुषं । यः । विऽअंसं । यः । पिप्रुं । नमुचिं
यः । रुधिऽक्रां । तस्मै । इंद्राय । अंधसः । जुहोत ॥ अध्वर्यवः । यः
शतं । शंबरस्य । पुरः । बिभेद । अश्मनाऽइव । पूर्वीः ॥ यः
वर्चिनः । शतं । इंद्रः । सहस्रं । अपऽअवपत् । भरत । सोमं
अस्मै ॥ १३ ॥ ० ॥ आ । सहस्रं । भूम्याः । उपऽस्थे । अवपत्
जघन्वान् ॥ कुत्सस्य । आयोः । अतिथिऽग्वस्य । वीरान् । नि । अवृ
णक् । भरत । सोमं । अस्मै ॥ अध्वर्यवः । यत् । नरः । कामयाध्वे
श्रुष्टी । वहंतः । नशथ । तत् । इंद्रे ॥ गभस्तिऽपूतं । भरत । श्रुताय
इंद्राय । सोमं । यज्यवः । जुहोत ॥ अध्वर्यवः । कर्तन । श्रुष्टिं
अस्मै । वने । निऽपूतं । वने । उत् । नयध्वं ॥ जुषाणः । हस्त्यं
अभि । वावशे । वः । इंद्राय । सोमं । मदिरं । जुहोत ॥ अध्वर्यवः
पयसा । ऊधः । यथा । गोः । सोमेभिः । ईं । पृणत । भोजं । इंद्रं
वेद । अहं । अस्य । निऽभृतं । मे । एतत् । दित्संतं । भूयः । यजतः
चिकेत ॥ अध्वर्यवः । यः । दिव्यस्य । वस्वः । यः । पार्थिवस्य
क्षम्यस्य । राजा ॥ तं । ऊर्दरं । न । पृणत । यवेन । इंद्रं । सोमेभिः
तत् । अपः । वः । अस्तु ॥ ० ॥ १४ ॥ प्र । घ । नु । अस्य । महतः
महानि । सत्या । सत्यस्य । करणानि । वोचं ॥ त्रिऽकद्रु
केषु । अपिबत् । सुतस्य । अस्य । मदे । अहिं । इंद्रः । जघान
अवंशे । द्यां । अस्तभायत् । बृहंतं । आ । रोदसीइति । अपृणत्
अंतरिक्षं ॥ ० ॥ सोमस्य । ता । मदे । इंद्रः । चकार ॥ सद्मऽइव
प्राचः । वि । मिमाय । मानैः । वज्रेण । खानि । अतृणत् । नदीनां

वृथा । असृजत् । पथिऽभिः । दीर्घऽयाथैः ॥ ० ॥ सः । प्रऽवोह्नन् । परिऽगत्य । दभीतेः । विश्वं । अधाक् । आयुधं । इद्धे । अग्नौ ॥ सं । गोभिः । अश्वैः । असृजत् । रथेभिः ॥ ० ॥ सः । ई । महीं । धुनिं । एतोः । अरम्णात् । सः । अस्नातॄन् । पारयत् । स्वस्ति ॥ ते । उत्ऽस्नाय । रयिं । अभि । प्र । तस्थुः ॥ ० ॥ १५ ॥ सः । उदंचं । सिंधुं । अरिणात् । महिऽत्वा । वज्रेण । अनः । उषसः । सं । पिपेष ॥ अजवसः । जविनीभिः । विऽवृश्चन् ॥ ० ॥ सः । विद्वान् । अपऽगोहं । कनीनां । आविः । भवन् । उत् । अतिष्ठत् । पराऽवृक् ॥ प्रति । श्रोणः । स्थात् । वि । अनक् । अचष्ट ॥ ० ॥ भिनत् । वलं । अंगिरःऽभिः । गृणानः । वि । पर्वतस्य । दृंहितानि । ऐरत् ॥ रिणक् । रोधांसि । कृत्रिमाणि । एषां ॥ ० ॥ स्वप्नेन । अभिऽउप्य । चुमुरिं । धुनिं । च । जघंथ । दस्युं । प्र । दभीतिं । आवः ॥ रंभी । चित् । अत्र । विविदे । हिरण्यं ॥ ० ॥ १६ ॥ प्र । वः । सतां । ज्येष्ठऽतमाय । सुऽस्तुतिं । अग्नौऽइव । संऽइधाने ॥ हविः । भरे ॥ इंद्रं । अजुर्यं । जरयंतं । उक्षितं । सनात् । युवानं । अवसे । हवामहे ॥ यस्मात् । इंद्रात् । बृहतः । किं । चन । ई । ऋते । विश्वानि । अस्मिन् । संऽभृता । अधि । वीर्या ॥ जठरे । सोमं । तन्वि । सहः । महः । हस्ते । वज्रं । भरति । शीर्षणि । क्रतुं ॥ न । क्षोणीभ्यां । परिऽभ्वे । ते । इंद्रियं । न । समुद्रैः । पर्वतैः । इंद्र । ते । रथः ॥ न । ते । वज्रं । अनु । अश्नोति । कः । चन । यत् । आशुऽभिः । पतसि । योजना । पुरु ॥ विश्वे । हि । अस्मै । यजताय । धृष्णवे । क्रतुं । भरंति । वृषभाय । सश्चते ॥ वृषा । यजस्व । हविषा । विदुःऽतरः । पिब । इंद्र । सोमं । वृषभेण । भानुना ॥ वृष्णः । कोशः । पवते । मध्वः । ऊर्मिः । वृषभऽअन्नाय । वृषभाय । पातवे ॥ वृषणा । अध्व-

यूइति । वृषभासः । अद्रयः । वृषणं । सोमं । वृषभाय । सुस्वति ॥ १७
वृषा । ते । वज्रः । उत । ते । वृषा । रथः । वृषणा । हरीइति । वृष
भाणि । आयुधा । वृष्णः । मदस्य । वृषभ । त्वं । ईशिषे । इंद्र
सोमस्य । वृषभस्य । तृप्णुहि ॥ प्र । ते । नावं । न । समने । वच
स्युवं । ब्रह्मणा । यामि । सवनेषु । दधृषिः । कुवित् । नः । अस्य
वचसः । निऽबोधिषत् । इंद्रं । उत्सं । न । वसुनः । सिचामहे
पुरा । संऽबाधात् । अभि । आ । ववृत्स्व । नः । धेनुः । न । वत्सं
यवसस्य । पिप्युषी । सकृत् । सु । ते । सुमतिऽभिः । शतक्रतोइति
शतऽक्रतो । सं । पत्नीभिः । न । वृषणः । नसीमहि ॥ ० ॥ १८ ॥ तत्
अस्मै । नव्यं । अंगिरस्वत् । अर्चत । शुष्माः । यत् । अस्य
प्रत्नऽथा । उत्ऽईरते । विश्वा । यत् । गोत्रा । सहसा । परिऽवृता
मदे । सोमस्य । दृंहितानि । ऐरयत् ॥ सः । भूतु । यः । ह
प्रथमाय । धायसे । ओजः । मिमानः । महिमानं । आ । अतिरत्
शूरः । यः । युत्ऽसु । तन्वं । परिऽव्यत । शीर्षणि । द्यां । महिना
प्रति । अमुंचत ॥ अध । अकृणोः । प्रथमं । वीर्यं । महत् । यत्
अस्य । अग्रे । ब्रह्मणा । शुष्मं । ऐरयः । रथेऽस्थेन । हरिऽअश्वेन
विऽच्युताः । प्र । जीरयः । सिस्रते । सध्र्यक् । पृथक् ॥ अध । यः
विश्वा । भुवना । अभि । मज्मना । ईशानऽकृत् । प्रऽवयाः । अभि
अवर्धत । आत् । रोदसीइति । ज्योतिषा । वह्निः । आ । अतनोत्
सीव्यन् । तमांसि । दुधिता । सं । अव्ययत् ॥ सः । प्राचीनान्
पर्वतात् । दृंहत् । ओजसा । अधराचीनं । अकृणोत् । अपां । अपः
अधारयत् । पृथिवीं । विश्वऽधायसं । अस्तभ्नात् । मायया । द्यां
अवऽस्रसः ॥ १९ ॥ सः । अस्मै । अरं । बाहुऽभ्यां । यं । पिता
अकृणोत् । विश्वस्मात् । आ । जनुषः । वेदसः । परि । येन । पृथिव्यां

नि । क्रीवें । शयध्यै । वज्रेण । हत्वी । अवृणक् । तुविऽस्वनिः ॥ अमाजूःऽईव । पित्रोः । सचा । सती । समानात् । आ । सदसः । त्वां । इये । भगं । कृधि । प्रऽकेतं । उप । मासि । आ । भर । दद्धि । भागं । तन्वः । येन । ममहः ॥ भोजं । त्वां । इंद्र । वयं । हुवेम । ददिः । त्वं । इंद्र । अपांसि । वाजान् । अविड्ढि । इंद्र । चित्रया । नः । ऊती । कृधि । वृषन् । इंद्र । वस्यसः । नः ॥ ० ॥ २० ॥ प्रातरिति । रथः । नवः । योजि । सस्निः । चतुःऽयुगः । त्रिऽकशः । सप्तऽरश्मिः । दशऽअरित्रः । मनुष्यः । स्वःऽसाः । सः । इष्टिऽभिः । मतिऽभिः । रंह्यः । भूत् ॥ ० ॥ प्रथमं । सः । द्वितीयं । उतोइति । तृतीयं । मनुषः । सः । होता । अन्यस्याः । गर्भं । अन्ये । ऊँइति । जनंत । सः । अन्येभिः । सचते । जेन्यः । वृषा ॥ हरीइति । नु । कं । रथे । इंद्रस्य । योजं । आऽयै । सुऽउक्तेन । वचसा । नवेन । मोइति । सु । त्वां । अत्र । बहवः । हि । विप्राः । नि । रीरमन् । यजमानासः । अन्ये ॥ आ । द्वाभ्यां । हरिऽभ्यां । इंद्र । याहि । आ । चतुःऽभिः । आ । षट्ऽभिः । हूयमानः । आ । अष्टाभिः । दशऽभिः । सोमऽपेयं । अयं । सुतः । सुऽमख । मा । मृधः । करितिकः ॥ आ । विंशत्या । त्रिंशता । याहि । अर्वाङ् । आ । चत्वारिंशता । हरिऽभिः । युजानः । आ । पंचाशता । सुऽरथेभिः । इंद्र । आ । षष्ट्या । सप्तत्या । सोमऽपेयं ॥ २१ ॥ आ । अशीत्या । नवत्या । याहि । अर्वाङ् । आ । शतेन । हरिऽभिः । उह्यमानः । अयं । हि । ते । शुनऽहोत्रेषु । सोमः । इंद्र । त्वाऽया । परिऽसिक्तः । मदाय ॥ मम । ब्रह्म । इंद्र । याहि । अच्छ । विश्वा । हरीइति । धुरि । धिष्व । रथस्य । पुरुऽत्रा । हि । विऽहव्यः । बभूथ । अस्मिन् । शूर । सवने । मादयस्व ॥ न । मे । इंद्रेण । सख्यं । वि । योषत् । अस्मभ्यं । अस्य । दक्षिणा ।

दुहीत । उप । ज्मेष्टे । वरूथे । गभस्तौ । प्रायेऽप्राये । जिगीवांसः
स्याम ॥ ० ॥ २२ ॥ अपायि । अस्य । अंधसः । मदाय
मनीषिणः । सुवानस्य । प्रयसः । यस्मिन् । इंद्रः । प्रऽदिवि
ववृधानः । ओकः । दधे । ब्रह्मण्यंतः । च । नरः ॥ अस्य । मंदानः
मध्वः । वज्रऽहस्तः । अहिं । इंद्रः । अर्णःऽवृतं । वि । वृश्चत् । प्र
यत् । वयः । न । स्वसराणि । अच्छ । प्रयांसि । च । नदीनां । चक्र
मंत ॥ सः । माहिनः । इंद्रः । अर्णः । अपां । प्र । ऐरयत् । अहि
ऽहा । अच्छ । समुद्रं । अजनयत् । सूर्यं । विदत् । गाः । अक्तुना
अह्नां । वयुनानि । साधत् ॥ सः । अप्रतीनि । मनवे । पुरूणि
इंद्रः । दाशत् । दाशुषे । हंति । वृत्रं । सद्यः । यः । नृऽभ्यः । अत
साय्यः । भूत् । पस्पृधानेभ्यः । सूर्यस्य । सातौ ॥ सः । सुन्वते
इंद्रः । सूर्यं । आ । देवः । रिणक् । मर्त्याय । स्तवान् । आ । यत्
रयिं । गुहत्ऽअवद्यं । अस्मै । भरत् । अंशं । न । एतशः । दश
स्यन् ॥ २३ ॥ सः । रंधयत् । सऽदिवः । सारथये । शुष्णं
अशुषं । कुयवं । कुत्साय । दिवःऽदासाय । नवतिं । च । नव । इंद्रः
पुरः । वि । ऐरत् । शंबरस्य ॥ एव । ते । इंद्र । उचथं । अहेम
श्रवस्या । न । त्मना । वाजयंतः । अश्याम । तत् । साप्तं । आशु
षणाः । ननमः । वधः । अदेवस्य । पीयोः ॥ एव । ते । गृत्सऽमदाः
शूर । मन्म । अवस्यवः । न । वयुनानि । तक्षुः । ब्रह्मण्यंतः
इंद्र । ते । नवीयः । इषं । ऊर्जं । सुऽक्षितिं । सुम्नं । अश्युः
॥ ० ॥ २४ ॥ वयं । ते । वयः । इंद्र । विद्धि । सु । नः । प्र
भरामहे । वाजऽयुः । न । रथं । विपन्यवः । दीध्यतः । मनीषा
सुम्नं । इयक्षंतः । त्वाऽवतः । नॄन् ॥ त्वं । नः । इंद्र । त्वाभिः
ऊती । त्वाऽयतः । अभिष्टिऽपा । असि । जनान् । त्वं । इनः

दाशुषः । वरूता । इत्थाऽधीः । अभि । यः । नक्षति । त्वा ॥ सः । नः । युवा । इंद्रः । जोहूत्रः । सखा । शिवः । नरां । अस्तु । पाता । यः । शंसंतं । यः । शशमानं । ऊती । पचंतं । च । स्तुवंतं । च । प्रऽनेषत् ॥ तं । ऊँइति । स्तुषे । इंद्रं । तं । गृणीषे । यस्मिन् । पुरा । ववृधुः । शाशदुः । च । सः । वस्वः । कामं । पीपरत् । इयानः । ब्रह्मण्यतः । नूतनस्य । आयोः ॥ सः । अंगिरसां । उचथा । जुजुष्वान् । ब्रह्म । तूतोत् । इंद्रः । गातुं । इष्णन् । मुष्णन् । उषसः । सूर्येण । स्तवान् । अश्नस्य । चित् । शिश्नथत् । पूर्व्याणि ॥ २५ ॥ सः । ह । श्रुतः । इंद्रः । नाम । देवः । ऊर्ध्वः । भुवत् । मनुषे । दस्मऽतमः । अव । प्रियं । अर्शसानस्य । सह्वान् । शिरः । भरत् । दासस्य । स्वधाऽवान् ॥ सः । वृत्रऽहा । इंद्रः । कृष्णऽयोनीः । पुरंऽदरः । दासीः । ऐरयत् । वि । अजनयत् । मनवे । क्षां । अपः । च । सत्रा । शंसं । यजमानस्य । तूतोत् ॥ तस्मै । तवस्यं । अनु । दायि । सत्रा । इंद्राय । देवेभिः । अर्णऽसातौ । प्रति । यत् । अस्य । वज्रं । बाह्वोः । धुः । हत्वी । दस्यून् । पुरः । आयसीः । नि । तारीत् ॥ २६ ॥ विश्वऽजिते । धनऽजिते स्वःऽजिते । सत्राऽजिते । नृऽजिते । उर्वराऽजिते । अश्वऽजिते । गोऽजिते । अप्ऽजिते । भर । इंद्राय । सोमं । यजताय । हर्यतं ॥ अभिऽभुवे । अभिऽभंगाय । वन्वते । अषाळ्हाय । सहमानाय । वेधसे । तुविऽग्रये । वह्नये । दुस्तरीतवे । सत्राऽसहे । नमः । इंद्राय । वोचत ॥ सत्राऽसहः । जनऽभक्षः । जनंऽसहः । च्यवनः । युध्मः । अनु । जोषं । उक्षितः । वृतंऽचयः । सहुरिः । विक्षु । आरितः । इंद्रस्य । वोचं । प्र । कृतानि । वीर्या ॥ अननुऽदः । वृषभः । दोधतः । वधः । गंभीरः । ऋष्वः । असमष्टऽकाव्यः । रध्रऽचोदः । श्नथनः । वीळितः । पृथुः । इंद्रः ।

सुऽयज्ञः । उषसः । स्वः । जनत् ॥ यज्ञेन । गातुं । अप्ऽतुरः । विवि-
द्रिरे । धियः । हिन्वानाः । उशिजः । मनीषिणः । अभिऽस्वरा । निऽ-
सदा । गाः । अवस्यवः । इंद्रे । हिन्वानाः । द्रविणानि । आशत ।
इंद्र । श्रेष्ठानि । द्रविणानि । धेहि । चित्तिं । दक्षस्य । सुभगऽत्वं ।
अस्मेइति । पोषं । रयीणां । अरिष्टिं । तनूनां । स्वाद्मानं । वाचः ।
सुदिनऽत्वं । अह्नां ॥ २७ ॥ त्रिऽकद्रुकेषु । महिषः । यवऽआशिरं ।
तुविऽशुष्मः । तृपत् । सोमं । अपिबत् । विष्णुना । सुतं । यथा । अवशत् ।
सः । ईं । ममाद । महि । कर्म । कर्तवे । महां । उरुं । सः । एनं ।
सश्चत् । देवः । देवं । सत्यं । इंद्रं । सत्यः । इंदुः ॥ अध । त्विषिऽ-
मान् । अभि । ओजसा । क्रिविं । युधा । अभवत् । आ । रोदसी-
इति । अपृणत् । अस्य । मज्मना । प्र । ववृधे । अधत्त । अन्यं । जठरे ।
प्र । ईं । अरिच्यत ॥ ० ॥ साकं । जातः । क्रतुना । साकं । ओजसा ।
ववक्षिथ । साकं । वृद्धः । वीर्यैः । ससहिः । मृधः । विऽचर्षणिः । दाता ।
राधः । स्तुवते । काम्यं । वसु ॥ ० ॥ तव । त्यत् । नर्यं । नृतोइति । अपः ।
इंद्र । प्रथमं । पूर्व्यं । दिवि । प्रऽवाच्यं । कृतं । यत् । देवस्य । शव-
सा । प्र । आरिणाः । असुं । रिणन् । अपः । भुवत् । विश्वं । अभि ।
अदेवं । ओजसा । विदात् । ऊर्जं । शतऽक्रतुः । विदात् । इषं ।
॥ २८ ॥ गणानां । त्वा । गणऽपतिं । हवामहे । कविं । कवीनां ।
उपमश्रवःऽतमं । ज्येष्ठऽराजं । ब्रह्मणां । ब्रह्मणः । पते । आ । नः ।
शृण्वन् । ऊतिऽभिः । सीद । सदनं ॥ देवाः । चित् । ते । असुर्य ।
प्रऽचेतसः । बृहस्पते । यज्ञियं । भागं । आनशुः । उस्राःऽइव । सूर्यः ।
ज्योतिषा । महः । विश्वेषां । इत् । जनिता । ब्रह्मणां । असि ॥ आ ।
विऽबाध्य । परिऽरपः । तमांसि । च । ज्योतिष्मंतं । रथं । ऋतस्य ।
तिष्ठसि । बृहस्पते । भीमं । अमित्रऽदंभनं । रक्षःऽहनं । गोत्रऽभिदं ।

स्वःऽविदं ॥ सुनीतिऽभिः । नयसि । त्रायसे । जनं । यः । तुभ्यं । दाशात् । न । तं । अंहः । अश्नवत् । ब्रह्मऽद्विषः । तपनः । मन्युऽमीः । असि । बृहस्पते । महि । तत् । ते । महिऽत्वनं ॥ न । तं । अंहः । न । दुःऽइतं । कुतः । चन । न । अरातयः । तितिरुः । न । द्वयाविनः । विश्वाः । इत् । अस्मात् । ध्वरसः । वि । बाधसे । यं । सुऽगोपाः । रक्षसि । ब्रह्मणः । पते ॥ २९ ॥ त्वं । नः । गोपाः । पथिऽकृत् । विऽचक्षणः । तव । व्रताय । मतिऽभिः । जरामहे । बृहस्पते । यः । नः । अभि । ह्वरः । दधे । स्वा । तं । मर्मर्तु । दुच्छुना । हरस्वती ॥ उत । वा । यः । नः । मर्चयात् । अनागसः । अरातिऽवा । मर्तः । सानुकः । वृकः । बृहस्पते । अप । तं । वर्तय । पथः । सुऽगं । नः । अस्यै । देवऽवीतये । कृधि ॥ त्रातारं । त्वा । तनूनां । हवामहे । अवऽस्पर्तः । अधिऽवक्तारं । अस्मऽयुं । बृहस्पते । देवऽनिदः । नि । बर्हय । मा । दुःऽएवाः । उत्ऽतरं । सुम्नं । उत् । नशन् ॥ त्वया । वयं । सुऽवृधा । ब्रह्मणः । पते । स्पार्हा । वसु । मनुष्या । आ । ददीमहि । याः । नः । दूरे । तळितः । याः । अरातयः । अभि । संति । जंभय । ताः । अनप्नसः ॥ त्वया । वयं । उत्ऽतमं । धीमहे । वयः । बृहस्पते । पप्रिणा । सस्निना । युजा । मा । नः । दुःऽशंसः । अभिऽदिप्सुः । ईशत । प्र । सुऽशंसाः । मतिऽभिः । तारिषीमहि ॥ ३० ॥ अनुनुऽदः । वृषभः । जग्मिः । आऽहवं । निःऽतप्ता । शत्रुं । पृतनासु । सासहिः । असि । सत्यः । ऋणऽयाः । ब्रह्मणः । पते । उग्रस्य । चित् । दमिता । वीळुऽहर्षिणः ॥ अदेवेन । मनसा । यः । रिषण्यति । शासां । उग्रः । मन्यमानः । जिघांसति । बृहस्पते । मा । प्रणक् । तस्य । नः । वधः । नि । कर्म । मन्युं । दुःऽएवस्य । शर्धतः ॥ भरेषु । हव्यः । नमसा । उपऽसद्यः ।

गंता । वाजेषु । सनिता । धनंऽधनं । विश्वाः । इत् । अर्यः । अभिऽ
दिप्स्वः । मृधः । बृहस्पतिः । वि । ववर्ह । रथान्ऽइव ॥ तेजिष्ठया
तपनी । रक्षसः । तप । ये । त्वा । निदे । दधिरे । दृष्टऽवीर्यं
आविः । तत् । कृष्व । यत् । असत् । ते । उक्थ्यं । बृहस्पते । वि
परिऽरपः । अर्दय ॥ बृहस्पते । अति । यत् । अर्यः । अर्हात् । द्युऽ
मत् । विऽभाति । क्रतुऽमत् । जनेषु । यत् । दीदयत् । शवसा
ऋतऽप्रजात । तत् । अस्मासु । द्रविणं । धेहि । चित्रं ॥ ३१ ॥ मा
नः । स्तेनेभ्यः । ये । अभि । द्रुहः । पदे । निरामिणः । रिपवः
अन्नेषु । जगृधुः । आ । देवानां । ओहते । वि । व्रयः । हृदि । बृह
स्पते । न । परः । साम्नः । विदुः ॥ विश्वेभ्यः । हि । त्वा । भुव
नेभ्यः । परि । त्वष्टा । अजनत् । साम्नःऽसाम्नः । कविः । सः । ऋणऽ
चित् । ऋणऽयाः । ब्रह्मणः । पतिः । द्रुहः । हंता । महः । ऋतस्य
धर्तरि ॥ तव । श्रिये । वि । अजिहीत । पर्वतः । गवां । गोत्रं
उत्ऽअसृजः । यत् । अंगिरः । इंद्रेण । युजा । तमसा । परिऽवृतं
बृहस्पते । निः । अपां । औब्जः । अर्णवं ॥ ब्रह्मणः । पते । त्वं । अस्य
यंता । सुऽउक्तस्य । बोधि । तनयं । च । जिन्व । विश्वं । तत् । भद्रं
यत् । अवंति । देवाः ॥ ० ॥ ३२ ॥

इति द्वितीयाष्टके षष्ठोध्यायः



## ॥ अथ सप्तमोध्यायः ॥

हरिः ॐ ॥ सः । इमां । अविड्ढि । प्रऽभृतिं । यः । ईशिषे । अया । विधेम । नवया । महा । गिरा । यथा । नः । मीढ्वान् । स्तवते । सखा । तव । बृहस्पते । सीसधः । सः । उत । नः । मतिं ॥ यः । नंत्वानि । अनमत् । नि । ओजसा । उत । अदर्दः । मन्युना । शंबराणि । वि । प्र । अच्यवयत् । अच्युता । ब्रह्मणः । पतिः । आ । च । अविशत् । वसुऽमंतं । वि । पर्वतं ॥ तत् । देवानां । देवऽतमाय । कर्त्वं । अश्रश्नन् । दृळ्हा । अव्रदंत । वीळिता । उत् । गाः । आजत् । अभिनत् । ब्रह्मणा । वलं । अगूहत् । तमः । वि । अचक्षयत् । स्वः १ रितिस्वः ॥ अश्मऽआस्यं । अवतं । ब्रह्मणः । पतिः । मधुऽधारं । अभि । यं । ओजसा । अतृणत् । तं । एव । विश्वे । पपिरे । स्वःऽदृशः । बहु । साकं । सिसिचुः । उत्सं । उद्रिणं ॥ सना । ता । का । चित् । भुवना । भवीत्वा । मात्ऽभिः । शरत्ऽभिः । दुरः । वरंत । वः । अयंतता । चरतः । अन्यत्ऽअन्यत् । इत् । या । चकार । वयुना । ब्रह्मणः । पतिः ॥ १ ॥ अभिऽनक्षंतः । अभि । ये । तं । आनशुः । निऽधिं । पणीनां । परमं । गुहा । हितं । ते । विद्वांसः । प्रतिऽचक्ष्य । अनृता । पुनः । यतः । ऊँइति । आयन् । तत् । उत् । ईयुः । आऽविशं ॥ ऋतऽवानः । प्रतिऽचक्ष्य । अनृता । पुनः । आ । अतः । आ । तस्थुः । कवयः । महः । पथः । ते । बाहुऽभ्यां । धमितं । अग्निं । अश्मनि । नकिः । सः । अस्ति । अरणः । जहुः । हि । तं ॥ ऋतऽज्येन । क्षिप्रेण । ब्रह्मणः । पतिः । यत्र । वष्टि । प्र । तत् । अश्नोति । धन्वना ।

तस्य । साध्वीः । इषवः । याभिः । अस्यति । नृऽचक्षसः । दृशये । कर्णऽयोनयः ॥ सः । संऽनयः । सः । विऽनयः । पुरःऽहितः । सः । सुऽस्तुतः । सः । युधि । ब्रह्मणः । पतिः । चाक्ष्मः । यत् । वाजं । भरते । मती । धना । आत् । इत् । सूर्यः । तपति । तप्यतुः । वृथा ॥ विऽभु । प्रऽभु । प्रथमं । मेहनाऽवतः । बृहस्पतेः । सुऽविदत्राणि । राध्या । इमा । सातानि । वेन्यस्य । वाजिनः । येन । जनाः । उभये । भुंजते । विशः ॥ २ ॥ यः । अवरे । वृजने । विश्वऽथा । विऽभुः । महां । ऊँइति । रण्वः । शवसा । ववक्षिथ । सः । देवः । देवान् । प्रति । पप्रथे । पृथु । विश्वा । इत् । ऊँइति । ता । परिऽभूः । ब्रह्मणः । पतिः ॥ विश्वं । सत्यं । मघऽवाना । युवोः । इत् । आपः । चन । प्र । मिनंति । व्रतं । वां । अच्छ । इंद्राब्रह्मणस्पतीइति । हविः । नः । अन्नं । युजाऽइव । वाजिना । जिगातं ॥ उत । आशिष्ठाः । अनु । शृण्वंति । वह्नयः । सभेयः । विप्रः । भरते । मती । धना । वीळुऽद्वेषाः । अनु । वशा । ऋणं । आऽददिः । सः । ह । वाजी । संऽइथे । ब्रह्मणः । पतिः ॥ ब्रह्मणः । पतेः । अभवत् । यथाऽवशं । सत्यः । मन्युः । महि । कर्म । करिष्यतः । यः । गाः । उत्ऽआजत् । सः । दिवे । वि । च । अभजत् । महीऽइव । रीतिः । शवसा । असरत् । पृथक् ॥ ब्रह्मणः । पते । सुऽयमस्य । विश्वहा । रायः । स्याम । रथ्यः । वयस्वतः । वीरेषु । वीरान् । उप । पृङ्धि । नः । त्वं । यत् । ईशानः । ब्रह्मणा । वेषि । मे । हवं ॥ ० ॥ ३ ॥ इंधानः । अग्निं । वनवत् । वनुष्यतः । कृतऽब्रह्मा । शूशुवत् । रातऽहव्यः । इत् । जातेन । जातं । अति । सः । प्र । सर्सृते । यंऽयं । युजं । कृणुते । ब्रह्मणः । पतिः ॥ वीरेभिः । वीरान् । वनवत् । वनुष्यतः । गोभिः । रयिं । पप्रथत् । बोधति । त्मना । तोकं । च । तस्य । तनयं । च । वर्धते ॥ ० ॥ सिंधुः । न । क्षोदः ।

शिमीऽवान् । ऋघायतः । वृषाऽइव । वध्रीन् । अभि । वष्टि । ओजसा । अग्नेःऽइव । प्रऽसितिः । न । अह । वर्तवे ॥ ० ॥ तस्मै । अर्षति । दिव्याः । असश्चतः । सः । सत्वऽभिः । प्रथमः । गोषु । गच्छति । अनिभृष्टऽतविषिः । हंति । ओजसा ॥ ० ॥ तस्मै । इत् । विश्वे । धुनयंत । सिंधवः । अच्छिद्रा । शर्म । दधिरे । पुरूणि । देवानां । सुम्ने । सुऽभगः । सः । एधते ॥ ० ॥ ४ ॥ ऋजुः । इत् । शंसः । वनवत् । वनुष्यतः । देवऽयन् । इत् । अदेवऽयंतं । अभि । असत् । सुप्रऽअवीः । इत् । वनवत् । पृत्ऽसु । दुस्तरं । यज्वा । इत् । अयज्योः । वि । भजाति । भोजनं ॥ यजस्व । वीर । प्र । विहि । मनायतः । भद्रं । मनः । कृणुष्व । वृत्रऽतूर्ये । हविः । कृणुष्व । सुऽभगः । यथा । अससि । ब्रह्मणः । पतेः । अवः । आ । वृणीमहे ॥ सः । इत् । जनेन । सः । विशा । सः । जन्मना । सः । पुत्रैः । वाजं । भरते । धना । नृऽभिः । देवानां । यः । पितरं । आऽविवासति । श्रद्धाऽमनाः । हविषा । ब्रह्मणः । पतिं ॥ यः । अस्मै । हव्यैः । घृतवत्ऽभिः । आविधत् । प्र । तं । प्राचा । नयति । ब्रह्मणः । पतिः । उरुष्यति । ईं । अंहसः । रक्षति । रिषः । अंहोः । चित् । अस्मै । उरुऽचक्रिः । अद्भुतः ॥ ५ ॥ इमाः । गिरः । आदित्येभ्यः । घृतऽस्नूः । सनात् । राजऽभ्यः । जुह्वा । जुहोमि । शृणोतु । मित्रः । अर्यमा । भगः । नः । तुविऽजातः । वरुणः । दक्षः । अंशः ॥ इमं । स्तोमं । सऽक्रतवः । मे । अद्य । मित्रः । अर्यमा । वरुणः । जुषंत । आदित्यासः । शुचयः । धारऽपूताः । अवृजिनाः । अनवद्याः । अरिष्टाः ॥ ते । आदित्यासः । उरवः । गभीराः । अदब्धासः । दिप्संतः । भूरिऽअक्षाः । अंतः । इति । पश्यंति । वृजिना । उत । साधु । सर्वं । राजऽभ्यः । परमा । चित् । अंति ॥ धारयंतः । आदित्यासः । जगत् । स्थाः । देवाः । विश्वस्य । भुवनस्य । गोपाः ।

दीर्घऽधियः । रक्षमाणाः । असुर्यं । ऋतऽवानः । चयमानाः । ऋणा
नि ॥ विद्यां । आदित्याः । अवसः । वः । अस्य । यत् । अर्यमन्
भये । आ । चित् । मयःऽभु । युष्माकं । मित्रावरुणा । प्रऽनीतौ
परि । श्वभ्राऽइव । दुःऽइतानि । वृज्यां ॥ ६ ॥ सुऽगः । हि । वः । अर्य
मन् । मित्र । पंथाः । अनृक्षरः । वरुण । साधुः । अस्ति । तेन
आदित्याः । अधि । वोचत । नः । यच्छत । नः । दुःऽपरिहंतु
शर्म ॥ पिपर्तु । नः । अदितिः । राजऽपुत्रा । अति । द्वेषांसि । अर्य
मा । सुऽगेभिः । बृहत् । मित्रस्य । वरुणस्य । शर्म । उप । स्याम
पुरुऽवीराः । अरिष्टाः ॥ तिस्रः । भूमीः । धारयन् । त्रीन् । उत
द्यून् । त्रीणि । व्रता । विदथे । अंतः । एषां । ऋतेन । आदित्याः
महि । वः । महिऽत्वं । तत् । अर्यमन् । वरुण । मित्र । चारु ॥ त्री
रोचना । दिव्या । धारयंत । हिरण्ययाः । शुचयः । धारऽपूताः
अस्वप्नऽजः । अनिऽमिषाः । अदब्धाः । उरुऽशंसाः । ऋजवे ॥ मर्त्याय
त्वं । विश्वेषां । वरुण । असि । राजा । ये । च । देवाः । असुर । ये
च । मर्ताः । शतं । नः । रास्व । शरदः । विऽचक्षे । अश्याम । आयूंषि
सुऽधितानि । पूर्वा ॥ ७ ॥ न । दक्षिणा । वि । चिकिते । न । सव्या
प्राचीनं । आदित्याः । न । उत । पश्चा । पाक्या । चित् । वसवः
धीर्या । चित् । युष्माऽनीतः । अभयं । ज्योतिः । अश्यां ॥ यः । राजऽ
भ्यः । ऋतनिऽभ्यः । ददाश । यं । वर्धयंति । पुष्टयः । च । नित्याः
सः । रेवान् । याति । प्रथमः । रथेन । वसुऽदावा । विदथेषु । प्रऽशस्तः
शुचिः । अपः । सुऽयवसाः । अदब्धः । उप । क्षेति । वृद्धऽवयाः
सुऽवीरः । नकिः । तं । घ्नंति । अंतितः । न । दूरात् । यः । आदि
त्यानां । भवति । प्रऽनीतौ ॥ अदिते । मित्र । वरुण । उत । मृळ
यत् । वः । वयं । चकृम । कत् । चित् । आगः । उरु । अश्यां

अभयं । ज्योतिः । इंद्र । मा । नः । दीर्घाः । अभि । नशन् । तमिस्राः ॥ उभेइति । अस्मै । पीपयतः । समीचीइतिसंऽईची । दिवः । वृष्टिं । सुऽभगः । नाम । पुष्यन् । उभा । क्षयौ । आऽजयन् । याति । पृत्ऽसु । उभौ । अर्धौ । भवतः । साधूइति । अस्मै ॥ याः । वः । मायाः । अभिऽद्रुहे । यजत्राः । पाशाः । आदित्याः । रिपवे । विऽचृत्ताः । अश्वीऽइव । तान् । अति । येषं । रथेन । अरिष्टाः । उरौ । आ । शर्मन् । स्याम ॥ मा । अहं । मघोनः । वरुण । प्रियस्य । भूरिऽदाव्नः । आ । विदं । शूनं । आपेः । मा । रायः । राजन् । सुऽयमात् । अव । स्थां ॥ ० ॥ ८ ॥ इदं । कवेः । आदित्यस्य । स्वऽराजः । विश्वानि । संति । अभि । अस्तु । मह्ना । अति । यः । मंद्रः । यजथाय । देवः । सुऽकीर्तिं । भिक्षे । वरुणस्य । भूरेः ॥ तव । व्रते । सुऽभगासः । स्याम । सुऽआध्यः । वरुण । तुस्तुऽवांसः । उपऽअयने । उषसां । गोऽमतीनां । अग्नयः । न । जरमाणाः । अनु । द्यून् ॥ तव । स्याम । पुरुऽवीरस्य । शर्मन् । उरुऽशंसस्य । वरुण । प्रनेतरितिप्रऽनेतः । यूयं । नः । पुत्राः । अदितेः । अदब्धाः । अभि । क्षमध्वं । युज्याय । देवाः ॥ प्र । सीं । आदित्यः । असृजत् । विऽधर्ता । ऋतं । सिंधवः । वरुणस्य । यंति । श्राम्यंति । न । वि । मुचंति । एते । वयः । न । पप्तुः । रघुऽया । परिऽज्मन् ॥ वि । मत् । श्रथय । रशनांऽइव । आगः । ऋध्याम । ते । वरुण । खां । ऋतस्य । मा । तंतुः । छेदि । वयतः । धियं । मे । मा । मात्रा । शारि । अपसः । पुरा । ऋतोः ॥ ९ ॥ अपोइति । सु । म्यक्ष । वरुण । भियसं । मत् । संऽराट् । ऋतऽवः । अनु । मा । गृभाय । दामऽइव । वत्सात् । वि । मुमुग्धि । अंहः । नहि । त्वत् । आरे । निऽमिषः । चन । ईशे ॥ मा । नः । वधैः । वरुण । ये । ते । इष्टौ । एनः । कृण्वंतं । असुर । भ्रीणंति । मा । ज्योतिषः ।

प्रऽवसथानि । गन्म । वि । सु । मृधः । शिश्रथः । जीवसे । नः
नमः । पुरा । ते । वरुण । उत । नूनं । उत । अपरं । तुविऽजात
ब्रवाम । त्वेइति । हि । कं । पर्वते । न । श्रितानि । अप्रऽच्युतानि
दुःऽदभ । व्रतानि ॥ परा । ऋणा । सावीः । अध । मत्ऽकृतानि
मा । अहं । राजन् । अन्यऽकृतेन । भोजं । अविऽउष्टाः । इत् । नु
भूयसीः । उषसः । आ । नः । जीवान् । वरुण । तासु । शाधि ॥ यः
मे । राजन् । युज्यः । वा । सखा । वा । स्वप्ने । भयं । भीरवे । मह्यं
आह । स्तेनः । वा । यः । दिप्सति । नः । वृकः । वा । त्वं । तस्मात्
वरुण । पाहि । अस्मान् ॥ ० ॥ १० ॥ धृतऽव्रताः । आदित्याः । इषिराः
आरे । मत् । कर्त । रहसूःऽइव । आगः । शृण्वतः । वः । वरुण
मित्र । देवाः । भद्रस्य । विद्वान् । अवसे । हुवे । वः ॥ यूयं । देवाः । प्र
मतिः । यूयं । ओजः । यूयं । द्वेषांसि । सनुतः । युयोत । अभिऽक्षत्तारः
अभि । च । क्षमध्वं । अद्य । च । नः । मृळयत । अपरं । च ॥ किं
ऊँइति । नु । वः । कृणवाम । अपरेण । किं । सनेन । वसवः । आप्येन
यूयं । नः । मित्रावरुणा । अदिते । च । स्वस्ति । इंद्रामरुतः ॥ दधात
हये । देवाः । यूयं । इत् । आपयः । स्थ । ते । मृळत । नाधमानाय
मह्यं । मा । वः । रथः । मध्यमऽवाट् । ऋते । भूत् । मा । युष्मा
वत्ऽसु । आपिषु । श्रमिष्म ॥ प्र । वः । एकः । मिमय । भूरि
आगः । यत् । मा । पिताऽइव । कितवं । शशास । आरे । पाशाः
आरे । अघानि । देवाः । मा । मा । अधि । पुत्रे । विंऽइव । ग्रभीष्ट
अर्वाञ्चः । अद्य । भवत । यजत्राः । आ । वः । हार्दि । भयमानः
व्ययेयं । त्राध्वं । नः । देवाः । निऽजुरः । वृकस्य । त्राध्वं । कर्तात्
अवऽपदः । यजत्राः ॥ ० ॥ ११ ॥ ऋतं । देवाय । कृण्वते । सवित्रे
इंद्राय । अहिऽघ्ने । न । रमंते । आपः । अहःऽअहः । याति । अक्तुः

अपां । कियति । आ । प्रथमः । सर्गः । आसां ॥ यः । वृत्राय । सिनं । अत्र । अभरिष्यत् । प्र । तं । जनित्री । विदुषे । उवाच । पथः । रदंतीः । अनु । जोषं । अस्मै । दिवेऽदिवे । धुनयः । यंति । अर्थं ॥ ऊर्ध्वः । हि । अस्थात् । अधि । अंतरिक्षे । अध । वृत्राय । प्र । वधं । जभार । मिहं । वसानः । उप । हि । ईं । अदुद्रोत् । तिग्मऽआयुधः । अजयत् । शत्रुं । इंद्रः ॥ बृहस्पते । तपुषा । अश्नाऽइव । विध्य । वृकऽद्वरसः । असुरस्य । वीरान् । यथा । जघंथ । धृषता । पुरा । चित् । एव । जहि । शत्रुं । अस्माकं । इंद्र ॥ अव । क्षिप । दिवः । अश्मानं । उच्चा । येन । शत्रुं । मंदसानः । निऽजूर्वाः । तोकस्य । सातौ । तनयस्य । भूरेः । अस्मान् । अर्धे । कृणुतात् । इंद्र । गोनां ॥ १२ ॥ प्र । हि । क्रतुं । वृहथः । यं । वनुथः । रध्रस्य । स्थः । यजमानस्य । चोदौ । इंद्रासोमा । युवं । अस्मान् । अविष्टं । अस्मिन् । भयऽस्थे । कृणुतं । ऊँइति । लोकं ॥ न । मा । तमत् । न । श्रमत् । न । उत । तंद्रत् । न । वोचाम । मा । सुनोत । इति । सोमं । यः । मे । पृणात् । यः । ददत् । यः । निऽबोधात् । यः । मा । सुन्वतं । उप । गोभिः । आ । अयत् ॥ सरस्वति । त्वं । अस्मान् । अविड्ढि । मरुत्वती । धृषती । जेषि । शत्रून् । त्यं । चित् । शर्धंतं । तविषीऽयमाणं । इंद्रः । हंति । वृषभं । शंडिकानां ॥ यः । नः । सनुत्यः । उत । वा । जिघत्नुः । अभिऽख्याय । तं । तिगितेन । विध्य । बृहस्पते । आयुधैः । जेषि । शत्रून् । द्रुहे । रिषंतं । परि । धेहि । राजन् ॥ अस्माकेभिः । सत्वऽभिः । शूर । शूरैः । वीर्या । कृधि । यानि । ते । कर्त्वानि । ज्योक् । अभूवन् । अनुऽधूपितासः । हत्वी । तेषां । आ । भर । नः । वसूनि ॥ तं । वः । शर्धं । मारुतं । सुम्नऽयुः । गिरा । उप । ब्रुवे । नमसा । दैव्यं । जनं । यथा । रयिं । सर्वऽवीरं । नशामहै ।

अपत्यऽसाचं । श्रुत्यं । दिवेऽदिवे ॥ १३ ॥ अस्माकं । मित्रावरुणा । अवतं । रथं । आदित्यैः । रुद्रैः । वसुऽभिः । सचाऽभुवा । प्र । यत् । वयः । न । पप्तन् । वस्मनः । परि । श्रवस्यवः । हृषीऽवंतः । वनऽसदः ॥ अध । स्म । नः । उत् । अवत । सऽजोषसः । रथं । देवासः । अभि । विक्षु । वाजऽयुं । यत् । आशवः । पद्याभिः । तित्रंतः । रजः । पृथिव्याः । सानौ । जंघनंत । पाणिऽभिः ॥ उत । स्यः । नः । इंद्रः । विश्वऽचर्षणिः । दिवः । शर्धेन । मारुतेन । सुऽक्रतुः । अनु । नु । स्थाति । अवृकाभिः । ऊतिऽभिः । रथं । महे । सनये । वाजऽसातये ॥ उत । स्यः । देवः । भुवनस्य । सक्षणिः । त्वष्टा । ग्नाभिः । सऽजोषाः । जूजुवत् । रथं । इळा । भगः । बृहत्ऽदिवा । उत । रोदसीइति । पूषा । पुरंऽधिः । अश्विनौ । अध । पतीइति ॥ उत । त्येइति । देवीइति । सुभगेइतिसुऽभगे । मिथुऽदृशा । उषसानक्ता । जगतां । अपिऽजुवा । स्तुषे । यत् । वां । पृथिवि । नव्यसा । वचः । स्थातुः । च । वयः । त्रिऽवयाः । उपऽस्तिरे ॥ उत । वः । शंसं । उशिजांऽइव । श्मसि । अहिः । बुध्न्यः । अजः । एकऽपात् । उत । त्रितः । ऋभुक्षाः । सविता । चनः । दधे । अपां । नपात् । आशुऽहेमा । धिया । शमि ॥ एता । वः । वश्मि । उत्ऽयता । यजत्राः । अतक्षन् । आयवः । नव्यसे । सं । श्रवस्यवः । वाजं । चकानाः । सप्तिः । न । रथ्यः । अह धीतिं । अश्याः ॥ १४ ॥ अस्य । मे । द्यावापृथिवीइति । ऋतऽयतः । भूतं । अवित्रीइति । वचसः । सिसासतः । ययोः । आयुः । प्रऽतरं । तेइति । इदं । पुरः । उपस्तुतेइत्युपऽस्तुते । वसुऽयुः । वां । महः । दधे ॥ मा । नः । गुह्याः । रिपः । आयोः । अहन् । दभन् । मा । नः । आभ्यः । रीरधः । दुच्छुनाभ्यः । मा । नः । वि

यौः । सख्या । विद्धि । तस्य । नः । सुम्नऽयता । मनसा । तत् । त्वा । ईमहे ॥ अहेळता । मनसा । श्रुष्टिं । आ । वह । दुहानां । धेनुं । पिप्युषीं । असश्चतं । पद्याभिः । आशुं । वचसा । च । वाजिनं । त्वां । हिनोमि । पुरुऽहूत । विश्वहा ॥ राकां । अहं । सुऽहवां । सुऽस्तुती । हुवे । शृणोतु । नः । सुऽभगा । बोधतु । त्मना । सीव्यतु । अपः । सूच्या । अच्छिद्यमानया । ददातु । वीरं । शतऽदायं । उक्थ्यं ॥ याः । ते । राके । सुऽमतयः । सुऽपेशसः । याभिः । ददासि । दाशुषे । वसूनि । ताभिः । नः । अद्य । सुऽमनाः । उपऽआगहि । सहस्रऽपोषं । सुऽभगे । रराणा ॥ सिनीवालि । पृथुऽस्तुके । या । देवानां । असि । स्वसा । जुषस्व । हव्यं । आऽहुतं । प्रऽजां । देवि । दिदिड्ढि । नः ॥ या । सुऽबाहुः । सुऽअंगुरिः । सुऽसूमा । बहुऽसूवरी । तस्यै । विश्पत्न्यै । हविः । सिनीवाल्यै । जुहोतन ॥ या । गुंगूः । या । सिनीवाली । या । राका । या । सरस्वती । इंद्राणीं । अह्वे । ऊतये । वरुणानीं । स्वस्तये ॥ १५ ॥

आ । ते । पितः । मरुतां । सुम्नं । एतु । मा । नः । सूर्यस्य । संऽदृशः । युयोथाः । अभि । नः । वीरः । अर्वति । क्षमेत । प्र । जायेमहि । रुद्र । प्रऽजाभिः ॥ त्वाऽदत्तेभिः । रुद्र । शंऽतमेभिः । शतं । हिमाः । अशीय । भेषजेभिः । वि । अस्मत् । द्वेषः । विऽतरं । वि । अंहः । वि । अमीवाः । चातयस्व । विषूचीः ॥ श्रेष्ठः । जातस्य । रुद्र । श्रिया । असि । तवःऽतमः । तवसां । वज्रबाहोइतिवज्रऽबाहो । पर्षि । नः । पारं । अंहसः । स्वस्ति । विश्वाः । अभिऽइतीः । रपसः । युयोधि ॥ मा । त्वा । रुद्र । चुक्रुधाम । नमःऽभिः । मा । दुःऽस्तुती । वृषभ । मा । सऽहूती । उत् । नः । वीरान् । अर्पय । भेषजेभिः । भिषक्ऽतमं । त्वा । भिषजां । शृणो-

मि ॥ हवीमऽभिः । हवते । यः । हविःऽभिः । अव । स्तोमेभिः । रुद्रं । दिषीय । ऋदूदरः । सुऽहवः । मा । नः । अस्यै । बभ्रुः । सुऽशिप्रः । रीरधत् । मनायै ॥ १६ ॥ उत् । मा । ममंद । वृषभः । मरुत्वान् । त्वक्षीयसा । वयसा । नाधमानं । घृणिऽइव । छायां । अरपाः । अशीय । आ । विवासेयं । रुद्रस्य । सुम्नं ॥ क्व । स्यः । ते । रुद्र । मृळयाकुः । हस्तः । यः । अस्ति । भेषजः । जलाषः । अपऽभर्ता । रपसः । दैव्यस्य । अभि । नु । मा । वृषभ । चक्षमीथाः ॥ प्र । बभ्रवे । वृषभाय । श्वितीचे । महः । महीं । सुऽस्तुतिं । ईरयामि । नमस्य । कल्मलीकिनं । नमःऽभिः । गृणीमसि । त्वेषं । रुद्रस्य । नाम ॥ स्थिरेभिः । अंगैः । पुरुऽरूपः । उग्रः । बभ्रुः । शुक्रेभिः । पिपिशे । हिरण्यैः । ईशानात् । अस्य । भुवनस्य । भूरेः । न । वै । ऊँइति । योषत् । रुद्रात् । असुर्यं ॥ अर्हन् । बिभर्षि । सायकानि । धन्व । अर्हन् । निष्कं । यजतं । विश्वऽरूपं । अर्हन् । इदं । दयसे । विश्वं । अभ्वं । न । वै । ओजीयः । रुद्र । त्वत् । अस्ति ॥ १७ ॥ स्तुहि । श्रुतं । गर्तऽसदं । युवानं । मृगं । न । भीमं । उपऽहत्नुं । उग्रं । मृळ । जरित्रे । रुद्र । स्तवानः । अन्यं । ते । अस्मत् । नि । वपंतु । सेनाः ॥ कुमारः । चित् । पितरं । वंदमानं । प्रति । ननाम । रुद्र । उपऽयंतं । भूरेः । दातारं । सतऽपतिं । गृणीषे । स्तुतः । त्वं । भेषजा । रासि । अस्मेइति ॥ या । वः । भेषजा । मरुतः । शुचीनि । या । शंऽतमा । वृषणः । या । मयःऽभु । यानि । मनुः । अवृणीत । पिता । नः । ता । शं । च । योः । च । रुद्रस्य । वश्मि ॥ परि । नः । हेतिः । रुद्रस्य । वृज्याः । परि । त्वेषस्य । दुःऽमतिः । मही । गात् । अव । स्थिरा । मघवत्ऽभ्यः । तनुष्व । मीढ्वः । तोकाय । तनयाय । मृळ ॥

एव । बभ्रोइति । वृषभ । चेकितान । यथा । देव । न । हृणीषे । न । हंसि । हवनऽश्रुत् । नः । रुद्र । इह । बोधि ॥ ० ॥ १८ ॥ धाराऽवराः । मरुतः । धृष्णुऽओजसः । मृगाः । न । भीमाः । तविषीभिः । अर्चिनः । अग्नयः । न । शुशुचानाः । ऋजीषिणः । भृमिं । धमंतः । अप । गाः । अवृण्वत ॥ द्यावः । न । स्तृऽभिः । चितयंत । खादिनः । वि । अभ्रियाः । न । द्युतयंत । वृष्टयः । रुद्रः । यत् । वः । मरुतः । रुक्मऽवक्षसः । वृषा । अजनि । पृश्न्याः । शुक्रे । ऊधनि ॥ उक्षंते । अश्वान् । अत्यान्ऽइव । आजिषु । नदस्य । कर्णैः । तुरयंते । आशुऽभिः । हिरण्यऽशिप्राः । मरुतः । दविध्वतः । पृक्षं । याथ । पृषतीभिः । सऽमन्यवः ॥ पृक्षे । ता । विश्वा । भुवना । ववक्षिरे । मित्राय । वा । सदं । आ । जीरऽदानवः । पृषत्ऽअश्वासः । अनवभ्रऽराधसः । ऋजिप्यासः । न । वयुनेषु । धूःऽसदः ॥ इंधन्वऽभिः । धेनुऽभिः । रप्शदूधऽभिः । अध्वस्मऽभिः । पथिऽभिः । भ्राजत्ऽऋष्टयः । आ । हंसासः । न । स्वसराणि । गंतन । मधोः । मदाय । मरुतः । सऽमन्यवः ॥ १९ ॥ आ । नः । ब्रह्माणि । मरुतः । सऽमन्यवः । नरां । न । शंसः । सवनानि । गंतन । अश्वांऽइव । पिप्यत । धेनुं । ऊधनि । कर्त । धियं । जरित्रे । वाजऽपेशसं ॥ तं । नः । दात । मरुतः । वाजिनं । रथे । आपानं । ब्रह्म । चितयत् । दिवेऽदिवे । इषं । स्तोतृभ्यः । वृजनेषु । कारवे । सनिं । मेधां । अरिष्टं । दुस्तरं । सहः ॥ यत् । युंजते । मरुतः । रुक्मऽवक्षसः । अश्वान् । रथेषु । भगे । आ । सुऽदानवः । धेनुः । न । शिश्वे । स्वसरेषु । पिन्वते । जनाय । रातऽहविषे । महीं । इषं ॥ यः । नः । मरुतः । वृकऽताति । मर्त्यः । रिपुः । दधे । वसवः । रक्षत । रिषः । वर्तयत । तपुषा । चक्रिया । अभि । तं । अव । रुद्राः । अशसः ।

हंतन । वधुरिति ॥ चित्रं । तत् । वः । मरुतः । यामं । चेकिते । पृश्न्याः । यत् । ऊधः । अपि । आपयः । दुहुः । यत् । वा । निदे । नवमानस्य । रुद्रियाः । त्रितं । जराय । जुरतां । अदाभ्याः ॥ २० ॥ तान् । वः । महः । मरुतः । एवऽयाव्नः । विष्णोः । एषस्य । प्रऽभृथे । हवामहे । हिरण्यऽवर्णान् । ककुहान् । यतऽस्रुचः । ब्रह्मण्यंतः । शंस्यं । राधः । ईमहे ॥ ते । दशऽग्वाः । प्रथमाः । यज्ञं । ऊहिरे । ते । नः । हिन्वंतु । उषसः । विऽउष्टिषु । उषाः । न । रामीः । अरुणैः । अप । ऊर्णुते । महः । ज्योतिषा । शुचता । गोऽअर्णसा ॥ ते । क्षोणीभिः । अरुणेभिः । न । अंजिऽभिः । रुद्राः । ऋतस्य । सदनेषु । ववृधुः । निऽमेघमानाः । अत्येन । पाजसा । सुऽचंद्रं । वर्णं । दधिरे । सुऽपेशसं ॥ तान् । इयानः । महि । वरूथं । ऊतये । उप । घ । इत् । एना । नमसा । गृणीमसि । त्रितः । न । यान् । पंच । होतॄन् । अभिष्टये । आऽववर्तत् । अवरान् । चक्रिया । अवसे ॥ यया । रध्रं । पारयथ । अति । अंहः । यया । निदः । मुंचथ । वंदितारं । अर्वाची । सा । मरुतः । या । वः । ऊतिः । ओइति । सु । वाश्राऽइव । सुऽमतिः । जिगातु ॥ २१ ॥ उप । ईं । असृक्षि । वाजऽयुः । वचस्यां । चनः । दधीत । नाद्यः । गिरः । मे । अपां । नपात् । आशुऽहेमा । कुवित् । सः । सुऽपेशसः । करति । जोषिषत् । हि ॥ इमं । सु । अस्मै । हृदः । आ । सुऽतष्टं । मंत्रं । वोचेम । कुवित् । अस्य । वेदत् । अपां । नपात् । असुर्यस्य । मह्ना । विश्वानि । अर्यः । भुवना । जजान ॥ सं । अन्याः । यंति । उप । यंति । अन्याः । समानं । ऊर्वं । नद्यः । पृणंति । तं । ऊँइति । शुचिं । शुचयः । दीदिऽवांसं । अपां । नपातं । परि । तस्थुः । आपः ॥ तं । अस्मेराः । युवतयः । युवानं ।

मर्मृज्यमानाः । परि । यंति । आपः । सः । शुक्रेभिः । शिक्वऽभिः । रेवत् । अस्मेइति । दीदाय । अनिध्मः । घृतऽनिर्निक् । अप्ऽसु ॥ अस्मै । तिस्रः । अव्यथ्याय । नारीः । देवाय । देवीः । दिधिषंति । अन्नं । कृताःऽइव । उप । हि । प्रऽसर्स्रे । अप्ऽसु । सः । पीयूषं । धयति । पूर्वऽसूनां ॥ २२ ॥ अश्वस्य । अत्र । जनिम । अस्य । च । स्वः । द्रुहः । रिषः । संऽपृचः । पाहि । सूरीन् । आमासु । पूर्षु । परः । अप्रऽमृष्यं । न । अरातयः । वि । नशन् । न । अनृतानि ॥ स्वे । आ । दमे । सुऽदुघा । यस्य । धेनुः । स्वधां । पीपाय । सुऽभु । अन्नं । अत्ति । सः । अपां । नपात् । ऊर्जयन् । अप्ऽसु । अंतः । वसुऽदेयाय । विधते । वि । भाति ॥ यः । अप्ऽसु । आ । शुचिना । दैव्येन । ऋतऽवा । अजस्रः । उर्विया । विऽभाति । वयाः । इत् । अन्या । भुवनानि । अस्य । प्र । जायंते । वीरुधः । च । प्रऽजाभिः ॥ अपां । नपात् । आ । हि । अस्थात् । उपऽस्थं । जिह्मानां । ऊर्ध्वः । विऽद्युतं । वसानः । तस्य । ज्येष्ठं । महिमानं । वहंतीः । हिरण्यऽवर्णाः । परि । यंति । यह्वीः ॥ हिरण्यऽरूपः । सः । हिरण्यऽसंदृक् । अपां । नपात् । सः । इत् । ऊँइति । हिरण्यऽवर्णः । हिरण्ययात् । परि । योनेः । निऽसद्य । हिरण्यऽदाः । ददति । अन्नं । अस्मै ॥ २३ ॥ तत् । अस्य । अनीकं । उत । चारु । नाम । अपीच्यं । वर्धते । नप्तुः । अपां ॥ यं । इंधते । युवतयः । सं । इत्था । हिरण्यऽवर्णं । घृतं । अन्नं । अस्य ॥ अस्मै । बहूनां । अवमाय । सख्ये । यज्ञैः । विधेम । नमसा । हविःऽभिः ॥ सं । सानु । मार्ज्मि । दिधिषामि । बिल्मैः । दधामि । अन्नैः । परि । वंदे । ऋक्ऽभिः ॥ सः । ईं । वृषा । अजनयत् । तासु । गर्भं । सः । ईं । शिशुः । धयति । तं । रिहंति ॥ ० ॥ अनभिम्लातऽवर्णः । अन्यस्यऽइव । इह । तन्वा । विवेष ॥ अस्मिन् ।

पदे । परमे । तस्थिऽवांसं । अध्वस्मऽभिः । विश्वहा । दीदिऽवांसं ॥ आपः । नप्त्रे । घृतं । अन्नं । वहंतीः । स्वयं । अत्कैः । परि । दीयंति । यह्वीः ॥ अयांसं । अग्ने । सुऽक्षितिं । जनाय । अयांसं । ऊं इति । मघवत्ऽभ्यः । सुऽवृक्ति ॥ ० ॥ २४ ॥ तुभ्यं । हिन्वानः । वसिष्ट । गाः । अपः । अधुक्षन् । सीं । अविऽभिः । अद्रिऽभिः । नरः ॥ पिब । इंद्र । स्वाहा । प्रऽहुतं । वषट्ऽकृतं । होत्रात् । आ । सोमं । प्रथमः । यः । ईशिषे ॥ यज्ञैः । संऽमिश्लाः । पृषतीभिः । ऋष्टिऽभिः । यामन् । शुभ्रासः । अंजिषु । प्रियाः । उत ॥ आऽसद्य । बर्हिः । भरतस्य । सूनवः । पोत्रात् । आ । सोमं । पिबत । दिवः । नरः । अमाऽइव । नः । सुऽहवाः । आ । हि । गंतन । नि । बर्हिषि । सदतन । रणिष्टन ॥ अथ । मंदस्व । जुजुषाणः । अंधसः । त्वष्टः । देवेभिः । जनिऽभिः । सुमत्ऽगणः ॥ आ । वक्षि । देवान् । इह । विप्र । यक्षि । च । उशन् । होतः । नि । सद । योनिषु । त्रिषु ॥ प्रति । वीहि । प्रऽस्थितं । सोम्यं । मधु । पिब । आग्नीध्रात् । तव । भागस्य । तृष्णुहि ॥ एषः । स्यः । ते । तन्वः । नृम्णऽवर्धनः । सहः । ओजः । प्रऽदिवि । बाह्वोः । हितः ॥ तुभ्यं । सुतः । मघऽवन् । तुभ्यं । आऽभृतः । त्वं । अस्य । ब्राह्मणात् । आ । तृपत् । पिब । जुषेथां । यज्ञं । बोधतं । हवस्य । मे । सत्तः । होता । निऽविदः । पूर्व्याः । अनु ॥ अछ । राजाना । नमः । एति । आऽवृतं । प्रऽशास्त्रात् । आ । पिबतं । सोम्यं । मधु ॥ २५ ॥

इति द्वितीयाष्टके सप्तमोध्यायः ॥ ७ ॥



## ॥ अथ अष्टमोध्यायः ॥

हरिः ॐ ॥ मंदस्व । होत्रात् । अनु । जोषं । अंधसः । अध्वर्यवः । सः । पूर्णां । वष्टि । आऽसिचं ॥ तस्मै । एतं । भरत । तत्ऽवशः । ददिः । होत्रात् । सोमं । द्रविणःऽदः । पिब । ऋतुऽभिः ॥ यं । ऊँइति । पूर्वं । अहुवे । तं । इदं । हुवे । सः । इत् । ऊँइति । हव्यः । ददिः । यः । नाम । पत्यते ॥ अध्वर्युऽभिः । प्रऽस्थितं । सोम्यं । मधु । पोत्रात् ॥ ० ॥ मेद्यंतु । ते । वह्नयः । येभिः । ईयसे । अरिषण्यन् । वीळयस्व । वनस्पते ॥ आऽयूयं । धृष्णोइति । अभिऽगूर्यं । त्वं । नेष्ट्रात् ॥ ० ॥ अपात् । होत्रात् । उत । पोत्रात् । अमत्त । उत । नेष्ट्रात् । अजुषत । प्रयः । हितं ॥ तुरीयं । पात्रं । अमृक्तं । अमर्त्यं । द्रविणःऽदाः । पिबतु । द्राविणःऽदसः ॥ अर्वाचं । अद्य । यय्यं । नृऽवाहनं । रथं । युंजाथां । इह । वां । विऽमोचनं ॥ पृंक्तं । हवींषि । मधुना । आ । हि । कं । गतं । अथ । सोमं । पिबतं । वाजिनीवसूइतिवाजिनीऽवसू ॥ जोषि । अग्ने । संऽइधं । जोषि । आऽहुतं । जोषि । ब्रह्म । जन्यं । जोषि । सुऽस्तुतिं ॥ विश्वेभिः । विश्वान् । ऋतुना । वसोइति । महः । उशन् । देवान् । उशतः । पायय । हविः ॥ १ ॥ उत् । ऊँइति । स्यः । देवः । सविता । सवाय । शश्वत्ऽतमं । तत्ऽअपाः । वह्निः । अस्थात् ॥ नूनं । देवेभ्यः । वि । हि । धाति । रत्नं । अथ । आ । अभजत् । वीतिऽहोत्रं । स्वस्तौ ॥ विश्वस्य । हि । श्रुष्टये । देवः । ऊर्ध्वः । प्र । बाहवा । पृथुऽपाणिः । सिसर्ति ॥ आपः । चित् । अस्य । व्रते । आ । निऽमृग्राः । अयं । चित् । वातः । रमते । परिऽज्मन् ॥

आशुऽभिः । चित् । यान् । वि । मुचाति । नूनं । अरीरमत् । अत॑मानं । चित् । एतोः ॥ अह्यर्षूणां । चित् । नि । अयान् । अविष्यां । अनु । व्रतं । सवितुः । मोकी । आ । अगात् ॥ पुनरिति । सं । अव्यत् । विऽततं । वयंती । मध्या । कर्तोः । नि अधात् । शक्म । धीरः । उत् । संऽहाय॑ । अस्थात् । वि । ऋतून् । अदर्धः । अरमतिः । सविता । देवः । आ । अगात् ॥ नाना । ओकांसि । दुर्यः । विश्वं । आयुः । वि । तिष्ठते । प्रऽभवः । शोकः । अग्नेः ॥ ज्येष्ठं । माता । सूनवे । भागं । आ । अधात् । अनु । अस्य । केतं । इषितं । सवित्रा ॥ २ ॥ संऽआववर्ति । विऽस्थितः । जिगीषुः । विश्वेषां । कामः । चरतां । अमा । अभूत् ॥ शश्वान् । अपः । विऽकृतं । हित्वी । आ । अगात् । अनु । व्रतं । सवितुः । दैव्यस्य ॥ त्वया । हितं । अप्यं । अप्ऽसु । भागं । धन्व । अनु । आ । मृगयसः । वि । तस्थुः ॥ वनानि । विऽभ्यः । नकिः । अस्य । तानि । व्रता । देवस्य । सवितुः । मिनंति ॥ यात्ऽराध्यं । वरुणः । योनिं । अप्यं । अनिऽशितं । निऽमिषि । जर्भुराणः ॥ विश्वः । मर्ताडः । व्रजं । आ । पशुः । गात् । स्थऽशः । जन्मानि । सविता । वि । आ । अकरित्यकः ॥ न । यस्य । इंद्रः । वरुणः । न । मित्रः । व्रतं । अर्यमा । न । मिनंति । रुद्रः । न । अरातयः । तं । इदं । स्वस्ति । हुवे । देवं । सवितारं । नमःऽभिः ॥ भगं । धियं । वाजयंतः । पुरंऽधिं । नराशंसः । ग्नाःपतिः । नः । अव्याः ॥ आऽअये । वामस्य । संऽगथे । रयीणां । प्रिया । देवस्य । सवितुः । स्याम ॥ अस्मभ्यं । तत् । दिवः । अत्ऽभ्यः । पृथिव्याः । त्वया । दत्तं । काम्यं । राधः । आ । अगात् ॥ शं । यत् । स्तोतृऽभ्यः । आपये । भवाति । उरुऽशंसाय । सवितः । जरित्रे ॥ ३ ग्रावाणाऽइव । तत् । इत् । अर्थं । जरेथेइति । गृध्राऽइव । वृक्षं

निधिऽमंतं । अच्छ ॥ ब्रह्माणाऽइव । विदथे । उक्थऽशंसा । हूताऽइव । हव्या । जन्या । पुरुऽत्रा ॥ प्रातःऽयावाना । रथ्याऽइव । वीरा । अजाऽइव । यमा । वरं । आ । सचेथेइति । मेनेइवेतिमेनेऽइव । तन्वा । शुंभमानेइति । दंपतीइवेतिदंपतीऽइव । क्रतुऽविदा । जनेषु ॥ शृंगाऽइव । नः । प्रथमा । गंतं । अर्वाक् । शफौऽइव । जर्भुराणा । तरःऽभिः ॥ चक्रवाकाऽइव । प्रति । वस्तोः । उस्रा । अर्वांचा । यातं । रथ्याऽइव । शक्रा ॥ नावाऽइव । नः । पारयतं । युगाऽइव । नभ्याऽइव । नः । उपधीइवेत्युपधीऽइव । प्रधीइवेतिप्रधीऽइव ॥ श्वानाऽइव । नः । अरिषण्या । तनूनां । खृगलाऽइव । विऽस्रसः । पातं । अस्मान् ॥ वाताऽइव । अजुर्या । नद्याऽइव । रीतिः । अक्षीइवेत्यक्षीऽइव । चक्षुषा । आ । यातं । अर्वाक् ॥ हस्तौऽइव । तन्वे । शंऽभविष्ठा । पादाऽइव । नः । नयतं । वस्यः । अच्छ ॥ ४ ॥ ओष्ठौऽइव । मधु । आस्ने । वदंता । स्तनौऽइव । पिप्यतं । जीवसे । नः । नसाऽइव । नः । तन्वः । रक्षितारा । कर्णौऽइव । सुऽश्रुता । भूतं । अस्मेइति ॥ हस्ताऽइव । शक्तिं । अभि । संददीइतिसंऽददी । नः । क्षामऽइव । नः । । सं । अजतं । रजांसि ॥ इमाः । गिरः । अश्विना । युष्मऽयंतीः । क्ष्णोत्रेणऽइव । स्वऽधितिं । सं । शिशीतं ॥ ० ॥ वर्धनानि । ब्रह्म । स्तोमं । गृत्सऽमदासः । अक्रन् ॥ तानि । नरा । जुजुषाणा । उप । यातं ॥ ० ॥ ५ ॥ सोमापूषणा । जनना । रयीणां । जनना । दिवः । जनना । पृथिव्याः ॥ जातौ । विश्वस्य । भुवनस्य । गोपौ । देवाः । अकृण्वन् । अमृतस्य । नाभिं ॥ इमौ । देवौ । जायमानौ । जुषंत । इमौ । तमांसि । गूहतां । अजुष्टा ॥ आभ्यां । इंद्रः । पक्वं । आमासु । अंतरिति । सोमापूषऽभ्यां । जनत् । उस्रियासु ॥ सोमापूषणा । रजसः । विऽमानं । सप्तऽचक्रं । रथं । अविश्वऽमिन्वं ॥ विषुऽवृतं ।

मनसा । युज्यमानं । तं । जिन्वथः । वृषणा । पंचऽरश्मिं ॥ दिवि । अन्यः । सदनं । चक्रे । उच्चा । पृथिव्यां । अन्यः । अधि । अंतरिक्षे । तौ । अस्मभ्यं । पुरुऽवारं । पुरुऽक्षुं । रायः । पोषं । वि । स्यतां । नाभिं । अस्मेइति ॥ विश्वानि । अन्यः । भुवना । जजानं । विश्वं । अन्यः । अभिऽचक्षाणः । एति ॥ सोमापूषणौ । अवतं । धियं । मे । युवाभ्यां । विश्वाः । पृतनाः । जयेम ॥ धियं । पूषा । जिन्वतु । विश्वंऽइन्वः । रयिं । सोमः । रयिऽपतिः । दधातु ॥ अवतु । देवी । अदितिः । अनर्वा ॥ ० ॥ ६ ॥ वायोइति । ये । ते । सहस्रिणः । रथासः । तेभिः । आ । गहि ॥ नियुत्वान् । सोमऽपीतये ॥ नियुत्वान् । वायोइति । आ । गहि । अयं । शुक्रः । अयामि । ते ॥ गंता । असि । सुन्वतः । गृहं ॥ शुक्रस्य । अद्य । गोऽआशिरः । इंद्रवायूइति । नियुत्वंतः ॥ आ । यातं । पिबतं । नरा ॥ अयं । वां । मित्रावरुणा । सुतः । सोमः । ऋतऽवृधा ॥ मम । इत् । इह । श्रुतं । हवं ॥ राजानौ । अनभिऽद्रुहा । ध्रुवे । सदसि । उत्ऽतमे ॥ सहस्रऽस्थूणे । आसातेइति ॥ ७ ॥ ० ॥ सचेतेइति । अनवऽह्वरं ॥ गोऽमत् । ऊँइति । सु । नासत्या । अश्वऽवत् । यातं । अश्विना ॥ वर्तिः । रुद्रा । नृऽपाय्यं ॥ न । यत् । परः । न । अंतरः । आऽदधर्षत् । वृषण्वसूइतिवृषण्ऽवसू ॥ दुःऽशंसः । मर्त्यः । रिपुः ॥ ता । नः । आ । वोळ्हं । अश्विना । रयिं । पिशंगऽसंदृशं ॥ धिष्ण्या । वरिवःऽविदं ॥ इंद्रः । अंग । महत् । भयं । अभि । सत् । अप । चुच्यवत् ॥ सः । हि । स्थिरः । विऽचर्षणिः ॥ ८ ॥ इंद्रः । च । मृळयाति । नः । न । नः । पश्चात् । अघं । नशत् ॥ भद्रं । भवाति । नः । पुरः ॥ इंद्रः । आशाभ्यः । परि । सर्वाभ्यः । अभयं । करत् ॥ जेता । शत्रून् । विऽचर्षणिः ॥ विश्वे । देवासः । आ । गत । शृणुत । मे । इमं । हवं ॥ आ । इंद्र

बर्हिः । नि । सीदत ॥ तीव्रः । वः । मधुऽमान् । अयं । शुनऽहोत्रेषु । मत्सरः ॥ एतं । पिबत । काम्यं ॥ ० ॥ ९ ॥ अंबिऽतमे । नदीऽतमे । देविऽतमे । सरस्वति ॥ अप्रशस्ताःऽइव । स्मसि । प्रऽशस्तिं । अंब । नः । कृधि ॥ त्वेइति । विश्वा । सरस्वति । श्रिता । आयूंषि । देव्यां ॥ शुनऽहोत्रेषु । मत्स्व । प्रऽजां । देवि । दिदिड्ढि । नः ॥ इमा । ब्रह्म । सरस्वति । जुषस्व । वाजिनीऽवति ॥ या । ते । मन्म । गृत्सऽमदाः । ऋतऽवरि । प्रिया । देवेषु । जुह्वति ॥ प्र । इतां । यज्ञस्य । शंऽभुवा । युवां । इत् । आ । वृणीमहे ॥ अग्निं । च । हव्यऽवाहनं ॥ द्यावा । नः । पृथिवीइति । इमं । सिध्रं । अद्य । दिविऽस्पृशं ॥ यज्ञं । देवेषु । यच्छतां ॥ आ । वां । उपऽस्थं । अद्रुहा । देवाः । सीदंतु । यज्ञियाः ॥ इह । अद्य । सोमऽपीतये ॥ १० ॥ कनिक्रदत् । जनुषं । प्रऽब्रुवाणः । इयर्ति । वाचं । अरिताऽइव । नावं । सुऽमंगलः । च । शकुने । भवासि । मा । त्वा । का । चित् । अभिऽभा । विश्व्या । विदत् ॥ मा । त्वा । श्येनः । उत् । वधीत् । मा । सुऽपर्णः । मा । त्वा । विदत् । इषुऽमान् । वीरः । अस्ता ॥ पित्र्यां । अनु । प्रऽदिशं । कनिक्रदत् । सुऽमंगलः । भद्रऽवादी । वद । इह ॥ अव । क्रंद । दक्षिणतः । गृहाणां । सुऽमंगलः । भद्रऽवादी । शकुंते ॥ मा । नः । स्तेनः । ईशत । मा । अघऽशंसः ॥ ० ॥ ११ ॥ प्रऽदक्षिणित् । अभि । गृणंति । कारवः । वयः । वदंतः । ऋतुऽथा । शकुंतयः । उभेइति । वाचौ । वदति । सामगाःऽइव । गायत्रं । च । त्रैस्तुभं । च । अनु । राजति ॥ उद्गाताऽइव । शकुने । साम । गायसि । ब्रह्मपुत्रःऽइव । सवनेषु । शंससि ॥ वृषाऽइव । वाजी । शिशुऽमतीः । अपिऽइत्य । सर्वतः । नः । शकुने । भद्रं । आ । वद । विश्वतः । नः । शकुने । पुण्यं । आ । वद ॥ आऽवदन् । त्वं । शकुने । भद्रं ।

आ । वद । तूष्णीं । आसीनः । सुऽमतिं । चिकिद्धि । नः ॥ यत् । उत्ऽपतन् । वदसि । कर्करिः । यथा ॥ ० ॥ १२ ॥ इति द्वितीयमंडलं समाप्तं ॥ २ ॥ सोमस्य । मा । तवसं । वक्षि । अग्ने । वह्निं । चकर्थ । विदथे । यजध्यै ॥ देवान् । अच्छ । दीद्यत् । युंजे । अद्रिं । शंऽआये । अग्ने । तन्वं । जुषस्व ॥ प्रांचं । यज्ञं । चकृम । वर्धतां । गीः । समित्ऽभिः । अग्निं । नमसा । दुवस्यन् ॥ दिवः । शशासुः । विदथा । कवीनां । गृत्साय । चित् । तवसे । गातुं । ईषुः ॥ मयः । दधे । मेधिरः । पूतऽदक्षः । दिवः । सुऽबंधुः । जनुषा । पृथिव्याः ॥ आविंदन् । ऊँइति । दर्शतं । अप्ऽसु । अंतः । देवासः । अग्निं । अपसि । स्वसृणां ॥ अवर्धयन् । सुऽभगं । सप्त । यह्वीः । श्वेतं । जज्ञानं । अरुषं । महिऽत्वा ॥ शिशुं । न । जातं । अभि । आरुः । अश्वाः । देवासः । अग्निं । जनिमन् । वपुष्यन् । शुक्रेभिः । अंगैः । रजः । आऽततन्वान् । क्रतुं । पुनानः । कविऽभिः । पवित्रैः ॥ शोचिः । वसानः । परि । आयुः । अपां । श्रियः । मिमीते । बृहतीः । अनूनाः ॥ १३ ॥ वव्राज । सीं । अनदतीः । अदब्धाः । दिवः । यह्वीः । अवसानाः । अनग्नाः ॥ सनाः । अत्र । युवतयः । सऽयोनीः । एकं । गर्भं । दधिरे । सप्त । वाणीः ॥ स्तीर्णाः । अस्य । संऽहतः । विश्वऽरूपाः । घृतस्य । योनौ । स्रवथे । मधूनां ॥ अस्थुः । अत्र । धेनवः । पिन्वमानाः । महीइति । दस्मस्य । मातरा । समीचीइतिसंऽईची ॥ बभ्राणः । सूनोइति । सहसः । वि । अद्यौत् । दधानः । शुक्रा । रभसा । वपूंषि ॥ श्चोतंति । धाराः । मधुनः । घृतस्य । वृषा । यत्र । ववृधे । काव्येन ॥ पितुः । चित् । ऊधः । जनुषा । विवेद । वि । अस्य । धाराः । असृजत् । वि । धेनाः ॥ गुहा । चरंतं । सखिऽभिः । शिवेभिः । दिवः । यह्वीभिः । न । गुहा । बभूव ।

पितुः । च । गर्भं । जनितुः । च । बभ्रे । पूर्वीः । एकः । अधयत् । पीप्यानाः ॥ वृष्णे । सपत्नीइतिसऽपत्नी । शुचये । सबंधूइतिसऽबंधू । उभेइति । अस्मै । मनुष्येइति । नि । पाहि ॥ १४ ॥ उरौ । महान् । अनिऽबाधे । ववर्ध । आपः । अग्निं । यशसः । सं । हि । पूर्वीः ॥ ऋतस्य । योनौ । अशयत् । दमूनाः । जामीनां । अग्निः । अपसि । स्वसॄणां ॥ अक्रः । न । बभ्रिः । संऽइथे । महीनां । दिदृक्षेयः । सूनवे । भाःऽऋजीकः ॥ उत् । उस्रियाः । जनिता । यः । जजान । अपां । गर्भः । नृऽतमः । यह्वः । अग्निः ॥ अपां । गर्भं । दर्शतं । ओषधीनां । वना । जजान । सुऽभगा । विऽरूपं ॥ देवासः । चित् । मनसा । सं । हि । जग्मुः । पनिष्ठं । जातं । तवसं । दुवस्यन् ॥ बृहंतः । इत् । भानवः । भाःऽऋजीकं । अग्निं । सचंत । विऽद्युतः । न । शुक्राः ॥ गुहाऽइव । वृद्धं । सदसि । स्वे । अंतः । अपारे । ऊर्वे । अमृतं । दुहानाः ॥ ईळे । च । त्वा । यजमानः । हविःऽभिः । ईळे । सखिऽत्वं । सुऽमतिं । निऽकामः ॥ देवैः । अवः । मिमीहि । सं । जरित्रे । रक्ष । च । नः । दम्येभिः । अनीकैः ॥ १५ ॥ उपऽक्षेतारः । तव । सुऽप्रनीते । अग्ने । विश्वानि । धन्या । दधानाः ॥ सुऽरेतसा । श्रवसा । तुंजमानाः । अभि । स्याम । पृतनाऽयून् । अदेवान् ॥ आ । देवानां । अभवः । केतुः । अग्ने । मंद्रः । विश्वानि । काव्यानि । विद्वान् ॥ प्रति । मर्तान् । अवासयः । दमूनाः । अनु । देवान् । रथिरः । यासि । साधन् ॥ नि । दुरोणे । अमृतः । मर्त्यानां । राजा । ससाद । विदथानि । साधन् । घृतऽप्रतीकः । उर्विया । वि । अद्यौत् । अग्निः । विश्वानि । काव्यानि । विद्वान् ॥ आ । नः । गहि । सख्येभिः । शिवेभिः । महान् । महीभिः । ऊतिऽभिः । सरण्यन् ॥ अस्मेइति । रयिं । बहुलं । संऽतरुत्रं । सुऽवाचं । भागं । यशसं । कृधि । नः ॥ एता । ते । अग्ने ।

जनिम । सनानि । प्र । पूर्व्याय । नूतनानि । वोचं ॥ महांति । वृष्णे ।
सवना । कृता । इमा । जन्मन्ऽजन्मन् । निऽहितः । जातऽवेदाः ॥ ० ।
विश्वामित्रेभिः । इध्यते । अजस्रः ॥ तस्य । वयं । सुऽमतौ । यज्ञि-
यस्य । अपि । भद्रे । सौमनसे । स्याम ॥ इमं । यज्ञं । सहसाऽवन् ।
त्वं । नः । देवऽत्रा । धेहि । सुक्रतोइतिसुऽक्रतो । रराणः ॥ प्र । यंसि ।
होतः । बृहतीः । इषः । नः । अग्ने । महि । द्रविणं । आ । यजस्व ।
इळां । अग्ने । पुरुऽदंसं । सनिं । गोः । शश्वत्ऽतमं । हवमानाय ।
साध ॥ स्यात् । नः । सूनुः । तनयः । विजाऽवा । अग्ने । सा । ते ।
सुऽमतिः । भूतु । अस्मेइति ॥ १६ ॥ वैश्वानराय । धिषणां । ऋतऽ-
वृधे । घृतं । न । पूतं । अग्नये । जनामसि ॥ द्विता । होतारं । मनुषः ।
च । वाघतः । धिया । रथं । न । कुलिशः । सं । ऋण्वति ।
सः । रोचयत् । जनुषा । रोदसीइति । उभेइति । सः । मात्रोः ।
अभवत् । पुत्रः । ईड्यः ॥ हव्यऽवाट् । अग्निः । अजरः । चनःऽ-
हितः । दुःऽदभः । विशां । अतिथिः । विभाऽवसुः ॥ क्रत्वा । दक्षस्य ।
तरुषः । विऽधर्मणि । देवासः । अग्निं । जनयंत । चित्तिऽभिः ॥ रुरु-
चानं । भानुना । ज्योतिषा । महां । अत्यं । न । वाजं । सनिष्यन् ।
उप । ब्रुवे ॥ आ । मंद्रस्य । सनिष्यतः । वरेण्यं । वृणीमहे । अहयं ।
वाजं । ऋग्मियं ॥ रातिं । भृगूणां । उशिजं । कविऽक्रतुं । अग्निं ।
राजंतं । दिव्येन । शोचिषा ॥ अग्निं । सुम्नाय । दधिरे । पुरः । जनाः ।
वाजऽश्रवसं । इह । वृक्तऽबर्हिषः ॥ यतऽस्रुचः । सुऽरुचं । विश्वऽ-
देव्यं । रुद्रं । यज्ञानां । साधत्ऽइष्टिं । अपसां ॥ १७ ॥ पावकऽशोचे ।
तव । हि क्षयं । परि । होतः । यज्ञेषु । वृक्तऽबर्हिषः । नरः ॥ अग्ने ।
दुवः । इच्छमानासः । आप्यं । उप । आसते । द्रविणं । धेहि । तेभ्यः ।
आ । रोदसीइति । अपृणत् । आ । स्वः । महत् । जातं । यत् ।

एनं । अपसः । अधारयन् ॥ सः । अध्वराय । परि । नीयते । कविः । अत्यः । न । वाजऽसातये । चनःऽहितः ॥ नमस्यत । हव्यऽदातिं । सुऽअध्वरं । दुवस्यत । दम्यं । जातऽवेदसं ॥ रथीः । ऋतस्य । बृहतः । विऽचर्षणिः । अग्निः । देवानां । अभवत् । पुरःऽहितः ॥ तिस्रः । यह्वस्य । संऽइधः । परिऽज्मनः । अग्नेः । अपुनन् । उशिजः । अमृत्यवः ॥ तासां । एकां । अदधुः । मर्त्ये । भुजं । ऊँऽइति । लोकं । ऊँऽइति । द्वेऽइति । उप । जामिं । ईयतुः ॥ विशां । कविं । विश्पतिं । मानुषीः । इषः । सं । सीं । अकृण्वन् । स्वऽधितिं । न । तेजसे ॥ सः । उत्ऽवतः । निऽवतः । याति । वेविषत् । सः । गर्भं । एषु । भुवनेषु । दीधरत् ॥ १८ ॥ सः । जिन्वते । जठरेषु । प्रजज्ञिऽवान् । वृषा । चित्रेषु । नानदत् । न । सिंहः ॥ वैश्वानरः । पृथुऽपाजाः । अमर्त्यः । वसु । रत्ना । दयमानः । वि । दाशुषे ॥ वैश्वानरः । प्रत्नऽथा । नाकं । आ । अरुहत् । दिवः । पृष्ठं । भंदमानः । सुमन्मऽभिः ॥ सः । पूर्वऽवत् । जनयन् । जंतवे । धनं । समानं । अज्मं । परि । एति । जागृविः ॥ ऋतऽवानं । यज्ञियं । विप्रं । उक्थ्यं । आ । यं । दधे । मातरिश्वा । दिवि । क्षयं ॥ तं । चित्रऽयामं । हरिऽकेशं । ईमहे । सुऽदीतिं । अग्निं । सुविताय । नव्यसे ॥ शुचिं । न । यामन् । इषिरं । स्वःऽदृशं । केतुं । दिवः । रोचनऽस्थां । उषःऽबुधं ॥ अग्निं । मूर्धानं । दिवः । अप्रतिऽस्कुतं । तं । ईमहे । नमसा । वाजिनं । बृहत् ॥ मंद्रं । होतारं । शुचिं । अद्वयाविनं । दमूनसं । उक्थ्यं । विश्वऽचर्षणिं ॥ रथं । न । चित्रं । वपुषाय । दर्शतं । मनुःऽहितं । सदं । इत् । रायः । ईमहे ॥ १९ ॥ वैश्वानराय । पृथुऽपाजसे । विपः । रत्ना । विधंत । धरुणेषु । गातवे ॥ अग्निः । हि । देवान् । अमृतः । दुवस्यति । अथ । धर्माणि । सनता । न । दूदुषत् ॥ अंतः ।

दूतः । रोदसीइति । दस्मः । ईयते । होता । निऽसत्तः । मनुषः । पुरःऽहितः ॥ क्षयं । बृहंतं । परि । भूषति । द्युऽभिः । देवेभिः । अग्निः । इषितः । धियाऽवसुः ॥ केतुं । यज्ञानां । विदथस्य । साधनं । विप्रासः । अग्निं । महयंत । चित्तिऽभिः ॥ अपांसि । यस्मिन् । अधि । संऽदधुः । गिरः । तस्मिन् । सुम्नानि । यजमानः । आ । चके । पिता । यज्ञानां । असुरः । विपःऽचितां । विऽमानं । अग्निः । वयुनं । च । वाघतां ॥ विवेश । रोदसीइति । भूरिऽवर्पसा । पुरुऽप्रियः । भंदते । धामऽभिः । कविः ॥ चंद्रं । अग्निं । चंद्रऽरथं । हरिऽव्रतं । वैश्वानरं । अप्सुऽसदं । स्वःऽविदं ॥ विऽगाहं । तूर्णि । तविषीभिः । आऽवृतं । भूर्णि । देवासः । इह । सुऽश्रियं । दधुः ॥ २० ॥ अग्निः । देवेभिः । मनुषः । च । जंतुऽभिः । तन्वानः । यज्ञं । पुरुऽपेशसं । धिया ॥ रथीः । अंतः । ईयते । साधदिष्टिऽभिः । जीरः । दमूनाः । अभिशस्तिऽचातनः ॥ अग्ने । जरस्व । सुऽअपत्ये । आयुनि । ऊर्जा । पिन्वस्व । सं । इषः । दिदीहि । नः ॥ वयांसि । जिन्व । बृहतः । च । जागृवे । उशिक् । देवानां । असि । सुऽक्रतुः । विपां ॥ विश्पतिं । यह्वं । अतिथिं । नरः । सदा । यंतारं । धीनां । उशिजं । च । वाघतां ॥ अध्वराणां । चेतनं । जातऽवेदसं । प्र । शंसंति । नमसा । जूतिऽभिः । वृधे ॥ विभाऽवा । देवः । सुऽरणः । परि । क्षितीः । अग्निः । बभूव । शवसा । सुमत्ऽरथः ॥ तस्य । व्रतानि । भूरिऽपोषिणः । वयं । उप । भूषेम । दमे । आ । सुवृक्तिऽभिः ॥ वैश्वानर । तव । धामानि । आ । चके । येभिः । स्वःऽवित् । अभवः । विऽचक्षण । जातः । आ । अपृणः । भुवनानि । रोदसीइति । अग्ने । ता । विश्वा । परिऽभूः । असि । त्मना ॥ वैश्वानरस्य । दंसनाभ्यः । बृहत् । अरिणात् । एकः । सुऽअपस्यया । कविः ॥ उभा । पितरा । महयन् । अ

जायत । अग्निः । द्यावापृथिवीइति । भूरिऽरेतसा ॥ २१ ॥ समित्ऽसमित् । सुऽमनाः । बोधि । अस्मेइति । शुचाऽशुचा । सुऽमतिं । रासि । वस्वः ॥ आ । देव । देवान् । यजथाय । वक्षि । सखा । सखीन् । सुऽमनाः । यक्षि । अग्ने ॥ यं । देवासः । त्रिः । अहन् । आऽयजंते । दिवेऽदिवे । वरुणः । मित्रः । अग्निः ॥ सः । इमं । यज्ञं । मधुऽमंतं । कृधि । नः । तनूऽनपात् । घृतऽयोनिं । विधंतं ॥ प्र । दीधितिः । विश्वऽवारा । जिगाति । होतारं । इळः । प्रथमं । यजध्यै ॥ अच्छ । नमःऽभिः । वृषभं । वंदध्यै । सः । देवान् । यक्षत् । इषितः । यजीयान् ॥ ऊर्ध्वः । वां । गातुः । अध्वरे । अकारि । ऊर्ध्वा । शोचींषि । प्रऽस्थिता । रजांसि ॥ दिवः । वा । नाभा । नि । असादि । होता । स्तृणीमहि । देवऽव्यचाः । वि । बर्हिः ॥ सप्त । होत्राणि । मनसा । वृणानाः । इन्वंतः । विश्वं । प्रति । यन् । ऋतेन ॥ नृऽपेशसः । विदथेषु । प्र । जाताः । अभि । इमं । यज्ञं । वि । चरंत । पूर्वीः ॥ २२ ॥ आ । भंदमानेइति । उषसा । उपाकेइति । उत । स्मयेतेइति । तन्वा । विरूपेइतिविऽरूपे ॥ यथा । नः । मित्रः । वरुणः । जुजोषत् । इंद्रः । मरुत्वान् । उत । वा । महःऽभिः ॥ दैव्या । होतारा । प्रथमा । नि । ऋंजे । सप्त । पृक्षासः । स्वधया । मदंति ॥ ऋतं । शंसंतः । ऋतं । इत् । ते । आहुः । अनु । व्रतं । व्रतऽपाः । दीध्यानाः ॥ आ । भारती । भारतीभिः । सऽजोषाः । इळा । देवैः । मनुष्येभिः । अग्निः ॥ सरस्वती । सारस्वतेभिः । अर्वाक् । तिस्रः । देवीः । बर्हिः । आ । इदं । सदंतु ॥ तत् । नः । तुरीपं । अध । पोषयित्नु । देव । त्वष्टः । वि । रराणः । स्यस्वेतिस्यस्व ॥ यतः । वीरः ॥ कर्मण्यः । सुऽदक्षः । युक्तऽग्रावा । जायते । देवऽकामः ॥ वनस्पते । अव । सृज । उप । देवान् । अग्निः । हविः । शमिता । सूदयाति ॥ सः ।

इत् । ऊँइति । होता । सत्यऽतरः । यजाति । यथा । देवानां । जनिमानि । वेद ॥ आ । याहि । अग्ने । संऽइधानः । अर्वाङ् । इंद्रेण । देवैः । सऽरथं । तुरेभिः ॥ बर्हिः । नः । आस्तां । अदितिः । सुऽपुत्रा । स्वाहा । देवाः । अमृताः । मादयंतां ॥ २३ ॥ प्रति । अग्निः । उषसः । चेकितानः । अबोधि । विप्रः । पदऽवीः । कवीनां । पृथुऽपाजाः । देवयत्ऽभिः । संऽइद्धः । अप । द्वारा । तमसः । वह्निः । आवरित्यावः ॥ प्र । इत् । ऊँइति । अग्निः । ववृधे । स्तोमेभिः । गीःऽभिः । स्तोतॄणां । नमस्यः । उक्थैः ॥ पूर्वीः । ऋतस्य । संऽदृशः । चकानः । सं । दूतः । अद्यौत् । उषसः । विऽरोके ॥ अधायि । अग्निः । मानुषीषु । विक्षु । अपां । गर्भः । मित्रः । ऋतेन । साधन् ॥ आ । हर्यतः । यजतः । सानु । अस्थात् । अभूत् । ऊँइति । विप्रः । हव्यः । मतीनां ॥ मित्रः । अग्निः । भवति । यत् । संऽइद्धः । मित्रः । होता । वरुणः । जातऽवेदाः ॥ मित्रः । अध्वर्युः । इषिरः । दमूनाः । मित्रः । सिंधूनां । उत । पर्वतानां ॥ पाति । प्रियं । रिपः । अग्रं । पदं । वेः । पाति । यह्वः । चरणं । सूर्यस्य ॥ पाति । नाभा । सप्तऽशीर्षाणं । अग्निः । पाति । देवानां । उपऽमादं । ऋष्वः ॥ २४ ॥ ऋभुः । चक्रे । ईड्यं । चारु । नाम । विश्वानि । देवः । वयुनानि । विद्वान् ॥ ससस्य । चर्म । घृतऽवत् । पदं । वेः । तत् । इत् । अग्निः । रक्षति । अप्रऽयुच्छन् ॥ आ । योनिं । अग्निः । घृतऽवंतं । अस्थात् । पृथुऽप्रगानं । उशंतं । उशानः ॥ दीद्यानः । शुचिः । ऋष्वः । पावकः । पुनःऽपुनः । मातरा । नव्यसीइति । करितिकः ॥ सद्यः । जातः । ओषधीभिः । ववक्षे । यदि । वर्धति । प्रऽस्वः । घृतेन ॥ आपःऽइव । प्रऽवता । शुंभमानाः । उरुष्यत् । अग्निः । पित्रोः । उपऽस्थे ॥ उत् । ऊँइति । स्तुतः । संऽइधा । यह्वः । अद्यौत् । वर्ष्मन् । दिवः । अधि । नाभा ।

पृथिव्याः ॥ मित्रः । अग्निः । ईड्यः । मातरिश्वा । आ । दूतः । वक्षत् । यजथाय । देवान् ॥ उत् । अस्तभीत् । सम्ऽइधा । नाकं । ऋष्वः । अग्निः । भवन् । उत्ऽतमः । रोचनानां ॥ यदि । भृगुऽभ्यः । परि । मातरिश्वा । गुहा । संतं । हव्यऽवाहं । सम्ऽईधे ॥ ० ॥ २५ ॥ प्र । कारवः । मननाः । वच्यमानाः । देवद्रीचीं । नयत । देवऽयंतः ॥ दक्षिणाऽवाट् । वाजिनी । प्राची । एति । हविः । भरंती । अग्नये । घृताची ॥ आ । रोदसीइति । अपृणाः । जायमानः । उत । प्र । रिक्थाः । अध । नु । प्रयज्योइतिप्रऽयज्यो ॥ दिवः । चित् । अग्ने । महिना । पृथिव्याः । वच्यंतां । ते । वह्नयः । सप्तऽजिह्वाः ॥ द्यौः । च । त्वा । पृथिवी । यज्ञियासः । नि । होतारं । सादयंते । दमाय ॥ यदि । विशः । मानुषीः । देवऽयंतीः । प्रयस्वतीः । ईळते । शुक्रं । अर्चिः ॥ महान् । सधऽस्थे । ध्रुवः । आ । निऽसत्तः । अंतः । द्यावा । माहिनेइति । हर्यमाणः ॥ आस्क्रेइति । सपत्नीइतिसऽपत्नी । अजरेइति । अमृक्तेइति । सबर्दुघेइतिसबःऽदुघे । उरुऽगायस्य । धेनूइति ॥ व्रता । ते । अग्ने । महतः । महानि । तव । क्रत्वा । रोदसीइति । आ । ततंथ ॥ त्वं । दूतः । अभवः । जायमानः । त्वं । नेता । वृषभ । चर्षणीनां ॥ २६ ॥ ऋतस्य । वा । केशिना । योग्याभिः । घृतऽस्नुवा । रोहिता । धुरि । धिष्व ॥ अथ । आ । वह । देवान् । देव । विश्वान् । सुऽअध्वरा । कृणुहि । जातऽवेदः ॥ दिवः । चित् । आ । ते । रुचयंत । रोकाः । उषः । विऽभातीः । अनु । भासि । पूर्वीः ॥ अपः । यत् । अग्ने । उशधक् । वनेषु । होतुः । मंद्रस्य । पनयंत । देवाः ॥ उरौ । वा । ये । अंतरिक्षे । मदंति । दिवः । वा । ये । रोचने । संति । देवाः ॥ ऊमाः । वा । ये । सुऽहवासः । यजत्राः । आऽयेमिरे । रथ्यः । अग्ने । अश्वाः ॥ ० ॥ सऽरथं । याहि । अर्वाङ् ।

नानाऽरथं । वा । विऽभर्वः । हि । अश्वाः ॥ पत्नीऽवतः । त्रिंशतं । त्रीन् । च । देवान् । अनुऽस्वधं । आ । वह । मादयस्व ॥ सः । होता । यस्य । रोदसीइति । चित् । उर्वीइति । यज्ञंऽयज्ञं । अभि । वृधे । गृणीतः ॥ प्राचीइति । अध्वराऽइव । तस्थतुः । सुमेकेइतिसुऽमेके । ऋतवरीइत्यृतऽवरी । ऋतऽजातस्य । सत्येइति ॥ ० ॥ २७ ॥

॥ इति द्वितीयाष्टके अष्टमोध्यायः ॥ ८ ॥

॥ इति द्वितीयाष्टकः संपूर्णः ॥ २ ॥





॥ ॐ ॥




हरिः ॐ ॥ प्र । ये । आरुः । शितिऽपृष्ठस्य । धासेः । आ । मातरा । विविशुः । सप्त । वाणीः ॥ परिऽक्षिता । पितरा । सं । चरेतेइति । प्र । सर्स्रातेइति । दीर्घं । आयुः । प्रऽयक्षे ॥ दिवक्षसः । धेनवः । वृष्णः । अश्वाः । देवीः । आ । तस्थौ । मधुऽमत् । वहंतीः ॥ ऋतस्य । त्वा । सदसि । क्षेमऽयंतं । परि । एका । चरति । वर्तनिं । गौः ॥ आ । सीं । अरोहत् । सुऽयमाः । भवंतीः । पतिः । चिकित्वान् । रयिऽवित् । रयीणां ॥ प्र । नीलऽपृष्ठः । अतसस्य । धासेः । ताः । अवासयत् । पुरुधऽप्रतीकः ॥ महि । त्वाष्ट्रं । ऊर्जयंतीः । अजुर्यं । स्तभुऽयमानं । वहतः । वहंति ॥ वि । अंगेभिः । दिद्युतानः । सधऽस्थे । एकांऽइव । रोदसीइति । आ । विवेश ॥ जानंति । वृष्णः । अरुषस्य । शेवं । उत । ब्रध्नस्य । शासने । रणंति ॥ दिवऽरुचः । सुऽरुचः । रोचमानाः । इळा । येषां । गण्या । माहिना । गीः ॥ १ ॥ उतोइति । पितृऽभ्यां । प्रऽविदा । अनु । घोषं । महः । महत्ऽभ्यां । अनयंत । शूषं ॥ उक्षा । ह । यत्र । परि । धानं । अक्तोः । अनु । स्वं । धाम । जरितुः । ववक्ष ॥ अध्वर्युऽभिः । पंचऽभिः । सप्त । विप्राः । प्रियं । रक्षंते । निऽहितं । पदं । वेरितिवेः ॥ प्रांचः । मदंति । उक्ष-

णः । अजुर्याः । देवाः । देवानां । अनु । हि । व्रता । गुरितिगुः ॥ ० ॥ वृषऽयंते । महे । अत्याय । पूर्वीः । वृष्णे । चित्राय । रश्मयः । सुऽयामाः ॥ देव । होतः । मंद्रऽतरः । चिकित्वान् । महः । देवान् । रोदसीइति । आ । इह । वक्षि ॥ पृक्षऽप्रयजः । द्रविणः । सुऽवाचः । सुऽकेतवः । उषसः । रेवत् । ऊषुः ॥ उतोइति । चित् । अग्ने । महिना । पृथिव्याः । कृतं । चित् । एनः । सं । महे । दशस्य ॥ ० ॥ ॥ २ ॥ अंजंति । त्वां । अध्वरे । देवऽयंतः । वनस्पते । मधुना । दैव्येन ॥ यत् । ऊर्ध्वः । तिष्ठाः । द्रविणा । इह । दत्तात् । यत् । वा । क्षयः । मातुः । अस्याः । उपऽस्थे ॥ संऽइद्धस्य । श्रयमाणः । पुरस्तात् । ब्रह्म । वन्वानः । अजरं । सुऽवीरं ॥ आरे । अस्मत् । अमतिं । बाधमानः । उत् । श्रयस्व । महते । सौभगाय ॥ उत् । श्रयस्व । वनस्पते । वर्ष्मन् । पृथिव्याः । अधि ॥ सुऽमिती । मीयमानः । वर्चः । धाः । यज्ञऽवाहसे ॥ युवा । सुऽवासाः । परिऽवीतः । आ । अगात् । सः । ऊँइति । श्रेयान् । भवति । जायमानः ॥ तं । धीरासः । कवयः । उत् । नयंति । सुऽआध्यः । मनसा । देवऽयंतः ॥ जातः । जायते । सुदिनऽत्वे । अह्नां । सऽमर्ये । आ । विदथे । वर्धमानः ॥ पुनंति । धीराः । अपसः । मनीषा । देवऽयाः । विप्रः । उत् । इयर्ति । वाचं ॥ ३ ॥ यान् । वः । नरः । देवऽयंतः । निऽमिम्युः । वनस्पते । स्वऽधितिः । वा । ततक्ष ॥ ते । देवासः । स्वरवः । तस्थिऽवांसः । प्रजाऽवत् । अस्मेइति । दिधिषंतु । रत्नं ॥ ये । वृक्णासः । अधि । क्षमि । निऽमितासः । यतऽस्रुचः ॥ ते । नः । व्यंतु । वार्यं । देवऽत्रा । क्षेत्रऽसाधसः ॥ आदित्याः । रुद्राः । वसवः । सुऽनीथाः । द्यावाक्षामा । पृथिवी । अंतरिक्षं ॥ सऽजोषसः । यज्ञं । अवंतु । देवाः । ऊर्ध्वं । कृण्वंतु । अध्वरस्य । केतुं ॥ हंसाःऽइव । श्रेणिऽशः ।

यताना: । शुक्रा । वसाना: । स्वरवः । नः । आ । अगुः । उत्ऽनीयमाना: । कविऽभिः । पुरस्तात् । देवाः । देवानां । अपि । यंति । पाथः ॥ शृंगाणिऽइव । इत् । शृंगिणां । सं । ददृश्रे । चषालऽवंतः । स्वरवः । पृथिव्यां ॥ वाघत्ऽभिः । वा । विऽहवे । श्रोषमाणाः । अस्मान् । अवंतु । पृतनाज्येषु ॥ वनस्पते । शतऽवल्शः । वि । रोह । सहस्रऽवल्शाः । वि । वयं । रुहेम ॥ यं । त्वां । अयं । स्वऽधितिः । तेजमानः । प्रऽनिनाय । महते । सौभगाय ॥ ४ ॥ सखायः । त्वा । ववृमहे । देवं । मर्तासः । ऊतये ॥ अपां । नपातं । सुऽभगं । सुऽदीदितिं । सुऽप्रतूर्तिं । अनेहसं ॥ कायमानः । वना । त्वं । यत् । मातॄः । अजगन् । अपः ॥ न । तत् । ते । अग्ने । प्रऽमृषे । निऽवर्तनं । यत् । दूरे । सन् । इह । अभवः ॥ अति । तृष्टं । ववक्षिथ । अथ । एव । सुऽमनाः । असि ॥ प्रऽप्र । अन्ये । यंति । परि । अन्ये । आसते । येषां । सख्ये । असि । श्रितः ॥ ईयिऽवांसं । अति । स्रिधः । शश्वतीः । अति । सश्चतः ॥ अनु । ईं । अविंदन् । निऽचिरासः । अद्रुहः । अप्ऽसु । सिंहंऽइव । श्रितं ॥ ससृवांसंऽइव । त्मना । अग्निं । इत्था । तिरःऽहितं ॥ आ । एनं । नयत् । मातरिश्वा ॥ पराऽवतः । देवेभ्यः । मथितं । परि ॥ ५ ॥ तं । त्वा । मर्ताः । अगृभ्णत । देवेभ्यः । हव्यऽवाहन ॥ विश्वान् । यत् । यज्ञान् । अभिऽपासि । मानुष । तव । क्रत्वा । यविष्ठ्य ॥ तत् । भद्रं । तव । दंसना । पाकाय । चित् । छदयति ॥ त्वां । यत् । अग्ने । पशवः । संऽआसते । संऽइद्धं । अपिऽशर्वरे ॥ आ । जुहोत । सुऽअध्वरं । शीरं । पावकऽशोचिषं ॥ आशुं । दूतं । अजिरं । प्रत्नं । ईड्यं । श्रुष्टी । देवं । सपर्यत ॥ त्रीणि । शता । त्री । सहस्राणि । अग्निं । त्रिंशत् । च । देवाः । नव । च । असपर्यन् ॥ औक्षन् । घृतैः । अस्तृणन् । बर्हिः । अस्मै । आत् । इत् ।

होतारं । नि । असादयंत ॥ ६ ॥ त्वां । अग्ने । मनीषिणः । संऽराजं । चर्षणीनां ॥ देवं । मर्तासः । इंधते । सं । अध्वरे ॥ त्वां । यज्ञेषु । ऋत्विजं । अग्ने । होतारं । ईळते ॥ गोपाः । ऋतस्य । दीदिहि । स्वे । दमे ॥ सः । घ । यः । ते । ददाशति । संऽइधा । जातऽवेदसे । सः । अग्ने । धत्ते । सुऽवीर्यं । सः । पुष्यति ॥ सः । केतुः । अध्वराणां । अग्निः । देवेभिः । आ । गमत् । अंजानः । सप्त । होतृऽभिः । हविष्मते ॥ प्र । होत्रे । पूर्व्यं । वचः । अग्नये । भरत । बृहत् । विपां । ज्योतींषि । बिभ्रते । न । वेधसे ॥ ७ ॥ अग्निं । वर्धंतु । नः । गिरः । यतः । जायते । उक्थ्यः । महे । वाजाय । द्रविणाय । दर्शतः ॥ अग्ने । यजिष्ठः । अध्वरे ॥ ० ॥ होता । मंद्रः । वि । राजसि । अति । स्रिधः ॥ सः । नः । पावक । दीदिहि । द्युऽमत् । अस्मे इति । सुऽवीर्यं ॥ भव । स्तोतृऽभ्यः । अंतमः । स्वस्तये ॥ तं । त्वा । विप्राः । विपन्यवः । जागृऽवांसः । सं । इंधते ॥ हव्यऽवाहं । अमर्त्यं । सहःऽवृधं ॥ ८ ॥ अग्निः । होता । पुरःऽहितः । अध्वरस्य । विऽचर्षणिः ॥ वेद । यज्ञं । आनुषक् ॥ सः । हव्यऽवाट् । अमर्त्यः । उशिक् । दूतः । चनःऽहितः ॥ अग्निः । धिया । सं । ऋण्वति । अग्निः । धिया । सः । चेतति । केतुः । यज्ञस्य । पूर्व्यः । अर्थं । हि । अस्य । तरणिं । अग्निं । सूनुं । सनऽश्रुतं । सहसः । जातऽवेदसं । वह्निं । देवाः । अकृण्वत ॥ अदाभ्यः । पुरःऽएता । विशां । अग्निः । मानुषीणां ॥ तूर्णिः । रथः । सदा । नवः ॥ ९ ॥ सह्वान् । विश्वाः । अभिऽयुजः । क्रतुः । देवानां । अमृक्तः ॥ अग्निः । तुविश्रवःऽतमः । अभि । प्रयांसि । वाहसा । दाश्वान् । अश्नोति । मर्त्यः ॥ क्षयं । पावकऽशोचिषः ॥ परि । विश्वानि । सुऽधिता । अग्नेः । अश्याम । मन्मऽभिः ॥ विप्रासः । जातऽवेदसः ॥ अग्ने । विश्वानि । वार्या ।

वाजेषु । सनिषामहे ॥ त्वेइति । देवासः । आ । ईरिरे ॥ १० ॥
इंद्राग्नीइति । आ । गतं । सुतं । गीःऽभिः । नभः । वरेण्यं ॥ अस्य ।
पातं । धिया । इषिता । इंद्राग्नीइति । जरितुः । सचा । यज्ञः ।
जिगाति । चेतनः ॥ अया । पातं । इमं । सुतं । इंद्रं । अग्निं ।
कविऽछदा । यज्ञस्य । जूत्या । वृण । ता । सोमस्य । इह । तृंपतां ॥
तोशा । वृत्रऽहना । हुवे । सऽजित्वाना । अपराऽजिता ॥ इंद्राग्नी-
इति । वाजऽसातमा ॥ प्र । वां । अर्चंति । उक्थिनः । नीथऽविदः ।
जरितारः ॥ इंद्राग्नीइति । इषः । आ । वृणे ॥ ११ ॥ इंद्राग्नीइति ।
नवतिं । पुरः । दासऽपत्नीः । अधूनुतं ॥ साकं । एकेन । कर्मणा ॥
इंद्राग्नीइति । अपसः परि । उप । प्र । यंति । धीतयः ॥ ऋतस्य ।
पथ्याः । अनु ॥ इंद्राग्नीइति । तविषाणि । वां । सधऽस्थानि । प्रयां-
सि । च । युवोः । अप्ऽतूर्यं । हितं ॥ इंद्राग्नीइति । रोचना । दिवः ।
परि । वाजेषु । भूषथः ॥ तत् । वां । चेति । प्र वीर्यं ॥ १२ ॥ प्र ।
वः । देवाय । अग्नये । बर्हिष्ठं । अर्च । अस्मै ॥ गमत् । देवेभिः ।
आ । सः । नः । यजिष्ठः । बर्हिः । आ । सदत् ॥ ऋतऽवा । यस्य ।
रोदसीइति । दक्षं । सचंते । ऊतयः ॥ हविष्मंतः । तं । ईळते । तं ।
सनिष्यंतः । अवसे ॥ सः । यंता । विप्रः । एषां । सः । यज्ञानां । अथ ।
हि । सः ॥ अग्निं । तं । वः । दुवस्यत । दाता । यः । वनिता । मघं । सः ।
नः । शर्माणि । वीतये । अग्निः । यच्छतु । शंऽतमा । यतः । नः ।
प्रुष्णवत् । वसु । दिवि । क्षितिऽभ्यः । अप्ऽसु । आ । दीदिऽवांसं ।
अपूर्व्यं । वस्वीभिः । अस्य । धीतिऽभिः ऋक्वाणः । अग्निं । इंधते ।
होतारं । विश्पतिं । विशां । उत । नः । ब्रह्मन् । अविषः । उक्थेषु ।
देवऽहूतमः । शं । नः । शोच । मरुत्ऽवृधः । अग्ने । सहस्रऽसातमः ।
नु । नः । रास्व । सहस्रऽवत् । तोकऽवत् । पुष्टिऽमत् । वसु ।

द्युऽमत् । अग्ने । सुऽवीर्यं । वर्षिष्ठं । अनुपऽक्षितं ॥ १३ ॥ आ । होता । मंद्रः । विदथानि । अस्थात् । सत्यः । यज्वा । कविऽतमः । सः । वेधाः । विद्युत्ऽरथः । सहसः । पुत्रः । अग्निः । शोचिःऽकेशः । पृथिव्यां । पाजः । अश्रेत् । अयामि । ते । नमःऽउक्ति । जुषस्व । ऋतऽवः । तुभ्यं । चेतते । सहस्वः ॥ विद्वान् । आ । वक्षि । विदुषः । नि । सत्सि । मध्ये । आ । बर्हिः । ऊतये । यजत्र ॥ द्रवतां । ते । उषसा । वाजयंतीइति । अग्ने । वातस्य । पथ्याभिः । अछ ॥ यत् । सीं । अंजंति । पूर्व्यं । हविःऽभिः । आ । वंधुराऽइव । तस्थतुः । दुरोणे ॥ मित्रः । च । तुभ्यं । वरुणः । सहस्वः । अग्ने । विश्वे । मरुतः । सुम्नं । अर्चन् ॥ यत् । शोचिषा । सहसः । पुत्र । तिष्ठाः । अभि । क्षितीः । प्रथयन् । सूर्यः । नॄन् ॥ वयं । ते । अद्य । ररिम । हि । कामं । उत्तानऽहस्ताः । नमसा । उपऽसद्य ॥ यजिष्ठेन । मनसा । यक्षि । देवान् । अस्रेधता । मन्मना । विप्रः । अग्ने ॥ त्वत् । हि । पुत्र । सहसः । वि । पूर्वीः । देवस्य । यंति । ऊतयः । वि । वाजाः ॥ त्वं । देहि । सहस्रिणं । रयिं । नः । अद्रोघेण । वचसा । सत्यं । अग्ने ॥ तुभ्यं । दक्ष । कविक्रतोइतिकविऽक्रतो । यानि । इमा ॥ देव । मर्तासः । अध्वरे । अकर्म ॥ त्वं । विश्वस्य । सुऽरथस्य । बोधि । सर्वं । तत् । अग्ने । अमृत । स्वद । इह ॥ १४ ॥ वि । पाजसा । पृथुना । शोशुचानः । बाधस्व । द्विषः । रक्षसः । अमीवाः ॥ सुऽशर्मणः । बृहतः । शर्मणि । स्यां । अग्नेः । अहं । सुऽहवस्य । प्रऽनीतौ ॥ त्वं । नः । अस्याः । उषसः । विऽउष्टौ । त्वं । सूरे । उत्ऽइते । बोधि । गोपाः ॥ जन्मऽइव । नित्यं । तनयं । जुषस्व । स्तोमं । मे । अग्ने । तन्वा । सुऽजात । त्वं । नृऽचक्षाः । वृषभ । अनु । पूर्वीः । कृष्णासु । अग्ने । अरुषः । वि । भाहि ॥ वसोइति । नेषि ।

च । पर्षि । च । अति । अंहः । कृधि । नः । राये । उशिजः । यविष्ठ ॥ अषाळ्हः । अग्ने । वृषभः । दिदीहि । पुरः । विश्वाः । सौऽभगा । संऽजिगीवान् ॥ यज्ञस्य । नेता । प्रथमस्य । पायोः । जातऽवेदः । बृहतः । सुऽप्रनीते ॥ अछिद्रा । शर्म । जरितरिति । पुरूणि । देवान् । अच्छ । दीद्यानः । सुऽमेधाः ॥ रथः । न । सस्निः । अभि । वक्षि । वाजं । अग्ने । त्वं । रोदसीइति । नः । सुमेकेइतिसुऽमेके ॥ प्र । पीपय । वृषभ । जिन्व । वाजान् ॥ ० ॥ सुदोघेइतिसुऽदोघे ॥ देवेभिः । देव । सुऽरुचा । रुचानः । मा । नः । मर्तस्य । दुःऽमतिः । परि । स्थात् ॥ ० ॥ १५ ॥ अयं । अग्निः । सुऽवीर्यस्य । ईशे । महः । सौभगस्य ॥ रायः । ईशे । सुऽअपत्यस्य । गोऽमतः । ईशे । वृत्रऽहथानां ॥ इमं । नरः । मरुतः । सश्चत । वृधं । यस्मिन् । रायः । शेऽवृधासः ॥ अभि । ये । संति । पृतनासु । दुःऽध्यः । विश्वाहा । शत्रुं । आऽदभुः ॥ सः । त्वं । नः । रायः । शिशीहि । मीढ्वः । अग्ने । सुऽवीर्यस्य ॥ तुविऽद्युम्न । वर्षिष्ठस्य । प्रजाऽवतः । अनमीवस्य । शुष्मिणः ॥ चक्रिः । यः । विश्वा । भुवना । अभि । ससहिः । चक्रिः । देवेषु । आ । दुवः ॥ आ । देवेषु । यतते । आ । सुऽवीर्ये । आ । शंसे । उत । नृणां ॥ मा । नः । अग्ने । अमतये । मा । अवीरताये । रीरधः । मा । अगोतायै । सहसः । पुत्र । मा । निदे । अप । द्वेषांसि । आ । कृधि ॥ शग्धि । वाजस्य । सुऽभग । प्रजाऽवतः । अग्ने । बृहतः । अध्वरे ॥ सं । राया । भूयसा । सृज । मयःऽभुना । तुविऽद्युम्न । यशस्वता ॥ १६ ॥ संऽइध्यमानः । प्रथमा । अनु । धर्म । सं । अक्तुऽभिः । अज्यते । विश्वऽवारः ॥ शोचिःऽकेशः । घृतऽनिर्णिक् । पावकः । सुऽयज्ञः । अग्निः । यजथाय । देवान् ॥ यथा । अयजः । होत्रं । अग्ने । पृथिव्याः । यथा ।

दिवः । जातऽवेदः । चिकित्वान् ॥ एव । अनेन । हविषा । यक्षि । देवान् । मनुष्वत् । यज्ञं । प्र । तिर । इमं । अद्य ॥ त्रीणि । आयूंषि । तव । जातऽवेदः । तिस्रः । आऽजानीः । उषसः । ते । अग्ने ॥ ताभिः । देवानां । अवः । यक्षि । विद्वान् । अथ । भव । यजमानाय । शं । योः ॥ अग्निं । सुऽदीतिं । सुऽदृशं । गृणंतः । नमस्यामः । त्वा । ईड्यं । जातऽवेदः ॥ त्वां । दूतं । अरतिं । हव्यऽवाहं । देवाः । अकृण्वन् । अमृतस्य । नाभिं ॥ यः । त्वत् । होता । पूर्वः । अग्ने । यजीयान् । द्विता । च । सत्ता । स्वधया । च । शंऽभुः ॥ तस्य । अनु । धर्म । प्र । यज । चिकित्वः । अथ । नः । धाः । अध्वरं । देवऽवीतौ ॥ १७ ॥ भव । नः । अग्ने । सुऽमनाः । उपऽइतौ । सखाऽइव । सख्ये । पितराऽइव । साधुः ॥ पुरुऽद्रुहः । हि । क्षितयः । जनानां । प्रति । प्रतीचीः । दहतात् । अरातीः ॥ तपोइति । सु । अग्ने । अंतरान् । अमित्रान् । तप । शंसं । अररुषः । परस्य ॥ तपोइति । वसोइति । चिकितानः । अचित्तान् । वि । ते । तिष्ठतां । अजराः । अयासः ॥ इध्मेन । अग्ने । इच्छमानः । घृतेन । जुहोमि । हव्यं । तरसे । बलाय ॥ यावत् । ईशे । ब्रह्मणा । वंदमानः । इमां । धियं । शतऽसेयाय । देवीं ॥ उत् । शोचिषा । सहसः । पुत्र । स्तुतः । बृहत् । वयः । शशमानेषु । धेहि । रेवत् । अग्ने । विश्वामित्रेषु । शं । योः । मर्मृज्म । ते । तन्वं । भूरि । कृत्वः ॥ कृधि । रत्नं । सुऽसनितः । धनानां । सः । घ । इत् । अग्ने । भवसि । यत् । संऽइद्धः ॥ स्तोतुः । दुरोणे । सुऽभगस्य । रेवत् । सृप्रा । करस्ना । दधिष । वपूंषि ॥ १८ ॥ अग्निं । होतारं । प्र । वृणे । मियेधे । गृत्सं । कविं । विश्वऽविदं । अमूरं ॥ सः । नः । यक्षत् । देवऽताता । यजीयान् । राये । वाजाय । वनते । मघानि ॥ प्र । ते । अग्ने । हविष्मतीं ।

इयर्मि । अच्छ । सुऽद्युम्नां । रातिनीं । घृताचीं ॥ प्रऽदक्षिणित् । देवऽ-
तातिं । उराणः । सं । रातिऽभिः । वसुऽभिः । यज्ञं । अश्रेत् ॥ सः ।
तेजीयसा । मनसा । त्वाऽऊतः । उत । शिक्ष । सुऽअपत्यस्य ।
शिक्षोः ॥ अग्ने । रायः । नृऽतमस्य । प्रऽभूतौ । भूयाम । ते । सुऽ-
स्तुतयः । च । वस्वः ॥ भूरीणि । हि । त्वेइति । दधिरे । अनीका ।
अग्ने । देवस्य । यज्यवः । जनासः ॥ सः । आ । वह । देवऽतातिं । यविष्ठ ।
शर्धः । यत् । अद्य । दिव्यं । यजासि । यत् । त्वा । होतारं । अन-
जन् । मियेधे । निऽसादयंतः । यजथाय । देवाः ॥ सः । त्वं । नः ।
अग्ने । अविता । इह । बोधि । अधि । श्रवांसि । धेहि । नः ।
तनूषु ॥ १९ ॥ अग्निं । उषसं । अश्विना । दधिऽक्रां । विऽउष्टिषु ।
हवते । वह्निः । उक्थैः ॥ सुऽज्योतिषः । नः । शृण्वंतु । देवाः ।
सऽजोषसः । अध्वरं । वावशानाः ॥ अग्ने । त्री । ते । वाजिना । त्री ।
सधऽस्था । तिस्रः । ते । जिह्वाः । ऋतऽजात । पूर्वीः ॥ तिस्रः ।
ऊँइति । ते । तन्वः । देवऽवाताः । ताभिः । नः । पाहि । गिरः ।
अप्रऽयुछन् ॥ अग्ने । भूरीणि । तव । जातऽवेदः । देव । स्वधाऽवः ।
अमृतस्य । नाम । याः । च । मायाः । मायिनां । विश्वंऽइन्व । त्वे-
इति । पूर्वीः । संऽदधुः । पृष्टबंधोइतिपृष्टऽबंधो ॥ अग्निः । नेता ।
भगःऽइव । क्षितीनां । दैवीनां । देवः । ऋतुऽपाः । ऋतऽवा ॥ सः ।
वृत्रऽहा । सनयः । विश्वऽवेदाः । पर्षत् । विश्वा । अति । दुःऽइता ।
गृणंतं । दधिऽक्रां । अग्निं । उषसं । च । देवीं । बृहस्पतिं । सवि-
तारं । च । देवं ॥ अश्विना । मित्रावरुणा । भगं । च । वसून् ।
रुद्रान् । आदित्यान् । इह । हुवे ॥ २० ॥ इमं । नः । यज्ञं । अमृतेषु ।
धेहि । इमा । हव्या । जातऽवेदः । जुषस्व ॥ स्तोकानां । अग्ने ।
मेदसः । घृतस्य । होतरिति । प्र । अशान । प्रथमः । निऽसद्य ॥

घृतऽवंतः । पावक । ते । स्तोकाः । श्चोतंति । मेदसः ॥ स्वऽधर्मन् । देवऽवीतये । श्रेष्ठं । नः । धेहि । वार्यं ॥ तुभ्यं । स्तोकाः । घृतऽश्चुतः । अग्ने । विप्राय । संत्य ॥ ऋषिः । श्रेष्ठः । सं । इध्यसे । यज्ञस्य । प्रऽअविता । भव ॥ तुभ्यं । श्चोतंति । अध्रिगोइत्यध्रिऽगो । शचीऽवः । स्तोकासः । अग्ने । मेदसः । घृतस्य ॥ कविऽशस्तः । बृहता । भानुना । आ । अगाः । हव्या । जुषस्व । मेधिर ॥ ओजिष्ठं । ते । मध्यतः । मेदः । उत्ऽभृतं । प्र । ते । वयं । ददामहे ॥ श्चोतंति । ते । वसोइति । स्तोकाः । अधि । त्वचि । प्रति । तान् । देवऽशः । विहि ॥ २१ ॥ अयं । सः । अग्निः । यस्मिन् । सोमं । इंद्रः । सुतं । दधे । जठरे । वावशानः ॥ सहस्रिणं । वाजं । अत्यं । न । सप्तिं । ससऽवान् । सन् । स्तूयसे । जातऽवेदः ॥ अग्ने । यत् । ते । दिवि । वर्चः । पृथिव्यां । यत् । ओषधीषु । अप्ऽसु । आ । यजत्र ॥ येन । अंतरिक्षं । उरु । आऽततंथ । त्वेषः । सः । भानुः । अर्णवः । नृऽचक्षाः ॥ अग्ने । दिवः । अर्णं । अच्छ । जिगासि । अच्छ । देवान् । ऊचिषे । धिष्ण्याः । ये ॥ याः । रोचने । परस्तात् । सूर्यस्य । याः । च । अवस्तात् । उपऽतिष्ठंते । आपः ॥ पुरीष्यासः । अग्नयः । प्रवणेभिः । सऽजोषसः । जुषंतां । यज्ञं । अद्रुहः । अनमीवाः । इषः । महीः ॥ ० ॥ २२ ॥ निःऽमथितः । सुऽधितः । आ । सधऽस्थे । युवा । कविः । अध्वरस्य । प्रऽनेता ॥ जूर्यत्ऽसु । अग्निः । अजरः । वनेषु । अत्र । दधे । अमृतं । जातऽवेदाः ॥ अमंथिष्टां । भारता । रेवत् । अग्निं । देवऽश्रवाः । देवऽवातः । सुऽदक्षं । अग्ने । वि । पश्य । बृहता । अभि । राया । इषां । नः । नेता । भवतात् । अनु । द्यून् ॥ दश । क्षिपः । पूर्व्यं । सीं । अजीजनन् । सुऽजातं । मातृषु । प्रियं ॥ अग्निं । स्तुहि । दैवऽवातं । देवऽश्रवः । यः । जनानां । असत् । वशी ॥

नि । त्वा । दधे । वरे । आ । पृथिव्याः । इळायाः । पदे । सुदिनऽत्वे । अह्नां । दृषत्ऽवत्यां । मानुषे । आपयायां । सरस्वत्यां । रेवत् । अग्ने । दिदीहि ॥ ० ॥ २३ ॥ अग्ने । सहस्व । पृतनाः । अभिऽमातीः । अप । अस्य ॥ दुस्तरः । तरन् । अरातीः । वर्चः । धाः । यज्ञऽवाहसे ॥ अग्ने । इळा । सं । इध्यसे । वीतिऽहोत्रः । अमर्त्यः । जुषस्व । सु । नः । अध्वरं । अग्ने । द्युम्नेन । जागृवे । सहसः । सूनोइति । आऽहुत ॥ आ । इदं । बर्हिः । सदः । मम ॥ अग्ने । विश्वेभिः । अग्निऽभिः । देवेभिः । महय । गिरः ॥ यज्ञेषु । ये । ऊँइति । चायवः ॥ अग्ने । दाः । दाशुषे । रयिं । वीरऽवंतं । परीणसं ॥ शिशीहि । नः । सूनुऽमतः ॥ २४ ॥ अग्ने । दिवः । सूनुः । असि । प्रऽचेताः । तना । पृथिव्याः । उत । विश्वऽवेदाः ॥ ऋधक् । देवान् । इह । यज । चिकित्वः ॥ अग्निः । सनोति । वीर्याणि । विद्वान् । सनोति । वाजं । अमृताय । भूषत् ॥ सः । नः । देवान् । आ । इह । वह । पुरुक्षोइतिपुरुऽक्षो ॥ अग्निः । द्यावापृथिवीइति । विश्वजन्येइतिविश्वऽजन्ये । आ । भाति । देवीइति । अमृतेइति । अमूरः ॥ क्षयन् । वजैः । पुरुऽचंद्रः । नमःऽभिः ॥ अग्ने । इंद्रः । च । दाशुषः । दुरोणे । सुतऽवतः । यज्ञं । इह । उप । यातं ॥ अमर्धता । सोमऽपेयाय । देवा ॥ अग्ने । अपां । सं । इध्यसे । दुरोणे । नित्यः । सूनोइति । सहसः । जातऽवेदः ॥ सधऽस्थानि । महयमानः । ऊती ॥ २५ ॥ वैश्वानरं । मनसा । अग्निं । निऽचाय्य । हविष्मंतः । अनुऽसत्यं । स्वःऽविदं ॥ सुऽदानुं । देवं । रथिरं । वसुऽयवः । गीःऽभिः । रण्वं । कुशिकासः । हवामहे ॥ तं । शुभ्रं । अग्निं । अवसे । हवामहे । वैश्वानरं । मातरिश्वानं । उक्थ्यं ॥ बृहस्पतिं । मनुषः । देवऽतातये । विप्रं । श्रोतारं । अतिथिं । रघुऽस्यदं ॥ अश्वः । न । क्रंदन् । जनिऽभिः । सं । इध्यते ।

वैश्वानरः । कुशिकेभिः । युगेऽयुगे ॥ सः । नः । अग्निः । सुऽवीर्यं । सुऽअश्व्यं । दधातु । रत्नं । अमृतेषु । जागृविः ॥ प्र । यंतु । वाजाः । तविषीभिः । अग्नयः । शुभे । संऽमिश्लाः । पृषतीः । अयुक्षत ॥ बृहत्ऽउक्षः । मरुतः । विश्वऽवेदसः । प्र । वेपयंति । पर्वतान् । अदाभ्याः ॥ अग्निऽश्रियः । मरुतः । विश्वऽकृष्टयः । आ । त्वेषं । उग्रं । अवः । ईमहे । वयं ॥ ते । स्वानिनः । रुद्रियाः । वर्षऽनिर्निजः । सिंहाः । न । हेषऽक्रतवः । सुऽदानवः ॥ २६ ॥ व्रातंऽव्रातं । गणंऽगणं । सुशस्तिऽभिः । अग्नेः । भामं । मरुतां । ओजः । ईमहे ॥ पृषत्ऽअश्वासः । अनवभ्रऽराधसः । गंतारः । यज्ञं । विदथेषु । धीराः ॥ अग्निः । अस्मि । जन्मना । जातऽवेदाः । घृतं । मे । चक्षुः । अमृतं । मे । आसन् ॥ अर्कः । त्रिऽधातुः । रजसः । विऽमानः । अजस्रः । घर्मः । हविः । अस्मि । नाम ॥ त्रिऽभिः । पवित्रैः । अपुपोत् । हि । अर्कं । हृदा । मतिं । ज्योतिः । अनु । प्रऽजानन् ॥ वर्षिष्ठं । रत्नं । अकृत । स्वधाभिः । आत् । इत् । द्यावापृथिवीइति । परि । अपश्यत् ॥ शतऽधारं । उत्सं । अक्षीयमाणं । विपःऽचितं । पितरं । वक्त्वानां ॥ मेळिं । मदंतं । पित्रोः । उपऽस्थे । तं । रोदसीइति । पिपृतं । सत्यऽवाचं ॥ २७ ॥ प्र । वः । वाजाः । अभिऽद्यवः । हविष्मंतः । घृताच्या ॥ देवान् । जिगाति । सुम्नऽयुः ॥ ईळे । अग्निं । विपःऽचितं । गिरा । यज्ञस्य । साधनं ॥ श्रुष्टीऽवानं । धितऽवानं ॥ अग्ने । शकेम । ते । वयं । यमं । देवस्य । वाजिनः ॥ अति । द्वेषांसि । तरेम ॥ संऽइध्यमानः । अध्वरे । अग्निः । पावकः । ईड्यः ॥ शोचिःऽकेशः । तं । ईमहे ॥ पृथुऽपाजाः । अमर्त्यः । घृतऽनिर्निक् । सुऽआहुतः ॥ अग्निः । यज्ञस्य । हव्यऽवाट् ॥ २८ ॥ तं । सऽबाधः । यतऽस्रुचः । इत्था । धिया । यज्ञऽवंतः ॥ आ । चक्रुः । अग्निं । ऊतये ॥ होता । देवः । अमर्त्यः ।

पुरस्तात् । एति । मायया ॥ विदथानि । प्रऽचोदयन् ॥ वाजी । वाजेषु । धीयते । अध्वरेषु । प्र । नीयते ॥ विप्रः । यज्ञस्य । साधनः ॥ धिया । चक्रे । वरेण्यः । भूतानां । गर्भं । आ । दधे ॥ दक्षस्य । पितरं । तना । नि । त्वा । दधे । वरेण्यं । दक्षस्य । इळा । सहःऽकृत । अग्ने । सुऽदीतिं । उशिजं ॥ २९ ॥ अग्निं । यंतुरं । अप्ऽतुरं । ऋतस्य । योगे । वनुषः ॥ विप्राः । वाजैः । सं । इंधते ॥ ऊर्जः । नपातं । अध्वरे । दीदिऽवांसं । उप । द्यवि ॥ आग्निं । ईळे । कविऽक्रतुं । इळेन्यः । नमस्यः । तिरः । तमांसि । दर्शतः ॥ सं । अग्निः । इध्यते । वृषा ॥ वृषोइति । अग्निः । सं । इध्यते । अश्वः । न । देवऽवाहनः ॥ तं । हविष्मंतः । ईळते ॥ वृषणं । त्वा । वयं । वृषन् । वृषणः । सं । इधीमहि ॥ अग्ने । दीद्यतं । बृहत् ॥ ३० ॥ अग्ने । जुषस्व । नः । हविः । पुरोळाशं । जातऽवेदः । प्रातःऽसावे । धियावसोइतिधियाऽवसो ॥ पुरोळाः । अग्ने । पचतः । तुभ्यं । वा । घ । परिऽकृतः ॥ तं । जुषस्व । यविष्ठ्य ॥ अग्ने । वीहि । पुरोळाशं । आऽहुतं । तिरःऽअह्न्यं ॥ सहसः । सूनुः । असि । अध्वरे । हितः ॥ माध्यंदिने । सवने । जातऽवेदः । पुरोळाशं । इह । कवे । जुषस्व । अग्ने । यह्वस्य । तव । भागऽधेयं । न । प्र । मिनंति । विदथेषु । धीराः ॥ अग्ने । तृतीये । सवने । हि । कानिषः । पुरोळाशं । सहसः । सूनोइति । आऽहुतं ॥ अथ । देवेषु । अध्वरं । विपन्यया । धाः । रत्नऽवंतं । अमृतेषु । जागृविं ॥ अग्ने । वृधानः । आऽहुतिं । पुरोळाशं । जातऽवेदः ॥ जुषस्व । तिरःऽअह्न्यं ॥ ३१ ॥ अस्ति । इदं । अधिऽमंथनं । अस्ति । प्रऽजननं । कृतं । एतां । विश्पत्नीं । आ । भर । अग्निं । मंथाम । पूर्वऽथा ॥ अरण्योः । निऽहितः । जातऽवेदाः । गर्भःऽइव । सुऽधितः । गर्भिणीषु ॥ दिवेऽदिवे । ईड्यः । जागृवत्ऽ-

भिः । हविष्मत्ऽभिः । मनुष्येभिः । अग्निः ॥ उत्तानायां । अवं । भर । चिकित्वान् । सद्यः । प्रऽवीता । वृषणं । जजान ॥ अरुषऽस्तूपः । रुशत् । अस्य । पाजः । इळायाः । पुत्रः । वयुने । अजनिष्ट ॥ इळायाः । त्वा । पदे । वयं । नाभा । पृथिव्याः । अधि ॥ जातऽवेदः । नि । धीमहि । अग्ने । हव्याय । वोळ्हवे ॥ मंथत । नरः । कविं । अद्वयंतं । प्रऽचेतसं । अमृतं । सुऽप्रतीकं ॥ यज्ञस्य । केतुं । प्रथमं । पुरस्तात् । अग्निं । नरः । जनयत । सुऽशेवं ॥ ३२ ॥ यदि । मंथंति । बाहुऽभिः । वि । रोचते । अश्वः । न । वाजी । अरुषः । वनेषु । आ । चित्रः । न । यामन् । अश्विनोः । अनिऽवृतः । परि । वृणक्ति । अश्मनः । तृणा । दहन् ॥ जातः । अग्निः । रोचते । चेकितानः । वाजी । विप्रः । कविऽशस्तः । सुऽदानुः ॥ यं । देवासः । ईड्यं । विश्वऽविदं । हव्यऽवाहं । अदधुः । अध्वरेषु ॥ सीद । होतरिति । स्वे । ऊँइति । लोके । चिकित्वान् । सादय । यज्ञं । सुऽकृतस्य । योनौ ॥ देवऽअवीः । देवान् । हविषा । यजासि । अग्ने । बृहत् । यजमाने । वयः । धाः ॥ कृणोत । धूमं । वृषणं । सखायः । अस्रेधंतः । इतन । वाजं । अच्छ ॥ अयं । अग्निः । पृतनाषाट् । सुऽवीरः । येन । देवासः । असहंत । दस्यून् ॥ अयं । ते । योनिः । ऋत्वियः । यतः । जातः । अरोचथाः ॥ तं । जानन् । अग्ने । आ । सीद । अथ । नः । वर्धय । गिरः ॥ ३३ ॥ तनूऽनपात् । उच्यते । गर्भः । आसुरः । नराशंसः । भवति । यत् । विऽजायते ॥ मातरिश्वा । यत् । अमिमीत । मातरि । वातस्य । सर्गः । अभवत् । सरीमणि ॥ सुनिःऽमथा । निःऽमथितः । सुऽनिधा । निऽहितः । कविः ॥ अग्ने । सुऽअध्वरा । कृणु ॥ ॰ अजीजनन् । अमृतं । मर्त्यासः । अस्रेमाणं । तरणिं । वीळुऽजंभं । दश । स्वसारः । अग्रुवः । संऽईचीः । पुमांसं । जातं । अभि । सं ।

रभंते ॥ प्र । सप्तऽहोता । सनकात् । अरोचत । मातुः । उपऽस्थे । यत् । अशोचत् । ऊधनि ॥ न । नि । मिषति । सुऽरणः । दिवेऽदिवे । यत् । असुरस्य । जठरात् । अजायत ॥ अमित्रऽयुधः । मरुताँऽइव । प्रऽयाः । प्रथमऽजाः । ब्रह्मणः । विश्वं । इत् । विदुः ॥ द्युम्नऽवत् । ब्रह्म । कुशिकासः । आ । ईरिरे । एकःऽएकः । दमे । अग्निं । सं । ईधिरे ॥ यत् । अद्य । त्वा । प्रऽयति । यज्ञे । अस्मिन् । होतरिति । चिकित्वः । अवृणीमहि । इह ॥ ध्रुवं । अयाः । ध्रुवं । उत । अशमिष्ठाः । प्रऽजानन् । विद्वान् । उप । याहि । सोमं ॥ ३४ ॥

इति तृतीयाष्टके प्रथमोध्यायः ॥ १ ॥





## ॥ अथ द्वितीयोध्यायः ॥

हरिः ॐ ॥ इच्छंति । त्वा । सोम्यासः । सखायः । सुन्वंति । सोमं । दधति । प्रयांसि ॥ तितिक्षंते । अभिऽशस्तिं । जनानां । इंद्र । त्वत् । आ । कः । चन । हि । प्रऽकेतः ॥ न । ते । दूरे । परमा । चित् । रजांसि । आ । तु । प्र । याहि । हरिऽवः । हरिऽभ्यां ॥ स्थिराय । वृष्णे । सवना । कृता । इमा । युक्ताः । ग्रावाणः । संऽइधाने । अग्नौ ॥ इंद्रः । सुऽशिप्रः । मघऽवा । तरुत्रः । महाऽव्रातः । तुविऽकूर्मिः । ऋघावान् ॥ यत् । उग्रः । धाः । बाधितः । मर्त्येषु । क्व । त्या । ते । वृषभ । वीर्याणि ॥ त्वं । हि । स्म । च्यवयन् ।

अच्युतानि । एकः । वृत्रा । चरसि । जिघ्नमानः ॥ तव । द्यावापृथि-
वीइति । पर्वतासः । अनु । व्रताय । निमिताऽइव । तस्थुः ॥ उत
अभये । पुरुऽहूत । श्रवःऽभिः । एकः । दृळहं । अवदः । वृत्रऽहा
सन् ॥ इमेइति । चित् । इंद्र । रोदसीइति । अपारेइति । यत् । सं-
गृभ्णाः । मघऽवन् । काशिः । इत् । ते ॥ १ ॥ प्र । सु । ते । इंद्र
प्रऽवता । हरिऽभ्यां । प्र । ते । वज्रः । प्रऽमृणन् । एतु । शत्रून् ॥ जहि
प्रतीचः । अनूचः । पराचः । विश्वं । सत्यं । कृणुहि । विष्टं । अस्तु
यस्मै । धायुः । अदधाः । मर्त्याय । अभक्तं । चित् । भजते । गेह्यं
सः ॥ भद्रा । ते । इंद्र । सुऽमतिः । घृताची । सहस्रऽदाना । पुरुऽहूत
रातिः ॥ सहऽदानुं । पुरुऽहूत ॥ क्षियंतं । अहस्तं । इंद्र । सं । पि-
णक् । कुणारुं ॥ अभि । वृत्रं । वर्धमानं । पियारुं । अपादं । इंद्र
तवसा । जघंथ ॥ नि । सामनां । इषिरां । इंद्र । भूमिं । महीं
अपारां । सदने । ससत्थ ॥ अस्तभ्नात् । द्यां । वृषभः । अंतरिक्षं
अर्षंतु । आपः । त्वया । इह । प्रऽसूताः ॥ अलातृणः । वलः । इंद्र
व्रजः । गोः । पुरा । हंतोः । भयमानः । वि । आर ॥ सुऽगान्
पथः । अकृणोत् । निःऽअजे । गाः । प्र । आवन् । वाणीः । पुरु-
हूतं । धमंतीः ॥ २ ॥ एकः । द्वेइति । वसुमतीइतिवसुऽमती । सं-
चीइतिसंऽईची । इंद्रः । आ । पप्रौ । पृथिवीं । उत । द्यां ॥ उत
अंतरिक्षात् । अभि । नः । संऽईके । इषः । रथीः । सऽयुजः । शूर
वाजान् ॥ दिशः । सूर्यः । न । मिनाति । प्रऽदिष्टाः । दिवेऽदिवे
हर्यश्वऽप्रसूताः ॥ सं । यत् । आनट् । अध्वनः । आत् । इत् । अश्वैः
विऽमोचनं । कृणुते । तत् । तु । अस्य ॥ दिदृक्षंते । उषसः । यामन्
अक्तोः । विवस्वत्याः । महि । चित्रं । जनीकं ॥ विश्वे । जानंति
महिना । यत् । आ । अगात् । इंद्रस्य । कर्म । सुऽकृता । पुरूणि ।

महि । ज्योतिः । निऽहितं । वक्षणासु । आमा । पक्वं । चरति । बिभ्रती । गौः ॥ विश्वं । स्वाद्म । संऽभृतं । उस्रियायां । यत् । सीं । इंद्रः । अदधात् । भोजनाय । इंद्र । दृह्य । यामऽकोशाः । अभुवन् । यज्ञाय । शिक्ष । गृणते । सखिऽभ्यः ॥ दुःऽमायवः । दुःऽएवाः । मर्त्यासः । निषंगिणः । रिपवः । हंत्वासः ॥ ३ ॥ सं । घोषः । शृण्वे । अवमैः । अमित्रैः । जहि । नि । एषु । अशनिं । तपिष्ठां ॥ वृश्च । ईं । अधस्तात् । वि । रुज । सहस्व । जहि । रक्षः । मघऽवन् । रंधयस्व ॥ उत् । वृह । रक्षः । सहऽमूलं । इंद्र । वृश्च । मध्यं । प्रति । अग्रं । शृणीहि । आ । कीवतः । सललूकं । चकर्थ । ब्रह्मऽद्विषे । तपुषिं । हेतिं । अस्य ॥ स्वस्तये । वाजिऽभिः । च । प्रनेतरितिप्रऽनेतः । सं । यत् । महीः । इषः । आऽसत्सि । पूर्वीः ॥ रायः । वंतारः । बृहतः । स्याम । अस्मेइति । अस्तु । भगः । इंद्र । प्रजाऽवान् ॥ आ । नः । भर । भगं । इंद्र । द्युऽमंतं । नि । ते । देष्णस्य । धीमहि । प्रऽरेके ॥ ऊर्वःऽइव । पप्रथे । कामः । अस्मेइति । तं । आ । पृण । वसुऽपते । वसूनां ॥ इमं । कामं । मंदय । गोभिः । अश्वैः । चंद्रऽवता । राधसा । पप्रथः । च ॥ स्वःऽयवः । मतिऽभिः । तुभ्यं । विप्राः । इंद्राय । वाहः । कुशिकासः । अक्रन् ॥ आ । नः । गोत्रा । दर्दृहि । गोऽपते । गाः । सं । अस्मभ्यं । सनयः । यंतु । वाजाः ॥ दिवक्षाः । असि । वृषभ । सत्यऽशुष्मः । अस्मभ्यं । सु । मघऽवन् । बोधि । गोऽदाः ॥ शुनं । हुवेम । मघऽवानं । इंद्रं । अस्मिन् । भरे । नृऽतमं । वाजऽसातौ ॥ शृण्वंतं । उग्रं । ऊतये । समत्ऽसु । घ्नंतं । वृत्राणि । संऽजितं । धनानां ॥ ४ ॥ शासत् । वह्निः । दुहितुः । नप्त्यं । गात् । विद्वान् । ऋतस्य । दीधितिं । सपर्यन् ॥ पिता । यत्र । दुहितुः । सेकं । ऋंजन् । सं । शग्म्येन । मनसा । दधन्वे ॥ न ।

जामये । तान्वः । रिक्थं । अरैक् । चकार । गर्भं । सनितुः । निऽ
धानं ॥ यदि । मातरः । जनयंत । वह्निं । अन्यः । कर्ता । सुऽकृतोः ।
अन्यः । ऋंधन् ॥ अग्निः । जज्ञे । जुह्वा । रेजमानः । महः । पुत्रान् ।
अरुषस्य । प्रऽयक्षे ॥ महान् । गर्भः । महि । आ । जातं । एषां ।
मही । प्रऽवृत् । हरिऽअश्वस्य । यज्ञैः ॥ अभि । जैत्रीः । असचंत ।
स्पृधानं । महि । ज्योतिः । तमसः । निः । अजानन् ॥ तं । जानतीः ।
प्रति । उत् । आयन् । उषसः । पतिः । गवां । अभवत् । एकः ।
इंद्रः ॥ वीळौ । सतीः । अभि । धीराः । अतृंदन् । प्राचा । अहि-
न्वन् । मनसा । सप्त । विप्राः ॥ विश्वां । अविंदन् । पथ्यां । ऋतस्य ।
प्रऽजानन् । इत् । ता । नमसा । आ । विवेश ॥ ५ ॥ विदत् । यदि ।
सरमा । रुग्णं । अद्रेः । महि । पाथः । पूर्व्यं । सध्र्यक् । करितिकः ॥
अग्रं । नयत् । सुऽपदी । अक्षराणां । अच्छ । रवं । प्रथमा । जानती ।
गात् ॥ अगच्छत् । ऊँइति । विप्रऽतमः । सखिऽयन् । असूदयत् ।
सुऽकृते । गर्भं । अद्रिः ॥ ससान । मर्यः । युवऽभिः । मखस्यन् ।
अथ । अभवत् । अंगिराः । सद्यः । अर्चन् ॥ सतःऽसतः । प्रतिऽ
मानं । पुरःऽभूः । विश्वा । वेद । जनिम । हंति । शुष्णं ॥ प्र । नः ।
दिवः । पदऽवीः । गव्युः । अर्चन् । सखा । सखीन् । अमुंचत् ।
निः । अवद्यात् ॥ नि । गव्यता । मनसा । सेदुः । अर्कैः । कृण्वानासः ।
अमृतऽत्वाय । गातुं ॥ इदं । चित् । नु । सदनं । भूरि । एषां । येन ।
मासान् । असिसासन् । ऋतेन ॥ संऽपश्यमानाः । अमदन् । अभि ।
स्वं । पयः । प्रत्नस्य । रेतसः । दुघानाः ॥ वि । रोदसीइति । अत-
पत् । घोषः । एषां । जाते । निःऽस्थां । अदधुः । गोषु । वीरान् ॥ ६ ॥
सः । जतेभिः । वृत्रऽहा । सः । इत् । ऊँइति । हव्यैः । उत् ।
उस्रियाः । असृजत् । इंद्रः । अर्कैः ॥ उरुची । अस्मै । घृतऽवत् ।

भरंती । मधु । स्वाद्मं । दुदुहे । जेन्या । गौः ॥ पित्रे । चित् । चकुः । सदनं । सं । अस्मै । महि । त्विषिऽमत् । सुऽकृतः । वि । हि । ख्यन् ॥ विऽस्कभ्नंतः । स्कंभनेन । जनित्रीइति । आसीनाः । ऊर्ध्वं । रभसं । वि । मिन्वन् ॥ मही । यदि । धिषणा । शिश्नथे । धात् । सद्यःऽवृधं । विऽभ्वं । रोदस्योः ॥ गिरः । यस्मिन् । अनवद्याः । संऽईचीः । विश्वाः । इंद्राय । तविषीः । अनुत्ताः ॥ महि । आ । ते । सख्यं । वश्मि । शक्तीः । आ । वृत्रऽघ्ने । निऽयुतः । यंति । पूर्वीः ॥ महि । स्तोत्रं । अवः । आ । अगन्म । सूरेः । अस्माकं । सु । मघऽवन् । बोधि । गोपाः ॥ महि । क्षेत्रं । पुरु । चंद्रं । विविद्वान् । आत् । इत् । सखिऽभ्यः । चरथं । सं । ऐरत् ॥ इंद्रः । नृऽभिः । अजनत् । दीद्यानः । साकं । सूर्यं । उषसं । गातुं । अग्निं ॥ ७ ॥ अपः । चित् । एषः । विऽभ्वः । दमूनाः । प्र । सध्रीचीः । असृजत् । विश्वऽचंद्राः ॥ मध्वः । पुनानाः । कविऽभिः । पवित्रैः । द्युऽभिः । हिन्वंति । अक्तुऽभिः । धनुत्रीः ॥ अनु । कृष्णेइति । वसुधितीइतिवसुऽधिती । जिहातेइति । उभेइति । सूर्यस्य । मंहना । यजत्रेइति ॥ परि । यत् । ते । महिमानं । वृजध्यै । सखायः । इंद्र । काम्याः । ऋजिप्याः ॥ पतिः । भव । वृत्रऽहन् । सूनृतानां । गिरां । विश्वऽआयुः । वृषभः । वयःऽधाः ॥ ० ॥ तं । अंगिरस्वत् । नमसा । सपर्यन् । नव्यं । कृणोमि । सन्यसे । पुराऽजां ॥ दुहः । वि । याहि । बहुलाः । अदेवीः । स्वः१रितिस्वः । च । नः । मघऽवन् । सातये । धाः ॥ मिहः । पावकाः । प्रऽतताः । अभुवन् । स्वस्ति । नः । पिपृहि । पारं । आसां ॥ इंद्र । त्वं । रथिरः । पाहि । नः । रिषः । मक्षुऽमक्षु । वृणुहि । गोऽजितः । नः ॥ अदेदिष्ट । वृत्रऽहा । गोऽपतिः । गाः । अंतरिति । कृष्णान् । अरुषैः । धामऽभिः । गात् ॥ प्र । सूनृताः । दिशमानः ।

ऋतेन । दुरः । च । विश्वाः । अवृणोत् । अप । स्वाः ॥ ० ॥ ८ ॥
इंद्र । सोमं । सोमऽपते । पिब । इमं । माध्यंदिनं । सवनं । चारुं ।
यत् । ते ॥ प्रऽप्रुथ्यं । शिप्रेइति । मघऽवन् । ऋजीषिन् । विऽमुच्य ।
हरीइति । इह । मादयस्व ॥ गोऽआशिरं । मंथिनं । इंद्र । शुक्रं ।
पिब । सोमं । ररिम । ते । मदाय ॥ ब्रह्मऽकृता । मारुतेन । गणेन ।
सऽजोषाः । रुद्रैः । तृपत् । आ । वृषस्व ॥ ये । ते । शुष्मं । ये ।
तविषीं । अवर्धन् । अर्चंतः । इंद्र । मरुतः । ते । ओजः ॥ माध्यं-
दिने । सवने । वज्रऽहस्त । पिब । रुद्रेभिः । सऽगणः । सुऽशिप्र ॥
ते । इत् । नु । अस्य । मधुऽमत् । विविप्रे । इंद्रस्य । शर्धः । मरुतः ।
ये । आसन् ॥ येभिः । वृत्रस्य । इषितः । विवेद । अमर्मणः । मन्य-
मानस्य । मर्म ॥ मनुष्वत् । इंद्र । सवनं । जुषाणः । पिब । सोमं ।
शश्वते । वीर्याय ॥ सः । आ । ववृत्स्व । हरिऽअश्व । यज्ञैः । सर-
ण्युऽभिः । अपः । अर्णा । सिसर्षि ॥ ९ ॥ त्वं । अपः । यत् । ह ।
वृत्रं । जघन्वान् । अत्यान्ऽइव । प्र । असृजः । सर्तवै । आजौ ॥
शयानं । इंद्र । चरता । वधेन । वव्रिऽवांसं । परि । देवीः । अदेवं ॥
यजामः । इत् । नमसा । वृद्धं । इंद्रं । बृहंतं । ऋष्वं । अजरं ।
युवानं ॥ यस्य । प्रियेइति । ममतुः । यज्ञियस्य । न । रोदसीइति ।
महिमानं । ममातेइति ॥ इंद्रस्य । कर्म । सुऽकृता । पुरूणि । व्रतानि ।
देवाः । न । मिनंति । विश्वे ॥ दाधार । यः । पृथिवीं । द्यां । उत ।
इमां । जजान । सूर्यं । उषसं । सुऽदंसाः ॥ अद्रोघ । सत्यं । तव ।
तत् । महिऽत्वं । सद्यः । यत् । जातः । अपिबः । ह । सोमं ॥ न ।
द्यावः । इंद्र । तवसः । ते । ओजः । न । अहा । न । मासाः । शरदः ।
वरंत ॥ त्वं । सद्यः । अपिबः । जातः । इंद्र । मदाय । सोमं । परमे ।
विऽओमन् ॥ यत् । ह । द्यावापृथिवीइति । आ । अविवेशीः । अथ ।

अभवः । पूर्व्यः । कारुऽधायाः ॥ १० ॥ अहंन् । अहिं । परिऽशयांनं । अर्णः । ओजायमांनं । तुविऽजात । तव्यांन् ॥ न । ते । महिऽत्वं । अनुं । भूत् । अध । द्यौः । यत् । अन्यया । स्फिग्यां । क्षां । अवस्थाः ॥ यज्ञः । हि । ते । इंद्र । वर्धनः । भूत् । उत । प्रियः । सुतऽसोमः । मियेधः ॥ यज्ञेन । यज्ञं । अव । यज्ञियः । सन् । यज्ञः । ते । वज्रं । अहिऽहत्ये । आवत् ॥ यज्ञेन । इंद्रं । अवसा । आ । चक्रे । अर्वाक् । आ । एनं । सुम्नाय । नव्यसे । ववृत्यां ॥ यः । स्तोमेभिः । ववृधे । पूर्व्येभिः । यः । मध्यमेभिः । उत । नूतनेभिः ॥ विवेष । यत् । मा । धिषणा । जजान । स्तवै । पुरा । पार्यात् । इंद्रं । अह्नः ॥ अंहसः । यत्र । पीपरत् । यथा । नः । नावाऽइव । यांतं । उभये । हवंते ॥ आऽपूर्णः । अस्य । कलशः । स्वाहा । सेक्ताऽइव । कोशं । सिसिचे । पिबध्यै ॥ सं । ऊँइति । प्रियाः । आ । अववृत्रन् । मदाय । प्रऽदक्षिणित् । अभि । सोमासः । इंद्रं ॥ न । त्वा । गभीरः । पुरुऽहूत । सिंधुः । न । अद्रयः । परि । संतः । वरंत ॥ इत्था । सखिऽभ्यः । इषितः । यत् । इंद्र । आ । दृळहं । चित् । अरुजः । गव्यं । ऊर्वं ॥ ० ॥ ११ ॥ प्र । पर्वतानां । उशतीइति । उपऽस्थात् । अश्वेइवेत्यश्वेऽइव । विसितेइतिविऽसिते । हासमानेइति । गावाऽइव । शुभ्रेइति । मातरा । रिहाणेइति । विऽपाट् । शुतुद्री । पयसा । जवेतेइति । इंद्रेषितेइतींद्रऽइषिते । प्रऽसवं । भिक्षमाणेइति । अच्छ ॥ समुद्रं । रथ्याऽइव । याथः ॥ समाराणेइतिसंऽआराणे । ऊर्मिऽभिः । पिन्वमानेइति । अन्या । वां । अन्यां । अपि । एति । शुभ्रेइति । अच्छ । सिंधुं । मातृऽतमां । अयासं । विऽपाशं । उर्वीं । सुऽभगां । अगन्म ॥ वत्संऽइव । मातरा । संरिहाणेइतिसंऽरिहाणे । समानं । योनिं । अनु । संचरंतीइतिसंऽचरंती । एना । वयं । पयसा । पिन्वमानाः । अनु ।

योनिं । देवऽकृतं । चरंतीः ॥ न । वर्तवे । प्रऽसवः । सर्गऽतक्तः । किंऽयुः । विप्रः । नद्यः । जोहवीति । रमध्वं । मे । वचसे । सोम्याय । ऋतऽवरीः । उप । मुहूर्तं । एवैः ॥ प्र । सिंधुं । अच्छ । बृहती । मनीषा । अवस्युः । अह्वे । कुशिकस्य । सूनुः ॥ १२ ॥ इंद्रः । अस्मान् । अरदत् । वज्रऽबाहुः । अप । अहन् । वृत्रं । परिऽधिं । नदीनां ॥ देवः । अनयत् । सविता । सुऽपाणिः । तस्य । वयं । प्रऽसवे । यामः । उर्वीः ॥ प्रऽवाच्यं । शश्वधा । वीर्यं । तत् । इंद्रस्य । कर्म । यत् । अहिं । विऽवृश्चत् ॥ वि । वज्रेण । परिऽसदः । जघान । आयन् । आपः । अयनं । इच्छमानाः ॥ एतत् । वचः । जरितः । मा । अपि । मृष्ठाः । आ । यत् । ते । घोषान् । उत्ऽतरा । युगानि ॥ उक्थेषु । कारोइति । प्रति । नः । जुषस्व । मा । नः । नि । करिः तिंकः । पुरुषऽत्रा । नमः । ते ॥ ओइति । सु । स्वसारः । कारवे । शृणोत । ययौ । वः । दूरात् । अनसा । रथेन ॥ नि । सु । नमध्वं । भवत । सुऽपाराः । अधःऽअक्षाः । सिंधवः । स्रोत्याभिः ॥ आ । ते । कारोइति । शृणवाम । वचांसि । ययाथ । दूरात् । अनसा । रथेन ॥ नि । ते । नंसै ॥ पीप्यानाऽइव । योषा । मर्यायऽइव । कन्या । शश्वचै । तइतिते ॥ १३ ॥ यत् । अंग । त्वा । भरताः । संऽतरेयुः । गव्यन् । ग्रामः । इषितः । इंद्रऽजूतः ॥ अर्षात् । अह । प्रऽसवः । सर्गऽतक्तः । आ । वः । वृणे । सुऽमतिं । यज्ञियानां ॥ अतारिषुः । भरताः । गव्यवः । सं । अभक्त । विप्रः । सुऽमतिं । नदीनां ॥ प्र । पिन्वध्वं । इषयंतीः । सुऽराधाः । आ । वक्षणाः । पृणध्वं । यात । शीभं ॥ उत् । वः । ऊर्मिः । शम्याः । हंतु । आपः । योक्त्राणि । मुंचत ॥ मा । अदुःऽकृतौ । विऽएनसा । अघ्न्यौ । शूनं । आ । अरतां ॥ १४ ॥ इंद्रः । पुःऽभित् । आ । अतिरत् । दासं । अर्कैः ।

विदत्ऽवसुः । दयमानः । वि । शत्रून् ॥ ब्रह्मऽजूतः । तन्वा । ववृधानः । भूरिऽदात्रः । आ । अपृणत् । रोदसीइति । उभेइति ॥ महत्वं । ते । तविषस्य । प्र । जूतिं । इयर्मि । वाचं । अमृताय । भूषन् ॥ इंद्र । क्षितीनां । असि । मानुषीणां । विशां । दैवीनां । उत । पूर्वऽयावा ॥ इंद्रः । वृत्रं । अवृणोत् । शर्धऽनीतिः । प्र । मायिनां । अमिनात् । वर्पऽनीतिः ॥ अहन् । विऽअंसं । उशधक् । वनेषु । आविः । धेनाः । अकृणोत् । राम्याणां ॥ इंद्रः । स्वःऽसाः । जनयन् । अहानि । जिगाय । उशिक्ऽभिः । पृतनाः । अभिष्टिः ॥ प्र । अरोचयत् । मनवे । केतुं । अह्नां । आविंदत् । ज्योतिः । बृहते । रणाय ॥ इंद्रः । तुजः । बर्हणाः । आ । विवेश । नृऽवत् । दधानः । नर्या । पुरूणि ॥ अचेतयत् । धियः । इमाः । जरित्रे । प्र । इमं । वर्णं । अतिरत् । शुक्रं । आसां ॥ १५ ॥ महः । महानि । पनयंति । अस्य । इंद्रस्य । कर्म । सुऽकृता । पुरूणि ॥ वृजनेन । वृजिनान् । सं । पिपेष । मायाभिः । दस्यून् । अभिभूतिऽओजाः ॥ युधा । इंद्रः । मह्ना । वरिवः । चकार । देवेभ्यः । सत्ऽपतिः । चर्षणिऽप्राः ॥ विवस्वतः । सदने । अस्य । तानि । विप्राः । उक्थेभिः । कवयः । गृणंति ॥ सत्राऽसहं । वरेण्यं । सहःऽदां । ससऽवांसं । स्वः । अपः । च । देवीः ॥ ससान । यः । पृथिवीं । द्यां । उत । इमां । इंद्रं । मदंति । अनु । धीऽरणासः ॥ ससान । अत्यान् । उत । सूर्यं । ससान । इंद्रः । ससान । पुरुऽभोजसं । गां ॥ हिरण्ययं । उत । भोगं । ससान । हत्वी । दस्यून् । प्र । आर्यं । वर्णं । आवत् ॥ इंद्रः । ओषधीः । असनोत् । आहनि । वनस्पतीन् । असनोत् । अंतरिक्षं ॥ बिभेद । वलं । नुनुदे । विऽवाचः । अथ । अभवत् । दमिता । अभिऽक्रतूनां ॥ ० ॥ १६ ॥ तिष्ठ । हरीइति । रथे । आ । युज्यमाना । याहि । वायुः । न । निऽयुतः । नः । अच्छ ।

पिबासि । अंधः । अभिऽसृष्टः । अस्मेइति । इंद्र । स्वाहा । ररिम । ते । मदाय । उप । अजिरा । पुरुऽहूताय । सप्तीइति । हरीइति । रथस्य । धूःऽसु । आ । युनज्मि ॥ द्रवत् । यथा । संऽभृतं । विश्वतः । चित् । उप । इमं । यज्ञं । आ । वहातः । इंद्रं ॥ उपोइति । नयस्व । वृषणा । तपुःऽपा । उत । ईं । अव । त्वं । वृषभ । स्वधाऽवः ॥ ग्रसेतां । अश्वा । वि । मुच । इह । शोणा । दिवेऽदिवे । सऽदृशीः । अद्धि । धानाः ॥ ब्राह्मणा । ते । ब्रह्मऽयुजा । युनज्मि । हरीइति । सखाया । सधऽमादे । आशूइति ॥ स्थिरं । रथं । सुऽखं । इंद्र । अधिऽतिष्ठन् ॥ ० ॥ मा । ते । हरीइति । वृषणा । वीतऽपृष्ठा ॥ ० ॥ अतिऽआयाहि । शश्वतः । वयं । ते । अरं । सुतेभिः । कृणवाम । सोमैः ॥ १७ ॥ तव । अयं । सोमः । त्वं । आ । इहि । अर्वाङ् । शश्वत्ऽतमं । सुऽमनाः । अस्य । पाहि ॥ अस्मिन् । यज्ञे । बर्हिषि । आ । निऽसद्य । दधिष्व । इमं । जठरे । इंदुं । इंद्र ॥ स्तीर्णं । ते । बर्हिः । सुतः । इंद्र । सोमः । कृताः । धानाः । अत्तवे । ते । हरिऽभ्यां ॥ तत्ऽओकसे । पुरुऽशाकाय । वृष्णे । मरुत्वते । तुभ्यं । राता । हवींषि ॥ इमं । नरः । पर्वताः । तुभ्यं । आपः । सं । इंद्र । गोभिः । मधुऽमंतं । अक्रन् ॥ तस्य । आऽगत्य । सुऽमनाः । ऋष्व । पाहि । प्रऽजानन् । विद्वान् । पथ्याः । अनु । स्वाः ॥ यान् । आ । अभजः । मरुतः । इंद्र । सोमे । ये । त्वां । अवर्धन् । अभवन् । गणः । ते । तेभिः । एतं । सऽजोषाः । वावशानः । अग्नेः । पिब । जिह्वया । सोमं । इंद्र ॥ इंद्र । पिब । स्वधया । चित् । सुतस्य । अग्नेः । वा । पाहि । जिह्वया । यजत्र ॥ अध्वर्योः । वा । प्रऽयतं । शक्र । हस्तात् । होतुः । वा । यज्ञं । हविषः । जुषस्व ॥ ० ॥ १८ ॥ इमां । ऊँइति । सु । प्रऽभृतिं । सातये । धाः । शश्वत्ऽशश्वत् । ऊतिऽभिः । यादमानः ॥

सुतेऽसुते । ववृधे । वर्धनेभिः । यः । कर्मऽभिः । महत्ऽभिः । सुऽश्रुतः । भूत् ॥ इंद्राय । सोमाः । प्रऽदिवः । विदानाः । ऋभुः । येभिः । वृषऽपर्वा । विऽहायाः ॥ प्रऽयम्यमानान् । प्रति । सु । गृभाय । इंद्र । पिब । वृषऽधूतस्य । वृष्णः ॥ पिब । वर्धस्व । तव । घ । सुतासः । इंद्र । सोमासः । प्रथमाः । उत । इमे ॥ यथा । अपिबः । पूर्व्यान् । इंद्र । सोमान् । एव । पाहि । पन्यः । अद्य । नवीयान् ॥ महान् । अमत्रः । वृजने । विऽरप्शी । उग्रं । शवः । पत्यते । धृष्णु । ओजः ॥ न । अह । विव्याच । पृथिवी । चन । एनं । यत् । सोमासः । हरिऽअश्वं । अमंदन् ॥ महान् । उग्रः । ववृधे । वीर्याय । संऽआचक्रे । वृषभः । काव्येन ॥ इंद्रः । भगः । वाजऽदाः । अस्य । गावः । प्र । जायंते । दक्षिणाः । अस्य । पूर्वीः ॥ १९ ॥ प्र । यत् । सिंधवः । प्रऽसवं । यथा । आयन् । आपः । समुद्रं । रथ्याऽइव । जग्मुः ॥ अतः । चित् । इंद्रः । सदसः । वरीयान् । यत् । ईं । सोमः । पृणति । दुग्धः । अंशुः ॥ समुद्रेण । सिंधवः । यादमानाः । इंद्राय । सोमं । सुऽसुतं । भरंतः ॥ अंशुं । दुहंति । हस्तिनः । भरित्रैः । मध्वः । पुनंति । धारया । पवित्रैः ॥ ह्रदाःऽइव । कुक्षयः । सोमऽधानाः । सं । ईमिति । विव्याच । सवना । पुरूणि ॥ अन्ना । यत् । इंद्रः । प्रथमा । वि । आश । वृत्रं । जघन्वान् । अवृणीत । सोमं ॥ आ । तु । भर । माकिः । एतत् । परि । स्थात् । विद्म । हि । त्वा । वसुऽपतिं । वसूनां ॥ इंद्र । यत् । ते । माहिनं । दत्रं । अस्ति । अस्मभ्यं । तत् । हरिऽअश्व । प्र । यंधि ॥ असेइति । प्र । यंधि । मघऽवन् । ऋजीषिन् । इंद्र । रायः । विश्वऽवारस्य । भूरेः ॥ अस्मेइति । शतं । शरदः । जीवसे । धाः । अस्मेइति । वीरान् । शश्वतः । इंद्र । शिप्रिन् ॥ ० ॥ २० ॥ वात्रैऽ-

हत्याय । शवसे । पृतनाऽसह्याय । च ॥ इंद्र । त्वा । आ । वर्तयामसि ॥
अर्वाचीनं । सु । ते । मनः । उत । चक्षुः । शतक्रतोइतिशतऽक्रतो ॥
इंद्र । कृण्वंतु । वाघतः ॥ नामानि । ते । शतक्रतोइतिशतऽक्रतो ।
विश्वाभिः । गीःऽभिः । ईमहे ॥ इंद्र । अभिमातिऽसह्ये । पुरुऽस्तुतस्य ।
धामऽभिः । शतेन । महयामसि । इंद्रस्य । चर्षणिऽधृतः ॥ इंद्रं ।
वृत्राय । हंतवे । पुरुऽहूतं । उप । ब्रुवे ॥ भरेषु । वाजऽसातये ॥ २१ ॥
वाजेषु । ससहिः । भव । त्वां । ईमहे । शतक्रतोइतिशतऽक्रतो ॥
इंद्र । वृत्राय । हंतवे ॥ द्युम्नेषु । पृतनाज्ये । पृत्सुतूर्षु । श्रवःऽसु ।
च ॥ इंद्र । साक्ष्व । अभिऽमातिषु ॥ शुष्मिन्ऽतमं । नः । ऊतये ।
द्युम्निनं । पाहि । जागृविं ॥ इंद्र । सोमं । शतक्रतोइतिशतऽक्रतो ।
इंद्रियाणि । शतक्रतोइतिशतऽक्रतो । या । ते । जनेषु । पंचऽसु ॥
इंद्र । तानि । ते । आ । वृणे ॥ अगन् । इंद्र । श्रवः । बृहत् । द्युम्नं ।
दधिष्व । दुस्तरं ॥ उत् । ते । शुष्मं । तिरामसि ॥ अर्वाऽवतः । नः ।
आ । गहि । अथोइति । शक्र । पराऽवतः ॥ ऊँइति । लोकः । यः ।
ते । अद्रिऽवः । इंद्र । इह । ततः । आ । गहि ॥ २२ ॥ अभि । तष्टाऽ
इव । दीधय । मनीषां । अत्यः । न । वाजी । सुऽधुरः । जिह्वानः ॥
अभि । प्रियाणि । मर्मृशत् । पराणि । कवीन् । इच्छामि । संऽदृशे ।
सुऽमेधाः ॥ इना । उत । पृच्छ । जनिम । कवीनां । मनःऽधृतः ।
सुऽकृतः । तक्षत । द्यां ॥ इमाः । ऊँइति । ते । प्रऽन्यः । वर्धमानाः ।
मनःऽवाताः । अध । नु । धर्मणि । ग्मन् ॥ नि । सीं । इत् । अत्र । गुह्या ।
दधानाः । उत । क्षत्राय । रोदसीइति । सं । अंजन् । सं । मात्राभिः ।
ममिरे । येमुः । उर्वीइति । अंतः । महीइति । समृतेइतिसंऽऋते ।
धायसे । धुरितिधुः ॥ आऽतिष्ठंतं । परि । विश्वे । अभूषन् । श्रियः ।
वसानः । चरति । स्वऽरोचिः ॥ महत् । तत् । वृष्णः । असुरस्य ।

नाम । आ । विश्वऽरूपः । अमृतानि । तस्थौ ॥ असूत । पूर्वीः । वृषभः । ज्यायान् । इमाः । अस्य । शुरुधः । संति । पूर्वीः ॥ दिवः । नपाता । विदथस्य । धीभिः । क्षत्रं । राजाना । प्रऽदिवः । दधाथेइति ॥ २३ ॥ त्रीणि । राजाना । विदथे । पुरूणि । परि । विश्वानि । भूषथः । सदांसि ॥ अपश्यं । अत्र । मनसा । जगन्वान् । व्रते । गंधर्वान् । अपि । वायुऽकेशान् । तत् । इत् । नु । अस्य । वृषभस्य । धेनोः । आ । नामऽभिः । ममिरे । सक्म्यं । गोः ॥ अन्यत्ऽअन्यत् । असुर्यं । वसानाः । नि । मायिनः । ममिरे । रूपं । अस्मिन् ॥ ० ॥ सवितुः । नकिः । मे । हिरण्ययीं । अमतिं । यां । आशिश्रेत् ॥ आ । सुऽस्तुती । रोदसीइति । विश्वमिन्वेइतिविश्वंऽइन्वे । अपिऽइव । योषा । जनिमानि । वव्रे ॥ युवं । प्रत्नस्य । साधथः । महः । यत् । दैवी । स्वस्तिः । परि । नः । स्यातं ॥ गोपाजिह्वस्य । तस्थुषः । विऽरूपा । विश्वे । पश्यंति । मायिनः । कृतानि ॥ ० ॥ २४ ॥ इंद्रं । मतिः । हृदः । आ । वच्यमाना । अच्छ । पतिं । स्तोमऽतष्टा । जिगाति ॥ या । जागृविः । विदथे । शस्यमाना । इंद्र । यत् । ते । जायते । विद्धि । तस्य ॥ दिवः । चित् । आ । पूर्व्या । जायमाना । वि । जागृविः । विदथे । शस्यमाना ॥ भद्रा । वस्त्राणि । अर्जुना । वसाना । सा । इयं । अस्मेइति । सनऽजा । पित्र्या । धीः ॥ यमा । चित् । अत्र । यमऽसूः । असूत । जिह्वायाः । अग्रं । पतत् । आ । हि । अस्थात् ॥ वपूंषि । जाता । मिथुना । सचेतेइति । तमःऽहना । तपुषः । बुध्ने । आऽइता ॥ नकिः । एषां । निंदिता । मर्त्येषु । ये । अस्माकं । पितरः । गोषु । योधाः ॥ इंद्रः । एषां । दृंहिता । माहिनऽवान् । उत् । गोत्राणि । ससृजे । दंसनाऽवान् । सखा । ह । यत्र । सखिऽभिः । नवऽग्वैः । अभिऽज्ञु । आ । सत्वऽभिः । गाः । अनुऽग्मन् । सत्यं ।

तत् । इंद्रः । दशऽभिः । दशऽग्वैः । सूर्यं । विवेद । तमसि । क्षियंतं ॥ २५ ॥ इंद्रः । मधु । संऽभृतं । उस्रियायां । पत्ऽवत् । विवेद । शफऽवत् । नमे । गोः ॥ ० ॥ हस्ते । दधे । दक्षिणे । दक्षिणऽवात् ॥ ज्योतिः । वृणीत । तमसः । विऽजानन् । आरे । स्याम । दुःऽइतात् । अभीके ॥ इमाः । गिरः । सोमऽपाः । सोमऽवृद्ध । जुषस्व । इंद्र । पुरुऽतमस्य । कारोः ॥ ज्योतिः । यज्ञाय । रोदसीइति । अनु । स्यात् । आरे । स्याम । दुःऽइतस्य । भूरेः ॥ भूरि । चित् । हि । तुजतः । मर्त्यस्य । सुऽपारासः । वसवः । बर्हणाऽवत् ॥ ० ॥ २६ ॥

इति तृतीयाष्टके द्वितीयोध्यायः ॥ २ ॥





## ॥ अथ तृतीयोध्यायः ॥

हरिः ॐ ॥ इंद्रं । त्वा । वृषभं । वयं । सुते । सोमे । हवामहे ॥ सः । पाहि । मध्वः । अंधसः ॥ इंद्र । क्रतुऽविदं । सुतं । सोमं । हर्य । पुरुऽस्तुत ॥ पिब । आ । वृषस्व । ततृपिं ॥ इंद्र । प्र । नः । धितऽवानं । यज्ञं । विश्वेभिः । देवेभिः । तिर । स्तवान । विश्वपते ॥ इंद्र । सोमाः । सुताः । इमे । तव । प्र । यंति । सत्ऽपते ॥ क्षयं । चंद्रासः । इंदवः ॥ दधिष्व । जठरे । सुतं । सोमं । इंद्र । वरेण्यं ॥ तव । द्युक्षासः । इंदवः ॥ १ ॥ गिर्वणः । पाहि ।

नः । सुतं । मधोः । धाराभिः । अज्यसे ॥ इंद्र । त्वाऽदातं । इत् । यशः ॥ अभि । द्युम्नानि । वनिनः । इंद्रं । सचंते । अक्षिता ॥ पीत्वी । सोमस्य । ववृधे ॥ ० ॥ पराऽवतः । च । वृत्रऽहन् ॥ इमाः । जुषस्व । नः । गिरः ॥ यत् । अंतरा । पराऽवतं । अर्वाऽवतं । च । हूयसे ॥ ० ॥ ॥ २ ॥ ० ॥ मध्यक् । हुवानः । सोमऽपीतये ॥ हरिऽभ्यां । याहि । अद्रिऽवः ॥ सत्तः । होता । नः । ऋत्वियः । तिस्तिरे । बर्हिः । आनुषक् ॥ अयुंजन् । प्रातः । अद्रयः ॥ इमा । ब्रह्म । ब्रह्मऽवाहः । क्रियंते । आ । बर्हिः । सीद ॥ वीहि । शूर । पुरोळाशं ॥ रराधि । सवनेषु । नः । एषु । स्तोमेषु । वृत्रऽहन् ॥ उक्थेषु । इंद्र । गिर्वणः ॥ मतयः । सोमऽपां । उरुं । रिहंति । शवसः । पतिं ॥ इंद्रं । वत्सं । न । मातरः ॥ ३ ॥ सः । मंदस्व । हि । अंधसः । राधसे । तन्वा । महे ॥ न । स्तोतारं । निदे । करः ॥ वयं । इंद्र । त्वाऽयवः । हविष्मंतः । जरामहे ॥ उत । त्वं । अस्मऽयुः । वसोइति । मा । आरे । अस्मत् । वि । मुमुचः । हरिऽप्रिय । अर्वाङ् । याहि ॥ इंद्र । स्वधाऽवः । मत्स्व । इह ॥ अर्वांचं । त्वा । सुऽखे । रथे । वहतां । इंद्र । केशिना ॥ घृतस्नूइतिघृतऽस्नू । बर्हिः । आऽसदे ॥ ४ ॥ ० ॥ सोमं । इंद्र । गोऽआशिरं ॥ हरिऽभ्यां । यः । ते । अस्मेऽयुः ॥ तं । इंद्र । मदं । आ । गहि । बर्हिःऽस्थां । ग्रावऽभिः । सुतं ॥ कुवित् । नु । अस्य । तृष्णवः ॥ इंद्रं । इत्था । गिरः । मम । अच्छ । अगुः । इषिताः । इतः ॥ आऽवृते । सोमऽपीतये ॥ इंद्रं । सोमस्य । पीतये । स्तोमैः । इह । हवामहे ॥ उक्थेभिः । कुवित् । आऽगमत् ॥ ० ॥ तान् । दधिष्व । शतक्रतोइतिशतऽक्रतो । जठरे । वाजिनीवसोइतिवाजिनीऽवसो ॥ ५ ॥ विद्म । हि । त्वा । धनंऽजयं । वाजेषु । दधृषं । कवे ॥ अध । ते । सुम्नं । ईमहे ॥ इमं । इंद्र । गोऽआशिरं । यवऽआशिरं । च । नः ।

पिब ॥ आऽगत्य । वृषऽभिः । सुतं ॥ तुभ्यं । इत् । इंद्र । स्वे ।
ओक्ये । सोमं । चोदामि । पीतये ॥ एषः । रंतु । ते । हृदि ॥ त्वां ।
सुतस्य । पीतये । प्रत्नं । इंद्र । हवामहे ॥ कुशिकासः । अवस्यवः ॥ ६ ॥
आ । याहि । अर्वाङ् । उप । वंधुरेऽस्थाः । तव । इत् । अनु । प्रऽ
दिवः । सोमऽपेयं ॥ प्रिया । सखाया । वि । मुच । उप । बर्हिः ।
त्वां । इमे । हव्यऽवाहः । हवंते ॥ आ । याहि । पूर्वीः । अति ।
चर्षणीः । आ । अर्यः । आऽशिषः । उप । नः । हरिऽभ्यां ॥ इमाः ।
हि । त्वा । मतयः । स्तोमऽतष्टाः । इंद्र । हवंते । सख्यं । जुषाणाः ॥
आ । नः । यज्ञं । नमःऽवृधं । सऽजोषाः । इंद्र । देव । हरिऽभिः ।
याहि । तूयं । अहं । हि । त्वा । मतिऽभिः । जोहवीमि । घृतऽप्रयाः ।
सधऽमादे । मधूनां ॥ आ । च । त्वां । एता । वृषणा । वहातः । हरीइति ।
सखाया । सुऽधुरा । सुऽअंगा ॥ धानाऽवत् । इंद्रः । सवनं । जुषाणः ।
सखा । सख्युः । शृणवत् । वंदनानि ॥ कुवित् । मा । गोपां । करसे ।
जनस्य । कुवित् । राजानं । मघऽवन् । ऋजीषिन् ॥ कुवित् । मा ।
ऋषिं । पपिऽवांसं । सुतस्य । कुवित् । मे । वस्वः । अमृतस्य ।
शिक्षाः ॥ आ । त्वा । बृहंतः । हरयः । युजानाः । अर्वाक् । इंद्र ।
सधऽमादः । वहंतु ॥ प्र । ये । द्विता । दिवः । ऋजंति । आताः ।
सुऽसंमृष्टासः । वृषभस्य । मूराः ॥ इंद्र । पिब । वृषऽधूतस्य । वृष्णः ।
आ । यं । ते । श्येनः । उशते । जभार ॥ यस्य । मदे । च्यवयसि ।
प्र । कृष्टीः । यस्य । मदे । अप । गोत्रा । ववर्थ ॥ ० ॥ ७ ॥ अयं ।
ते । अस्तु । हर्यतः । सोमः । आ । हरिऽभिः । सुतः ॥ जुषाणः ।
इंद्र । हरिऽभिः । नः । आ । गहि । आ । तिष्ठ । हरितं । रथं ॥
हर्यन् । उषसं । अर्चयः । सूर्यं । हर्यन् । अरोचयः ॥ विद्वान् । चिकि-
त्वान् । हरिऽअश्व । वर्धसे । इंद्र । विश्वाः । अभि । श्रियः ॥ द्यां ।

इंद्रः । हरिऽधायसं । पृथिवीं । हरिऽवर्पसं ॥ अधारयत् । हरितोः । भूरि । भोजनं । ययोः । अंतः । हरिः । चरत् ॥ जज्ञानः । हरितः । वृषा । विश्वं । आ । भाति । रोचनं ॥ हरिऽअश्वः । हरितं । धत्ते । आयुधं । आ । वज्रं । बाह्वोः । हरिं ॥ इंद्रः । हर्यंतं । अर्जुनं । वज्रं । शुक्रैः । अभिऽवृतं ॥ अप । अवृणोत् । हरिऽभिः । अद्रिऽभिः । सुतं । उत् । गाः । हरिऽभिः । आजत ॥ ८ ॥ आ । मंद्रैः । इंद्र । हरिऽभिः । याहि । मयूररोमऽभिः ॥ मा । त्वा । के । चित् । नि । यमन् । विं । न । पाशिनः । अति । धन्वऽइव । तान् । इहि ॥ वृत्रऽखादः । वलंऽरुजः । पुरां । दर्मः । अपां । अजः ॥ स्थाता । रथस्य । हर्योः । अभिऽस्वरे । इंद्रः । दृळहा । चित् । आऽरुजः ॥ गंभीरान् । उदधीनऽइव । क्रतुं । पुष्यसि । गाःऽइव ॥ प्र । सुऽगोपाः । यवसं । धेनवः । यथा । हृदं । कुल्याःऽइव । आशत । आ । नः । तुजं । रयिं । भर । अंशं । न । प्रतिऽजानते ॥ वृक्षं । पक्वं । फलं । अंकीऽइव । धूनुहि । इंद्र । संऽपारणं । वसु ॥ स्वऽयुः । इंद्र । स्वऽराट् । असि । सत्ऽदिष्टिः । स्वयशःऽतरः ॥ सः । ववृधानः । ओजसा । पुरुऽस्तुत । भव । नः । सुश्रवःऽतमः ॥ ९ ॥ युध्मस्य । ते । वृषभस्य । स्वऽराजः । उग्रस्य । यूनः । स्थविरस्य । घृष्वेः ॥ अजूर्यतः । वज्रिणः । वीर्याणि । इंद्र । श्रुतस्य । महतः । महानि ॥ महान् । असि । महिष । वृष्ण्येभिः । धनऽस्पृत् । उग्र । सहमानः । अन्यान् ॥ एकः । विश्वस्य । भुवनस्य । राजा । सः । योधय । च । क्षयय । च । जनान् ॥ प्र । मात्राभिः । रिरिचे । रोचमानः । प्र । देवेभिः । विश्वतः । अप्रतिऽइतः ॥ प्र । मज्मना । दिवः । इंद्रः । पृथिव्याः । प्र । उरोः । महः । अंतरिक्षात् । ऋजीषी ॥ उरुं । गभीरं । जनुषा । अभि । उग्रं । विश्वऽव्यचसं । अवतं । मतीनां । इंद्रं । सोमासः । प्रऽदिवि । सुतासः ।

समुद्रं । न । स्रवतः । आ । विशंति ॥ यं । सोमं । इंद्र । पृथिवीद्यावा । गर्भं । न । माता । बिभृतः । त्वाऽया ॥ तं । ते । हिन्वंति । तं । ऊँइति । ते । मृजंति । अध्वर्यवः । वृषभ । पातवै । ऊँइति ॥ १० ॥ मरुत्वान् । इंद्र । वृषभः । रणाय । पिब । सोमं । अनुऽस्वधं । मदाय ॥ आ । सिंचस्व । जठरे । मध्वः । ऊर्मिं । त्वं । राजा । असि । प्रऽदिवः । सुतानां । सऽजोषाः । इंद्र । सऽगणः । मरुत्ऽभिः । सोमं । पिब । वृत्रऽहा । शूर । विद्वान् ॥ जहि । शत्रून् । अप । मृधः । नुदस्व । अथ । अभयं । कृणुहि । विश्वतः । नः ॥ उत । ऋतुऽभिः । ऋतुऽपाः । पाहि । सोमं । इंद्र । देवेभिः । सखिऽभिः । सुतं । नः ॥ यान् । आ । अभजः । मरुतः । ये । त्वा । अनु । अहन् । वृत्रं । अदधुः । तुभ्यं । ओजः ॥ ये । त्वा । अहिऽहत्ये । मघऽवन् । अवर्धन् । ये । शांबरे । हरिऽवः । ये । गोऽइष्टौ ॥ ये । त्वा । नूनं । अनुऽमदंति । विप्राः । पिब । इंद्र । सोमं । सऽगणः । मरुत्ऽभिः ॥ मरुत्वंतं । वृषभं । ववृधानं । अकवऽअरिं । दिव्यं । शासं । इंद्रं ॥ विश्वऽसहं । अवसे । नूतनाय । उग्रं । सहःऽदां । इह । तं । हुवेम ॥ ११ ॥ सद्यः । ह । जातः । वृषभः । कनीनः । प्रऽभर्तुं । आवत् । अंधसः । सुतस्य ॥ साधोः । पिब । प्रतिऽकामं । यथा । ते । रसऽआशिरः । प्रथमं । सोम्यस्य ॥ यत् । जायथाः । तत् । अहः । अस्य । कामे । अंशोः । पीयूषं । अपिबः । गिरिऽस्थां ॥ तं । ते । माता । परि । योषा । जनित्री । महः । पितुः । दमे । आ । असिंचत् । अग्रे ॥ उपऽस्थाय । मातरं । अन्नं । ऐट्ट । तिग्मं । अपश्यत् । अभि । सोमं । ऊधः ॥ प्रऽयवयन् । अचरत् । गृत्सः । अन्यान् । महानि । चक्रे । पुरुधऽप्रतीकः ॥ उग्रः । तुराषाट् । अभिभूतिऽओजाः । यथाऽवशं । तन्वं । चक्रे । एषः ॥ त्वष्टारं । इंद्रः । जनुषा । अभिऽभूय । आऽमुष्य ।

सोमं । अपिबत् । चमूषु ॥ ० ॥ १२ ॥ शंसं । महां । इंद्रं । यस्मिन् । विश्वाः । आ । कृष्टयः । सोमऽपाः । कामं । अव्यन् ॥ यं । सुऽक्रतुं । धिषणेइति । विभ्वऽतष्टं । घनं । वृत्राणां । जनयंत । देवाः ॥ यं । नु । नकिः । पृतनासु । स्वऽराजं । द्विता । तरंति । नृऽतमं । हरिऽस्थां ॥ इनऽतमः । सत्वऽभिः । यः । ह । शूषैः । पृथुऽज्रयाः । अमिनात् । आयुः । दस्योः ॥ सहऽवा । पृत्ऽसु । तरणिः । न । अर्वा । विऽआनशिः । रोदसीइति । मेहनाऽवान् ॥ भगः । न । कारे । हव्यः । मतीनां । पिताऽइव । चारुः । सुऽहवः । वयःऽधाः ॥ धर्ता । दिवः । रजसः । पृष्टः । ऊर्ध्वः । रथः । न । वायुः । वसुऽभिः । नियुत्वान् ॥ क्षपां । वस्ता । जनिता । सूर्यस्य । विऽभक्ता । भागं । धिषणाऽइव । वाजं ॥ ० ॥ १३ ॥ इंद्रः । स्वाहा । पिबतु । यस्य । सोमः । आऽगत्य । तुम्रः । वृषभः । मरुत्वान् ॥ आ । उरुऽव्यचाः । पृणतां । एभिः । अन्नैः । आ । अस्य । हविः । तन्वः । कामं । ऋध्याः ॥ आ । ते । सपर्यूइति । जवसे । युनज्मि । ययोः । अनु । प्रऽदिवः । श्रुष्टिं । आवः ॥ इह । त्वा । धेयुः । हरयः । सुऽशिप्र । पिब । तु । अस्य । सुऽसुतस्य । चारोः ॥ गोभिः । मिमिक्षुं । दधिरे । सुऽपारं । इंद्रं । ज्यैष्ठ्याय । धायसे । गृणानाः ॥ मंदानः । सोमं । पपिऽवान् । ऋजीषिन् । सं । अस्मभ्यं । पुरुधा । गाः । इषण्य ॥ ० ॥ १४ ॥ चर्षणिऽधृतं । मघऽवानं । उक्थ्यं । इंद्रं । गिरः । बृहतीः । अभि । अनूषत ॥ ववृधानं । पुरुऽहूतं । सुवृक्तिऽभिः । अमर्त्यं । जरमाणं । दिवेऽदिवे ॥ शतऽक्रतुं । अर्णवं । शाकिनं । नरं । गिरः । मे । इंद्रं । उप । यंति । विश्वतः ॥ वाजऽसनिं । पूःऽभिदं । तूर्णिं । अप्ऽतुरं । धामऽसाचं । अभिऽसाचं । स्वःऽविदं ॥ आऽकरे । वसोः । जरिता । पनस्यते । अनेहसः । स्तुभः । इंद्रः । दुवस्यति ॥ विवस्वतः । सदने । आ । हि । पिप्रिये ।

सत्राऽसहं । अभिमातिऽहनं । स्तुहि ॥ नृणां । ऊँइति । त्वा । नृऽतमं । गीःऽभिः । उक्थैः । अभि । प्र । वीरं । अर्चत । सऽबाधः ॥ सं । सहसे । पुरुऽमायः । जिहीते । नमः । अस्य । प्रऽदिवः । एकः । ईशे ॥ पूर्वीः । अस्य । निःऽसिधः । मर्त्येषु । पुरु । वसूनि । पृथिवी । बिभर्ति ॥ इंद्राय । द्यावः । ओषधीः । उत । आपः । रयिं । रक्षंति । जीरयः । वनानि ॥ १५ ॥ तुभ्यं । ब्रह्माणि । गिरः । इंद्र । तुभ्यं । सत्रा । दधिरे । हरिऽवः । जुषस्व ॥ बोधि । आपिः । अवसः । नूतनस्य । सखे । वसोइति । जरितृऽभ्यः । वयः । धाः ॥ इंद्र । मरुत्वः । इह । पाहि । सोमं । यथा । शार्याते । अपिबः । सुतस्य ॥ तव । प्रऽनीती । तव । शूर । शर्मन् । आ । विवासंति । कवयः । सुऽयज्ञाः ॥ सः । वावशानः । इह । पाहि । सोमं । मरुत्ऽभिः । इंद्र । सखिऽभिः । सुतं । नः ॥ जातं । यत् । त्वा । परि । देवाः । अभूषन् । महे । भराय । पुरुऽहूत । विश्वे ॥ अप्ऽतूर्ये । मरुतः । आपिः । एषः । अमंदन् । इंद्रं । अनु । दातिऽवाराः ॥ तेभिः । साकं । पिबतु । वृत्रऽखादः । सुतं । सोमं । दाशुषः । स्वे । सधऽस्थे ॥ इदं । हि । अनु । ओजसा । सुतं । राधानां । पते ॥ पिब । तु । अस्य । गिर्वणः ॥ यः । ते । अनु । स्वधां । असत् । सुते । नि । यच्छ । तन्वं ॥ सः । त्वा । ममत्तु । सोम्यं ॥ प्र । ते । अश्नोतु । कुक्ष्योः । प्र । इंद्र । ब्रह्मणा । शिरः ॥ प्र । बाहूइति । शूर । राधसे ॥ १६ ॥ धानाऽवंतं । करंभिणं । अपूपऽवंतं । उक्थिनं ॥ इंद्र । प्रातः । जुषस्व । नः ॥ पुरोळाशं । पचत्यं । जुषस्व । इंद्र । आ । गुरस्व । च ॥ तुभ्यं । हव्यानि । सिस्रते ॥ पुरोळाशं । च । नः । घसः । जोषयासे । गिरः । च । नः ॥ वधूयुःऽइव । योषणां ॥ पुरोळाशं । सनऽश्रुत । प्रातःऽसावे । जुषस्व । नः ॥ इंद्र । क्रतुः । हि । ते ।

बृहन् ॥ माध्यंदिनस्य । सवनस्य । धानाः । पुरोळाशं । इंद्र । कृष्व । इह । चारुं ॥ प्र । यत् । स्तोता । जरिता । तूर्णिऽअर्थः । वृषऽयमाणः । उप । गीःऽभिः । ईट्टे ॥ १७ ॥ तृतीये । धानाः । सवने । पुरुऽस्तुत । पुरोळाशं । आऽहुतं । ममहस्व । नः ॥ ऋभुऽमंतं । वाजऽवंतं । त्वा । कवे । प्रयस्वंतः । उप । शिक्षेम । धीतिऽभिः ॥ पूषण्ऽवते । ते । चकृम । करंभं । हरिऽवते । हरिऽअश्वाय । धानाः ॥ अपूपं । अद्धि । सऽगणः । मरुत्ऽभिः । सोमं । पिब । वृत्रऽहा । शूर । विद्वान् ॥ प्रति । धानाः । भरत । तूयं । अस्मै । पुरोळाशं । वीरऽतमाय । नृणां ॥ दिवेऽदिवे । सऽदृशीः । इंद्र । तुभ्यं । वर्धंतु । त्वा । सोमऽपेयाय । धृष्णोइति ॥ १८ ॥ इंद्रापर्वता । बृहता । रथेन । वामीः । इषः । आ । वहतं । सुऽवीराः ॥ वीतं । हव्यानि । अध्वरेषु । देवा । वर्धेथां । गीःऽभिः । इळया । मदंता ॥ तिष्ठ । सु । कं । मघऽवन् । मा । परा । गाः । सोमस्य । नु । त्वा । सुऽसुतस्य । यक्षि ॥ पितुः । न । पुत्रः । सिचं । आ । रभे । ते । इंद्र । स्वादिष्ठया । गिरा । शचीऽवः ॥ शंसाव । अध्वर्योइति । प्रति । मे । गृणीहि । इंद्राय । वाहः । कृणवाव । जुष्टं ॥ आ । इदं । बर्हिः । यजमानस्य । सीद । अथ । च । भूत् । उक्थं । इंद्राय । शस्तं ॥ जाया । इत् । अस्तं । मघऽवन् । सा । इत् । ऊँइति । योनिः । तत् । इत् । त्वा । युक्ताः । हरयः । वहंतु ॥ यदा । कदा । च । सुनवाम । सोमं । अग्निः । त्वा । दूतः । धन्वाति । अच्छ ॥ परा । याहि । मघऽवन् । आ । च । याहि । इंद्र । भ्रातः । उभयत्र । ते । अर्थं ॥ यत्र । रथस्य । बृहतः । निऽधानं । विऽमोचनं । वाजिनः । रासभस्य ॥ १९ ॥ अपाः । सोमं । अस्तं । इंद्र । प्र । याहि । कल्याणीः । जाया । सुऽरणं । गृहे । ते ॥ ० ॥ दक्षिणाऽवत् ॥ इमे । भोजाः । अंगिरसः । विऽरूपाः ।

दि॒वः । पु॒त्रासः॑ । असु॑रस्य । वी॒राः ॥ वि॒श्वामि॑त्राय । दद॑तः । म॒घा॒नि॑ । स॒ह॒स्र॒ऽसा॒वे । प्र । ति॒र॒न्ते॒ । आयुः॑ ॥ रू॒पम्ऽरू॑पम् । म॒घऽवा॑ । बो॒भ॒वी॒ति॒ । मा॒याः । कृ॒ण्वा॒नः । त॒न्व॑म् । परि॑ । स्वाम् ॥ त्रिः । यत् । दि॒वः । परि॑ । मु॒हू॒र्तम् । आ । अगा॑त् । स्वैः । मन्त्रैः॑ । अनृ॑तुऽपाः । ऋ॒त॒ऽवा॑ ॥ म॒हान् । ऋषिः॑ । दे॒व॒ऽजाः । दे॒वऽजू॑तः । अस्त॑भ्नात् । सिन्धु॑म् । अ॒र्ण॒वम् । नृ॒ऽचक्षाः॑ ॥ वि॒श्वामि॑त्रः । यत् । अव॑हत् । सु॒ऽदासम्॑ । अप्रि॑यायत । कु॒शि॒केभिः॑ । इन्द्रः॑ ॥ ह॒ंसाःऽइ॑व । कृ॒णु॒थ॒ । श्लोक॑म् । अद्रि॑ऽभिः । मद॑न्तः । गीःऽभिः । अ॒ध्व॒रे । सु॒ते । सचा॑ ॥ दे॒वेभिः॑ । वि॒प्राः॒ । ऋ॒ष॒यः॒ । नृ॒ऽच॒क्ष॒सः॒ । वि । पि॒ब॒ध्व॒म् । कु॒शि॒काः॒ । सो॒म्य॑म् । मधु॑ ॥ २० ॥ उप॑ । प्र । इ॒त॒ । कु॒शि॒काः॒ । चे॒तय॑ध्वम् । अश्व॑म् । रा॒ये । प्र । मु॒ञ्च॒त॒ । सु॒ऽदासः॑ ॥ राजा॑ । वृ॒त्रम् । ज॒ङ्घ॒न॒त् । प्राक् । अपा॑क् । उद॑क् । अथ॑ । य॒जा॒ते॒ । वरे॑ । आ । पृ॒थि॒व्याः । यः । इ॒मेइति॑ । रोद॑सीइति॑ । उ॒भेइति॑ । अ॒हम् । इन्द्र॑म् । अतु॑स्तवम् ॥ वि॒श्वामि॑त्रस्य । र॒क्ष॒ति॒ । ब्रह्म॑ । इ॒दम् । भार॑तम् । जन॑म् ॥ वि॒श्वामि॑त्राः । अ॒रा॒स॒त॒ । ब्रह्म॑ । इन्द्रा॑य । व॒ज्रिणे॑ ॥ कर॑त् । इत् । नः॒ । सु॒ऽराध॑सः ॥ किम् । ते॒ । कृ॒ण्व॒न्ति॒ । कीक॑टेषु । गाव॑ः । न । आ॒ऽशिर॑म् । दु॒ह्रे । न । त॒प॒न्ति॒ । घ॒र्मम् । आ । नः॒ । भ॒र॒ । प्र॒ऽम॑गन्दस्य । वेदः॑ । नै॒चा॒ऽशा॒खम् । म॒घ॒ऽव॒न् । र॒न्ध॒य॒ । नः॒ ॥ स॒स॒र्परीः॑ । अम॑तिम् । बाध॑माना । बृ॒हत् । मि॒मा॒य॒ । ज॒मद॑ग्निऽदत्ता ॥ आ । सूर्य॑स्य । दु॒हि॒ता । त॒ता॒न॒ । श्रवः॑ । दे॒वेषु॑ । अ॒मृत॑म् । अ॒जु॒र्यम् ॥ २१ ॥ स॒स॒र्परीः॑ । अ॒भ॒र॒त् । तूय॑म् । ए॒भ्यः॒ । अधि॑ । श्रवः॑ । पाञ्च॑ऽजन्यासु । कृ॒ष्टिषु॑ ॥ सा । प॒क्ष्या॑ । नव्य॑म् । आयुः॑ । दधा॑ना । याम् । मे॒ । प॒ल॒स्ति॒ऽज॒म॒द॒ग्नयः॑ । द॒दुः ॥ स्थि॒रौ । गावौ॑ । भ॒व॒ता॒म् । वी॒ळुः । अक्षः॑ । मा । ई॒षा । वि । व॒र्हि॒ । मा । यु॒गम् । वि । शा॒रि॒ । इन्द्रः॑ । पा॒त॒ल्ये॒३इति॑ । द॒द॒ताम् । शरी॑तोः । आरि॑ष्टऽनेमे । अ॒भि । नः॒

सचस्व ॥ बलं । धेहि । तनूषु । नः । बलं । इंद्र । अनळुत्ऽसु । नः ॥ बलं । तोकाय । तनयाय । जीवसे । त्वं । हि । बलऽदाः । असि ॥ अभि । व्ययस्व । खदिरस्य । सारं । ओजः । धेहि । स्पंदने । शिंशपायां ॥ अक्ष । वीळोइति । वीळित । वीळयस्व । मा । यामात् । अस्मात् । अव । जीहिपः । नः ॥ अयं । अस्मान् । वनस्पतिः । मा । च । हाः । मा । इह । रिरिषत् ॥ स्वस्ति । आ । गृहेभ्यः । आ । अवऽसै । आ । विऽमोचनात् ॥ २३ ॥ इंद्र । ऊतिऽभिः । बहुलाभिः । नः । अद्य । यात्ऽश्रेष्ठाभिः । मघऽवन् । शूर । जिन्व ॥ यः । नः । द्वेष्टि । अधरः । सः । पदीष्ट । यं । ऊँइति । द्विष्मः । तं । ऊँइति । प्राणः । जहातु ॥ परशुं । चित् । वि । तपति । शिंबलं । चित् । वि । वृश्चति ॥ उखा । चित् । इंद्र । येषंती । प्रऽयस्ता । फेनं । अस्यति ॥ न । सायकस्य । चिकिते । जनासः । लोधं । नयंति । पशु । मन्यमानाः ॥ न । अवाजिनं । वाजिना । हासयंति । न । गर्दभं । पुरः । अश्वात् । नयंति ॥ इमे । इंद्र । भरतस्य । पुत्राः । अपऽपित्वं । चिकितुः । न । प्रऽपित्वं ॥ हिन्वंति । अश्वं । अरणं । न । नित्यं । ज्याऽवाजं । परि । नयंति । आजौ ॥ २३ ॥ इमं । महे । विदथ्याय । शूषं । शश्वत् । कृत्वः । ईड्याय । प्र । जभ्रुः । शृणोतु ॥ ० ॥ शृणोतु । अग्निः । दिव्यैः । अजस्रः ॥ महिं । महे । दिवे । अर्च । पृथिव्यै । कामः । मे । इच्छन् । चरति । प्रऽजानन् ॥ ययोः । ह । स्तोमे । विदथेषु । देवाः । सपर्यवः । मादयंते । सचा । आयोः ॥ युवोः । ऋतं । रोदसीइति । सत्यं । अस्तु । महे । सु । नः । सुवितायं । प्र । भूतं ॥ इदं । दिवे । नमः । अग्ने । पृथिव्यै । सपर्यामि । प्रयसा । यामि । रत्नं । उतोइति । हि । वां । पूर्व्याः । आऽविविद्रे । ऋतवरीइत्यृतऽवरी । रोदसीइति । सत्यऽवाचः ॥ नरः । चित् । वां । संऽदृथे । शूरऽसातौ ।

ववंद्रिरे । पृथिवि । वेविदानाः ॥ कः । अद्धा । वेद । कः । इह । प्र ।
वोचत् । देवान् । अच्छं । पथ्या । का । सं । एति ॥ ददृश्रे । एषां ।
अवमा । सदांसि । परेषु । याः । गुह्येषु । व्रतेषु ॥ २४ ॥ कविः ।
नृऽचक्षाः । अभि । सीं । अचष्ट । ऋतस्य । योना । विघृतेइतिविऽ-
घृते । मदंतीइति ॥ नाना । चक्रातेइति । सदनं । यथा । वेः ।
समानेन । क्रतुना । संविदानेइतिसंऽविदाने ॥ समान्या । वियुतेइतिऽ-
विऽयुते । दूरेअंतेइतिदूरेऽअंते । ध्रुवे । पदे । तस्थतुः । जागरूकेइति ॥
उत । स्वसारा । युवतीइति । भवंतीइति । आत् । ऊंइति । ब्रुवातेइति ।
मिथुनानि । नाम ॥ विश्वा । इत् । एतेइति । जनिम । सं । विविक्तः ।
महः । देवान् । बिभ्रतीइति । न । व्यथेतेइति । एजत् । ध्रुवं । पत्य-
ते । विश्वं । एकं । चरत् । पतत्रि । विषुणं । वि । जातं ॥ सना ।
पुराणं । अधि । एमि । आरात् । महः । पितुः । जनितुः । जामि ।
तत् । नः ॥ देवासः । यत्र । पनितारः । एवैः । उरौ । पथि । विऽ-
उते । तस्थुः । अंतरिति ॥ इमं । स्तोमं । रोदसीइति । प्र । ब्रवीमि ।
ऋदूदराः । शृणवन् । अग्निऽजिह्वाः ॥ मित्रः । संऽराजः । वरुणः ।
युवानः । आदित्यासः । कवयः । पप्रथानाः ॥ २५ ॥ हिरण्यऽपाणिः ।
सविता । सुऽजिह्वः । त्रिः । आ । दिवः । विदथे । पत्यमानः ।
देवेषु । च । सवितरिति । श्लोकं । अश्रेः । आत् । अस्मभ्यं । आ ।
सुव । सर्वऽतातिं ॥ सुऽकृत् । सुऽपाणिः । स्वऽवान् । ऋतऽवा ।
देवः । त्वष्टा । अवसे । तानि । नः । धात् ॥ पूषण्ऽवंतः । ऋभवः ।
मादयध्वं । ऊर्ध्वऽग्रावाणः । अध्वरं । अतष्ट ॥ विद्युत्ऽरथाः । मरुतः ।
ऋष्टिऽमंतः । दिवः । मर्याः । ऋतऽजाताः । अयासः ॥ सरस्वती ।
शृणवन् । यज्ञियासः । धात । रयिं । सहऽवीरं । तुरासः ॥ विष्णुं ।
स्तोमासः । पुरुऽदस्मं । अर्काः । भगस्यऽइव । कारिणः । यामनि ।

वरेणेषु । वह्निः ॥ सत्रा । यत् । ईं । भार्वरस्य । वृष्णः । सिसक्ति ।
शुष्मः । स्तुवते । भराय ॥ गुहा । यत् । ईं । औशिजस्य । गोहे ।
प्र । यत् । धिये । प्र । अयसे । मदाय ॥ वि । यत् । वरांसि । पर्व-
तस्य । वृण्वे । पयःऽभिः । जिन्वे । अपां । जवांसि ॥ विदत् । गौ-
रस्य । गवयस्य । गोहे । यदि । वाजाय । सुऽध्यः । वहंति ॥ भद्रा ।
ते । हस्ता । सुऽकृता । उत । पाणीइति । प्रऽयंतारा । स्तुवते ।
राधः । इंद्र ॥ का । ते । निऽसत्तिः । किं । ऊँइति । नोइति । मम-
त्सि । किं । न । उत्ऽउत् । ऊँइति । हर्षसे । दातवै । ऊँइति । एव ।
वस्वः । इंद्रः । सत्यः । संऽराट् । हंता । वृत्रं । वरिवः । पूरवे ।
करितिकः ॥ पुरुऽस्तुत । क्रत्वा । नः । शग्धि । रायः । भक्षीय ।
ते । अवसः । दैव्यस्य ॥ ० ॥ ६ ॥ यत् । नः । इंद्रः । जुजुषे । यत् ।
च । वष्टि । तत् । नः । महान् । करति । शुष्मी । आ । चित् ॥
ब्रह्म । स्तोमं । मघऽवा । सोमं । उक्था । यः । अश्मानं । शवसा ।
बिभ्रत् । एति ॥ वृषा । वृषंधि । चतुःऽअश्रिं । अस्यन् । उग्रः ।
बाहुऽभ्यां । नृऽतमः । शचीऽवान् ॥ श्रिये । परुष्णीं । उषमाणः ।
ऊर्णां । यस्याः । पर्वाणि । सख्याय । विव्ये ॥ यः । देवः । देवऽतमः ।
जायमानः । महः । वाजेभिः । महत्ऽभिः । च । शुष्मैः ॥ दधानः ।
वज्रं । बाह्वोः । उशंतं । द्यां । अमेन । रेजयत् । प्र । भूम ॥ विश्वा ।
रोधांसि । प्रऽवतः । च । पूर्वीः । द्यौः । ऋष्वात् । जनिमन् । रेजत ।
क्षाः ॥ आ । मातरा । भरति । शुष्मी । आ । गोः । नृऽवत् । परिऽ-
ज्मन् । नोनुवंत । वाताः ॥ ता । तु । ते । इंद्र । महतः । महानि ।
विश्वेषु । इत् । सवनेषु । प्रऽवाच्या ॥ यत् । शूर । धृष्णोइति ।
धृषता । दधृष्वान् । अहिं । वज्रेण । शवसा । अविवेषीः ॥ ७ ॥ ० ॥
सत्या । तुविऽनृम्ण । विश्वा । प्र । धेनवः । सिस्रते । वृष्णः । ऊध्नः ।

अध । ह । त्वत् । वृषऽमनः । भियानाः । प्र । सिंधवः । जवसा ।
चक्रमंत ॥ अत्र । अह । ते । हरिऽवः । ताः । ऊँइति । देवीः । अवःऽ
भिः । इंद्र । स्तवंत । स्वसारः ॥ यत् । सीं । अनु । प्र । मुचः ।
बद्धधानाः । दीर्घां । अनु । प्रऽसितिं । स्यंदयध्यै ॥ पिपीळे । अंशुः ।
मद्यः । न । सिंधुः । आ । त्वा । शमी । शशमानस्य । शक्तिः ।
अस्मद्र्यक् । शुशुचानस्य । यम्याः । आशुः । न । रश्मिं । तुविऽओ
जसं । गोः ॥ अस्मेइति । वर्षिष्ठा । कृणुहि । ज्येष्ठा । नृम्णानि ।
सत्रा । सहुरे । सहांसि ॥ अस्मभ्यं । वृत्रा । सुऽहनानि । रंधि ।
जहि । वधः । वनुषः । मर्त्यस्य ॥ अस्माकं । इत् । सु । शृणुहि ।
त्वं । इंद्र । अस्मभ्यं । चित्रान् । उप । माहि । वाजान् ॥ अस्मभ्यं ।
विश्वाः । इषणः । पुरंऽधीः । अस्माकं । सु । मघऽवन् । बोधि ।
गोऽदाः ॥ ० ॥ ८ ॥ कथा । महां । अवृधत् । कस्य । होतुः । यज्ञं ।
जुषाणः । अभि । सोमं । ऊधः ॥ पिबन् । उशानः । जुषमाणः ।
अंधः । ववक्षे । ऋष्वः । शुचते । धनाय ॥ कः । अस्य । वीरः ।
सधऽमादं । आप । सं । आनंश । सुमतिऽभिः । कः । अस्य ॥ कत् ।
अस्य । चित्रं । चिकिते । कत् । ऊती । वृधे । भुवत् । शशमानस्य ।
यज्योः ॥ कथा । शृणोति । हूयमानं । इंद्रः । कथा । शृण्वन् । अवसां ।
अस्य । वेद । काः । अस्य । पूर्वीः । उपऽमातयः । ह । कथा । एनं ।
आहुः । पपुरिं । जरित्रे ॥ कथा । सऽबाधः । शशमानः । अस्य ।
नशत् । अभि । द्रविणं । दीध्यानः ॥ देवः । भुवत् । नवेदाः । मे ।
ऋतानां । नमः । जगृभ्वान् । अभि । यत् । जुजोषत् ॥ कथा । कत् ।
अस्याः । उषसः । विऽउष्टौ । देवः । मर्तस्य । सख्यं । जुजोष ॥
कथा । कत् । अस्य । सख्यं । सखिऽभ्यः । ये । अस्मिन् । कामं ।
सुऽयुजं । ततस्रे ॥ ९ ॥ किं । आत् । अमत्रं । सख्यं । सखिऽभ्यः ।

कदा । नु । ते । भ्रात्रं । प्र । ब्रवाम ॥ श्रिये । सुऽदृशः । वपुः । अस्य । सर्गाः । स्वः । न । चित्रऽतमं । इषे । आ । गोः ॥ द्रुहं । जिघांसन् । ध्वरसं । अनिंद्रां । तेतिक्ते । तिग्मा । तुजसे । अनीका ॥ ऋणा । चित् । यत्र । ऋणऽयाः । नः । उग्रः । दूरे । अज्ञाता । उषसः । बबाधे ॥ ऋतस्य । हि । शुरुधः । संति । पूर्वीः । ऋतस्य । धीतिः । वृजिनानि । हंति ॥ ऋतस्य । श्लोकः । बधिरा । ततर्द । कर्णा । बुधानः । शुचमानः । आयोः ॥ ऋतस्य । दृळ्हा । धरुणानि । संति । पुरूणि । चंद्रा । वपुषे । वपूंषि ॥ ऋतेन । दीर्घं । इषणंत । पृक्षः । ऋतेन । गावः । ऋतं । आ । विवेशुः ॥ ऋतं । येमानः । ऋतं । इत् । वनोति । ऋतस्य । शुष्मः । तुरऽयाः । ऊँइति । गव्युः ॥ ऋताय । पृथ्वीइति । बहुलेइति । गभीरेइति । ऋताय । धेनूइति । परमेइति । दुहातेइति ॥ ० ॥ १० ॥ का । सुऽस्तुतिः । शवसः । सूनुं । इंद्रं । अर्वाचीनं । राधसे । आ । ववर्तत् ॥ ददिः । हि । वीरः । गृणते । वसूनि । सः । गोऽपतिः । निःऽसिधां । नः । जनासः ॥ सः । वृत्रऽहत्ये । हव्यः । सः । ईड्यः । सः । सुऽस्तुतः । इंद्रः । सत्यऽराधाः ॥ सः । यामन् । आ । मघऽवा । मर्त्याय । ब्रह्मण्यते । सुस्वये । वरिवः । धात् ॥ तं । इत् । नरः । वि । ह्वयंते । संऽईके । रिरिक्वांसः । तन्वः । कृण्वत । त्रां ॥ मिथः । यत् । त्यागं । उभयासः । अग्मन् । नरः । तोकस्य । तनयस्य । सातौ ॥ क्रतुऽयंति । क्षितयः । योगे । उग्र । आशुषाणासः । मिथः । अर्णऽसातौ ॥ सं । यत् । विशः । अववृत्रंत । युध्माः । आत् । इत् । नेमे । इंद्रयंते । अभीके ॥ अत् । इत् । ह । नेमे । इंद्रियं । यजंते । आत् । इत् । पक्तिः । पुरोळाशं । रिरिच्यात् ॥ आत् । इत् । सोमः । वि । पपृच्यात् । असुस्वीन् । आत् । इत् । जुजोष । वृषभं । यज-

ध्यै ॥ ११ ॥ कृणोति । अस्मै । वरिवः । यः । इत्था । इंद्राय । सोमं । उशते । सुनोति ॥ सध्रीचीनेन । मनसा । अविऽवेनन् । तं । इत् । सखायं । कृणुते । समत्ऽसु ॥ यः । इंद्राय । सुनवत् । सोमं । अद्य । पचात् । पक्तीः । उत । भृज्जाति । धानाः ॥ प्रति । मनायोः । उचथानि । हर्यन् । तस्मिन् । दधत् । वृषणं । शुष्मं । इंद्रः ॥ यदा । सऽमर्यं । वि । अचेत् । ऋघावा । दीर्घं । यत् । आजिं । अभि । अख्यत् । अर्यः ॥ अचिक्रदत् । वृषणं । पत्नी । अच्छ । दुरोणे । आ । निऽशितं । सोमसुत्ऽभिः ॥ भूयसा । वस्नं । अचरत् । कनीयः । अविऽक्रीतः । अकानिषं । पुनः । यन् ॥ सः । भूयसा । कनीयः । न । अरिरेचीत् । दीनाः । दक्षाः । वि । दुहंति । प्र । वाणं ॥ कः । इमं । दशऽभिः । मम । इंद्रं । क्रीणाति । धेनुऽभिः ॥ यदा । वृत्राणि । जंघनत् । अथ । एनं । मे । पुनः । ददत् ॥ ० ॥ १२ ॥ कः । अद्य । नर्यः । देवऽकामः । उशन् । इंद्रस्य । सख्यं । जुजोष ॥ कः । वा । महे । अवसे । पार्याय । संऽइद्धे । अग्नौ । सुतऽसोमः । ईट्टे ॥ कः । ननाम । वचसे । सोम्याय । मनायुः । वा । भवति । वस्ते । उस्राः ॥ कः । इंद्रस्य । युज्यं । कः । सखिऽत्वं । कः । भ्रात्रं । वष्टि । कवये । कः । ऊती ॥ कः । देवानां । अवः । अद्य । वृणीते । कः । आदित्यान् । अदितिं । ज्योतिः । ईट्टे ॥ कस्य । अश्विनौ । इंद्रः । अग्निः । सुतस्य । अंशोः । पिबंति । मनसा । अविऽवेनं ॥ तस्मै । अग्निः । भारतः । शर्म । यंसत् । ज्योक् । पश्यात् । सूर्यं । उत्ऽचरंतं ॥ यः । इंद्राय । सुनवाम । इति । आह । नरे । नर्याय । नृऽतमाय । नृणां ॥ न । तं । जिनंति । बहवः । न । दभ्राः । उरु । अस्मै । अदितिः । शर्म । यंसत् ॥ प्रियः । सुऽकृत् । प्रियः । इंद्रे । मनायुः । प्रियः । सुप्रऽअवीः । प्रियः । अस्य । सोमी ॥ १३ ॥ सुप्रऽअव्यः । प्राशुषाट् । एषः ।

वीरः । सुऽस्वैः । पक्ति । कृणुते । केवला । इंद्रः ॥ न । असुस्वेः । आपिः । न । सखा । न । जामिः । दुःप्रऽअव्यः । अवऽहंता । इत् । अवाचः ॥ न । रेवता । पणिना । सख्यं । इंद्रः । असुन्वता । सुतऽपाः । सं । गृणीते ॥ आ । अस्य । वेदः । खिदति । हंति । नग्नं । वि । सुस्वये । पक्तये । केवलः । भुत् ॥ इंद्रं । परे । अवरे । मध्यमासः । इंद्रं । यांतः । अवऽसितासः । इंद्रं । इंद्रं । क्षियंतः । उत । युध्यमानाः । इंद्रं । नरः । वाजऽयंतः । हवंते ॥ १४ ॥ अहं । मनुः । अभवं । सूर्यः । च । अहं । कक्षीवान् । ऋषिः । अस्मि । विप्रः ॥ अहं । कुत्सं । आर्जुनेयं । नि । ऋंजे । अहं । कविः । उशना । पश्यत । मा ॥ अहं । भूमिं । अददां । आर्याय । अहं । वृष्टिं । दाशुषे । मर्त्याय ॥ अहं । अपः । अनयं । वावशानाः । मम । देवासः । अनु । केतं । आयन् ॥ अहं । पुरः । मंदसानः । वि । ऐरं । नव । साकं । नवतीः । शंबरस्य ॥ शतऽतमं । वेश्यं । सर्वऽताता । दिवःऽदासं । अतिथिऽग्वं । यत् । आवं । प्र । सु । सः । विऽभ्यः । मरुतः । विः । अस्तु । प्र । श्येनः । श्येनेभ्यः । आशुऽपत्वा ॥ अचक्रया । यत् । स्वधया । सुऽपर्णः । हव्यं । भरत् । मनवे । देवऽजुष्टं ॥ भरत् । यदि । विः । अतः । वेविजानः । पथा । उरुणा । मनःऽजवाः । असर्जि ॥ तूयं । ययौ । मधुना । सोम्येन । उत । श्रवः । विविदे । श्येनः । अत्र ॥ ऋजीपी । श्येनः । ददमानः । अंशुं । पराऽवतः । शकुनः । मंद्रं । मदं ॥ सोमं । भरत् । ददृहाणः । देवऽवान् । दिवः । अमुष्मात् । उत्ऽतरात् । आऽदाय । आऽदाय ॥ श्येनः । अभरत् । सोमं । सहस्रं । सवान् । अयुतं । च । साकं ॥ अत्र । पुरंऽधिः । अजहात् । अरातीः । मदे । सोमस्य । मूराः । अमूरः ॥ १५ ॥ गर्भे । नु । सन् । अनु । एषां । अवेदं । अहं । देवानां । जनिमानि ।

विश्वा ॥ शतं । मा । पुरः । आयसीः । अरक्षन् । अध । श्येनः । जवसा । निः । अदीयं ॥ न । घ । सः । मां । अप । जोषं । जभार । अभि । ईं । आस । त्वक्षसा । वीर्येण ॥ ईर्मा । पुरंऽधिः । अजहात् । अरातीः । उत । वातान् । अतरत् । शूशुवानः ॥ अव । यत् । श्येनः । अस्वनीत् । अध । द्योः । वि । यत् । यदि । वा । अतः । ऊहुः । पुरंऽधिं । सृजत् । यत् । अस्मै । अव । ह । क्षिपत् । ज्यां । कृशानुः । अस्ता । मनसा । भुरण्यन् ॥ ऋजिप्यः । ईं । इंद्रऽवतः । न । भुज्युं । श्येनः । जभार । बृहतः । अधि । स्नोः ॥ अंतरिति । पतत् । पतत्रि । अस्य । पर्णं । अध । यामनि । प्रऽसितस्य । तत् । वेरितिवेः ॥ अध । श्वेतं । कलशं । गोभिः । अक्तं । आऽपिप्यानं । मघऽवा । शुक्रं । अंधः ॥ अध्वर्युऽभिः । प्रऽयतं । मध्वः । अग्रं । इंद्रः । मदाय । प्रति । धत् । पिबध्यै । शूरः । मदाय । प्रति । धत् । पिबध्यै ॥ १६ ॥ त्वा । युजा । तव । तत् । सोम । सख्ये । इंद्रः । अपः । मनवे । सऽस्रुतः । कारितिकः ॥ अहन् । अहिं । अरिणात् । सप्त । सिंधून् । अप । अवृणोत् । अपिहिताऽइव । खानि ॥ त्वा । युजा । नि । खिदत् । सूर्यस्य । इंद्रः । चक्रं । सहसा । सद्यः । इंदोइति । अधि । स्नुना । बृहता । वर्तमानं । महः । द्रुहः । अप । विश्वऽआयु । धायि ॥ अहन् । इंद्रः । अदहत् । अग्निः । इंदोइति । पुरा । दस्यून् । मध्यंदिनात् । अभीकें । दुःऽगे । दुरोणे । क्रत्वा । न । यातां । पुरु । सहस्रा । शर्वा । नि । बर्हीत् ॥ विश्वस्मात् । सीं । अधमान् । इंद्र । दस्यून् । विशः । दासीः । अकृणोः । अप्रऽशस्ताः ॥ अबाधेथां । अमृणतं । नि । शत्रून् । अविंदेथां । अपऽचितिं । वधत्रैः ॥ एव । सत्यं । मघऽवाना । युवं । तत् । इंद्रः । च । सोम । ऊर्वं । अश्व्यं । गोः । आ । दर्दृतं । अपिऽहितानि । अश्ना । रिरिचथुः । क्षाः । चित् । ततृदाना ॥ १७ ॥ आ ।

नः । स्तुतः । उप । वाजेभिः । ऊती । इंद्र । याहि । हरिऽभिः । मंदसानः ॥ तिरः । चित् । अर्यः । सवना । पुरूणि । आंगूषेभिः । गृणानः । सत्यऽराधाः ॥ आ । हि । स्म । याति । नर्यः । चिकित्वान् । हूयमानः । सोतृऽभिः । उप । यज्ञं ॥ सुऽअश्वः । यः । अभीरुः । मन्यमानः । सुस्वानेभिः । मदति । सं । ह । वीरैः ॥ श्रवय । इत् । अस्य । कर्णा । वाजयध्यै । जुष्टां । अनु । प्र । दिशं । मंदयध्यै ॥ उत्ऽववृषाणः । राधसे । तुविष्मान् । करत् । नः । इंद्रः । सुऽतीर्था । अभयं । च ॥ अच्छ । यः । गंता । नाधमानं । ऊती । इत्था । विप्रं । हवमानं । गृणंतं ॥ उप । त्मनि । दधानः । धुरि । आशून् । सहस्राणि । शतानि । वज्रऽबाहुः ॥ त्वाऽऊतासः । मघऽवन् । इंद्र । विप्राः । वयं । ते । स्याम । सूरयः । गृणंतः ॥ भेजानासः । बृहत्ऽदिवस्य । रायः । आऽकाय्यस्य । दावने । पुरुऽक्षोः ॥ १८ ॥ नकिः । इंद्र । त्वत् । उत्ऽतरः । न । ज्यायान् । अस्ति । वृत्रऽहन् ॥ नकिः । एव । यथा । त्वं ॥ सत्रा । ते । अनु । कृष्टयः । विश्वा । चक्राऽइव । ववृतुः ॥ सत्रा । महान् । असि । श्रुतः ॥ विश्वे । चन । इत् । अना । त्वा । देवासः । इंद्र । युयुधुः ॥ यत् । अहा । नक्तं । आ । अतिरः ॥ यत्र । उत । बाधितेभ्यः । चक्रं । कुत्साय । युध्यते ॥ मुषायः । इंद्र । सूर्यं ॥ यत्र । देवान् । ऋघायतः । विश्वान् । अयुध्यः । एकः । इत् ॥ त्वं । इंद्र । वनून् । अहन् ॥ १९ ॥ यत्र । उत । मर्त्याय । कं । अरिणाः । इंद्र । सूर्यं ॥ प्र । आवः । शचीभिः । एतशं ॥ किं । आत् । उत । असि । वृत्रऽहन् । मघऽवन् । मन्युमत्ऽतमः ॥ अत्र । अह । दानुं । आ । अतिरः ॥ एतत् । घ । इत् । उत । वीर्यं । इंद्र । चकर्थ । पौंस्यं ॥ स्त्रियं । यत् । दुःऽहनायुवं । वधीः । दुहितरं । दिवः ॥ दिवः । चित् । घ । दुहितरं । महान् । महीयमानां ॥ उषसं ।

इंद्र । सं । पिणक् ॥ अप । उषाः । अनसः । सरत् । संऽपिष्टात्
अह । बिभ्युषी ॥ नि । यत् । सीं । शिश्नथत् । वृषा ॥ २० ॥ एतत्
अस्याः । अनः । शये । सुऽसंपिष्टं । विऽपाशि । आ ॥ ससार
सीं । पराऽवतः ॥ उत । सिंधुं । विऽबाल्यं । विऽतस्थानां । अधि
क्षमि ॥ परि । स्थाः । इंद्र । मायया । उत । शुष्णस्य । धृष्णुऽया । प्र
मृक्षः । अभि । वेदनं ॥ पुरः । यत् । अस्य । संऽपिणक् ॥ उत । दासं
कौलिऽतरं । बृहतः । पर्वतात् । अधि ॥ अव । अहन् । इंद्र । शंबरं
उत । दासस्य । वर्चिनः । सहस्राणि । शता । अवधीः ॥ अधि
पंच । प्रधीन्ऽइव ॥ २१ ॥ उत । त्यं । पुत्रं । अग्रुवः । पराऽवृक्तं
शतऽक्रतुः ॥ उक्थेषु । इंद्रः । आ । अभजत् ॥ उत । त्या । तुर्व
शायदू इति । अस्नातारा । शचीऽपतिः ॥ इंद्रः । विद्वान् । अपार
यत् ॥ उत । त्या । सद्यः । आर्या । सरयोः । इंद्र । पारतः ॥ अर्णा
चित्रऽरथा । अवधीः ॥ अनु । द्वा । जहिता । नयः । अंधं । श्रोणं
च । वृत्रऽहन् ॥ न । तत् । ते । सुम्नं । अष्टवे ॥ शतं । अश्मन्ऽमयीनां
पुरां । इंद्रः । वि । आस्यात् ॥ दिवःऽदासाय । दाशुषे ॥ २२ ॥
अस्वापयत् । दभीतये । सहस्रा । त्रिंशतं । हथैः ॥ दासानां । इंद्रः
मायया ॥ सः । घ । इत् । उत । असि । वृत्रऽहन् । समानः । इंद्र
गोऽपतिः ॥ यः । ता । विश्वानि । चिच्युषे ॥ उत । नूनं । यत्
इंद्रियं । करिष्याः । इंद्र । पौंस्यं ॥ अद्य । नकिः । तत् । आ । मि
नत् ॥ वामंऽवामं । ते । आऽदुरे । देवः । ददातु । अर्यमा ॥ वामं
पूषा । वामं । भगः । वामं । देवः । करूळती ॥ २३ ॥ कया । नः
चित्रः । आ । भुवत् । ऊती । सदाऽवृधः । सखा ॥ कया । शचि
ष्ठया । वृता । कः । त्वा । सत्यः । मदानां । मंहिष्ठः । मत्सत् । अं
धसः ॥ दृळ्हा । चित् । आऽरुजे । वसु ॥ अभि । सु । नः । सखीनां

नां । अविता । जरितृणां ॥ शतं । भवासि । ऊतिऽभिः ॥ अभि । नः । आ । ववृत्स्व । चक्रं । न । वृत्तं । अर्वतः ॥ नियुत्ऽभिः । चर्षणीनां ॥ प्रऽवता । हि । क्रतूनां । आ । ह । पदाऽइव । गच्छसि ॥ अभक्षि । सूर्ये । सचा ॥ २४ ॥ सं । यत् । ते । इंद्र । मन्यवः । सं । चक्राणि । दधन्विरे । अध । त्वेइति । अध । सूर्ये । उत । स्म । हि त्वां । आहुः । इत् । मघऽवानं । शचीऽपते । दातारं । अविऽदीधयुं ॥ उत । स्म । सद्यः । इत् । परि । शशमानाय । सुन्वते ॥ पुरु । चित् । मंहसे । वसु ॥ नहि । स्म । ते । शतं । चन । राधः । वरंते । आऽमुरः ॥ न । च्यौत्नानि । करिष्यतः ॥ अस्मान् । अवंतु । ते । शतं । अस्मान् । सहस्रं । ऊतयः ॥ अस्मान् । विश्वाः । अभिष्टयः ॥ २५ ॥ अस्मान् । इह । वृणीष्व । सख्याय । स्वस्तये ॥ महः । राये । दिविऽत्मते ॥ अस्मान् । अविड्ढि । विश्वहा । इंद्र । राया । परीणसा ॥ अस्मान् । विश्वाभिः ॥ ऊतिऽभिः ॥ अस्मभ्यं । तान् । अप । वृधि । व्रजान् । अस्ताऽइव । गोऽमतः ॥ नवाभिः । इंद्र । ऊतिऽभिः ॥ अस्माकं । धृष्णुऽया । रथः । द्युऽमान् । इंद्र । अनपऽच्युतः ॥ गव्युः । अश्वऽयुः । ईयते ॥ अस्माकं । उत्ऽतमं । कृधि । श्रवः । देवेषु । सूर्य ॥ वर्षिष्ठं । द्याऽइव । उपरि ॥ २६ ॥ ० ॥ वृत्रऽहन् । अस्माकं । अर्धं । आ । गहि । महान् । महीभिः । ऊतिऽभिः ॥ भूमिः । चित् । घ । असि । तूतुजिः । आ । चित्र । चित्रिणीषु । आ । चित्रं । कृणोषि । ऊतये ॥ दभ्रेभिः । चित् । शशीयांसं । हंसि । व्राधंतं । ओजसा ॥ सखिऽभिः । ये । त्वेइति । सचा । वयं । इंद्र । त्वेइति । सचा । वयं । त्वा । अभि । नोनुमः ॥ अस्मान्ऽअस्मान् । इत् । उत् । अव ॥ सः । नः । चित्राभिः । अद्रिऽवः । अनवद्याभिः । ऊतिऽभिः ॥ अनाधृष्टाभिः । आ । गहि ॥ २७ ॥ भूयामोइति । सु । त्वाऽवतः । सखायः । इंद्र ।

गोऽमतः ॥ युजः । वाजाय । घृष्वये ॥ त्वं । हि । एकः । ईशिषे । इंद्र । वाजस्य । गोऽमतः ॥ सः । नः । यंधि । महीं । इषं ॥ न । त्वा । वरंते । अन्यथा । यत् । दित्ससि । स्तुतः । मघं ॥ स्तोतृऽभ्यः । इंद्र । गिर्वणः ॥ ० ॥ अनूषत । प्र । दावने ॥ इंद्रं । वाजाय । घृष्वये ॥ प्र । ते । वोचाम । वीर्या । याः । मंदसानः । आ । अरुजः । पुरः । दासीः । अभिऽइत्य ॥ २८ ॥ ता । ते । गृणंति । वेधसः । यानि । चकर्थ । पौंस्या ॥ सुतेषु । इंद्र । गिर्वणः ॥ अवीवृधंत । गोतमाः । इंद्र । त्वेइति । स्तोमऽवाहसः ॥ आ । एषु । धाः । वीरऽवत् । यशः ॥ ० ॥ शश्वतां । असि । इंद्र । साधारणः । त्वं ॥ तं । त्वा । वयं । हवामहे ॥ अर्वाचीनः । वसोइति । भव । अस्मेइति । सु । मत्स्व । अंधसः ॥ सोमानां । इंद्र । सोमऽपाः ॥ अस्माकं । त्वा । मतीनां । आ । स्तोमः । इंद्र । यच्छतु ॥ अर्वाक् । आ । वर्तय । हरीइति ॥ ० ॥ २९ ॥ सहस्रं । व्यतीनां । युक्तानां । इंद्रं । ईमहे । शतं । सोमस्य । खार्यः ॥ सहस्रा । ते । शता । वयं । गवां । आ । च्यवयामसि ॥ अस्मऽत्रा । राधः । एतु । ते ॥ दश । ते । कलशानां । हिरण्यानां । अधीमहि ॥ भूरिऽदाः । असि । वृत्रऽहन् ॥ भूरिऽदाः । भूरि । देहि । नः । मा । दभ्रं । भूरि । आ । भर ॥ भूरि । घ । इत् । इंद्र । दित्ससि ॥ भूरिऽदाः । हि । असि । श्रुतः । पुरुऽत्रा । शूर । वृत्रऽहन् ॥ आ । नः । भजस्व । राधसि ॥ प्र । ते । बभ्रूइति । विऽचक्षण । शंसामि । गोऽसनः । नपात् ॥ मा । आभ्यां । गाः । अनु । शिश्रथः ॥ कनीनकाऽइव । विद्रधे । नवे । द्रुऽपदे । अर्भके ॥ बभ्रूइति । यामेषु । शोभेतेइति । अरं । मे । उस्रऽयाम्णे । अरं । अनुत्सऽयाम्णे । बभ्रूइति । यामेषु । अस्रिधा ॥ ३० ॥

॥ इति तृतीयाष्टके षष्ठोऽध्यायः ॥ ६ ॥

## ॥ अथ सप्तमोध्याय: ॥

हरिः ॐ ॥ प्र । ऋभुऽभ्यः । दूतंऽइव । वाचं । इष्ये । उपऽस्तिरे । श्वैतरीं । धेनुं । ईळे ॥ ये । वातऽजूताः । तरणिऽभिः । एवैः । परि । द्यां । सद्यः । अपसः । बभूवुः ॥ यदा । अरं । अक्रन् । ऋभवः । पितृऽभ्यां । परिऽविष्टी । वेषणा । दंसनाभिः ॥ आत् । इत् । देवानां । उप । सख्यं । आयन् । धीरासः । पुष्टिं । अवहन् । मनायै ॥ पुनः । ये । चक्रुः ॥ पितरा । युवाना । सना । यूपाऽइव । जरणा । शयाना । ते । वाजः । विऽभ्वा । ऋभुः । इंद्रऽवंतः । मधुऽप्सरसः । नः । अवंतु । यज्ञं ॥ यत् । संऽवत्सं । ऋभवः । गां । अरक्षन् । यत् । संऽवत्सं । ऋभवः । माः । अपिंशन् । यत् । संऽवत्सं । अभरन् । भासः । अस्याः । ताभिः । शमीभिः । अमृतऽत्वं । आशुः ॥ ज्येष्ठः । आह । चमसा । द्वा । कर । इति । कनीयान् । त्रीन् । कृणवाम । इति । आह । कनिष्ठः । आह । चतुरः । कर । इति । त्वष्टा । ऋभवः । तत् । पनयत् । वचः । वः ॥ १ ॥ सत्यं । ऊचुः । नरः । एव । हि । चक्रुः । अनु । स्वधां । ऋभवः । जग्मुः । एतां ॥ विऽभ्राजमानान् । चमसान् । अहाऽइव । अवेनत् । त्वष्टा । चतुरः । ददृश्वान् ॥ द्वादश । द्यून् । यत् । अगोह्यस्य । आतिथ्ये । रणन् । ऋभवः । ससंतः ॥ सुऽक्षेत्रा । अकृण्वन् । अनयंत । सिंधून् । धन्व । आ । अतिष्ठन् । ओषधीः । निम्नं । आपः ॥ रथं । ये । चक्रुः । सुऽवृतं । नरेऽस्थां । ये । धेनुं । विश्वऽजुवं । विश्वऽरूपां ॥ ते । आ । तक्षंतु । ऋभवः । रयिं । नः । सुऽअवसः । सुऽअपसः । सुऽहस्ताः ॥ अपः । हि । एषां । अजुषंत ।

देवाः । अभि । क्रत्वा । मनसा । दीध्यानाः ॥ वाजः । देवानां ।
अभवत् । सुऽकर्मा । इंद्रस्य । ऋभुक्षाः । वरुणस्य । विऽभ्वा । ये ।
हरीइति । मेधया । उक्था । मदंतः । इंद्राय । चक्रुः । सुऽयुजा ।
ये । अश्वा ॥ ते । रायः । पोषं । द्रविणानि । अस्मेइति । धत्त ।
ऋभवः । क्षेमऽयंतः । न । मित्रं ॥ इदा । अह्नः । पीतिं । उत । वः ।
मदं । धुः । न । ऋते । श्रांतस्य । सख्याय । देवाः ॥ ते । नूनं ।
अस्मेइति । ऋभवः । वसूनि । तृतीये । अस्मिन् । सवने । दधात ॥ २ ॥
ऋभुः । विऽभ्वा । वाजः । इंद्रः । नः । अच्छ । इमं । यज्ञं । रत्नऽ-
धेया । उप । यात ॥ इदा । हि । वः । धिषणा । देवी । अह्नां ।
अधात् । पीतिं । सं । मदाः । अग्मत । वः । विदानासः । जन्मनः ।
वाजऽरत्नाः । उत । ऋतुऽभिः । ऋभवः । मादयध्वं ॥ सं । वः ।
मादाः । अग्मत । सं । पुरंऽधिः । सुऽवीरां । अस्मेइति । रयिं । आ ।
ईरयध्वं ॥ अयं । वः । यज्ञः । ऋभवः । अकारि । यं । आ । मनु-
ष्वत् । प्रऽदिवः । दधिध्वे ॥ प्र । वः । अच्छ । जुजुषाणासः । अस्थुः ।
अभूत । विश्वे । अग्रिया । उत । वाजाः ॥ अभूत् । ऊँइति । वः ।
विधते । रत्नऽधेयं । इदा । नरः । दाशुषे । मर्त्याय ॥ पिबत । वाजाः ।
ऋभवः । ददे । वः । महि । तृतीयं । सवनं । मदाय ॥ आ । वाजाः ।
यात । उप । नः । ऋभुक्षाः । महः । नरः । द्रविणसः । गृणानाः ॥
आ । वः । पीतयः । अभिऽपित्वे । अह्नां । इमाः । अस्तं । नवस्वःऽ-
इव । ग्मन् ॥ ३ ॥ आ । नपातः । शवसः । यातन । उप । इमं ।
यज्ञं । नमसा । हूयमानाः ॥ सऽजोषसः । सूरयः । यस्य । च । स्थ ।
मध्वः । पात । रत्नऽधाः । इंद्रऽवंतः ॥ सऽजोषाः । इंद्र । वरुणेन । सोमं ।
सऽजोषाः । पाहि । गिर्वणः । मरुत्ऽभिः । अग्रेऽपाभिः । ऋतुऽपाभिः ।
सऽजोषाः । ग्नाःपत्नीभिः । रत्नऽधाभिः । सऽजोषाः ॥ सऽजोषसः ।

आदित्यैः । मादयध्वं । सऽजोषसः । ऋभवः । पर्वतेभिः ॥ सऽजोषसः । दैव्येन । सवित्रा । सऽजोषसः । सिंधुऽभिः । रत्नऽधेभिः ॥ ये । अश्विना । ये । पितरा । ये । ऊती । धेनुं । ततक्षुः । ऋभवः । ये । अश्वा ॥ ये । अंसत्रा । ये । ऋधक् । रोदसीइति । ये । विऽभ्वः । नरः । सुऽअपत्यानि । चक्रुः ॥ ये । गोऽमंतं । वाजऽवंतं । सुऽवीरं । रयिं । धत्थ । वसुऽमंतं । पुरुऽक्षुं ॥ ते । अग्रेऽपाः । ऋभवः । मंदसानाः । अस्मेइति । धत्त । ये । च । रातिं । गृणंति ॥ न । अप । अभूत । न । वः । अतीतृषाम । अनिःऽशस्ताः । ऋभवः । यज्ञे । अस्मिन् ॥ सं । इंद्रेण । मदथ । सं । मरुत्ऽभिः । सं । राजऽभिः । रत्नऽधेयाय । देवाः ॥ ४ ॥ इह । उप । यात । शवसः । नपातः । सौधन्वनाः । ऋभवः । मा । अप । भूत ॥ अस्मिन् । हि । वः । सवने । रत्नऽधेयं । गमंतु । इंद्रं । अनु । वः । मदासः ॥ आ । अगन् । ऋभूणां । इह । रत्नऽधेयं । अभूत् । सोमस्य । सुऽसुतस्य । पीतिः ॥ सुऽकृत्यया । यत् । सुऽअपस्यया । च । एकं । विऽचक्र । चमसं । चतुःऽधा । वि । अकृणोत । चमसं । चतुःऽधा । सखे । वि । शिक्ष । इति । अब्रवीत ॥ अथ । ऐत । वाजाः । अमृतस्य । पंथां । गणं । देवानां । ऋभवः । सुऽहस्ताः ॥ किंऽमयः । स्वित् । चमसः । एषः । आस । यं । काव्येन । चतुरः । विऽचक्र ॥ अथ । सुनुध्वं । सवनं । मदाय । पात । ऋभवः । मधुनः । सोम्यस्य ॥ शच्या । अकर्त । पितरा । युवाना । शच्या । अकर्त । चमसं । देवऽपानं । शच्या । हरीइति । धनुःऽतरौ । अतष्ट । इंद्रऽवाहौ । ऋभवः । वाजऽरत्नाः ॥ ५ ॥ यः । वः । सुनोति । अभिऽपित्वे । अह्नां । तीव्रं । वाजासः । सवनं । मदाय ॥ तस्मै । रयिं । ऋभवः । सर्वऽवीरं । आ । तक्षत । वृषणः । मंदसानाः ॥ प्रातरिति । सुतं । अपिबः ।

हरिऽअश्व । माध्यंदिनं । सवनं । केवलं । ते ॥ सं । ऋभुऽभिः । पिबस्व । रत्नऽधेभिः । सखीन् । यान् । इंद्र । चकृषे । सुऽकृत्या ॥ ये । देवासः । अभवत । सुऽकृत्या । श्येनाःऽइव । इत् । अधि । दिवि । निऽसेद ॥ ते । रत्नं । धात । शवसः । नपातः । सौधन्वनाः । अभवत । अमृतासः ॥ यत् । तृतीयं । सवनं । रत्नऽधेयं । अकृणुध्वं । सुऽअपस्या । सुऽहस्ताः ॥ तत् । ऋभवः । परिऽसिक्तं । वः । एतत् । सं । मदेभिः । इंद्रियेभिः । पिबध्वं ॥ ६ ॥ ० ॥ उकथ्यः । रथः । त्रिऽचक्रः । परि । वर्तते । रजः ॥ महत् । तत् । वः । देव्यस्य । प्रऽवाचनं । द्यां । ऋभवः । पृथिवीं । यत् । च । पुष्यथ ॥ ० ॥ सुऽचेतसः । अविऽह्वरंतं । मनसः । परि । ध्यया ॥ तान् । ऊँइति । नु । अस्य । सवनस्य । पीतये । आ । वः । वाजाः । ऋभवः । वेदयामसि ॥ तत् । वः । वाजाः । ऋभवः । सुऽप्रवाचनं । देवेषु । विऽभ्वः । अभवत् । महिऽत्वनं ॥ जिव्रीइति । यत् । संता । पितरा । सनाऽजुरा । पुनः । युवाना । चरथाय । तक्षथ । एकं । वि । चक्र । चमसं । चतुःऽवयं । निः । चर्मणः । गां । अरिणीत । धीतिऽभिः ॥ अथ । देवेषु । अमृतऽत्वं । आनश । श्रुष्टी । वाजाः । ऋभवः । तत् । वः । उकथ्यं ॥ ऋभुतः । रयिः । प्रथमश्रवःऽतमः । वाजऽश्रुतासः । यं । अजीजनन् । नरः ॥ विभ्वऽतष्टः । विदथेषु । प्रऽवाच्यः । यं । देवासः । अवथ । सः । विऽचर्षणिः ॥ ७ ॥ सः । वाजी । अर्वा । सः । ऋषिः । वचस्यया । सः । शूरः । अस्ता । पृतनासु । दुस्तरः ॥ सः । रायः । पोषं । सः । सुऽवीर्यं । दधे । यं । वाजः । विऽभ्वा । ऋभवः । यं । आविषुः ॥ श्रेष्ठं । वः । पेशः । अधि । धायि । दर्शतं । स्तोमः । वाजाः । ऋभवः । तं । जुजुष्टन ॥ धीरासः । हि । स्थ । कवयः । विपःऽचितः । तान् । वः । एना । ब्रह्मणा । आ । वेदयामसि ॥ यूयं ।

अस्मभ्यं । धिषणाभ्यः । परि । विद्वांसः । विश्वा । नर्याणि । भोजना ॥
द्युऽमंतं । वाजं । वृषऽशुष्मं । उत्ऽतमं । आ । नः । रयिं । ऋभवः ।
तक्षत । आ । वयः ॥ इह । प्रऽजां । इह । रयिं । रराणाः । इह ।
श्रवः । वीरऽवत् । तक्षत । नः ॥ येन । वयं । चितयेम । अति ।
अन्यान् । तं । वाजं । चित्रं । ऋभवः । दद । नः ॥ ८ ॥ उप । नः ।
वाजाः । अध्वरं । ऋभुक्षाः । देवाः । यात । पथिऽभिः । देवऽयानैः ॥
यथा । यज्ञं । मनुषः । विक्षु । आसु । दधिध्वे । रण्वाः । सुऽदिनेषु ।
अह्नां ॥ ते । वः । हृदे । मनसे । संतु । यज्ञाः । जुष्टासः । अद्य ।
घृतऽनिर्निजः । गुः ॥ प्र । वः । सुतासः । हरयंत ॥ पूर्णाः । क्रत्वे ।
दक्षाय । हर्षयंत । पीताः ॥ त्रिऽउदायं । देवऽहितं । यथा । वः ।
स्तोमः । वाजाः । ऋभुक्षणः । ददे । वः ॥ जुह्वे । मनुष्वत् । उपरासु ।
विक्षु । युष्मेइति । सचा । बृहत्ऽदिवेषु । सोमं ॥ पीवःऽअश्वाः ।
शुचत्ऽरथाः । हि । भूत । अयःऽशिप्राः । वाजिनः । सुऽनिष्काः । इंद्रस्य ।
सूनोइति । शवसः । नपातः । अनु । वः । चेति । अग्रियं । मदाय ॥
ऋभुं । ऋभुक्षणः । रयिं । वाजे । वाजिन्ऽतमं । युजं ॥ इंद्रस्वंतं ।
हवामहे । सदाऽसातमं । अश्विनं ॥ ९ ॥ सः । इत् । ऋभवः । यं ।
अवथ । यूयं । इंद्रः । च । मर्त्यं । सः । धीभिः । अस्तु । सनिता ।
मेधऽसाता । सः । अर्वता ॥ वि । नः । वाजाः । ऋभुक्षणः । पथः ।
चितन । यष्टवे ॥ अस्मभ्यं । सूरयः । स्तुताः । विश्वाः । आशाः ।
तरीषणि ॥ तं । नः । वाजाः । ऋभुक्षणः । इंद्र । नासत्या । रयिं ॥
सं । अश्वं । चर्षणिऽभ्यः । आ । पुरु । शस्त । मघत्तये ॥ १० ॥
उतोइति । हि । वां । दात्रा । संति । पूर्वा । या । पुरुऽभ्यः । त्रस-
दस्युः । निऽतोशे ॥ क्षेत्रऽसां । ददथुः । उर्वराऽसां । घनं । दस्युऽभ्यः ।
अभिऽभूतिं । उग्रं ॥ उत । वाजिनं । पुरुनिःऽसिध्वानं । दधिऽक्रां ।

ऊँइति । दृदथुः । विश्वऽकृष्टि ॥ ऋजिप्यं । श्येनं । प्रुषितऽप्सुं । आशुं । चर्कृत्यं । अर्यः । नृऽपतिं । न । शूरं ॥ यं । सीं । अनु । प्रवताऽइव । द्रवंतं । विश्वः । पूरुः । मदति । हर्षमाणः ॥ पट्ऽभिः । गृध्यंतं । मेधऽयुं । न । शूरं । रथऽतुरं । वातंऽइव । ध्रजंतं ॥ यः । स्म । आऽरुंधानः । गध्या । समत्ऽसु । सनुऽतरः । चरति । गोषु । गच्छन् । आविःऽऋजीकः । विदथा । निऽचिक्यत् । तिरः । अरतिं । परि । आपः । आयोः ॥ उत । स्म । एनं । वस्त्रऽमथिं । न । तायुं । अनु । क्रोशंति । क्षितयः । भरेषु ॥ नीचा । अयमानं । जसुरिं । न । श्येनं । श्रवः । च । अच्छ । पशुऽमत् । च । यूथं ॥ ११ ॥ उत । स्म । आसु । प्रथमः । सरिष्यन् । नि । वेवेति । श्रेणिऽभिः । रथानां ॥ स्रजं । कृण्वानः । जन्यः । न । शुभ्वा । रेणुं । रेरिहत् । किरणं । ददश्वान् ॥ उत । स्यः । वाजी । सहुरिः । ऋतऽवा । शुश्रूषमाणः । तन्वा । सऽमर्ये ॥ तुरं । यतीषु । तुरयन् । ऋजिप्यः । अधि । भ्रुवोः । किरते । रेणुं । ऋंजन् ॥ उत । स्म । अस्य । तन्यतोःऽइव । द्योः । ऋघायतः । अभिऽयुजः । भयंते ॥ यदा । सहस्रं । अभि । सीं । अयोधीत् । दुःऽवर्तुः । स्म । भवति । भीमः । ऋंजन् ॥ ० ॥ पन-यंति । जनाः । जूतिं । कृष्टिऽप्रः । अभिऽभूतिं । आशोः ॥ उत । एनं । आहुः । संऽइथे । विऽयंतः । परा । दधिऽक्राः । असरत् । सहस्रैः ॥ आ । दधिऽक्राः । शवसा । पंच । कृष्टीः । सूर्यःऽइव । ज्यो-तिषा । अपः । ततान ॥ सहस्रऽसाः । शतऽसाः । वाजी । अर्वा । पृणक्तु । मध्वा । सं । इमा । वचांसि ॥ १२ ॥ आशुं । दधिऽक्रां । तं । ऊँइति । नु । स्तवाम । दिवः । पृथिव्याः । उत । चर्किराम ॥ उच्छं-तीः । मां । उषसः । सूदयंतु । अति । विश्वानि । दुःऽइतानि । पर्षन् ॥ महः । चर्कर्मि । अर्वतः । क्रतुऽप्राः । दधिऽक्राव्णः । पुरुऽ

वारस्य । वृष्णः ॥ यं । पुरुऽभ्यः । दीदिऽवांसं । न । अग्निं । ददथुः । मित्रावरुणा । ततुरिं ॥ यः । अश्वस्य । दधिऽक्राव्णः । अकारीत् । संऽइद्धे । अग्नौ । उषसः । विऽउष्टौ । अनागसं । तं । अदितिः । कृणोतु । सः । मित्रेण । वरुणेन । सऽजोषाः ॥ दधिऽक्राव्णः । इषः । ऊर्जः । महः । यत् । अमंमहि । मरुतां । नाम । भद्रं ॥ स्वस्तये । वरुणं । मित्रं । अग्निं । हवामहे । इंद्रं । वज्रऽबाहुं ॥ इंद्रंऽइव । इत् । उभये । वि । ह्वयंते । उत्ऽईराणाः । यज्ञं । उपऽप्रयंतः ॥ दधिऽक्रां । ऊँ इति । सूदनं । मर्त्याय । ददथुः । मित्रावरुणा । नः । अश्वं ॥ दधिऽक्राव्णः । अकारिषं । जिष्णोः । अश्वस्य । वाजिनः ॥ सुरभि । नः । मुखा । करत् । प्र । नः । आयूंषि । तारिषत् ॥ १३ ॥ दधिऽक्राव्णः । इत् । ऊँ इति । नु । चर्किराम । विश्वाः । इत् । मां । उषसः । सूदयंतु ॥ अपां । अग्नेः । उषसः । सूर्यस्य । बृहस्पतेः । आंगिरसस्य । जिष्णोः ॥ सत्वा । भरिषः । गोऽइषः । दुवन्यऽसत् । श्रवस्यात् । इषः । उषसः । तुरण्यऽसत् ॥ सत्यः । द्रवः । द्रवरः । पतंगरः । दधिऽक्रावा । इषं । ऊर्जं । स्वः । जनत् ॥ उत । स्म । अस्य । द्रवतः । तुरण्यतः । पर्णं । न । वेः । अनु । वाति । प्रऽगर्धिनः ॥ श्येनस्यऽइव । ध्रजतः । अंकसं । परि । दधिऽक्राव्णः । सह । ऊर्जा । तरित्रतः ॥ उत । स्यः । वाजी । क्षिपणिं । तुरण्यति । ग्रीवायां । बद्धः । अपिऽकक्षे । आसनि ॥ क्रतुं । दधिऽक्राः । अनु । संऽतवीत्वत् । पथां । अंकांसि । अनु । आऽपनीफणत् ॥ हंसः । शुचिऽसत् । वसुः । अंतरिक्षऽसत् । होता । वेदिऽसत् । अतिथिः । दुरोणऽसत् ॥ नृऽसत् । वरऽसत् । ऋतऽसत् । व्योमऽसत् । अप्ऽजाः । गोऽजाः । ऋतऽजाः । अद्रिऽजाः । ऋतं ॥ १४ ॥ इंद्रा । कः । वां । वरुणा । सुम्नं । आप । स्तोमः । हविष्मान् । अमृतः । न । होता ॥ यः । वां ।

हृदि । क्रतुऽमान् । अस्मत् । उक्तः । पस्पर्शत् । इंद्रावरुणा । नमस्वान् ॥ इंद्रा । ह । यः । वरुणा । चक्रे । आपीइति । देवौ । मर्तः । सख्याय । प्रयस्वान् ॥ सः । हंति । वृत्रा । संऽइथेषु । शत्रून् । अवःऽभिः । वा । महत्ऽभिः । सः । प्र । शृण्वे । इंद्रा । ह । रत्नौ । वरुणा । धेष्ठा । इत्था । नृऽभ्यः । शशमानेभ्यः । ता ॥ यदि । सखाया । सख्याय । सोमैः । सुतेभिः । सुऽप्रयसा । मादयैतेइति ॥ इंद्रा । युवं । वरुणा । दिद्युं । अस्मिन् । ओजिष्ठं । उग्रा । नि । वधिष्टं । वज्रं ॥ यः । नः । दुःऽएवः । वृकतिः । दभीतिः । तस्मिन् । मिमाथां । अभिऽभूति । ओजः ॥ ० ॥ भूतं । अस्याः । धियः । प्रेतारा । वृषभाऽइव । धेनोः ॥ सा । नः । दुहीयत् । यवसाऽइव । गत्वी । सहस्रऽधारा । पयसा । मही । गौः ॥ १५ ॥ तोके । हिते । तनये । उर्वरासु । सूरः । दृशीके । वृषणः । च । पौंस्ये ॥ इंद्रा । नः । अत्र । वरुणा । स्यातां । अवःऽभिः । दस्मा । परिऽतक्म्यायां ॥ युवां । इत् । हि । अवसे । पूर्व्याय । परि । प्रभूतीइतिप्रऽभूती । गोऽइषः । स्वापीइतिसुऽआपी ॥ वृणीमहे । सख्याय । प्रियाय । शूरा । मंहिष्ठा । पितराऽइव । शंभूइतिशंऽभू ॥ ताः । वां । धियः । अवसे । वाजऽयंतीः । आजिं । न । जग्मुः । युवऽयूः । सुदानूइतिसुऽदानू । श्रिये । न । गावः । उप । सोमं । अस्थुः । इंद्रं । गिरः । वरुणं । मे । मनीषाः ॥ इमाः । इंद्रं । वरुणं । मे । मनीषाः । अग्मन् । उप । द्रविणं । इच्छमानाः ॥ उप । ईं । अस्थुः । जोष्टारःऽइव । वस्वः । रघ्वीःऽइव । श्रवसः । भिक्षमाणाः । अश्व्यस्य । त्मना । रथ्यस्य । पुष्टेः । नित्यस्य । रायः । पतयः । स्याम ॥ ता । चक्राणौ । ऊतिऽभिः । नव्यसीभिः । अस्मऽत्रा । रायः । निऽयुतः । सचंतां ॥ आ । नः । बृहंता । बृहतीभिः । ऊती । इंद्र । यातं । वरुण । वाजऽसातौ ॥

यत् । द्विऽवः । पृतनासु । प्रऽक्रीळान् । तस्य । वां । स्याम । सनितारः । आजेः ॥ १६ ॥ मम । द्विता । राष्ट्रं । क्षत्रियस्य । विश्वऽआयोः । विश्वे । अमृताः । यथा । नः ॥ क्रतुं । सचंते । वरुणस्य । देवाः । राजामि । कृष्टेः । उपऽमस्य । वव्रेः ॥ अहं । राजा । वरुणः । मह्यं । तानि । असुर्याणि । प्रथमा । धारयंत ॥ ० ॥ अहं । इंद्रः । वरुणः । तेइति । महिऽत्वा । उर्वीइति । गभीरेइति । रजसीइति । सुमेकेइतिसुऽमेके ॥ त्वष्टाऽइव । विश्वा । भुवनानि । विद्वान् । सं । ऐरयं । रोदसीइति । धारयं । च ॥ अहं । अपः । अपिन्वं । उक्षमाणाः । धारयं । दिवं । सदने । ऋतस्य । ऋतेन । पुत्रः । अदितेः । ऋतऽवा । उत । त्रिऽधातु । प्रथयत् । वि । भूम ॥ मां । नरः । सुऽअश्वाः । वाजयंतः । मां । वृताः । संऽअरणे । हवंते ॥ कृणोमि । आजिं । मघऽवा । अहं । इंद्रः । इयर्मि । रेणुं । अभिभूतिऽओजाः ॥ १७ ॥ अहं । ता । विश्वा । चकरं । नकिः । मा । दैव्यं । सहः । वरते । अप्रतिऽइतं ॥ यत् । मा । सोमासः । ममदन् । यत् । उक्था । उभेइति । भयेतेइति । रजसीइति । अपारेइति । विदुः । ते । विश्वा । भुवनानि । तस्य । ता । प्र । ब्रवीषि । वरुणाय । वेधः ॥ त्वं । वृत्राणि । शृण्विषे । जघन्वान् । त्वं । वृतान् । अरिणाः । इंद्र । सिंधून् ॥ ० ॥ ते । आसन् । सप्त । ऋषयः । दौःऽगहे । बध्यमाने ॥ ते । आ । अयजंत । त्रसदस्युं । अस्याः । इंद्रं । न । वृत्रऽतुरं । अर्धऽदेवं ॥ पुरुऽकुत्सानी । हि । वां । अदाशत् । हव्येभिः । इंद्रावरुणा । नमःऽभिः ॥ अथ । राजानं । त्रसदस्युं । अस्याः । वृत्रऽहनं । ददथुः । अर्धऽदेवं ॥ राया । वयं । ससऽवांसः । मदेम । हव्येन । देवाः । यवसे । न । गावः ॥ तां । धेनुं । इंद्रावरुणा । युवं । नः । विश्वाहा । धत्तं । अनपऽस्फुरंतीं ॥ १८ ॥ कः । ऊँइति । श्रवत् । कतमः । यज्ञियानां । वंदारु । देवः । कतमः । जुषाते ॥ कस्य । इमां । देवीं । अमृतेषु । प्रेष्ठां । हृदि । श्रेषाम । सुऽस्तुतिं ।

सुऽहव्यां ॥ कः । मृळाति । कतमः । आऽगमिष्ठः । देवानां । ऊँइति ।
कतमः । शंऽभविष्ठः ॥ रथं । कं । आहुः । द्रवत्ऽअश्वं । आशुं ।
यं । सूर्यस्य । दुहिता । अवृणीत ॥ मक्षु । हि । स्म । गच्छथः ।
ईवतः । द्यून् । इंद्रः । न । शक्तिं । परिऽतक्म्यायां ॥ दिवः । आऽ-
जाता । दिव्या । सुऽपर्णा । कया । शचीनां । भवथः । शचिष्ठा ॥
का । वां । भूत् । उपऽमातिः । कया । नः । आ । अश्विना । गमथः ।
हूयमाना ॥ कः । वां । महः । चित् । त्यजसः । अभीके । उरुष्यतं ।
माध्वीइति । दस्रा । नः । ऊती ॥ उरु । वां । रथः । परि । नक्षति ।
द्यां । आ । यत् । समुद्रात् । अभि । वर्तते । वां ॥ मध्वा । माध्वी-
इति । मधु । वां । प्रुषायन् । यत् । सीं । वां । पृक्षः । भुरजंत ।
पक्वाः ॥ सिंधुः । ह । वां । रसया । सिंचत् । अश्वान् । घृणा । वयः ।
अरुषासः । परि । ग्मन् ॥ तत् । ऊँइति । सु । वां । अजिरं । चेति ।
यानं । येन । पतीइति । भवथः । सूर्यायाः ॥ इहऽइह । यत् । वां ।
समना । पपृक्षे । सा । इयं । अस्मेइति । सुऽमतिः । वाजऽरत्ना ॥
उरुष्यतं । जरितारं । युवं । ह । श्रितः । कामः । नासत्या । युव-
द्रिक् ॥ १९ ॥ ० ॥ पृथुऽज्रयं । अश्विना । संऽगतिं । गोः ॥ यः ।
सूर्यां । वहति । वंधुरऽयुः । गिर्वाहसं । पुरुऽतमं । वसुऽयुं ॥ युवं ।
श्रियं । अश्विना । देवता । तां । दिवः । नपाता । वनथः । शचीभिः ॥
युवोः । वपुः । अभि । पृक्षः । सचंते । वहंति । यत् । ककुहासः ।
रथे । वां ॥ कः । वां । अद्य । करते । रातऽहव्यः । ऊतये । वा ।
सुतऽपेयाय । वा । अर्कैः ॥ ऋतस्य । वा । वनुषे । पूर्व्याय । नमः ।
येमानः । अश्विना । आ । ववर्तत् ॥ हिरण्ययेन । पुरुभूइति पुरुऽभू ।
रथेन । इमं । यज्ञं । नासत्या । उप । यातं ॥ पिबाथः । इत् । मधुनः ।
सोम्यस्य । दधथः । रत्नं । विधते । जनाय ॥ आ । नः । यातं ।
दिवः । अच्छ । पृथिव्याः । हिरण्ययेन । सुऽवृता । रथेन ॥ मा ।
वां । अन्ये । नि । यमन् । देवऽयंतः । सं । यत् । ददे । नाभिः ।

पूर्व्या । वां ॥ नु । नः । र॒यिं । पु॒रु॒ऽवीरं॑ । बृ॒हंतं॑ । दस्रा॑ । मिमा॑थां । उ॒भये॑षु । अ॒स्मेइति॑ ॥ नरः॑ । यत् । वां॒ । अ॒श्वि॒ना॒ । स्तोमं॑ । आव॑न् । स॒ध॒ऽस्तु॑तिं । आ॒ज॒ऽमी॒ळ्हास॑ः । अ॒ग्म॒न् ॥ ० ॥ २० ॥ ए॒षः । स्यः । भा॒नुः । उत् । इ॒य॒र्ति॒ । यु॒ज्यते॑ । रथः॑ । परि॑ऽज्मा । दि॒वः । अ॒स्य । सान॑वि ॥ पृ॒क्षास॑ः । अ॒स्मि॒न् । मि॒थु॒नाः । अधि॑ । त्रयः॑ । दृतिः॑ । तु॒रीयः॑ । मधु॑नः । वि । र॒प्श॒ते॒ ॥ उत् । वां॒ । पृ॒क्षास॑ः । मधु॑ऽमंतः । ईर॑ते । रथाः॑ । अश्वा॑सः । उ॒षसः॑ । विऽउ॑ष्टिषु ॥ अ॒प॒ऽऊ॒र्णु॒वंतः॑ । तमः॑ । आ । परि॑ऽवृतं । स्वः॑ । न । शु॒क्रं । त॒न्वंतः॑ । आ । रजः॑ ॥ मध्वः॑ । पि॒ब॒तं॒ । म॒धु॒ऽपेभिः॑ । आ॒सऽभिः॑ । उ॒त । प्रि॒यं । मधु॑ने । यु॒ंजाथां॑ । रथं॑ ॥ आ । व॒र्त॒निं । मधु॑ना । जि॒न्व॒थः॒ । प॒थः । दृतिं॑ । व॒हे॒थे॒इति॑ । मधु॑ऽमंतं । अ॒श्वि॒ना॒ ॥ हं॒सास॑ः । ये । वां॒ । मधु॑ऽमंतः । अ॒स्रिधः॑ । हिर॑ण्यऽपर्णाः । उ॒हुवः॑ । उ॒षः॒ऽबुधः॑ ॥ उ॒द॒ऽप्रुतः॑ । मं॒दिनः॑ । म॒दि॒ऽनि॒स्पृशः॑ । मध्वः॑ । न । मक्षः॑ । सव॑नानि । ग॒च्छ॒थः॒ ॥ सु॒ऽअ॒ध्व॒रासः॑ । मधु॑ऽमंतः । अ॒ग्नयः॑ । उ॒स्रा । ज॒र॒न्ते॒ । प्रति॑ । वस्तोः॑ । अ॒श्विना॑ ॥ यत् । नि॒क्त॒ऽह॑स्तः । त॒रणिः॑ । वि॒ऽच॒क्ष॒णः । सोमं॑ । सु॒साव॑ । मधु॑ऽमंतं । अद्रि॑ऽभिः ॥ आ॒के॒ऽनि॒पास॑ः । अह॑ऽभिः । दवि॑ध्वतः ॥ ० ॥ सूरः॑ । चि॒त् । अश्वा॑न् । यु॒यु॒जा॒नः । ई॒य॒ते॒ । विश्वा॑न् । अनु॑ । स्व॒धया॑ । चे॒त॒थः॒ । प॒थः ॥ प्र । वां॒ । अ॒वो॒च॒ं । अ॒श्वि॒ना॒ । धि॒यं॒ऽधाः । रथः॑ । सु॒ऽअश्वः॑ । अ॒जरः॑ । यः । अस्ति॑ ॥ येन॑ । स॒द्यः । परि॑ । रजां॑सि । या॒थः । ह॒विष्मं॑तं । त॒रणिं॑ । भो॒जं । अच्छ॑ ॥ २१ ॥ अग्रं॑ । पि॒ब॒ । मधू॑नां । सु॒तं । वा॒यो॒इति॑ । दिवि॑ष्टिषु ॥ त्वं । हि । पू॒र्व॒ऽपाः । असि॑ ॥ श॒तेन॑ । नः॒ । अ॒भिष्टि॑ऽभिः । नि॒युत्वा॑न् । इंद्र॑ऽसारथिः ॥ वायो॒इति॑ । सु॒तस्य॑ । तृं॒प॒तं॒ ॥ आ । वां॒ । स॒हस्रं॑ । हर॑यः । इंद्र॑वायू॒इति॑ । अ॒भि । प्रयः॑ ॥ वहं॑तु । सोम॑ऽपीतये ॥ रथं॑ । हिर॑ण्यऽवंधुरं । इंद्र॑वायू॒इति॑ । सु॒ऽअ॒ध्व॒रं ॥ आ । हि । स्थाथः॑ । दि॒वि॒ऽस्पृशं॑ ॥ रथे॑न । पृ॒थु॒ऽपाज॑सा । दा॒श्वांसं॑ । उप॑ । ग॒च्छ॒त॒ं ॥ इंद्र॑वायू॒इति॑ । इ॒ह । आ ।

गतं ॥ इंद्रवायूइति । अयं । सुतः । तं । देवेभिः । सऽजोषसा ॥
पिबतं । दाशुषः । गृहे ॥ इह । प्रऽयानं । अस्तु । वां । इंद्रवायूइति ।
विऽमोचनं ॥ इह । वां । सोमऽपीतये ॥ २२ ॥ वायोइति । शुक्रः ।
अयामि । ते । मध्वः । अग्रं । दिविष्टिषु ॥ आ । याहि । सोमऽपी-
तये । स्वार्हः । देव । नियुत्वता ॥ इंद्रः । च । वायोइति । एषां ।
सोमानां । पीतिं । अर्हथः ॥ युवां । हि । यंति । इंदवः । निम्नं ।
आपः । न । सध्र्यक् ॥ वायोइति । इंद्रः । च । शुष्मिणा । सऽरथं ।
शवसः । पतीइति ॥ नियुत्वंता । नः । ऊतये । आ । यातं । सोमऽ-
पीतये ॥ याः । वां । संति । पुरुऽस्पृहः । निऽयुतः । दाशुषे । नरा ॥
अस्मेइति । ताः । यज्ञऽवाहसा । इंद्रवायूइति । नि । यच्छतं ॥ २३ ॥
विहि । होत्राः । अवीताः । विपः । न । रायः । अर्यः ॥ वायोइति ।
आ । चंद्रेण । रथेन । याहि । सुतस्य । पीतये ॥ निःऽयुवानः ।
अशस्तीः । नियुत्वान् । इंद्रऽसारथिः ॥ ० ॥ अनु । कृष्णेइति ।
वसुधितीइतिवसुऽधिती । येमातेइति । विश्वऽपेशसा ॥ ० ॥ वहंतु ।
त्वा । मनःऽयुजः । युक्तासः । नवतिः । नव ॥ ० ॥ वायोइति ।
शतं । हरीणां । युवस्व । पोष्याणां ॥ उत । वा । ते । सहस्रिणः ।
रथः । आ । यातु । पाजसा ॥ २४ ॥ इदं । वां । आस्ये । हविः ।
प्रियं । इंद्राबृहस्पतीइति ॥ उक्थं । मदः । च । शस्यते ॥ अयं । वां ।
परि । सिच्यते । सोमः । इंद्राबृहस्पतीइति ॥ चारुः । मदाय । पीत-
ये ॥ आ । नः । इंद्राबृहस्पतीइति । गृहं । इंद्रः । च । गच्छतं ॥
सोमऽपा । सोमऽपीतये ॥ अस्मेइति । इंद्राबृहस्पतीइति । रयिं ।
धत्तं । शतऽग्विनं ॥ अश्वऽवंतं । सहस्रिणं । इंद्राबृहस्पतीइति । वयं ।
सुते । गीःऽभिः । हवामहे ॥ ० ॥ सोमं । इंद्राबृहस्पतीइति । पिबतं ।
दाशुषः । गृहे ॥ मादयेथां । तत्ऽओकसा ॥ २५ ॥ यः । तस्तंभ ।
सहसा । वि । ज्मः । अंतान् । बृहस्पतिः । त्रिऽसधस्थः । रवेण ॥
तं । प्रत्नासः । ऋषयः । दीध्यानाः । पुरः । विप्राः । दधिरे । मंद्रऽ-

जिंह्वं ॥ धुनऽइंतयः । सुऽप्रकेतं । मदंतः । बृहंस्पते । अभि । ये । नः । ततस्रे ॥ पृषंतं । सृप्रं । अदंब्धं । ऊर्वं । बृहंस्पते । रक्षतात् । अस्य । योनिं ॥ बृहंस्पते । या । परमा । पराऽवत् । अतः । आ । ते । ऋतऽस्पृशः । नि । सेदुः ॥ तुभ्यं । खाताः । अवताः । अद्रिऽदुग्धाः । मध्वंः । श्चोतंति । अभितः । विऽरप्शं ॥ बृहस्पतिः । प्रथमं । जायंमानः । महः । ज्योतिषः । परमे । विऽओमन् ॥ सप्तऽआस्यः । तुविऽजातः । रवेण । वि । सप्तऽरश्मिः । अधमत् । तमांसि ॥ ० ॥ ऋक्वंता । गणेन । वलं । रुरोज । फलिऽगं । रवेण । बृहस्पतिः । उस्रियाः । हव्यऽसूदः । कनिंक्रदत् । वावंशतीः । उत् । आजत् ॥ २६ ॥ एव । पित्रे । विश्वऽदेवाय । वृष्णे । यज्ञैः । विधेम । नमंसा । हविःऽभिः ॥ बृहंस्पते । सुऽप्रजाः । वीरऽवंतः । वयं । स्याम । पतंयः । रयीणां ॥ सः । इत् । राजा । प्रतिंऽजन्यानि । विश्वा । शुष्मेण । तस्थौ । अभि । वीर्येण ॥ बृहस्पतिं । यः । सुऽभृतं । बिभर्ति । वल्गुऽयति । वंदते । पूर्वऽभाजं ॥ सः । इत् । क्षेति । सुऽधितः । ओकंसि । स्वे । तस्मै । इळा । पिन्वते । विश्वऽदानीं ॥ तस्मै । विशः । स्वयं । एव । नमंते । यस्मिन् । ब्रह्मा । राजंनि । पूर्वः । एति ॥ अप्रतिऽइतः । जयति । सं । धनानि । प्रतिंऽजन्यानि । उत । या । सऽजन्या ॥ अवस्यवे । यः । वरिवः । कृणोति । ब्रह्मणे । राजा । तं । अवंति । देवाः ॥ इंद्रः । च । सोमं । पिबतं । बृहस्पते । अस्मिन् । यज्ञे । मंदसाना । वृषण्वसू इतिवृषण्ऽवसू । आ । वां । विशंतु । इंदवः । सुऽआभुवः । अस्मे इति । रयिं । सर्वऽवीरं । नि । यच्छतं ॥ बृहंस्पते । इंद्र । वर्धतं । नः । सचा । सा । वां । सुऽमतिः । भूतु । अस्मे इति ॥ अविष्टं । धियः । जिगृतं । पुरंऽधीः । जजस्तं । अर्यः । वनुषां । अरातीः ॥ २७ ॥

॥ इति तृतीयाष्टके सप्तमोऽध्यायः ॥ ७ ॥

## ॥ अथ अष्टमोध्यायः ॥

हरिः ॐ ॥ इदं । ऊँइति । त्यत् । पुरुऽतमं । पुरस्तात् । ज्योतिः । तमसः । वयुनऽवत् । अस्थात् ॥ नूनं । दिवः । दुहितरः । विऽभातीः । गातुं । कृणवन् । उषसः । जनाय ॥ अस्थुः । ऊँइति । चित्राः । उषसः । पुरस्तात् । मिताःऽइव । स्वरवः । अध्वरेषु ॥ वि । ऊँइति । व्रजस्य । तमसः । द्वारा । उच्छंतीः । अव्रन् । शुचयः । पावकाः ॥ उच्छंतीः । अद्य । चितयंत । भोजान् । राधःऽदेयाय । उषसः । मघोनीः ॥ अचित्रे । अंतरिति । पणयः । ससंतु । अबुध्यमानाः । तमसः । विऽमध्ये ॥ कुवित् । सः । देवीः । सनयः । नवः । वा । यामः । बभूयात् । उषसः । वः । अद्य ॥ येन । नवऽग्वे । अंगिरे । दशऽग्वे । सप्तऽआस्ये । रेवतीः । रेवत् । ऊष ॥ यूयं । हि । देवीः । ऋतयुक्ऽभिः । अश्वैः । परिऽप्रयाथ । भुवनानि । सद्यः ॥ प्रऽबोधयंतीः । उषसः । ससंतं । द्विऽपात् । चतुःऽपात् । चरथाय । जीवं ॥ १ ॥ क्व । स्वित् । आसां । कतमा । पुराणी । यया । विऽधाना । विऽदधुः । ऋभूणां ॥ शुभं । यत् । शुभ्राः । उषसः । चरंति । न । वि । ज्ञायंते । सऽदृशीः । अजुर्याः ॥ ताः । घ । ताः । भद्राः । उषसः । पुरा । आसुः । अभिद्युऽद्युम्नाः । ऋतजातऽसत्याः ॥ यासु । ईजानः । शशमानः । उक्थैः । स्तुवन् । शंसं । द्रविणं । सद्यः । आप ॥ ताः । आ । चरंति । समना । पुरस्तात् । समानतः । समना । पप्रथानाः ॥ ऋतस्य । देवीः । सदसः । बुधानाः । गवां । न । सर्गाः । उषसः । जरंते ॥ ताः । इत् । नु । एव । समना । समानीः । अमीतऽवर्णाः । उषसः । चरंति ॥ गूहंतीः । अभ्वं । असितं । रुशत्ऽ-

भिः । शुक्राः । तनूभिः । शुचयः । रुचानाः । रयिं । दिवः । दुहितरः । विऽभातीः । प्रजाऽवंतं । यच्छत । अस्मासु । देवीः ॥ स्योनात् । आ । वः । प्रतिऽबुध्यमानाः । सुऽवीर्यस्य । पतयः । स्याम ॥ तत् । वः । दिवः । दुहितरः । विऽभातीः । उप । ब्रुवे । उषसः । यज्ञऽकेतुः ॥ वयं । स्याम । यशसः । जनेषु । तत् । द्यौः । च । धत्तां । पृथिवी । च । देवी ॥ २ ॥ प्रति । स्या । सूनरी । जनी । विऽउच्छंती । परि । स्वसुः ॥ दिवः । अदर्शि । दुहिता । अश्वाऽइव । चित्रा । अरुषी । माता । गवां । ऋतऽवरी ॥ सखा । अभूत् । अश्विनोः । उषाः ॥ उत । सखा । असि । अश्विनोः । उत । माता । गवां । असि ॥ उत । उषः । वस्वः । ईशिषे ॥ यवयत्ऽद्वेषसं । त्वा । चिकित्वित् । सूनृताऽवरि ॥ प्रति । स्तोमैः । अभुत्स्महि ॥ प्रति । भद्राः । अदृक्षत । गवां । सर्गाः । न । रश्मयः ॥ आ । उषाः । अप्राः । उरु । ज्रयः ॥ आऽपप्रुषी । विभाऽवरि । वि । आवः । ज्योतिषा । तमः । उषः । अनु । स्वधां । अव ॥ आ । द्यां । तनोषि । रश्मिऽभिः । आ । अंतरिक्षं । उरु । प्रियं ॥ उषः । शुक्रेण । शोचिषा ॥ ३ ॥ तत् । देवस्य । सवितुः । वार्यं । महत् । वृणीमहे । असुरस्य । प्रऽचेतसः ॥ छर्दिः । येन । दाशुषे । यच्छति । त्मना । तत् । नः । महान् । उत् । अयान् । देवः । अक्तुऽभिः ॥ दिवः । धर्ता । भुवनस्य । प्रजाऽपतिः । पिशंगं । द्रापिं । प्रति । मुंचते । कविः । विऽचक्षणः । प्रथयन् । आऽपृणन् । उरु । अजीजनत् । सविता । सुम्नं । उक्थ्यं ॥ आ । अप्राः । रजांसि । दिव्यानि । पार्थिवा । श्लोकं । देवः । कृणुते । स्वाय । धर्मणे ॥ प्र । बाहूइति । अस्राक् । सविता । सवीमनि । निऽवेशयन् । प्रऽसुवन् । अक्तुऽभिः । जगत् ॥ अदाभ्यः । भुवनानि । प्रऽचाकशत् । व्रतानि । देवः । सविता । अभि । रक्षते ॥ प्र । अस्राक् । बाहूइति । भुवनस्य । प्रऽजाभ्यः । धृतऽव्रतः । महः । अज्मस्य । राजति ॥ त्रिः । अंतरिक्षं । सविता । महिऽत्वना । त्री ।

रजांसि । परिऽभूः । त्रीणि । रोचना ॥ तिस्रः । दिवः । पृथिवीः । तिस्रः । इन्वति । त्रिऽभिः । व्रतैः । अभि । नः । रक्षति । त्मना ॥ बृहत्ऽसुम्नः । प्रऽसविता । निऽवेशनः । जगतः । स्थातुः । उभयस्य । यः । वशी ॥ सः । नः देवः । सविता । शर्म । यच्छतु । अस्मेइति । क्षयाय । त्रिऽवरूथं । अंहसः ॥ आ । अगन् । देवः । ऋतुऽभिः । वर्धतु । क्षयं । दधातु । नः । सविता । सुऽप्रजां । इषं ॥ सः । नः । क्षपाभिः । अहऽभिः । च । जिन्वतु । प्रजाऽवंतं । रयिं । अस्मेइति । सं । इन्वतु ॥ ४ ॥ अभूत् । देवः । सविता ॥ वंद्यः । नु । नः । इदानीं । अह्नः । उपऽवाच्यः । नृऽभिः ॥ वि । यः । रत्ना । भजति । मानवेभ्यः । श्रेष्ठं । नः । अत्र । द्रविणं । यथा । दधत् ॥ देवेभ्यः । हि । प्रथमं । यज्ञियेभ्यः । अमृतऽत्वं । सुवसि । भागं । उत्ऽतमं ॥ आत् । इत् । दामानं । सवितः । वि । ऊर्णुषे । अनूचीना । जीविता । मानुषेभ्यः ॥ अचित्ती । यत् । चकृम । दैव्ये । जने । दीनैः । दक्षैः । प्रऽभूती । पुरुषत्वता ॥ देवेषु । च । सवितः । मानुषेषु । च । त्वं । नः । अत्र । सुवतात् । अनागसः ॥ न । प्रऽमिये । सवितुः । दैव्यस्य । तत् । यथा । विश्वं । भुवनं । धारयिष्यति ॥ यत् । पृथिव्याः । वरिमन् । आ । सुऽअंगुरिः । वर्ष्मन् । दिवः । सुवति । सत्यं । अस्य । तत् ॥ इंद्रऽज्येष्ठान् । बृहत्ऽभ्यः । पर्वतेभ्यः । क्षयान् । एभ्यः । सुवसि । पस्त्यऽवतः ॥ यथाऽयथा । पतयंतः । विऽयेमिरे । एव । एव । तस्थुः । सवितरिति । सवाय । ते ॥ ये । ते । त्रिः । अहन् । सवितरिति । सवासः । दिवेऽदिवे । सौभगं । आऽसुवंति ॥ इंद्रः । द्यावापृथिवीइति । सिंधुः । अत्ऽभिः । आदित्यैः । नः । अदितिः । शर्म । यंसत् ॥ ५ ॥ कः । वः । त्राता । वसवः । कः । वरूता । द्यावाभूमीइति । अदिते । त्रासीथां । नः ॥ सहीयसः । वरुण । मित्र । मर्तात् । कः । वः । अध्वरे । वरिवः । धाति । देवाः ॥ प्र । ये । धामानि । पूर्व्याणि । अर्चान् । वि । यत् ।

उच्छान् । विऽयोतारः । अमूराः ॥ विऽधातारः । वि । ते । दधुः । अजस्राः । ऋतऽधीतयः । रुरुचंत । दस्माः ॥ प्र । पस्त्यां । अदितिं । सिंधुं । अर्कैः । स्वस्ति । ईळे । सख्याय । देवीं ॥ उभेइति । यथा । नः । अहनीइति । निऽपातः । उषसानक्ता । करतां । अदब्धेइति । वि । अर्यमा । वरुणः । चेति । पंथां । इषः । पतिः । सुवितं । गातुं । अग्निः ॥ इंद्राविष्णूइति । नृऽवत् । ऊँइति । सु । स्तवाना । शर्म । नः । यंतं । अमंऽवत् । वरूथं ॥ आ । पर्वतस्य । मरुतां । अवांसि । देवस्य । त्रातुः । अव्रि । भगस्य ॥ पात् । पतिः । जन्यात् । अंहसः । नः । मित्रः । मित्रियात् । उत । नः । उरुष्येत् ॥ ६ ॥ नु । रोदसीइति । अहिना । बुध्न्येन । स्तुवीत । देवीइति । अप्येभिः । इष्टैः ॥ समुद्रं । न । संऽचरणे । सनिष्यवः । घर्मऽस्वरसः । नद्यः । अप । व्रन् ॥ ० ॥ नहि । मित्रस्य । वरुणस्य । धासिं । अर्हामसि । प्रऽमियं । सानुं । अग्नेः ॥ अग्निः । ईशे । वसव्यस्य । अग्निः । महः । सौभगस्य ॥ तानि । अस्मभ्यं । रासते ॥ उषः । मघोनि । आ । वह । सूनृते । वार्या । पुरु ॥ अस्मभ्यं । वाजिनीऽवति ॥ तत् । सु । नः । सविता । भगः ॥ ० ॥ इंद्रः । नः । राधसा । आ । गमत् ॥ ७ ॥ महीइति । द्यावापृथिवीइति । इह । ज्येष्ठेइति । रुचा । भवतां । शुचयत्ऽभिः । अर्कैः ॥ यत् । सीं । वरिष्ठेइति । बृहतीइति । विऽमिन्वन् । रुवत् । ह । उक्षा । पप्रथानेभिः । एवैः ॥ देवीइति । देवेभिः । यजतेइति । यजत्रैः । अमिनतीइति । तस्थतुः । उक्षमाणेइति ॥ ऋतवरीइत्यृतऽवरी । अद्रुहा । देवपुत्रेइतिदेवऽपुत्रे । यज्ञस्य । नेत्रीइति । शुचयत्ऽभिः । अर्कैः ॥ सः । इत् । सुऽअपाः । भुवनेषु । आस । यः । इमेइति । द्यावापृथिवीइति । जजान ॥ उर्वीइति । गभीरेइति । रजसीइति । सुमेकेइतिसुऽमेके । अवंशे । धीरः । शच्या । सं । ऐरत् ॥ नु । रोदसीइति । बृहत्ऽभिः । नः । वरूथैः । पत्नीवत्ऽभिः । इषयंतीइति । सऽजोषाः ॥ उरूचीइति । विश्वेइति । यजतेइति । नि ।

पातं ॥ ० ॥ प्र । वां । महि । द्यवीइति । अभि । उपऽस्तुतिं । भरामहे ॥ शुचीइति । उप । प्रऽशस्तये ॥ पुनानेइति । तन्वा । मिथः । स्वेन । दक्षेण । राजथः ॥ ऊह्याथेइति । सनात् । ऋतं ॥ महीइति । मित्रस्य । साधथः । तरंतीइति । पिप्रतीइति । ऋतं ॥ परि । यज्ञं । नि । सेदथुः ॥ ८ ॥ क्षेत्रस्य । पतिना । वयं । हितेनऽइव । जयामसि ॥ गां । अश्वं । पोषयित्नु । आ । सः । नः । मृळाति । ईदृशे ॥ क्षेत्रस्य । पते । मधुऽमंतं । ऊर्मिं । धेनुःऽइव । पयः । अस्मासु । धुक्ष्व ॥ मधुऽश्चुतं । घृतंऽइव । सुऽपूतं । ऋतस्य । नः । पतयः । मृळयंतु ॥ मधुऽमतीः । ओषधीः । द्यावः । आपः । मधुऽमत् । नः । भवतु । अंतरिक्षं ॥ क्षेत्रस्य । पतिः । मधुऽमान् । नः । अस्तु । अरिष्यंतः । अनु । एनं । चरेम ॥ शुनं । वाहाः । शुनं । नरः । शुनं । कृषतु । लांगलं ॥ शुनं । वरत्राः । बध्यंतां । शुनं । अष्ट्रां । उत् । इंगय ॥ शुनासीरौ । इमां । वाचं । जुषेथां । यत् । दिवि । चक्रथुः । पयः ॥ तेन । इमां । उप । सिंचतं ॥ अर्वाची । सुऽभगे । भव । सीते । वंदामहे । त्वा ॥ यथा । नः । सुऽभगा । असंसि । यथा । नः । सुऽफला । असंसि ॥ इंद्रः । सीतां । नि । गृह्णातु । तां । पूषा । अनु । यच्छतु ॥ सा । नः । पयस्वती । दुहां । उत्तरांऽउत्तरां । समां ॥ शुनं । नः । फालाः । वि । कृषंतु । भूमिं । शुनं । कीनाशाः । अभि । यंतु । वाहैः ॥ शुनं । पर्जन्यः । मधुना । पयःऽभिः । शुनासीरा । शुनं । अस्मासु । धत्तं ॥ ९ ॥ समुद्रात् । ऊर्मिः । मधुऽमान् । उत् । आरत् । उप । अंशुना । सं । अमृतऽत्वं । आनट् ॥ घृतस्य । नाम । गुह्यं । यत् । अस्ति । जिह्वा । देवानां । अमृतस्य । नाभिः ॥ वयं । नाम । प्र । ब्रवाम । घृतस्य । अस्मिन् । यज्ञे । धारयाम । नमःऽभिः ॥ उप । ब्रह्मा । शृणवत् । शस्यमानं । चतुःऽशृंगः । अवमीत् । गौरः । एतत् ॥ चत्वारि । शृंगा । त्रयः । अस्य । पादाः । द्वेइति । शीर्षेइति । सप्त । हस्तासः । अस्य ॥ त्रिधा ।

बृद्धः । वृषभः । रोरवीति । महः । देवः । मर्त्यान् । आ । विवेश ॥ त्रिधा । हितं । पणिऽभिः । गुह्यमानं । गवि । देवासः । घृतं । अनु । अविंदन् ॥ इंद्रः । एकं ॥ सूर्यः । एकं । जजान । वेनात् । एकं । स्वधया । निः । ततक्षुः ॥ एताः । अर्षंति । हृद्यात् । समुद्रात् । शतऽव्रजाः । रिपुणा । न । अवऽचक्षे ॥ घृतस्य । धाराः । अभि । चाकशीमि । हिरण्ययः । वेतसः । मध्ये । आसां ॥ १० ॥ सम्यक् । स्रवंति । सरितः । न । धेनाः । अंतः । हृदा । मनसा । पूयमानाः ॥ एते । अर्षंति । ऊर्मयः । घृतस्य । मृगाःऽइव । क्षिपणोः । ईषमाणाः ॥ सिंधोःऽइव । प्रऽअध्वने । शूघनासः । वातऽप्रमियः । पतयंति । यह्वाः ॥ घृतस्य । धाराः । अरुषः । न । वाजी । काष्ठाः । भिंदन् । ऊर्मिऽभिः । पिन्वमानः ॥ अभि । प्रवंत । समनाऽइव । योषाः । कल्याण्यः । स्मयमानासः । अग्निं ॥ घृतस्य । धाराः । संऽइधः । नसंत । ताः । जुषणः । हर्यति । जातऽवेदाः ॥ कन्याःऽइव । वहतुं । एतवै । ऊँ इति । अंजि । अंजानाः । अभि । चाकशीमि ॥ यत्र । सोमः । सूयते । यत्र । यज्ञः । घृतस्य । धाराः । अभि । तत् । पवंते ॥ अभि । अर्षत । सुऽस्तुतिं । गव्यं । आजिं । अस्मासु । भद्रा । द्रविणानि । धत्त ॥ इमं । यज्ञं । नयत । देवता । नः । घृतस्य । धाराः । मधुऽमत् । पवंते ॥ धामन् । ते । विश्वं । भुवनं । आधि । श्रितं । अंतरिति । समुद्रे । हृदि । अंतः । आयुषि ॥ अपां । अनीके । संऽइथे । यः । आऽभृतः । तं । अश्याम । मधुऽमंतं । ते । ऊर्मिं ॥ ११ ॥ इति चतुर्थं मंडलं समाप्तं ॥ अबोधि । अग्निः । संऽइधा । जनानां । प्रति । धेनुंऽइव । आऽयतीं । उषसं ॥ यह्वाःऽइव । प्र । वयां । उत्ऽजिहानाः । प्र । भानवः । सिस्रते । नाकं । अच्छ ॥ अबोधि । होता । यजथाय । देवान् । ऊर्ध्वः । अग्निः । सुऽमनाः । प्रातः । अस्थात् ॥ संऽइद्धस्य । रुशत् । अदर्शि । पाजः । महान् । देवः । तमसः । निः । अमोचि ॥ यत् । ईं । गणस्य । रशनां । अजीगरिति । शुचिः । अंक्ते । शुचिऽभिः । गोभिः ।

अग्निः ॥ आत् । दक्षिणा । युज्यते । वाजऽयती । उत्ताना । ऊर्ध्वः । अधयत् । जुहूभिः ॥ अग्निं । अच्छ । देवऽयतां । मनांसि । चक्षूंषिऽइव । सूर्ये । सं । चरंति ॥ यत् । ईं । सुवातेइति । उषसा । विरूपेइतिविऽरूपे । श्वेतः । वाजी । जायते । अग्रे । अह्नां ॥ जनिष्ट । हि । जेन्यः । अग्रे । अह्नां । हितः । हितेषु । अरुषः । वनेषु । दमेऽदमे । सप्त । रत्ना । दधानः । अग्निः । होता । नि । ससाद । यजीयात् ॥ अग्निः । होता । नि । असीदत् । यजीयान् । उपऽस्थे । मातुः । सुरभौ । ऊँइति । लोके ॥ युवा । कविः । पुरुनिःऽस्थः । ऋतऽवा । धर्ता । कृष्टीनां । उत । मध्ये । इद्धः ॥ १२ ॥ प्र । नु । त्यं । विप्रं । अध्वरेषु । साधुं । अग्निं । होतारं । ईळते । नमःऽभिः ॥ आ । यः । ततान । रोदसीइति । ऋतेन । नित्यं । मृजंति । वाजिनं । घृतेन ॥ मार्जाल्यः । मृज्यते । स्वे । दमूनाः । कविऽप्रशस्तः । अतिथिः । शिवः । नः ॥ सहस्रऽशृंगः । वृषभः । तत्ऽओजाः । विश्वान् । अग्ने । सहसा । प्र । असि । अन्यान् ॥ प्र । सद्यः । अग्ने । अति । एषि । अन्यान् । आविः । यस्मै । चारुऽतमः । बभूथ ॥ ईळेन्यः । वपुष्यः । विभाऽवा । प्रियः । विशां । अतिथिः । मानुषीणां ॥ तुभ्यं । भरंति । क्षितयः । यविष्ठ । बलिं । अग्ने । अंतितः । आ । उत । दूरात् ॥ आ । भंदिष्ठस्य । सुऽमतिं । चिकिद्धि । बृहत् । ते । अग्ने । महि । शर्म । भद्रं । आ । अद्य । रथं । भानुऽमः । भानुऽमंतं । अग्ने । तिष्ठ । यजतेभिः । संऽअंतं ॥ विद्वान् । पथीनां । उरु । अंतरिक्षं । आ । इह । देवान् । हविःऽअद्याय । वक्षि ॥ अवोचाम । कवये । मेध्याय । वचः । वंदारु । वृषभाय । वृष्णे । गविष्ठिरः । नमसा । स्तोमं । अग्नौ । दिविऽइव । रुक्मं । उरुऽव्यंचं । अश्रेत् ॥ १३ ॥ कुमारं । माता । युवतिः । संऽउब्धं । गुहा । बिभर्ति । न । ददाति । पित्रे । अनीकं । अस्य । न । मिनत् । जनासः । पुरः । पश्यंति । निऽहितं । अरतौ ॥ कं । एतं । त्वं । युवते । कुमारं । पेषी । बिभर्षि ।

महिषी । जजान ॥ पूर्वी । हि । गर्भः । शरदः । ववर्ध । अपश्यं । जातं । यत् । असूत । माता ॥ हिरण्यऽदंतं । शुचिऽवर्णं । आरात् । क्षेत्रात् । अपश्यं । आयुधा । मिमानं ॥ ददानः । अस्मै । अमृतं । विऽपृक्वत् । किं । मां । अनिंद्राः । कृणवन् । अनुक्थाः ॥ क्षेत्रात् । अपश्यं । सनुतरिति । चरंतं । सुऽमत् । यूथं । न । पुरु । शोभमानं । न । ताः । अगृभ्रन् । अजनिष्ट । हि । सः । पलिक्नीः । इत् । युवतयः । भवंति ॥ के । मे । मर्यकं । वि । यवंत । गोभिः । न । येषां । गोपाः । अरणः । चित् । आस ॥ यः । ईं । जगृभुः । अव । ते । सृजंतु । आ । अजाति । पश्वः । उप । नः । चिकित्वान् ॥ वसां । राजानं । वसतिं । जनानां । अरातयः । नि । दधुः । मर्त्येषु । ब्रह्माणि । अत्रेः । अव । तं । सृजंतु । निंदितारः । निंद्यासः । भवंतु ॥ १४ ॥ शुनःशेपं । चित् । निऽदितं । सहस्रात् । यूपात् । अमुंचः । अशमिष्ट । हि । सः ॥ एव । अस्मत् । अग्ने । वि । मुमुग्धि । पाशान् । होतरिति । चिकित्वः । इह । तु । निऽसद्य ॥ हृणीयमानः । अप । हि । मत् । ऐयेः । प्र । मे । देवानां । व्रतऽपाः । उवाच ॥ इंद्रः । विद्वान् । अनु । हि । त्वा । चचक्ष । तेन । अहं । अग्ने । अनुऽशिष्टः । आ । अगां ॥ वि । ज्योतिषा । बृहता । भाति । अग्निः । आविः । विश्वानि । कृणुते । महिऽत्वा ॥ प्र । अदेवीः । मायाः । सहते । दुःऽएवाः । शिशीते । शृंगेइति । रक्षसे । विऽनिक्षे ॥ उत । स्वानासः । दिवि । संतु । अग्नेः । तिग्मऽआयुधाः । रक्षसे । हंतवै । ऊँइति ॥ मदे । चित् । अस्य । प्र । रुजंति । भामाः । न । वरंते । परिऽबाधः । अदेवीः ॥ एतं । ते । स्तोमं । तुविऽजात । विप्रः । रथं । न । धीरः । सुऽअपाः । अतक्षं ॥ यदि । इत् । अग्ने । प्रति । त्वं । देव । हर्याः । स्वःऽवतीः । अपः । एन । जयेम ॥ तुविऽग्रीवः । वृषभः । ववृधानः । अशत्रु । अर्यः । सं । अजाति । वेदः ॥ इति । इमं । अग्निं । अमृताः । अवोचन् । बर्हिष्मते । मनवे ।

शर्म । यंसत् । हविष्मते । मनवे । शर्म । यंसत् ॥ १५ ॥ त्वं । अग्ने । वरुणः । जायसे । यत् । त्वं । मित्रः । भवसि । यत् । संऽइद्धः ॥ त्वेइति । विश्वे । सहसः । पुत्र । देवाः । त्वं । इंद्रः । दाशुषे । मर्त्याय ॥ त्वं । अर्यमा । भवसि । यत् । कनीनां । नाम । स्वधाऽवन् । गुह्यं । बिभर्षि ॥ अंजंति । मित्रं । सुऽधितं । न । गोभिः । यत् । दंपतीइति दंऽपती । सऽमनसा । कृणोषि ॥ तव । श्रिये । मरुतः । मर्जयंत । रुद्र । यत् । ते । जनिम । चारु । चित्रं ॥ पदं । यत् । विष्णोः । उपऽमं । निऽधायि । तेन । पासि । गुह्यं । नाम । गोनां ॥ तव । श्रिया । सुऽदृशः । देव । देवाः । पुरु । दधानाः । अमृतं । संपत ॥ ० ॥ दशास्यंतः ॥ ० ॥ न ॥ ० ॥ न । काव्यैः । परः । अस्ति । स्वधाऽवः ॥ विशः । च । यस्याः । अतिथिः । भवासि । सः । यज्ञेन । वनवत् । देव । मर्तान् ॥ वयं । अग्ने । वनुयाम । त्वाऽऊताः । वसुऽयवः । हविषा । बुध्यमानाः ॥ वयं । सऽमर्ये । विदथेषु । अह्नां । वयं । राया । सहसः । पुत्र । मर्तान् ॥ १६ ॥ यः । नः । आगः । अभि । एनः । भराति । अधि । इत् । अघं । अघऽशंसे । दधात ॥ जहि । चिकित्वः । अभिऽशस्तिं । एतां । अग्ने । यः । नः । मर्चयति । द्वयेन ॥ त्वां । अस्याः । विऽउषि । देव । पूर्वे । दूतं । कृण्वानाः । अयजंत । हव्यैः ॥ संऽस्थे । यत् । अग्ने । ईयसे । रयीणां । देवः । मर्तैः । वसुऽभिः । इध्यमानः ॥ अव । स्पृधि । पितरं । योधि । विद्वान् । पुत्रः । यः । ते । सहसः । सूनोइति । ऊहे ॥ कदा । चिकित्वः । अभि । चक्षसे । नः । अग्ने । कदा । ऋतऽचित् । यातयासे ॥ भूरि । नाम । वंदमानः । दधाति । पिता । वसोइति । यदि । तत् । जोषयासे ॥ कुवित् । देवस्य । सहसा । चकानः । सुम्नं । अग्निः । वनते । ववृधानः ॥ त्वं । अंग । जरितारं । यविष्ठ । विश्वानि । अग्ने । दुःऽइता । अति । पर्षि ॥ स्तेनाः । अदृश्रन् । रिपवः । जनासः । अज्ञातऽकेताः । वृजिनाः । अभूवन् ॥ इमे । यामासः । त्वद्रिक् । अभूवन् ।

वसवे । वा । तत् । इत् । आगः । अवाचि ॥ न । अह । अयं । अग्निः । अभिऽशस्तये । नः । न । रिषते । ववृधानः । परा । दात् ॥ १७ ॥ त्वां । अग्ने । वसुऽपतिं । वसूनां । अभि । प्र । मंदे । अध्वरेषु । राजन् ॥ त्वया । वाजं । वाजऽयंतः । जयेम । अभि । स्याम । पृत्सुतीः । मर्त्यानां ॥ हव्यऽवाट् । अग्निः । अजरः । पिता । नः । विऽभुः । विभाऽवा । सुऽदृशीकः । अस्मेइति ॥ सुऽगार्हपत्याः । सं । इषः । दिदीहि । अस्मद्र्यक् । सं । मिमीहि । श्रवांसि ॥ विशां । कविं । विश्पतिं । मानुषीणां । शुचिं । पावकं । घृतऽपृष्ठं । अग्निं ॥ नि । होतारं । विश्वऽविदं । दधिध्वे । सः । देवेषु । वनते । वार्याणि ॥ जुषस्व । अग्ने । इळया । सऽजोषाः । यतमानः । रश्मिऽभिः । सूर्यस्य ॥ जुषस्व । नः । संऽइधं । जातऽवेदः । आ । च । देवान् । हविःऽअद्याय । वक्षि ॥ जुष्टः । दमूनाः । अतिथिः । दुरोणे । इमं । नः । यज्ञं । उप । याहि । विद्वान् ॥ विश्वाः । अग्ने । अभिऽयुजः । विऽहत्य । शत्रुऽयतां । आ । भर । भोजनानि ॥ १८ ॥ वधेन । दस्युं । प्र । हि । चातयस्व । वयः । कृण्वानः । तन्वे । स्वायै ॥ पिपर्षि । यत् । सहसः । पुत्र । देवान् । सः । अग्ने । पाहि । नृऽतम । वाजे । अस्मान् ॥ वयं । ते । अग्ने । उक्थैः । विधेम । वयं । हव्यैः । पावक । भद्रऽशोचे ॥ अस्मेइति । रयिं । विश्वऽवारं । सं । इन्व । अस्मेइति । विश्वानि । द्रविणानि । धेहि ॥ अस्माकं । अग्ने । अध्वरं । जुषस्व । सहसः । सूनोइति । त्रिऽसधस्थ । हव्यं ॥ वयं । देवेषु । सुऽकृतः । स्याम । शर्मणा । नः । त्रिऽवरूथेन । पाहि ॥ विश्वानि । नः । दुःऽगहा । जातऽवेदः । सिंधुं । न । नावा । दुःऽइता । अति । पर्षि ॥ अग्ने । अत्रिऽवत् । नमसा । गृणानः । अस्माकं । बोधि । अविता । तनूनां ॥ यः । त्वा । हृदा । कीरिणा । मन्यमानः । अमर्त्यं । मर्त्यः । जोहवीमि ॥ जातऽवेदः । यशः । अस्मासु । धेहि । प्रऽजाभिः । अग्ने । अमृतऽत्वं । अश्यां ॥ यस्मै । त्वं । सुऽकृते ।

जातऽवेदः । ऊँइति । लोकं । अग्ने । कृणवः । स्योनं ॥ अश्विनं । सः । पुत्रिणं । वीरऽवंतं । गोऽमंतं । रयिं । नशते । स्वस्ति ॥ १९ ॥ सुऽसंमिद्धाय । शोचिषे । घृतं । तीव्रं । जुहोतन ॥ अग्नये । जातऽवेदसे । नराशंसः । सुसूदति । इमं । यज्ञं । अदाभ्यः ॥ कविः । हि । मधुऽहस्त्यः ॥ ० ॥ सुऽखैः । रथेभिः । ऊतये । ऊर्णऽम्रदाः । वि । प्रथस्व । अभि । अर्काः । अनूषत ॥ भव । नः । शुभ्र । सातये ॥ देवीः । द्वारः । वि । श्रयध्वं । सुप्रऽअयनाः । नः । ऊतये ॥ प्रऽप्र । यज्ञं । पृणीतन ॥ २० ॥ सुप्रतीकेइतिसुऽप्रतीके । वयःऽवृधा । यह्वीइति । ऋतस्य । मातरा ॥ दोषां । उषसं । ईमहे ॥ वातस्य । पत्मन् । ईळिता । दैव्या । होतारा । मनुषः ॥ इमं । यज्ञं । आ । गतं ॥ ० ॥ शिवः । त्वष्टः । इह । आ । गहि । विऽभुः । पोषे । उत । त्मना ॥ यज्ञेऽयज्ञे । नः । उत् । अव ॥ यत्र । वेत्थ । वनस्पते । देवानां । गुह्या । नामानि ॥ तत्र । हव्यानि । गमय ॥ स्वाहा । अग्नये । वरुणाय । स्वाहा । इंद्राय । मरुत्ऽभ्यः ॥ स्वाहा । देवेभ्यः । हविः ॥ २१ ॥ अग्निं । तं । मन्ये । यः । वसुः । अस्तं । यं । यंति । धेनवः ॥ अस्तं । अर्वंतः । आशवः । अस्तं । नित्यासः । वाजिनः । इषं । स्तोतृऽभ्यः । आ । भर ॥ सः । अग्निः । यः । वसुः । गृणे । सं । यं । आऽयंति । धेनवः ॥ सं । अर्वंतः । रघुऽद्रुवः । सं । सुऽजातासः । सूरयः ॥ ० ॥ अग्निः । हि । वजिनं । विशे । ददाति । विश्वऽचर्षणिः ॥ अग्निः । राये । सुऽआभुवं । सः । प्रीतः । याति । वार्यं ॥ ० ॥ आ । ते । अग्ने । इधीमहि । द्युऽमंतं । देव । अजरं ॥ यत् । ह । स्या । ते । पनीयसी । संऽइत् । दीदयति । द्यवि ॥ ० ॥ ऋचा । हविः । शुक्रस्य । शोचिषः । पते ॥ सुऽचंद्र । दस्म । विश्पते । हव्यऽवाट् । तुभ्यं । हूयते ॥ ० ॥ २२ ॥ प्रोइति । त्ये । अग्नयः । अग्निषु । विश्वं । पुष्यंति । वार्यं ॥ ते । हिन्विरे । इन्विरे । ते । इषण्यंति । आनुषक् ॥ ० ॥ तव । त्ये । अग्ने । अर्चयः । महि ।

व्राधंत । वाजिनः ॥ ये । पत्वऽभिः । शफानां । व्रजा । भुरंत । गोनां ॥ ० ॥ नवाः । नः । अग्ने । आ । भर । स्तोतृऽभ्यः । सुऽक्षितीः । इषः ॥ ते । स्याम । ये । आनृचुः । त्वाऽदूतासः । दमेऽदमे ॥ ० ॥ उभेइति । सुऽचंद्र । सर्पिषः । दर्वीइति । श्रीणीषे । आसनि ॥ उतोइति । नः । उत् । पुपूर्याः । उक्थेषु । शवसः । पते ॥ ० ॥ एव । अग्निं । अजुर्यमुः । गीःऽभिः । यज्ञेभिः । आनुषक् ॥ दधत् । अस्मेइति । सुऽवीर्यं । उत । त्यत् । आशुऽअश्व्यं ॥ ० ॥ ॥ २३ ॥ सखायः । सं । वः । सम्यंचं । इषं । स्तोमं । च । अग्नये । वर्षिष्ठाय । क्षितीनां । ऊर्जः । नप्त्रे । सहस्वते ॥ कुत्र । चित् । यस्य । संऽऋतौ । रण्वाः । नरः । नृऽसदने ॥ अर्हंतः । चित् । यं । इंधते । संऽजनयंति । जंतवः ॥ सं । यत् । इषः । वनामहे । सं । हव्या । मानुषाणां ॥ उत । द्युम्नस्य । शवसा । ऋतस्य । रश्मिं । आ । ददे ॥ सः । स्म । कृणोति । केतुं । आ । नक्तं । चित् । दूरे । आ । सते ॥ पावकः । यत् । वनस्पतीन् । प्र । स्म । मिनाति । अजरः ॥ अव । स्म । यस्य । वेषणे । स्वेदं । पथिषु । जुह्वति ॥ अभि । ईं । अह । स्वऽजेन्यं । भूम । पृष्ठाऽइव । रुरुहुः ॥ २४ ॥ यं । मर्त्यः । पुरुऽस्पृहं । विदत् । विश्वस्य । धायसे ॥ प्र । स्वादनं । पितूनां । अस्तऽतातिं । चित् । आयवे ॥ सः । हि । स्म । धन्व । आऽक्षितं । दाता । न । दाति । आ । पशुः ॥ हिरिऽश्मश्रुः । शुचिऽदन् । ऋभुः । अनिभृष्टऽतविषिः ॥ शुचिः । स्म । यस्मै । अत्रिऽवत् । प्र । स्वधितिःऽइव । रीयते ॥ सुऽसूः । असूत । माता । क्राणा । यत् । आनशे । भगं ॥ आ । यः । ते । सर्पिःऽआसुते । अग्ने । शं । अस्ति । धायसे ॥ आ । एषु । द्युम्नं । उत । श्रवः । आ । चित्तं । मर्त्येषु । धाः ॥ इति । चित् । मन्युं । अध्रिजः । त्वाऽदातं । आ । पशुं । ददे ॥ आत् । अग्ने । अपृणतः । अत्रिः । ससह्यात् । दस्यून् । इषः । ससह्यात् । नॄन् ॥ २५ ॥ त्वां । अग्ने । ऋतऽयवः । सं । ईधिरे । प्रत्नं । प्रत्नासः ।

ऊतये । सहःऽकृत ॥ पुरुऽचंद्रं । यजतं । विश्वऽधायसं । दमूनसं । गृहऽपतिं । वरेण्यं ॥ त्वां । अग्ने । अतिथिं । पूर्व्यं । विशः । शोचिःऽकेशं । गृहऽपतिं । नि । सेदिरे ॥ बृहत्ऽकेतुं । पुरुऽरूपं । धनऽस्पृतं । सुऽशर्माणं । सुऽअवसं । जरत्ऽविषं ॥ त्वां । अग्ने । मानुषीः । ईळते । विशः । होत्राऽविदं । विविचिं । रत्नऽधातमं ॥ गुहा । संतं । सुऽभग । विश्वऽदर्शतं । तुविऽस्वनसं । सुऽयजं । घृतऽश्रियं ॥ त्वां । अग्ने । धर्णसिं । विश्वधा । वयं । गीःऽभिः । गृणंतः । नमसा । उप । सेदिम ॥ सः । नः । जुषस्व । संऽइधानः । अंगिरः । देवः । मर्तस्य । यशसा । सुदीतिऽभिः ॥ त्वं । अग्ने । पुरुऽरूपः । विशेऽविशे । वयः । दधासि । प्रत्नऽथा । पुरुऽस्तुत ॥ पुरूणि । अन्ना । सहसा । वि । राजसि । त्विषिः । सा । ते । तित्विषाणस्य । न । आऽधृषे ॥ त्वां । अग्ने । संऽइधानं । यविष्ठ्य । देवाः । दूतं । चक्रिरे । हव्यऽवाहनं ॥ उरुऽज्रयसं । घृतऽयोनिं । आऽहुतं । त्वेषं । चक्षुः । दधिरे । चोदयत्ऽमति ॥ त्वां । अग्ने । प्रऽदिवः । आऽहुतं । घृतैः । सुम्नऽयवः । सुऽसमिधा । सं । ईधिरे ॥ सः । ववृधानः । ओषधीभिः । उक्षितः । अभि । ज्रयांसि । पार्थिवा । वि । तिष्ठसे ॥ २६ ॥

इति तृतीयाष्टके अष्टमोऽध्यायः ॥ ८ ॥

॥ इति तृतीयाष्टकः संपूर्णः ॥ ३ ॥



॥ ॐ ॥




हरिः ॐ ॥ त्वां । अग्ने । हविष्मंतः । देवं । मर्तासः । ईळते ॥ मन्ये । त्वा । जातऽवेदसं । सः । हव्या । वक्षि । आनुषक् ॥ अग्निः । होता । दास्वंतः । क्षयस्य । वृक्तऽबर्हिषः ॥ सं । यज्ञासः । चरंति । यं । सं । वाजासः । श्रवस्यवः ॥ उत । स्म । यं । शिशुं । यथा । नवं । जनिष्ट । अरणीइति । धर्तारं । मानुषीणां । विशां । अग्निं । सुऽअध्वरं ॥ उत । स्म । दुःऽगृभीयसे । पुत्रः । न । ह्वार्याणां । पुरु । यः । दग्धा । असि । वना । अग्ने । पशुः । न । यवसे ॥ अध । स्म । यस्य । अर्चयः । सम्यक् । सऽयंति । धूमिनः ॥ यत् । ईं । अह । त्रितः । दिवि । उप । ध्माताऽइव । धमति । शिशीते । ध्मातरि । यथा ॥ तव । अहं । अग्ने । ऊतिऽभिः । मित्रस्य । च । प्रशस्तिऽभिः ॥ द्वेषःऽयुतः । न । दुःऽइता । तुर्याम । मर्त्यानां ॥ तं । नः । अग्ने । अभि । नरः । रयिं । सहस्वः । आ । भर ॥ सः । क्षेपयत् । सः । पोषयत् । भुवत् । वाजस्य । सातये । उत । एधि । पृत्ऽसु । नः । वृधे ॥ १ ॥ अग्ने । ओजिष्ठं । आ । भर । द्युम्नं । अस्मभ्यं । अध्रिगोइत्यध्रिऽगो ॥ प्र । नः । राया । परीणसा । रत्सि । वाजाय । पंथां ॥ त्वं । नः । अग्ने । अद्भुत । क्रत्वा । दक्षस्य । मंहना ॥ त्वेइति । असुर्यं । आ । अरुहत् । क्राणा ।

मित्रः । न । यज्ञियः ॥ ० ॥ एषां । गयं । पुष्टिं । च । वर्धय ॥ ये ।
स्तोमेभिः । प्र । सूरयः । नरः । मघानि । आनशुः ॥ ये । अग्ने ।
चंद्र । ते । गिरः । शुंभंति । अश्वऽराधसः ॥ शुष्मेभिः । शुष्मिणः ।
नरः । दिवः । चित् । येषां । बृहत् । सुऽकीर्तिः । बोधति ।
त्मना ॥ ० ॥ भ्राजंतः । यंति । धृष्णुऽया ॥ परिऽज्मानः । न । विऽद्युतः ।
स्वानः । रथः । न । वाजऽयुः ॥ नु । नः । अग्ने । ऊतये । सऽबा-
धसः । च । रातये ॥ अस्माकासः । च । सूरयः । विश्वाः । आशाः ।
तरीषणि ॥ ० ॥ अंगिरः । स्तुतः । स्तवानः । आ । भर ॥ होतः ।
विभ्वऽसहं । रयिं । स्तोतृऽभ्यः । स्तवसे । च । नः ॥ ० ॥ २ ॥
जनस्य । गोपाः । अजनिष्ट । जागृविः । अग्निः । सुऽदक्षः । सुविताय ।
नव्यसे ॥ घृतऽप्रतीकः । बृहता । दिविऽस्पृशा । द्युऽमत् । वि ।
भाति । भरतेभ्यः । शुचिः ॥ यज्ञस्य । केतुं । प्रथमं । पुरःऽहितं ।
अग्निं । नरः । त्रिऽसधस्थे । सं । ईधिरे ॥ इंद्रेण । देवैः । सऽरथं ।
सः । बर्हिषि । सीदत् । नि । होता । यजथाय । सुऽक्रतुः ॥ असंऽ
मृष्टः । जायसे । मात्रोः । शुचिः । मंद्रः । कविः । उत् । अतिष्ठः ।
विवस्वतः ॥ घृतेन । त्वा । अवर्धयत् । अग्ने । आऽहुत । धूमः । ते ।
केतुः । अभवत् । दिवि । श्रितः ॥ अग्निः । नः । यज्ञं । उप । वेतु ।
साधुऽया । अग्निं । नरः । वि । भरंते । गृहेऽगृहे ॥ अग्निः । दूतः ।
अभवत् । हव्यऽवाहनः । अग्निं । वृणानाः । वृणते । कविऽक्रतुं ।
तुभ्यं । इदं । अग्ने । मधुमत्ऽतमं । वचः । तुभ्यं । मनीषा । इयं ।
अस्तु । शं । हृदे ॥ त्वां । गिरः । सिंधुंऽइव । अवनीः । महीः । आ ।
पृणंति । शवसा । वर्धयंति । च ॥ त्वां । अग्ने । अंगिरसः । गुहा ।
हितं । अनु । अविंदन् । शिश्रियाणं । वनेऽवने ॥ सः । जायसे ।
मथ्यमानः । सहः । महत् । त्वां । आहुः । सहसः । पुत्रं ।
अंगिरः ॥ ३ ॥ प्र । अग्नये । बृहते । यज्ञियाय । ऋतस्य । वृष्णे ।
असुराय । मन्म ॥ घृतं । न । यज्ञे । आस्ये । सुऽपूतं । गिरं । भरे ।

वृषभाय । प्रतीचीं ॥ ऋतं । चिकित्वः । ऋतं । इत् । चिकिद्धि । ऋतस्य । धाराः । अनु । तृंधि । पूर्वीः ॥ न । अहं । यातुं । सहसा । न । द्वयेन । ऋतं । सपामि । अरुषस्य । वृष्णः ॥ कया । नः । अग्ने । ऋतयन् । ऋतेन । भुवः । नवेदाः । उचथस्य । नव्यः ॥ वेद । मे । देवः । ऋतुऽपाः । ऋतूनां । न । अहं । पतिं । सनितुः । अस्य । रायः । के । ते । अग्ने । रिपवे । बंधनासः । के । पायवः । सनिषंत । द्युऽमंतः । के । धासिं । अग्ने । अनृतस्य । पांति । के । असतः । वचसः । संति । गोपाः ॥ सखायः । ते । विषुणाः । अग्ने । एते । शिवासः । संतः । अशिवाः । अभूवन् । अधूर्षत । स्वयं । एते । वचःऽभिः । ऋजुऽयते । वृजिनानि । ब्रुवंतः । यः । ते । अग्ने । नमसा । यज्ञं । ईट्टे । ऋतं । सः । पाति । अरुषस्य । वृष्णः । तस्य । क्षयः । पृथुः । आ । साधुः । एतु । प्रऽसर्स्राणस्य । नहुषस्य । शेषः ॥ ४ ॥ अचैतः । त्वा । हवामहे । अचैतः । सं । इधीमहि ॥ अग्ने । अचैतः । ऊतये । अग्नेः । स्तोमं । मनामहे । सिध्रं । अद्य । दिविऽस्पृशः ॥ देवस्य । द्रविणस्यवः ॥ अग्निः । जुषत । नः । गिरः । होता । यः । मानुषेषु । आ ॥ सः । यक्षत् । दैव्यं । जनं ॥ त्वं । अग्ने । सऽप्रथाः । असि । जुष्टः । होता । वरेण्यः ॥ त्वया । यज्ञं । वि । तन्वते ॥ त्वां । अग्ने । वाजऽसातमं । विप्राः । वर्धंति । सुऽस्तुतं ॥ सः । नः । रास्व । सुऽवीर्यं ॥ अग्ने । नेमिः । अरान्ऽइव । देवान् । त्वं । परिऽभूः । असि ॥ आ । राधः । चित्रं । ऋंजसे ॥ ५ ॥ अग्निं । स्तोमेन । बोधय । संऽइधानः । अमर्त्यं ॥ हव्या । देवेषु । नः । दधत् ॥ तं । अध्वरेषु । ईळते । देवं । मर्ताः । अमर्त्यं ॥ यजिष्ठं । मानुषे । जने ॥ तं । हि । शश्वंतः । ईळते । स्रुचा । देवं । घृतऽश्चुता ॥ अग्निं । हव्याय । वोळ्हवे ॥ अग्निः । जातः । अरोचत । घ्नन् । दस्यून् । ज्योतिषा । तमः ॥ अविंदत् । गाः । अपः । स्वः । रिति स्वः ॥ अग्निं ।

ईळेन्यं । कविं । घृतऽपृष्ठं । सपर्यत ॥ वेतु । मे । शृणवत् । हवं ॥ अग्निं । घृतेन । ववृधुः । स्तोमेभिः । विश्वऽचर्षणिं । सुऽआधीभिः । वचस्युऽभिः ॥ ६ ॥ प्र । वेधसे । कवये । वेद्याय । गिरं । भरे । यशसे । पूर्व्याय ॥ घृतऽप्रसत्तः । असुरः । सुऽशेवः । रायः । धर्ता । धरुणः । वस्वः । अग्निः ॥ ऋतेन । ऋतं । धरुणं । धारयंत । यज्ञस्य । शाके । परमे । विऽओमन् ॥ दिवः । धर्मन् । धरुणे । सेदुषः । नॄन् । जातैः । अजातान् । अभि । ये । ननक्षुः ॥ अंहःऽयुवः । तन्वः । तन्वते । वि । वयः । महत् । दुस्तरं । पूर्व्याय ॥ सः । संऽवतः । नवऽजातः । तुतुर्यात् । सिंहं । न । क्रुद्धं । अभितः । परि । स्थुः ॥ माताऽइव । यत् । भरसे । पप्रथानः । जनंऽजनं । धायसे । चक्षसे । च ॥ वयःऽवयः । जरसे । यत् । दधानः । परि । त्मना । विषुऽरूपः । जिगासि ॥ वाजः । नु । ते । शवसः । पातु । अंतं । उरुं । दोघं । धरुणं । देव । रायः ॥ पदं । न । तायुः । गुहा । दधानः । महः । राये । चितयन् । अत्रिं । अस्परित्यस्पः ॥ ७ ॥ बृहत् । वयः । हि । भानवे । अर्च । देवाय । अग्नये । यं । मित्रं । न । प्रशस्तिऽभिः । मर्तासः । दधिरे । पुरः ॥ सः । हि । द्युऽभिः । जनानां । होता । दक्षस्य । बाह्वोः ॥ वि । हव्यं । अग्निः । आनुषक् । भगः । न । वारं । ऋण्वति ॥ अस्य । स्तोमे । मघोनः । सख्ये । वृद्धऽशोचिषः ॥ विश्वा । यस्मिन् । तुविऽस्वनि । सं । अर्ये । शुष्मं । आऽदधुः ॥ अध । हि । अग्ने । एषां । सुऽवीर्यस्य । मंहना ॥ तं । इत् । यह्वं । न । रोदसीइति । परि । श्रवः । बभूवतुः ॥ नु । नः । आ । इहि । वार्यं । अग्ने । गृणानः । आ । भर ॥ ये । वयं । ये । च । सूरयः । स्वस्ति । धामहे । सचा ॥ ० ॥ ॥ ८ ॥ आ । यज्ञैः । देव । मर्त्यः । इत्था । तव्यांसं । ऊतये ॥ अग्निं । कृते । सुऽअध्वरे । पूरुः । ईळीत । अवसे ॥ अस्य । हि । स्वयशःऽतरः । आसा । विऽधर्मन् । मन्यसे ॥ तं । नाकं । चित्रऽशोचिषं । मंद्रं । परः । मनीषया ॥ अस्य । वै । असौ । ऊंइति । अर्चिषा । यः ।

अयुक्त । तुजा । गिरा ॥ दिवः । न । यस्य । रेतसा । बृहत् । शोचंति । अर्चयः ॥ अस्य । क्रत्वा । विऽचेतसः । दस्मस्य । वसु । रथे । आ ॥ अध । विश्वासु । हव्यः । अग्निः । विक्षु । प्र । शस्यते ॥ नु । नः । इत् । हि । वार्यं । आसा । सचंत । सूरयः ॥ ऊर्जः । नपात् । अभिष्टये । पाहि । शग्धि । स्वस्तये ॥ ० ॥ ९ ॥ प्रातः । अग्निः । पुरुऽप्रियः । विशः । स्तवेत । अतिथिः ॥ विश्वानि । यः । अमर्त्यः । हव्या । मर्तेषु । रण्यति ॥ द्विताय । मृक्तऽवाहसे । स्वस्य । दक्षस्य । मंहना ॥ इंदुं । सः । धत्ते । आनुषक् । स्तोता । चित् । ते । अमर्त्य ॥ तं । वः । दीर्घायुऽशोचिषं । गिरा । हुवे । मघोनां ॥ अरिष्टः । येषां । रथः । वि । अश्वऽदावन् । ईयते ॥ चित्रा । वा । येषु । दीधितिः । आसन् । उक्था । पांति । ये ॥ स्तीर्णं । बर्हिः । स्वःऽनरे । श्रवांसि । दधिरे । परि ॥ ये । मे । पंचाशतं । ददुः । अश्वानां । सधऽस्तुति ॥ द्युऽमत् । अग्ने । महि । श्रवः । बृहत् । कृधि । मघोनां । नृऽवत् । अमृत । नृणां ॥ १० ॥ अभि । अवऽस्थाः । प्र । जायंते । प्र । वव्रेः । वव्रिः । चिकेत ॥ उपऽस्थे । मातुः । वि । चष्टे ॥ जुहुरे । वि । चितयंतः । अनिऽमिषं । नृम्णं । पांति ॥ आ । दृळ्हां । पुरं । विविशुः ॥ आ । श्वैत्रेयस्य । जंतवः । द्युऽमत् । वर्धंत । कृष्टयः ॥ निष्कऽग्रीवः । बृहत्ऽउक्थः । एना । मध्वा । न । वाजऽयुः ॥ प्रियं । दुग्धं । न । काम्यं । अजामि । जाम्योः । सचा ॥ धर्मः । न । वाजऽजठरः । अदब्धः । शश्वतः । दभः ॥ क्रीळन् । नः । रश्मे । आ । भुवः । सं । भस्मना । वायुना । वेविदानः ॥ ताः । अस्य । सन् । धृषजः । न । तिग्माः । सुऽसंशिताः । वक्ष्यः । वक्षणेऽस्थाः ॥ ११ ॥ यं । अग्ने । वाजऽसातम । त्वं । चित् । मन्यसे । रयिं । तं । नः । गीःऽभिः । श्रवाय्यं । देवऽत्रा । पनय । युजं ॥ ये । अग्ने । न । ईरयंति । ते । वृद्धाः । उग्रस्य । शवसः ॥ अप । द्वेषः । अप । ह्वरः । अन्यऽव्रतस्य । सश्चिरे ॥ होतारं । त्वा । वृणीमहे ।

अग्ने । दक्षस्य । साधनं ॥ यज्ञेषु । पूर्व्यं । गिरा । प्रयस्वंतः । हवामहे ॥ इत्था । यथा । ते । ऊतये । सहसाऽवन् । दिवेऽदिवे ॥ राये । ऋताय । सुक्रतोइतिसुऽक्रतो । गोभिः । स्याम । सधऽमादः । वीरैः । स्याम । सधऽमादः ॥ १२ ॥ मनुष्वत् । त्वा । नि । धीमहि । मनुष्वत् । सं । इधीमहि ॥ अग्ने । मनुष्वत् । अंगिरः ॥ ० ॥ त्वं । हि । मानुषे । जने । अग्ने । सुऽप्रीतः । इध्यसे ॥ स्रुचः । त्वा । यंति । आनुषक् । सुऽजात । सर्पिःऽआसुते ॥ त्वां । विश्वे । सऽजोषसः । देवासः । दूतं । अक्रत ॥ सपर्यंतः । त्वा । कवे । यज्ञेषु । देवं । ईळते । देवं । वः । देवऽयज्यया । अग्निं । ईळीत । मर्त्यः ॥ संऽइद्धः । शुक्र । दीदिहि । ऋतस्य । योनिं । आ । असदः । ससस्य । योनिं । आ । असदः ॥ १३ ॥ प्र । विश्वऽसामन् । अत्रिऽवत् । अर्च । पावकऽशोचिषे ॥ यः । अध्वरेषु । ईड्यः । होता । मंद्रऽतमः । विशि ॥ नि । अग्निं । जातऽवेदसं । दधात । देवं । ऋत्विजं ॥ प्र । यज्ञः । एतु । आनुषक् । अद्य । देवव्यचःऽतमः ॥ चिकित्वित्ऽमनसं । त्वा । देवं । मर्तासः । ऊतये ॥ वरेण्यस्य । ते । अवसः । इयानासः । अमन्महि ॥ अग्ने । चिकिद्धि । अस्य । नः । इदं । वचः । सहस्य ॥ तं । त्वा । सुऽशिप्र । दंऽपते । स्तोमैः । वर्धंति । अत्रयः । गीःऽभिः । शुंभंति । अत्रयः ॥ १४ ॥ अग्ने । सहंतं । आ । भर । द्युम्नस्य । प्रऽसहा । रयिं ॥ विश्वाः । यः । चर्षणीः । अभि । आसा । वाजेषु । ससहत् ॥ तं । अग्ने । पृतनाऽसहं । रयिं । सहस्वः । आ । भर ॥ त्वं । हि । सत्यः । अद्भुतः । दाता । वाजस्य । गोऽमतः ॥ विश्वे । हि । त्वा । सऽजोषसः । जनासः । वृक्तऽबर्हिषः ॥ होतारं । सद्मऽसु । प्रियं । व्यंति । वार्या । पुरु ॥ सः । हि । स्म । विश्वऽचर्षणिः । अभिऽमाति । सहः । दधे ॥ अग्ने । एषु । क्षयेषु । आ । रेवत् । नः । शुक्र । दीदिहि । द्युऽमत् । पावक । दीदिहि ॥ १५ ॥ अग्ने । त्वं । नः । अंतमः । उत । त्राता । शिवः । भव । वरूथ्यः ॥ वसुः । अग्निः । वसुऽश्रवाः । अच्छ ।

नक्षि । द्युमत्ऽतमं । र॒यिं । दाः ॥ सः । नः । बोधि । श्रुधि । हवं ।
उरुष्य । नः । अघऽयतः । समस्मात् ॥ तं । त्वा । शोचिष्ठ ।
दीदिऽवः । सुम्नाय । नूनं । ईमहे । सखिऽभ्यः ॥ १६ ॥ अच्छ ।
वः । अग्निं । अवसे । देवं । गासि । सः । नः । वसुः ॥
रासत् । पुत्रः । ऋषूणां । ऋतऽवा । पर्षति । द्विषः ॥ सः ।
हि । सत्यः । यं । पूर्वे । चित् । देवासः । चित् । यं ।
ईधिरे ॥ होतारं । मंद्रऽजिह्वं । इत् । सुदीतिऽभिः । विभाऽवसुं ॥
सः । नः । धीती । वरिष्ठया । श्रेष्ठया । च । सुऽमत्या ॥ अग्ने ।
रायः । दिदीहि । नः । सुवृक्तिऽभिः । वरेण्य ॥ अग्निः । देवेषु ।
राजति । अग्निः । मर्तेषु । आऽविशन् ॥ अग्निः । नः । हव्यऽवाहनः ।
अग्निं । धीभिः । सपर्यत ॥ अग्निः । तुविश्रवःऽतमं । तुविऽब्रह्माणं ।
उत्ऽतमं ॥ अतूर्तं । श्रवयत्ऽपतिं । पुत्रं । ददाति । दाशुषे ॥ १७ ॥
अग्निः । ददाति । सत्ऽपतिं । ससाह । यः । युधा । नृऽभिः ॥
अग्निः । अत्यं । रघुऽस्यदं । जेतारं । अपराऽजितं । यत् । वाहिष्ठं ।
तत् । अग्नये । बृहत् । अर्च । विभावसोइतिविभाऽवसो ॥ महिषीऽ-
इव । त्वत् । रयिः । त्वत् । वाजाः । उत् । ईरते ॥ तव । द्युऽमंतः ।
अर्चयः । ग्रावाऽइव । उच्यते । बृहत् ॥ उतोइति । ते । तन्यतुः ।
यथा । स्वानः । अर्त । त्मना । दिवः ॥ एव । अग्निं । वसुऽयवः ।
सहसानं । ववंदिम ॥ सः । नः । विश्वाः । अति । द्विषः । पर्षत् ।
नावाऽइव । सुऽक्रतुः ॥ १८ ॥ अग्ने । पावक । रोचिषा । मंद्रया ।
देव । जिह्वया ॥ आ । देवान् । वक्षि । यक्षि । च ॥ तं । त्वा । घृत-
स्नोइतिघृतऽस्नो । ईमहे । चित्रभानोइतिचित्रऽभानो । स्वःऽदृशं ॥
देवान् । आ । वीतये । वह ॥ वीतिऽहोत्रं । त्वा । कवे । द्युऽमंतं ।
सं । इधीमहि ॥ अग्ने । बृहंतं । अध्वरे ॥ अग्ने । विश्वेभिः । आ ।
गहि । देवेभिः । हव्यऽदातये । होतारं । त्वा । वृणीमहे ॥ यजमा-
नाय । सुन्वते । आ । अग्ने । सुऽवीर्यं । वह ॥ ० ॥ १९ ॥ संऽइधानः ।

सहस्रऽजित् । अग्ने । धर्माणि । पुष्यसि ॥ देवानां । दूतः । उक्थ्यः ॥ ० ॥ होत्रऽवाहं । यविष्ठ्यं ॥ ० ॥ स्तृणीत । बर्हिः । आऽसदे ॥ आ । इदं । मरुतः । अश्विना । मित्रः । सीदंतु । वरुणः ॥ देवासः । सर्वया । विशा ॥ २० ॥ अनस्वंता । सत्ऽपतिः । ममहे । मे । गावा । चेतिष्ठः । असुरः । मघोनः ॥ त्रैवृष्णः । अग्ने । दशऽभिः । सहस्रैः । वैश्वानर । त्रिऽअरुणः । चिकेत ॥ यः । मे । शता । च । विंशतिं । च । गोनां । हरीइति । च । युक्ता । सुऽधुरा । ददाति ॥ वैश्वानर । सुऽस्तुतः । ववृधानः । अग्ने । यच्छ । त्रिऽअरुणाय । शर्म । एव । ते । अग्ने । सुऽमतिं । चकानः । नविष्ठाय । नवमं । त्रसदस्युः ॥ यः । मे । गिरः । तुविऽजातस्य । पूर्वीः । युक्तेन । अभि । त्रिऽअरुणः । गृणाति ॥ यः । मे । इति । प्रऽवोचति । अश्वऽमेधाय । सूरये ॥ ददत् । ऋचा । सनिं । यते । ददत् । मेधां । ऋतऽयते ॥ यस्य । मा । परुषाः । शतं । उत्ऽहर्षयंति । उक्षणः ॥ अश्वऽमेधस्य । दानाः । सोमाःऽइव । त्रिऽआशिरः ॥ इंद्राग्नीइति । शतऽदाव्नि । अश्वऽमेधे । सुऽवीर्यं ॥ क्षत्रं । धारयतं । बृहत् । दिवि । सूर्यंऽइव । अजरं ॥ २१ ॥ संऽइद्धः । अग्निः । दिवि । शोचिः । अश्रेत् । प्रत्यङ् । उषसं । उर्विया । वि । भाति ॥ एति । प्राची । विश्वऽवारा । नमःऽभिः । देवान् । ईळाना । हविषा । घृताची ॥ संऽइध्यमानः । अमृतस्य । राजसि । हविः । कृण्वंतं । सचसे । स्वस्तये ॥ विश्वं । सः । धत्ते । द्रविणं । यं । इन्वसि । आतिथ्यं । अग्ने । नि । च । धत्ते । इत् । पुरः ॥ अग्ने । शर्ध । महते । सौभगाय । तव । द्युम्नानि । उत्ऽतमानि । संतु ॥ सं । जाःऽपत्यं । सुऽयमं । आ । कृणुष्व । शत्रुऽयतां । अभि । तिष्ठ । महांसि ॥ संऽइद्धस्य । प्रऽमहसः । अग्ने । वंदे । तव । श्रियं ॥ वृषभः । द्युम्नऽवान् । असि । सं । अध्वरेषु । इध्यसे ॥ संऽइद्धः । अग्ने । आऽहुत । देवान् । यक्षि । सुऽअध्वर ॥ त्वं । हि । हव्यऽवाट् । असि ॥ आ । जुहोत ।

दुवस्यत । अग्निं । प्रऽयति । अध्वरे ॥ वृणीध्वं । हव्यऽवाहनं ॥ २२ ॥ त्री । अर्यमा । मनुषः । देवऽताता । त्री । रोचना । दिव्या । धारयंत ॥ अर्चंति । त्वा । मरुतः । पूतऽदक्षाः । त्वं । एषां । ऋषिः । इंद्र । असि । धीरः ॥ अनु । यत् । ईं । मरुतः । मंदसानं । आर्चन् । इंद्रं । पपिऽवांसं । सुतस्य ॥ आ । अदत्त । वज्रं । अभि । यत् । अहिं । हन् । अपः । यह्वीः । असृजत् । सर्तवै । ऊँइति । उत । ब्रह्माणः । मरुतः । मे । अस्य । इंद्रः । सोमस्य । सुऽसुतस्य । पेयाः । तत् । हि । हव्यं । मनुषे । गाः । अविंदत् । अहन् । अहिं । पपिऽवान् । इंद्रः । अस्य ॥ आत् । रोदसीइति । विऽतरं । वि । स्कभायत् । संऽविव्यानः । चित् । भियसे । मृगं । करितिकः ॥ जिगर्ति । इंद्रः । अपऽजर्गुराणः । प्रति । श्वसंतं । अव । दानवं । हन्निितिहन् ॥ अध । क्रत्वा । मघऽवन् । तुभ्यं । देवाः । अनु । विश्वे । अददुः । सोमऽपेयं ॥ यत् । सूर्यस्य । हरितः । पतंतीः । पुरः । सतीः । उपराः । एतशे । करितिकः ॥ २३ ॥ नव । यत् । अस्य । नवतिं । च । भोगान् । साकं । वज्रेण । मघऽवा । विऽवृश्चत् ॥ अर्चंति । इंद्रं । मरुतः । सधऽस्थे । त्रैस्तुभेन । वचसा । बाधत । द्यां ॥ सखा । सख्ये । अपचत् । तूयं । अग्निः । अस्य । क्रत्वा । महिषा । त्री । शतानि ॥ त्री । साकं । इंद्रः । मनुषः । सरांसि । सुतं । पिबत् । वृत्रऽहत्याय । सोमं ॥ त्री । यत् । शता । महिषाणां । अघः । माः । त्री । सरांसि । मघऽवा । सोम्या । अपाः ॥ कारं । न । विश्वे । अह्वंत । देवाः । भरं । इंद्राय । यत् । अहिं । जघान ॥ उशना । यत् । सहस्यैः । अयातं । गृहं । इंद्र । जूजुवानेभिः । अश्वैः ॥ वन्वानः । अत्र । सऽरथं । ययाथ । कुत्सेन । देवैः । अवनोः । ह । शुष्णं ॥ प्र । अन्यत् । चक्रं । अवृहः । सूर्यस्य । कुत्साय । अन्यत् । वरिवः । यातवे । अकरित्यकः ॥ अनासः । दस्यून् । अमृणः । वधेन । नि । दुर्योणे । अवृणक् । मृध्रऽवाचः ॥ २४ ॥ स्तोमासः । त्वा । गौरिऽ-

वीतेः । अवर्धन् । अरंधयः । वैदथिनाय । पिप्रुं ॥ आ । त्वां । ऋजिश्वा । सख्याय । चक्रे । पचन् । पक्तीः । अपिबः । सोमं । अस्य ॥ नवऽग्वासः । सुतऽसोमासः । इंद्रं । दशऽग्वासः । अभि । अर्चति । अर्कैः ॥ गव्यं । चित् । ऊर्वं । अपिधानऽवंतं । तं । चित् । नरः । शशमानाः । अप । व्रन् ॥ कथोइति । नु । ते । परि । चराणि । विद्वान् । वीर्या । मघऽवन् । या । चकर्थ ॥ या । चोइति । नु । नव्या । कृणवः । शविष्ठ । प्र । इत् । ऊँइति । ता । ते । विदथेषु । ब्रवाम ॥ एता । विश्वा । चकृऽवान् । इंद्र । भूरि । अपरिऽइतः । जनुषा । वीर्येण ॥ या । चित् । नु । वज्रिन् । कृणवः । दधृष्वान् । न । ते । वर्ता । तविष्याः । अस्ति । तस्याः ॥ इंद्र । ब्रह्म । क्रियमाणा । जुषस्व । या । ते । शविष्ठ । नव्याः । अकर्म ॥ वस्त्राऽइव । भद्रा । सुऽकृता । वसुऽयुः । रथं । न । धीरः । सुऽअपाः । अतक्षं ॥ २५ ॥ कं । स्यः । वीरः । कः । अपश्यत् । इंद्रं । सुखऽरथं । ईयमानं । हरिऽभ्यां ॥ यः । राया । वज्री । सुतऽसोमं । इच्छन् । तत् । ओकः । गंता । पुरुऽहूतः । ऊती ॥ अव । अचचक्षं । पदं । अस्य । सस्वः । उग्रं । निऽधातुः । अनु । आयं । इच्छन् ॥ अपृच्छं । अन्यान् । उत । ते । मे । आहुः । इंद्रं । नरः । बुबुधानाः । अशेम ॥ प्र । नु । वयं । सुते । या । ते । कृतानि । इंद्र । ब्रवाम । यानि । नः । जुजोषः ॥ वेदत् । अविद्वान् । शृणवत् । च । विद्वान् । वहते । अयं । मघऽवा । सर्वऽसेनः ॥ स्थिरं । मनः । चकृषे । जातः । इंद्र । वेषि । इत् । एकः । युधये । भूयसः । चित् ॥ अश्मानं । चित् । शवसा । दिद्युतः । वि । विदः । गवां । ऊर्वं । उस्रियाणां ॥ परः । यत् । त्वं । परमः । आऽजनिष्ठाः । पराऽवति । श्रुत्यं । नाम । बिभ्रत् ॥ अतः । चित् । इंद्रात् । अभयंत । देवाः । विश्वाः । अपः । अजयत् । दासऽपत्नीः ॥ २६ ॥ तुभ्यं । इत् । एते । मरुतः । सुऽशेवाः । अर्चंति । अर्कं । सुन्वंति । अंधः ॥ अहिं । ओहानं । अपः । आऽशयानं । प्र । मायाभिः । मायिनं ।

सक्षत् । इंद्रः ॥ वि । सु । मृधः । जनुषा । दानं । इन्वन् । अहन् । गवा । मघऽवन् । सम्ऽचकानः ॥ अत्र । दासस्य । नमुचेः । शिरः । यत् । अवर्तयः । मनवे । गातुं । इच्छन् ॥ युजं । हि । मां । अकृथाः । आत् । इत् । इंद्र । शिरः । दासस्य । नमुचेः । मथायन् ॥ अश्मानं । चित् । स्वर्यं । वर्तमानं । प्र । चक्रियाऽइव । रोदसीइति । मरुत्ऽभ्यः ॥ स्त्रियः । हि । दासः । आयुधानि । चक्रे । किं । मा । करन् । अबलाः । अस्य । सेनाः ॥ अंतः । हि । अख्यत् । उभेइति । अस्य । धेनेइति । अथ । उप । प्र । ऐत् । युधये । दस्युं । इंद्रः ॥ सं । अत्र । गावः । अभितः । अनवंत । इहऽइह । वत्सैः । विऽयुताः । यत् । आसन् ॥ सं । ताः । इंद्रः । असृजत् । अस्य । शाकैः । यत् । ईं । सोमासः । सुऽसुताः । अमंदन् ॥ २७ ॥ यत् । ईं । सोमाः । बभ्रुऽधूताः । अमंदन् । अरोरवीत् । वृषभः । सदनेषु ॥ पुरम्ऽदरः । पपिऽवान् । इंद्रः । अस्य । पुनः । गवां । अददात् । उस्रियाणां ॥ भद्रं । इदं । रुशमाः । अग्ने । अक्रन् । गवां । चत्वारि । ददतः । सहस्रा ॥ ऋणम्ऽचयस्य । प्रऽयता । मघानि । प्रति । अग्रभीष्म । नृऽतमस्य । नृणां ॥ सुऽपेशसं । मा । अव । सृजंति । अस्तं । गवां । सहस्रैः । रुशमासः । अग्ने ॥ तीव्राः । इंद्रं । अममंदुः । सुतासः । अक्तोः । विऽउष्टौ । परिऽतक्यायाः ॥ औच्छत् । सा । रात्री । परिऽतक्या । या । ऋणम्ऽचये । राजनि । रुशमानां ॥ अत्यः । न । वाजी । रघुः । अज्यमानः । बभ्रुः । चत्वारि । असनत् । सहस्रा ॥ चतुःऽसहस्रं । गव्यस्य । पश्वः । प्रति । अग्रभीष्म । रुशमेषु । अग्ने ॥ घर्मः । चित् । तप्तः । प्रऽवृजे । यः । आसीत् । अयस्मयः । तं । ऊंइति । आदाम । विप्राः ॥ २८ ॥ इंद्रः । रथाय । प्रऽवतं । कृणोति । यं । अधिऽअस्थात् । मघऽवा । वाजऽयंतं ॥ यूथाऽइव । पश्वः । वि । उनोति । गोपाः । अरिष्टः । याति । प्रथमः । सिसासन् ॥ आ । प्र । द्रव । हरिऽवः । मा । वि । वेनः । पिशंगऽराते । अभि । नः । सचस्व ॥ नहि । त्वत् । इंद्र । वस्यः ।

अन्यत् । अस्ति । अमेनात् । चित् । जनिऽवतः । चकर्थ ॥ उत् ।
यत् । सहः । सहसः । आ । अजनिष्ट । देदिष्टे । इंद्रः । इंद्रियाणि ।
विश्वा ॥ प्र । अचोदयत् । सुऽदुघाः । वव्रे । अंतः । वि । ज्योतिषा ।
संऽववृत्वत् । तमः । अवरित्यवः ॥ अनवः । ते । रथं । अश्वाय ।
तक्षन् । त्वष्टा । वज्रं । पुरुऽहूत । द्युऽमंतं ॥ ब्रह्माणः । इंद्रं । मह-
यंतः । अर्कैः । अवर्धयन् । अहये । हंतवै । ऊँइति । वृष्णे । यत् ।
ते । वृषणः । अर्कं । अर्चान् । इंद्र । ग्रावाणः । अदितिः । सऽजोषाः ॥
अनश्वासः । ये । पवयः । अरथाः । इंद्रऽइषिताः । अभि । अवर्तंत ।
दस्यून् ॥ २९ ॥ प्र । ते । पूर्वाणि । करणानि । वोचं । प्र । नूतना ।
मघऽवन् । या । चकर्थ ॥ शक्तिऽवः । यत् । विऽभराः । रोदसीइति ।
उभेइति । जयन् । अपः । मनवे । दानुऽचित्राः ॥ तत् । इत् । नु ।
ते । करणं । दस्म । विप्र । अहिं । यत् । घ्नन् । ओजः । अत्र ।
आमिमीथाः । शुष्णस्य । चित् । परि । मायाः । अगृभ्णाः । प्रऽपित्वं ।
यन् । अप । दस्यून् । असेधः ॥ त्वं । अपः । यदवे । तुर्वशाय ।
अरमयः । सुऽदुघाः । पारः । इंद्र ॥ उग्रं । अयातं । अवहः ।
ह । कुत्सं । सं । ह । यत् । वां । उशना । अरंत । देवाः ॥
इंद्राकुत्सा । वहमाना । रथेन । आ । वां । अत्याः । अपि ।
कर्णे । वहंतु ॥ निः । सीं । अत्ऽभ्यः । धमथः । निः ।
सधऽस्थात् । मघोनः । हृदः । वरथः । तमांसि ॥ वातस्य । युक्तान् ।
सुऽयुजः । चित् । अश्वान् । कविः । चित् । एषः । अजगन् । अव-
स्युः ॥ विश्वे । ते । अत्र । मरुतः । सखायः । इंद्र । ब्रह्माणि । तवि-
षीं । अवर्धन् ॥ ३० ॥ सूरः । चित् । रथं । परिऽतक्यायां । पूर्वं ।
करत् । उपरं । जूजुऽवांसं ॥ भरत् । चक्रं । एतशः । सं । रिणाति ।
पुरः । दधत् । सनिष्यति । क्रतुं । नः ॥ आ । अयं । जनाः । अभिऽ-
चक्षे । जगाम । इंद्रः । सखायं । सुतऽसोमं । इच्छन् ॥ वदन् । ग्रावा ।
अव । वेदिं । भ्रियाते । यस्य । जीरं । अध्वर्यवः । चरंति ॥ ये ।

चाकनंत । चाकनंत । नु । ते । मर्ताः । अमृत । मोइति । ते । अंहः । आ । अरन् ॥ ववंधि । यज्यून् । उत । तेषु । धेहि । ओजः । जनेषु । येषु । ते । स्याम ॥ ३१ ॥ अर्ददः । उत्सं । असृजः । वि । खानि । त्वं । अर्णवान् । बद्बधानान् । अरम्णाः ॥ महांतं । इंद्र । पर्वतं । वि । यत् । वरितिवः । सृजः । वि । धाराः । अव । दानवं । हन्निति हन् ॥ त्वं । उत्सान् । ऋतुऽभिः । बद्बधानान् । अरंहः । ऊधः । पर्वतस्य । वज्रिन् ॥ अहिं । चित् । उग्र । प्रऽयुतं । शयानं । जघन्वान् । इंद्र । तविषीं । अधत्थाः ॥ त्यस्य । चित् । महतः । निः । मृगस्य । वधः । जघान । तविषीभिः । इंद्रः ॥ यः । एकः । इत् । अप्रतिः । मन्यमानः । आत् । अस्मात् । अन्यः । अजनिष्ट । तव्यान् ॥ त्यं । चित् । एषां । स्वधया । मदंतं । मिहः । नपातं । सुऽवृधं । तमःऽगां ॥ वृषऽप्रभर्मा । दानवस्य । भामं । वज्रेण । वज्री । नि । जघान । शुष्णं ॥ त्यं । चित् । अस्य । ऋतुऽभिः । निऽसत्तं । अमर्मणः । विदत् । इत् । अस्य । मर्म ॥ यत् । ईं । सुऽक्षत्र । प्रऽभृता । मदस्य । युयुत्संतं । तमसि । हर्म्ये । धाः ॥ त्यं । चित् । इत्था । कत्पयं । शयानं । असूर्ये । तमसि । ववृधानं ॥ तं । चित् । मंदानः । वृषभः । सुतस्य । उच्चैः । इंद्रः । अपऽगूर्य । जघान ॥ ३२ ॥ उत् । यत् । इंद्रः । महते । दानवाय । वधः । यमिष्ट । सहः । अप्रतिऽइतं ॥ यत् । ईं । वज्रस्य । प्रऽभृतौ । ददाभ । विश्वस्य । जंतोः । अधमं । चकार ॥ त्यं । चित् । अर्णं । मधुऽपं । शयानं । असिन्वं । वव्रं । महि । आदत् । उग्रः ॥ अपादं । अत्रं । महता । वधेन । नि । दुर्योणे । अवृणक् । मृध्रऽवाचं ॥ कः । अस्य । शुष्मं । तविषीं । वराते । एकः । धना । भरते । अप्रतिऽइतः ॥ इमेइति । चित् । अस्य । ज्रयसः । नु । देवीइति । इंद्रस्य । ओजसः । भियसा । जिहातेइति ॥ नि । अस्मै । देवी । स्वऽधितिः । जिहीते । इंद्राय । गातुः । उशतीऽइव । येमे ॥ सं । यत् । ओजः । युवते । विश्वं । आभिः । अनु । स्वधाऽ-

न्ने । क्षितयः । नमंत ॥ एकं । नु । त्वा । सत्ऽपतिं । पांचंऽजन्यं । जातं । शृणोमि । यशसं । जनेषु ॥ तं । मे । जगृभ्रे । आऽशसः । नविष्ठं । दोषा । वस्तोः । हवमानासः । इंद्रं ॥ एव । हि । त्वां । ऋतुऽथा । यातयंतं । मघा । विप्रेभ्यः । ददंतं । शृणोमि ॥ किं । ते । ब्रह्माणः । गृहते । सखायः । ये । त्वाऽया । निऽदधुः । कामं । इंद्र ॥ २३ ॥

॥ इति चतुर्थाष्टके प्रथमोध्यायः ॥ १ ॥





॥ अथ द्वितीयोध्यायः ॥

हरिः ॐ ॥ महि । महे । तवसे । दीध्ये । नॄन् । इंद्राय । इत्था । तवसे । अतव्यान् ॥ यः । अस्मै । सुऽमतिं । वाजऽसातौ । स्तुतः । जने । सऽमर्यः । चिकेत ॥ सः । त्वं । नः । इंद्र । धियसानः । अर्कैः । हरीणां । वृषन् । योक्त्रं । अश्रेः ॥ याः । इत्था । मघऽवन् । अनु । जोषं । वक्षः । अभि । प्र । अर्यः । सक्षि । जनान् ॥ न । ते । ते । इंद्र । अभि । अस्मत् । ऋष्व । अयुक्तासः । अब्रह्मता । यत् । असन् ॥ तिष्ठ । रथं । अधि । तं । वज्रऽहस्त । आ । रश्मिं । देव । यमसे । सुऽअश्वः ॥ पुरु । यत् । ते । इंद्र । संति । उक्था । गवे । चकर्थ । उर्वरासु । युध्यन् ॥ ततक्षे । सूर्याय । चित् । ओकसि । स्वे । वृषा । समत्ऽसु । दासस्य । नाम । चित् ॥ वयं । ते । ते । इंद्र । ये । च । नरः । शर्धः । जज्ञानाः । याताः । च । रथाः ॥ आ । अस्मान् । जगम्यात् । अहिऽशुष्म । सत्वा । भगः । न । हव्यः । प्रऽभृथेषु ।

चार्हः ॥ १ ॥ पपृक्षेण्यं । इंद्र । त्वेइति । हि । ओजः । नृम्णानि । च । नृऽतमानः । अमर्तः ॥ सः । नः । एनीं । वसवानः । रयिं । दाः । प्र । अर्यः । स्तुषे । तुविऽमघस्य । दानं ॥ एव । नः । इंद्र । ऊतिऽभिः । अव । पाहि । गृणतः । शूर । कारून् ॥ उत । त्वचं । ददतः । वाजऽसातौ । पिप्रीहि । मध्वः । सुऽसुतस्य । चारोः ॥ उत । त्ये । मा । पौरुऽकुत्स्यस्य । सूरेः । त्रसदस्योः । हिरणिनः । रराणाः । वहंतु । मा । दश । श्येतासः । अस्य । गैरिऽक्षितस्य । क्रतुऽभिः । नु । सश्चे ॥ ० ॥ मारुतऽअश्वस्य । शोणाः । क्रत्वाऽमघासः । विदथस्य । रातौ ॥ सहस्रा । मे । च्यवतानः । ददानः । आनूकं । अर्यः । वपुषे । न । आर्चत् ॥ ० ॥ ध्वन्यस्य । जुष्टाः । लक्ष्मण्यस्य । सुऽरुचः । यतानाः ॥ मह्ना । रायः । संऽवरणस्य । ऋषेः । व्रजं । न । गावः । प्रऽयताः । अपि । ग्मन् ॥ २ ॥ अजातऽशत्रुं । अजरा । स्वःऽवती । अनु । स्वधा । अमिता । दस्मं । ईयते । सुनोतन । पचत । ब्रह्मऽवाहसे । पुरुऽस्तुताय । प्रऽतरं । दधातन ॥ आ । यः । सोमेन । जठरं । अपिप्रत । अमंदत । मघऽवा । मध्वः । अंधसः ॥ यत् । ईं । मृगाय । हंतवे । महाऽवधः । सहस्रऽभृष्टिं । उशना । वधं । यमत् ॥ यः । अस्मै । घ्रंसे । उत । वा । यः । ऊधनि । सोमं । सुनोति । भवति । द्युऽमान् । अह ॥ अपऽअप । शक्रः । ततनुष्टिं । ऊहति । तनूऽशुभ्रं । मघऽवा । यः । कवऽसखः ॥ यस्य । अवधीत् । पितरं । यस्य । मातरं । यस्य । शक्रः । भ्रातरं । न । अतः । ईषते ॥ वेति । इत् । ऊँइति । अस्य । प्रऽयता । यतंऽकरः । न । किल्बिषात् । ईषते । वस्वः । आऽकरः ॥ न । पंचऽभिः । दशऽभिः । वष्टि । आऽरभं । न । असुन्वता । सचते । पुष्यता । चन ॥ जिनाति । वा । इत् । अमुया । हंति । वा । धुनिः । आ । देवऽयुं । भजति । गोऽमति । व्रजे ॥ ३ ॥ विऽत्वक्षणः । संऽऋतौ । चक्रंऽआसजः । असुन्वतः । विषुणः । सुन्वतः । वृधः ॥ इंद्रः । विश्वस्य । दमिता । विऽभीषणः ।

यथाऽवशं । नयति । दासं । आर्यः ॥ सं । ईं । पणेः । अजति । भोजनं । मुषे । वि । दाशुषे । भजति । सुनरं । वसु ॥ दुःऽगे । चन । ध्रियते । विश्वः । आ । पुरु । जनः । यः । अस्य । तविषीं । अचुक्रुधत् ॥ सं । यत् । जनौ । सुऽधनौ । विश्वऽशर्धसौ । अवेत् । इंद्रः । मघऽवा । गोषु । शुभ्रिषु ॥ युजं । हि । अन्यं । अकृत । प्रऽवेपनी । उत् । ईं । गव्यं । सृजते । सत्वऽभिः । धुनिः ॥ सहस्रऽसां । आग्निऽवेशिं । गृणीषे । शत्रिं । अग्ने । उपऽमां । केतुं । अर्यः ॥ तस्मै । आपः । संऽयतः । पीपयंत । तस्मिन् । क्षत्रं । अमऽवत् । त्वेषं । अस्तु ॥ ४ ॥ यः । ते । साधिष्ठः । अवसे । इंद्र । क्रतुः । तं । आ । भर ॥ अस्मभ्यं । चर्षणिऽसहं । सस्निं । वाजेषु । दुस्तरं ॥ यत् । इंद्र । ते । चतस्रः । यत् । शूर । संति । तिस्रः ॥ यत् । वा । पंच । क्षितीनां । अवः । तत् । सु । नः । आ । भर ॥ आ । ते । अवः । वरेण्यं । वृषन्ऽतमस्य । हूमहे । वृषऽजूतिः । हि । जज्ञिषे । आऽभूभिः । इंद्र । तुर्वणिः ॥ वृषा । हि । असि । राधसे । जज्ञिषे । वृष्णि । ते । शवः ॥ स्वऽक्षत्रं । ते । धृषत् । मनः । सत्राऽहं । इंद्र । पौंस्यं ॥ त्वं । तं । इंद्र । मर्त्यं । अमित्रऽयंतं । अद्रिऽवः ॥ सर्वऽरथा । शतक्रतोइतिशतऽक्रतो । नि । याहि । शवसः । पते ॥ ५ ॥ त्वां । इत् । वृत्रहन्ऽतम । जनासः । वृक्तऽबर्हिषः ॥ उग्रं । पूर्वीषु । पूर्व्यं । हवंते । वाजऽसातये ॥ अस्माकं । इंद्र । दुस्तरं । पुरःऽयावानं । आजिषु ॥ सऽयावानं । धनेऽधने । वाजऽयंतं । अव । रथं ॥ अस्माकं । इंद्र । आ । इहि । नः । रथं । अव । पुरंऽध्या ॥ वयं । शविष्ठ । वार्यं । दिवि । श्रवः । दधीमहि । दिवि । स्तोमं । मनामहे ॥ ६ ॥ सः । आ । गमत् । इंद्रः । यः । वसूनां । चिकेतत् । दातुं । दामनः । रयीणां ॥ धन्वऽचरः । न । वंसगः । तृषाणः । चकमानः । पिबतु । दुग्धं । अंशुं ॥ आ । ते । हनूइति । हरिऽवः । शूर । शिप्रेइति । रुहत् । सोमः । न । पर्वतस्य । पृष्ठे ॥

अनु । त्वा । राजन् । अर्वतः । न । हिन्वन् । गीःऽभिः । मदेम । पुरुऽहूत । विश्वे ॥ चक्रं । न । वृत्तं । पुरुऽहूत ॥ वेपते । मनः । भिया । मे । अमतेः । इत् । अद्रिऽवः ॥ रथात् । अधि । त्वा । जरिता । सदाऽवृध । कुवित् । नु । स्तोषत् । मघऽवन् । पुरुऽवसुः ॥ एषः । ग्रावाऽइव । जरिता । ते । इंद्र । इयर्ति । वाचं । बृहत् । आशुषाणः ॥ प्र । सव्येन । मघऽवन् । यंसि । रायः । प्र । दक्षिणित् ॥ हरिऽवः । मा । वि । वेनः ॥ वृषा । त्वा । वृषणं । वर्धतु । द्यौः । वृषा । वृषऽभ्यां । वहसे । हरिऽभ्यां ॥ सः । नः । वृषा । वृषऽरथः । सुऽशिप्र । वृषक्रतोइतिवृषऽक्रतो । वृषा । वज्रिन् । भरे । धाः ॥ यः । रोहितौ । वाजिनौ । वाजिनीऽवान् । त्रिऽभिः । शतैः । सचमानौ । अदिष्ट ॥ यूने । सं । अस्मै । क्षितयः । नमतां । श्रुतऽरथाय । मरुतः । दुवःऽया ॥ ७ ॥ सं । भानुना । यतते । सूर्यस्य । आऽजुह्वानः । घृतऽपृष्ठः । सुऽअंचाः ॥ तस्मै । अमृध्राः । उषसः । वि । उच्छान् । यः । इंद्राय । सुनवाम । इति । आह ॥ समिद्धऽअग्निः । वनवत् । स्तीर्णऽबर्हिः । युक्तऽग्रावा । सुतऽसोमः । जराते ॥ ग्रावाणः । यस्य । इषिरं । वदंति । अयत् । अध्वर्युः । हविषा । अव । सिंधुं ॥ वधूः । इयं । पतिं । इच्छंती । एति । यः । ईं । वहाते । महिषीं । इषिरां ॥ आ । अस्य । श्रवस्यात् । रथः । आ । च । घोषात् । पुरु । सहस्रा । परि । वर्तयाते । न । सः । राजा ॥ व्यथते । यस्मिन् । इंद्रः । तीव्रं । सोमं । पिबति । गोऽसखायं ॥ आ । सत्वनैः । अजति । हंति । वृत्रं । क्षेति । क्षितीः । सुऽभगः । नाम । पुष्यन् ॥ पुष्यात् । क्षेमे । अभि । योगे । भवाति । उभेइति । वृतौ । संयतीइतिसंऽयती । सं । जयाति ॥ प्रियः । सूर्ये । प्रियः । अग्ना । भवाति । यः । इंद्राय । सुतऽसोमः । ददाशत् ॥ ८ ॥ उरोः । ते । इंद्र । राधसः । विऽभ्वी । रातिः । शतक्रतोइतिशतऽक्रतो ॥ अध । नः । विश्वऽचर्षणे । द्युम्ना । सुऽक्षत्र । मंहय ॥ यत् । ईं । इंद्र । श्रवाय्यं । इषं । शविष्ठ । दधिषे ॥

पप्रथे । दीर्घश्रुत्ऽतमं । हिरण्यऽवर्ण । दुस्तरं ॥ शुष्मासः । ये । ते ।
अद्रिऽवः । मेहना । केतऽसापः ॥ उभा । देवौ । अभिष्टये । दिवः ।
च । ग्मः । च । राजथः ॥ उतोइति । नः । अस्य । कस्य । चित् ।
दक्षस्य । तव । वृत्रऽहन् ॥ अस्मभ्यं । नृम्णं । आ । भर । अस्मभ्यं ।
नृऽमनस्यसे ॥ नु । ते । आभिः । अभिष्टिऽभिः । तव । शर्मन् ।
शतक्रतोइतिशतऽक्रतो ॥ इंद्र । स्याम । सुऽगोपाः । शूर । स्याम ।
सुऽगोपाः ॥ ९ ॥ यत् । इंद्र । चित्र । मेहना । अस्ति । त्वाऽदातं ।
अद्रिऽवः ॥ राधः । तत् । नः । विदद्वसोइतिविदत्ऽवसो । उभया-
हस्ति । आ । भर ॥ यत् । मन्यसे । वरेण्यं । इंद्र । द्युक्षं । तत् ।
आ । भर । विद्याम । तस्य । ते । वयं । अकूपारस्य । दावने ॥ यत् ।
ते । दित्सु । प्रऽराध्यं । मनः । अस्ति । श्रुतं । बृहत् ॥ तेन । दृळ्हा ।
चित् । अद्रिऽवः । आ । वाजं । दर्षि । सातये ॥ मंहिष्ठं । वः । मघो-
नां । राजानं । चर्षणीनां ॥ इंद्रं । उप । प्रऽशस्तये । पूर्वीभिः ।
जुजुषे । गिरः ॥ अस्मै । इत् । काव्यं । वचः । उक्थं । इंद्राय । शंस्यं ॥
तस्मै । ऊँइति । ब्रह्मऽवाहसे । गिरः । वर्धंतु । अत्रयः । गिरः ।
शुंभंति । अत्रयः ॥ १० ॥ आ । याहि । अद्रिऽभिः । सुतं । सोमं ।
सोमऽपते । पिब ॥ वृषन् । इंद्र । वृषऽभिः । वृत्रहन्ऽतम ॥ वृषा ।
ग्रावा । वृषा । मदः । वृषा । सोमः । अयं । सुतः ॥ ० ॥ वृषा । त्वा ।
वृषणं । हुवे । वज्रिन् । चित्राभिः । ऊतिऽभिः ॥ ० ॥ ऋजीषी ।
वज्री । वृषभः । तुराषाट् । शुष्मी । राजा । वृत्रऽहा । सोमऽपावा ॥
युक्त्वा । हरिऽभ्यां । उप । यासत् । अर्वाङ् । माध्यंदिने । सवने ।
मत्सत् । इंद्रः । यत् । त्वा । सूर्य । स्वःऽभानुः । तमसा । अविध्यत् ।
आसुरः ॥ अक्षेत्रऽवित् । यथा । मुग्धः । भुवनानि । अदीधयुः ॥ ११ ॥
स्वःऽभानोः । अध । यत् । इंद्र । मायाः । अवः । दिवः । वर्तमानाः ।
अवऽअहन् ॥ गूळ्हं । सूर्यं । तमसा । अपऽव्रतेन । तुरीयेण । ब्रह्मणा ।
अविंदत् । अत्रिः ॥ मा । मां । इमं । तव । संतं । अत्रे । इरस्या । द्रुग्धः ।

भियसा । नि । गारीत् ॥ त्वं । मित्रः । असि । सत्यऽराधाः । तौ ।
मा । इह । अवतं । वरुणः । च । राजा ॥ ग्रावाणः । ब्रह्मा । युयुजानः ।
सपर्यन् । कीरिणा । देवान् । नमसा । उपऽशिक्षन् । अत्रिः । सूर्यस्य ।
दिवि । चक्षुः । आ । अधात् । स्वःऽभानोः । अप । मायाः । अघुक्षत् ।
यं । वै । सूर्यं ॥ ० ॥ अत्रयः । तं । अनु । अविंदन् । नहि । अन्ये ।
अशक्नुवन् ॥ १२ ॥ कः । नु । वां । मित्रावरुणौ । ऋतऽयन् । दिवः ।
वा । महः । पार्थिवस्य । वा । दे । ऋतस्य । वा । सदसि । त्रासीथां ।
नः । यज्ञऽयते । वा । पशुऽसः । न । वाजान् । ते ॥ ० ॥ जुषंत । नमःऽ-
भिः । वा । ये । दधते । सुऽवृक्तिं । स्तोमं । रुद्राय । मीळ्हुषे ।
सऽजोषाः ॥ आ । वां । येष्ठा । अश्विना । हुवध्यै । वातस्य । पत्मन् ।
रथ्यस्य । पुष्टौ ॥ उत । वा । दिवः । असुराय । मन्म । प्र । अंधां-
सिऽइव । यज्यवे । भरध्वं ॥ प्र । सक्षणः । दिव्यः । कण्वऽहोता ।
त्रितः । दिवः । सऽजोषाः । वातः । अग्निः ॥ पूषा । भगः । प्रऽभृथे ।
विश्वऽभोजाः । आजिं । न । जग्मुः । आश्वश्वऽतमाः ॥ प्र । वः । रयिं ।
युक्तऽअश्वं । भरध्वं । रायः । एषे । अवसे । दधीत । धीः । सुऽ-
शेवः । एवैः । औशिजस्य । होता । ये । वः । एवाः । मरुतः ।
तुराणां ॥ १३ ॥ प्र । वः । वायुं । रथऽयुजं । कृणुध्वं । प्र । देवं ।
विप्रं । पनितारं । अर्कैः ॥ इषुध्यवः । ऋतऽसापः । पुरंऽधीः । वस्वीः ।
नः । अत्र । पत्नीः । आ । धिये । धुरितिधुः ॥ ० ॥ वंद्येभिः । शूषैः ।
प्र । यह्वीइति । दिवः । चितयत्ऽभिः । अर्कैः ॥ उषसानक्ता । विदु-
षीइवेतिविदुषीऽइव । विश्वं । आ । ह । वहतः । मर्त्याय । यज्ञं ॥
अभि । वः । अर्चे । पोष्याऽवतः । नॄन् । वास्तोः । पतिं । त्वष्टारं ।
रराणः । धन्या । सऽजोषाः । धिषणा । नमःऽभिः । वनस्पतीन् ।
ओषधीः । रायः । एषे ॥ तुजे । नः । तने । पर्वताः । संतु । स्वऽ-
एतवः । ये । वसवः । न । वीराः ॥ पनितः । आप्त्यः । यजतः ।
सदा । नः । वर्धात् । नः । शसं । नर्यः । अभिष्टौ ॥ वृष्णः । अस्तो-

पि । भूम्यस्य । गर्भं । त्रितः । नपातं । अपां । सुऽवृक्ति ॥ गृणीते । अग्निः । एतरि । न । शूषैः । शोचिःऽकेशः । नि । रिणाति । वना ॥ १४ ॥ कथा । महे । रुद्रियाय । ब्रवाम । कत् । राये । चिकितुषे । भगाय ॥ आपः । ओषधीः । उत । नः । अवंतु । द्यौः । वना । गिरयः । वृक्षऽकेशाः ॥ शृणोतु । नः । ऊर्जां । पतिः । गिरः । सः । नभः । तरीयान् । इषिरः । परिऽज्मा ॥ शृण्वंतु । आपः । पुरः । न । शुभ्राः । परि । स्रुचः । बबृहाणस्य । अद्रेः ॥ विद । चित् । नु । महांतः । ये । वः । एवाः । ब्रवाम । दस्माः । वार्यं । दधानाः ॥ वयः । चन । सुऽभ्वः । आ । अव । यंति । क्षुभा । मर्तं । अनुऽयतं । वधऽस्नैः । आ । दैव्यानि । पार्थिवानि । जन्म । अपः । च । अच्छ । सुऽमखाय । वोचं । वर्धंतां । द्यावः । गिरः । चंद्रऽअग्राः । उदा । वर्धंतां । अभिऽसाताः । अर्णाः । पदेऽपदे । मे । जरिमा । नि । धायि । वरूत्री । वा । शक्रा । या । पायुऽभिः । च । सिसक्तु । माता । मही । रसा । नः । स्मत् । सूरिऽभिः । ऋजुऽहस्ता । ऋजुऽवनिः ॥ १५ ॥ कथा । दाशेम । नमसा । सुऽदानून् । एवऽया । मरुतः । अच्छऽउक्तौ । प्रऽश्रवसः । मरुतः । अच्छऽउक्तौ । मा । नः । अहिः । बुध्न्यः । रिषे । धात् । अस्माकं । भूत् । उपमातिऽवनिः । इति । चित् । नु । प्रऽजायै । पशुऽमत्यै । देवासः । वनते । मर्त्यः । वः । आ । देवासः । वनते । मर्त्यः । वः । अत्र । शिवां । तन्वः । धासिं । अस्याः । जरां । चित् । मे । निःऽऋतिः । जग्रसीत । तां । वः । देवाः । सुऽमतिं । ऊर्जयंतीं । इषं । अश्याम । वसवः । शसा । गोः । सा । नः । सुऽदानुः । मृळयंती । देवी । प्रति । द्रवंती । सुविताय । गम्याः । अभि । नः । इळा । यूथस्य । माता । स्मत् । नदीभिः । उर्वशी । वा । गृणातु । उर्वशी । वा । बृहत्ऽदिवा । गृणाना । अभिऽऊर्ण्वाना । प्रऽभृथस्य । आयोः । सिसक्तु । नः । ऊर्जव्यस्य । पुष्टेः ॥ १६ ॥ प्र । वःऽतमा । वरुणं । दीधिती ।

गीः । मित्रं । भगं । अदितिं । नूनं । अश्याः । पृषत्ऽयोनिः । पंचऽ-
होता । शृणोतु । अतूर्तऽपंथाः । असुरः । मयःऽभुः । प्रति । मे ।
स्तोमं । अदितिः । जगृभ्यात् । सूनुं । न । माता । हृद्यं । सुऽशेवं ।
ब्रह्म । प्रियं । देवऽहितं । यत् । अस्ति । अहं । मित्रे । वरुणे । यत् ।
मयःऽभु । उत् । ईरय । कविऽतमं । कवीनां । उनत्त । एनं । अभि ।
मध्वा । घृतेन । सः । नः । वसूनि । प्रऽयंता । हितानि । चंद्राणि ।
देवः । सविता । सुवाति । सं । इंद्र । नः । मनसा । नेषि । गोभिः ।
सं । सूरिऽभिः । हरिऽवः । सं । स्वस्ति । सं । ब्रह्मणा । देवऽहितं ।
यत् । अस्ति । सं । देवानां । सुऽमत्या । यज्ञियानां ॥ देवः । भगः ।
सविता । रायः । अंशः । इंद्रः । वृत्रस्य । संऽजितः । धनानां ॥
ऋभुक्षाः । वाजः । उत । वा । पुरंऽधिः । अवंतु । नः । अमृतासः ।
तुरासः ॥ १७ ॥ मरुत्वतः । अप्रतिऽइतस्य । जिष्णोः । अजूर्यतः ।
प्र । ब्रवाम । कृतानि ॥ न । ते । पूर्वे । मघऽवन् । न । अपरासः ।
न । वीर्यं । नूतनः । कः । चन । आप । उप । स्तुहि । प्रथमं ।
रत्नऽधेयं । बृहस्पतिं । सनितारं । धनानां । यः । शंसते । स्तुवते ।
शंऽभविष्ठः । पुरुऽवसुः । आऽगमत् । जोहुवानं ॥ तव । ऊतिऽभिः ।
सचमानाः । अरिष्टाः । बृहस्पते । मघऽवानः । सुऽवीराः ॥ ये ।
अश्वऽदाः । उत । वा । संति । गोऽदाः । ये । वस्त्रऽदाः । सुऽभगाः ।
तेषु । रायः ॥ विऽसर्माणं । कृणुहि । वित्तं । एषां । ये । भुंजते ।
अपृणंतः । नः । उक्थैः ॥ अपऽव्रतान् । प्रऽसवे । ववृधानान् । ब्रह्मऽ-
द्विषः । सूर्यात् । यवयस्व ॥ यः । ओहते । रक्षसः । देवऽवीतौ ।
अचक्रेभिः । तं । मरुतः । नि । यात ॥ यः । वः । शमीं । शशमानस्य ।
निंदात् । तुच्छ्यान् । कामान् । करते । सिस्विदानः ॥ १८ ॥ तं ।
ऊँ इति । स्तुहि । यः । सुऽइषुः । सुऽधन्वा । यः । विश्वस्य । क्षयति ।
भेषजस्य ॥ यक्ष्व । महे । सौमनसाय । रुद्रं । नमःऽभिः । देवं ।
असुरं । दुवस्य ॥ दमूनसः । अपसः । ये । सुऽहस्ताः । वृष्णः । पत्नीः ।

नद्यः । विश्वऽतष्टाः ॥ सरस्वती । बृहत्ऽदिवा । उत । राका । दश-स्यंतीः । वरिवस्यंतु । शुभ्राः ॥ प्र । सु । महे । सुऽशरणाय । मेधां । गिरं । भरे । नव्यसीं । जायमानां ॥ यः । आहनाः । दुहितुः । वक्ष-णासु । रूपा । मिनानः । अकृणोत् । इदं । नः ॥ प्र । सुऽस्तुतिः । स्तनयंतं । रुवंतं । इळः । पतिं । जरितः । नूनं । अश्याः ॥ यः । अब्दिऽमान् । उदनिऽमान् । इयर्ति । प्र । विऽद्युता । रोदसीइति । उक्षमाणः ॥ एषः । स्तोमः । मारुतं । शर्धः । अच्छ । रुद्रस्य । सूनू-न् । युवन्यून् । उत् । अश्याः ॥ कामः । राये । हवते । मा । स्वस्ति । उप । स्तुहि । पृषत्ऽअश्वान् । अयासः ॥ प्र । एषः । स्तोमः । पृथिवीं । अंतरिक्षं । वनस्पतीन् । ओषधीः । राये । अश्याः ॥ देवःऽ-देवः । सुऽहवः । भूतु । मह्यं । मा । नः । माता । पृथिवी । दुःऽ-मतौ । धात् ॥ उरौ । देवाः । अनिऽबाधे । स्याम ॥ सं । अश्विनोः । अवसा । नूतनेन । मयःऽभुवा । सुऽप्रनीती । गमेम ॥ आ । नः । रयिं । वहतं । आ । उत । वीरान् । आ । विश्वानि । अमृता । सौभ-गानि ॥ १९ ॥ आ । धेनवः । पयसा । तूर्णिऽअर्थाः । अमर्धंतीः । उप । नः । यंतु । मध्वा ॥ महः । राये । बृहतीः । सप्त । विप्रः । मयःऽभुवः । जरिता । जोहवीति ॥ आ । सुऽस्तुती । नमसा । वर्त-यध्यै । द्यावा । वाजाय । पृथिवीइति । अमृध्रेइति ॥ पिता । माता । मधुऽवचाः । सुऽहस्ता । भरेऽभरे । नः । यशसौ । अविष्टां ॥ अध्वर्यवः । चकृऽवांसः । मधूनि । प्र । वायवे । भरत । चारु । शुक्रं ॥ होताऽइव । नः । प्रथमः । पाहि । अस्य । देव । मध्वः । ररिम । ते । मदाय । दशं । क्षिपः । युंजते । बाहूइति । अद्रिं । सोमस्य । या । शमितारा । सुऽहस्ता । मध्वः । रसं । सुऽगभस्तिः । गिरिऽस्थां । चनिश्चदत् । दुदुहे । शुक्रं । अंशुः । असावि । ते । जुजुषाणाय । सोमः । क्रत्वे । दक्षाय । बृहते । मदाय ॥ हरीइति । रथे । सुऽधुरा । योगे । अर्वाक् ॥ इंद्र । प्रिया । कृणुहि । हूयमानः ॥ २० ॥ आ । नः । महीं ।

अरमतिं । सऽजोषाः । ग्नां । देवीं । नमसा । रातऽहव्यां ॥ मधोः । मदाय । बृहतीं । ऋतऽज्ञां । आ । अग्ने । वह । पथिऽभिः । देवऽ- यानैः ॥ अंजंति । यं । प्रथयंतः । न । विप्राः । वपाऽवंतं । न । अग्निना । तपंतः ॥ पितुः । न । पुत्रः । उपसि । प्रेष्ठः । आ । घर्मः । अग्निं । ऋतयन् । असादि ॥ अच्छ । मही । बृहती । शंऽतमा । गीः । दूतः । न । गंतु । अश्विना । हुवध्यै ॥ मयःऽभुवा । सऽरथा । आ । यातं । अर्वाक् । गंतं । निऽधिं । धुरं । आणिः । न । नाभिं ॥ प्र । तव्यसः । नमःऽउक्तिं । तुरस्य । अहं । पूष्णः । उत । वायोः । आदिक्षि ॥ या । राधसा । चोदितारा । मतीनां । या । वाजस्य । द्रविणःऽदौ । उत । त्मन् ॥ आ । नामऽभिः । मरुतः । वक्षि । विश्वान् । आ । रूपेभिः । जातऽवेदः । हुवानः ॥ यज्ञं । गिरः । जरितुः । सुऽस्तुतिं । च । विश्वे । गंत । मरुतः । विश्वे । ऊती ॥ २१ ॥ आ । नः । दिवः । बृहतः । पर्वतात् । आ । सरस्वती । यजता । गंतु । यज्ञं ॥ हवं । देवी । जुजुषाणा । घृताची । शग्मां । नः । वाचं । उशती । शृणोतु ॥ आ । वेधसं । नीलऽपृष्ठं । बृहंतं । बृहस्पतिं । सदने । सादयध्वं ॥ सादत्ऽयोनिं । दमे । आ । दीदिऽवांसं । हिरण्यऽवर्णं । अरुषं । सपेम ॥ आ । धर्णसिः । बृहत्ऽ- दिवः । रराणः । विश्वेभिः । गंतु । ओमऽभिः । हुवानः ॥ ग्नाः । वसानः । ओषधीः । अमृध्रः । त्रिधातुऽशृंगः । वृषभः । वयःऽ- धाः ॥ ० ॥ शुक्रे । आयोः । विपन्यवः । रास्पिरासः । अग्मन् ॥ सुऽशेव्यं । नमसा । रातऽहव्याः । शिशुं । मृजंति । आयवः । न । वासे ॥ बृहत् । वयः । बृहते । तुभ्यं । अग्ने । धियाऽजुरः । मिथुनासः । सचंत ॥ ० ॥ २२ ॥ तं । प्रत्नऽथा । पूर्वऽथा । विश्वऽथा । इमऽथा । ज्येष्ठऽतातिं । बर्हिऽसदं । स्वःऽविदं ॥ प्रतीचीनं । वृजनं । दोहसे । गिरा । आशुं । जयंतं । अनु । यासु । वर्धसे ॥ श्रिये । सुऽदृशीः । उपरस्य । याः । स्वः । विऽरोचमानः । ककुभां । अचोदते ॥ सुऽ-

गोपाः । असि । न । दभाय । सुकृतोइतिसुऽकृतो । परः । मायाभिः ।
ऋते । आस । नाम । ते ॥ अत्यं । हविः । सचते । सत् । च । धातु ।
च । अरिष्टऽगातुः । सः । होता । सहःऽभरिः ॥ प्रऽसर्स्राणः । अनु ।
बर्हिः । वृषा । शिशुः । मध्ये । युवा । अजरः । विऽस्रुहा । हितः ॥
प्र । वः । एते । सुऽयुजः । यामन् । इष्टये । नीचीः । अमुष्मै ।
यम्यः । ऋतऽवृधः ॥ सुयंतुऽभिः । सर्वऽशासैः । अभीशुऽभिः ।
क्रिविः । नामानि । प्रवणे । मुषायति ॥ संऽजर्भुराणः । तरुऽभिः ।
सुतेऽगृभं । वयाकिनं । चित्तऽगर्भासु । सुऽस्वरुः ॥ धारऽवाकेषु ।
ऋजुऽगाथ । शोभसे । वर्धस्व । पत्नीः । अभि । जीवः । अध्वरे ॥ २३ ॥
यादृक् । एव । ददृशे । तादृक् । उच्यते । सं । छायया । दधिरे ।
सिध्रया । अप्ऽसु । आ ॥ महीं । अस्मभ्यं । उरुऽसां । उरु । ज्रयः ।
बृहत् । सुऽवीरं । अनपऽच्युतं । सहः ॥ वेति । अग्रुः । जनिऽवान् । वै ।
अति । स्पृधः । सऽमर्यता । मनसा । सूर्यः । कविः ॥ घ्रंसं । रक्षंतं ।
परि । विश्वतः । गयं । अस्माकं । शर्म । वनवत् । स्वऽवसुः ॥
ज्यायांसं । अस्य । यतुनस्य । केतुना । ऋषिऽस्वरं । चरति । यासु ।
नाम । ते ॥ यादृश्मिन् । धायि । तं । अपस्यया । विदत् । यः ।
ऊँइति । स्वयं । वहते । सः । अरं । करत् ॥ समुद्रं । आसां । अव ।
तस्थे । अग्रिमा । न । रिष्यति । सवनं । यस्मिन् । आऽयता ॥ अत्र ।
न । हार्दि । क्रवणस्य । रेजते । यत्र । मतिः । विद्यते । पूतऽबंधनी ॥
सः । हि । क्षत्रस्य । मनसस्य । चित्तिऽभिः । एवऽवदस्य । यजतस्य ।
सध्रेः ॥ अवऽत्सारस्य । स्पृणवाम । रण्वऽभिः । शविष्ठं । वाजं ।
विदुषा । चित् । अर्ध्यं ॥ २४ ॥ श्येनः । आसां । अदितिः । कक्ष्यः ।
मदः । विश्वऽवारस्य । यजतस्य । मायिनः ॥ सं । अन्यंऽअन्यं । अर्थयंति ।
एतवे । विदुः । विऽसानं । परिऽपानं । अंति । ते ॥ सदाऽपृणः ।
यजतः । वि । द्विषः । वधीत् । बाहुऽवृक्तः । श्रुतऽवित् । तर्यः । वः ।
सचा ॥ उभा । सः । वरा । प्रति । एति । भाति । च । यत् । ईं ।

गणं । भजंते । सुप्रयावऽभिः ॥ सुतंऽभरः । यजमानस्य । सत्ऽपतिः । विश्वासां । ऊधः । सः । धियां । उत्ऽअंचनः ॥ भरत् । धेनुः । रसंऽवत् । शिश्रिये । पयः । अनुऽब्रुवाणः । अधि । एति । न । स्वपन् । यः । जागार । तं । ऋचः । कामयंते । यः । जागार । तं । ऊँइति । सामानि । यंति ॥ यः । जागार । तं । अयं । सोमः । आह । तव । अहं । अस्मि । सख्ये । निऽओकाः ॥ अग्निः । जागार ॥ ० ॥ ॥ २५ ॥ विदाः । दिवः । विऽस्यन् । अद्रिं । उक्थैः । आऽयत्याः । उषसः । अर्चिनः । गुः ॥ अप । अवृत । व्रजिनीः । उत् । स्वः । गात् । वि । दुरः । मानुषीः । देवः । आवरित्यावः ॥ वि । सूर्यः । अमतिं । न । श्रियं । सात् । आ । ऊर्वात् । गवां । माता । जानती । गात् ॥ धन्वऽअर्णसः । नद्यः । खादःऽअर्णाः । स्थूणाऽइव । सुऽमिता । दृंहत । द्यौः ॥ अस्मे । उक्थाय । पर्वतस्य । गर्भः । महीनां । जनुषे । पूर्व्याय ॥ वि । पर्वतः । जिहीत । साधत । द्यौः । आऽविवासंतः । दसयंत । भूम ॥ सुऽउक्तेभिः । वः । वचःऽभिः । देवऽजुष्टैः । इंद्रा । नु । अग्नीइति । अवसे । हुवध्यै । ॥ उक्थेभिः । हि । स्म । कवयः । सुऽयज्ञाः । आऽविवासंतः । मरुतः । यजंति ॥ एतोइति । नु । अद्य । सुऽध्यः । भवाम । प्र । दुच्छुनाः । मिनवाम । वरीयः ॥ आरे । द्वेषांसि । सनुतः । दधाम । अयाम । प्रांचः । यजमानं । अच्छ ॥ २६ ॥ आ । इत । धियं । कृणवाम । सखायः । अप । या । माता । ऋणुत । व्रजं । गोः ॥ यया । मनुः । विशिऽशिप्रं । जिगाय । यया । वणिक् । वंकुः । आप । पुरीषं ॥ अनूनोत् । अत्र । हस्तऽयतः । अद्रिः । आर्चन् । येन । दश । मासः । नवऽग्वाः ॥ ऋतं । यती । सरमा । गाः । अविंदत् । विश्वानि । सत्या । अंगिराः । चकार ॥ विश्वे । अस्याः । विऽउषि । माहिनायाः । सं । यत् । गोभिः । अंगिरसः । नवंत ॥ उत्सः । आसां । परमे । सधऽस्थे । ऋतस्य । पथा । सरमा । विदत् । गाः । आ । सूर्यः । यात । सप्तऽअश्वः । क्षेत्रं । यत् । अस्य ।

उर्विया । दीर्घऽयाथे ॥ रघुः । श्येनः । पतयत् । अंधः । अच्छ । युवा । कविः । दीदयत् । गोषु । गच्छन् ॥ आ । सूर्यः । अरुहत् । शुक्रं । अर्णः । अयुक्त । यत् । हरितः । वीतऽपृष्ठाः । उद्गा । न । नावं । अनयंत । धीराः । आऽशृण्वतीः । आपः । अर्वाक् । अतिष्ठन् ॥ धियं । वः । अप्ऽसु । दधिषे । स्वःऽसां । यया । अतरं । दश । मासः । नवंऽग्वाः ॥ अया । धिया । स्याम । देवऽगोपाः । अया । धिया । तुतुर्याम । अति । अंहः ॥ २७ ॥ हयः । न । विद्वान् । अयुजि । स्वयं । धुरि । तां । वहामि । प्रऽतरणीं । अवस्युवं ॥ न । अस्याः । वश्मि । विऽमुचं । न । आऽवृतं । पुनः । विद्वान् । पथः । पुरःऽएता । ऋजु । नेषति ॥ अग्ने । इंद्र । वरुण । मित्र । देवाः । शर्धः । प्र । यंत । मारुत । उत । विष्णोइति ॥ उभा । नासत्या । रुद्रः । अध । ग्नाः । पूषा । भगः । सरस्वती । जुषंत ॥ इंद्राग्नीइति । मित्रावरुणा । अदितिं । स्व१रितिस्वः । पृथिवीं । द्यां । मरुतः । पर्वतान् । अपः ॥ हुवे । विष्णुं । पूषणं । ब्रह्मणः । पतिं । भगं । नु । शंसं । सवितारं । ऊतये ॥ उत । नः । विष्णुः । उत । वातः । अस्रिधः । द्रविणःऽदाः । उत । सोमः । मयः । करत् ॥ उत । ऋभवः । उत । राये । नः । अश्विना । उत । त्वष्टा । उत । विऽभ्वा । अनु । मंसते ॥ उत । त्यत् । नः । मारुतं । शर्धः । आ । गमत् । दिविऽक्षयं । यजतं । बर्हिः । आऽसदे ॥ बृहस्पतिः । शर्म । पूषा । उत । नः । यमत् । वरूथ्यं । वरुणः । मित्रः । अर्यमा । उत । त्ये । नः । पर्वतासः । सुऽशस्तयः । सुऽदीतयः । नद्यः । त्रामणे । भुवन् ॥ भगः । विऽभक्ता । शवसा । अवसा । आ । गमत् । उरुऽव्यचाः । अदितिः । श्रोतु । मे । हवं ॥ देवानां । पत्नीः । उशतीः । अवंतु । नः । प्र । अवंतु । नः । तुजये । वाजऽसातये ॥ याः । पार्थिवासः । याः । अपां । अपि । व्रते । ताः । नः । देवीः । सुऽहवाः । शर्म । यच्छत । उत । ग्नाः । व्यंतु । देवऽपत्नीः । इंद्राणी । अग्नायी । अश्विनी । राट् ॥ आ ।

रोदसीऽइति । वरुणानी । शृणोतु । व्यंतु । देवीः । यः । ऋतुः । जनीनां ॥ २८ ॥

॥ इति चतुर्थाष्टके द्वितीयोध्यायः ॥ २ ॥

## ॥ अथ तृतीयोध्यायः ॥

हरिः ॐ ॥ प्रऽयुंजती । दिवः । एति । ब्रुवाणा । मही । माता । दुहितुः । बोधयंती ॥ आऽविवासंती । युवतिः । मनीषा । पितृऽभ्यः । आ । सदने । जोहुवाना ॥ अजिरासः । तत्ऽअपः । ईयमानाः । आतस्थिऽवांसः । अमृतस्य । नाभिं । अनंतासः । उरवः । विश्वतः । सीं । परि । द्यावापृथिवीइति । यंति । पंथाः ॥ उक्षा । समुद्रः । अरुषः । सुऽपर्णः । पूर्वस्य । योनिं । पितुः । आ । विवेश ॥ मध्ये । दिवः । निऽहितः । पृश्निः । अश्मा । वि । चक्रमे । रजसः । पाति । अंतौ । चत्वारः । ईं । बिभ्रति । क्षेमऽयंतः । दश । गर्भं । चरसे । धापयंते ॥ त्रिऽधातवः । परमाः । अस्य । गावः । दिवः । चरंति । परि । सद्यः । अंतान् ॥ इदं । वपुः । निऽवचनं । जनासः । चरंति । यत् । नद्यः । तस्थुः । आपः ॥ द्वेइति । यत् । ईं । बिभृतः । मातुः । अन्येइति । इहऽइह । जातेइति । यम्या । सबंधूइतिसऽबंधू ॥ वि । तन्वते । धियः । अस्मै । अपांसि । वस्त्रा । पुत्राय । मातरः । वयंति ॥ उपऽप्रक्षे । वृषणः । मोदमानाः । दिवः । पथा । वध्वः । यंति । अच्छ । तत् । अस्तु । मित्रावरुणा । तत् । अग्ने । शं । योः । अस्मभ्यं । इदं । अस्तु । शस्तं । अशीमहि । गाधं । उत । प्रतिऽस्थां । नमः । दिवे । बृहते ।

सदनाय ॥ १ ॥ कत् । ऊँइति । प्रियाय । धाम्ने । मनामहे । स्वऽक्षत्राय । स्वऽयशसे । महे । वयं । आऽमेन्यस्य । रजसः । यत् । अभ्रे । आ । अपः । वृणाना । विऽतनोति । मायिनी । ताः । अत्नत । वयुनं । वीरऽवक्षणं । समान्या । वृतया । विश्वं । आ । रजः । अपोइति । अपाचीः । अपराः । अप । ईजते । प्र । पूर्वाभिः । तिरते । देवऽयुः । जनः । आ । ग्रावऽभिः । अहन्येभिः । अक्तुऽभिः । वरिष्ठं । वज्रं । आ । जिघर्ति । मायिनि । शतं । वा । यस्य । प्रऽचरन् । स्वे । दमे । संऽवर्तयंतः । वि । च । वर्तयन् । अहा । तां । अस्य । रीतिं । परशोःऽइव । प्रति । अनीकं । अख्यं । भुजे । अस्य । वर्पसः । सचा । यदि । पितुमंतंऽइव । क्षयं । रत्नं । दधाति । भरऽहूतये । विशे । सः । जिह्वया । चतुःऽअनीकः । ऋंजते । चारु । वसानः । वरुणः । यतन् । अरिं । न । तस्य । विद्म । पुरुषत्वता । वयं । यतः । भगः । सविता । दाति । वार्यं ॥ २ ॥ देवं । वः । अद्य । सवितारं । आ । ईषे । भगं । च । रत्नं । विऽभजंतं । आयोः । आ । वां । नरा । पुरुऽभुजा । ववृत्यां । दिवेऽदिवे । चित् । अश्विना । सखिऽयन् । प्रति । प्रऽयानं । असुरस्य । विद्वान् । सुऽउक्तैः । देवं । सवितारं । दुवस्य । उप । ब्रुवीत । नमसा । विऽजानन् । ज्येष्ठं । च । रत्नं । विऽभजंतं । आयोः । अदत्रऽया । दयते । वार्याणि । पूषा । भगः । अदितिः । वस्ते । उस्रः । इंद्रः । विष्णुः । वरुणः । मित्रः । अग्निः । अहानि । भद्रा । जनयंत । दस्माः । तत् । नः । अनर्वा । सविता । वरूथं । तत् । सिंधवः । इषयंतः । अनु । ग्मन् । उप । यत् । वोचे । अध्वरस्य । होता । रायः । स्याम । पतयः । वाजऽरत्नाः । प्र । ये । वसुऽभ्यः । ईवत् । आ । नमः । दुः । ये । मित्रे । वरुणे । सूक्तऽवाचः । अव । एतु । अभ्वं । कृणुत । वरीयः । दिवःपृथिव्योः । अवसा । मदेम ॥ ३ ॥ विश्वः । देवस्य । नेतुः । मर्तः । वुरीत । सख्यं । विश्वः । राये । इषुध्यति । द्युम्नं । वृणीत । पुष्यसे । ते । ते ।

देव । नेतः । ये । च । इमान् । अनुऽशसे । ते । राया । ते । हि ।
आऽपृचे । सचेमहि । सचथ्यैः । अतः । नः । आ । नॄन् । अतिथीन् ।
अतः । पत्नीः । दशस्यत । आरे । विश्वं । पथेऽस्थां । द्विषः ।
युयोतु । युयुविः । यत्र । वह्निः । अभिऽहितः । दुद्रवत् । द्रोण्यः ।
पशुः । नृऽमनाः । वीरऽपस्त्यः । अर्णा । धीराऽइव । सनिता । एषः । ते ।
देव । नेतरिति । रथःपतिः । शं । रयिः । शं । राये । शं । स्वस्तये ।
इषःऽस्तुतः । मनामहे । देवऽस्तुतः । मनामहे ॥ ४ ॥ अग्ने । सुतस्य ।
पीतये । विश्वैः । ऊमेभिः । आ । गहि । देवेभिः । हव्यऽदातये ।
ऋतऽधीतयः । आ । गत । सत्यऽधर्माणः । अध्वरं । अग्नेः । पिबत ।
जिह्वया । विप्रेभिः । विप्र । संत्य । प्रातर्यावऽभिः । आ । गहि । देवेभिः ।
सोमऽपीतये । अयं । सोमः । चमूइति । सुतः । अमत्रे । परि ।
सिच्यते ॥ प्रियः । इंद्राय । वायवे । वायोइति । आ । याहि । वीतये ।
जुषाणः । हव्यऽदातये । पिब । सुतस्य । अंधसः । अभि । प्रयः ॥ ५ ॥
॥ ० ॥ सुतानां । पीतिं । अर्हथः । तां । जुषेथां । अरेपसौ । अभि ।
प्रयः । सुताः । इंद्राय । वायवे । सोमासः । दधिऽआशिरः । निम्नं ।
न । यंति । सिंधवः । अभि । प्रयः । सऽजूः । विश्वेभिः । देवेभिः ।
अश्विऽभ्यां । उषसा । सऽजूः । आ । याहि । अग्ने । अत्रिऽवत् ।
सुते । रण । सऽजूः । मित्रावरुणाभ्यां । सऽजूः । सोमेन ।
विष्णुना ॥ ० ॥ सऽजूः । आदित्यैः । वसुऽभिः । सऽजूः । इंद्रेण ।
वायुना ॥ ० ॥ ६ ॥ स्वस्ति । नः । मिमीतां । अश्विना । भगः ।
स्वस्ति । देवी । अदितिः । अनर्वणः । स्वस्ति । पूषा । असुरः ।
दधातु । नः । स्वस्ति । द्यावापृथिवीइति । सुऽचेतुना । स्वस्तये ।
वायुं । उप । ब्रवामहै । सोमं । स्वस्ति । भुवनस्य । यः । पतिः ।
बृहस्पतिं । सर्वऽगणं । स्वस्तये । स्वस्तये । आदित्यासः । भवंतु ।
नः । विश्वे । देवाः । नः । अद्य । स्वस्तये । वैश्वानरः । वसुः । अग्निः ।
स्वस्तये । देवाः । अवंतु । ऋभवः । स्वस्तये । स्वस्ति । नः । रुद्रः ।

पातु । अंहसः । स्वस्ति । मित्रावरुणा । स्वस्ति । पथ्ये । रेवति ।
स्वस्ति । नः । इंद्रः । च । अग्निः । च । स्वस्ति । नः । अदिते ।
कृधि ॥ स्वस्ति । पंथां । अनु । चरेम । सूर्याचंद्रमसौऽइव । पुनः ।
ददता । अघ्नता । जानता । सं । गमेमहि ॥ ७ ॥ प्र । श्यावऽअश्व ।
धृष्णुऽया । अर्च । मरुत्ऽभिः । ऋक्वऽभिः । ये । अद्रोघं । अनुऽस्वधं ।
श्रवः । मदंति । यज्ञियाः । ते । हि । स्थिरस्य । शवसः । सखायः । संति ।
धृष्णुऽया । ते । यामन् । आ । धृषत्ऽविनः । त्मना । पांति । शश्वतः ।
ते । स्पंद्रासः । न । उक्षणः । अति । स्कंदंति । शर्वरीः । मरुतां ।
अध । महः । दिवि । क्षमा । च । मन्महे । मरुत्ऽसु । वः । दधीमहि ।
स्तोमं । यज्ञं । च । धृष्णुऽया । विश्वे । ये । मानुषा । युगा । पांति ।
मर्त्यं । रिषः । अर्हतः । ये । सुऽदानवः । नरः । असामिऽशवसः ।
प्र । यज्ञं । यज्ञियेभ्यः । दिवः । अर्च । मरुत्ऽभ्यः ॥ ८ ॥ आ ।
रुक्मैः । आ । युधा । नरः । ऋष्वाः । ऋष्टीः । असृक्षत । अनु ।
एनान् । अह । विऽद्युतः । मरुतः । जज्झतीःऽइव । भानुः । अर्त ।
त्मना । दिवः । ये । ववृधंत । पार्थिवाः । ये । उरौ । अंतरिक्षे । आ ।
वृजने । वा । नदीनां । सधऽस्थे । वा । महः । दिवः । शर्धः ।
मारुतं । उत् । शंस । सत्यऽशवसं । ऋभ्वसं । उत । स्म । ते ।
शुभे । नरः । प्र । स्पंद्राः । युजत । त्मना । उत । स्म । ते । परुष्ण्यां ।
ऊर्णाः । वसत । शुंध्यवः । उत । पव्या । रथानां । अद्रिं । भिंदंति ।
ओजसा । आऽपथयः । विऽपथयः । अंतःऽपथाः । अनुऽपथाः ।
एतेभिः । मह्यं । नामऽभिः । यज्ञं । विऽस्तारः । ओहते ॥ ९ ॥ अध ।
नरः । नि । ओहते । अध । निऽयुतः । ओहते । अध । पारावताः ।
इति । चित्रा । रूपाणि । दर्श्या । छंदःऽस्तुभः । कुभन्यवः । उत्सं ।
आ । कीरिणः । नृतुः । ते । मे । के । चित् । न । तायवः । ऊमाः ।
आसन् । दृशि । त्विषे । ये । ऋष्वाः । ऋष्टिऽविद्युतः । कवयः ।
संति । वेधसः । तं । ऋषे । मारुतं । गणं । नमस्य । रमय । गिरा ।

अच्छ । ऋषे । मारुतं । गणं । दाना । मित्रं । न । योषणा । दिवः । वा । धृष्णवः । ओजसा । स्तुताः । धीभिः । इषण्यत । नु । मन्वानः । एषां । देवान् । अच्छ । न । वक्षणा ॥ दाना । सचेत । सूरिऽभिः । यामऽश्रुतेभिः । अंजिऽभिः । प्र । ये । मे । बंधुऽएषे । गां । वोचंत । सूरयः । पृश्निं । वोचंत । मातरं । अध । पितरं । इष्मिणं । रुद्रं । वोचंत । शिक्वसः । सप्त । मे । सप्त । शाकिनः । एकंऽएका । शता । ददुः । यमुनायां । अधि । श्रुतं । उत् । राधः । गव्यं । मृजे । नि । राधः । अश्व्यं । मृजे ॥ १० ॥ कः । वेद । जानं । एषां । कः । वा । पुरा । सुम्नेषु । आस । मरुतां । यत् । युयुज्रे । किलास्यः । आ । एतान् । रथेषु । तस्थुषः । कः । शुश्राव । कथा । ययुः । कस्मै । सस्रुः । सुऽदासे । अनु । आपयः । इळाभिः । वृष्टयः । सह । ते । मे । आहुः । ये । आऽययुः । उप । द्युऽभिः । विऽभिः । मदे । नरः । मर्याः । अरेपसः । इमान् । पश्यन् । इति । स्तुहि । ये । अंजिषु । ये । वाशीषु । स्वऽभानवः । स्रक्षु । रुक्मेषु । खादिषु । श्रायाः । रथेषु । धन्वऽसु । युष्माकं । स्म । रथान् । अनु । मुदे । दधे । मरुतः । जीरऽदानवः । वृष्टी । द्यावः । यतीःऽइव ॥ ११ ॥ आ । यं । नरः । सुऽदानवः । ददाशुषे । दिवः । कोशं । अचुच्यवुः । वि । पर्जन्यं । सृजंति । रोदसीइति । अनु । धन्वना । यंति । वृष्टयः । ततृदानाः । सिंधवः । क्षोदसा । रजः । प्र । सस्रुः । धेनवः । यथा । स्यन्नाः । अश्वाःऽइव । अध्वनः । विऽमोचने । वि । यत् । वर्तंते । एन्यः । आ । यात । मरुतः । दिवः । आ । अंतरिक्षात् । अमात् । उत । मा । अव । स्थात । पराऽवतः । मा । वः । रसा । अनितभा । कुभा । क्रुमुः । मा । वः । सिंधुः । नि । रीरमत् । मा । वः । परि । स्थात् । सरयुः । पुरीषिणी । अस्मेइति । इत् । सुम्नं । अस्तु । वः । तं । वः । शर्धं । रथानां । त्वेषं । गणं । मारुतं । नव्यसीनां । अनु । प्र । यंति । वृष्टयः ॥ १२ ॥ शर्धंऽशर्धं । वः । एषां । व्रातंऽव्रातं । गणंऽगणं । सुशस्तिऽभिः ।

अनु । क्रामेम । धीतिऽभिः । कस्मै । अद्य । सुऽजाताय । रातऽहव्याय । प्र । ययुः । एना । यामेन । मरुतः । येन । तोकाय । तनयाय । धान्यं । बीजं । वहध्वे । अक्षितं । अस्मभ्यं । तत् । धत्तन । यत् । वः । ईमहे । राधः । विश्वऽआयु । सौभगं । अति । इयाम । निदः । तिरः । स्वस्तिऽभिः । हित्वा । अवद्य । अरातीः । वृष्ट्वी । शं । योः । आपः । उस्त्रि । भेषजं । स्याम । मरुतः । सह । सुऽदेवः । समह । अराति । सुऽवीरः । नरः । मरुतः । सः । मर्त्यः । यं । त्रायध्वे । स्याम । ते । स्तुहि । भोजान् । स्तुवतः । अस्य । यामनि । रणन् । गावः । न । यवसे । यतः । पूर्वान्ऽइव । सखीन् । अनु । ह्वय । गिरा । गृणीहि । कामिनः ॥ १३ ॥ प्र । शर्धाय । मारुताय । स्वऽभानवे । इमां । वाचं । अनज । पर्वतऽच्युते । घर्मऽस्तुभे । दिवः । आ । पृष्ठऽयज्वने । द्युम्नऽश्रवसे । महि । नृम्णं । अर्चत । प्र । वः । मरुतः । तविषाः । उदन्यवः । वयःऽवृधः । अश्वऽयुजः । परिऽज्रयः । सं । विऽद्युता । दधति । वाशति । त्रितः । स्वरंति । आपः । अवना । परिऽज्रयः । विद्युत्ऽमहसः । नरः । अश्मऽदिद्यवः । वातऽत्विषः । मरुतः । पर्वतऽच्युतः । अब्दऽया । चित् । मुहुः । आ । ह्रादुनिऽवृतः । स्तनयत्ऽअमाः । रभसाः । उत्ऽओजसः । वि । अक्तून् । रुद्राः । वि । अहानि । शिक्वसः । वि । अंतरिक्षं । वि । रजांसि । धूतयः । वि । यत् । अज्रान् । अजथ । नावः । ईं । यथा । वि । दुःऽगानि । मरुतः । न । अह । रिष्यथ । तत् । वीर्यं । वः । मरुतः । महिऽत्वनं । दीर्घं । ततान । सूर्यः । न । योजनं । एताः । न । यामे । अगृभीतऽशोचिषः । अनश्वऽदां । यत् । नि । अयातन । गिरिं ॥ १४ ॥ अभ्राजि । शर्धः । मरुतः । यत् । अर्णसं । मोषथ । वृक्षं । कपनाऽइव । वेधसः । अध । स्म । नः । अरमतिं । सऽजोषसः । चक्षुःऽइव । यंतं । अनु । नेषथ । सुऽगं । न । सः । जीयते । मरुतः । न । हन्यते । न । स्रेधति । न । व्यथते । न । रिष्यति । न । अस्य । रायः । उप ।

दस्यंति । न । ऊतयः । ऋषिं । वा । यं । राजानं । वा । सुसूदथ । नियुत्वंतः । ग्रामऽजितः । यथा । नरः । अर्यमणः । न । मरुतः । कबंधिनः । पिन्वंति । उत्सं । यत् । इनासः । अस्वरन् । वि । उंदंति । पृथिवीं । मध्वः । अंधसा । प्रवत्वंती । इयं । पृथिवी । मरुत्ऽभ्यः । प्रवत्वंती । द्यौः । भवति । प्रयत्ऽभ्यः । प्रवत्वंतीः । पथ्याः । अंतरिक्ष्याः । प्रवत्वंतः । पर्वताः । जीरऽदानवः । यत् । मरुतः । सऽभरसः । स्वःऽनरः । सूर्ये । उत्ऽइते । मदथ । दिवः । नरः । न । वः । अश्वाः । श्रथयंत । अह । सिस्रतः । सद्यः । अस्य । अध्वनः । पारं । अश्नुथ ॥ १५ ॥ अंसेषु । वः । ऋष्टयः । पत्ऽसु । खादयः । वक्षःऽसु । रुक्माः । मरुतः । रथे । शुभः । अग्निऽभ्राजसः । विऽद्युतः । गभस्त्योः । शिप्राः । शीर्षऽसु । विऽतताः । हिरण्ययीः । तं । नाकं । अर्यः । अगृभीतऽशोचिषं । रुशत् । पिप्पलं । मरुतः । वि । धूनुथ । सं । अच्यंत । वृजना । अतित्विषंत । यत् । स्वरंति । घोषं । विऽततं । ऋतऽयवः । युष्माऽदत्तस्य । मरुतः । विऽचेतसः । रायः । स्याम । रथ्यः । वयस्वतः । न । यः । युच्छति । तिष्यः । यथा । दिवः । अस्मेइति । रंत । मरुतः । सहस्रिणं । यूयं । रयिं । मरुतः । स्पार्हऽवीरं । यूयं । ऋषिं । अवथ । सामऽविप्रं । यूयं । अर्वंतं । भरताय । वाजं । यूयं । धत्थ । राजानं । श्रुष्टिऽमंतं । तत् । वः । यामि । द्रविणं । सद्यःऽऊतयः । येन । स्वः । न । ततनाम । नॄन् । अभि । इदं । सु । मे । मरुतः । हर्यत । वचः । यस्य । तरेम । तरसा । शतं । हिमाः ॥ १६ ॥ प्रऽयज्यवः । मरुतः । भ्राजत्ऽऋष्टयः । बृहत् । वयः । दधिरे । रुक्मऽवक्षसः । ईयंते । अश्वैः । सुऽयमेभिः । आशुऽभिः । शुभं । यातां । अनु । रथाः । अवृत्सत । स्वयं । दधिध्वे । तविषीं । यथा । विद । बृहत् । महांतः । उर्विया । वि । राजथ । उत । अंतरिक्षं । ममिरे । वि । ओजसा ॥ ० ॥ साकं । जाताः । सुऽभ्वः । साकं । उक्षिताः । श्रिये । चित् । आ । प्रऽतरं । ववृधुः ।

नरः । विऽरोकिणः । सूर्यस्यऽइव । रश्मयः ॥ ० ॥ आऽभूषेण्यं । वः । मरुतः । महिऽत्वनं । दिदृक्षेण्यं । सूर्यस्यऽइव । चक्षणं । उतोइति । अस्मन् । अमृतऽत्वे । दधातन ॥ ० ॥ उत् । ईरयथ । मरुतः । समुद्रतः । यूयं । वृष्टिं । वर्षयथ । पुरीषिणः । न । वः । दस्राः । उप । दस्यंति । धेनवः ॥ ० ॥ १७ ॥ यत् । अश्वान् । धूःऽसु । पृषतीः । अयुग्ध्वं । हिरण्ययान् । प्रति । अत्कान् । अमुग्ध्वं । विश्वाः । इत् । स्पृधः । मरुतः । वि । अस्यथ ॥ ० ॥ न । पर्वताः । न । नद्यः । वरंत । वः । यत्र । अचिध्वं । मरुतः । गच्छथ । इत् । ऊँइति । तत् । उत । द्यावापृथिवीइति । याथन । परि ॥ ० ॥ यत् । पूर्व्यं । मरुतः । यत् । च । नूतनं । यत् । उद्यते । वसवः । यत् । च । शस्यते । विश्वस्य । तस्य । भवथ । नवेदसः ॥ ० ॥ मृळत । नः । मरुतः । मा । वधिष्टन । अस्मभ्यं । शर्म । बहुलं । वि । यंतन । अधि । स्तोत्रस्य । सख्यस्य । गातन ॥ ० ॥ यूयं । अस्मान् । नयत । वस्यः । अच्छ । निः । अंहतिऽभ्यः । मरुतः । गृणानाः । जुषध्वं । नः । हव्यऽदातिं । यजत्राः ॥ ० ॥ १८ ॥ अग्ने । शर्धंतं । आ । गणं । पिष्टं । रुक्मेभिः । अंजिऽभिः ॥ विशः । अद्य । मरुतां । अव । ह्वये ॥ ० ॥ यथा । चित् । मन्यसे । हृदा । तत् । इत् । मे । जग्मुः । आऽशसः । ये । ते । नेदिष्ठं । हवनानि । आऽगमन् । तान् । वर्ध । भीमऽसंदृशः । मीळ्हुष्मतीऽइव । पृथिवी । पराऽहता । मदंती । एति । अस्मत् । आ । ऋक्षः । न । वः । मरुतः । शिमीऽवान् । अमः । दुध्रः । गौःऽइव । भीमऽयुः । नि । ये । रिणंति । ओजसा । वृथा । गावः । न । दुःऽधुरः ॥ ० ॥ पर्वतं । गिरिं ॥ ० ॥ उत् । तिष्ठ । नूनं । एषां । स्तोमैः । संऽउक्षितानां । मरुतां । पुरुऽतमं । अपूर्व्यं । गवां । सर्गंऽइव । ह्वये ॥ १९ ॥ युंग्ध्वं ॥ ० ॥ युंग्ध्वं । रथेषु । रोहितः । युंग्ध्व । हरीइति । अजिरा । धुरि । वोळ्हवे । वहिष्ठा । धुरि । वोळ्हवे । उत । स्यः । वाजी । अरुषः ।

तुविऽस्वनिः । इह । स्म । धायि । दर्शतः । मा । वः । यामेषु । मरुतः । चिरं । करत् । प्र । तं । रथेषु । चोदत । रथं । नु । मारुतं । वयं । श्रवस्यु । आ । हुवामहे । आ । यस्मिन् । तस्थौ । सुऽरणानि । बिभ्रती । सचा । मरुत्ऽसु । रोदसी । तं । वः । शर्धं । रथेऽशुभं । त्वेषं । पनस्युं । आ । हुवे । यस्मिन् । सुऽजाता । सुऽभगा । महीयते । सचा । मरुत्ऽसु । मीळ्हुषी ॥ २० ॥ आ । रुद्रासः । इंद्रऽवंतः । सऽजोषसः । हिरण्यऽरथाः । सुविताय । गंतन । इयं । वः । अस्मत् । प्रति । हर्यते । मतिः । तृष्णऽजे । न । दिवः । उत्साः । उदन्यवे । वाशीऽमंतः । ऋष्टिऽमंतः । मनीषिणः । सुऽधन्वानः । इषुऽमंतः । निषंगिणः । सुऽअश्वाः । स्थ । सुऽरथाः । पृश्निऽमातरः । सुऽआयुधाः । मरुतः । याथन । शुभं । धूनुथ । द्यां । पर्वतान् । दाशुषे । वसु । नि । वः । वना । जिहते । यामनः । भिया । कोपयथ । पृथिवीं । पृश्निऽमातरः । शुभे । यत् । उग्राः । पृषतीः । अयुग्ध्वं । वातऽत्विषः । मरुतः । वर्षऽनिर्निजः । यमाःऽइव । सुऽसंदृशः । सुऽपेशसः । पिशंगऽअश्वाः । अरुणऽअश्वाः । अरेपसः । प्रऽत्वक्षसः । महिना । द्यौःऽइव । उरवः । पुरुऽद्रप्साः । अंजिऽमंतः । सुऽदानवः । त्वेषऽसंदृशः । अनवभ्रऽराधसः । सुऽजातासः । जनुषा । रुक्मऽवक्षसः । दिवः । अर्काः । अमृतं । नाम । भेजिरे ॥ २१ ॥ ऋष्टयः । वः । मरुतः । अंसयोः । अधि । सहः । ओजः । बाह्वोः । वः । बलं । हितं । नृम्णा । शीर्षऽसु । आयुधा । रथेषु । वः । विश्वा । वः । श्रीः । अधि । तनूषु । पिपिशे । गोऽमत् । अश्वऽवत् । रथऽवत् । सुऽवीरं । चंद्रऽवत् । राधः । मरुतः । ददः । नः । प्रऽशस्तिं । नः । कृणुत । रुद्रियासः । भक्षीय । वः । अवसः । दैव्यस्य । हये । नरः । मरुतः । मृळत । नः । तुविऽमघासः । अमृताः । ऋतऽज्ञाः । सत्यऽश्रुतः । कवयः । युवानः । बृहत्ऽगिरयः । बृहत् । उक्षमाणाः ॥ २२ ॥ तं । नूं । इति । नूनं । तविषीऽमंतं । एषां । स्तुषे ।

गणं । मारुतं । नव्यसीनां । ये । आशुऽअश्वाः । अमऽवत् । वहंते । उत । ईशिरे । अमृतस्य । स्वऽराजः । त्वेषं । गणं । तवसं । खादिऽहस्तं । धुनिऽव्रतं । मायिनं । दातिऽवारं । मयःऽभुवः । ये । अमिताः । महिऽत्वा । वंदस्व । विप्र । तुविऽराधसः । नृन् । आ । वः । यंतु । उदऽवाहासः । अद्य । वृष्टिं । ये । विश्वे । मरुतः । जुनंति । अयं । यः । अग्निः । मरुतः । संऽइद्धः । एतं । जुषध्वं । कवयः । युवानः । यूयं । राजानं । इर्यं । जनाय । विभ्वंऽतष्टं । जनयथ । यजत्राः । युष्मत् । एति । मुष्टिऽहा । बाहुऽजूतः । युष्मत् । सत्ऽअश्वः । मरुतः । सुऽवीरः । अराःऽइव । इत् । अचरमाः । अहाऽइव । प्रऽप्र । जायंते । अकवाः । महःऽभिः । पृश्नेः । पुत्राः । उपऽमासः । रभिष्ठाः । स्वया । मत्या । मरुतः । सं । मिमिक्षुः । यत् । प्र । अयासिष्ट । पृषतीभिः । अश्वैः । वीळुपविऽभिः । मरुतः । रथेभिः । क्षोदंते । आपः । रिणते । वनानि । अव । उस्रियः । वृषभः । क्रंदतु । द्यौः । प्रथिष्ट । यामन् । पृथिवी । चित् । एषां । भर्ताऽइव । गर्भं । स्वं । इत् । शवः । धुः । वातान् । हि । अश्वान् । धुरि । आऽयुयुज्रे । वर्षं । स्वेदं । चक्रिरे । रुद्रियासः ॥ ० ॥ २३ ॥ प्र । वः । स्पट् । अक्रन् । सुविताय । दावने । अर्च । दिवे । प्र । पृथिव्यै । ऋतं । भरे । उक्षंते । अश्वान् । तरुषंते । आ । रजः । अनु । स्वं । भानुं । श्रथयंते । अर्णवैः । अमात् । एषां । भियसा । भूमिः । एजति । नौः । न । पूर्णा । क्षरति । व्यथिः । यती । दूरेऽदृशः । ये । चितयंते । एमऽभिः । अंतः । महे । विदथे । येतिरे । नरः । गवाऽइव । श्रियसे । शृंगं । उत्ऽतमं । सूर्यः । न । चक्षुः । रजसः । विऽसर्जने । अत्याःऽइव । सुऽभ्वः । चारवः । स्थन । मर्याःऽइव । श्रियसे । चेतथ । नरः । कः । वः । महांति । महतां । उत् । अश्नवत् । कः । काव्या । मरुतः । कः । ह । पौंस्या । यूयं । ह । भूमिं । किरणं । न । रेजथ । प्र । यत् । भरध्वे । सविताय । दावने । अश्वाःऽइव । इत् ।

  

अरुषासः । सऽबंधवः । शूराःऽइव । प्रऽयुधः । प्र । उत । युयुधुः । मर्याःऽइव । सुऽवृधः । ववृधुः । नरः । सूर्यस्य । चक्षुः । प्र । मिनंति । वृष्टिऽभिः । ते । अज्येष्ठाः । अकनिष्ठासः । उत्ऽभिदः । अमध्यमासः । महसा । वि । ववृधुः । सुऽजातासः । जनुषा । पृश्निऽमातरः । दिवः । मर्याः । आ । नः । अच्छ । जिगातन । वयः । न । ये । श्रेणीः । पप्तुः । ओजसा । अंतान् । दिवः । बृहतः । सानुनः । परि । अश्वासः । एषां । उभये । यथा । विदुः । प्र । पर्वतस्य । नभनून् । अचुच्यवुः । मिमातु । द्यौः । अदितिः । वीतये । नः । सं । दानुऽचित्राः । उषसः । यतंतां । आ । अचुच्यवुः । दिव्यं । कोशं । एते । ऋषे । रुद्रस्य । मरुतः । गृणानाः ॥ २४ ॥ ईळे । अग्निं । सुऽअवसं । नमःऽभिः । इह । प्रऽसत्तः । वि । चयत् । कृतं । नः । रथैःऽइव । प्र । भरे । वाजयत्ऽभिः । प्रऽदक्षिणित् । मरुतां । स्तोमं । ऋध्यां । आ । ये । तस्थुः । पृषतीषु । श्रुतासु । सुऽखेषु । रुद्राः । मरुतः । रथेषु । वना । चित् । उग्राः । जिहते । नि । वः । भिया । पृथिवी । चित् । रेजते । पर्वतः । चित् । पर्वतः । चित् । महि । वृद्धः । बिभाय । दिवः । चित् । सानु । रेजत । स्वने । वः । यत् । क्रीळथ । मरुतः । ऋष्टिऽमंतः । आपःऽइव । सध्र्यंचः । धवध्वे । वराःऽइव । इत् । रैवतासः । हिरण्यैः । अभि । स्वधाभिः । तन्वः । पिपिश्रे । श्रिये । श्रेयांसः । तवसः । रथेषु । सत्रा । महांसि । चक्रिरे । तनूषु । अज्येष्ठासः । अकनिष्ठासः । एते । सं । भ्रातरः । ववृधुः । सौभगाय । युवा । पिता । सुऽअपाः । रुद्रः । एषां । सुऽदुघा । पृश्निः । सुऽदिना । मरुत्ऽभ्यः । यत् । उत्ऽतमे । मरुतः । मध्यमे । वा । यत् । वा । अवमे । सुऽभगासः । दिवि । स्थ । अतः । नः । रुद्राः । उत । वा । नु । अस्य । अग्ने । वित्तात् । हविषः । यत् । यजाम । अग्निः । च । यत् । मरुतः । विश्वऽवेदसः । दिवः । वहध्वे । उत्ऽतरात् । अधि । स्नुऽभिः । ते । मंदसानाः । धुनयः । रिशादसः ।

वामं । धत्त । यजमानाय । सुन्वते । अग्ने । मरुत्ऽभिः । शुभयत्ऽभिः । ऋक्वऽभिः । सोमं । पिब । मंदसानः । गणश्रिऽभिः । पावकेभिः । विश्वैःऽइन्वेभिः । आयुऽभिः । वैश्वानर । प्रऽदिवा । केतुना । सऽजूः ॥ २५ ॥ के । स्थ । नरः । श्रेष्ठऽतमाः । ये । एकःऽएकः । आऽयय । परमस्याः । पराऽवतः । क्व । वः । अश्वाः । क्व । अभीशवः । कथं । शेक । कथा । यय । पृष्ठे । सदः । नसोः । यमः । जघने । चोदः । एषां । वि । सक्थानि । नरः । यमुः । पुत्रऽकृथे । न । जनयः । परा । वीरासः । इतन । मर्यासः । भद्रऽजानयः । अग्निऽतपः । यथा । असथ । सनत् । सा । अश्व्यं । पशुं । उत । गव्यं । शतऽअवयं । श्यावाश्वऽस्तुताय । या । दोः । वीराय । उपऽबर्बृहत् ॥ २६ ॥ उत । त्वा । स्त्री । शशीयसी । पुंसः । भवति । वस्यसी । अदेवऽत्रात् । अराधसः । वि । या । जानाति । जसुरिं । वि । तृष्यंतं । वि । कामिनं । देवऽत्रा । कृणुते । मनः । उत । घ । नेमः । अस्तुतः । पुमान् । इति । ब्रुवे । पणिः । सः । वैरऽदेये । इत् । समः । उत । मे । अरपत् । युवतिः । ममंदुषी । प्रति । श्यावाय । वर्तनिं । वि । रोहिता । पुरुऽमीळ्हाय । येमतुः । विप्राय । दीर्घऽयशसे । यः । मे । धेनूनां । शतं । वैदत्ऽअश्विः । यथा । ददत् । तरंतःऽइव । मंहना ॥ २७ ॥ ये । ईं । वहंते । आशुऽभिः । पिबंतः । मदिरं । मधु । अत्र । श्रवांसि । दधिरे । येषां । श्रिया । अधि । रोदसीइति । विऽभ्राजंते । रथेषु । आ । दिवि । रुक्मःऽइव । उपरि । युवा । सः । मारुतः । गणः । त्वेषऽरथः । अनेद्यः । शुभंऽयावा । अप्रतिऽस्कुतः । कः । वेद । नूनं । एषां । यत्र । मदंति । धूतयः । ऋतऽजाताः । अरेपसः । यूयं । मर्तं । विपन्यवः । प्रऽनेतारः । इत्था । धिया । श्रोतारः । यामऽहूतिषु ॥ २८ ॥ ते । नः । वसूनि । काम्या । पुरुऽचंद्राः । रिशादसः । आ । यज्ञियासः । ववृत्तन । एतं । मे । स्तोमं । ऊर्म्ये । दार्भ्याय । परा । वह । गिरः । देवि । रथीःऽइव । उत ।

इति । सुतऽसोमे । रथऽवीतौ । न । कामः । अप । मे । वोचतात् । इति । सुतऽसोमे । रथऽवीतौ । न । कामः । अप । मे । वोचतात् । इति । एषः । क्षेति । रथऽवीतिः । मघऽवा । गोऽमतीः । अनु । पर्वतेषु । अपऽश्रितः ॥ २९ ॥ ऋतेन । ऋतं । अपिऽहितं । ध्रुवं । वां । सूर्यस्य । यत्र । विऽमुचंति । अश्वान् । दश । शता । सह । तस्थुः । तत् । एकं । देवानां । श्रेष्ठं । वपुषां । अपश्यं । तत् । सु । वां । मित्रावरुणा । महिऽत्वं । इर्मा । तस्थुषीः । अहऽभिः । दुदुहे । विश्वाः । पिन्वथः । स्वसरस्य । धेनाः । अनु । वां । एकः । पविः । आ । ववर्त । अधारयतं । पृथिवीं । उत । द्यां । मित्रराजाना । वरुणा । महःऽभिः । वर्धयतं । ओषधीः । पिन्वतं । गाः । अव । वृष्टिं । सृजतं । जीरदानूइतिजीरऽदानू ॥ ० ॥ सुऽयुजः । वहंतु । यतऽरश्मयः । उप । यंतु । अर्वाक् । घृतस्य । निःऽनिक् । अनु । वर्तते । वां । उप । सिंधवः । प्रऽदिवि । क्षरंति । अनु । श्रुतां । अमतिं । वर्धत् । उर्वीं । बर्हिःऽइव । यजुषा । रक्षमाणा । नमस्वंता । घृतऽदक्षा । अधि । गर्ते । मित्र । आसाथेइति । वरुण । इळासु । अंतरितिं ॥ ३० ॥ अक्रविऽहस्ता । सुऽकृते । परःऽपा । यं । त्रासाथेइति । वरुणा । इळासु । अंतरिति । राजाना । क्षत्रं । अहृणीयमाना । सहस्रऽस्थूणं । बिभृथः । सह । द्वौ । हिरण्यऽनिर्निक् । अयः । अस्य । स्थूणा । वि । भ्राजते । दिवि । अश्वाजनीऽइव । भद्रे । क्षेत्रे । निऽमिता । तिल्विले । वा । सनेम । मध्वः । अधिऽगर्त्यस्य । हिरण्यऽरूपं । उषसः । विऽउष्टौ । अयःऽस्थूणं । उत्ऽइता । सूर्यस्य । आ । रोहथः । वरुण । मित्र । गर्तं । अतः । चक्षाथेइति । अदितिं । दितिं । च । यत् । बंहिष्ठं । न । अतिऽविधे । सुदानूइतिसुऽदानू । अच्छिद्रं । शर्म । भुवनस्य । गोपा । तेन । नः । मित्रावरुणौ । अविष्टं । सिसासंतः । जिगीवांसः । स्याम ॥ ३१ ॥

॥ इति चतुर्थाष्टके तृतीयोध्यायः ॥ ३ ॥

## ॥ अथ चतुर्थोऽध्यायः ॥

हरिः ॐ ॥ ऋतस्य । गोपौ । अधि । तिष्ठथः । रथं । सत्यऽधर्माणा । परमे । विऽओमनि । यं । अत्र । मित्रावरुणा । अवथः । युवं । तस्मै । वृष्टिः । मधुऽमत् । पिन्वते । दिवः । संऽराजौ । अस्य । भुवनस्य । राजथः । मित्रावरुणा । विदथे । स्वःऽदृशा । वृष्टिं । वां । राधः । अमृतऽत्वं । ईमहे । द्यावापृथिवीइति । वि । चरंति । तन्यवः । संऽराजौ । उग्रा । वृषभा । दिवः । पतीइति । पृथिव्याः । मित्रावरुणा । विचर्षणीइतिविऽचर्षणी । चित्रेभिः । अभ्रैः । उप । तिष्ठथः । रवं । द्यां । वर्षयथः । असुरस्य । मायया । माया । वां । मित्रवरुणा । दिवि । श्रिता । सूर्यः । ज्योतिः । चरति । चित्रं । आयुधं । तं । अभ्रेण । वृष्ट्या । गूहथः । दिवि । पर्जन्य । द्रप्साः । मधुऽमंतः । ईरते । रथं । युंजते । मरुतः । शुभे । सुऽखं । शूरः । न । मित्रावरुणा । गोऽइष्टिषु । रजांसि । चित्रा । वि । चरंति । तन्यवः । दिवः । संऽराजा । पयसा । नः । उक्षतं । वाचं । सु । मित्रावरुणौ । इराऽवतीं । पर्जन्यः । चित्रां । वदति । त्विषिऽमतीं । अभ्रा । वसत । मरुतः । सु । मायया । द्यां । वर्षयतं । अरुणां । अरेपसं । धर्मणा । मित्रावरुणा । विपःऽचिता । व्रता । रक्षेथेइति । असुरस्य । मायया । ऋतेन । विश्वं । भुवनं । वि । राजथः । सूर्यं । आ । धत्थः । दिवि । चित्र्यं । रथं ॥ १ ॥ वरुणं । वः । रिशादसं । ऋचा । मित्रं । हवामहे । परि । व्रजाऽइव । बाह्वोः । जगन्वांसा । स्वःऽनरं । ता । बाहवा । सुऽचेतुना । प्र । यंतं । अस्मै । अर्चते । शेवं । हि । जार्यं । वां । विश्वासु । क्षासु । जोगुवे । यत् । नूनं । अश्यां । गतिं । मित्रस्य ।

यायां । पथा । अस्य । प्रियस्य । शर्मणि । अहिंसानस्य । सश्चिरे ।
युवाभ्यां । मित्रावरुणा । उपऽमं । धेयां । ऋचा । यत् । ह । क्षये ।
मघोनां । स्तोतृणां । च । स्पूर्धसे । आ । नः । मित्र । सुदीतिऽभिः ।
वरुणः । च । सधऽस्थे । आ । स्वे । क्षये । मघोनां । सखीनां ।
च । वृधसे । युवं । नः । येषु । वरुणा । क्षत्रं । बृहत् । च ।
बिभृथः । उरु । नः । वाजऽसातये । कृतं । राये । स्वस्तये । उच्छन्त्यां ।
मे । यजता । देवऽक्षत्रे । रुशत्ऽगवि । सुतं । सोमं । न । हस्तिऽ-
भिः । आ । पट्ऽभिः । धावतं । नरा । बिभ्रतौ । अर्चनानसं ॥ २ ॥
यः । चिकेत । सः । सुऽक्रतुः । देवऽत्रा । सः । ब्रवीतु । नः । वरुणः ।
यस्य । दर्शतः । मित्रः । वा । वनते । गिरः । ता । हि । श्रेष्ठऽवर्चसा ।
राजाना । दीर्घश्रुत्ऽतमा । ता । सत्पतीइतिसत्ऽपती । ऋतऽवृधा ।
ऋतऽवाना । जनेऽजने । ता । वां । इयानः । अवसे । पूर्वौ । उप ।
ब्रुवे । सचा । सुऽअश्वासः । सु । चेतुना । वाजान् । अभि । प्र ।
दावने । मित्रः । अंहोः । चित् । आत् । उरु । क्षयाय । गातुं ।
वनते । मित्रस्य । हि । प्रऽतूर्वतः । सुऽमतिः । अस्ति । विधतः ।
वयं । मित्रस्य । अवसि । स्याम । सप्रथःऽतमे । अनेहसः । त्वाऽ-
ऊतयः । सत्रा । वरुणऽशेषसः । युवं । मित्रा । इमं । जनं । यतथः ।
सं । च । नयथः । मा । मघोनः । परि । ख्यतं । मोइति । अस्माकं ।
ऋषीणां । गोऽपीथे । नः । उरुष्यतं ॥ ३ ॥ आ । चिकितान ।
सुक्रतूइतिसुऽक्रतू । देवौ । मर्त । रिशादसा । वरुणाय । ऋतऽ-
पेशसे । दधीत । प्रयसे । महे । ता । हि । क्षत्रं । अविऽहुतं ।
सम्यक् । असुर्यं । आशातेइति । अध । व्रताऽइव । मानुषं । स्वः ।
न । धायि । दर्शतं । ता । वां । एषे । रथानां । उर्वीं । गव्यूतिं ।
एषां । रातऽहव्यस्य । सुऽस्तुतिं । दधृक् । स्तोमैः । मनामहे । अध ।
हि । काव्या । युवं । दक्षस्य । पूःऽभिः । अद्भुता । नि । केतुना ।
जनानां । चिकेथेइति । पूतऽदक्षसा । तत् । ऋतं । पृथिवि । बृहत् ।

श्रवःऽएषे । ऋषीणां । त्रयसानौ । अरं । पृथु । अति । क्षरंति । यामंऽभिः । आ । यत् । वां । ईयऽचक्षसा । मित्रा । वयं । च । सूरयः । व्यचिष्ठे । बहुऽपाय्ये । यतेमहि । स्वऽराज्ये ॥ ४ ॥ वट् । इत्था । देवा । निःऽकृतं । आदित्या । यजतं । बृहत् । वरुण । मित्र । अर्यमन् । वर्षिष्ठं । क्षत्रं । आशाथेइति । आ । यत् । योनिं । हिरण्ययं । वरुण । मित्र । सदथः । धर्तारा । चर्षणीनां । यंतं । सुम्नं । रिशादसा । विश्वे । हि । विश्वऽवेदसः ॥ ० ॥ व्रता । पदाऽइव । सश्चिरे । पांति । मर्त्यं । रिषः । ते । हि । सत्याः । ऋतऽस्पृशः । ऋतऽवानः । जनेऽजने । सुऽनीथासः । सुऽदानवः । अंहोः । चित् । उरुऽचक्रयः ॥ कः । नु । वां । मित्र । अस्तुतः । वरुणः । वा । तनूनां । तत् । सु । वां । आ । ईषते । मतिः । अत्रिऽभ्यः । आ । ईषते । मतिः ॥ ५ ॥ प्र । वः । मित्राय । गायत । वरुणाय । विपा । गिरा । महिऽक्षत्रौ । ऋतं । बृहत् । संऽराजा । या । घृतयोनीइति घृतऽयोनी । मित्रः । च । उभा । वरुणः । च । देवा । देवेषु । प्रऽशस्ता । ता । नः । शक्तं । पार्थिवस्य । महः । रायः । दिव्यस्य । महि । वां । क्षत्रं । देवेषु । ऋतं । ऋतेन । सपंता । इषिरं । दक्षं । आशातेइति । अद्रुहा । देवौ । वर्धेतेइति । वृष्टिऽद्यावा । रीतिऽआपा । इषः । पतीइति । दानुऽमत्याः । बृहंतं । गर्तं । आशातेइति ॥ ६ ॥ त्री । रोचना । वरुण । त्रीन् । उत । द्यून् । त्रीणि । मित्र । धारयथः । रजांसि । ववृधानौ । अमतिं । क्षत्रियस्य । अनु । व्रतं । रक्षमाणौ । अजुर्यं । इराऽवतीः । वरुण । धेनवः । वां । मधुऽमत् । वां । सिंधवः । मित्र । दुहे । त्रयः । तस्थुः । वृषभासः । तिसृणां । धिषणानां । रेतःऽधाः । वि । द्युऽमंतः । प्रातः । देवीं । अदितिं । जोहवीमि । मध्यंदिने । उत्ऽइता । सूर्यस्य । राये । मित्रावरुणा । सर्वऽताता । ईळे । तोकाय । तनयाय । शं । योः । या । धर्तारा । रजसः । रोचनस्य । उत । आदित्या । दिव्या । पार्थिवस्य । न । वां । देवाः ।

अमृताः । आ । मिनंति । व्रतानि । मित्रावरुणा । ध्रुवाणि ॥ ७ ॥
पुरुऽउरुणा । चित् । हि । अस्ति । अवः । नूनं । वां । वरुण । मित्र ।
वंसि । वां । सुऽमतिं । ता । वां । सम्यक् । अद्रुह्वाणा । इषं ।
अश्याम । धायसे । वयं । ते । रुद्रा । स्याम । पातं । नः । रुद्रा ।
पायुऽभिः । उत । त्रायेथां । सुऽत्रात्रा । तुर्याम । दस्यून् । तनूभिः ।
मा । कस्य । अद्भुतक्रतूइत्यद्भुतऽक्रतू । यक्षं । भुजेम । तनूभिः । मा ।
शेषसा । मा । तनसा ॥ ८ ॥ आ । नः । गंतं । रिशादसा । वरुण ।
मित्र । बर्हणा । उप । इमं । चारुं । अध्वरं । विश्वस्य । हि । प्रऽ-
चेतसा । वरुण । मित्र । राजथः । ईशाना । पिप्यतं । धियः । उप ।
नः । सुतं । आ । गतं । वरुण । मित्र । दाशुषः ॥ ० ॥ ९ ॥ आ । मित्रे ।
वरुणे । वयं । गीःऽभिः । जुहुमः । अत्रिऽवत् । नि । बर्हिषि । सदतं ।
सोमऽपीतये । व्रतेन । स्थः । ध्रुवऽक्षेमा । धर्मणा । यातयत्ऽ-
जना ॥ ० ॥ मित्रः । च । नः । वरुणः । च । जुषेतां । यज्ञं । इष्टये ।
नि । बर्हिषि । सदतां । सोमऽपीतये ॥ १० ॥ यत् । अद्य । स्थः ।
पराऽवति । यत् । अर्वाऽवति । अश्विना । यत् । वा । पुरु । पुरुऽ-
भुजा । यत् । अंतरिक्षे । आ । गतं । इह । त्या । पुरुऽभूतमा । पुरु ।
दंसांसि । बिभ्रता । वरस्या । यामि । अध्रिगूइत्यध्रिऽगू । हुवे ।
तुविःऽतमा । भुजे । ईर्मा । अन्यत् । वपुषे । वपुः । चक्रं । रथस्य ।
येमथुः । परि । अन्या । नाहुषा । युगा । मह्ना । रजांसि । दीयथः ।
तत् । ऊँइति । सु । वां । एना । कृतं । विश्वा । यत् । वां । अनु ।
स्तवै । नाना । जातौ । अरेपसा । सं । अस्मेइति । बंधुं । आ ।
ईयथुः । आ । यत् । वां । सूर्या । रथं । तिष्ठत् । रघुऽस्यदं । सदा ।
परि । वां । अरुषाः । वयः । घृणा । वरंते । आऽतपः ॥ ११ ॥ युवोः ।
अत्रिः । चिकेतति । नरा । सुम्नेन । चेतसा । घर्मं । यत् । वां ।
अरेपसं । नासत्या । आस्ना । भुरण्यति । उग्रः । वां । ककुहः ।
ययिः । शृण्वे । यामेषु । संऽतनिः । यत् । वां । दंसःऽभिः । अश्विना ।

अत्रिः । नरा । आऽववर्तति । मध्वः । ऊँइति । सु । मधुऽयुवा । रुद्रा । सिसक्ति । पिप्युषी । यत् । समुद्रा । अति । पर्षथः । पक्वाः । पृक्षः । भरंत । वां । सत्यं । इत् । वै । ऊँइति । अश्विना । युवां । आहुः । मयःऽभुवा । ता । यामन् । यामऽहूतमा । यामन् । आ । मृळयत्ऽतमा । इमा । ब्रह्माणि । वर्धना । अश्विऽभ्यां । संतु । शंऽतमा । या । तक्षाम । रथान्ऽइव । अवोचाम । बृहत् । नमः ॥ १२ ॥ कूऽस्थः । देवौ । अश्विना । अद्य । दिवः । मनावसूइति । तत् । श्रवथः । वृषण्वसूइति वृषण्ऽवसू । अत्रिः । वां । आ । विवासति । कुह । त्या । कुह । नु । श्रुता । दिवि । देवा । नासत्या । कस्मिन् । आ । यतथः । जने । कः । वां । नदीनां । सचा । कं । याथः । कं । ह । गच्छथः । कं । अच्छ । युंजाथेइति । रथं । कस्य । ब्रह्माणि । रण्यथः । वयं । वां । उश्मसि । इष्टये । पौरं । चित् । हि । उदऽप्रुतं । पौर । पौराय । जिन्वथः । यत् । ईं । गृभीतऽतातये । सिंहंऽइव । द्रुहः । पदे । प्र । च्यवानात् । जुजुरुषः । वव्रिं । अत्कं । न । मुंचथः । युवा । यदि । कृथः । पुनः । आ । कामं । ऋण्वे । वध्वः ॥ १३ ॥ अस्ति । हि । वां । इह । स्तोता । स्मसि । वां । संऽदृशि । श्रिये । नु । श्रुतं । मे । आ । गतं । अवःऽभिः । वाजिनीवसूइतिवाजिनीऽवसू । कः । वां । अद्य । पुरूणां । आ । वव्ने । मर्त्यानां । कः । विप्रः । विप्रऽवाहसा । कः । यज्ञैः । वाजिनीवसूइतिवाजिनीऽवसू । आ । वां । रथः । रथानां । येष्ठः । यातु । अश्विना । पुरु । चित् । अस्मऽयुः । तिरः । आंगूषः । मर्त्येषु । आ । शं । ऊँइति । सु । वां । मधुऽयुवा । अस्माकं । अस्तु । चर्कृतिः । अर्वाचीना । विऽचेतसा । विऽभिः । श्येनाऽइव । दीयतं । अश्विना । यत् । ह । कर्हि । चित् । शुश्रुयातं । इमं । हवं । वस्वीः । ऊँइति । सु । वां । भुजः । पृंचंति । सु । वां । पृचः ॥ १४ ॥ प्रति । प्रियतमं । रथं । वृषणं । वसुऽवाहनं । स्तोता । वां । अश्विनौ । ऋषिः । स्तोमेन । प्रति । भूषति । माध्वीइति । मम । श्रुतं । हवं ।

अतिऽआयातं । अश्विना । तिरः । विश्वाः । अहं । सना । दस्रा । हिरण्यवर्तनीइतिहिरण्यऽवर्तनी । सुऽसुम्ना । सिंधुऽवाहसा ॥ ० ॥ आ । नः । रत्नानि । बिभ्रतौ । अश्विना । गच्छतं । युवं । रुद्रा । हिरण्यवर्तनीइतिहिरण्यऽवर्तनी । जुषाणा । वाजिनीवसूइतिवाजिनीऽवसू ॥ ० ॥ सुऽस्तुभः । वां । वृषण्वसूइतिवृषण्ऽवसू । रथे । वाणीची । आऽहिता । उत । वां । ककुहः । मृगः । पृक्षः । कृणोति । वापुषः ॥ ० ॥ बोधित्ऽमनसा । रथ्या । इषिरा । हवनऽश्रुता । विऽभिः । च्यवानं । अश्विना । नि । याथः । अद्वयाविनं ॥ ० ॥ १५ ॥ आ । वां । नरा । मनःऽयुजः । अश्वासः । प्रुषितऽप्सवः । वयः । वहंतु । पीतये । सह । सुम्नेभिः । अश्विना ॥ ० ॥ अश्विना । आ । इह । गच्छतं । नासत्या । मा । वि । वेनतं । तिरः । चित् । अर्यऽया । परि । वर्तिः । यातं । अदाभ्या ॥ ० ॥ अस्मिन् । यज्ञे । अदाभ्या । जरितारं । शुभः । पतीइति । अवस्युं । अश्विना । युवं । गृणंतं । उप । भूषथः ॥ ० ॥ अभूत् । उषाः । रुशत्ऽपशुः । आ । अग्निः । अधायि । ऋत्वियः । अयोजि । वां । वृषण्वसूइतिवृषण्ऽवसू । रथः । दस्रौ । अमर्त्यः ॥ ० ॥ ॥ १६ ॥ आ । भाति । अग्निः । उषसां । अनीकं । उत् । विप्राणां । देवऽयाः । वाचः । अस्थुः । अर्वांचा । नूनं । रथ्या । इह । यातं । पीपिऽवांसं । अश्विना । घर्मं । अच्छ । न । संस्कृतं । प्र । मिमीतः । गमिष्ठा । अंति । नूनं । अश्विना । उपऽस्तुता । इह । दिवा । अभिऽपित्वे । अवसा । आऽगमिष्ठा । प्रति । अवर्तिं । दाशुषे । शंऽभविष्ठा । उत । आ । यातं । संऽगवे । प्रातः । अह्नः । मध्यंदिने । उत्ऽइता । सूर्यस्य । दिवा । नक्तं । अवसा । शंऽतमेन । न । इदानीं । पीतिः । अश्विना । आ । ततान । इदं । हि । वां । प्रऽदिवि । स्थानं । ओकः । इमे । गृहाः । अश्विना । इदं । दुरोणं ॥ ० ॥ अतऽभ्यः । यातं । इषं । ऊर्जं । दहंता ॥ ० ॥ १७ ॥ प्रातःऽयावाना । प्रथमा । यजध्वं । पुरा । गृध्रात् । अररुषः । पिबातः ।

प्रातः । हि । यज्ञं । अश्विना । दधातेइति । प्र । शंसंति । कवयः । पूर्वऽभाजः । प्रातः । यजध्वं । अश्विना । हिनोत । न । सायं । अस्ति । देवऽयाः । अजुष्टं । उत । अन्यः । अस्मत् । यजते । वि । च । आवः । पूर्वःऽपूर्वः । यजमानः । वनीयात् । हिरण्यऽत्वक् । मधुऽवर्णः । घृतऽस्नुः । पृक्षः । वहन् । आ । रथः । वर्तते । वां । मनःऽजवाः । अश्विना । वातऽरंहाः । येन । अतिऽयाथः । दुःऽइतानि । विश्वा । यः । भूयिष्ठं । नासत्याभ्यां । विवेष । चनिष्ठं । पित्वः । ररते । विऽभागे । सः । तोकं । अस्य । पीपरत् । शर्माभिः । अनूर्ध्वऽभासः । सदं । इत् । तुतुर्यात् ॥ ० ॥ १८ ॥ ० ॥ हंसौऽइव । पततं । आ । सुतान् । उप । अश्विना । हरिणौऽइव । गौरौऽइव । अनु । यवसं ॥ ० ॥ अश्विना । वाजिनीवसूइतिवाजिनीऽवसू । जुषेथां । यज्ञं । इष्टये ॥ ० ॥ अत्रिः । यत् । वां । अवऽरोहन् । ऋबीसं । अजोहवीत् । नाधमानाऽइव । योषा । श्येनस्य । चित् । जवसा । नूतनेन । आ । अगच्छतं । अश्विना । शंऽतमेन ॥ १९ ॥ वि । जिहीष्व । वनस्पते । योनिः । सूष्यंत्याःऽइव । श्रुतं । मे । अश्विना । हवं । सप्तऽवध्रिं । च । मुंचतं । भीताय । नाधमानाय । ऋषये । सप्तऽवध्रये । मायाभिः । अश्विना । युवं । वृक्षं । सं । च । वि । च । अचथः । यथा । वातः । पुष्करिणीं । संऽइंगयति । सर्वतः । एव । ते । गर्भः । एजतु । निःऽएतु । दशऽमास्यः । यथा । वातः । यथा । वनं । यथा । समुद्रः । एजति । एव । त्वं । दशऽमास्य । सह । अव । इहि । जरायुणा ॥ दश । मासान् । शशयानः । कुमारः । अधि । मातरि । निःऽऐतु । जीवः । अक्षतः । जीवः । जीवंत्याः । अधि ॥ २० ॥ महे । नः । अद्य । बोधय । उषः । राये । दिवित्मती । यथा । चित् । नः । अबोधयः । सत्यऽश्रवसि । वाय्ये । सुऽजाते । अश्वऽसूनृते । या । सुऽनीथे । शौचत्ऽरथे । वि । औच्छः । दुहितः । दिवः । सा । वि । उच्छ । सहीयसि ॥ ० ॥ सा । नः ।

अद्य । आभरत्ऽवसुः । वि । उच्छ । दुहितः । दिवः । योइति । वि । औच्छः ॥ ० ॥ अभि । ये । त्वा । विभाऽवरि । स्तोमैः । गृणंति । वह्नयः । मघैः । मघोनि । सुऽश्रियः । दामन्ऽवंतः । सुऽरातयः ॥ ० ॥ गणाः । इमे । छदयंति । मघत्तये । परि । चित् । वष्टयः । दधुः । ददतः । राधः । अह्रयं ॥ ० ॥ २१ ॥ आ । एषु । धाः । वीरऽवत् । यशः । उषः । मघोनि । सूरिषु । ये । नः । राधांसि । अह्रया । मघऽवानः । अरासत ॥ ० ॥ तेभ्यः । द्युम्नं । बृहत् । यशः । उषः । मघोनि । आ । वह ॥ ० ॥ अश्व्या । गव्या । भजंत । सूरयः ॥ ० ॥ उत । नः । गोऽमतीः । इषः । आ । वह । दुहितः । दिवः । साकं । सूर्यस्य । रश्मिऽभिः । शुक्रैः । शोचत्ऽभिः । अर्चिऽभिः ॥ ० ॥ वि । उच्छ । दुहितः । दिवः । मा । चिरं । तनुथाः । अपः । न । इत् । त्वा । स्तेनं । यथा । रिपुं । तपाति । सूरः । अर्चिषा ॥ ० ॥ एतावत् । वा । इत् । उषः । त्वं । भूयः । वा । दातुं । अर्हसि । या । स्तोतृऽभ्यः । विभाऽवरि । उच्छंती । न । प्रऽमीयसे ॥ ० ॥ २२ ॥ द्युतत्ऽयामानं । बृहतीं । ऋतेन । ऋतऽवरीं । अरुणऽप्सुं । विऽभातीं । देवीं । उषसं । स्वः । आऽवहंतीं । प्रातं । विप्रासः । मतिऽभिः । जरंते । एषा । जनं । दर्शता । बोधयंती । सुऽगान् । पथः । कृण्वती । याति । अग्रे । बृहत्ऽरथा । बृहती । विश्वंऽइन्वा । उषाः । ज्योतिः । यच्छति । अग्रे । अह्नां । एषा । गोभिः । अरुणेभिः । युजाना । अस्रेधंती । रयिं । अप्रऽआयु । चक्रे । पथः । रदंती । सुविताय । देवी । पुरुऽस्तुता । विश्वऽवारा । वि । भाति । एषा । विऽएनी । भवति । द्विऽवर्हाः । आविःऽकृण्वाना । तन्वं । पुरस्तात् ॥ ० ॥ एषा । शुभ्रा । न । तन्वः । विदाना । ऊर्ध्वाऽइव । स्नाती । दृशये । नः । अस्थात् । अप । द्वेषः । बाधमाना । तमांसि । उषाः । दिवः । दुहिता । ज्योतिषा । आ । अगात् । एषा । प्रतीची । दुहिता । दिवः । नॄन् । योषाऽइव । भद्रा । नि । रिणीते । अप्सः ॥ विऽऊर्णवती । दाशुषे ।

वार्याणि । पुनः । ज्योतिः । युवतिः । पूर्वऽथा । अकरित्यकः ॥ २३ ॥
युंजते । मनः । उत । युंजते । धियः । विप्राः । विप्रस्य । बृहतः ।
विपःऽचितः । वि । होत्राः । दधे । वयुनऽवित् । एकः । इत् । मही ।
देवस्य । सवितुः । परिऽस्तुतिः । विश्वा । रूपाणि । प्रति । मुंचते ।
कविः । प्र । असावीत् । भद्रं । द्विऽपदे । चतुःऽपदे । वि । नाकं ।
अख्यत् । सविता । वरेण्यः । अनु । प्रऽयानं । उषसः । वि । राजति ।
यस्य । प्रऽयानं । अनु । अन्ये । इत् । ययुः । देवाः । देवस्य । महिमानं ।
ओजसा । यः । पार्थिवानि । विऽममे । सः । एतशः । रजांसि । देवः ।
सविता । महिऽत्वना । उत । यासि । सवितरिति । त्रीणि । रोचना ।
उत । सूर्यस्य । रश्मिऽभिः । सं । उच्यसि । उत । रात्रीं । उभ-
यतः । परि । ईयसे । उत । मित्रः । भवसि । देव । धर्मऽभिः । उत ।
ईशिषे । प्रऽसवस्य । त्वं । एकः । इत् । उत । पूषा । भवसि । देव ।
यामऽभिः । उत । इदं । विश्वं । भुवनं । वि । राजसि । श्यावऽ-
अश्वः । ते । सवितरिति । स्तोमं । आनशे ॥ २४ ॥ तत् । सवितुः ।
वृणीमहे । वयं । देवस्य । भोजनं । श्रेष्ठं । सर्वऽधातमं । तुरं ।
भगस्य । धीमहि । अस्य । हि । स्वयशःऽतरं । सवितुः । कत् । चन ।
प्रियं । न । मिनंति । स्वऽराज्यं । सः । हि । रत्नानि । दाशुषे ।
सुवाति । सविता । भगः । तं । भागं । चित्रं । ईमहे । अद्य । नः । देव ।
सवितरिति । प्रजाऽवत् । सावीः । सौभगं । परा । दुःऽस्वप्न्यं । सुव ।
विश्वानि । देव । सवितः । दुःऽइतानि । परा । सुव । यत् । भद्रं । तत् ।
नः । आ । सुव ॥ २५ ॥ अनागसः । अदितये । देवस्य । सवितुः ।
सवे । विश्वा । वामानि । धीमहि । आ । विश्वऽदेवं । सत्ऽपतिं ।
सुऽउक्तैः । अद्य । वृणीमहे । सत्यऽसवं । सवितारं । यः । इमेइति ।
उभेइति । अहनीइति । पुरः । एति । अप्रऽयुच्छन् । सुऽआधीः ।
देवः । सविता । यः । इमा । विश्वा । जातानि । आऽश्रवयति ।
श्लोकेन । प्र । च । सवाति । सविता ॥ २६ ॥ अच्छ । वद । तवसं ।

गीःऽभिः । आभिः । स्तुहि । पर्जन्यं । नमसा । आ । विवास । कनिक्रदत् । वृषभः । जीरऽदानुः । रेतः । दधाति । ओषधीषु । गर्भं । वि । वृक्षान् । हंति । उत । हंति । रक्षसः । विश्वं । बिभाय । भुवनं । महाऽवधात् । उत । अनागाः । ईषते । वृष्ण्यऽवतः । यत् । पर्जन्यः । स्तनयन् । हंति । दुःऽकृतः । रथीऽइव । कशया । अश्वान् । अभिऽक्षिपन् । आविः । दूतान् । कृणुते । वर्ष्यान् । अह । दूरात् । सिंहस्य । स्तनथाः । उत् । ईरते । यत् । पर्जन्यः । कृणुते । वर्ष्यं । नभः । प्र । वाताः । वांति । पतयंति । विऽद्युतः । उत् । ओषधीः । जिहते । पिन्वते । स्वः१रितिस्वः । इरा । विश्वस्मै । भुवनाय । जायते । यत् । पर्जन्यः । पृथिवीं । रेतसा । अवति । यस्य । व्रते । पृथिवी । नंनमीति । यस्य । व्रते । शफऽवत् । जर्भुरीति । यस्य । व्रते । ओषधीः । विश्वऽरूपाः । सः । नः । पर्जन्य । महि । शर्म । यच्छ ॥ २७ ॥

दिवः । नः । वृष्टिं । मरुतः । ररीध्वं । प्र । पिन्वत । वृष्णः । अश्वस्य । धाराः । अर्वाङ् । एतेन । स्तनयित्नुना । आ । इहि । अपः । निऽसिंचन् । असुरः । पिता । नः । अभि । क्रंद । स्तनय । गर्भं । आ । धाः । उदन्ऽवता । परि । दीय । रथेन । दृतिं । सु । कर्ष । विऽसितं । न्यंचं । समाः । भवंतु । उत्ऽवतः । निऽपादाः । महांतं । कोशं । उत् । अच्च । नि । सिंच । स्यंदंतां । कुल्याः । विऽसिताः । पुरस्तात् । घृतेन । द्यावापृथिवीइति । वि । उंधि । सुऽप्रपानं । भवतु । अघ्न्याभ्यः । यत् । पर्जन्य । कनिक्रदत् । स्तनयन् । हंसि । दुःऽकृतः । प्रति । इदं । विश्वं । मोदते । यत् । किं । च । पृथिव्यां । अधि । अवर्षीः । वर्षं । उत् । ऊँइति । सु । गृभाय । अकः । धन्वानि । अतिऽएतवै । ऊँइति । अजीजनः । ओषधीः । भोजनाय । कं । उत । प्रऽजाभ्यः । अविदः । मनीषां ॥ २८ ॥ बट् । इत्था । पर्वतानां । खिद्रं । बिभर्षि । पृथिवि । प्र । या । भूमिं । प्रवत्वति । मह्ना । जिनोषि । महिनि । स्तोमासः । त्वा । विऽचारिणि । प्रति । स्तोभंति ।

अक्तुऽभिः । प्र । या । वाजं । न । हेषंतं । पेरुं । अस्यसि । अर्जुनि ।
दृळ्हा । चित् । या । वनस्पतीन् । क्ष्मया । दर्धर्षि । ओजसा । यत् । ते ।
अभ्रस्य । विऽद्युतः । दिवः । वर्षंति । वृष्टयः ॥ २९ ॥ प्र । संऽराजे ।
बृहत् । अर्च । गभीरं । ब्रह्म । प्रियं । वरुणाय । श्रुताय । वि । यः ।
जघान । शमिताऽइव । चर्म । उपऽस्तिरे । पृथिवीं । सूर्याय । वनेषु ।
वि । अंतरिक्षं । ततान । वाजं । अर्वत्ऽसु । पयः । उस्रियासु ।
हृत्ऽसु । क्रतुं । वरुणः । अप्ऽसु । अग्निं । दिवि । सूर्यं । अदधात् ।
सोमं । अद्रौ । नीचीनऽबारं । वरुणः । कबंधं । प्र । ससर्ज । रोदसी-
इति । अंतरिक्षं । तेन । विश्वस्य । भुवनस्य । राजा । यवं । न ।
वृष्टिः । वि । उनत्ति । भूम । उनत्ति । भूमिं । पृथिवीं । उत । द्यां ।
यदा । दुग्धं । वरुणः । वष्टि । आत् । इत् । सं । अभ्रेण । वसत ।
पर्वतासः । तविषीऽयंतः । श्रथयंत । वीराः । इमां । ऊँइति । सु ।
आसुरस्य । श्रुतस्य । महीं । मायां । वरुणस्य । प्र । वोचं । मानेनऽ-
इव । तस्थिऽवान् । अंतरिक्षे । वि । यः । ममे । पृथिवीं । सूर्येण ॥ ३० ॥
इमां । ऊँइति । नु । कविऽतमस्य । मायां । महीं । देवस्य । नकिः ।
आ । दधर्ष । एकं । यत् । उद्गा । न । पृणंति । एनीः । आऽसिंचंतीः ।
अवनयः । समुद्रं । अर्यम्यं । वरुण । मित्र्यं । वा । सखायं । वा ।
सदं । इत् । भ्रातरं । वा । वेशं । वा । नित्यं । वरुण । अरणं । वा ।
यत् । सीं । आगः । चकृम । शिश्रथः । तत् । कितवासः । यत् ।
रिरिपुः । न । दीवि । यत् । वा । घ । सत्यं । उत । यत् । न ।
विद्म । सर्वा । ता । वि । स्य । शिथिराऽइव । देव । अध । ते । स्याम ।
वरुण । प्रियासः ॥ ३१ ॥ इंद्राग्नीइति । यं । अवथः । उभा । वाजेषु ।
मर्तं । दृळ्हा । चित् । सः । प्र । भेदति । द्युम्ना । वाणीःऽइव । त्रितः ।
या । पृतनासु । दुस्तरा । या । वाजेषु । श्रवाय्या । या । पंच ।
चर्षणीः । अभि । इंद्राग्नीइति । ता । हवामहे । तयोः । इत् । अमऽ-
वत् । शवः । तिग्मा । दिद्युत् । मघोनोः । प्रति । द्रुणा । गभस्त्योः ।

गवां । वृत्र॒ऽघ्ने । आ । ई॒ष॒ते ॥ ० ॥ इं॒द्रा॒ग्नीइति॑ । ह॒वा॒म॒हे । पती॒इति॑ । तु॒रस्य॑ । राध॑सः । वि॒द्वांसा॑ । गिर्व॑णःऽतमा । ता । वृ॒धंतौ॑ । अनु॑ । द्यून् । मर्ता॑य । दे॒वौ । अ॒दभा॑ । अर्ह॑ता । चि॒त् । पु॒रः । द॒धे । अंशा॑ऽइव । दे॒वौ । अर्व॑ते । ए॒व । इं॒द्रा॒ग्नि॒ऽभ्यां॑ । अहा॑वि । ह॒व्यं । शू॒ष्यं॑ । घृ॒तं । न । पू॒तं । अद्रि॑ऽभिः । ता । सू॒रिषु॑ । श्रवः॑ । बृ॒हत् । र॒यिं । गृ॒णत्ऽसु॑ । दि॒धृ॒तं॒ । इषं॑ । गृ॒णत्ऽसु॑ । दि॒धृ॒तं॒ ॥ ३२ ॥ प्र । वः॒ । म॒हे । म॒तयः॑ । य॒न्तु॒ । विष्ण॑वे । म॒रुत्व॑ते । गि॒रि॒ऽजाः । ए॒व॒या॒म॑रुत् । प्र । शर्धा॑य । प्रऽय॑ज्यवे । सु॒ऽखा॒द॑ये । त॒वसे॑ । भंद॑त्ऽइ॑ष्टये । धुनि॑ऽव्रताय । शव॑से । प्र । ये । जा॒ताः । म॒हि॒ना । ये । च॒ । नु । स्व॒यं । प्र । वि॒द्मना॑ । ब्रु॒वत॑ । ए॒व॒या॒म॑रुत् । क्रत्वा॑ । तत् । वः॒ । म॒रु॒तः । न । आ॒ऽधृषे॑ । शवः॑ । दा॒ना । म॒ह्ना । तत् । ए॒षां॑ । अधृ॑ष्टासः । न । अद्र॑यः । प्र । ये । दि॒वः । बृ॒ह॒तः । शृ॒ण्वि॒रे । गि॒रा । सु॒ऽशुक्वा॑नः । सु॒ऽभ्वः॑ । ए॒व॒या॒म॑रुत् । न । येषां॑ । इरी॑ । स॒धऽस्थे॑ । ईष्टे॑ । आ । अ॒ग्नयः॑ । न । स्व॒ऽवि॑द्युतः । प्र । स्पं॒द्रासः॑ । धुनी॑नां । सः । च॒क्र॒मे॒ । म॒ह॒तः । निः । उ॒रु॒ऽक्र॒मः । स॒मा॒नस्मा॑त् । सद॑सः । ए॒व॒या॒म॑रुत् । य॒दा । अयु॑क्त । त्मना॑ । स्वात् । अधि॑ । स्नु॒ऽभिः॑ । वि॒ऽस्प॑र्धसः । वि॒ऽम॑हसः । जिगा॑ति । शे॒ऽवृ॑धः । नृ॒ऽभिः॑ । स्वनः । न । वः॒ । अम॑ऽवान् । रे॒ज॒य॒त् । वृषा॑ । त्वे॒षः । य॒यिः । त॒वि॒षः । ए॒व॒या॒म॑रुत् । येन॑ । सह॑तः । ऋ॒ञ्जत॑ । स्व॒ऽरो॑चिषः । स्थाः॑ऽरश्मानः । हि॒र॒ण्ययाः॑ । सु॒ऽआ॒यु॒धासः॑ । इ॒ष्मिणः॑ ॥ ३३ ॥ अ॒पारः॑ । वः॒ । म॒हि॒मा । वृ॒द्ध॒ऽश॒व॒सः॒ । त्वे॒षं । शवः॑ । अ॒व॒तु॒ । ए॒व॒या॒म॑रुत् । स्थाता॑रः । हि । प्रऽसि॑तौ । सं॒ऽदृशि॑ । स्थन॑ । ते । नः॒ । उ॒रु॒ष्य॒त॒ । नि॒दः । शु॒शु॒क्वांसः॑ । न । अ॒ग्नयः॑ । ते । रु॒द्रासः॑ । सु॒ऽम॑खाः । अ॒ग्नयः॑ । य॒था॒ । तु॒वि॒ऽद्यु॒म्नाः । अ॒व॒न्तु॒ । ए॒व॒या॒म॑रुत् । दी॒र्घं । पृ॒थु । प॒प्र॒थे॒ । सद्म॑ । पार्थि॑वं । ए॒षां॑ । अज्मे॑षु । आ । म॒हः । श॒र्धांसि॑ । अद्भु॑तऽएनसां । अ॒द्वेषः॑ । नः॒ । म॒रु॒तः । गा॒तुं । आ । इ॒त॒न॒ । श्रोत॑ । हवं॑ । ज॒रि॒तुः । ए॒व॒या॒म॑रुत् । विष्णोः॑ । म॒हः ।

सऽमन्यवः । युयोतन । स्मत् । रथ्यः । न । दंसना । अप । द्वेषांसि । सनुतरिति । गंत । नः । यज्ञं । यज्ञियाः । सुऽशमि । श्रोत । हवं । अरक्षः । एवयामरुत् । ज्येष्ठासः । न । पर्वतासः । विऽओमनि । यूयं । तस्य । प्रऽचेतसः । स्यात । दुःऽधर्तवः । निदः ॥ ३४ ॥ इति पञ्चमण्डलं समाप्तं ॥ त्वं । हि । अग्ने । प्रथमः । मनोता । अस्याः । धियः । अभवः । दस्म । होता । त्वं । सीं । वृषन् । अकृणोः । दुस्तरीतु । सहः । विश्वस्मै । सहसे । सहध्यै । अध । होता । नि । असीदः । यजीयान् । इळः । पदे । इषयन् । ईड्यः । सन् । तं । त्वा । नरः । प्रथमं । देवऽयंतः । महः । राये । चितयंतः । अनु । ग्मन् । वृताऽइव । यंतं । बहुऽभिः । वसव्यैः । त्वेइति । रयिं । जागृऽवांसः । अनु । ग्मन् । रुशंतं । अग्निं । दर्शतं । बृहंतं । वपाऽवंतं । विश्वहा । दीदिऽवांसं । पदं । देवस्य । नमसा । व्यंतः । श्रवस्यवः । श्रवः । आपन् । अमृक्तं ॥ ० ॥ भद्रायां । ते । रणयंत । संऽदृष्टौ । त्वां । वर्धंति । क्षितयः । पृथिव्यां । त्वां । रायः । उभयासः । जनानां । त्वं । त्राता । तरणे । चेत्यः । भूः । पिता । माता । सदं । इत् । मानुषाणां ॥ ३५ ॥ सपर्येण्यः । सः । प्रियः । विक्षु । अग्निः । होता । मंद्रः । नि । ससाद । यजीयान् । तं । त्वा । वयं । दमे । आ । दीदिऽवांसं । उप । ज्ञुऽबाधः । नमसा । सदेम ॥ ० ॥ सुऽध्यः । नव्यं । अग्ने । सुम्नऽयवः । ईमहे । देवऽयंतः । त्वं । विशः । अनयः । दीद्यानः । दिवः । अग्ने । बृहता । रोचनेन ॥ ० ॥ शश्वतीनां । निऽतोशनं । वृषभं । चर्षणीनां । प्रेतिऽइषणिं । इषयंतं । पावकं । राजंतं । अग्निं । यजतं । रयीणां । सः । अग्ने । ईजे । शशमे । च । मर्तः । यः । ते । आनट् । संऽइधा । हव्यऽदातिं ॥ ० ॥ नमःऽभिः । विश्वा । इत् । सः । वामा । दधते । त्वाऽऊतः । अस्मै । ऊँइति । ते । महि । महे । विधेम । नमःऽभिः । अग्ने । संऽइधा । उत । हव्यैः । वेदी । सूनोइति । सहसः । गीःऽभिः ।

उक्थैः । आ । ते । भद्रायाँ । सुऽमतौ । यतेम । आ । यः । ततन्थ । रोदसीइति । वि । भासा । श्रवःऽभिः । च । श्रवस्यः । तरुत्रः । बृहत्ऽभिः । वाजैः । स्थविरेभिः । अस्मेइति । रेवत्ऽभिः । अग्ने । विऽतरं । वि । भाहि । नृऽवत् । वसोइति । सदं । इत् । धेहि । अस्मेइति । भूरि । तोकाय । तनयाय । पश्वः । पूर्वीः । इषः । बृहतीः । आरेऽअघाः । अस्मेइति । भद्रा । सौश्रवसानि । संतु । पुरूणि । अग्ने । पुरुधा । त्वाऽया । वसूनि । राजन् । वसुता । ते । अश्यां । पुरूणि । हि । त्वेइति । पुरुऽवार । संति । अग्ने । वसु । विधते । राजनि । त्वेइति ॥ ३६ ॥

इति चतुर्थाष्टके चतुर्थोऽध्यायः ॥ ४ ॥





॥ अथ पञ्चमोऽध्यायः ॥

हरिः ॐ ॥ त्वं । हि । क्षैतऽवत् । यशः । अग्ने । मित्रः । न । पत्यसे । त्वं । विऽचर्षणे । श्रवः । वसोइति । पुष्टिं । न । पुष्यसि । त्वां । हि । स्म । चर्षणयः । यज्ञेभिः । गीःऽभिः । ईळते । त्वां । वाजी । याति । अवृकः । रजःऽतूः । विश्वऽचर्षणिः । सऽजोषः । त्वा । दिवः । नरः । यज्ञस्य । केतुं । इंधते । यत् । ह । स्यः । मानुषः । जनः । सुम्नऽयुः । जुह्वे । अध्वरे । ऋधत् । यः । ते । सुऽदानवे । धिया । मर्तः । शशमते । ऊती । सः । बृहतः । दिवः । द्विषः । अंहः । न । तरति । संऽइधा । यः । ते । आऽहुतिं । निऽशितिं । मर्त्यः । नशत् । वयाऽवंतं । सः । पुष्यति । क्षयं । अग्ने । शतऽ-

आयुषं ॥ १ ॥ त्वेषः । ते । धूमः । ऋण्वति । दिवि । सन् । शुक्रः । आऽततः । सूरः । न । हि । द्युता । त्वं । कृपा । पावक । रोचसे । अधं । हि । विक्षु । ईड्यः । असिं । प्रियः । नः । अतिथिः । रण्वः । पुरिऽइंव । जूर्यः । सूनुः । न । त्रययाय्यः । क्रत्वा । हि । द्रोणे । अज्यसे । अग्ने । वाजी । न । कृत्व्यः । परिज्माऽइव । स्वधा । गर्यः । अत्यः । न । ह्वार्यः । शिशुः । त्वं । त्या । चित् । अच्युता । अग्ने । पशुः । न । यवसे । धाम । ह । यत् । ते । अजर । वना । वृश्चन्ति । शिक्वसः ॥ ० ॥ अग्ने । होता । दमे । विशां । संऽऋधः । विश्पते । कृणु । जुषस्व । हव्यं । अंगिरः । अच्छ । नः । मित्रऽमहः । देव । देवान् । अग्ने । वोचः । सुऽमतिं । रोदस्योः । वीहि । स्वस्ति । सुऽक्षितिं । दिवः । नॄन् । द्विषः । अंहांसि । दुःऽइता । तरेम । ता । तरेम । तव । अवसा । तरेम ॥ २ ॥ अग्ने । सः । क्षेषत् । ऋतऽपाः । ऋतेऽजाः । उरु । ज्योतिः । नशते । देवऽयुः । ते । यं । त्वं । मित्रेण । वरुणः । सऽजोषाः । देव । पासि । त्यजसा । मर्तं । अंहः । ईजे । यज्ञेभिः । शशमे । शमीभिः । ऋधत्ऽवाराय । अग्नये । ददाश । एव । चन । तं । यशसां । अजुष्टिः । न । अंहः । मर्तं । नशते । न । प्रऽदृप्तिः । सूरः । न । यस्य । दृशतिः । अरेपाः । भीमा । यत् । एति । शुचतः । ते । आ । धीः । हेषस्वतः । शुरुधः । न । अयं । अक्तोः । कुत्र । चित् । रण्वः । वसतिः । वनेऽजाः । तिग्मं । चित् । एमं । महि । वर्पः । अस्य । भसत् । अश्वः । न । यमसानः । आसा । विऽजेहमानः । परशुः । न । जिह्वां । द्रविः । न । द्रवयति । दारु । धक्षत् । सः । इत् । अस्ताऽइव । प्रति । धात् । असिष्यन् । शिशीत । तेजः । अयसः । न । धारां । चित्रऽध्रजतिः । अरतिः । यः । अक्तोः । वेः । न । द्रुऽसद्वा । रघुपत्मऽजंहाः ॥ ३ ॥ सः । ईं । रेभः । न । प्रति । वस्ते । उस्राः । शोचिषा । ररपीति । मित्रऽमहाः । नक्तं । यः । ईं । अरुषः । यः । दिवा ।

नॄन् । अमर्त्यः । अरुषः । यः । दिवा । नॄन् । दिवः । न । यस्य । विधतः । नवीनोत् । वृषा । रुक्षः । ओषधीषु । नूनोत् । घृणा । न । यः । ध्रजसा । पत्मना । यन् । आ । रोदसीइति । वसुना । दं । सुपत्नीइतिसुऽपत्नी । धायःऽभिः । वा । यः । युज्येभिः । अर्कैः । विऽद्युत् । न । दविद्योत् । स्वेभिः । शुष्मैः । शर्धः । वा । यः । मरुतां । ततक्ष । ऋभुः । न । त्वेषः । रभसानः । अद्यौत् ॥ ४ ॥ यथा । होतः । मनुषः । देवऽताता । यज्ञेभिः । सूनोइति । सहसः । यजासि ॥ एव । नः । अद्य । समना । समानान् । उशन् । अग्ने । उशतः । यक्षि । देवान् । सः । नः । विभाऽवा । चक्षणिः । न । वस्तोः । अग्निः । वंदारु । वेद्यः । चनः । धात् । विश्वऽआयुः । यः । अमृतः । मर्त्येषु । उषःऽभुत् । भूत् । अतिथिः । जातऽवेदाः । द्यावः । न । यस्य । पनयंति । अभ्वं । भासांसि । वस्ते । सूर्यः । न । शुक्रः । वि । यः । इनोति । अजरः । पावकः । अश्नस्य । चित् । शिश्नथत् । पूर्व्याणि । वव्रा । हि । सूनोइति । असि । अद्मऽसद्वा । चक्रे । अग्निः । जनुषा । अज्म । अन्नं ॥ सः । त्वं । नः । ऊर्जऽसने । ऊर्जं । धाः । राजाऽइव । जेः । अवृके । क्षेषि । अंतरिति । निऽतिक्ति । यः । वारणं । अन्नं । आत्ति । वायुः । न । राष्ट्री । अति । एति । अक्तून् । तुर्याम । यः । ते । आऽदिशां । अरातीः । अत्यः । न । ह्रुतः । पततः । परिऽह्रुत् ॥ ५ ॥ आ । सूर्यः । न । भानुमत्ऽभिः । अर्कैः । अग्ने । ततंथ । रोदसीइति । वि । भासा । चित्रः । नयत् । परि । तमांसि । अक्तः । शोचिषा । पत्मन् । औशिजः । न । दीयन् । त्वां । हि । मंद्रऽतमं । अर्कऽशोकैः । ववृमहे । महि । नः । श्रोषि । अग्ने ॥ इंद्रं । न । त्वा । शवसा । देवता । वायुं । पृणंति । राधसा । नृऽतमाः । नु । नः । अग्ने । अवृकेभिः । स्वस्ति । वेषि । रायः । पथिऽभिः । पर्षि । अंहः । ता । सूरिऽभ्यः । गृणते । रासि । सुम्नं । मदेम । शतऽहिमाः । सुऽवीराः ॥ ६ ॥ हुवे । वः । सूनुं । सहसः । युवानं । अद्रोघऽवाचं ।

मतिऽभिः । यविष्ठ । यः । इन्वति । द्रविणानि । प्रऽचेताः । विश्वऽवाराणि । पुरुऽवारः । अध्रुक् । त्वेइति । वसूनि । पुरुऽअनीक । होतः । दोषा । वस्तोः । आ । ईरिरे । यज्ञियासः । क्षामऽइव । विश्वा । भुवनानि । यस्मिन् । सं । सौभगानि । दधिरे । पावके । त्वं । विक्षु । प्रऽदिवः । सीदः । आसु । क्रत्वा । रथीः । अभवः । वार्याणां ॥ अतः । इनोषि । विधते । चिकित्वः । वि । आनुषक् । जातऽवेदः । वसूनि । यः । नः । सनुत्यः । अभिऽदासत् । अग्ने । यः । अंतरः । मित्रऽमहः । वनुष्यात् । तं । अजरेभिः । वृषऽभिः । तव । स्वैः । तप । तपिष्ठ । तपसा । तपस्वान् । यः । ते । यज्ञेन । सम्ऽइधा । यः । उक्थैः । अर्केभिः । सूनोइति । सहसः । ददाशत् । सः । मर्त्येषु । अमृत । प्रऽचेताः । राया । द्युम्नेन । श्रवसा । वि । भाति । सः । तत् । कृधि । इषितः । तूयं । अग्ने । स्पृधः । बाधस्व । सहसा । सहस्वान् ॥ यत् । शस्यसे । द्युऽभिः । अक्तः । वचःऽभिः । तत् । जुषस्व । जरितुः । घोषि । मन्म । अश्याम । तं । कामं । अग्ने । तव । ऊती । अश्याम । रयिं । रयिऽवः । सुऽवीरं । अश्याम । वाजं । अभि । वाजयंतः । अश्याम । द्युम्नं । अजर । अजरं । ते ॥ ७ ॥ प्र नव्यसा । सहसः । सूनुं । अच्छ । यज्ञेन । गातुं । अवः । इच्छमानः । वृश्चत्ऽवनं । कृष्णऽयामं । रुशंतं । वीती । होतारं । दिव्यं । जिगाति । सः । श्वितानः । तन्यतुः । रोचनऽस्थाः । अजरेभिः । नानदत्ऽभिः । यविष्ठः । यः । पावकः । पुरुऽतमः । पुरूणि । पृथूनि । अग्निः । अनुऽयाति । भर्वन् । वि । ते । विष्वक् । वातऽजूतासः । अग्ने । भामासः । शुचे । शुचयः । चरंति । तुविऽम्रक्षासः । दिव्याः । नवऽग्वाः । वना । वनंति । धृषता । रुजंतः । ये । ते । शुक्रासः । शुचयः । शुचिष्मः । क्षां । वपंति । विऽसितासः । अश्वाः । अध । भ्रमः । ते । उर्विया । वि । भाति । यातयमानः । अधि । सानु । पृश्नेः । अध । जिह्वा । पापतीति । प्र । वृष्णः । गोषुऽयुधः । न । अशनिः । सृजाना । शूरस्यऽइव ।

प्रऽसितिः । क्षातिः । अग्नेः । दुःऽवर्तुः । भीमः । दयते । वनानि ।
आ । भानुना । पार्थिवानि । ज्रयांसि । महः । तोदस्य । धृषता ।
ततन्थ । सः । बाधस्व । अप । भया । सहःऽभिः । स्पृधः । वनुष्यन् ।
वनुषः । नि । जूर्व । सः । चित्र । चित्रं । चितयंतं । अस्मेइति ।
चित्रऽक्षत्र । चित्रऽतमं । वयःऽधां । चंद्रं । रयिं । पुरुऽवीरं ।
बृहंतं । चंद्र । चंद्राभिः । गृणते । युवस्व ॥ ८ ॥ मूर्धानं । दिवः ।
अरतिं । पृथिव्याः । वैश्वानरं । ऋते । आ । जातं । अग्निं । कविं ।
संऽराजं । अतिथिं । जनानां । आसन् । आ । पात्रं । जनयंत । देवाः ।
नाभिं । यज्ञानां । सदनं । रयीणां । महां । आऽहावं । अभि । सं ।
नवंत । वैश्वानरं । रथ्यं । अध्वराणां । यज्ञस्य । केतुं । जनयंत ।
देवाः । त्वत् । विप्रः । जायते । वाजी । अग्ने । त्वत् । वीरासः ।
अभिमातिऽसहः । वैश्वानर । त्वं । अस्मासु । धेहि । वसूनि । राजन् ।
स्पृहयाय्याणि । त्वां । विश्वे । अमृत । जायमानं । शिशुं । न । देवाः ।
अभि । सं । नवंते । तव । क्रतुऽभिः । अमृतऽत्वं । आयन् । वैश्वा-
नर । यत् । पित्रोः । अदीदेः । वैश्वानर । तव । तानि । व्रतानि ।
महानि । अग्ने । नकिः । आ । दधर्ष । यत् । जायमानः । पित्रोः ।
उपऽस्थे । अविंदः । केतुं । वयुनेषु । अह्नां । वैश्वानरस्य । विऽमितानि ।
चक्षसा । सानूनि । दिवः । अमृतस्य । केतुना । तस्य । इत् । ऊँइति ।
विश्वा । भुवना । अधि । मूर्धनि । वयाःऽइव । रुरुहुः । सप्त । विऽ-
स्रुहः । वि । यः । रजांसि । अमिमीत । सुऽक्रतुः । वैश्वानरः । वि ।
दिवः । रोचना । कविः । परि । यः । विश्वा । भुवनानि । पप्रथे ।
अदब्धः । गोपाः । अमृतस्य । रक्षिता ॥ ९ ॥ पृक्षस्य । वृष्णः ।
अरुषस्य । नु । सहः । प्र । नु । वोचं । विदथा । जातऽवेदसः ।
वैश्वानराय । मतिः । नव्यसी । शुचिः । सोमःऽइव । पवते । चारुः ।
अग्नये ॥ १० ॥ व्रतानि । अग्निः । व्रतऽपाः । अरक्षत । वि । अंतरिक्षं ।
अमिमीत । सुऽक्रतुः । वैश्वानरः । महिना । नाकं । अस्पृशत् । वि ।

अस्तभ्नात् । रोदसीइति । मित्रः । अद्भुतः । अतःऽवावत् । अकृणोत् । ज्योतिषा । तमः । वि । चर्मणीइवेतिचर्मणीऽइव । धिषणेइति । अवर्तयत् । वैश्वानरः । विश्वं । अधत्त । वृष्ण्यं । अपां । उपऽस्थे । महिषाः । अगृभ्णत । विशः । राजानं । उप । तस्थुः । ऋग्मियं । आ । दूतः । अग्निं । अभरत् । विवस्वतः । वैश्वानरं । मातरिश्वा । पराऽवतः । युगेऽयुगे । विदथ्यं । गृणत्ऽभ्यः । अग्ने । रयिं । यशसं । धेहि । नव्यसीं । पव्याऽइव । राजन् । अघऽशंसं । अजर । नीचा । नि । वृश्च । वनिनं । न । तेजसा ॥ ० ॥ धारय । अनामि । क्षत्रं । अजरं । सुऽवीर्यं । वयं । जयेम । शतिनं । सहस्रिणं । वैश्वानर । वाजं । अग्ने । तव । ऊतिऽभिः । अदब्धेभिः । तव । गोपाभिः । इष्टे । अस्माकं । पाहि । त्रिऽसधस्थ । सूरीन् । रक्ष । च । नः । ददुषां । शर्धः । अग्ने । वैश्वानर । प्र । च । तारीः । स्तवानः ॥ १० ॥ अहरिति । च । कृष्णं । अहः । अर्जुनं । च । वि । वर्तेतेइति । रजसीइति । वेद्याभिः । वैश्वानरः । जायमानः । न । राजा । अव । अतिरत् । ज्योतिषा । अग्निः । तमांसि । न । अहं । तंतुं । न । वि । जानामि । ओतुं । न । यं । वयंति । संऽअरे । अतमानाः । कस्य । स्वित् । पुत्रः । इह । वक्त्वानि । परः । वदाति । अवरेण । पित्रा । सः । इत् । तंतुं । सः । वि । जानाति । ओतुं । सः । वक्त्वानि । ऋतुऽथा । वदाति । यः । ईं । चिकेतत् । अमृतस्य । गोपाः । अवः । चरन् । परः । अन्येन । पश्यन् । अयं । होता । प्रथमः । पश्यत । इमं । इदं । ज्योतिः । अमृतं । मर्त्येषु । अयं । सः । जज्ञे । ध्रुवः । आ । निऽसत्तः । अमर्त्यः । तन्वा । वर्धमानः । ध्रुवं । ज्योतिः । निऽहितं । दृशये । कं । मनः । जविष्ठं । पतयत्ऽसु । अंतरिति । विश्वे । देवाः । सऽमनसः । सऽकेताः । एकं । क्रतुं । अभि । वि । यंति । साधु । वि । मे । कर्णा । पतयतः । वि । चक्षुः । वि । इदं । ज्योतिः । हृदये । आऽहितं । यत् । वि । मे । मनः । चरति ।

दूरेऽआधीः । किं । स्वित् । वक्ष्यामि । किं । ऊँइति । नु । मनिष्ये । विश्वे । देवाः । अनमस्यन् । भियानाः । त्वां । अग्ने । तमसि । तस्थिऽवांसं । वैश्वानरः । अवतु । ऊतये । नः । अमर्त्यः । अवतु । ऊतये । नः ॥ ११ ॥ पुरः । वः । मंद्रं । दिव्यं । सुऽवृक्तिं । प्रऽयति । यज्ञे । अग्निं । अध्वरे । दधिध्वं । पुरः । उक्थेभिः । सः । हि । नः । विभाऽवा । सुऽअध्वरा । करति । जातऽवेदाः । तं । ऊँइति । द्युऽमः । पुरुऽअनीक । होतः । अग्ने । अग्निऽभिः । मनुषः । इधानः । स्तोमं । यं । अस्मै । ममताऽइव । शूषं । घृतं । न । शुचि । मतयः । पवंते । पीपाय । सः । श्रवसा । मर्त्येषु । यः । अग्नये । ददाश । विप्रः । उक्थैः । चित्राभिः । तं । ऊतिऽभिः । चित्रऽशोचिः । व्रजस्य । साता । गोऽमतः । दधाति । आ । यः । पप्रौ । जायमानः । उर्वीइति । दूरेऽदृशा । भासा । कृष्णऽअध्वा । अध । बहु । चित् । तमः । ऊर्म्यायाः । तिरः । शोचिषा । ददृशे । पावकः । नु । नः । चित्रं । पुरुऽवाजाभिः । ऊती । अग्ने । रयिं । मघवत्ऽभ्यः । च । धेहि । ये । राधसा । श्रवसा । च । अति । अन्यान् । सुऽवीर्येभिः । च । अभि । संति । जनान् । इमं । यज्ञं । चनः । धाः । अग्ने । उशन् । यं । ते । आसानः । जुहुते । हविष्मान् । भरत्ऽवाजेषु । दधिषे । सुऽवृक्तिं । अवीः । वाजस्य । गध्यस्य । सातौ । वि । द्वेषांसि । इनुहि । वर्धय । इळां ॥ ० ॥ १२ ॥ यजस्व । होतः । इषितः । यजीयान् । अग्ने । बाधः । मरुतां । न । प्रऽयुक्ति । आ । नः । मित्रावरुणा । नासत्या । द्यावा । होत्राय । पृथिवीइति । ववृत्याः । त्वं । होता । मंद्रऽतमः । नः । अध्रुक् । अंतः । देवः । विदथा । मर्त्येषु । पावकया । जुह्वा । वह्निः । आसा । अग्ने । यजस्व । तन्वं । तव । स्वां । धन्या । चित् । हि । त्वेइति । धिषणा । वष्टि । प्र । देवान् । जन्म । गृणते । यजध्यै । वेपिष्ठः । अंगिरसां । यत् । ह । विप्रः । मधु । छंदः । भनति । रेभः । इष्टौ । अदिद्युतत् । सु । अपाकः । विभाऽवा । अग्ने । यजस्व ।

रोदसीइति । उरूचीइति । आयुं । न । यं । नमसा । रातऽहव्याः । अंजंति । सुऽप्रयसं । पंच । जनाः ॥ वृंजे । ह । यत् । नमसा । बर्हिः । अग्नौ । अयामि । स्रुक् । घृतऽवती । सुऽवृक्तिः । अम्यक्षि । सद्म । सदने । पृथिव्याः । अश्रायि । यज्ञः । सूर्ये । न । चक्षुः । दशस्य । नः । पुरुऽअनीक । होतरिति । देवेभिः । अग्ने । अग्निऽभिः । इधानः । रायः । सूनोइति । सहसः । ववसानाः । अति । स्रसेम । वृजनं । न । अंहः ॥ १३ ॥ मध्ये । होता । दुरोणे । बर्हिषः । राट् । अग्निः । तोदस्य । रोदसीइति । यजध्यै । अयं । सः । सूनुः । सहसः । ऋतऽवा । दूरात् । सूर्यः । न । शोचिषा । ततान । आ । यस्मिन् । त्वेइति । सु । अपाके । जयत्र । यक्षत् । राजन् । सर्वतातांऽइव । नु । द्यौः । त्रिऽसधस्थः । ततरुषः । न । जंहः । हव्या । मघानि । मानुषा । यजध्यै । तेजिष्ठा । यस्य । अरतिः । वनेऽराट् । तोदः । अध्वन् । न । वृधसानः । अद्यौत् । अद्रोघः । न । द्रविता । चेतति । त्मन् । अमर्त्यः । अवर्त्रः । ओषधीषु । सः । अस्माकेभिः । एतरि । न । शूषैः । अग्निः । स्तवे । दमे । आ । जातऽवेदाः । द्रुऽअन्नः । वन्वन् । क्रत्वा । न । अर्वा । उस्रः । पिताऽइव । जारयायि । यज्ञैः । अध । स्म । अस्य । पनयंति । भासः । वृथा । यत् । तक्षत् । अनुऽयाति । पृथ्वीं । सद्यः । यः । स्पंद्रः । विऽसितः । धवीयान् । ऋणः । न । तायुः । अति । धन्व । राट् । सः । त्वं । नः । अर्वन् । निदायाः । विश्वेभिः । अग्ने । अग्निऽभिः । इधानः । वेषि । रायः । वि । यासि । दुच्छुनाः ॥ ० ॥ १४ ॥ त्वत् । विश्वा । सुऽभग । सौभगानि । अग्ने । वि । यंति । वनिनः । न । वयाः । श्रुष्टी । रयिः । वाजः । वृत्रऽतूर्ये । दिवः । वृष्टिः । ईड्यः । रीतिः । अपां । त्वं । भगः । नः । आ । हि । रत्नं । इषे । परिज्माऽइव । क्षयसि । दस्मऽवर्चाः । अग्ने । मित्रः । न । बृहतः । ऋतस्य । असि । क्षत्ता । वामस्य । देव । भूरेः । सः । सत्ऽपतिः । शवसा । हंति । वृत्रं । अग्ने । विप्रः । वि । पणेः ।

भर्ति । वाजं । यं । त्वं । प्रऽचेतः । ऋतऽजात । राया । सऽजोषाः ।
नप्त्रा । अपां । हिनोषि । यः । ते । सूनोइति । सहसः । गीःऽभिः ।
उक्थैः । यज्ञैः । मर्तः । निऽशितिं । वेद्या । आनट् । विश्वं । सः ।
देव । प्रति । वा । अरं । अग्ने । धत्ते । धान्यं । पत्यते । वसव्यैः ।
ता । नृऽभ्यः । आ । सौश्रवसा । सुऽवीरा । अग्ने । सूनोइति ।
सहसः । पुष्यसे । धाः । कृणोषि । यत् । शवसा । भूरि । पश्वः ।
वयः । वृकाय । अरये । जसुरये । वद्मा । सूनोइति । सहसः । नः ।
विऽहायाः । अग्ने । तोकं । तनयं । वाजि । नः । दाः । विश्वाभिः ।
गीःऽभिः । अभि । पूर्तिं । अश्यां ॥ ० ॥ १५ ॥ अग्ना । यः । मर्त्यः ।
दुवः । धियं । जुजोष । धीतिऽभिः । भसत् । नु । सः । प्र । पूर्व्यः ।
इषं । वुरीत । अवसे । अग्निः । इत् । हि । प्रऽचेताः । अग्निः ।
वेधःऽतमः । ऋषिः । अग्निं । होतारं । ईळते । यज्ञेषु । मनुषः ।
विशः । नाना । हि । अग्ने । अवसे । स्पर्धते । रायः । अर्यः । तूर्वतः ।
दस्युं । आयवः । व्रतैः । सीक्षंतः । अव्रतं । अग्निः । अप्सां । ऋतिऽ-
सहं । वीरं । ददाति । सत्ऽपतिं । यस्य । त्रसंति । शवसः । संऽ-
चक्षि । शत्रवः । भिया । अग्निः । हि । विद्मना । निदः । देवः । मर्तं ।
उरुष्यति । सहऽवा । यस्य । अवृतः । रयिः । वाजेषु । अवृतः ॥ ० ॥
॥ १६ ॥ इमं । ऊँइति । सु । वः । अतिथिं । उषःऽबुधं । विश्वासां ।
विशां । पतिं । ऋंजसे । गिरा । वेति । इत् । दिवः । जनुषा । कत् ।
चित् । आ । शुचिः । ज्योक् । चित् । अत्ति । गर्भः । यत् । अच्युतं ।
मित्रं । न । यं । सुऽधितं । भृगवः । दधुः । वनस्पतौ । ईड्यं ।
ऊर्ध्वऽशोचिषं । सः । त्वं । सुऽप्रीतः । वीतऽहव्ये । अद्भुत । प्रशस्तिऽ-
भिः । महयसे । दिवेऽदिवे । सः । त्वं । दक्षस्य । अवृकः । वृधः । भूः ।
अर्यः । परस्य । अंतरस्य । तरुषः । रायः । सूनोइति । सहसः ।
मर्त्येषु । आ । छर्दिः । यच्छ । वीतऽहव्याय । सऽप्रथः । भरत्ऽ-
वाजाय । सऽप्रथः । द्युतानं । वः । वतिथिं । स्वःऽनरं । अग्निं ।

होतारं । मनुषः । सुऽअध्वरं । विप्रं । न । द्युक्षऽवचसं । सुवृक्तिऽभिः । हव्यऽवाहं । अरतिं । देवं । ऋञ्जसे । पावकया । यः । चितयन्त्या । कृपा । क्षामन् । रुरुचे । उषसः । न । भानुना । तूर्वन् । न । यामन् । एतशस्य । नु । रणे । आ । यः । घृणे । न । ततृषाणः । अजरः ॥ १७ ॥ अग्निऽअग्निं । वः । संऽइधा । दुवस्यत । प्रियंऽप्रियं । वः । अतिथिं । गृणीषणि ॥ उप । वः । गीःऽभिः । अमृतं । विवासत । देवः । देवेषु । वनते । हि । वार्यं । देवः । देवेषु । वनते । हि । नः । दुवः ॥ संऽइद्धं । अग्निं । संऽइधा । गिरा । गृणे । शुचिं । पावकं । पुरः । अध्वरे । ध्रुवं । विप्रं । होतारं । पुरुऽवारं । अद्रुहं । कविं । सुम्नैः । ईमहे । जातऽवेदसं । त्वां । दूतं । अग्ने । अमृतं । युगेऽयुगे । हव्यऽवाहं । दधिरे । पायुं । ईड्यं । देवासः । च । मर्तासः । च । जागृविं । विऽभुं । विश्पतिं । नमसा । नि । सेदिरे । विऽभूषन् । अग्ने । उभयान् । अनु । व्रता । दूतः । देवानां । रजसीइति । सं । ईयसे । यत् । ते । धीतिं । सुऽमतिं । आऽवृणीमहे । अध । स्म । नः । त्रिऽवरूथः । शिवः । भव । तं । सुऽप्रतीकं । सुऽदृशं । सुऽअंचं । अविद्वांसः । विदुःऽतरं । सपेम । सः । यक्षत् । विश्वा । वयुनानि । विद्वान् । प्र । हव्यं । अग्निः । अमृतेषु । वोचत् ॥ १८ ॥ तं । अग्ने । पासि । उत । तं । पिपर्षि । यः । ते । आनट् । कवये । शूर । धीतिं । यज्ञस्य । वा । निऽशितिं । वा । उत्ऽइतिं । वा । तं । इत् । पृणक्षि । शवसा । उत । राया । त्वं । अग्ने । वनुष्यतः । नि । पाहि । त्वं । ऊँइति । नः । सहसाऽवन् । अवद्यात् ॥ सं । त्वा । ध्वस्मन्ऽवत् । अभि । एतु । पाथः । सं । रयिः । स्पृहयाय्यः । सहस्री । अग्निः । होता । गृहऽपतिः । सः । राजा । विश्वा । वेद । जनिमा । जातऽवेदाः । देवानां । उत । यः । मर्त्यानां । यजिष्ठः । सः । प्र । यजतां । ऋतऽवा । अग्ने । यत् । अद्य । विशः । अध्वरस्य । होतरिति । पावकऽशोचे । वेः । त्वं । हि । यज्वा । ऋता । यजासि । महिना ।

वि । यत् । भूः । हव्या । वह । यविष्ठ । या । ते । अद्य । अभि । प्रयांसि । सुऽधितानि । हि । ख्यः । नि । त्वा । दधीत । रोदसीइति । यजध्यै । अव । नः । मघऽवन् । वाजऽसातौ । अग्ने । विश्वानि ॥ ० ॥ ॥ १९ ॥ अग्ने । विश्वेभिः । सुऽअनीक । देवैः । ऊर्णाऽवंतं । प्रथमः । सीद । योनिं । कुलायिनं । घृतऽवंतं । सवित्रे । यज्ञं । नय । यजमानाय । साधु । इमं । ऊँइति । त्यं । अथर्वऽवत् । अग्निं । मंथंति । वेधसः । यं । अकुऽयंतं । आ । अनयन् । अमूरं । श्याव्याभ्यः ॥ जनिष्व । देवऽवीतये । सर्वऽताता । स्वस्तये । आ । देवान् । वक्षि । अमृतान् । ऋतऽवृधः । यज्ञं । देवेषु । पिस्पृशः । वयं । ऊँइति । त्वा । गृहऽपते । जनानां । अग्ने । अकर्म । संऽइधा । बृहंतं । अस्थूरि । नः । गार्हऽपत्यानि । संतु । तिग्मेन । नः । तेजसा । सं । शिशाधि ॥ २० ॥ त्वं । अग्ने । यज्ञानां । होता । विश्वेषां । हितः । देवेभिः । मानुषे । जने । सः । नः । मंद्राभिः । अध्वरे । जिह्वाभिः । यज । महः ॥ ० ॥ वेत्थ । हि । वेधः । अध्वनः । पथः । च । देव । अंजसा । अग्ने । यज्ञेषु । सुक्रतोइतिसुऽक्रतो ॥ त्वां । ईळे । अध । द्विता । भरतः । वाजिऽभिः । शुनं । ईजे । यज्ञेषु । यज्ञियं । त्वं । इमा । वार्या । पुरु । दिवःऽदासाय । सुन्वते । भरत्ऽवाजाय । दाशुषे ॥ २१ ॥ त्वं । दूतः । अमर्त्यः । आ । वह । दैव्यं । जनं । शृण्वन् । विप्रस्य । सुऽस्तुतिं । त्वां । अग्ने । सुऽआध्यः । मर्तासः । देवऽवीतये । यज्ञेषु । देवं । ईळते । तव । प्र । यक्षि । संऽदृशं । उत । क्रतुं । सुऽदानवः । विश्वे । जुषंत । कामिनः । त्वं । होता । मनुःऽहितः । वह्निः । आसा । विदुःऽतरः । अग्ने । यक्षि । दिवः । विशः । अग्ने । आ । याहि । वीतये । गृणानः । हव्यऽदातये । नि । होता । सत्सि । बर्हिषि ॥ २२ ॥ तं । त्वा । समित्ऽभिः । अंगिरः । घृतेन । वर्धयामसि । बृहत् । शोच । यविष्ठ्य । सः । नः । पृथु । श्रवाय्यं । अच्छ । देव । विवाससि । बृहत् । अग्ने । सुऽवीर्यं । त्वां ।

अग्ने । पुष्करात् । अधि । अथर्वा । निः । अमंथत । मूर्ध्नः । विश्वस्य । वाघतः । तं । ऊँइति । त्वा । दध्यङ् । ऋषिः । पुत्रः । ईधे । अथर्वणः । वृत्रऽहनं । पुरंऽदरं ॥ ० ॥ पाथ्यः । वृषा । सं । ईधे । दस्युहन्ऽतमं । धनंऽजयं । रणेऽरणे ॥ २३ ॥ आ । इहि । ऊँइति । सु । ब्रवाणि । ते । अग्ने । इत्था । इतराः । गिरः । एभिः । वर्धासे । इंदुऽभिः । यत्र । क्व । च । ते । मनः । दक्षं । दधसे । उत्ऽतरं । तत्र । सदः । कृणवसे । नहि । ते । पूर्तं । अक्षिऽपत् । भुवत् । नेमानां । वसोइति । अथ । दुवः । वनवसे । आ । अग्निः । अगामि । भारतः । वृत्रऽहा । पुरुऽचेतनः । दिवःऽदासस्य । सत्ऽपतिः ॥ सः । हि । विश्वा । अति । पार्थिवा । रयिं । दाशत् । महिऽत्वना । वन्वन् । अवातः । अस्तृतः ॥ २४ ॥ सः । प्रत्नऽवत् । नवीयसा । अग्ने । द्युम्नेन । संऽयता । बृहत् । ततंथ । भानुना । प्र । वः । सखायः । अग्नये । स्तोमं । यज्ञं । च । धृष्णुऽया । अर्च । गाय । च । वेधसे । सः । हि । यः । मानुषा । युगा । सीदत् । होता । कविऽक्रतुः । दूतः । च । हव्यऽवाहनः । ता । राजाना । शुचिऽव्रता ॥ ० ॥ वसोइति । यक्षि । इह । रोदसीइति । वस्वी । ते । अग्ने । संऽदृष्टिः । इषऽयते । मर्त्याय । ऊर्जः । नपात् । अमृतस्य ॥ २५ ॥ क्रत्वा । दाः । अस्तु । श्रेष्ठः । अद्य । त्वा । वन्वन् । सुऽरेक्णाः । मर्तः । आनाश । सुऽवृक्तिं । ते । ते । अग्ने । त्वाऽऊताः । इषयंतः । विश्वं । आयुः । तरंतः । अर्यः । अरातीः । वन्वंतः । अर्यः । अरातीः । अग्निः । तिग्मेन । शोचिषा । यासत् । विश्वं । नि । अत्रिणं । अग्निः । नः । वनते । रयिं । सुऽवीरं । रायिं । आ । भर । जातऽवेदः । विऽचर्षणे । जहि । रक्षांसि । सुक्रतोइतिसुऽक्रतो । त्वं । नः । पाहि । अंहसः । जातऽवेदः । अघऽयतः । रक्ष । नः । ब्रह्मणः । कवे ॥ २६ ॥ यः । नः । अग्ने । दुःऽएवः । आ । मर्तः । वधाय । दाशति । तस्मात् । नः । पाहि । अंहसः । त्वं । तं । देव । जिह्वया । परि । बाधस्व । दुःऽ

कृतं । मर्तः । यः । नः । जिघांसति । भरत्ऽवाजाय । सऽप्रथः । शर्म । यच्छ । सहंत्य ॥ अग्ने । वरेण्यं । वसु । अग्निः । वृत्राणि । जंघनत् । द्रविणस्युः । विपन्यया ॥ संऽइद्धः । शुक्रः । आऽहुतः । गर्भे । मातुः । पितुः । पिता । विऽदिद्युतानः । अक्षरे । सीदन् । ऋतस्य । योनिं । आ ॥ २७ ॥ ब्रह्म । प्रजाऽवंत् । आ । भर । जातऽवेदः । विऽचर्षणे । अग्ने । यत् । दीदयत् । दिवि । उप । त्वा । रण्वऽसंदृशं । प्रयस्वंतः । सहःऽकृत । अग्ने । ससृज्महे । गिरः । उप । छायांऽइव । घृणेः । अगन्म । शर्म । ते । वयं । अग्ने । हिरण्यऽसंदृशः । यः । उग्रःऽइव । शर्यऽहा । तिग्मऽशृंगः । न । वंसगः । अग्ने । पुरः । रुरोजिथ । आ । यं । हस्ते । न । खादिनं । शिशुं । जातं । न । बिभ्रति । विशां । अग्निं । सुऽअध्वरं ॥ २८ ॥ प्र । देवं । देवऽवीतये । भरत । वसुवित्ऽतमं । आ । स्वे । योनौ । नि । सीदतु । आ । जातं । जातऽवेदसि । प्रियं । शिशीत । अतिथिं । स्योने । आ । गृहऽपतिं । अग्ने । युक्ष्व । हि । ये । तव । अश्वासः । देव । साधवः । अरं । वहंति । मन्यवे । अच्छ । नः । याहि । आ । वह । अभि । प्रयांसि । वीतये ॥ ० ॥ उत् । अग्ने । भारत । द्युऽमत् । अजस्रेण । दविद्युतत् । शोच । भाहि । अजर ॥ २९ ॥ वीती । यः । देवं । मर्तः । दुवस्येत् । अग्निं । ईळीत । अध्वरे । हविष्मान् । होतारं । सत्यऽयजं । रोदस्योः । उत्तानऽहस्तः । नमसा । आ । विवासेत् ॥ ० ॥ हृदा । तष्टं । भरामसि । ते । ते । भवंतु । उक्षणः । ऋषभासः । वशाः । उत । अग्निं । देवासः । अग्रियं । इंधते । वृत्रहन्ऽतमं । येन । वसूनि । आऽभृता । तृळ्हा । रक्षांसि । वाजिना ॥ ३० ॥

॥ इति चतुर्थाष्टके पञ्चमोध्यायः ॥ ५ ॥

## ॥ अथ षष्ठोऽध्यायः ॥

हरिः ॐ ॥ पिब । सोमम् । अभि । यं । उग्र । तर्दः । ऊर्वं । गव्यं । महि । गृणानः । इंद्र । वि । यः । धृष्णोइति ॥ वधिषः । वज्रऽहस्त । विश्वा । वृत्रं । अमित्रिया । शवःऽभिः । सः । इं । पाहि । यः । ऋजीषी । तरुत्रः । यः । शिप्रऽवान् । वृषभः । यः । मतीनां । यः । गोत्रऽभित् । वज्रऽभृत् । यः । हरिऽस्थाः । सः । इंद्र । चित्रान् । अभि । तृंधि । वाजान् । एव । पाहि । प्रत्नऽथा । मंदतु । त्वा । श्रुधि । ब्रह्म । ववृधस्व । उत । गीःऽभिः । आविः । सूर्यं । कृणुहि । पीपिहि । इषः । जहि । शत्रून् । अभि । गाः । इंद्र । तृंधि । ते । त्वा । मदाः । बृहत् । इंद्र । स्वधाऽवः । इमे । पीताः । उक्षयंत । द्युऽमंतं । महां । अनूनं । तवसं । विऽभूतिं । मत्सरासः । जर्हृषंत । प्रऽसहं । येभिः । सूर्यं । उषसं । मंदसानः । अवासयः । अप । दृळ्हानि । दर्द्रत् । महां । अद्रिं । परि । गाः । इंद्र । संतं । नुत्थाः । अच्युतं । सदसः । परि । स्वात् ॥ १ ॥ तव । क्रत्वा । तव । तत् । दंसनाभिः । आमासु । पक्वं । शच्या । नि । दीधरितिदीधः । औणौः । दुरः । उस्रियाभ्यः । वि । दृळ्हा । उत् । ऊर्वात् । गाः । असृजः । अंगिरस्वान् । पप्राथ । क्षां । महि । दंसः । वि । उर्वीं । उप । द्यां । ऋष्वः । बृहत् । इंद्र । स्तभायः । अधारयः । रोदसीइति । देवपुत्रेइतिदेवऽपुत्रे । प्रत्नेइति । मातरा । यह्वीइति । ऋतस्य । अध । त्वा । विश्वे । पुरः । इंद्र । देवाः । एकं । तवसं । दधिरे । भराय । अदेवः । यत् । अभि । औहिष्ट । देवान् । स्वःऽसाता । वृणते । इंद्रं । अत्र । अध । द्यौः । चित् । ते । अप । सा । नु । वज्रात् । द्विता ।

अनमत् । भियसा । स्वस्य । मन्योः । अहिं । यत् । इंद्रः । अभि ।
ओहसानं । नि । चित् । विश्वऽआयुः । शयथे । जघान । अध ।
त्वष्टा । ते । महः । उग्र । वज्रं । सहस्रऽभृष्टिं । ववृतत् । शतऽअश्रिं ।
निऽकामं । अरऽमनसं । येन । नवंतं । अहिं । सं । पिणक् । ऋजी-
षिन् ॥ २ ॥ वर्धान् । यं । विश्वे । मरुतः । सऽजोषाः । पचत् । शतं ।
महिषान् । इंद्र । तुभ्यं । पूषा । विष्णुः । त्रीणि । सरांसि । धावन् ।
वृत्रऽहनं । मदिरं । अंशुं । अस्मै । आ । क्षोदः । महि । वृतं । नदीनां ।
परिऽस्थितं । असृजः । ऊर्मिं । अपां । तासां । अनु । प्रऽवतः । इंद्र ।
पंथां । प्र । आर्दयः । नीचीः । अपसः । समुद्रं । एव । ता । विश्वा ।
चकृऽवांसं । इंद्रं । महां । उग्रं । अजुर्यं । सहःऽदां । सुऽवीरं । त्वा ।
सुऽआयुधं । सुऽवज्रं । आ । ब्रह्म । नव्यं । अवसे । ववृत्यात् । सः ।
नः । वाजाय । श्रवसे । इषे । च । राये । धेहि । द्युऽमतः । इंद्र ।
विप्रान् । भरत्ऽवाजे । नृऽवतः । इंद्र । सूरीन् । दिवि । च । स्म ।
एधि । पार्ये । नः । इंद्र । अया । वाजं । देवऽहितं । सनेम ॥ ० ॥
॥ ३ ॥ ० ॥ अभिभूतिऽओजाः । वन्वन् । अवातः । पुरुऽहूतः । इंद्रः ।
अषाळ्हं । उग्रं । सहमानं । आभिः । गीःऽभिः । वर्ध । वृषभं ।
चर्षणीनां । सः । युध्मः । सत्वा । खजऽकृत् । समत्ऽवा । तुविऽ-
म्रक्षः । नदनुऽमान् । ऋजीषी । बृहत्ऽरेणुः । च्यवनः । मानुषीणां ।
एकः । कृष्टीनां । अभवत् । सहऽवा । त्वं । ह । नु । त्यत् । अदमयः ।
दस्यून् । एकः । कृष्टीः । अवनोः । आर्याय । अस्ति । स्वित् । नु ।
वीर्यं । तत् । ते । इंद्र । न । स्वित् । अस्ति । तत् । ऋतुऽथा । वि ।
वोचः । सत् । इत् । हि । ते । तुविऽजातस्य । मन्ये । सहः ।
सहिष्ठ । तुरतः । तुरस्य । उग्रं । उग्रस्य । तवसः । तवीयः । अरध्रस्य ।
रध्रऽतुरः । बभूव । तत् । नः । प्रत्नं । सख्यं । अस्तु । युष्मेइति ।
इत्था । वदत्ऽभिः । वलं । अंगिरःऽभिः । हन् । अच्युतऽच्युत् ।
दस्म । इषयंतं । ऋणोः । पुरः । वि । दुरः । अस्य । विश्वाः ॥ ४ ॥

सः । हि । धीभिः । हव्यः । अस्ति । उग्रः । ईशानऽकृत् । महति । वृत्रऽतूर्ये । सः । तोकऽसाता । तनये । सः । वज्री । वितंतसाय्यः । अभवत् । समत्ऽसु । सः । मज्मना । जनिम । मानुषाणां । अमर्त्येन । नाम्ना । अति । प्र । सर्स्रे । सः । द्युम्नेन । सः । शवसा । उत । राया । सः । वीर्येण । नृऽतमः । संऽओकाः । सः । यः । न । मुहे । न । मिथु । जनः । भूत् । सुमंतुऽनामा । चुमुरिं । धुनिं । च । वृणक् । पिप्रुं । शंबरं । शुष्णं । इंद्रः । पुरां । च्यौत्नाय । शयथाय । नु । चित् । उत्ऽअवता । त्वक्षसा । पन्यसा । च । वृत्रऽहत्याय । रथं । इंद्र । तिष्ठ । धिष्व । वज्रं । हस्ते । आ । दक्षिणऽत्रा । अभि । प्र । मंद । पुरुऽदत्र । मायाः । अग्निः । न । शुष्कं । वनं । इंद्र । हेतिः । रक्षः । नि । धक्षि । अशनिः । न । भीमा । गंभीरया । ऋष्वया । यः । रुरोज । अध्वनयत् । दुःऽइता । दंभयत् । च ॥ ५ ॥ आ । सहस्रं । पथिऽभिः । इंद्र । राया । तुविऽद्युम्न । तुविऽवाजेभिः । अर्वाक् । याहि । सूनोइति । सहसः । यस्य । नु । चित् । अदेवः । ईशे । पुरुऽहूत । योतोः । प्र । तुविऽद्युम्नस्य । स्थविरस्य । घृष्वेः । दिवः । ररप्शे । महिमा । पृथिव्याः । न । अस्य । शत्रुः । न । प्रतिऽमानं । अस्ति । न । प्रतिऽस्थिः । पुरुऽमायस्य । सह्योः । प्र । तत् । ते । अद्य । करणं । कृतं । भूत् । कुत्सं । यत् । आयुं । अतिथिऽग्वं । अस्मै । पुरु । सहस्रा । नि । शिशाः । अभि । क्षां । उत् । तूर्वयाणं । धृषता । निनेथ । अनु । त्वा । अहिऽघ्ने । अध । देव । देवाः । मदन् । विश्वे । कविऽतमं । कवीनां । करः । यत्र । वरिवः । बाधिताय । दिवे । जनाय । तन्वे । गृणानः । अनु । द्यावापृथिवीइति । तत् । ते । ओजः । अमर्त्याः । जिहते । इंद्र । देवाः । कृष्व । कृतोइति । अकृतं । यत् । ते । अस्ति । उक्थं । नवीयः । जनयस्व । यज्ञैः ॥ ६ ॥ महान् । इंद्रः । नृऽवत् । आ । चर्षणिऽप्राः ।

उत । द्वि॒ऽबर्हाः॑ । अ॒मिनः॑ । सहः॑ऽभिः । अ॒स्म॒द्र्य॑क् । व॒वृ॒धे । वी॒र्या॑य । उ॒रुः । पृ॒थुः । सु॒ऽकृ॑तः । क॒र्तृऽभिः॑ । भू॒त् । इंद्रः॑ । ए॒व । धि॒षणा॑ । सा॒तयै॑ । धा॒त् । बृ॒हंतं॑ । ऋ॒ष्वं । अ॒जरं॑ । युवा॑नं । अषा॑ळ्हेन । शव॑सा । शू॒शु॒ऽवांसं॑ । स॒द्यः । चि॒त् । यः । व॒वृ॒धे । असा॑मि । पृ॒थू॒इति॑ । क॒रस्ना॑ । ब॒हु॒ला । गभ॑स्तीइति॑ । अ॒स्म॒द्र्य॑क् । सं । मि॒मी॒हि॒ । श्रवां॑सि । यू॒थाऽइ॑व । प॒श्वः । प॒शु॒ऽपाः । दमू॑नाः । अ॒स्मान् । इं॒द्र॒ । अ॒भि । आ । व॒वृ॒त्स्व॒ । आ॒जौ । तं । वः॒ । इंद्रं॑ । च॒तिनं॑ । अ॒स्य॒ । शा॒कैः । इ॒ह । नू॒नं । वा॒ज॒ऽयंतः॑ । हु॒वे॒म॒ । यथा॑ । चि॒त् । पूर्वे॑ । ज॒रि॒तारः॑ । आ॒सुः । अने॑द्याः । अ॒न॒व॒द्याः । अरि॑ष्टाः । घृ॒त॒ऽव्र॑तः । ध॒न॒ऽदाः । सोम॑ऽवृद्धः । सः । हि । वा॒मस्य॑ । वसु॑नः । पु॒रु॒ऽक्षुः । सं । ज॒ग्मि॒रे॒ । प॒थ्याः॑ । रायः॑ । अ॒स्मि॒न् । स॒मु॒द्रे । न । सिंध॑वः । याद॑मानाः ॥ ७ ॥ शवि॑ष्ठं । नः॒ । आ । भ॒र॒ । शू॒र॒ । शवः॑ । ओजि॑ष्ठं । ओजः॑ । अ॒भि॒ऽभू॒ते॒ । उ॒ग्रं । विश्वा॑ । द्यु॒म्ना । वृष्ण्या॑ । मानु॑षाणां । अ॒स्मभ्यं॑ । दाः॒ । ह॒रि॒ऽवः॒ । मा॒द॒यध्यै॑ । यः । ते॒ । मदः॑ । पृ॒त॒ना॒षाट् । अमृ॑ध्रः । इंद्र॑ । तं । नः॒ । आ । भ॒र॒ । शू॒शु॒ऽवांसं॑ । येन॑ । तो॒कस्य॑ । तन॑यस्य । सा॒तौ । मं॒सी॒महि॑ । जि॒गी॒वांसः॑ । त्वाऽऊ॑ताः । आ । नः॒ । भ॒र॒ । वृष॑णं । शुष्मं॑ । इं॒द्र॒ । ध॒न॒ऽस्पृतं॑ । शू॒शु॒ऽवांसं॑ । सु॒ऽदक्षं॑ । येन॑ । वंसा॑म । पृत॑नासु । शत्रू॑न् । तव॑ । ऊ॒तिऽभिः॑ । उ॒त । जा॒मीन् । अजा॑मीन् । आ । ते॒ । शुष्मः॑ । वृ॒ष॒भः । ए॒तु॒ । प॒श्चात् । आ । उ॒त्त॒रात् । अ॒ध॒रात् । आ । पु॒रस्ता॑त् । आ । वि॒श्वतः॑ । अ॒भि । सं । ए॒तु॒ । अ॒र्वाङ् । इंद्र॑ । द्यु॒म्नं । स्वः॑ऽवत् । धे॒हि॒ । अ॒स्मेइति॑ । नृ॒ऽवत् । ते॒ । इं॒द्र॒ । नृऽत॑माभिः । ऊ॒ती । वं॒सी॒महि॑ । वा॒मं । श्रोम॑तेभिः । ईक्षे॑ । हि । वस्वः॑ । उ॒भय॑स्य । रा॒ज॒न् । धाः । रत्नं॑ । महि॑ । स्थू॒रं । बृ॒हंतं॑ ॥ ० ॥ जनं॑ । व॒ज्रि॒न् । महि॑ । चि॒त् । मन्य॑मानं । ए॒भ्यः । नृ॒ऽभ्यः॑ । रं॒ध॒य॒ । येषु॑ । अस्मि॑ । अध॑ । हि । त्वा॒ । पृ॒थि॒व्यां । शूर॑ऽसातौ । हवा॑महे । तन॑ये । गोषु॑ । अ॒प्ऽसु । व॒यं । ते॒ । ए॒भिः । पु॒रु॒ऽहू॒त॒ । स॒ख्यैः । शत्रोः॑ऽशत्रोः ।

उत्ऽतरे । इत् । स्याम । घ्नंतः । वृत्राणि । उभयानि । शूर । राया । मदेम । बृहता । त्वाऽऊताः ॥ ८ ॥ द्यौः । न । यः । इंद्र । अभि । भूमं । अर्यः । तस्थौ । रयिः । शवसा । पृत्ऽसु । जनान् । तं । नः । सहस्रऽभरं । उर्वराऽसां । दद्धि । सूनोइति । सहसः । वृत्रऽतुरं । दिवः । न । तुभ्यं । अनु । इंद्र । सत्रा । असुर्यं । देवेभिः । धायि । विश्वं । अहिं । यत् । वृत्रं । अपः । वव्रिऽवांसं । हन् । ऋजीषिन् । विष्णुना । सचानः । तूर्वन् । ओजीयान् । तवसः । तवीयान् । कृतऽब्रह्मा । इंद्रः । वृद्धऽमहाः । राजा । अभवत् । मधुनः । सोम्यस्य । विश्वासां । यत् । पुरां । दर्त्नुं । आवत् । शतैः । अपद्रन् । पणयः । इंद्र । अत्र । दशऽओणये । कवये । अर्कऽसातौ । वधैः । शुष्णस्य । अशुषस्य । मायाः । पित्वः । न । अरिरेचीत् । किं । चन । प्र ॥ महः । द्रुहः । अप । विश्वऽआयु । धायि । वज्रस्य । यत् । पतने । पादि । शुष्णः । उरु । सः । सऽरथं । सारथये । कः । इंद्रः । कुत्साय । सूर्यस्य । सातौ ॥ ९ ॥ प्र । श्येनः । न । मदिरं । अंशुं । अस्मै । शिरः । दासस्य । नमुचेः । मथायन् । प्र । आवत् । नमीं । साप्यं । ससंतं । पृणक् । राया । सं । इषा । सं । स्वस्ति । वि । पिप्रोः । अहिऽमायस्य । दृळ्हाः । पुरः । वज्रिन् । शवसा । न । दर्दरितिदर्दः । सुऽदामन् । तत् । रेक्णः । अप्रऽमृष्यं । ऋजिश्वने । दात्रं । दाशुषे । दाः । सः । वेतसुं । दशऽमायं । दशऽओणिं । तूतुजिं । इंद्रः । स्वभिष्टिऽसुम्नः । आ । तुग्रं । शश्वत् । इभं । द्योतनाय । मातुः । न । सीं । उप । सृज । इयध्यै । सः । ईं । स्पृधः । वनते । अप्रतिऽइतः । बिभ्रत् । वज्रं । वृत्रऽहनं । गभस्तौ । तिष्ठत् । हरीइति । अधि । अस्ताऽइव । गर्ते । वचःऽयुजा । वहतः । इंद्रं । ऋष्वं । सनेम । ते । अवसा । नव्यः । इंद्र । प्र । पूरवः । स्तवंते । एना । यज्ञैः । सप्त । यत् । पुरः । शर्म । शारदीः । दर्त् । हन् । दासीः । पुरुऽकुत्साय । शिक्षन् । त्वं । वृधः । इंद्र । पूर्व्यः । भूः । वरिवस्यन् । उशने । काव्याय । परा । नवऽवास्त्वं ।

अनुऽदेयं । महे । पित्रे । ददाथ । स्वं । नपातं ॥ ० ॥ तव । ह ।
त्यत् । इंद्र । विश्वं । आजौ । सस्तः । धुनीचुमुरीइति । या । ह ।
सिस्वप् । दीदयत् । इत् । तुभ्यं । सोमेभिः । सुन्वन् । दभीतिः ।
इध्मऽभृतिः । पक्थी । अर्कैः ॥ १० ॥ इमाः । ऊँइति । त्वा । पुरुऽ-
तमस्य । कारोः । हव्यं । वीर । हव्याः । हवंते । धियः । रथेऽस्थां ।
अजरं । नवीयः । रयिः । विऽभूतिः । ईयते । वचस्या ॥ ० ॥ यः ।
विदानः । गिर्वाहसं । गीःऽभिः । यज्ञऽवृद्धं । यस्य । दिवं । अति ।
मह्ना । पृथिव्याः । पुरुऽमायस्य । रिरिचे । महिऽत्वं । सः । इत् ।
तमः । अवयुनं । ततन्वत् । सूर्येण । वयुनऽवत् । चकार । कदा ।
ते । मर्ताः । अमृतस्य । धाम । इयक्षंतः । न । मिनंति । स्वधाऽवः ।
यः । ता । चकार । सः । कुह । स्वित् । इंद्रः । कं । आ । जनं ।
चरति । कासु । विक्षु । कः । ते । यज्ञः । मनसे । शं । वराय । कः ।
अर्कः । इंद्र । कतमः । सः । होता । इदा । हि । ते । वेविषतः ।
पुराऽजाः । प्रत्नासः । आसुः । पुरुऽकृत् । सखायः । ये । मध्यमासः ।
उत । नूतनासः । उत । अवमस्य । पुरुऽहूत । बोधि ॥ ११ ॥ तं ।
पृच्छंतः । अवरासः । पराणि । प्रत्ना । ते । इंद्र । श्रुत्या । अनु ।
येमुः । अर्चामसि । वीर । ब्रह्मऽवाहः । यात् । एव । विद्म । तात् ।
त्वा । महांतं । अभि । त्वा । पाजः । रक्षसः । वि । तस्थे । महि ।
जज्ञानं । अभि । तत् । सु । तिष्ठ । तव । प्रत्नेन । युज्येन । सख्या ।
वज्रेण । धृष्णोइति । अप । ता । नुदस्व ॥ सः । तु । श्रुधि । इंद्र ।
नूतनस्य । ब्रह्मण्यतः । वीर । कारुऽधायः । त्वं । हि । आपिः । प्रऽ-
दिवि । पितृणां । शश्वत् । भभूथ । सुऽहवः । आऽइष्टौ । प्र ।
ऊतये । वरुणं । मित्रं । इंद्रं । मरुतः । कृष्व । अवसे । नः । अद्य ।
प्र । पूषणं । विष्णुं । अग्निं । पुरंऽधिं । सवितारं । ओषधीः । पर्व-
तान् । च । इमे । ऊँइति । त्वा । पुरुऽशाक । प्रयज्योइतिप्रऽयज्यो ।
जरितारः । अभि । अर्चंति । अर्कैः । श्रुधि । हवं । आ । हुवतः ।

हुवानः । न । त्वाऽवान् । अन्यः । अमृत । त्वत् । अस्ति । नु । मे ।
आ । वाचं । उप । याहि । विद्वान् । विश्वेभिः । सूनोइति । सहसः ।
यजत्रैः । ये । अग्निऽजिह्वाः । ऋतऽसापः । आसुः । ये । मनुं । चक्रुः ।
उपरं । दसाय । सः । नः । बोधि । पुरःऽएता । सुऽगेषु । उत ।
दुःऽगेषु । पथिऽकृत् । विदानः ॥ ये । अश्रमासः । उरवः । वहिष्ठाः ।
तेभिः । नः । इंद्र । अभि । वक्षि । वाजं ॥ १२ ॥ यः । एकः । इत् ।
हव्यः । चर्षणीनां । इंद्रं । तं । गीःऽभिः । अभि । अर्चे । आभिः ।
यः । पत्यते । वृषभः । वृष्ण्यऽवान् । सत्यः । सत्वा । पुरुऽमायः ।
सहस्वान् । तं । ऊँइति । नः । पूर्वे । पितरः । नवऽग्वाः । सप्त । विप्रासः ।
अभि । वाजयंतः । नक्षत्ऽदाभं । ततुरिं । पर्वतेऽस्थां । अद्रोघऽवाचं ।
मतिऽभिः । शविष्ठं । तं । ईमहे । इंद्रं । अस्य । रायः । पुरुऽवीरस्य ।
नृऽवतः । पुरुऽक्षोः । यः । अस्कृधोयुः । अजरः । स्वःऽवान् । तं । आ ।
भर । हरिऽवः । मादयध्यै । तत् । नः । वि । वोचः । यदि । ते । पुरा ।
चित् । जरितारः । आनशुः । सुम्नं । इंद्र । कः । ते । भागः । किं ।
वयः । दुध्र । खिद्वः । पुरुऽहूत । पुरुवसोइतिपुरुऽवसो । असुरऽघ्नः ।
तं । पृच्छंती । वज्रऽहस्तं । रथेऽस्थां । इंद्रं । वेपी । वक्वरी । यस्य ।
नु । गीः । तुविऽग्राभं । तुविऽकूर्मिं । रभःऽदां । गातुं । इषे । नक्षते ।
तुम्रं । अच्छ ॥ १३ ॥ अया । ह । त्यं । मायया । वनृधानं । मनःऽ-
जुवा । स्वऽतवः । पर्वतेन । अच्युता । चित् । वीळिता । सुऽओजः ।
रुजः । वि । दृळ्हा । धृषता । विऽरप्शिन् । सं । वः । धिया ।
नव्यस्या । शविष्ठं । प्रत्नं । प्रत्नऽवत् । परिऽतंसयध्यै । सः । नः ।
वक्षत् । अनिऽमानः । सुऽवह्मा । इंद्रः । विश्वानि । अति । दुःऽ-
गहानि । आ । जनाय । द्रुह्वणे । पार्थिवानि । दिव्यानि । दीपयः ।
अंतरिक्षा ॥ तप । वृषन् । विश्वतः । शोचिषा । तान् । ब्रह्मऽद्विषे ।
शोचय । क्षां । अपः । च । भुवः । जनस्य । दिव्यस्य । राजा ।
पार्थिवस्य । जगतः । त्वेषऽसंदृक् । धिष्व । वज्रं । दक्षिणे । इंद्र ।

हस्ते । विश्वाः । अजुर्य । दयसे । वि । मायाः । आ । संऽयतं । इंद्र । नः । स्वस्ति । शत्रुऽतूर्याय । बृहतीं । अमृध्रां । यया । दासानि । आर्याणि । वृत्रा । करः । वज्रिन् । सुऽतुका । नाहुषाणि । सः । नः । नियुत्ऽभिः । पुरुऽहूत । वेधः । विश्वऽवाराभिः । आ । गहि । प्रयज्योइतिप्रऽयज्यो । न । याः । अदेवः । वरते । न । देवः । आ । आभिः । याहि । तूयं । आ । मद्र्यद्रिक् ॥ १४ ॥ सुते । इत् । त्वं । निऽमिश्लः । इंद्र । सोमे । स्तोमे । ब्रह्मणि । शस्यमाने । उक्थे । यत् । वा । युक्ताभ्यां । मघऽवन् । हरिऽभ्यां । बिभ्रत् । वज्रं । बाह्वोः । इंद्र । यासि । यत् । वा । दिवि । पार्ये । सुस्वि । इंद्र । वृत्रऽहत्ये । अवसि । शूरऽसातौ । यत् । वा । दक्षस्य । बिभ्युषः । अबिभ्यत् । अरंधयः । शर्धतः । इंद्र । दस्यून् । पाता । सुतं । इंद्रः । अस्तु । सोमं । प्रऽनेनीः । उग्रः । जरितारं । ऊती । कर्ता । वीराय । सुस्वये । ऊँइति । लोकं । दाता । वसु । स्तुवते । कीरये । चित् । गंता । इयाति । सवना । हरिऽभ्यां । बभ्रिः । वज्रं । पपिः । सोमं । ददिः । गाः । कर्ता । वीरं । नर्यं । सर्वऽवीरं । श्रोता । हवं । गृणतः । स्तोमऽवाहाः । अस्मै । वयं । यत् । ववान । तत् । विविष्मः । इंद्राय । यः । नः । प्रऽदिवः । अपः । करितिकः । सुते । सोमे । स्तुमसि । शंसत् । उक्था । इंद्राय । ब्रह्म । वर्धनं । यथा । असत् ॥ १५ ॥ ब्रह्माणि । हि । चकृषे । वर्धनानि । तावत् । ते । इंद्र । मतिऽभिः । विविष्मः । सुते । सोमे । सुतऽपाः । शंऽतमानि । रांद्र्या । क्रियास्म । वक्षणानि । यज्ञैः ॥ ० ॥ पुरोळाशं । रराणः । पिब । तु । सोमं । गोऽऋजीकं । इंद्र ॥ ० ॥ उरुं । कृधि । त्वाऽयतः । ऊँइति । लोकं । सः । मंदस्व । हि । अनु । जोषं । उग्र । प्र । त्वा । यज्ञासः । इमे । अश्नुवंतु । प्र । इमे । हवासः । पुरुऽहूतं । अस्मेइति । आ । त्वा । इयं । धीः । अवसे । इंद्र । यम्याः । तं । वः । सखायः । सं । यथा । सुतेषु ॥ ० ॥ कुवित् । तस्मै । असति । नः ।

भराय । न । सुऽस्विं । इंद्रः । अवसे । मृधाति । एव । इत् । इंद्रः । सुते । अस्तावि । सोमे । भरत्ऽवाजेषु । क्षयत् । इत् । मघोनः । असत् । यथा । जरित्रे । उत । सूरिः । इंद्रः । रायः । विश्वऽवारस्य । दाता ॥ १६ ॥ वृषा । मदः । इंद्रे । श्लोकः । उक्था । सचा । सोमेषु । सुतऽपाः । ऋजीषी । अर्चत्र्यः । मघऽवा । नृऽभ्यः । उक्थैः । द्युक्षः । राजा । गिरां । अक्षितऽऊतिः । ततुरिः । वीरः । नर्यः । विऽचेताः । श्रोता । हवं । गृणतः । उर्विऽऊतिः । वसुः । शंसः । नरां । कारुऽधायाः । वाजी । स्तुतः । विदथे । दाति । वाजं । अक्षः । न । चक्र्योः । शूर । बृहन् । प्र । ते । मह्ना । रिरिचे । रोदस्योः । वृक्षस्य । नु । ते । पुरुऽहूत । वयाः । वि । ऊतयः । रुरुहुः । इंद्र । पूर्वीः । शचीऽवतः । ते । पुरुऽशाक । शाकाः । गवांऽइव । स्रुतयः । संऽचरणीः । वत्सानां । न । तंतयः । ते । इंद्र । दामन्ऽवंतः । अदामानः । सुऽदामन् । अन्यत् । अद्य । कर्वरं । अन्यत् । ऊँइति । श्वः । असत् । च । सत् । मुहुः । आऽचक्रिः । इंद्रः । मित्रः । नः । अत्र । वरुणः । च । पूषा । अर्यः । वशस्य । परिऽएता । अस्ति ॥ १७ ॥ वि । त्वत् । आपः । न । पर्वतस्य । पृष्ठात् । उक्थेभिः । इंद्र । अनयंत । यज्ञैः । तं । त्वा । आभिः । सुस्तुतिऽभिः । वाजयंतः । आजिं । न । जग्मुः । गिर्वाहः । अश्वाः । न । यं । जरंति । शरदः । न । मासाः । न । द्यावः । इंद्रं । अवऽकर्शयंति । वृद्धस्य । चित् । वर्धतां । अस्य । तनूः । स्तोमेभिः । उक्थैः । च । शस्यमाना । न । वीळवे । नमते । न । स्थिराय । न । शर्धते । दस्युऽजूताय । स्तवान् । अज्राः । इंद्रस्य । गिरयः । चित् । ऋष्वाः । गंभीरे । चित् । भवति । गाधं । अस्मै । गंभीरेण । नः । उरुणा । अमत्रिन् । प्र । इषः । यंधि । सुतऽपावन् । वाजान् । स्थाः । ऊँइति । सु । ऊर्ध्वः । ऊती । अरिषण्यन् । अक्तोः । विऽउष्टौ । परिऽतक्म्यायां । सचस्व । नायं । अवसे । अभीके । इतः । वा । तं । इंद्र । पाहि ।

रिषः ॥ अमा । च । एनं । अरण्ये । पाहि । रिषः ॥ ० ॥ १८ ॥
या । ते । ऊतिः । अवमा । या । परमा । या । मध्यमा । इंद्र ।
शुष्मिन् । अस्ति । ताभिः । ऊँइति । सु । वृत्रऽहत्ये । अवीः । नः ।
एभिः । च । वाजैः । महान् । नः । उग्र । आभिः । स्पृधः । मिथतीः ।
अरिषण्यन् । अमित्रस्य । व्यथय । मन्युं । इंद्र ॥ आभिः । विश्वाः ।
अभिऽयुजः । विषूचीः । आर्याय । विशः । अव । तारीः । दासीः ।
इंद्र । जामयः । उत । ये । अजामयः । अर्वाचीनासः । वनुषः ।
युयुग्धि । त्वं । एषां । विथुरा । शवांसि । जहि । वृष्ण्यानि । कृणुहि ।
पराचः । शूरः । वा । शूरं । वनते । शरीरैः । तनूऽरुचा । तरुषि । यत् ।
कृण्वैतेइति । तोके । वा । गोषु । तनये । यत् । अप्ऽसु । वि । क्रंदसी-
इति । उर्वरासु । ब्रवैतेइति । नहि । त्वा । शूरः । न । तुरः । न ।
धृष्णुः । न । त्वा । योधः । मन्यमानः । युयोध । इंद्र । नकिः । त्वा ।
प्रति । अस्ति । एषां । विश्वा । जातानि । अभि । असि । तानि ॥ १ ॥
सः । पत्यते । उभयोः । नृम्णं । अयोः । यदि । वेधसः । संऽइथे ।
हवंते । वृत्रे । वा । महः । नृऽवति । क्षये । वा । व्यचस्वंता । यदि ।
वितंतसैतेइति । अध । स्म । ते । चर्षणयः । यत् । एजान् । इंद्र ।
त्राता । उत । भव । वरूता । अस्माकासः । ये । नृऽतमासः । अर्यः ।
इंद्र । सूरयः । दधिरे । पुरः । नः । तनु । ते । दायि । महे ।
इंद्रियाय । सत्रा । ते । विश्वं । अनु । वृत्रऽहत्ये । अनु । क्षत्रं । अनु ।
सहः । यजत्र । इंद्र । देवेभिः । अनु । ते । नृऽसह्ये । एव । नः ।
स्पृधः । सं । अज । समत्ऽसु । इंद्र । ररंधि । मिथतीः । अदेवीः ॥ ० ॥
भरत्ऽवाजाः । उत । ते । इंद्र । नूनं ॥ २० ॥ श्रुधि । नः । इंद्र ।
ह्वयामसि । त्वा । महः । वाजस्य । सातौ । ववृषाणाः । सं । यत् ।
विशः । अयंत । शूरऽसातौ । उग्रं । नः । अवः । पार्ये । अहन् ।
दाः । त्वां । वाजी । हवते । वाजिनेयः । महः । वाजस्य । गध्यस्य ।
सातौ । त्वां । वृत्रेषु । इंद्र । सत्ऽपतिं । तरुत्रं । त्वां । चष्टे ।

मुष्टिऽहा । गोषु । युध्यन् । त्वं । कविं । चोदयः । अर्कऽसातौ । त्वं । कुत्साय । शुष्णं । दाशुषे । वर्क् । त्वं । शिरः । अमर्मणः । परा । अहन् । अतिथिऽग्वाय । शंस्यं । करिष्यन् । त्वं । रथं । प्र । भरः । योधं । ऋष्वं । आवः । युध्यंतं । वृषभं । दशऽद्युं । त्वं । तुग्रं । वेतसवे । सचा । अहन् । त्वं । तुजिं । गृणंतं । इंद्र । तूतोरितितूतोः । त्वं । तत् । उक्थं । इंद्र । बर्हणा । करितिकः । प्र । यत् । शता । सहस्रा । शूर । दर्षि । अव । गिरेः । दासं । शंबरं । हन् । प्र । आवः । दिवःऽदासं । चित्राभिः । ऊती ॥ २१ ॥ त्वं । श्रद्धाभिः । मंदसानः । सोमैः । दभीतये । चुमुरिं । इंद्र । सिस्वप् । त्वं । रजिं । पिठीनसे । दशस्यन् । षष्टिं । सहस्रा । शच्या । सचा । अहन् । अहं । चन । तत् । सूरिऽभिः । आनश्यां । तव । ज्यायः । इंद्र । सुम्नं । ओजः । त्वया । यत् । स्तवंते । सधऽवीर । वीराः । त्रिऽवरूथेन । नहुषा ॥ शविष्ठ । वयं । ते । अस्यां । इंद्र । द्युम्नऽहूतौ । सखायः । स्याम । महिन । प्रेष्ठाः । प्रातर्दनिः । क्षत्रऽश्रीः । अस्तु । श्रेष्ठः । घने । वृत्राणां । सनये । धनानां ॥ २२ ॥ किं । अस्य । मदे । किं । ऊं इति । अस्य । पीतौ । इंद्रः । किं । अस्य । सख्ये । चकार । रणाः । वा । ये । निऽसदि । किं । ते । अस्य । पुरा । विविद्रे । किं । ऊं इति । नूतनासः । सत् । अस्य ॥ ० ॥ नहि । नु । ते । महिमनः । समस्य । न । मघऽवन् । मघवत्ऽत्वस्य । विद्म । न । राधसःऽराधसः । नूतनस्य । इंद्र । नकिः । ददृशे । इंद्रियं । ते । एतत् । त्यत् । ते । इंद्रियं । अचेति । येन । अवधीः । वरऽशिखस्य । शेषः । वज्रस्य । यत् । ते । निऽहतस्य । शुष्मात् । स्वनात् । चित् । इंद्र । परमः । ददार ॥ वधीत् । इंद्रः । वरऽशिखस्य । शेषः । अभिऽआवर्तिने । चायमानाय । शिक्षन् । वृचीवतः । यत् । हरिऽयूपीयायां । हन् । पूर्वे । अर्धे । भियसा । अपरः । दर्त् ॥ २३ ॥ त्रिंशत्ऽशतं । वर्मिणः । इंद्र । साकं । यव्याऽवत्यां । पुरुऽहूत । श्रवस्या । वृचीवतः । शरवे ।

पत्यमानाः । पात्रा । भिंदानाः । नि॒ऽअर्थानि । आयन् । यस्य । गावौ । अरुषा । सुयवस्यूइतिसुऽयवस्यू । अंतः । ऊँइति । सु । चरंतः । रेरिहाणा । सः । सृंजयाय । तुर्वशं । परा । अदात् । वृचीवंतः । दैवऽवाताय । शिक्षन् । द्वयान् । अग्ने । रथिनः । विंशतिं । गाः । वधूऽमंतः । मघऽवा । मह्यं । संऽराट् । अभिऽआवर्ती । चायमानः । ददाति । दुःऽनशा । इयं । दक्षिणा । पार्थवानां ॥ २४ ॥ आ । गावः । अग्मन् । उत । भद्रं । अक्रन् । सीदंतु । गोऽस्थे । रणयंतु । अस्मेइति । प्रजाऽवंतीः । पुरुऽरूपाः । इह । स्युः । इंद्राय । पूर्वीः । उषसः । दुहानाः । इंद्रः । यज्वने । पृणते । च । शिक्षति । उप । इत् । ददाति । न । स्वं । मुषायति । भूयःऽभूयः । रयिं । इत् । अस्य । वर्धयन् । अभिन्ने । खिल्ये । नि । दधाति । देवऽयुं । न । ताः । नशंति । न । दभाति । तस्करः । न । आसां । आमित्रः । व्यथिः । आ । दधर्षति । देवान् । च । याभिः । यजते । ददाति । च । ज्योक् । इत् । ताभिः । सचते । गोऽपतिः । सह । न । ताः । अर्वा । रेणुऽकंकाटः । अश्नुते । न । संस्कृतऽत्रं । उप । यंति । ताः । अभि । उरुऽगायं । अभयं । तस्य । ताः । अनु । गावः । मर्तस्य । वि । चरंति । यज्वनः । गावः । भगः । गावः । इंद्रः । मे । अच्छान् । गावः । सोमस्य । प्रथमस्य । भक्षः । इमाः । याः । गावः ॥ ० ॥ इच्छामि । इत् । हृदा । मनसा । चित् । इंद्रं । यूयं । गावः । मेदयथ । कृशं । चित् । अश्रीरं । चित् । कृणुथ । सुऽप्रतीकं । भद्रं । गृहं । कृणुथ । भद्रऽवाचः । बृहत् । वः । वयः । उच्यते । सभासु । प्रजाऽवतीः । सुऽयवसं । रिशंतीः । शुद्धाः । अपः । सुऽप्रपाने । पिबंतीः । मा । वः ॥ ० ॥ परि । वः । हेतिः । रुद्रस्य । वृज्याः । उप । इदं । उपऽपर्चनं । आसु । गोषु । उप । पृच्यतां । उप । ऋषभस्य । रेतसि । उप । इंद्र । तव । वीर्ये ॥ २५ ॥

इति चतुर्थाष्टके षष्ठोऽध्यायः ॥ ६ ॥

## ॥ अथ सप्तमोध्यायः ॥

हरिः ॐ ॥ इंद्रं । वः । नरः । सख्याय । सेपुः । महः । यंतः । सुऽमतये । चकानाः । महः । हि । दाता । वज्रऽहस्तः । अस्ति । महां । ऊँइति । रण्वं । अवसे । यजध्वं । आ । यस्मिन् । हस्ते । नर्याः । मिमिक्षुः । आ । रथे । हिरण्यये । रथेऽस्थाः । आ । रश्मयः । गभस्त्योः । स्थूरयोः । आ । अध्वन् । अश्वासः । वृषणः । युजानाः । श्रिये । ते । पादा । दुवः । आ । मिमिक्षुः । धृष्णुः । वज्री । शवसा । दक्षिणऽवान् । वसानः । अत्कं । सुरभिं । दृशे । कं । स्वः । न । नृतोइति । इषिरः । बभूथ । सः । सोमः । आमिश्लऽतमः । सुतः । भूत् । यस्मिन् । पक्तिः । पच्यते । संति । धानाः । इंद्रं । नरः । स्तुवंतः । ब्रह्मऽकाराः । उक्था । शंसंतः । देववातऽतमाः । न । ते । अंतः । शवसः । धायि । अस्य । वि । तु । बाबधे । रोदसीइति । महिऽत्वा । आ । ता । सूरिः । पृणति । तूतुंजानः । यूथाऽइव । अप्ऽसु । संऽईजमानः । ऊती । एव । इत् । इंद्रः । सुऽहवः । ऋष्वः । अस्तु । ऊती । अनूती । हिरिऽशिप्रः । सत्वा । एव । हि । जातः । असमातिऽओजाः । पुरु । च । वृत्रा । हनति । नि । दस्यून् ॥ १ ॥ भूयः । इत् । ववृधे । वीर्याय । एकः । अजुर्यः । दयते । वसूनि । प्र । रिरिचे । दिवः । इंद्रः । पृथिव्याः । अर्धं । इत् । अस्य । प्रति । रोदसीइति । उभेइति । अध । मन्ये । बृहत् । असुर्यं । अस्य । यानि । दाधार । नकिः । आ । मिनाति । दिवेऽदिवे । सूर्यः । दर्शतः । भूत् । वि । सद्मानि । उर्विया । सुऽक्रतुः । धात् । अद्य । चित् । नु । चित् । तत् । अपः । नदीनां । यत् । आभ्यः । अरदः ।

गातुं । इंद्र । नि । पर्वताः । अद्मऽसदः । न । सेदुः । त्वया । दृळ्हानि । सुक्रतोइतिसुऽक्रतो । रजांसि । सत्यं । इत् । तत् । न । त्वाऽवान् । अन्यः । अस्ति । इंद्र । देवः । न । मर्त्यः । ज्यायान् ॥ ० ॥ अव । असृजः । अपः । अच्छ । समुद्रं । त्वं । अपः । वि । दुरः । विषूचीः । इंद्र । दृळ्हं । अरुजः । पर्वतस्य । राजा । अभवः । जगतः । चर्षणीनां । साकं । सूर्यं । जनयन् । द्यां । उषसं ॥ २ ॥ अभूः । एकः । रयिऽपते । रयीणां । आ । हस्तयोः । अधिथाः । इंद्र । कृष्टीः । वि । तोके । अप्ऽसु । तनये । च । सूरे । अवोचंत । चर्षणयः । विऽवाचः । त्वत् । भिया । इंद्र । पार्थिवानि । विश्वा । अच्युता । चित् । च्यवयंते । रजांसि । द्यावाक्षामा । पर्वतासः । वनानि । विश्वं । दृळ्हं । भयते । अज्मन् । आ । ते । त्वं । कुत्सेन । अभि । शुष्णं । इंद्र । अशुषं । युध्य । कुयवं । गोऽइष्टौ । दश । प्रऽपित्वे । अध । सूर्यस्य । मुषायः । चक्रं । अविवेः । रपांसि । त्वं । शतानि । अव । शंबरस्य । पुरः । जघंथ । अप्रतीनि । दस्योः । अशिक्षः । यत्र । शच्या । शचीऽवः । दिवःऽदासाय । सुन्वते । सुतऽक्रे । भरत्ऽवाजाय । गृणते । वसूनि । सः । सत्यऽसत्वन् । महते । रणाय । रथं । आ । तिष्ठ । तुविऽनृम्ण । भीमं । याहि । प्रऽपथिन् । अवसा । उप । मद्रिक् । प्र । च । श्रुत । श्रवय । चर्षणिऽभ्यः ॥ ३ ॥ अपूर्व्या । पुरुऽतमानि । अस्मै । महे । वीराय । तवसे । तुराय । विऽरप्शिने । वज्रिणे । शंऽतमानि । वचांसि । आसा । स्थविराय । तक्षं । सः । मातरा । सूर्येण । कवीनां । अवासयत् । रुजत् । अद्रिं । गृणानः । सुऽआधीभिः । ऋक्वऽभिः । वावशानः । उत् । उस्रियाणां । असृजत् । निऽदानं । सः । वह्निऽभिः । ऋक्वऽभिः । गोषु । शश्वत् । मितज्ञुऽभिः । पुरुऽकृत्वा । जिगाय । पुरः । पुरःऽहा । सखिऽभिः । सखिऽयन् । दृळ्हाः । रुरोज । कविऽभिः । कविः । सन् । सः । नीव्याभिः । जरितारं । अच्छ । महः । वाजेभिः । महत्ऽभिः । च । शुष्मैः । पुरुऽवीराभिः । वृषभ । क्षितीनां ।

आ । गिर्वणः । सुवितायं । प्र । याहि । सः । सर्गेण । शवसा ।
तक्तः । अत्यैः । अपः । इंद्रः । दक्षिणतः । तुराषाट् । इत्था । सृजानाः ।
अनपऽवृत् । अर्थं । दिवेऽदिवे । विविषुः । अप्रऽमृष्यं ॥ ४ ॥ यः ।
ओजिष्ठः । इंद्र । तं । सु । नः । दाः । मदः । वृषन् । सुऽअभिष्टिः ।
दास्वान् । सौवश्व्यं । यः । वनवत् । सुऽअश्वः । वृत्रा । समत्ऽसु ।
ससहत् । अमित्रान् । त्वां । हि । इंद्र । अवसे । विऽवाचः । हवंते ।
चर्षणयः । शूरऽसातौ । त्वं । विप्रेभिः । वि । पणीन् । अशायः ।
त्वाऽऊतः । इत् । सनिता । वाजं । अर्वा । त्वं । तान् । इंद्र ।
उभयान् । अमित्रान् । दासा । वृत्राणि । आर्या । च । शूर । वधीः ।
वनाऽइव । सुऽधितेभिः । अत्कैः । आ । पृत्ऽसु । दर्षि । नृणां ।
नृऽतम । सः । त्वं । नः । इंद्र । अकवाभिः । ऊती । सखा । विश्वऽ-
आयुः । अविता । वृधे । भूः । स्वःऽसाता । यत् । ह्वयामसि । त्वा ।
युध्यंतः । नेमऽधिता । पृत्ऽसु । शूर । नूनं । नः । इंद्र । अपरायं ।
च । स्याः । भवं । मृळीकः । उत । नः । अभिष्टौ । इत्था । गृणंतः ।
महिनस्य । शर्मन् । दिवि । स्याम । पार्ये । गोसऽतमाः ॥ ५ ॥ सं ।
च । त्वे इति । जग्मुः । गिरः । इंद्र । पूर्वीः । वि । च । त्वत् । यंति ।
विऽभ्वः । मनीषाः । पुरा । नूनं । च । स्तुतयः । ऋषीणां । पस्पृध्रे ।
इंद्रे । अधि । उक्थऽअर्का । पुरुऽहूतः । यः । पुरुऽगूर्तः । ऋभ्वा । एकः ।
पुरुऽप्रशस्तः । अस्ति । यज्ञैः । रथः । न । महे । शवसे । युजानः ।
अस्माभिः । इंद्रः । अनुऽमाद्यः । भूत् । न । यं । हिंसंति । धीतयः ।
न । वाणीः । इंद्रं । नक्षंति । इत् । अभि । वर्धयंतीः । यदि । स्तोतारः ।
शतं । यत् । सहस्रं । गृणंति । गिर्वणसं । शं । तत् । अस्मै । अस्मै ।
एतत् । दिवि । अर्चाऽइव । मासा । मिमिक्षः । इंद्रे । नि । अयामि ।
सोमः । जने । न । धन्वन् । अभि । सं । यत् । आपः । सत्रा ।
ववृधुः । हवनानि । यज्ञैः । अस्मै । एतत् । महि । आंगूषं । अस्मै ।
इंद्राय । स्तोत्रं । मतिऽभिः । अवाचि । असत् । यथा । महति ।

वृत्रऽतूर्ये । इंद्रः । विश्वऽआयुः । अविता । वृधः । च ॥ ६ ॥ कदा । भुवन् । रथऽक्षयाणि । ब्रह्म । कदा । स्तोत्रे । सहस्रऽपोष्यं । दाः । कदा । स्तोमं । वासयः । अस्य । राया । कदा । धियः । करसि । वाजऽरत्नाः । कर्हि । स्वित् । तत् । इंद्र । यत् । नृऽभिः । नॄन् । वीरैः । वीरान् । नीळयासे । जय । आजीन् । त्रिऽधातु । गाः । अधि । जयासि । गोषु । इंद्र । द्युम्नं । स्वःऽवत् । धेहि । अस्मे-इति ॥ ० ॥ जरित्रे । विश्वऽप्सु । ब्रह्म । कृणवः । शविष्ठ । कदा । धियः । न । निऽयुतः । युवासे । कदा । गोऽमघा । हवनानि । गच्छाः । सः । गोऽमघाः । जरित्रे । अश्वऽचंद्राः । वाजऽश्रवसः । अधि । धेहि । पृक्षः । पीपिहि । इषः । सुऽदुघां । इंद्र । धेनुं । भरत्ऽवाजेषु । सुऽरुचः । रुरुच्याः । तं । आ । नूनं । वृजनं । अन्यथा । चित् । शूरः । यत् । शक्र । वि । दुरः । गृणीषे । मा । निः । अरं । शुक्रऽदुघस्य । धेनोः । आंगिरसान् । ब्रह्मणा । विप्र । जिन्व ॥ ७ ॥ सत्रा । मदासः । तव । विश्वऽजन्याः । सत्रा । रायः । अध । ये । पार्थिवासः । सत्रा । वाजानां । अभवः । विऽभक्ता । यत् । देवेषु । धारयथाः । असुर्यं । अनु । प्र । येजे । जनः । ओजः । अस्य । सत्रा । दधिरे । अनु । वीर्याय । स्यूमऽगृभे । दुधये । अर्वते । च । क्रतुं । वृंजंति । अपि । वृत्रऽहत्ये । तं । सध्रीचीः । ऊतयः । वृष्ण्यानि । पौंस्यानि । निऽयुतः । सश्चुः । इंद्रं । समुद्रं । न । सिंधवः । उक्थऽशुष्माः । उरुऽव्यचसं । गिरः । आ । विशंति । सः । रायः । खां । उप । सृज । गृणानः । पुरुऽचंद्रस्य । त्वं । इंद्र । वस्वः । पतिः । बभूथ । असमः । जनानां । एकः । विश्वस्य । भुवनस्य । राजा । सः । तु । श्रुधि । श्रुत्या । यः । दुवःऽयुः । द्यौः । न । भूम । अभि । रायः । अर्यः । असः । यथा । नः । शवसा । चकानः । युगेऽयुगे । वयसा । चेकितानः ॥ ८ ॥ अर्वाक् । रथं । विश्वऽवारं । ते । उग्र । इंद्र । युक्तासः । हरयः । वहंतु । कीरिः । चित् । हि ।

त्वा । हवंते । स्वःऽवान् । ऋधीमहि । सधऽमादः । ते । अद्य । प्रोइति । द्रोणे । हरयः । कर्म । अग्मन् । पुनानासः । ऋज्यंतः । अभवन् । इंद्रः । नः । अस्य । पूर्व्यः । पपीयात् । द्युक्षः । मदस्य । सोम्यस्य । राजा । आऽसस्राणासः । शवसानं । अच्छ । इंद्रं । सुऽचक्रे । रथ्यासः । अश्वाः । अभि । श्रवः । ऋज्यंतः । वहेयुः । नु । चित् । नु । वायोः । अमृतं । वि । दस्येत् । वरिष्ठः । अस्य । दक्षिणां । इयर्ति । इंद्रः । मघोनां । तुविकूर्मिऽतमः । यया । वज्रिऽवः । परिऽयासि । अंहः । मघा । च । धृष्णोइति । दयसे । वि । सूरीन् । इंद्रः । वाजस्य । स्थविरस्य । दाता । इंद्रः । गीःऽभिः । वर्धतां । वृद्धऽमहाः । इंद्रः । वृत्रं । हनिष्ठः । अस्तु । सत्वा । आ । ता । सूरिः । पृणति । तूतुजानः ॥ ९ ॥ अपात् । इतः । उत् । ऊँइति । नः । चित्रऽतमः । महीं । भर्षत् । द्युऽमतीं । इंद्रऽहूतिं । पन्यसीं । धीतिं । दैव्यस्य । यामन् । जनस्य । रातिं । वनते । सुऽदानुः । दूरात् । चित् । आ । वसतः । अस्य । कर्णा । घोषात् । इंद्रस्य । तन्यति । ब्रुवाणः । आ । इयं । एनं । देवऽहूतिः । ववृत्यात् । मद्र्यक् । इंद्रं । इयं । ऋच्यमाना । तं । वः । धिया । परमया । पुराऽजां । अजरं । इंद्रं । अभि । अनूषि । अर्कैः । ब्रह्म । च । गिरः । दधिरे । सं । अस्मिन् । महान् । च । स्तोमः । अधि । वर्धत् । इंद्रे । वर्धात् । यं । यज्ञः । उत । सोमः । इंद्रं । वर्धात् । ब्रह्म । गिरः । उक्था । च । मन्म । वर्ध । अह । एनं । उषसः । यामन् । अक्तोः । वर्धान् । मासाः । शरदः । द्यावः । इंद्रं । एव । जज्ञानं । सहसे । असामि । ववृधानं । राधसे । च । श्रुताय । महां । उग्र । अवसे । विप्र । नूनं । आ । विवासेम । वृत्रऽतूर्येषु ॥ १० ॥ मंद्रस्य । कवेः । दिव्यस्य । वह्नेः । विप्रऽमन्मनः । वचनस्य । मध्वः । अपाः । नः । तस्य । सचनस्य । देव । इषः । युवस्व । गृणते । गोऽअग्राः । अयं । उशानः । परि । अद्रिं । उस्राः । ऋतधीतिऽभिः । ऋतऽयुक् । युजानः । रुजत् ।

अरुणं । वि । वलस्य । सानुं । पणीन् । वचःऽभिः । अभि । योधत् ।
इंद्रः । अयं । द्योतयत् । अद्युतः । वि । अक्तून् । दोषा । वस्तोः ।
शरदः । इंदुः । इंद्र । इमं । केतुं । अदधुः । नु । चित् । अह्नां ।
शुचिऽजन्मनः । उषसः । चकार । अयं । रोचयत् । अरुचः । रुचानः ।
अयं । वासयत् । वि । ऋतेन । पूर्वीः । अयं । ईयते । ऋतयुक्ऽभिः ।
अश्वैः । स्वःऽविदा । नाभिना । चर्षणिऽप्राः । नु । गृणानः । गृणते ।
प्रत्न । राजन् । इषः । पिन्व । वसुऽदेयाय । पूर्वीः । अपः । ओषधीः ।
अविषा । वनानि । गाः । अर्वतः । नॄन् । ऋचसे । रिरीहि ॥ ११ ॥
इंद्र । पिब । तुभ्यं । सुतः । मदाय । अव । स्य । हरीइति । वि ।
मुच । सखाया । उत । प्र । गाय । गणे । आ । निऽसद्य । अथ ।
यज्ञाय । गृणते । वयः । धाः । अस्य । पिब । यस्य । जज्ञानः । इंद्र ।
मदाय । क्रत्वे । अपिबः । विऽरप्शिन् । तं । ऊँइति । ते । गावः ।
नरः । आपः । अद्रिः । इंदुं । सं । अह्यन् । पीतये । सं । अस्मै ।
संऽइद्धे । अग्नौ । सुते । इंद्र । सोमे । आ । त्वा । वहंतु । हरयः ।
वहिष्ठाः । त्वाऽयता । मनसा । जोहवीमि । इंद्र । आ । याहि ।
सुवितायं । महे । नः । आ । याहि । शश्वत् । उशता । ययाथ ।
इंद्र । महा । मनसा । सोमऽपेयं । उप । ब्रह्माणि । शृणवः । इमा ।
नः । अथ । ते । यज्ञः । तन्वे । वयः । धात् । यत् । इंद्र । दिवि ।
पार्ये । यत् । ऋधक् । यत् । वा । स्वे । सदने । यत्र । वा । असि ।
अतः । नः । यज्ञं । अवसे । नियुत्वान् । सऽजोषाः । पाहि । गिर्वणः ।
मरुत्ऽभिः ॥ १२ ॥ अहेळमानः । उप । याहि । यज्ञं । तुभ्यं ।
पवंते । इंदवः । सुतासः । गावः । न । वज्रिन् । स्वं । ओकः । अच्छ ।
इंद्र । आ । गहि । प्रथमः । यज्ञियानां । या । ते । काकुत् । सुऽ-
कृता । या । वरिष्ठा । यया । शश्वत् । पिबसि । मध्वः । ऊर्मिं ।
तया । पाहि । प्र । ते । अध्वर्युः । अस्थात् । सं । ते । वज्रः ।
वर्ततां । इंद्र । गव्युः । एषः । द्रप्सः । वृषभः । विश्वऽरूपः । इंद्राय ।

वृष्णे । सं । अकारि । सोमः । एतं । पिब । हरिऽवः । स्थातः । उग्र । यस्य । ईशिषे । प्रऽदिवि । यः । ते । अन्नं । सुतः । सोमः । असुतात् । इंद्र । वस्यान् । अयं । श्रेयान् । चिकितुषे । रणाय ॥ एतं । तितिर्वः । उप । याहि । यज्ञं । तेन । विश्वाः । तविषीः । आ । पृणस्व । ह्वयामसि । त्वा । आ । इंद्र । याहि । अर्वाङ् । अरं । ते । सोमः । तन्वे । भवाति । शतक्रतोइतिशतऽक्रतो । मादयस्व । सुतेषु । प्र । अस्मान् । अव । पृतनासु । प्र । विक्षु ॥ १३ ॥ प्रति । अस्मै । पिपीषते । विश्वानि । विदुषे । भर । अरंऽगमाय । जग्मये । अपश्चात्ऽदघ्वने । नरे । आ । ईं । एनं । प्रतिऽएतन । सोमेभिः । सोमऽपातमं । अमत्रेभिः । ऋजीषिणं । इंद्रं । सुतेभिः । इंदुऽभिः । यदि । सुतेभिः । इंदुऽभिः । सोमेभिः । प्रतिऽभूषथ । वेद । विश्वस्य । मेधिरः । धृषत् । तंऽतं । इत् । आ । ईषते । अस्मैऽअस्मै । इत् । अंधसः । अध्वर्योइति । प्र । भर । सुतं । कुवित् । समस्य । जेन्यस्य । शर्धतः । अभिऽशस्तेः । अवऽस्परत् ॥ १४ ॥ यस्य । त्यत् । शंबरं । मदे । दिवःऽदासाय । रंधयः । अयं । सः । सोमः । इंद्र । ते । सुतः । पिब । यस्य । तीव्रऽसुतं । मदं । मध्यं । अंतं । च । रक्षसे ॥ ० ॥ यस्य । गाः । अंतः । अश्मनः । मदे । दृळहाः । अवऽअसृजः ॥ ० ॥ यस्य । मंदानः । अंधसः । माघोनं । दधिषे । शवः ॥ ० ॥ १५ ॥ यः । रयिऽवः । रयिंऽतमः । यः । द्युम्नैः । द्युम्नवत्ऽतमः । सोमः । सुतः । सः । इंद्र । ते । अस्ति । स्वधाऽपते । मदः । यः । शग्मः । तुविऽशग्म । ते । रायः । दामा । मतीनां ॥ ० ॥ येन । वृद्धः । न । शवसा । तुरः । न । स्वाभिः । ऊतिऽभिः ॥ ० ॥ त्यं । ऊंइति । वः । अप्रऽहनं । गृणीषे । शवसः । पतिं । इंद्रं । विश्वऽसहं । नरं । मंहिष्ठं । विश्वऽचर्षणिं । यं । वर्धयंति । इत् । गिरः । पतिं । तुरस्य । राधसः । तं । इत् । नु । अस्य । रोदसीइति । देवीइति । शुष्मं । सपर्यतः ॥ १६ ॥ तत् । वः । उक्थस्य । बर्हणा । इंद्राय । उपऽस्तृणीषणि । विपः । न । यस्य ।

ऊतयः । वि । यत् । रोहति । सऽक्षितः । अविंदत् । दक्षं । मित्रः । नवीयान् । पपानः । देवेभ्यः । वस्यः । अचैत् । ससऽवान् । स्तौलाभिः । धौतरीभिः । उरुष्या । पायुः । अभवत् । सखिऽभ्यः । ऋतस्य । पथि । वेधाः । अपायि । श्रिये । मनांसि । देवासः । अक्रन् । दधानः । नाम । महः । वचःऽभिः । वपुः । दृशये । वेन्यः । वि । आवरित्यावः । द्युमत्ऽतमं । दक्षं । धेहि । असेइति । सेध । जनानां । पूर्वीः । अरातीः । वर्षीयः । वयः । कृणुहि । शचीभिः । धनस्य । सातौ । अस्मान् । अविड्ढि । इंद्र । तुभ्यं । इत् । मघऽवन् । अभूम । वयं । दात्रे । हरिऽवः । मा । वि । वेनः ॥ नकिः । आपिः ददृशे । मर्त्यऽत्रा । किं । अंग । रध्रऽचोदनं । त्वा । आहुः ॥ १७ ॥ मा । जस्वने । वृषभ । नः । ररीथाः । मा । ते । रेवतः । सख्ये । रिषाम । पूर्वीः । ते । इंद्र । निःऽसिधः । जनेषु । जहि । असुस्वीन् । प्र । वृह । अपृणतः । उत् । अभ्राणिऽइव । स्तनयन् । इयर्ति । इंद्रः । राधांसि । अश्व्यानि । गव्या । त्वं । असि । प्रऽदिवः । कारुऽधायाः । मा । त्वा । अदामानः । आ । दभन् । मघोनः । अध्वर्योइति । वीर । प्र । महे । सुतानां । इंद्राय । भर । सः । हि । अस्य । राजा । यः । पूर्व्याभिः । उत । नूतनाभिः । गीःऽभिः । ववृधे । गृणतां । ऋषीणां । अस्य । मदे । पुरु । वर्पांसि । विद्वान् । इंद्रः । वृत्राणि । अप्रति । जघान । तं । ऊँइति । प्र । होषि । मधुऽमंतं । अस्मै । सोमं । वीराय । शिप्रिणे । पिबध्यै ॥ ० ॥ हंता ॥ ० ॥ गंता । यज्ञं । पराऽवतः । चित् । अच्छ । वसुः । धीनां । अविता । कारुऽधायाः ॥ १८ ॥ इदं । त्यत् । पात्रं । इंद्रऽपानं । इंद्रस्य । प्रियं । अमृतं । अपायि । मत्सत् । यथा । सौमनसाय । देवं । वि । अस्मत् । द्वेषः । युयवत् । वि । अंहः । एना । मंदानः । जहि । शूर । शत्रून् । जामिं । अजामिं । मघऽवन् । अमित्रान् । अभिऽसेनान् । अभि । आऽदेदिशानान् । पराचः । इंद्र । प्र । मृण । जहि । च । आसु । स्म । नः । मघऽवन् ।

इंद्र । पृत्ऽसु । अस्मभ्यं । महि । वरिवः । सुऽगं । कुरितिकः । अपां । तोकस्य । तनयस्य । जेषे । इंद्र । सूरीन् । कृणुहि । स्म । नः । अर्ध । आ । त्वा । हरयः । वृषणः । युजानाः । वृषऽरथासः । वृषऽरश्मयः । अत्याः । अस्मत्राञ्चः । वृषणः । वज्रऽवाहः । वृष्णे । मदाय । सुऽयुजः । वहंतु । आ । ते । वृषन् । वृषणः । द्रोणं । अस्थुः । घृतऽप्रुषः । न । ऊर्मयः । मदंतः । इंद्र । प्र । तुभ्यं । वृषऽभिः । सुतानां । वृष्णे । भरंति । वृषभाय । सोमं ॥ १९ ॥ वृषा । असि । दिवः । वृषभः । पृथिव्याः । वृषा । सिंधूनां । वृषभः । स्तियानां । वृष्णे । ते । इंदुः । वृषभ । पीपाय । स्वादुः । रसः । मधुऽपेयः । वराय । अयं । देवः । सहसा । जायमानः । इंद्रेण । युजा । पणिं । अस्तभायत् । अयं । स्वस्य । पितुः । आयुधानि । इंदुः । अमुष्णात् । अशिवस्य । मायाः । अयं । अकृणोत् । उषसः । सुऽपत्नीः । अयं । सूर्ये । अदधात् । ज्योतिः । अंतः । इति । अयं । त्रिऽधातु । दिवि । रोचनेषु । त्रितेषु । विंदत् । अमृतं । निऽगूळ्हं । अयं । द्यावापृथिवी इति । वि । स्कभायत् । अयं । रथं । अयुनक् । सप्तऽरश्मिं । अयं । गोषु । शच्या । पक्वं । अंतः । इति । सोमः । दाधार । दशऽयंत्रं । उत्सं ॥ २० ॥ यः । आ । अनयत् । पराऽवतः । सुऽनीती । तुर्वशं । यदुं । इंद्रः । सः । नः । युवा । सखा । अविप्रे । चित् । वयः । दधत् । अनाशुना । चित् । अर्वता । इंद्रः । जेता । हितं । धनं । महीः । अस्य । प्रऽनीतयः । पूर्वीः । उत । प्रऽशस्तयः । न । अस्य । क्षीयंते । ऊतयः । सखायः । ब्रह्मऽवाहसे । अर्चत । प्र । च । गायत । सः । हि । नः । प्रऽमतिः । मही । त्वं । एकस्य । वृत्रऽहन् । अविता । द्वयोः । असि । उत । ईदृशे । यथा । वयं ॥ २१ ॥ नयसि । इत् । ऊँ इति । अति । द्विषः । कृणोषि । उक्थऽशंसिनः । नृऽभिः । सुऽवीरः । उच्यसे । ब्रह्माणं । ब्रह्मऽवाहसं । गीःऽभिः । सखायं । ऋग्मियं । गां । न । दोहसे । हुवे । यस्य । विश्वानि । हस्तयोः । ऊचुः । वसूनि । नि ।

द्विता । वीरस्य । पृतनाऽसहः । वि । दृळहानि । चित् । अद्रिऽवः । जनानां । शचीऽपते । वृह । मायाः । अनानत । तं । ऊँइति । त्वा । सत्य । सोमऽपाः । इंद्रं । वाजानां । पते । अहूमहि । श्रवस्यवः ॥ २२ ॥ ॥ ० ॥ यः । पुरा । आसिथ । यः । वा । नूनं । हिते । धने । हव्यः । सः । श्रुधि । हवं । धीभिः । अर्वत्ऽभिः । अर्वतः । वाजान् । इंद्र । श्रवाय्यान् । त्वया । जेष्म । हितं । धनं । अभूः । ऊँइति । वीर । गिर्वणः । महान् । इंद्र । धने । हिते । भरे । वितंतसाय्यः ॥ ० ॥ अमित्रऽहन् । मक्षुजवःऽतमा । असति । तया । नः । हिनुहि । रथं । सः । रथेन । रथिऽतमः । अस्माकेन । अभिऽयुग्वना । जेषि । जिष्णोइति । हितं । धनं ॥ २३ ॥ ० ॥ कृष्टीनां । विऽचर्षणिः । पतिः । जज्ञे । वृषऽक्रतुः । यः । गृणतां । इत् । आसिथ । आपिः । ऊती । शिवः । सखा । सः । त्वं । नः । इंद्र । मृळय । धिष्व । वज्रं । गभस्त्योः । रक्षःऽहत्याय । वज्रिऽवः । ससहीष्ठाः । अभि । स्पृधः । प्रत्नं । रयीणां । युजं । सखायं । कीरिऽचोदनं । ब्रह्मवाहःऽतमं । हुवे । सः । हि । विश्वानि । पार्थिवा । एकः । वसूनि । पत्यते । गिर्वणःऽतमः । अध्रिऽगुः ॥ २४ ॥ सः । नः । नियुत्ऽभिः । आ । पृण । कामं । वाजेभिः । अश्विऽभिः । गोमत्ऽभिः । गोऽपते । धृषत् । तत् । वः । गाय । सुते । सचा । पुरुऽहूताय । सत्वने । शं । यत् । गवे । न । शाकिने । न । घ । वसुः । नि । यमते । दानं । वाजस्य । गोऽमतः । यत् । सीं । उप । श्रवत् । गिरः । कुवित्ऽसस्य । प्र । हि । व्रजं । गोऽमंतं । दस्युऽहा । गमत् । शचीभिः । अप । नः । वरत् । इमाः । ऊँइति । त्वा । शतक्रतोइतिशतऽक्रतो । अभि । प्र । नोनुवुः । गिरः । इंद्र । वत्सं । न । मातरः ॥ २५ ॥ दुःऽनशं । सख्यं । तव । गौः । असि । वीर । गव्यते । अश्वः । अश्वऽयते । भव ॥ ० ॥ सुतेऽसुते । नक्षते । गिर्वणः । गिरः । वत्सं । गावः । न । धेनवः । पुरुऽतमं । पुरूणां । स्तोतॄणां । विऽवाचि । वाजेभिः । वाजऽयतां । अस्माकं । इंद्र । भूतु । ते ।

स्तोमः । वाहिष्ठः । अंतमः । अस्मान् । राये । महे । हिनु । अधि ।
बुध्नः । पपीनां । वर्षिष्ठे । मूर्धन् । अस्थात् । उरुः । कक्षः । न । गांग्यः ।
यस्य । वायोःऽइव । द्रवत् । भद्रा । रातिः । सहस्रिणी । सद्यः ।
दानाय । मंहते । तत् । सु । नः । विश्वे । अर्यः । आ । सदा ।
गृणंति । कारवः । बृबुं । सहस्रऽदातमं । सूरिं । सहस्रऽसातमं ॥ २६ ॥
त्वां । इत् । हि । हवामहे । साता । वाजस्य । कारवः । त्वां । वृत्रेषु ।
इंद्र । सत्ऽपतिं । नरः । त्वां । काष्ठासु । अर्वतः । सः । त्वं । नः ।
चित्र । वज्रऽहस्त । धृष्णुऽया । महः । स्तवानः । अद्रिऽवः । गां ।
अश्वं । रथ्यं । इंद्र । सं । किर । सत्रा । वाजं । न । जिग्युषे । यः ।
सत्राऽहा । विऽचर्षणिः । इंद्रं । तं । हूमहे । वयं । सहस्रऽमुष्क ।
तुविऽनृम्ण । सत्ऽपते । भव । समत्ऽसु । नः । वृधे । वाधसे ।
जनान् । वृषभाःऽइव । मन्युना । घृषौ । मीळ्हे । ऋचीषम । अस्माकं ।
बोधि । अविता । महाऽधने । तनूषु । अप्ऽसु । सूर्ये । इंद्र । ज्येष्ठं ।
नः । आ । भर । ओजिष्ठं । पपुरि । श्रवः । येन । इमेइति । चित्र ।
वज्रऽहस्त । रोदसीइति । आ । उभेइति । सुऽशिप्र । प्राः ॥ २७ ॥
त्वां । उग्रं । अवसे । चर्षणिऽसहं । राजन् । देवेषु । हूमहे । विश्वा ।
सु । नः । विथुरा । पिब्दना । वसोइति । अमित्रान् । सुऽसहान् ।
कृधि । यत् । इंद्र । नाहुषीषु । आ । ओजः । नृम्णं । च । कृष्टिषु ।
यत् । वा । पंच । क्षितीनां । द्युम्नं । आ । भर । सत्रा । विश्वानि ।
पौंस्या । यत् । वा । तृक्षौ । मघऽवन् । द्रुह्यौ । आ । जने । यत् ।
पूरौ । कत् । च । वृष्ण्यं । अस्मभ्यं । तत् । रिरीहि । सं । नृऽसह्ये ।
अमित्रान् । पृत्ऽसु । तुर्वणे । इंद्र । त्रिऽधातु । शरणं । त्रिऽवरूथं ।
स्वस्तिऽमत् । छर्दिः । यच्छ । मघवत्ऽभ्यः । च । मह्यं । च । यवय ।
दिद्युं । एभ्यः । ये । गव्यता । मनसा । शत्रुं । आऽदभुः । अभिऽ-
प्रघ्नंति । धृष्णुऽया । अध । स्म । नः । मघऽवन् । इंद्र । गिर्वणः ।
तनूऽपाः । अंतमः । भव ॥ २८ ॥ ० ॥ वृधे । भव । इंद्र । नायं ।

अव । युधि । यत् । अंतरिक्षे । पतयंति । पर्णिनः । दिद्यवः । तिग्मऽमूर्धानः । यत्र । शूरासः । तन्वः । विऽतन्वते । प्रिया । शर्म । पितृणां । अध । स्म । यच्छ । तन्वे । तने । च । छर्दिः । अचित्तं । यवय । द्वेषः । यत् । इंद्र । सर्गे । अर्वतः । चोदयासे । महाऽधने । असमने । अध्वनि । वृजिने । पथि । श्येनान्ऽइव । श्रवस्यतः । सिंधून्ऽइव । प्रवणे । आशुऽया । यतः । यदि । क्लोकं । अनु । स्वनि । आ । ये । वयः । न । वर्वृतति । आमिषि । गृभीता । बाह्वोः । गवि ॥ २९ ॥ स्वादुः । किल । अयं । मधुऽमान् । उत । अयं । तीव्रः । किल । अयं । रसऽवान् । उत । अयं । उतोइति । नु । अस्य । पपिऽवांसं । इंद्रं । न । कः । चन । सहते । आऽहवेषु । अयं । स्वादुः । इह । मदिष्ठः । आस । यस्य । इंद्रः । वृत्रऽहत्ये । ममाद । पुरूणि । यः । च्यौत्ना । शंबरस्य । वि । नवतिं । नव । च । देह्यः । हन् । अयं । मे । पीतः । उत् । इयर्ति । वाचं । अयं । मनीषां । उशतीं । अजीगरितिं । अयं । षट् । उर्वीः । अमिमीत । धीरः । न । याभ्यः । भुवनं । कत् । चन । आरे । अयं । सः । यः । वरिमाणं । पृथिव्याः । वर्ष्माणं । दिवः । अकृणोत् । अयं । सः । अयं । पीयूषं । तिसृषु । प्रवत्ऽसु । सोमः । दधार । उरु । अंतरिक्षं ॥ अयं । विदत् । चित्रऽदृशीकं । अर्णः । शुक्रऽसद्मनां । उषसां । अनीके । अयं । महान् । महता । स्कंभनेन । उत् । द्यां । अस्तभ्नात् । वृषभः । मरुत्वान् ॥ ३० ॥ धृषत् । पिब । कलशे । सोमं । इंद्र । वृत्रऽहा । शूर । संऽअरे । वसूनां । माध्यंदिने । सवने । आ । वृषस्व । रयिऽस्थानः । रयिं । अस्मासु । धेहि । इंद्र । प्र । नः । पुरएताऽइव । पश्य । प्र । नः । नय । प्रऽतरं । वस्यः । अच्छ । भव । सुऽपारः । अतिऽपारयः । नः । भव । सुऽनीतिः । उत । वामऽनीतिः । उरुं । नः । लोकं । अनु । नेषि । विद्वान् । स्वःऽवत् । ज्योतिः । अभयं । स्वस्ति । ऋष्वा । ते । इंद्र । स्थविरस्य । बाहूइति । उप । स्थेयाम ।

शरणा । बृहंता । वरिष्ठ । नः । इंद्र । वंधुरे । धाः । वहिष्ठयोः । शतऽवन् । अश्वयोः । आ । इषं । आ । वक्षि । इषां । वर्षिष्ठां । मा । नः । तारीत् । मघऽवन् । रायः । अर्यः । इंद्र । मृळ । मह्यं । जीवातुं । इच्छ । चोदय । धियं । अयसः । न । धारां । यत् । किं । च । अहं । त्वाऽयुः । इदं । वदामि । तत् । जुषस्व । कृधि । मा । देवऽवंतं ॥ ३१ ॥ त्रातारं । इंद्रं । अवितारं । इंद्रं । हवेऽहवे । सुऽहवं । शूरं । इंद्रं । ह्वयामि । शक्रं । पुरुऽहूतं । इंद्रं । स्वस्ति । नः । मघऽवा । धातु । इंद्रः । इंद्रः । सुऽत्रामा । स्वऽवान् । अवःऽभिः । सुऽमृळीकः । भवतु । विश्वऽवेदाः । बाधतां । द्वेषः । अभयं । कृणोतु । सुऽवीर्यस्य । पतयः । स्याम ॥ ० ॥ सः । सुऽत्रामा । स्वऽवान् । इंद्रः । अस्मेइति । आरात् । चित् । द्वेषः । सनुतः । युयोतु । अव । त्वेइति । इंद्र । प्रऽवतः । न । ऊर्मिः । गिरः । ब्रह्माणि । निऽयुतः । धवंते । उरु । न । राधः । सवना । पुरूणि । अपः । गाः । वज्रिन् । युवसे । सं । इंदून् । कः । ईं । स्तवत् । कः । पृणात् । कः । यजाते । यत् । उग्रं । इत् । मघऽवा । विश्वहा । अवेत् । पादौऽइव । प्रऽहरन् । अन्यंऽअन्यं । कृणोति । पूर्वं । अपरं । शचीभिः ॥ ३२ ॥ शृण्वे । वीरः । उग्रंऽउग्रं । दमऽयन् । अन्यंऽअन्यं । अतिऽनेनीयमानः । एधमानऽद्विट् । उभयस्य । राजा । चोष्कूयते । विशः । इंद्रः । मनुष्यान् । परा । पूर्वेषां । सख्या । वृणक्ति । विऽततुराणः । अपरेभिः । एति । अननुऽभूतीः । अवऽधून्वानः । पूर्वीः । इंद्रः । शरदः । तर्तरीति । रूपंऽरूपं । प्रतिऽरूपः । बभूव । तत् । अस्य । रूपं । प्रतिऽचक्षणाय । इंद्रः । मायाभिः । पुरुऽरूपः । ईयते । युक्ताः । हि । अस्य । हरयः । शता । दश । युजानः । हरिता । रथे । भूरि । त्वष्टा । इह । राजति । कः । विश्वाहा । द्विषतः । पक्षः । आसते । उत । आसीनेषु । सूरिषु । अगव्यूति । क्षेत्रं । आ । अगन्म । देवाः । उर्वी । सती । भूमिः । अंहुरणा । अभूत् । बृहस्पते । प्र । चिकित्स । गोऽइष्टौ । इत्था ।

सते । जरित्रे । इंद्र । पंथां ॥ ३३ ॥ दिवेऽदिवे । सऽदृशीः । अन्यं ।
अर्धं । कृष्णाः । असेधत् । अप । सद्मनः । जाः । अहन् । दासा ।
वृषभः । वस्नऽयंता । उदऽव्रजे । वर्चिनं । शंबरं । च । प्रऽस्तोकः ।
इत् । नु । राधसः । ते । इंद्र । दश । कोशयीः । दश । वाजिनः ।
अदात् । दिवःऽदासात् । अतिथिऽग्वस्य । राधः । शांबरं । वसु ।
प्रति । अग्रभीष्म । दश । अश्वान् । दश । कोशान् । दश । वस्त्रा ।
अधिऽभोजना । दशोइति । हिरण्यऽपिंडान् । दिवःऽदासात् ।
असानिषं । दश । रथान् । प्रष्टिऽमतः । शतं । गाः । अथर्वऽभ्यः ।
अश्वथः । पायवे । अदात् । महि । राधः । विश्वऽजन्यं । दधानान् ।
भरत्ऽवाजान् । सार्ञ्जयः । अभि । अयष्ट ॥ ३४ ॥ वनस्पते । वीळुऽ-
अंगः । हि । भूयाः । अस्मत्ऽसखा । प्रऽतरणः । सुऽवीरः । गोभिः ।
संऽनद्धः । असि । वीळयस्व । आऽस्थाता । ते । जयतु । जेत्वानि ।
दिवः । पृथिव्याः । परि । ओजः । उत्ऽभृतं । वनस्पतिऽभ्यः । परि ।
आऽभृतं । सहः । अपां । ओज्मानं । परि । गोभिः । आऽवृतं ।
इंद्रस्य । वज्रं । हविषा । रथं । यज । इंद्रस्य । वज्रः । मरुतां ।
अनीकं । मित्रस्य । गर्भः । वरुणस्य । नाभिः । सः । इमां । नः ।
हव्यऽदातिं । जुषाणः । देव । रथ । प्रति । हव्या । गृभाय । उप ।
श्वासय । पृथिवीं । उत । द्यां । पुरुऽत्रा । ते । मनुतां । विऽस्थितं ।
जगत् । सः । दुंदुभे । सऽजूः । इंद्रेण । देवैः । दूरात् । दवीयः ।
अप । सेध । शत्रून् । आ । क्रंदय । बलं । ओजः । नः । आ । धाः ।
निः । स्तनिहि । दुःऽइता । बाधमानः । अप । प्रोथ । दुंदुभे ।
दुच्छुनाः । इतः । इंद्रस्य । मुष्टिः । असि । वीळयस्व । आ । अमूः ।
अज । प्रतिऽआवर्तय । इमाः । केतुऽमत् । दुंदुभिः । वावदीति । सं ।
अश्वऽपर्णाः । चरंति । नः । नरः । अस्माकं । इंद्र । रथिनः ।
जयंतु ॥ ३५ ॥

इति चतुर्थाष्टके सप्तमोऽध्यायः ॥ ७ ॥

## ॥ अथ अष्टमोऽध्यायः ॥

हरिः ॐ॥ यज्ञाऽयंज्ञा । वः । अग्नये । गिराऽगिरा । च । दक्षसे । प्रऽप्र । वयं । अमृतं । जातऽवेदसं । प्रियं । मित्रं । न । शंसिषं । ऊर्जः । नपातं । सः । हिन । अयं । अस्मऽयुः । दाशेम । हव्यऽदातये । भुवत् । वाजेषु । अविता । भुवत् । वृधः । उत । त्राता । तनूनां । वृषा । हि । अग्ने । अजरः । महान् । विऽभासि । अर्चिषा । अजस्रेण । शोचिषा । शोशुचत् । शुचे । सुदीतिऽभिः । सु । दीदिहि । महः । देवान् । यजसि । यक्षि । आनुषक् । तव । क्रत्वा । उत । दंसना ॥ अर्वाचः । सीं । कृणुहि । अग्ने । अवसे । रास्व । वाजा । उत । वंस्व । यं । आपः । अद्रयः । वना । गर्भं । ऋतस्य । पिप्रति । सहसा । यः । मथितः । जायते । नृऽभिः । पृथिव्याः । अधि । सानवि ॥ १ ॥ आ । यः । पप्रौ । भानुना । रोदसीइति । उभेइति । धूमेन । धावते । दिवि । तिरः । तमः । ददृशे । ऊर्म्यासु । आ । श्यावासु । अरुषः । वृषा । आ । श्यावाः । अरुषः । वृषा । बृहत्ऽभिः । अग्ने । अर्चिऽभिः । शुक्रेण । देव । शोचिषा । भरत्ऽवाजे । संऽइधानः । यविष्ठ्य । रेवत् । नः । शुक्र । दीदिहि । द्युऽमत् । पावक । दीदिहि । विश्वासां । गृहऽपतिः । विशां । असि । त्वं । अग्ने । मानुषीणां । शतं । पूःऽभिः । यविष्ठ । पाहि । अंहसः । संऽएद्धारं । शतं । हिमाः । स्तोतृऽभ्यः । ये । च । ददति । त्वं । नः । चित्रः । ऊत्या । वसोइति । राधांसि । चोदय । अस्य । रायः । त्वं । अग्ने । रथीः । असि । विदाः । गाधं । तुचे । तु । नः । पार्षि । तोकं । तनयं । पर्तृऽभिः । त्वं । अदब्धैः । अप्रयुत्वऽभिः । अग्ने ।

हेळांसि । दैव्यां । युयोधि । नः । अदेवानि । ह्वरांसि । च ॥ २ ॥
आ । सखायः । सबःऽदुघां । धेनुं । अजध्वं । उप । नव्यसा । वचः ।
सृजध्वं । अनपऽस्फुरां । या । शर्धाय । मारुताय । स्वऽभानवे । श्रवः ।
अमृत्यु । धुक्षत । या । मृळीके । मरुतां । तुराणां । या । सुम्नैः । एवऽ-
यावरी । भरत्ऽवाजाय । अव । धुक्षत । द्विता । धेनुं । च । विश्वऽ-
दोहसं । इषं । च । विश्वऽभोजसं । तं । वः । इंद्रं । न । सुऽक्रतुं ।
वरुणंऽइव । मायिनं । अर्यमणं । न । मंद्रं । सृप्रऽभोजसं । विष्णुं । न ।
स्तुषे । आऽदिशे । त्वेषं । शर्धः । न । मारुतं । तुविऽस्वनि । अनर्वाणं ।
पूषणं । सं । यथा । शता । सं । सहस्रा । कारिषत् । चर्षणिऽभ्यः ।
आ । आविः । गूळ्हा । वसु । करत् । सुऽवेदा । नः । वसु । करत् ।
आ । मा । पूषन् । उप । द्रव । शंसिषं । नु । ते । अपिऽकर्णे ।
आघृणे । अघाः । अर्यः । अरातयः ॥ ३ ॥ मा । काकंबीरं । उत् ।
वृहः । वनस्पतिं । अशस्तीः । वि । हि । नीनशः । मा । उत । सूरः ।
अहरिति । एव । चन । ग्रीवाः । आऽदधते । वेरितिवेः । दृतेःऽइव ।
ते । अवृकं । अस्तु । सख्यं । अच्छिद्रस्य । दधन्ऽवतः । सुऽपूर्णस्य ।
दधन्ऽवतः । परः । हि । मर्त्यैः । असि । समः । देवैः । उत ।
श्रिया । अभि । ख्यः । पूषन् । पृतनासु । नः । त्वं । अव । नूनं ।
यथा । पुरा । वामी । वामस्य । धूतयः । प्रऽनीतिः । अस्तु । सूनृता ।
देवस्य । वा । मरुतः । मर्त्यस्य । वा । ईजानस्य । प्रऽयज्यवः । सद्यः ।
चित् । यस्य । चर्कृतिः । परि । द्यां । देवः । न । एति । सूर्यः ।
त्वेषं । शवः । दधिरे । नाम । यज्ञियं । मरुतः । वृत्रऽहं । शवः ।
ज्येष्ठं । वृत्रऽहं । शवः । सकृत् । ह । द्यौः । अजायत । सकृत् ।
भूमिः । अजायत । पृश्न्याः । दुग्धं । सकृत् । पयः । तत् । अन्यः ।
न । अनु । जायते ॥ ४ ॥ स्तुषे । जनं । सुऽव्रतं । नव्यसीभिः ।
गीःऽभिः । मित्रावरुणा । सुम्नऽयंता । ते । आ । गमंतु । ते । इह ।
श्रुवंतु । सुऽक्षत्रासः । वरुणः । मित्रः । अग्निः । विशःऽविशः । ईड्यं ।

अध्वरेषु । अदृप्तऽक्रतुं । अरतिं । युवत्योः । दिवः । शिशुं । सहसः ।
सूनुं । अग्निं । यज्ञस्य । केतुं । अरुषं । यजध्यै । अरुषस्य । दुहितरा ।
विरूपेइतिविऽरूपे । स्तृऽभिः । अन्या । पिपिशे । सूरः । अन्या ।
मिथःऽतुरा । विचरंतीइतिविऽचरंती । पावकेइति । मन्म । श्रुतं ।
नक्षतः । ऋच्यमानेइति । प्र । वायुं । अच्छ । बृहती । मनीषा ।
बृहत्ऽरयिं । विश्वऽवारं । रथऽप्रां । द्युतत्ऽयामा । निऽयुतः ।
पत्यमानः । कविः । कविं । इयक्षसि । प्रयज्योइतिप्रऽयज्यो । सः ।
मे । वपुः । छदयत् । अश्विनोः । यः । रथः । विरुक्मान् । मनसा ।
युजानः ॥ ० ॥ ५ ॥ पर्जन्यवाता । वृषभा । पृथिव्याः । पुरीषाणि ।
जिन्वतं । अप्यानि । सत्यऽश्रुतः । कवयः । यस्य । गीःऽभिः । जगतः ।
स्थातः । जगत् । आ । कृणुध्वं । पावीरवी । कन्या । चित्रऽआयुः ।
सरस्वती । वीरऽपत्नी । धियं । धात् । ग्नाभिः । अच्छिद्रं । शरणं ।
सऽजोषाः । दुःऽआधर्षं । गृणते । शर्म । यंसत् । पथःऽपथः ।
परिऽपतिं । वचस्या । कामेन । कृतः । अभि । आनट् । अर्कं ।
सः । नः । रासत् । शुरुधः । चंद्रऽअग्राः । धियंऽधियं । सीसधाति ।
प्र । पूषा । प्रथमऽभागं । यशसं । वयःऽधां । सुऽपाणिं । देवं ।
सुऽगभस्तिं । ऋभ्वं । होता । यक्षत् । यजतं । पस्त्यानां । अग्निः ।
त्वष्टारं । सुऽहवं । विभाऽवा । भुवनस्य । पितरं । गीःऽभिः । आभिः ।
रुद्रं । दिवा । वर्धय । रुद्रं । अक्तौ । बृहंतं । ऋष्वं । अजरं । सुऽसुम्नं ।
ऋधक् । हुवेम । कविना । इषितासः ॥ ६ ॥ आ । युवानः ।
कवयः । यज्ञियासः । मरुतः । गंत । गृणतः । वरस्यां । अचित्रं ।
चित् । हि । जिन्वथ । वृधंतः । इत्था । नक्षंतः । नरः ।
अंगिरस्वत् । प्र । वीराय । प्र । तवसे । तुराय । अज । यूथाऽइव ।
पशुऽरक्षिः । अस्तं । सः । पिस्पृशति । तन्वि । श्रुतस्य । स्तृऽभिः ।
न । नाकं । वचनस्य । विपः । यः । रजांसि । विऽममे । पार्थिवानि ।
त्रिः । चित् । विष्णुः । मनवे । बाधिताय । तस्य । ते । शर्मन् ।

उपऽद्यमाने । राया । मदेम । तन्वा । तना । च । तत् । नः ।
अहिः । बुध्न्यः । अत्ऽभिः । अर्कैः । तत् । पर्वतः । तत् । सविता ।
चनः । धात् । तत् । ओषधीभिः । अभि । रातिऽसाचः । भगः ।
पुरंऽधिः । जिन्वतु । प्र । राये । नु । नः । रयिं । रथ्यं । चर्षणिऽ-
प्रां । पुरुऽवीरं । महः । ऋतस्य । गोपां । क्षयं । दात । अजरं ।
येन । जनान् । स्पृधः । अदेवीः । अभि । च । क्रमाम । विशः ।
आऽदेवीः । अभि । अश्नवाम ॥ ७ ॥ हुवे । वः । देवीं । अदितिं । नमःऽ-
भिः । मृळीकाय । वरुणं । मित्रं । अग्निं । अभिऽक्षदां । अर्यमणं ।
सुऽशेवं । त्रातॄन् । देवान् । सवितारं । भगं । च । सुऽज्योतिषः ।
सूर्यं । दक्षऽपितॄन् । अनागाःऽत्वे । सुऽमहः । वीहि । देवान् । द्विऽ-
जन्मानः । ये । ऋतऽसापः । सत्याः । स्वःऽवंतः । यजताः । अग्निऽ-
जिह्वाः । उत । द्यावापृथिवीइति । क्षत्रं । उरु । बृहत् । रोदसीइति ।
शरणं । सुसुम्नेइतिसुऽसुम्ने । महः । करथः । वरिवः । यथा । नः ।
असेइति । क्षयाय । धिषणेइति । अनेहः । आ । नः । रुद्रस्य ।
सूनवः । नमंतां । अद्य । हूतासः । वसवः । अधृष्टाः । यत् । ईं ।
अर्भे । महति । वा । हितासः । बाधे । मरुतः । अह्वाम । देवान् ।
मिम्यक्ष । येषु । रोदसी । नु । देवी । सिसक्ति । पूषा । अभ्यर्धऽ-
यज्वा । श्रुत्वा । हवं । मरुतः । यत् । ह । याथ । भूम । रेजंते ।
अध्वनि । प्रऽविक्ते ॥ ८ ॥ अभि । त्यं । वीरं । गिर्वणसं । अर्च ।
इंद्रं । । ब्रह्मणा । जरितः । नवेन । श्रवत् । इत् । हवं । उप । च ।
स्तवानः । रासत् । वाजान् । उप । महः । गृणानः । ओमानं । आपः ।
मानुषीः । अमृक्तं । धात । तोकाय । तनयाय । शं । योः । यूयं । हि ।
स्थ । भिषजः । मातृऽतमाः । विश्वस्य । स्थातुः । जगतः । जनित्रीः ।
आ । नः । देवः । सविता । त्रायमाणः । हिरण्यऽपाणिः । यजतः ।
जगम्यात् ॥ यः । दत्रऽवान् । उषसः । न । प्रतीकं । विऽऊर्णुते ।

दाशुषे । वार्याणि । उत । त्वं । सूनोइति । सहसः । नः । अद्य । आ । देवान् । अस्मिन् । अध्वरे । ववृत्याः । स्यां । अहं । ते । सदं । इत् । रातौ । तव । स्यां । अग्ने । अवसा । सुऽवीरः । उत । त्या । मे । हवं । आ । जग्म्यातं । नासत्या । धीभिः । युवं । अंग । विप्रा । अत्रिं । न । महः । तमसः । अमुमुक्तं । तूर्वतं । नरा । दुःऽइतात् । अभीके ॥ ९ ॥ ते । नः । रायः । द्युऽमतः । वाजऽवतः । दातारः । भूत । नृऽवतः । पुरुऽक्षोः । दशस्यंतः । दिव्याः । पार्थिवासः । गोऽजाताः । अप्याः । मृळत । च । देवाः । ते । नः । रुद्रः । सरस्वती । सऽजोषाः । मीळ्हुष्मंतः । विष्णुः । मृळंतु । वायुः । ऋभुक्षाः । वाजः । दैव्यः । विऽधाता । पर्जन्यावाता । पिप्यतां । इषं । नः । उत । स्यः । देवः । सविता । भगः । नः । अपां । नपात् । अवतु । दानु । पप्रिः । त्वष्टा । देवेभिः । जनिऽभिः । सऽजोषाः । द्यौः । देवेभिः । पृथिवी । समुद्रैः । उत । नः । अहिः । बुध्न्यः । शृणोतु । अजः । एकऽपात् । पृथिवी । समुद्रः । विश्वे । देवाः । ऋतऽवृधः । हुवानाः । स्तुताः । मंत्राः । कविऽशस्ताः । अवंतु । एव । नपातः । मम । तस्य । धीभिः । भरतऽवाजाः । अभि । अर्चंति । अर्कैः । ग्नाः । हुतासः । वसवः । अधृष्टाः । विश्वे । स्तुतासः । भूत । यजत्राः ॥ १० ॥ उत् । ऊँइति । त्यत् । चक्षुः । महि । मित्रयोः । आ । एति । प्रियं । वरुणयोः । अदब्धं । ऋतस्य । शुचि । दर्शतं । अनीकं । रुक्मः । न । दिवः । उत्ऽइता । वि । अद्यौत् । वेद । यः । त्रीणि । विदथानि । एषां । देवानां । जन्म । सनुतः । आ । च । विप्रः । ऋजु । मर्तेषु । वृजिना । च । पश्यन् । अभि । चष्टे । सूरः । अर्यः । एवान् । स्तुषे । ऊँइति । वः । महः । ऋतस्य । गोपान् । अदितिं । मित्रं । वरुणं । सुऽजातान् । अर्यमणं । भगं । अदब्धऽधीतीन् । अच्छ । वोचे । सऽधन्यः । पावकान् । रिशादसः । सत्ऽपतीन् । अदब्धान् । महः । राज्ञः । सुऽवसनस्य ।

दातृन् । यूनः । सुऽक्षत्रान् । क्षयंतः । दिवः । नृन् । आदित्यान् । यामि । अदितिं । दुवःऽयु । द्यौः । पितरिति । पृथिवि । मातः । अध्रुक् । अग्ने । भ्रातः । वसवः । मृळत । नः । विश्वे । आदित्याः । अदिते । सऽजोषाः । अस्मभ्यं । शर्म । बहुलं । वि । यंत ॥ ११ ॥ मा । नः । वृकाय । वृक्ये । समस्मै । अघऽयते । रीरधत । यजत्राः ॥ ० ॥ रथ्यः । नः । तनूनां । यूयं । दक्षस्य । वचसः । बभूव । मा । वः । एनः । अन्यऽकृतं । भुजेम । मा । तत् । कर्म । वसवः । यत् । चयध्वे । विश्वस्य । हि । क्षयथ । विश्वऽदेवाः । स्वयं । रिपुः । तन्वं । रिरिषीष्ट । नमः । इत् । उग्रं । नमः । आ । विवासे । नमः । दाधार । पृथिवीं । उत । द्यां । नमः । देवेभ्यः । नमः । ईशे । एषां । कृतं । चित् । एनः । नमसा । आ । विवासे । ऋतस्य । वः । रथ्यः । पूतऽदक्षान् । ऋतस्य । पस्त्यऽसदः । अदब्धान् । तान् । आ । नमःऽभिः । उरुऽचक्षसः । नृन् । विश्वान् । वः । आ । नमे । महः । यजत्राः । ते । हि । श्रेष्ठऽवर्चसः । ते । ऊँइति । नः । तिरः । विश्वानि । दुःऽइता । नयंति । सुऽक्षत्रासः । वरुणः । मित्रः । अग्निः । ऋतऽधीतयः । चक्मराजऽसत्याः ॥ १२ ॥ ते । नः । इंद्रः । पृथिवी । क्षाम । वर्धन् । पूषा । भगः । अदितिः । पंच । जनाः । सुऽशर्माणः । सुऽअवसः । सुऽनीथाः । भवंतु । नः । सुऽत्रात्रासः । सुऽगोपाः । नु । सद्मानं । दिव्यं । नांशि । देवाः । भारत्ऽवाजः । सुऽमतिं । याति । होता । आसानेभिः । यजमानः । मियेधैः । देवानां । जन्म । वसुऽयुः । ववंद । अप । त्यं । वृजिनं । रिपुं । स्तेनं । अग्ने । दुःऽआध्यं । दविष्ठ । अस्य । सत्ऽपते । कृधि । सुऽगं । ग्रावाणः । सोम । नः । हि । कं । सखिऽत्वनाय । वावशुः । जहि । नि । अत्रिणं । पणिं । वृकः । हि । सः ॥ ० ॥ इंद्रऽज्येष्ठाः । अभिऽद्यवः । कर्त । नः ।

अध्वन् । आ । सुऽगं । गोपाः । अमा । अपि । पंथाः । अगन्महि । स्वस्तिऽगां । अनेहसं । येन । विश्वाः । परि । द्विषः । वृणक्ति । विंदते । वसु ॥ १३ ॥ न । तत् । दिवा । न । पृथिव्या । अनु । मन्ये । न । यज्ञेन । न । उत । शमीभिः । आभिः । उब्जंतु । तं । सुऽभ्वः । पर्वतासः । नि । हीयतां । अतिऽयाजस्य । यष्टा । अति । वा । यः । मरुतः । मन्यते । नः । ब्रह्म । वा । यः । क्रियमाणं । निनित्सात् । तपूंषि । तस्मै । वृजिनानि । संतु । ब्रह्मऽद्विषं । अभि । तं । शोचतु । द्यौः । किं । अंग । त्वा । ब्रह्मणः । सोम । गोपां । किं । अंग । त्वा । आहुः । अभिशस्तिऽपां । नः । किं । अंग । नः । पश्यसि । निद्यमानान् । ब्रह्मऽद्विषे । तपुषिं । हेतिं । अस्य । अवंतु । मां । उषसः । जायमानाः । अवंतु । मा । सिंधवः । पिन्वमानाः । अवंतु । मा । पर्वतासः । ध्रुवासः । अवंतु । मा । पितरः । देवऽहूतौ । विश्वऽदानीं । सुऽमनसः । स्याम । पश्येम । नु । सूर्यं । उत्ऽचरंतं । तथा । करत् । वसुऽपतिः । वसूनां । देवान् । ओहानः । अवसा । आऽगमिष्ठः ॥ १४ ॥ इंद्रः । नेदिष्ठं । अवसा । आऽगमिष्ठः । सरस्वती । सिंधुऽभिः । पिन्वमाना । पर्जन्यः । नः । ओषधीभिः । मयःऽभुः । अग्निः । सुऽशंसः । सुऽहवः । पिताऽइव ॥ ० ॥ यः । वः । देवाः । घृतऽस्नुना । हव्येन । प्रतिऽभूषति । तं । विश्वे । उप । गच्छथ । उप । नः । सुनवः । गिरः । शृण्वंतु । अमृतस्य । ये । सुऽमृळीकाः । भवंतु । नः । विश्वे । देवाः । ऋतऽवृधः । ऋतुऽभिः । हवनऽश्रुतः । जुषंतां । युज्यं । पयः ॥ १५ ॥ स्तोत्रं । इंद्रः । मरुत्ऽगणः । त्वष्टृऽमान् । मित्रः । अर्यमा । इमा । हव्या । जुषंत । नः । इमं । नः । अग्ने । अध्वरं । होतः । वयुनऽशः । यज । चिकित्वान् । दैव्यं । जनं । विश्वे । देवाः । शृणुत । इमं । हवं । मे । ये । अंतरिक्षे । ये । उप । द्यवि । स्थ । ये । अग्निऽजिह्वाः । उत ।

वा । यजत्राः । आऽसद्य । अस्मिन् । बर्हिषि । मादयध्वं । विश्वे । देवाः । मम । शृण्वंतु । यज्ञियाः । उभेइति । रोदसीइति । अपां । नपात् । च । मन्म । मा । वः । वचांसि । परिऽचक्ष्याणि । वोचं । सुम्नेषु । इत् । वः । अंतमाः । मदेम । ये । के । च । ज्मा । महिनः । अहिऽमायाः । दिवः । जज्ञिरे । अपां । सधऽस्थे । ते । अस्मभ्यं । इषये । विश्वं । आयुः । क्षपः । उस्राः । वरिवस्यंतु । देवाः । अग्नीपर्जन्यौ । अवतं । धियं । मे । अस्मिन् । हवे । सुऽहवा । सुऽस्तुतिं । नः । इळां । अन्यः । जनयत् । गर्भं । अन्यः । प्रजाऽवतीः । इषः । आ । धत्तं । अस्मेइति ॥ ० ॥ सुऽउक्तेन । महा । नमसा । आ । विवासे । अस्मिन् । नः । अद्य । विदथे । यजत्राः । विश्वे । देवाः । हविषि । मादयध्वं ॥ १६ ॥ वयं । ऊँइति । त्वा । पथः । पते । रथं । न । वाजऽसातये । धिये । पूषन् । अयुज्महि । अभि । नः । नर्यं । वसु । वीरं । प्रयतऽदक्षिणं । वामं । गृहऽपतिं । नय । अदित्सं । चित् । आघृणे । पूषन् । दानाय । चोदय । पणेः । चित् । वि । म्रद । मनः । वि । पथः । वाजऽसातये । चिनुहि । वि । मृधः । जहि । साधंतां । उग्र । नः । धियः । परि । तृंधि । पणीनां । आरया । हृदया । कवे । अथ । ईं । अस्मभ्यं । रंधय ॥ १७ ॥ वि । पूषन् । आरया । तुद । पणेः । इच्छ । हृदि । प्रियं ॥ ० ॥ आ । रिख । किकिरा । कृणु । पणीनां । हृदया । कवे ॥ ० ॥ यां । पूषन् । ब्रह्मऽचोदनीं । आरां । बिभर्षि । आघृणे । तया । समस्य । हृदयं ॥ ० ॥ या । ते । अष्ट्रा । गोऽओपशा । आघृणे । पशुऽसाधनी । तस्याः । ते । सुम्नं । ईमहे । उत । नः । गोऽसनिं । धियं । अश्वऽसां । वाजऽसां । उत । नृऽवत् । कृणुहि । वीतये ॥ १८ ॥ सं । पूषन् । विदुषा । नय । यः । अंजसा । अनुऽशासति । यः । एव । इदं । इति । ब्रवत् । सं । ऊँइति । पूष्णा । गमेमहि । यः । गृहान् । अभिऽशासति । इमे । एव । इति । च । ब्रवत् ।

पूष्णः । चक्रं । न । रिष्यति । न । कोशः । अव । पद्यते । नोइति । अस्य । व्यथते । पविः । यः । अस्मै । हविषा । अविधत् । न । तं । पूषा । अपि । मृष्यते । प्रथमः । विंदते । वसु । पूषा । गाः । अनु । एतु । नः । पूषा । रक्षतु । अर्वतः । पूषा । वाजं । सनोतु । नः ॥ १९ ॥ पूषन् । अनु । प्र । गाः । इहि । यजमानस्य । सुन्वतः । अस्माकं । स्तुवतां । उत । माकिः । नेशत् । माकीं । रिषत् । माकीं । सं । शारि । केवटे । अथ । अरिष्टाभिः । आ । गहि । शृण्वंतं । पूषणं । वयं । इर्यं । अनष्टऽवेदसं । ईशानं । रायः । ईमहे । पूषन् । तव । व्रते । वयं । न । रिष्येम । कदा । चन । स्तोतारः । ते । इह । स्मसि । परि । पूषा । परस्तात् । हस्तं । दधातु । दक्षिणं । पुनः । नः । नष्टं । आ । अजतु ॥ २० ॥ आ । इहि । वां । विऽमुचः । नपात् । आघृणे । सं । सचावहै । रथीः । ऋतस्य । नः । भव । रथिऽतमं । कपर्दिनं । ईशानं । राधसः । महः । रायः । सखायं । ईमहे । रायः । धारा । असि । आघृणे । वसोः । राशिः । अजऽअश्व । धीवतःऽधीवतः । सखा । पूषणं । नु । अजऽअश्वं । उप । स्तोषाम । वाजिनं । स्वसुः । यः । जारः । उच्यते । मातुः । दिधिषुं । अब्रवं । स्वसुः । जारः । शृणोतु । नः । भ्राता । इंद्रस्य । सखा । मम । आ । अजासः । पूषणं । रथे । निऽशृंभाः । ते । जनऽश्रियं । देवं । वहंतु । बिभ्रतः ॥ २१ ॥ यः । एनं । आऽदिदेषति । करंभऽअत् । इति । पूषणं । न । तेन । देवः । आऽदिशे । उत । घ । सः । रथिऽतमः । सख्या । सत्ऽपतिः । युजा । इंद्रः । वृत्राणि । जिघ्नते । उत । अदः । परुषे । गवि । सूरः । चक्रं । हिरण्ययं । नि । ऐरयत् । रथिऽतमः । यत् । अद्य । त्वा । पुरुऽस्तुत । ब्रवाम । दस्र । मंतुऽमः । तत् । सु । नः । मन्म । साधय । इमं । च । नः । गोऽएषणं । सातये । सीसधः । गणं । आरात् । पूषन् । असि ।

श्रुतः । आ । ते । स्वस्ति । ईमहे । आरेऽअघां । उपऽवसु । अद्य । च । सर्वऽतातये । श्वः । च । सर्वऽतातये ॥ २२ ॥ इंद्रा । नु । पूषणा । वयं । सख्याय । स्वस्तये । हुवेम । वाजऽसातये । सोमं । अन्यः । उप । असदत् । पातवे । चम्वोः । सुतं । करंभं । अन्यः । इच्छति । अजाः । अन्यस्य । वह्नयः । हरीइति । अन्यस्य । संऽभृता । ताभ्यां । वृत्राणि । जिघ्नते । यत् । इंद्रः । अनयत् । रितः । महीः । अपः । वृषन्ऽतमः । तत्र । पूषा । अभवत् । सचा । तां । पूष्णः । सुऽमतिं । वयं । वृक्षस्य । प्र । वयांऽइव । इंद्रस्य । च । आ । रभामहे । उत् । पूषणं । युवामहे । अभीशूंन्ऽइव । सारथिः । मह्यै । इंद्रं । स्वस्तये ॥ २३ ॥ शुक्रं । ते । अन्यत् । यजतं । ते । अन्यत् । विषुरूपेइतिविषुऽरूपे । अहनीइति । द्यौःऽइव । असि । विश्वाः । हि । मायाः । अवसि । स्वधाऽवः । भद्रा । ते । पूषन् । इह । रातिः । अस्तु । अजऽअश्वः । पशुऽपाः । वाजऽपस्त्यः । धियंऽजिन्वः । भुवने । विश्वे । अर्पितः । अष्ट्रां । पूषा । शिथिरां । उत्ऽवरीवृजत् । संऽचक्षाणः । भुवना । देवः । ईयते । याः । ते । पूषन् । नावः । अंतरिति । समुद्रे । हिरण्ययीः । अंतरिक्षे । चरंति । ताभिः । यासि । दूत्यां । सूर्यस्य । कामेन । कृत । श्रवः । इच्छमानः । पूषा । सुऽबंधुः । दिवः । आ । पृथिव्याः । इळः । पतिः । मघऽवा । दस्मऽवर्चाः । यं । देवासः । अददुः । सूर्यायै । कामेन । कृतं । तवसं । सुऽअंचं ॥ २४ ॥ प्र । नु । वोच । सुतेषु । वां । वीर्या । यानि । चक्रथुः । हतासः । वां । पितरः । देवऽशत्रवः । इंद्राग्नीइति । जीवथः । युवं । वट् । इत्था । महिमा । वां । इंद्राग्नीइति । पनिष्ठः । आ । समानः । वां । जनिता । भ्रातरा । युवं । यमौ । इहेहऽमातरा । ओकिऽवांसा । सुते । सचा । अश्वा । सप्तीइवेतिसप्तीऽइव । आदने । इंद्रा । नु । अग्नीइति । अवसा । इह । वज्रिणा । वयं । देवा । हवामहे । यः । इंद्राग्नीइति । सुतेषु । वां । स्तवत् । तेषु ।

ऋतऽवृधा । जोषऽवाकं । वदंतः । पज्रऽहोषिणा । न । देवा । भसथः । चन । इंद्राग्नीइति । कः । अस्य । वां । देवौ । मर्तः । चिकेतति । विषूचः । अश्वान् । युयुजानः । ईयते । एकः । समाने । आ । रथे ॥ २५ ॥ इंद्राग्नीइति । अपात् । इयं । पूर्वा । आ । अगात् । पत्ऽवतीभ्यः । हित्वी । शिरः । जिह्वया । वावदत् । चरत् । त्रिंशत् । पदा । नि । अक्रमीत् । इंद्राग्नीइति । आ । हि । तन्वते । नरः । धन्वानि । बाह्वोः । मा । नः । अस्मिन् । महाऽधने । परा । वर्क्तं । गोऽइष्टिषु । इंद्राग्नीइति । तपंति । मा । अघाः । अर्यः । अरातयः । अप । द्वेषांसि । आ । कृतं । युयुतं । सूर्यात् । अधि । इंद्राग्नीइति । युवोः । अपि । वसु । दिव्यानि । पार्थिवा । आ । नः । इह । प्र । यच्छतं । रयिं । विश्वायुऽपोषसं । इंद्राग्नीइति । उक्थऽवाहसा । स्तोमेभिः । हवनऽश्रुता । विश्वाभिः । गीःऽभिः । आ । गतं ॥ ० ॥ २६ ॥ श्नथन् । वृत्रं । उत । सनोति । वाजं । इंद्रा । यः । अग्नीइति । सहुरीइति । सपर्यात् । इरज्यंता । वसव्यस्य । भूरेः । सहःऽतमा । सहसा । वाजऽयंता । ता । योधिष्टं । अभि । गाः । इंद्र । नूनं । अपः । स्वः । उषसः । अग्ने । ऊळ्हाः । दिशः । स्वः । उषसः । इंद्र । चित्राः । अपः । गाः । अग्ने । युवसे । नियुत्वान् । आ । वृत्रऽहना । वृत्रहऽभिः । शुष्मैः । इंद्र । यातं । नमःऽभिः । अग्ने । अर्वाक् । युवं । राधःऽभिः । अकवेभिः । इंद्र । अग्ने । अस्मेइति । भवतं । उत्ऽतमेभिः । ता । हुवे । ययोः । इदं । पप्रे । विश्वं । पुरा । कृतं । इंद्राग्नीइति । न । मर्धतः । उग्रा । विऽघनिना । मृधः । इंद्राग्नीइति । हवामहे ॥ ० ॥ २७ ॥ हतः । वृत्राणि । आर्या । हतः । दासानि । सत्पतीइतिसत्ऽपती । हतः । विश्वाः । अप । द्विषः । इंद्राग्नीइति । युवां । इमे । अभि । स्तोमाः । अनूषत । पिबतं । शंऽभुवा । सुतं ॥ ० ॥ इंद्राग्नीइति । ताभिः । आ । गतं । ताभिः । आ ।

गच्छतं । नरा ॥ ० ॥ इंद्राग्नीइति । सोमऽपीतये । तं । ईळिष्व । यः । अर्चिषा । वना । विश्वा । परिऽस्वजत् । कृष्णा । कृणोति । जिह्वया ॥ २८ ॥ यः । इद्धे । आऽविवासति । सुम्नं । इंद्रस्य । मर्त्यः । द्युम्नाय । सुऽतराः । अपः । ता । नः । वाजऽवतीः । इषः । आशून् । पिपृतं । अर्वतः । इंद्रं । अग्निं । च । वोळ्हवे । उभा । वां । इंद्राग्नी-इति । आऽहुवध्यै । उभा । राधसः । सह । मादयध्यै । उभा । दातारौ । इषां । रयीणां । उभा । वाजस्य । सातये । हुवे । वां । आ । नः । गव्येभिः । अश्व्यैः । वसव्यैः । उप । गच्छतं । सखायौ । देवौ । सख्याय । शंऽभुवा । इंद्राग्नीइति । ता । हवामहे । इंद्राग्नी-इति । शृणुतं । हवं । यजमानस्य । सुन्वतः । वीतं । हव्यानि । आ । गतं । पिबतं । सौम्यं । मधु ॥ २९ ॥ इयं । अददात् । रभसं । ऋणऽच्युतं । दिवःऽदासं । वध्रिऽअश्वाय । दाशुषे । या । शश्वंतं । आऽचखाद । अवसं । पणिं । ता । ते । दात्राणि । तविषा । सरस्वति । इयं । शुष्मेभिः । बिसखाःऽइव । अरुजत् । सानु । गिरीणां । तवि-षेभिः । ऊर्मिऽभिः । पारावतऽघ्नीं । अवसे । सुवृक्तिऽभिः । सरस्वतीं । आ । विवासेम । धीतिऽभिः । सरस्वति । देवऽनिदः । नि । बर्हय । प्रऽजां । विश्वस्य । बृसयस्य । मायिनः । उत । क्षितिऽभ्यः । अवनीः । अविंदः । विषं । एभ्यः । अस्रवः । वाजिनीऽवति ॥ प्र । नः । देवी । सरस्वती । वाजेभिः । वाजिनीऽवती ॥ धीनां । अवित्री । अवतु । यः । त्वा । देवि । सरस्वति । उपऽब्रूते । धने । हिते । इंद्रं । न । वृत्रऽ-तूर्ये ॥ ३० ॥ त्वं । देवि । सरस्वति । अव । वाजेषु । वाजिनि । रद । पूषाऽइव । नः । सनिं । उत । स्या । नः । सरस्वती । घोरा । हिरण्यऽवर्तनिः । वृत्रऽघ्नी । वष्टि । सुऽस्तुतिं । यस्याः । अनंतः । अह्रुतः । त्वेषः । चरिष्णुः । अर्णवः । अमः । चरति । रोरुवत् । सा । नः । विश्वाः । अति । द्विषः । स्वसॄः । अन्याः । ऋतऽवरी । अतन् । अहाऽइव । सूर्यः । उत । नः । प्रिया । प्रियासु । सप्तऽस्वसा ।

सुऽजुष्टा । सरस्वती । स्तोम्यां । भूत् ॥ ३१ ॥ आऽपप्रुषी । पार्थिवानि । उरु । रजः । अंतरिक्षं । सरस्वती । निदः । पातु । त्रिऽसधस्था । सप्तऽधातुः । पंच । जाता । वर्धयंती । वाजेऽवाजे । हव्या । भूत् । प्र । या । महिम्ना । महिना । आसु । चेकिते । द्युम्नेभिः । अन्याः । अपसां । अपःऽतमा । रथःऽइव । बृहती । विऽभ्वने । कृता । उपऽस्तुत्या । चिकितुषा । सरस्वती । सरस्वति । अभि । नः । नेषि । वस्यः । मा । अप । स्फरीः । पयसा । मा । नः । आ । धक् । जुषस्व । नः । सख्या । वेश्या । च । मा । त्वत् । क्षेत्राणि । अरणानि । गन्म ॥ ३२ ॥

इति चतुर्थाष्टके अष्टमोध्यायः ॥ ८ ॥

॥ इति चतुर्थाष्टकः संपूर्णः ॥ ४ ॥



# अशुद्धसंशोधनम्

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| २ | ९ | वाघतः | वाघतः |
| ,, | २२ | इन्द्रे | इन्द्रे |
| ३ | २ | वाजेषु | वाजेषु |
| ४ | ६ | गाथिनः | गाथिनः |
| ६ | १४ | पतिं | पतिं |
| ,, | २५ | तिं | संतिं |
| ७ | १६ | हविष्मंते | हविष्मंति |
| ८ | ७ | बृहस्वतिं | बृहस्पतिं |
| ,, | ९–१० | हविष्मंतः | हविष्मंतः |
| ,, | ११ | अग्रे | अग्ने |
| ,, | १३ | जिह्वायां | जिह्वयां |
| ,, | २२ | पिवं | पिबं |
| ९ | ३ | देवेषुं | देवेषुं |
| ,, | १३ | उप | उपं |
| १० | १२ | ब्रह्मणः | ब्रह्मणः |
| ,, | १३ | ,, | ,, |
| ,, | २३ | अनूचु | आनृचुः |
| ११ | ३ | तन्वानि | तन्वान्ति |
| ,, | ६ | वाचःऽयुजा | वचःऽयुजा |
| ,, | १२ | देवस्य | देवस्य |
| ,, | १३ | सुशस्तिऽमिः | सुशस्तिऽभिः |

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| ११ | १७ | शुंभत | शुंभत |
| ,, | २१ | अप्रज्ञाः | अप्रंजाः |
| १२ | ८ | शुंभति | शुभति |
| ,, | १३ | सचतां | सचंतां |
| ,, | १४ | ष्टथिवी | पृथिवी |
| ,, | १९ | ष्टथिव्याः | पृथिव्याः |
| १३ | ११ | इंद्रं | इंद्रं |
| ,, | १२ | मरुत्ऽगणाः | मरुत्ऽगणाः |
| ,, | २० | नष्टं | नष्ट्रं |
| ,, | २४ | चर्कृषत् | चर्कृषत् |
| १४ | ३ | अतः | अंतः |
| ,, | २५ | पर्यः | पर्यः |
| १५ | ९ | अहं | अहं |
| ,, | १० | अपः | आपः |
| ,, | १८ | दर्दश्रे | दर्दश्रे |
| २४ | १७ | स्तुन्वतः | सुन्वतः |
| २५ | १ | तमंसः—गाः | तमंस—गाः— |
| ,, | १९ | समा | समाने |
| २६ | २२ | ह्रयामि | ह्वयामि |
| २७ | ८ | उपस्थे | उपऽस्थैं |
| ,, | १० | तस्तुः | तस्थुः |
| २८ | १६ | देव×तमः | देवऽवितमः |
| ,, | २१ | पृर्धि | पूर्धि |
| ३२ | २ | इंषुं | इषुं |
| ,, | ६ | स्तुवीर्यैं | सुवीर्यैं |

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| ३२ | १६ | अंतःबावत् | अंतःऽवावत् |
| ,, | २२ | स्तुऽगः | सुऽगः |
| ३७ | १२ | दगा | दग्रा |
| ४२ | २ | अर्भा | अर्भा |
| ,, | २४ | ऊर्मयः | ऊर्मयः |
| ५० | ६ | पवकः | पावकः |
| ,, | १० | मर्जयंतः | मर्जयंतः |
| ५२ | १३ | ऊं | ऊँइति |
| ५३ | ९ | नोथाः | नोधाः |
| ५५ | ११ | जिघ्रते | जिघ्रंते |
| ५७ | ३ | अैम | अमै |
| ,, | ५ | दाधोर | दाधार |
| ५८ | ३ | जन | जनै |
| ,, | ३ | आऽह्वयः | आऽह्वयैः |
| ,, | १५ | अद्रौ | अद्रौ |
| ५९ | २ | अरुर्षी | अरुर्षी |
| ,, | ४ | उक्यैः | उक्थैः |
| ,, | २४ | सूरः | सूरः |
| ६० | १५ | सख्यंः | सख्यंः |
| ,, | १७ | गह्यानि | गुह्यानि |
| ६७ | ८ | पराऽदिः | पराऽददिः |
| ७१ | २२ | जिहं | जिहं |
| ७२ | १६ | उश्मासि | उश्मासि |
| ७३ | २० | बः | वः |
| ,, | २० | अयंःदृष्टान् | अयंऽःदंष्ट्रान् |

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| ७४ | २४ | विद्वान् | विद्वान् |
| ७६ | १६ | वृष्ट्यानि | वृष्ण्यानि |
| ,, | २३ | पप्र | पप्रि |
| ७७ | १९ | उच्छर्ती | उच्छन्ती |
| ७८ | २१ | ण्यऽवर्तरे | ण्यऽवर्तनी |
| ,, | २४ | दाशुषे | दाशुषे |
| ७९ | ११ | चक्रयुः | चक्रथुः |
| ८० | १ | साधीत | साधति |
| ८१ | ३ | संऽइद्धः | संऽइद्धः |
| ,, | ९ | ममहतां | ममहतां |
| ८२ | ९ | स्वधभिः | स्वधाभिः |
| ,, | १२ | जिह्वानां | जिह्वानां |
| ,, | १४ | मेनेद्दर्ति | मेनेद्दति |
| ८३ | १० | धिषणां | धिषणां |
| ८४ | ११ | अभिःऽश्रीः | अभिऽश्रीः |
| ,, | १६ | सचतां | सचंतां |
| ८७ | ६ | माद्रयस्व | माद्रयस्व |
| ,, | ६ | मदयस्व | मादयस्व |
| ८८ | ३ | सहस्रात् | सहस्रात् |
| ९० | ६ | उरुव्यचाः | उरुऽव्यचाः |
| ,, | १६ | रोचने | रोचने |
| ९६ | २ | विंऽचक्षणः | विऽचक्षणः |
| ९७ | ५ | गछंयः | गच्छथः |
| १०० | ८ | मृष्ठ | म्रळ |
| ,, | २२ | महांतां | महांतं |

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| १०१ | १ | आये | आयौ |
| ,, | १० | मरुत्वांत् | मरुत्वान् |
| ,, | १८ | कर्तौः | कर्तौः |
| १०३ | १० | जंधौं | जंघौं |
| ,, | १३ | विऽचक्षे | विऽचक्षे |
| १०४ | ७ | अवंऽनत्थं | अवंऽनद्धं |
| ,, | १० | सुऽगवः | सुऽगवः |
| १०५ | १८ | एयैः | एवैः |
| ,, | १९ | अश्वः | अश्वैः |
| ,, | २० | जगन्वात् | जगन्वान् |
| ,, | २३ | वृकस्य | वृकस्य |
| १०६ | ६ | धिष्ष्या | धिष्ण्या |
| १०७ | १६ | पदवे | पेदवे |
| ,, | २१ | अरमेइति | अस्मेइति |
| ११० | ७ | द्रुहः | द्रुहः |
| ,, | १४ | राधंना | रोधंना |
| ,, | १६ | हरिराति | हरीइति |
| ११३ | १२ | ऊछे | अच्छ |
| ११५ | १ | अछे | अच्छ |
| ,, | २० | उछ | उच्छ |
| ११५ | २४ | अनुऽयछमाना | अनुऽयच्छमाना |
| ११६ | १ | उछ | उच्छ |
| ,, | २ | उछंती | उच्छंती |
| ,, | १८ | विऽउछती | विऽउच्छंती |
| ,, | २२ | उछंतु | उच्छंतु |

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| ११६ | २३ | उछ्र | उच्छ |
| ११७ | २ | उछात् | उच्छात् |
| ,, | १४ | इछन् | इच्छन् |
| ,, | १९ | गछति | गच्छति |
| ११८ | ४ | शंतं | शतं |
| ,, | ६ | गोनां | गोनाँ |
| १२० | १७ | पराऽबतः | पराऽवतः |
| ,, | १८ | प्रार्थिवं | पार्थिवं |
| १२१ | १५ | देबासः | देवासः |
| ,, | २२ | स्वं१रितिंस्वंः | स्वं१रितिंस्वंः |
| ,, | २४ | पित्वंसि | पिन्वंसि |
| १२२ | १४ | स्त्रबेत् | स्त्रवेत् |
| १२३ | ११ | त्वा | त्वा |
| ,, | १३ | पिब | पिब |
| ,, | १५ | यछंतु | यच्छंतु |
| ,, | २० | गभस्योः | गभस्त्योः |
| १२४ | ५ | जेन्यं | जेन्यँ |
| १२५ | १ | स्व१रितिंस्वं | स्वं१रितिंस्वं |
| ,, | १९ | अमित्रयंतं | अमित्रऽयंतँ |
| ,, | २१ | भूतु | भूतु |
| ,, | २१ | दुःऽमतिः | दुःऽमतिः |
| १२६ | ७ | क्षयं | क्षयँ |
| ,, | १५ | यक्षत | यक्षंत |
| ,, | १६ | इंद्रे | इंद्रँ |
| ,, | २० | अस्माकं | अस्माकँ |

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| १२६ | २३ | तृह्ळाः | तृह्ळाः |
| १२७ | १५ | सोमंत्य | सोमस्य |
| ,, | १९ | अभिऽद्यंवः | अभिऽद्यंवः |
| १२८ | ८ | तक्कवीये | तक्कऽवीयें |
| ,, | ११ | अर्हसि | अर्हसि |
| ,, | ११ | ववर्जुषींणां | ववर्जुषींणां |
| १२९ | ३ | चंद्रेण | चंद्रेणं |
| ,, | १३ | गछतं | गच्छतं |
| ,, | १३ | गछतं | गच्छतं |
| ,, | १९ | वायोइत | वायोइतिं |
| १३० | ६ | उपऽस्तुत्यं | उपऽस्तुत्यं |
| ,, | ७ | दिवेऽदिंबे | दिवेऽदिंवे |
| ,, | ११ | देवः | देवः |
| ,, | १४ | पतः | पातः |
| १३१ | ८ | दहंति | दुहंति |
| १३२ | ७ | अस्तु | अस्तु |
| ,, | ११ | अछं | अच्छं |
| ,, | १२ | नन्युना | मन्युना |
| १३३ | १ | वृषनूं | वृषन् |
| ,, | २० | अररिंदानि | अररिंदानि |
| १३४ | ८ | कृष्णऽसींतासः | कृष्णऽसींतासः |
| ,, | १२ | मर्मृशंत् | मर्मृशत् |
| ,, | १३ | वृपाऽइव | वृषाऽइव |
| ,, | १७ | पुनः | पुनः |
| ,, | १९ | [illegible] | रेभिरे |

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| १३४ | १९ | ऊर्ध्वाः | ऊर्ध्वाः |
| १३५ | १५ | निः | निः |
| १३६ | १ | ऋजते | ऋंजते |
| ,, | ३ | यजतः | यजतः |
| ,, | ११ | देवऽतातिं | देवऽतातिं |
| ,, | १८ | अछं | अच्छं |
| ,, | २० | संऽइद्धः | संऽइद्धः |
| १३७ | ६ | उपाके तिं | उपाकेइति |
| ,, | १६ | त्बां | त्वां |
| ,, | १७ | मतिः | मतिं |
| ,, | २० | आबिः | आविः |
| ,, | २५ | आऽइरिरे | आऽईरिरे |
| १३८ | ११ | अप्रऽयुछन् | अप्रऽयुच्छन् |
| ,, | ११ | जप्रयुछत्ऽभिः | अप्रयुच्छत्ऽभिः |
| १३९ | २ | उंतयै | ऊंतयै |
| ,, | १० | चिकित्बान् | चिकित्वान् |
| ,, | १३ | पृछंति | पृच्छंति |
| ,, | १७ | अछिद्रऽऊतिः | अच्छिद्रऽऊतिः |
| ,, | २० | गछंति | गच्छंति |
| १४० | १२ | आशुपाणाः | आशुषाणाः |
| १४१ | ३ | उपऽस्तुतिं | उपऽस्तुतिं |
| ,, | ८ | अस्तुः | अस्तुः |
| १४२ | २ | वनुषः | वनुषः |
| ,, | १३ | युजाथेइतिं | युंजाथेइतिं |
| ,, | २१ | गछंथः | गच्छंथः |

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| १४२ | २१ | अछं | अच्छं |
| १४३ | ४ | युबोः | युवोः |
| ,, | ४ | अछिद्रा | अच्छिद्राः |
| ,, | १६ | ब्रह्यऽप्रियं | ब्रह्मऽप्रियं |
| ,, | १६ | पीपयन् | पीपयन् |
| ,, | २० | ब्रह्यं | ब्रह्मं |
| ,, | २४ | मित्राबरुणा | मित्रावरुणा |
| १४४ | ५ | बिक्षु | विक्षु |
| ,, | १९ | डरुऽक्रमस्यं | उरुऽक्रमस्यं |
| १४५ | २० | ऊँशिं | ऊँइतिं |
| १४६ | १ | दधारं | दाधारं |
| ,, | २ | अपऽउर्णुते | अपऽऊर्णुते |
| १४७ | ८ | गमयं | गमेयं |
| १४८ | ११ | सुजन्मनीइतिसुऽजन्मनी | सुजन्मनीइतिसुऽजन्मनी |
| ,, | १८ | रोदसीशिं | रोदसीइतिं |
| ,, | १९ | स्कंभनेमिः | स्कंभनेभिः |
| १४९ | ७ | अपृछत | अपृच्छत |
| ,, | ९ | जतुरः | चतुरः |
| ,, | १४ | अगछत | अगच्छत |
| १५० | ४ | अशांस्तन | असांस्तन |
| ,, | ५ | गछत | गच्छत |
| ,, | ८ | अपृछत | अपृच्छत |
| ,, | ९ | वोधयितारं | बोधयितारं |
| ,, | १३ | इछंतः | इच्छंतः |
| १५१ | २ | पूपव्रणस्काः | यूपऽव्रस्काः |

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| १५१ | २४ | पड्वींशं | पड्‌वींशं |
| ,, | २४ | घ्रासं | घ्रासिं |
| १५२ | ५ | पड्वींशं | पड्‌वींशं |
| १५२ | ९ | अछिद्रा | अच्छिद्रा |
| ,, | २० | विऽश्वऽपुषं | विश्वऽपुषं |
| १५३ | २ | अतष्ठ | अतष्ट |
| ,, | ३ | असि | असि |
| ,, | १७ | गावः | गावः |
| १५४ | ४ | अछं | अच्छं |
| ,, | ६ | बार्याणि | वार्याणि |
| ,, | १६ | प्रष्टुं | प्रष्टुं |
| ,, | १७ | पृछामि | पृच्छामि |
| ,, | २० | ,, | ,, |
| १५५ | २ | निऽविद्धा | निऽविद्धा |
| ,, | ४ | अतिछत् | अतिष्ठत् |
| ,, | १० | द्वादशऽआकृतिं | द्वादशऽआकृतिं |
| ,, | ११ | अर्द्धे | अर्धे |
| ,, | २१ | पुसः | पुंसः |
| १५६ | २ | स्वित् | स्वित् |
| १५७ | २ | अभिऽइद्धः | अभिऽइद्धः |
| ,, | ४ | इछंती | इच्छंती |
| ,, | २१ | पृछामि | पृच्छामि |
| ,,+,, | २२+२२ | ,, | ,, |
| ,, | २३ | पृछामि | पृच्छामि |
| १५९ | ४ | गुरुत्मान् | गुरुत्मान् |

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| १५९ | १८ | जिन्वति | जिन्मंति |
| ,, | २२ | वृषणः | वृषणः |
| १६० | २ | इत्था | इत्था |
| ,, | २ | पृछसे | पृच्छसे |
| ,, | ६ | अछं | अच्छं |
| ,, | ७ | महऽभिः | महःऽभिः |
| ,, | ११ | वध्रऽस्नैः | वध्रऽस्नैः |
| १६१ | २ | अछांत | अच्छांत |
| १६३ | २० | रोदसीइति | रोदसी |
| १६४ | १ | विवक्मि | विवक्मि |
| ,, | ४ | अपऽशस्तान् | अप्रऽशस्तान् |
| १६५ | १२ | एषः+त्वः | ॥ ६ ॥ महः+चित् |
| ,, | १६ | वेधः | वेधः |
| ,, | २३ | ते | ते |
| १६६ | ४+५ | अर्ध–यत्–एषां | ॥ ० ॥ पृथुऽबुध्नासः |
| ,, | ९ | विद्याम | विद्याम |
| ,, | १० | वृजनं | वृजनं |
| ,, | १० | जीरदानुं | जीरऽदानुं |
| १६७ | ३ | अंहं | अहं |
| ,, | ७ | धा | धाः |
| ,, | १५ | थथा | यथा |
| ,, | १७ | वृषा | वृषा |
| १६८ | ३ | रोदसीइति | रोदसीइति |
| ,, | ४ | कक्ष्येइति | कक्ष्ये३इति |
| ,, | १३ | विस्पर्धसः | विऽस्पर्धसः |

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| १६८ | १४ | पूःपातिं | पूःऽपातिं |
| ,, | १७ | अछं | अच्छं |
| ,, | २० | हविष्मते | हविष्मतः |
| १७१ | १ | रथं | रथं |
| ,, | २४ | पूर्वे | पूर्वे |
| १७२ | १० | इछमानः | इच्छमानः |
| ,, | १५ | आत्यस्या | अत्यस्य |
| १७३ | ४ | प्रऽस्रवणस्य | प्रऽस्रवणस्य |
| ,, | १९ | वहंतु | वहंतु |
| १७४ | १४ | विश्दलावसूइति | विश्पलावसूइति |
| ,, | १८ | अहऽविः | अहविः |
| १७५ | १ | अवऽविद्धं | अवऽविद्धं |
| ,, | २ | प्रऽविद्धं | प्रऽविद्धं |
| १७६ | १ | उछंर्या | उच्छंर्या |
| ,, | ४ | उर्म्या | ऊर्म्या |
| ,, | ५ | अछोक्तिऽभिः | अच्छोक्तिऽभिः |
| १७७ | २ | संगछमानेइतिसंऽगछमाने | संगच्छमानेइतिसंऽगच्छमाने |
| ,, | १३ | ऊतीईति | ऊतीइति |
| ,, | १८ | भूतं | भूतं |
| ,, | २३ | प्रेष्ठं | प्रेष्ठं |
| १७८ | ७ | अछं | अच्छं |
| ,, | १८ | ,, | ,, |
| ,, | १८ | सुम्नायं | सुम्नायं |
| १७९ | ५ | केतुना | केतुना |
| ,, | १० | ओषधे | ओषधे |

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| १७९ | १३ | राजसि | राजसि |
| ,, | १४ | हूतः | दूतः |
| ,, | २१ | सीदतां | सीदतां |
| १८० | ३ | अज्यते | अज्यते |
| ,, | १४ | दुछुनायै | दुच्छुनायै |
| १८१ | १ | वाचः | वाचः |
| ,, | १७ | कंकतः | कंकतः |
| ,, | १७ | षितीनऽकँकतः | सतीनऽकँकतः |
| ,, | २२ | मृगासः | मृगासः |
| १८२ | ३ | तिष्ठत | तिष्ठत |
| १८३ | ११ | विघ्नतः | विघ्नतः |
| ,, | १७ | इष्टिऽभिः | इष्टिऽभिः |
| ,, | २४ | सुऽभृतं | सुऽभृतः |
| १८४ | ७ | मर्तासः | मर्तासः |
| ,, | १५ | संऽइधानं | संऽइधानं |
| ,, | १७ | स्वसरेषु | स्वसरेषु |
| १८५ | ५ | सहस्रिणः | सहस्रिणः |
| ,, | ६ | न | न |
| ,, | ९ | अग्निः | अग्निः |
| ,, | १४ | कृष्टिषु | कृष्टिषु |
| ,, | १९ | शग्धि | शग्धि |
| ,, | २३ | मह्ना | मह्ना |
| १८६ | १ | इळितः | ईळितः |
| ,, | २ | पूर्वैः | पूर्वैः |
| ,, | १२ | ऋज्जु | ऋज्जु |

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| १८६ | १५ | अछिंद्रं | अच्छि॑द्रं |
| ,, | १६ | श्रुष्टी | श्रु॒ष्टी |
| ,, | १७ | त्वष्टा | त्वष्टा॑ |
| ,, | १९ | सु॒द॒य॒ति॒ | सु॒द॒या॒ति॒ |
| १८७ | ९ | पनं॑तः | पनं॑त |
| ,, | १८ | वाजं | वाजं॑ |
| १८८ | १० | य॒ज॒तेभ्यः | य॒ज॒तेभ्यः॑ |
| ,, | १५ | वसुऽपते | वसु॑ऽपते |
| ,, | २१ | स॒त्सि | स॒त्सि॒ |
| १८९ | ४ | अ॒ष्टाऽप॑वीभिः | अ॒ष्टाऽप॑दीभिः |
| ,, | ५ | वरेण्यः | वरे॑ण्यः |
| ,, | १० | अ॒ज॒रैः | अ॒जरैः॑ |
| ,, | ११ | अत्रिं | अत्रिं॑ |
| १९० | २ | तोकस्यं॑ | तो॒कस्यं॑ |
| ,, | २ | अप्र॑ऽयुछन् | अप्र॑ऽयुच्छन् |
| ,, | ४ | योनौ॑ः | योनैः॑ |
| ,, | ५ | संऽइ॑द्धे | संऽइ॑द्धे |
| ,, | १२ | अ॒ग्निः | अ॒ग्नि॒ः |
| ,, | १३ | प्र॒थ॒मः | प्र॒थ॒मः |
| ,, | १३ | र॒ळः | इ॒ळः |
| ,, | १६ | ह्यावा | श्या॒वा |
| ,, | १६ | रोहिता | रोहि॑ता |
| ,, | २२ | मनसा॑ | मन॑सा |
| ,, | २३ | स्पृहयत्ऽवर्णः | स्पृ॒ह॒यत्ऽवर्णः |
| ,, | २३ | अग्निः | अ॒ग्निः |

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| १९० | २३ | अ॒भि॒ऽभृशौ॑ | अ॒भि॒ऽमृशौ॑ |
| १९१ | ३ | व॒र्धयं॑ति | व॒र्धयँ॑ति |
| ,, | ५ | पू॒वीः | पू॒र्वीः |
| ,, | ८ | स्रि॒स्र॒ते॒ | सि॒स्र॒ते॒ |
| ,, | १८ | अप्र॑ऽयुछनू | अप्र॑ऽयच्छन् |
| ,, | १८ | ह॒रे | दू॒रे |
| ,, | २१ | कर्ति॑क्रदतः | कनि॑क्रदतः |
| १९२ | १ | मं॒दं॑तु | मंदं॑तु |
| ,, | १० | तृपत् | तृ॒पत् |
| ,, | १५ | हरि॑ऽस्यां | हरि॑ऽभ्यां |
| ,, | २० | त्रितार्य॑ | त्रि॒तार्य॑ |
| ,, | २१ | अर्बु॑दं | अर्बु॑दं |
| ,, | २२ | सूर्यः | सूर्यः॑ |
| १९३ | ४ | अंतरि॑क्षं | अं॒तरि॑क्षं |
| ,, | ९ | श्व॒घ्नि॑ऽइवं॑ | श्व॒घ्नीऽइ॑व |
| ,, | १० | पृ॒छंति॑ | पृ॒च्छंति॑ |
| ,, | २० | यध्य॑मानाः | यु॒ध्य॑मानाः |
| ,, | २३ | माह | महि॑ |
| १९४ | ९ | कील॑ | किल॑ |
| ,, | १० | इं॒द्र॒ | इं॒द्र॒ |
| ,, | १४ | यं॒ति | यं॒ति॒ |
| ,, | २३ | आ॒द्रात् | आ॒र्द्रात् |
| १९५ | ४ | दा॒सऽवेशा॑य | दा॒सऽवे॑शाय |
| १९६ | २ | अव | अव॑ |
| ,, | ११ | गभास्तिऽपूतं | गभ॑स्तिऽपूतं |

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| १९६ | १२ | कर्त॑न | कर्त॑न |
| ,, | १३ | उ॒त् | उत् |
| ,, | १३ | न॒य॒ध्वं | न॒य॒ध्वं॒ |
| ,, | १९ | वः | व॒ः |
| १९७ | ३ | गो॒भिः॑ | गोभि॑ः |
| ,, | ३ | धुनि॑ | धुनिँ॑ |
| ,, | १२ | धुनिं॑ | धुनिँ॑ |
| ,, | १४ | सु॒ऽस्तु॒तिं॑ | सु॒ऽस्तु॒तिं |
| ,, | १८ | क्षोणीभ्यां | क्षो॒णीभ्याँ॑ |
| ,, | १९ | इ॒न्द्रि॒यं | इ॒न्द्रि॒यं |
| ,, | २२ | वि॒दुऽत॑रः | वि॒दुःऽत॑रः |
| १९८ | ४ | तृ॒ष्णु॒हि | तृ॒ष्णु॒हि |
| ,, | ४ | व॒च॒स्युवं॑ | व॒च॒स्युवँ॑ |
| ,, | १९ | रोद॑सीइति॑ | रोद॑सी॒इति॑ |
| ,, | १९ | ज्योतिषा | ज्योति॑षा |
| ,, | २१ | ओजसा | ओज॑सा |
| १९९ | १२ | सु॒ऽउ॒क्तेन | सु॒ऽउ॒क्तेन॑ |
| ,, | १४ | द्वाभ्यां | द्वाभ्याँ॑ |
| ,, | २३ | श्रू॒र | शू॒र |
| २०० | १ | भ्जेष्ठे॑ | ज्ये॑ष्ठे |
| ,, | ११ | सूर्यस्य | सूर्य॑स्य |
| ,, | ११ | सुन्वते | सु॒न्व॒ते |
| ,, | १४ | र॒ध॒य॒त् | रं॒ध॒य॒त् |
| ,, | १७ | आ॒शु॒षणाः | आ॒शु॒षा॒णाः |
| ,, | १८ | गु॒त्स॒ऽमदाः | गृ॒त्स॒ऽम॒दाः |

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
| --- | --- | --- | --- |
| २०० | २० | अश्युः | अश्युः |
| २०१ | ३ | स्तुवंतं | स्तुवंतं |
| ,, | १२ | ऐरयत् | ऐरयत् |
| ,, | २१ | युध्मः | युध्मः |
| २०२ | १० | रोदसीइति | रोदसीइति |
| २०३ | ४ | दुःऽइतं | दुःऽइतं |
| २०४ | १ | वाजेपु | वाजेषु |
| ,, | १ | अभिऽदिप्स्वः | अभिऽदिप्स्वः |
| २०५ | ९ | अवतं | अवतं |
| २०६ | १ | साध्वीः | साध्वीः |
| २०७ | १३ | श्रद्धाऽमनाः | श्रद्धाऽमनाः |
| ,, | १७ | घृतऽस्नूः | घृतऽस्नूः |
| २०८ | ६ | आदित्याः | आदित्याः |
| ,, | १३ | मर्त्याय | मर्त्याय |
| ,, | २० | वसुऽदावा | वसुऽदावा |
| २०९ | १७ | यन्ति | न । यन्तिं |
| ,, | १७ | श्राम्यंति | श्राम्यंति |
| २११ | १९ | तिगितेन | तिगितेन |
| ,, | २४ | दव्यैं | दैव्यैं |
| २१२ | २१ | सिसासत | सिसासतः |
| २१४ | ३ | मनाये | मनायै |
| ,, | ४ | घृणिऽइव | घृणिऽइव |
| ,, | २२ | रुद्रस्य | रुद्रस्यं |
| ,, | २२ | रुद्रस्यं | रुद्रस्यं |
| २१५ | १२ | वयुनेषु | वयुनेषु |

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| २१५ | १९ | स्तोतृभ्यः | स्तोतृऽभ्यः |
| २१७ | ११ | उर्विया | उर्विया |
| २१८ | ७ | पृषतीभि | पृषतीभिः |
| ,, | २३ | अछं | अच्छं |
| २२० | २१ | स्याम | स्याम |
| २२१ | १ | अछं | अच्छं |
| ,, | १ | हूताऽइवं | दूताऽइव |
| २२२ | १४ | सहस्रंऽस्थूणे | सहस्रंऽस्थूणे |
| २२३ | ३ | सरस्वती | सरस्वती |
| ,, | ६ | जुषस्वं | जुषस्वं |
| ,, | १० | अद्रुहा | अद्रुहा |
| ,, | २१ | उद्गाताऽइव | उद्गाताऽइव |
| ,, | २४ | पुण्यं | पुण्यं |
| २२४ | १० | स्वसृणां | स्वसृणां |
| २२५ | २ | सपत्निइतिसऽपत्नि | सपत्निइतिसऽपत्नि |
| ,, | ६ | स्वसृणां | स्वसृणां |
| ,, | १० | हुवस्यन् | दुवस्यन् |
| ,, | २० | अमृतः | अमृतः |
| २२६ | १० | द्विता | द्विता |
| ,, | १२ | उभेइति | उभेइति |
| ,, | १७ | सनिष्यतः | सनिष्यतः |
| ,, | १८ | शविऽक्रतुं | कविऽक्रतुं |
| ,, | २३ | इछमानासः | इच्छमानासः |
| २२७ | २ | वाजंऽसातये | वाजंऽसातये |
| ,, | ७ | जीमिं | जामिं |

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| २२८ | ७ | विवेश | आविवेश |
| ,, | १५ | असि | असि |
| २२९ | ६ | विधंने | विधंते |
| ,, | ८ | अछ | अच्छ |
| ,, | १४ | उपाकेइति | उपाकेइति |
| ,, | १९ | मनुथैभिः | मनुष्यैभिः |
| २३० | ८ | स्तोतृणां | स्तोतृणां |
| २३१ | ४ | गुहा | गुहा |
| ,, | १८ | धिष्व | धिष्व |
| २३४ | ८ | दत्तात् | धत्तात् |
| ,, | १८ | वनस्यते | वनस्पते |
| २३६ | ४ | घः | घ |
| ,, | १३ | इधंते | इंधते |
| ,, | १५ | वेद | सः वेद |
| २३७ | १९ | यछतु | यच्छतु |
| ,, | २२ | हातारं | होतारं |
| २३८ | ७ | अछ | अच्छ |
| ,, | १४ | वि | वि |
| ,, | १७ | अकर्म | अकर्म |
| ,, | १८ | स्वद | स्वद |
| २३९ | ३ | पयोः | पायोः |
| ,, | ४ | अछिद्रा | अच्छिद्रा |
| ,, | ४ | जारितरिति | जरितरिति |
| ,, | १२ | विश्वाहा | विश्वाहा |
| ,, | २३ | घृतऽतिर्निक् | घृतऽनिर्निक् |

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| २४० | १५ | इछमानः | इच्छमानः |
| ,, | २१ | दधिष | दधिषे |
| २४१ | १ | अछ | अच्छ |
| ,, | १५ | अप्रऽयुछन् | अप्रऽयुच्छन् |
| २४२ | १४ | अछ+अछ | अच्छ+अच्छ |
| २४५ | ८ | इळेन्यः | ईळेन्यः |
| २४६ | १६ | अछ | अच्छ |
| ,, | १७ | योतिः | योनिः |
| २४७ | ९ | इछंति | इच्छंति |
| २४९ | २० | बोधि | बोधि |
| २५० | १२ | अछ | अच्छ |
| ,, | २३ | जतेभिः | जातेभिः |
| २५१ | १९ | दुहः | द्रुहः |
| ,, | २२ | वृणुहि | कृणुहि |
| २५२ | १६ | वृद्ध | वृद्ध |
| २५३ | १९ | अछ | अच्छ |
| ,, | २१ | अछ | अच्छ |
| २५४ | ३ | अछ | अच्छ |
| ,, | १६ | पीन्यानाऽइव | पीप्यानाऽइव |
| २५५ | २४ | अछ | अच्छ |
| २५६ | २३ | होतुः | होतुः |
| २५७ | ७ | वृजनै | वृजनै |
| २५८ | १ | पृतनाऽसह्याय | पृतनाऽसह्याय |
| ,, | ४ | अभिमातिऽसहौ | अभिमातिऽसहौ |
| २६० | ५ | विश्वपते | विश्पते |

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
| --- | --- | --- | --- |
| २६१ | १८ | तृणवः | तृष्णवः |
| २६२ | १२ | ध्रानाऽवृत् | ध्रानाऽवत् |
| २६४ | १५ | सिहःऽदां | सहःऽदां |
| ,, | २४ | आऽमुष्य | आऽमुष्य |
| २६५ | १७ | ज्यैष्ठ्याय | ज्यैष्ठ्याय |
| २६६ | १० | शर्मन् | शर्मन् |
| २६७ | ३ | ईदै | ईट्टै |
| ,, | ११ | वतिं | वीतं |
| ,, | १६ | जष्टं | जुष्टं |
| २७० | २० | त्वष्टा | त्वष्टा |
| ,, | २० | पूषण्ऽवंतं | पूषण्ऽवंतः |
| २७३ | १५ | बभर्ति | बिभर्ति |
| २७५ | २३ | जनेषुः | जनेषु |
| २७६ | १ | मध्वा | मध्वा |
| २७७ | २१ | अमत्या | अमर्त्या |
| २७८ | ७ | ऋतऽवरीः | ऋतऽवरी |
| ,, | ९ | उषसां | उषसां |
| ,, | २१ | ओजः | ओजः |
| ,, | २४ | अव | अव |
| २८० | २१ | स्यार्हः | स्पार्हः |
| २८४ | १३ | जामयेण | जामर्येण |
| ,, | २३ | व्रीणानः | प्रीणानः |
| ,, | २४ | स्फुर | स्फुर |
| २८६ | १ | सुऽरथां | सुऽरथाः |
| ,, | ४ | जनानां | जनानां |

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| २८६ | ७ | आनुषक् | आनुषक् |
| २८७ | १४ | घृषता | धृषता |
| २८८ | ८ | रत्नं | रत्नं |
| ,, | १३ | फल्व्यैन | फल्वैन |
| २८९ | ६ | सुअनीक | सुऽअनीक |
| २९० | २२ | आऽनमं | आऽनमं |
| २९१ | ११ | ब्रह्मा | ब्रह्मा |
| २९२ | १९ | इनधते | इनधते |
| २९३ | १९ | अग्निऽबद्धः | अग्निऽबद्धः |
| ,, | २३ | ऊध्वं | ऊर्ध्वं |
| २९४ | २ | रथेन | रथैन |
| २९५ | ५ | माहमा | महिमा |
| २९६ | २४ | त्विषः | त्विषः |
| ३०० | १३ | वय्पाय | वय्याय |
| ३०१ | ८ | उखऽब्छित् | उखऽछित् |
| ,, | ९ | विदुषे | विदुषे |
| ३०२ | ७ | ऋप्वः | ऋष्वः |
| ३०७ | ३ | पणिना | पणिना |
| ,, | ७ | क्षियंतः | क्षियंतः |
| ३०९ | ५ | धुस्वानेभिः | सुस्वानेभिः |
| ,, | १८ | एकः | एकः |
| ३१० | १५ | आस्यात् | आस्यत् |
| ३११ | १८ | महान् | महान् |
| ,, | १८ | महीभिः | महीभिः |
| ३१३ | ८ | यज्ञं | यज्ञं |

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| ३१५ | ९ | मरुत्ऽभिः | मरुत्ऽभिः |
| ३१६ | २, ८, २१ | इंद्र–इंद्र, रायः–रायः | देव्यस्य–देव्यस्य, |
| ३१७ | १५ | ऋभुं | ऋभुं |
| ३१८ | ५, २२ | सनुंऽतरः–सनुंऽतरः, | उच्छंतीः–उच्छंतीः |
| ,, | २१, २४ | ऋतुऽप्राः–ऋतुऽप्राः, | रघ्विःइव–रघ्विःऽइव |
| ३२२ | १७ | युवं | युवं |
| ३२४ | १४ | वसुंधितीइतिवसुंऽधिवी | वसुंधितीइतिवसुऽधिती |
| ३२५ | ५, १० | विऽरप्शं–विऽरप्शं, | पिते–पित्रे |
| ३२६ | १० | रवतीः | रेवतीः |
| ३२७ | १७ | छर्र्दिः | छर्दिः |
| ३२९ | १९ | यजतेइति | यजतेइति |
| ३३१ | ४, ८ | ततक्षुः–ततक्षुः | ऊर्मयः–ऊर्मयः |
| ,, | १३, १८ | जुषणः–जुषाणः | समुद्रे–समुद्रे |
| ३३३ | २, ८, १५ | हिरण्यऽदंतं-हिरण्यऽदंतं | यः–ये, अर्य्यैः–ऐर्य्यैः |
| ३३४ | २० | ऊहे | ऊहे |
| ३३५ | २४ | हृदा | हृदा |
| ३३६ | १० | नः | नः |
| ३३८ | २ | पूर्व्यं | पूर्व्यं |
| ३३९ | ८ | सऽयंति | संऽयंति |
| ३४१ | २२ | पनीयसी | पनीयती |
| ३४२ | २३ | तव्यांसं | तव्यांसं |
| ३४९ | १७ | परिऽतक्यक्यायाः | परिऽतक्म्यायाः |
| ३४९ | १८ | परिऽतक्या | परिऽतक्म्या |
| ३५० | २२ | परिऽतक्यायां | परिऽतक्म्यायां |
| ३५४ | ७ | शर्त्रि | शर्त्रि |

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| ३५६ | ११ | नमतां | नमंतां |
| ३६६ | २६ | द्युम्नं | द्युम्नं |
| ३६७ | १७ | अत्रिऽवत् | अत्रिऽवत् |
| ३७२ | ११ | शस्यतं | शस्यतें |
| ३७५ | २२ | उत्ऽतमे | उत्ऽतमे |
| ३८२ | २५ | प्रियतमं | प्रियऽतमं |
| ३८५ | १६ | प्रतं | प्रतिं |
| ३८७ | २, २५ | रेतः–रेतः, | भूमिं–भूमिं |
| ३९४ | ८ | वर्षऽभिः | वृषऽभिः |
| ३९६ | १९, २२ | चिकंतत्–चिकेंतत् | ध्रुवं–ध्रुवं |
| ३९७ | १२ | दूरेऽदृशां | दूरेऽदृशां |
| ४०१ | १ | अकुऽयंतें | अंकुऽयंतें |
| ,, | २३ | हव्यऽदातंये | हव्यऽदातंये |
| ४०५ | ७ | क्षोदः | क्षोदंः |
| ४१७ | ७ | कृष्टीः | कृष्टीः |
| ४२६ | २ | पपीनां | पणीनां |
| ४३५ | ४ | आदिते | अदित |
| ४३९ | १३, १६ | अष्ट्रां–अष्ट्रां | कामंन–कामेंन |



॥ श्रीः ॥

# अथ ऋक्संहितापदपाठः

## अथ पञ्चमाष्टके प्रथमोध्यायः

हरिः ॐ ॥ स्तुषे । नरा । दिवः । अस्य । प्रऽसंता । अश्विना । हुवे । जरमाणः । अर्कैः ॥ या । सद्यः । उस्रा । विऽउषि । ज्मः । अंतान् । युयूषतः । परि । उरु । वरांसि ॥ ता । यज्ञं । आ । शुचिऽभिः । चक्रमाणा । रथस्य । भानुं । रुरुचुः । रजःऽभिः ॥ पुरु । वरांसि । अमिता । मिमाना । अपः । धन्वानि । अति । याथः । अज्रान् ॥ ता । ह । त्यत् । वर्तिः । यत् । अरध्रं । उग्रा । इत्था । धियः । ऊहथुः । शश्वत् । अश्वैः ॥ मनःऽजवेभिः । इषिरैः । शयध्यै । परि । व्यथिः । दाशुषः । मर्त्यस्य ॥ ता । नव्यसः । जरमाणस्य । मन्म । उप । भूषतः । युयुजानसप्तीइतियुयुजानऽसप्ती ॥ शुभं । पृक्षं । इषं । ऊर्जं । वहंता । होता । यक्षत् । प्रत्नः । अध्रुक् । युवाना । ता । वल्गूइति । दस्रा । पुरुशाकऽतमा । प्रत्ना । नव्यसा । वचसा । आ । विवासे ॥ या । शंसते । स्तुवते । शंऽभविष्ठा । बभूवतुः । गृणते । चित्ररातीइतिचित्रऽराती ॥ १ ॥ ता । भुज्युं । विऽभिः । अत्ऽभ्यः । समुद्रात् । तुग्रस्य । सूनुं । ऊहथुः । रजःऽभिः ॥ अरेणुऽभिः । योजनेभिः । भुजंता । पतत्रिऽभिः । अर्णसः । निः । उपऽस्थात् ॥ वि । जयुषा । रथ्या । यातं । आद्रिं । श्रुतं । हवं । वृषणा । वध्रिऽमत्याः ॥ दशस्यंता । शयवे । पिप्यथुः । गां । इति । च्यवाना । सुऽमतिं ।

भुरण्यूइति ॥ यत् । रोदसीइति । प्रऽदिवः । अस्ति । भूम । हेळः । देवानां । उत । मर्त्यऽत्रा ॥ तत् । आदित्याः । वसवः । रुद्रियासः । रक्षःऽयुजे । तपुः । अघं । दधात ॥ यः । ईं । राजानौ । ऋतुऽथा । विऽदधत् । रजसः । मित्रः । वरुणः । चिकेतत् ॥ गंभीराय । रक्षसे । हेतिं । अस्य । द्रोघाय । चित् । वचसे । आनवाय । अंतरः । चक्रैः । तनयाय । वर्तिः । द्युऽमता । आ । यातं । नृऽवता । रथेन ॥ सनुत्येन । त्यजसा । मर्त्यस्य । वनुष्यतां । अपि । शीर्षा । ववृक्तं ॥ आ । परमाभिः । उत । मध्यमाभिः । नियुत्ऽभिः । यातं । अवमाभिः । अर्वाक् ॥ दृळ्हस्य । चित् । गोऽमतः । वि । व्रजस्य । दुरः । वर्तं । गृणते । चित्रराती-इतिचित्रऽराती ॥ २ ॥ कं । त्या । वल्गूइति । पुरुऽहूता । अद्य । दूतः । न । स्तोमः । अविदत् । नमस्वान् ॥ आ । यः । अर्वाक् । नासत्या । ववर्त । प्रेष्ठा । हि । असथः । अस्य । मन्मन् ॥ अरं । मे । गंतं । हवनाय । अस्मै । गृणाना । यथा । पिबाथः । अंधः ॥ परि । ह । त्यत् । वर्तिः । याथः । रिषः । न । यत् । परः । न । अंतरः । तुतुर्यात् ॥ अकारि । वां । अंधसः । वरीमत् । अस्तारि । बर्हिः । सुप्रऽअयनतमं ॥ उत्तानऽहस्तः । युवऽयुः । ववंद । आ । वां । नक्षंतः । अद्रयः । आंजन् ॥ ऊर्ध्वः । वां । अग्निः । अध्वरेषु । अस्थात् । प्र । रातिः । एति । जूर्णिनी । घृताची ॥ प्र । होता । गूर्तऽमनाः । उराणः । अयुक्त । यः । नासत्या । हवीमन् ॥ अधि । श्रिये । दुहिता । सूर्यस्य । रथं । तस्थौ । पुरुऽभुजा । शतऽऊतिं ॥ प्र । मायाभिः । मायिना । भूतं । अत्र । नरा । नृतूइति । जनिमन् । यज्ञियानां ॥ ३ ॥ युवं । श्रीभिः । दर्शताभिः । आभिः । शुभे । पुष्टिं । ऊहथुः । सूर्यायाः ॥ प्र । वां । वयः । वपुषे । अनु । पप्तन् । नक्षत् । वाणी । सुऽस्तुता । धिष्ण्या । वां ॥ आ । वां । वयः । अश्वासः । वहिष्ठाः । अभि । प्रयः । नासत्या । वहंतु ॥ प्र । वां । रथः । मनःऽजवाः । असर्जि । इषः । पृक्षः । इषिधः । अनु । पूर्वीः । पुरु । हि । वां । पुरुऽभुजा । देष्णं ।

धेनुं । नः । इषं । पिन्वतं । असक्रां ॥ स्तुतः । च । वां । माध्वीइति ।
सुऽस्तुतिः । च । रसाः । च । ये । वां । अनु । रातिं । अग्मन् ॥
उत । मे । ऋज्रेइति । पुरयस्य । रघ्वीइति । सुऽमीळ्हे । शतं ।
पेरुके । च । पक्वा ॥ शांडः । दात् । हिरणिनः । स्मत्ऽदिष्टीन् । दश ।
वशासः । अभिऽसाचः । ऋष्वान् ॥ सं । वां । शता । नासत्या ।
सहस्रा । अश्वानां । पुरुऽपंथाः । गिरे । दात् ॥ भरत्ऽवाजाय ।
वीर । नु । गिरे । दात् । हता । रक्षांसि । पुरुऽदंससा । स्युरितिस्युः ॥
आ । वां । सुम्ने । वरिमन् । सूरिऽभिः । स्यां ॥ ४ ॥ उत् । ऊँइति ।
श्रिये । उषसः । रोचमानाः । अस्थुः । अपां । न । ऊर्मयः । रुशंतः ॥
कृणोति । विश्वा । सुऽपथा । सुऽगानि । अभूत् । ऊँइति । वस्वी ।
दक्षिणा । मघोनी ॥ भद्रा । ददृक्षे । उर्विया । वि । भासि । उत् ।
ते । शोचिः । भानवः । द्यां । अपप्तन् ॥ आविः । वक्षः । कृणुषे ।
शुंभमाना । उषः । देवि । रोचमाना । महःऽभिः ॥ वहंति । सीं ।
अरुणासः । रुशंतः । गावः । सुऽभगां । उर्विया । प्रथानां । अप ।
ईजते । शूरः । अस्ताऽइव । शत्रून् । बाधते । तमः । अजिरः । न ।
वोळ्हा ॥ सुऽगा । उत । ते । सुऽपथा । पर्वतेषु । अवाते । अपः ।
तरसि । स्वभानोइतिस्वऽभानो ॥ सा । नः । आ । वह । पृथुऽयामन् ।
ऋष्वे । रयिं । दिवः । दुहितः । इषयध्यै ॥ सा । आ । वह । या ।
उक्षऽभिः । अवाता । उषः । वरं । वहसि । जोषं । अनु । त्वं । दिवः ।
दुहितः । या । ह । देवी । पूर्वऽहूतौ । मंहना । दर्शता । भूः ॥ ० ॥
॥ ५ ॥ एषा । स्या । नः । दुहिता । दिवःऽजाः । क्षितीः । उच्छंती ।
मानुषीः । अजीगरिति । या । भानुना । रुशता । राम्यासु । अज्ञायि ।
तिरः । तमसः । चित् । अक्तून् । वि । तत् । ययुः । अरुणयुक्ऽभिः ।
अश्वैः । चित्रं । भांति । उषसः । चंद्रऽरथाः । अग्रं । यज्ञस्य । बृहतः ।
नयंतीः । वि । ताः । बाधंते । तमः । ऊर्म्यायाः । श्रवः । वाजं ।
इषं । ऊर्जं । वहंतीः । नि । दाशुषे । उषसः । मर्त्याय । मघोनीः ।

वीरऽवत् । पत्यमानाः । अवः । धात ॥ विधते । रत्नं । अद्य । इदा । हि । वः । विधते । रत्नं । अस्ति । इदा । वीराय । दाशुषे । उषसः । इदा । विप्राय । जरते । यत् । उक्था । नि । स्म । माऽवते । वहथ । पुरा । चित् । इदा । हि । ते । उषः । अद्रिसानोइत्यद्रिऽसानो । गोत्रा । गवां । अंगिरसः । गृणंति । वि । अर्केण । बिभिदुः । ब्रह्मणा । च । सत्या । नृणां । अभवत् । देवऽहूतिः । उच्छ । दिवः । दुहितरिति । प्रत्नऽवत् । नः । भरद्वाजऽवत् । विधते । मघोनि ॥ सुऽवीरं । रयिं । गृणते । रिरीहि । उरुऽगायं । अधि । धेहि । श्रवः । नः ॥ ६ ॥ वपुः । नु । तत् । चिकितुषे । चित् । अस्तु । समानं । नाम । धेनु । पत्यमानं ॥ मर्तेषु । अन्यत् । दोहसे । पीपाय । सकृत् । शुक्रं । दुदुहे । पृश्निः । ऊधः ॥ ये । अग्नयः । न । शोशुचन् । इधानाः । द्विः । यत् । त्रिः । मरुतः । ववृधंत । अरेणवः । हिरण्ययासः । एषां । साकं । नृम्णैः । पौंस्येभिः । च । भूवन् ॥ रुद्रस्य । ये । मीळ्हुषः । संति । पुत्राः । यान् । चो इति । नु । दाधृविः । भरध्यै ॥ विदे । हि । माता । महः । मही । सा । सा । इत् । पृश्निः । सुऽभ्वे । गर्भं । आ । अधात् ॥ न । ये । ईषंते । जनुषः । अया । नु । अंतरिति । संतः । अवद्यानि । पुनानाः ॥ निः । यत् । दुह्रे । शुचयः । अनु । जोषं । अनु । श्रिया । तन्वं । उक्षमाणाः ॥ मक्षु । न । येषु । दोहसे । चित् । अयाः । आ । नाम । धृष्णु । मारुतं । दधानाः । न । ये । स्तौनाः । अयासः । मह्ना । नु । चित् । सुऽदानुः । अव । यासत् । उग्रान् ॥ ७ ॥ ते । इत् । उग्राः । शवसा । धृष्णुऽसेनाः । उभे इति । युजंत । रोदसी इति । सुमेके इति सुऽमेके ॥ अध । स्म । एषु । रोदसी । स्वऽशोचिः । आ । अमवत्ऽसु । तस्थौ । न । रोकः ॥ अनेनः । वः । मरुतः । यामः । अस्तु । अनश्वः । चित् । यं । अजति । अरथीः ॥ अनवसः । अनभीशुः । रजःऽतूः । वि । रोदसी इति । पथ्याः । याति । साधन् ॥ ० ॥ नु । अस्ति । मरुतः । यं । अवथ । वाजऽसातौ ॥ ० ॥ यं । अप्ऽसु । सः । व्रजं ।

दता । पार्ये । अध । द्योः ॥ प्र । चित्रं । अर्कं । गृणते । तुराय ।
मारुताय । स्वऽतवसे । भरध्वं । ये । सहांसि । सहसा । सहंते ।
रेजंते । अग्ने । पृथिवी । मखेभ्यः ॥ त्विषिऽमंतः । अध्वरस्यऽइव । दिद्युत् ।
तृषुऽच्यवसः । जुह्वः । न । अग्नेः ॥ अर्चत्रयः । धुनयः । न । वीराः ।
भ्राजत्ऽजन्मानः । मरुतः । अधृष्टाः ॥ तं । वृधंतं । मारुतं । भ्राजत्ऽ-
ऋष्टिं । रुद्रस्य । सूनुं । हवसा । आ । विवासे ॥ दिवः । शर्धाय ।
शुचयः । मनीषाः । गिरयः । न । आपः । उग्राः । अस्पृध्रन् ॥ ८ ॥
विश्वेषां । वः । सतां । ज्येष्ठऽतमा । गीःऽभिः । मित्रावरुणा ।
ववृधध्यै ॥ सं । या । रश्माऽइव । यमतुः । यमिष्ठा । द्वा । जनान् ।
असमा । बाहुऽभिः । स्वैः ॥ इयं । मत् । वां । प्र । स्तृणीते । मनीषा ।
उप । प्रिया । नमसा । बर्हिः । अच्छ ॥ यंतं । नः । मित्रावरुणौ ।
अधृष्टं । छर्दिः । यत् । वां । वरूथ्यं । सुदानूइतिसुऽदानू ॥ आ ।
यातं । मित्रावरुणा । सुऽशस्ति । उप । प्रिया । नमसा । हूयमाना ॥
सं । यौ । अप्नःऽस्थः । अपसाऽइव । जनान् । श्रुधिऽयतः । चित् ।
यतथः । महिऽत्वा ॥ अश्वा । न । या । वाजिना । पूतबंधूइतिपूतऽ-
बंधू । ऋता । यत् । गर्भं । अदितिः । भरध्यै ॥ प्र । या । महि ।
महांता । जायमाना । घोरा । मर्ताय । रिपवे । नि । दीधरितिदीधः ।
विश्वे । यत् । वां । मंहना । मंदमानाः । क्षत्रं । देवासः । अदधुः ।
सऽजोषाः । परि । यत् । भूथः । रोदसीइति । चित् । उर्वीइति ।
संति । स्पशः । अदब्धासः । अमूराः ॥ ९ ॥ ता । हि । क्षत्रं ।
धारयेथेइति । अनु । द्यून् । दृंहेथेइति । सानुं । उपमात्ऽइव । द्योः ।
दृळ्हः । नक्षत्रः । उत । विश्वऽदेवः । भूमिं । आ । अतान् । द्यां ।
धासिना । आयोः ॥ ता । विग्रं । धैथेइति । जठरं । पृणध्यै । आ ।
यत् । सद्म । सऽभृतयः । पृणंति । न । मृष्यंते । युवतयः । अवाताः ।
वि । यत् । पयः । विश्वऽजिन्वा । भरंते ॥ ता । जिह्वया । सदं ।
आ । इदं । सुऽमेधाः । आ । यत् । वां । सत्यः । अरतिः । ऋते ।

भूत् । तत् । वां । महिऽत्वं । घृतऽअन्नौ । अस्तु । युवं । दाशुषे । वि । चयिष्टं । अंहः । प्र । यत् । वां । मित्रावरुणा । स्पूर्धन् । प्रिया । धाम । युवऽधिता । मिनंति । न । ये । देवासः । ओहसा । न । मर्ताः । अयज्ञऽसाचः । अप्यः । न । पुत्राः । वि । यत् । वाचं । कीस्तासः । भरंते । शंसंति । के । चित् । निऽविदः । मनानाः । आत् । वां । ब्रवाम । सत्यानि । उक्था । नकिः । देवेभिः । यतथः । महिऽत्वा । अवोः । इत्था । वां । छर्दिषः । अभिष्टौ । युवोः । मित्रावरुणौ । अस्कृधोयु ॥ अनु । यत् । गावः । स्फुरान् । ऋजिप्यं । धृष्णुं । यत् । रणे । वृषणं । युनजन् ॥ १० ॥ श्रुष्टी । वां । यज्ञः । उत्ऽयतः । सऽजोषाः । मनुष्वत् । वृक्तऽबर्हिषः । यजध्यै ॥ आ । यः । इद्रावरुणौ । इषे । अद्य । महे । सुम्नाय । महे । आऽववर्तत् ॥ ता । हि । श्रेष्ठा । देवऽताता । तुजा । शूराणां । शविष्ठा । ता । हि । भूतं ॥ मघोनां । मंहिष्ठा । तुविऽशुष्मा । ऋतेन । वृत्रऽतुरा । सर्वऽसेना । ता । गृणीहि । नमस्येभिः । शूषैः । सुम्नेभिः । इद्रावरुणा । चकाना ॥ वज्रेण । अन्यः । शवसा । हंति । वृत्रं । सिसक्ति । अन्यः । वृजनेषु । विप्रः ॥ ग्नाः । च । यत् । नरः । च । ववृधंत । विश्वे । देवासः । नरां । स्वऽगूर्ताः । प्र । एभ्यः । इंद्रावरुणा । महिऽत्वा । द्यौः । च । पृथिवि । भूतं । उर्वीइति । सः । इत् । सुऽदानुः । स्वऽवान् । ऋतऽवा । इंद्रा । यः । वां । वरुणा । दाशति । त्मन् ॥ इषा । सः । द्विषः । तरेत् । दास्वान् । वंसत् । रयिं । रयिऽवतः । च । जनान् ॥ ११ ॥ यं । युवं । दाशुऽअध्वराय । देवा । रयिं । धत्थः । वसुऽमंतं । पुरुऽक्षुं ॥ अस्मेइति । सः । इंद्रावरुणौ । अपि । स्यात् । प्र । यः । भनक्ति । वनुषां । अशस्तीः । उत । नः । सुऽत्रात्रः । देवऽगोपाः । सूरिऽभ्यः । इंद्रावरुणा । रयिः । स्यात् ॥ येषां । शुष्मः । पृतनासु । सह्वान् । प्र । सद्यः । द्युम्ना । तिरते । ततुरिः । नु । नः । इंद्रावरुणा । गृणाना । पृंक्तं । रयिं । सौश्रवसाय । देवा । इत्था ।

गृणंतः । महिनस्य । शर्धः । अपः । न । नावा । दुःऽइता । तरेम ॥ प्र । सम्ऽराजे । बृहते । मन्म । नु । प्रियं । अर्च । देवाय । वरुणाय । सऽप्रथः । अयं । यः । उर्वीइति । महिना । महिऽव्रतः । क्रत्वा । विऽभाति । अजरः । न । शोचिषा ॥ इंद्रावरुणा । सुतऽपौ । इमं । सुतं । सोमं । पिबतं । मद्यं । धृतऽव्रता ॥ युवोः । रथः । अध्वरं । देवऽवीतये । प्रति । स्वसरं । उप । याति । वीतये ॥ इंद्रावरुणा । मधुमत्ऽतमस्य । वृष्णः । सोमस्य । वृषणा । आ । वृषेथां ॥ इदं । वां । अंधः । परिऽसिक्तं । अस्मेइति । आऽसद्य । अस्मिन् । बर्हिषि । मादयेथां ॥ १२ ॥

सं । वां । कर्मणा । सं । इषा । हिनोमि । इंद्राविष्णूइति । अपसः । पारे । अस्य ॥ जुषेथां । यज्ञं । द्रविणं । च । धत्तं । अरिष्टैः । नः । पथिऽभिः । पारयंता ॥ या । विश्वासां । जनितारा । मतीनां । इंद्राविष्णूइति । कलशा । सोमऽधाना ॥ प्र । वां । गिरः । शस्यमानाः । अवंतु । प्र । स्तोमासः । गीयमानासः । अर्कैः ॥ इंद्राविष्णूइति । मदपतीइतिमदऽपती । मदानां । आ । सोमं । यातं । द्रविणोइति । दधाना । सं । वां । अंजंतु । अक्तुऽभिः । मतीनां । सं । स्तोमासः । शस्यमानासः । उक्थैः ॥ ० ॥ अभिमातिऽसहः । इंद्राविष्णूइति । सधऽमादः । वहंतु ॥ जुषेथां । विश्वा । हवना । मतीनां । उप । ब्रह्माणि । शृणुतं । गिरः । मे ॥ इंद्राविष्णूइति । तत् । पनयाय्यं । वां । सोमस्य । मदे । उरु । चक्रमाथेइति । अकृणुतं । अंतरिक्षं । वरीयः । अप्रथतं । जीवसे । नः । रजांसि । इंद्राविष्णूइति । हविषा । ववृधाना । अग्रऽअद्वाना । नमसा । रातऽहव्या । घृतासुतीइतिघृतऽआसुती । द्रविणं । धत्तं । अस्मेइति । समुद्रः । स्थः । कलशः । सोमऽधानः । इंद्राविष्णूइति । पिबतं । मध्वः । अस्य । सोमस्य । दस्रा । जठरं । पृणेथां । आ । वां । अंधांसि । मदिराणि । अग्मन् ॥ ० ॥ हवं । मे । उभा । जिग्यथुः । न । परा । जयेथेइति । न । परा । जिग्ये । कतरः । चन । एनोः । इंद्रः । च । विष्णोइति । यत् ।

अपस्पृधेथां । त्रेधा । सहस्रं । वि । तत् । ऐरयेथां ॥ १३ ॥
घृतवंतीइतिघृतऽवंती । भुवनानां । अभिऽश्रियां । उर्वीइति । पृथ्वीइति । मधुदुघेइतिमधुऽदुघे । सुऽपेशसा । द्यावापृथिवीइति । वरुणस्य । धर्मणा । विस्कंभितेइतिविऽस्कंभिते । अजरेइति । भूरिऽरेतसा । असंश्चंतीइति । भूरिधारेइतिभूरिऽधारे । पयस्वतीइति । घृतं । दुहातेइति । सुऽकृते । शुचिव्रतेइतिशुचिऽव्रते । राजंतीइति । अस्य । भुवनस्य । रोदसीइति । अस्मेइति । रेतः । सिंचतं । यत् । मनुःऽहितं । यः । वां । ऋजवे । क्रमणाय । रोदसीइति । मर्तः । ददाश । धिषणेइति । सः । साधति । प्र । प्रऽजाभिः । जायते । धर्मणः । परि । युवोः । सिक्ता । विषुऽरूपाणि । सऽव्रता । घृतेन । द्यावापृथिवीइति । अभिवृतेइत्यभिऽवृते । घृतऽश्रियां । घृतऽपृचां । घृतऽवृधां । उर्वीइति । पृथ्वीइति । होतृऽवूर्ये । पुरोहितेइतिपुरःऽहिते । तेइति । इत् । विप्राः । ईळते । सुम्नं । इष्टये । मधु । नः । द्यावापृथिवीइति । मिमिक्षतां । मधुऽश्चुता । मधुदुघेइतिमधुऽदुघे । मधुव्रतेइतिमधुऽव्रते । दधानेइति । यज्ञं । द्रविणं । च । देवता । महि । श्रवः । वाजं । अस्मेइति । सुऽवीर्यं । ऊर्जं । नः । द्यौः । च । पृथिवी । च । पिन्वतां । पिता । माता । विश्वऽविदा । सुऽदंससा । संरराणेइतिसंऽरराणे । रोदसीइति । विश्वऽशंभुवा । सनिं । वाजं । रयिं । अस्मेइति । सं । इन्वतां ॥ १४ ॥ ० ॥
हिरण्ययां । बहूइति । अयंस्त । सवनाय । सुऽक्रतुः । घृतेन । पाणीइति । अभि । प्रुष्णुते । मखः । युवा । सुऽदक्षः । रजसः । विऽधर्मणि । देवस्य । वयं । सवितुः । सवीमनि । श्रेष्ठे । स्याम । वसुनः । च । दावने । यः । विश्वस्य । द्विऽपदः । यः । चतुःऽपदः । निऽवेशने । प्रऽसवे । च । असि । भूमनः । अदब्धेभिः । सवितरिति । पायुऽभिः । त्वं । शिवेभिः । अद्य । परि । पाहि । नः । गयं । हिरण्यऽजिह्वः । सुविताय

नव्यसे । रक्ष । माकिः । नः । अघऽशंसः । ईशत ॥ ० ॥ दमूनाः । हिरण्यऽपाणिः । प्रतिऽदोषं । अस्थात् । अयःऽहनुः । यजतः । मंद्रऽजिह्वः । आ । दाशुषे । सुवति । भूरि । वामं । उत् । ऊँइति । अयान् । उपवक्ताऽइव । बाहूइति । हिरण्यया । सविता । सुऽप्रतीका । दिवः । रोहांसि । अरुहत् । पृथिव्याः । अरीरमत् । पतयत् । कत् । चित् । अभ्वं । वामं । अद्य । सवितः । वामं । ऊँइति । श्वः । दिवेऽदिवे । वामं । अस्मभ्यं । सावीः । वामस्य । हि । क्षयस्य । देव । भूरेः । अया । धिया । वामऽभाजः । स्याम ॥ १५ ॥ इंद्रासोमा । महि । तत् । वां । महिऽत्वं । युवं । महानि । प्रथमानि । चक्रथुः । युवं । सूर्यं । विविदथुः । युवं । स्वः । विश्वा । तमांसि । अहतं । निदः । च । इंद्रासोमा । वासयथः । उषसं । उत् । सूर्यं । नयथः । ज्योतिषा । सह । उप । द्यां । स्कंभथुः । स्कंभनेन । अप्रथतं । पृथिवीं । मातरं । वि । इंद्रासोमौ । अहिं । अपः । परिऽस्थां । हथः । वृत्रं । अनु । वां । द्यौः । अमन्यत । प्र । अर्णांसि । ऐरयतं । नदीनां । आ । समुद्राणि । पप्रथुः । पुरूणि । इंद्रासोमा । पक्वं । आमासु । अंतः । नि । गवां । इत् । दधतुः । वक्षणासु । जगृभथुः । अनपिऽनद्धं । आसु । रुशंत् । चित्रासु । जगतीषु । अंतः । इति । इंद्रासोमा । युवं । अंग । तरुत्रं । अपत्यऽसाचं । श्रुत्यं । रराथेइति । युवं । शुष्मं । नर्यं । चर्षणिऽभ्यः । सं । विव्यथुः । पृतनाऽसहं । उग्रा ॥ १६ ॥ यः । अद्रिऽभित् । प्रथमऽजाः । ऋतऽवा । बृहस्पतिः । आंगिरसः । हविष्मान् । द्विबर्हऽज्मा । प्राघर्मऽसत् । पिता । नः । आ । रोदसीइति । वृषभः । रोरवीति । जनाय । चित् । यः । ईवते । ऊँइति । लोकं । बृहस्पतिः । देवऽहूतौ । चकार । घ्नन् । वृत्राणि । वि । पुरः । दर्दरीति । जयन् । शत्रून् । अमित्रान् । पृत्ऽसु । सहन् । बृहस्पतिः । सं । अजयत् । वसूनि । महः । व्रजान् । गोऽमतः । देवः । एषः ।

अपः । सिसासन् । स्वः । अप्रतिऽइतः । बृहस्पतिः । हंति । अमित्रं । अर्कैः ॥ १७ ॥ सोमारुद्रा । धारयेथां । असुर्यं । प्र । वां । इष्टयः । अरं । अश्नुवंतु । दमेऽदमे । सप्त । रत्ना । दधाना । शं । नः । भूतं । द्विऽपदे । शं । चतुःऽपदे । सोमारुद्रा । वि । वृहतं । विषूचीं । अमीवा । या । नः । गयं । आऽविवेश । आरे । बाधेथां । निःऽऋतिं । पराचैः । अस्मेइति । भद्रा । सौश्रवसानि । संतु । सोमारुद्रा । युवं । एतानि । अस्मेइति । विश्वा । तनूषु । भेषजानि । धत्तं । अव । स्यतं । मुंचतं । यत् । नः । असित । तनूषु । बद्धं । कृतं । एनः । असत् ॥ तिग्मऽआयुधौ । तिग्महेतीइतितिग्मऽहेती । सुऽशेवौ । सोमारुद्रौ । इह । सु । मृळतं । नः । प्र । नः । मुंचतं । वरुणस्य । पाशात् । गोपायतं । नः । सुऽमनस्यमाना ॥ १८ ॥ जीमूतस्यऽइव । भवति । प्रतीकं । यत् । वर्मी । याति । सऽमदां । उपऽस्थे ॥ अनाविद्धया । तन्वा । जय । त्वं । सः । त्वा । वर्मणः । महिमा । पिपर्तु । धन्वना । गाः । धन्वना । आजिं । जयेम । धन्वना । तीव्राः । सऽमदः । जयेम । धनुः । शत्रोः । अपऽकामं । कृणोति । धन्वना । सर्वाः । प्रऽदिशः । जयेम । वक्ष्यंतीऽइव । इत् । आ । गनीगंति । कर्णं । प्रियं । सखायं । परिऽसस्वजाना ॥ योषाऽइव । शिंक्ते । विऽतता । अधि । धन्वन् । ज्या । इयं । समने । पारयंती । तेइति । आचरंतीइत्याऽचरंती । समनाऽइव । योषा । माताऽइव । पुत्रं । बिभृतां । उपऽस्थे । अप । शत्रून् । विध्यतां । संविदानेइतिसंऽविदाने । आर्त्नीइति । इमेइति । विस्फुरंतीइतिविऽस्फुरंती । अमित्रान् । बह्वीनां । पिता । बहुः । अस्य । पुत्रः । चिश्चा । कृणोति । समना । अवऽगत्य । इषुऽधिः । संकाः । पृतनाः । च । सर्वाः । पृष्ठे । निऽनद्धः । जयति । प्रऽसूतः ॥ १९ ॥ रथे । तिष्ठन् । नयति । वाजिनः । पुरः । यत्रऽयत्र । कामयंते । सुऽसारथिः । अभीशूनां । महिमानं । पनायत । मनः । पश्चात् । अनु । यच्छंति । रश्मयः । तीव्रान् । घोषान् ।

कृण्वते । वृषऽपाणयः । अश्वाः । रथेभिः । सह । वाजयंतः । अवऽक्रामंतः । प्रऽपदैः । अमित्रान् । क्षिणंति । शत्रून् । अनपऽव्ययंतः । रथऽवाहनं । हविः । अस्य । नाम । यत्र । आयुधं । निऽहितं । अस्य । वर्म । तत्र । रथं । उप । शग्मं । सदेम । विश्वाहा । वयं । सुऽमनस्यमानाः । स्वादुऽसंसदः । पितरः । वयःऽधाः । कृच्छ्रेऽश्रितः । शक्तिऽवंतः । गभीराः । चित्रऽसेनाः । इषुऽवलाः । अमृध्राः । सतःऽवीराः । उरवः । व्रातऽसहाः । ब्राह्मणासः । पितरः । सोम्यासः । शिवेइति । नः । द्यावापृथिवीइति । अनेहसा । पूषा । नः । पातु । दुःऽइतात् । ऋतऽवृधः ॥ ० ॥ २० ॥ सुऽपर्णं । वस्ते । मृगः । अस्याः । दंतः । गोभिः । संऽनद्धा । पतति । प्रऽसूता । यत्र । नरः । सं । च । वि । च । द्रवंति । तत्र । अस्मभ्यं । इषवः । शर्म । यंसन् । ऋजीते । परि । वृंग्धि । नः । अश्मा । भवतु । नः । तनूः । सोमः । अधि । ब्रवीतु । नः । अदितिः । शर्म । यच्छतु । आ । जंघंति । सानु । एषां । जघनान् । उप । जिघ्नते । अश्वऽअजनि । प्रऽचेतसः । अश्वान् । समत्ऽसु । चोदय । अहिःऽइव । भोगैः । परि । एति । बाहुं । ज्यायाः । हेतिं । परिऽबाधमानः । हस्तऽघ्नः । विश्वा । वयुनानि । विद्वान् । पुमान् । पुमांसं । परि । पातु । विश्वतः । आलऽअक्ता । या । रुरुऽशीर्ष्णी । अथोइति । यस्याः । अयः । मुखं । इदं । पर्जन्यऽरेतसे । इष्वै । देव्यै । बृहत् । नमः ॥ २१ ॥ अवऽसृष्टा । परा । पत । शरव्ये । ब्रह्मऽसंशिते । गच्छ । अमित्रान् । प्र । पद्यस्व । मा । अमीषां । कं । चन । उत् । शिषः । यत्र । बाणाः । संऽपतंति । कुमाराः । विशिखाःऽइव । तत्र । नः । ब्रह्मणः । पतिः । अदिति । शर्म । यच्छतु । विश्वाहा । शर्म । यच्छतु । मर्माणि । ते । वर्मणा । छादयामि । सोमः । त्वा । राजा । अमृतेन । अनु । वस्तां । उरोः । वरीयः । वरुणः । ते । कृणोतु । जयंतं । त्वा । अनु । देवाः । मदंतु । यः । नः । स्वः । अरणः । यः । च । निष्ट्यः । जिघांसति । देवाः ।

तं । सर्वे । धूर्वंतु । ब्रह्म । वर्म । मम । अंतरं ॥ २२ ॥ इति षष्ठमंडलं समाप्तं ॥ ६ ॥ अग्निं । नरः । दीधितिऽभिः । अरण्योः । हस्तऽच्युती । जनयंत । प्रऽशस्तं । दूरेऽदृशं । गृहऽपतिं । अथर्युं । तं । अग्निं । अस्तं । वसवः । नि । ऋण्वन् । सुऽप्रतिचक्षं । अवसे । कुतः । चित् । दक्षाय्यः । यः । दमे । आस । नित्यः । प्रऽइद्धः । अग्ने । दीदिहि । पुरः । नः । अजस्रया । सूर्म्या । यविष्ठ । त्वां । शश्वंतः । उप । यंति । वाजाः । प्र । ते । अग्नयः । अग्निऽभ्यः । वरं । निः । सुऽवीरासः । शोशुचंत । द्युऽमंतः । यत्र । नरः । संऽआसते । सुऽजाताः । दाः । नः । अग्ने । धिया । रयिं । सुऽवीरं । सुऽअपत्यं । सहस्य । प्रऽशस्तं । न । यं । यावा । तरति । यातुऽमावान् ॥ २३ ॥ उप । यं । एति । युवतिः । सुऽदक्षं । दोषा । वस्तोः । हविष्मती । घृताची । उप । स्वा । एनं । अरमतिः । वसुऽयुः । विश्वाः । अग्ने । अप । दह । अरातीः । एभिः । तपःऽभिः । अदहः । जरूथं । प्र । निऽस्वरं । चातयस्व । अमीवां । आ । यः । ते । अग्ने । इधते । अनीकं । वसिष्ठ । शुक्र । दीदिऽवः । पावक । उतोइति । नः । एभिः । स्तवथैः । इह । स्याः । वि । ये । ते । अग्ने । भेजिरे । अनीकं । मर्ताः । नरः । पित्र्यासः । पुरुऽत्रा ॥ ० ॥ सुऽमनाः । इह । स्याः । इमे । नरः । वृत्रऽहसेषु । शूराः । विश्वाः । अदेवीः । अभि । संतु । मायाः । ये । मे । धियं । पनयंत । प्रऽशस्तां ॥ २४ ॥ मा । शूने । अग्ने । नि । सदाम । नृणां । मा । अशेषसः । अवीरता । परि । त्वा । प्रजाऽवतीषु । दुर्यासु । दुर्य । यं । अश्वी । नित्यः । उपऽयाति । यज्ञं । प्रजाऽवंतं । सुऽपत्यं । क्षयं । नः । स्वऽजन्मना । शेषसा । ववृधानं । पाहि । नः । अग्ने । रक्षसः । अजुष्टात् । पाहि । धूर्तेः । अररुषः । अघऽयोः । त्वा । युजा । पृतनाऽयून् । अभि । स्यां । सः । इत् । अग्निः । अग्नीन् । अति । अस्तु । अन्यान् । यत्र । वजी । तनयः । वीळुऽपाणिः । सहस्रऽपाथा । अक्षरा ।

संऽएति । सः । इत् । अग्निः । यः । वनुष्यतः । निऽपाति ।
संऽएद्धारं । अंहसः । उरुष्यात् । सुऽजातासः । परि । चरंति ।
वीराः ॥ २५ ॥ अयं । सः । अग्निः । आऽहुतः । पुरुऽत्रा । यं ।
ईशानः । सं । इत् । इंधे । हविष्मान् । परि । यं । एति । अध्वरेषु ।
होता । त्वेइति । अग्ने । आऽहवनानि । भूरि । ईशानासः । आ ।
जुहुयाम । नित्या । उभा । कृण्वंतः । वहतूइति । मियेधे ॥ इमोइति ।
अग्ने । वीतऽतमानि । हव्या । अजस्रः । वक्षि । देवऽतातिं । अच्छ ।
प्रति । नः । ईं । सुरभीणि । व्यंतु । मा । नः । अग्ने । अवीरते ।
परा । दाः । दुःऽवाससे । अमतये । मा । नः । अस्यै । मा ।
नः । क्षुधे । मा । रक्षसे । ऋतऽवः । मा । नः । दमे ।
मा । वने । आ । जुहूर्थाः । नु । मे । ब्रह्माणि । अग्ने । उत् ।
शशाधि । त्वं । देव । मघवत्ऽभ्यः । सुसूदः ॥ रातौ । स्याम ।
उभयासः । आ । ते । यूयं । पात । स्वस्तिऽभिः । सदा । नः ॥ २६ ॥
त्वं । अग्ने । सुऽहवः । रण्वऽसंदृक् । सुऽदीती । सूनोइति । सहसः ।
दिदीहि । मा । त्वेइति । सचा । तनये । नित्ये । आ । धक् । मा ।
वीरः । अस्मत् । नर्यः । वि । दासीत् । मा । नः । अग्ने । दुःऽभृतये ।
सचा । एषु । देवऽइद्धेषु । अग्निषु । प्र । वोचः । मा । ते । अस्मान् ।
दुःऽमतयः । भृमात् । चित् । देवस्य । सूनोइति । सहसः । नशंत ।
सः । मर्तः । अग्ने । सुऽअनीक । रेवान् । अमर्त्ये । यः । आऽजुहोति ।
हव्यं । सः । देवता । वसुऽवनिं । दधाति । यं । सूरिः । अर्थी ।
पृच्छमानः । एति । महः । नः । अग्ने । सुवितस्य । विद्वान् । रयिं ।
सूरिऽभ्यः । आ । वह । बृहंतं । येन । वयं । सहसाऽवन् । मदेम ।
अविऽक्षितासः । आयुषा । सुऽवीराः । नु । मे । ब्रह्माणि । अग्ने । उत् ।
शशाधि । त्वं । देव । मघवत्ऽभ्यः । सुसूदः । रातौ । स्याम ।
उभयासः । आ । ते । यूयं । पात । स्वस्तिऽभिः । सदा । नः ॥ २७ ॥

॥ इति पञ्चमाष्टके प्रथमोऽध्यायः ॥ १ ॥

## ॥ अथ द्वितीयोध्यायः ॥

हरिः ॐ ॥ जुषस्व । नः । संऽइधं । अग्ने । अद्य । शोच । बृहत् । यजतं । धूमं । ऋण्वन् । उप । स्पृश । दिव्यं । सानु । स्तूपैः । सं । रश्मिऽभिः । ततनः । सूर्यस्य । नराशंसस्य । महिमानं । एषां । उप । स्तोषाम । यजतस्य । यज्ञैः । ये । सुऽक्रतवः । शुचयः । धियंऽधाः । स्वदंति । देवाः । उभयानि । हव्या । ईळेन्यं । वः । असुरं । सुऽदक्षं । अंतः । दूतं । रोदसीइति । सत्यऽवाचं ॥ मनुष्वत् । अग्निं । मनुना । संऽइद्धं । सं । अध्वराय । सदं । इत् । महेम । सपर्यवः । भरमाणाः । अभिऽज्ञु । प्र । वृंजते । नमसा । बर्हिः । अग्नौ । आऽजुह्वानाः । घृतऽपृष्ठं । पृषत्ऽवत् । अध्वर्यवः । हविषा । मर्जयध्वं । सुऽआध्यः । वि । दुरः । देवऽयंतः । अशिश्रयुः । रथऽयुः । देवऽताता । पूर्वीइति । शिशुं । न । मातरा । रिहाणेइति । सं । अग्रुवः । न । समनेषु । अंजन् ॥ १ ॥ उत । योषणेइति । दिव्येइति । महीइति । नः । उषसानक्ता । सुदुघाऽइव । धेनुः । बर्हिऽसदा । पुरुहूतेइतिपुरुऽहूते । मघोनीइति । आ । यज्ञियेइति । सुविताय । श्रयेतां ॥ विप्रा । यज्ञेषु । मानुषेषु । कारूइति । मन्ये । वां । जातऽवेदसा । यजध्यै ॥ ऊर्ध्वं । नः । अध्वरं । कृतं । हवेषु । ता । देवेषु । वनथः । वार्याणि ॥ ० ॥ २ ॥ अग्निं । वः । देवं । अग्निऽभिः । सऽजोषाः । यजिष्ठं । दूतं । अध्वरे । कृणुध्वं । यः । मर्त्येषु । निऽध्रुविः । ऋतऽवा । तपुःऽमूर्धा । घृतऽअन्नः । पावकः । प्रोथत् । अश्वः । न । यवसे । अविष्यन् । यदा । महः । संऽवरणात् । वि । अस्थात् ॥ ० ॥

अधं । स्म । ते । व्रजनं । कृष्णं । अस्ति । उत् । यस्य । ते । नवऽजातस्य । वृष्णः । अग्ने । चरंति । अजराः । इधानाः । अच्छं । द्यां । अरुषः । धूमः । एति । सं । दूतः । अग्ने । ईयसे । हि । देवान् । वि । यस्य । ते । पृथिव्यां । पाजः । अश्रेत् । तृषु । यत् । अन्ना । संऽअवृक्त । जंभैः । सेनाऽइव । सृष्टा । प्रऽसितिः । ते । एति । यवं । न । दस्म । जुह्वा । विवेक्षि । तं । इत् । दोषा । तं । उषसि । यविष्ठं । अग्निं । अत्यं । न । मर्जयंत । नरः । निऽशिशानाः । अतिथिं । अस्य । योनौ । दीदाय । शोचिः । आऽहुतस्य । वृष्णः ॥ ३ ॥ सुऽसंदृक् । ते । सुऽअनीक । प्रतीकं । वि । यत् । रुक्मः । न । रोचसे । उपाके । दिवः । न । ते । तन्यतुः । एति । शुष्मः । चित्रः । न । सूरः । प्रति । चक्षि । भानुं । यथा । वः । स्वाहा । अग्नये । दाशेम । परि । इळाभिः । घृतवत्ऽभिः । च । हव्यैः । तेभिः । नः । अग्ने । अमितैः । महःऽभिः । शतं । पूःऽभिः । आयसीभिः । नि । पाहि । याः । वा । ते । संति । दाशुषे । अधृष्टाः । गिरः । वा । याभिः । नृऽवतीः । उरुष्याः । ताभिः । नः । सूनोइति । सहसः । नि । पाहि । स्मत् । सूरीन् । जरितॄन् । जातऽवेदः । निः । यत् । पूताऽइव । स्वऽधितिः । शुचिः । गात् । स्वया । कृपा । तन्वा । रोचमानः । आ । यः । मात्रोः । उशेन्यः । जनिष्ट । देवऽयज्याय । सुऽक्रतुः । पावकः । एता । नः । अग्ने । सौभगा । दिदीहि । अपि । क्रतुं । सुऽचेतसं । वतेम । विश्वा । स्तोतृऽभ्यः । गृणते । च । संतु ॥ ० ॥ ॥ ४ ॥ प्र । वः । शुक्राय । भानवे । भरध्वं । हव्यं । मतिं । च । अग्नये । सुऽपूतं । यः । दैव्यानि । मानुषा । जनूंषि । अंतः । विश्वानि । विद्मना । जिगाति । सः । गृत्सः । अग्निः । तरुणः । चित् । अस्तु । यतः । यविष्ठः । अजनिष्ट । मातुः । सं । यः । वना । युवते । शुचिऽदन् । भूरि । चित् । अन्ना । सं । इत् । अत्ति । सद्यः ।

अस्य । देवस्य । सम्ऽसदि । अनीके । यं । मर्तासः । श्येतं । जगृभ्रे । नि । यः । गृभं । पौरुषेयीं । उवोच । दुःऽओकं । अग्निः । आयवे । शुशोच । अयं । कविः । अकविषु । प्रऽचेताः । मर्तेषु । अग्निः । अमृतः । नि । धायि । सः । मा । नः । अत्र । जुहुरः । सहस्वः । सदा । त्वेइति । सुऽमनसः । स्याम । आ । यः । योनिं । देवऽकृतं । ससाद । क्रत्वा । हि । अग्निः । अमृतान् । अतारीत् । तं । ओषधीः । च । वनिनः । च । गर्भं । भूमिः । च । विश्वऽधायसं । बिभर्ति ॥ ५ ॥ ईशे । हि । अग्निः । अमृतस्य । भूरेः । ईशे । रायः । सुऽवीर्यस्य । दातोः । मा । त्वा । वयं । सहसाऽवन् । अवीराः । मा । अप्सवः । परि । सदाम । मा । अदुवः । परिऽसद्यं । हि । अरणस्य । रेक्णः । नित्यस्य । रायः । पतयः । स्याम । न । शेषः । अग्ने । अन्यऽजातं । अस्ति । अचेतानस्य । मा । पथः । वि । दुक्षः । नहि । ग्रभाय । अरणः । सुऽशेवः । अन्यऽउदर्यः । मनसा । मंतवै । ऊँइति । अध । चित् । ओकः । पुनः । इत् । सः । एति । आ । नः । वाजी । अभीषाट् । एतु । नव्यः ॥ ० ॥ ६ ॥ प्र । अग्नये । तवसे । भरध्वं । गिरं । दिवः । अरतये । पृथिव्याः । यः । विश्वेषां । अमृतानां । उपऽस्थे । वैश्वानरः । ववृधे । जागृवत्ऽभिः । पृष्टः । दिवि । धायि । अग्निः । पृथिव्यां । नेता । सिंधूनां । वृषभः । स्तियानां । सः । मानुषीः । अभि । विशः । वि । भाति । वैश्वानरः । ववृधानः । वरेण । त्वत् । भिया । विशः । आयन् । असिक्नीः । असमनाः । जहतीः । भोजनानि । वैश्वानर । पूरवे । शोशुचानः । पुरः । यत् । अग्ने । दरयन् । अदीदेः । तव । त्रिऽधातु । पृथिवी । उत । द्यौः । वैश्वानर । व्रतं । अग्ने । सचंत । त्वं । भासा । रोदसीइति । आ । ततंथ । अजस्रेण । शोचिषा । शोशुचानः । त्वां । अग्ने । हरितः । वावशानाः । गिरः । सचंते । धुनयः । घृताचीः । पतिं । कृष्टीनां । रथ्यं । रयीणां । वैश्वानरं । उषसां । केतुं । अह्नां ॥ ७ ॥ त्वेइति ।

असुर्यं । वसवः । नि । ऋण्वन् । क्रतुं । हि । ते । मित्रऽमहः ।
जुषंत । त्वं । दस्यून् । ओकसः । अग्ने । आजः । उरु । ज्योतिः ।
जनयन् । आर्याय । सः । जायमानः । परमे । विऽओमन् । वायुः ।
न । पाथः । परि । पासि । सद्यः । त्वं । भुवना । जनयन् । अभि ।
क्रन् । अपत्याय । जातऽवेदः । दशस्यन् । तां । अग्ने । अस्मेइति ।
इषं । आ । ईरयस्व । वैश्वानर । द्युऽमतीं । जातऽवेदः । यया ।
राधः । पिन्वसि । विश्वऽवार । पृथु । श्रवः । दाशुषे । मर्त्याय ।
तं । नः । अग्ने । मघवत्ऽभ्यः । पुरुऽक्षुं । रयिं । नि । वाजं । श्रुत्यं ।
युवस्व ॥ वैश्वानर । महि । नः । शर्म । यच्छ । रुद्रेभिः । अग्ने । वसुऽ-
भिः । सऽजोषाः ॥ ८ ॥ प्र । संऽराजः । असुरस्य । प्रऽशस्ति । पुंसः ।
कृष्टीनां । अनुऽमाद्यस्य । इंद्रस्यऽइव । प्र । तवसः । कृतानि । वंदे ।
दारुं । वंदमानः । विवक्मि । कविं । केतुं । धासिं । भानुं । अद्रेः ।
हिन्वंति । शं । राज्यं । रोदस्योः । पुरंऽदरस्य । गीःऽभिः । आ ।
विवासे । अग्नेः । व्रतानि । पूर्व्या । महानि । नि । अक्रतून् । ग्रथिनः ।
मृध्रऽवाचः । पणीन् । अश्रद्धान् । अवृधान् । अयज्ञान् । प्रऽप्र । तान् ।
दस्यून् । अग्निः । विवाय । पूर्वः । चकार । अपरान् । अयज्यून् । यः ।
अपाचीने । तमसि । मदंतीः । प्राचीः । चकार । नृऽतमः ।
शचीभिः । तं । ईशानं । वस्वः । अग्निं । गृणीषे । अनानतं । दमयंतं ।
पृतन्यून् । यः । देह्यः । अनमयत् । वधऽस्नैः । यः । अर्यऽपत्नीः ।
उषसः । चकार । सः । निऽरुध्य । नहुषः । यह्वः । अग्निः । विशः ।
चक्रे । बलिऽहृतः । सहःऽभिः । यस्य । शर्मन् । उप । विश्वे ।
जनासः । एवैः । तस्थुः । सुऽमतिं । भिक्षमाणाः । वैश्वानरः । वरं ।
आ । रोदस्योः । आ । अग्निः । ससाद । पित्रोः । उपऽस्थं । आ । देवः ।
ददे । बुध्न्या । वसूनि । वैश्वानरः । उत्ऽइता । सूर्यस्य । आ । समुद्रात् ।
अवरात् । आ । परस्मात् । आ । अग्निः । ददे । दिवः । आ ।
पृथिव्याः ॥ ९ ॥ प्र । वः । देवं । चित् । सहसानं । अग्निं । अश्वं ।

न । वाजिनं । हिषे । नमःऽभिः । भव । नः । दूतः । अध्वरस्य ।
विद्वान् । त्मना । देवेषु । विविदे । मितऽद्रुः । आ । याहि । अग्ने ।
पथ्याः । अनु । स्वाः । मंद्रः । देवानां । सख्यं । जुषाणः । आ ।
सानु । शुष्मैः । नदयन् । पृथिव्याः । जंभेभिः । विश्वं । उशधक् ।
वनानि । प्रचीनः । यज्ञः । सुऽधितं । हि । बर्हिः । प्रीणीते । अग्निः ।
ईळितः । न । होता । आ । मातरा । विश्ववारेइतिविश्वऽवारे ।
हुवानः । यतः । यविष्ठ । जज्ञिषे । सुऽशेवः । सद्यः । अध्वरे ।
रथिरं । जनंत । मानुषासः । विऽचेतसः । यः । एषां । विशां ।
अधायि । विश्पतिः । दुरोणे । अग्निः । मंद्रः । मधुऽवचाः । ऋतऽवा ।
असादि । वृतः । वह्निः । आऽजगन्वान् । अग्निः । ब्रह्मा । नृऽसदने ।
विऽधर्ता । द्यौः । च । यं । पृथिवी । ववृधातेइति । आ । यं ।
होता । यजति । विश्वऽवारं । एते । द्युम्नेभिः । विश्वं । आ ।
अतिरंत । मंत्रं । ये । वा । अरं । नर्याः । अतक्षन् । प्र । ये । विशः ।
तिरंत । श्रोषमाणाः । आ । ये । मे । अस्य । दीधयन् । ऋतस्य ।
नु । त्वां । अग्ने । ईमहे । वसिष्ठाः । ईशानं । सूनोइति । सहसः ।
वसूनां । इषं । स्तोतृऽभ्यः । मघवत्ऽभ्यः । आनट् ॥ ० ॥ १० ॥
इंधे । राजा । सं । अर्यः । नमःऽभिः । यस्य । प्रतीकं । आऽहुतं ।
घृतेन । नरः । हव्येभिः । ईळते । सऽबाधः । आ । अग्निः । अग्रे ।
उषसां । अशोचि । अयं । ऊँइति । स्यः । सुऽमहान् । अवेदि ।
होता । मंद्रः । मनुषः । यह्वः । अग्निः । वि । भाः । अकरित्यकः ।
ससृजानः । पृथिव्यां । कृष्णऽपविः । ओषधीभिः । ववक्षे । कया ।
नः । अग्ने । वि । वसः । सुऽवृक्ति । कां । ऊँइति । स्वधां । ऋणवः ।
शस्यमानः । कदा । भवेम । पतयः । सुऽदत्र । रायः । वंतारः ।
दुस्तरस्य । साधोः । प्रऽप्र । अयं । अग्निः । भरतस्य । शृण्वे । वि ।
यत् । सूर्यः । न । रोचते । बृहत् । भाः । अभि । यः । पूरुं । पृतनासु ।
तस्थौ । द्युतानः । दैव्यः । अतिथिः । शुशोच । असन् । इत् ।

त्वेइति । आऽहवनानि । भूरि । भुवः । विश्वेभिः । सुऽमनाः ।
अनीकैः । सुतः । चित् । अग्ने । शृण्विषे । गृणानः । स्वयं । वर्धस्व ।
तन्वं । सुऽजात । इदं । वचः । शतऽसाः । संऽसहस्रं । उत् ।
अग्नये । जनिषीष्ट । द्विऽबर्हाः ॥ ० ॥ द्युऽमत् । अमीवऽचातनं ।
रक्षःऽहा ॥ ० ॥ ११ ॥ अबोधि । जारः । उषसां । उपऽस्थात् ।
होता । मंद्रः । कविऽतमः । पावकः । दधाति । केतुं । उभयस्य ।
जंतोः । हव्या । देवेषु । द्रविणं । सुकृतऽसु । सः । सुऽक्रतुः । यः ।
वि । दुरः । पणीनां । पुनानः । अर्कं । पुरुऽभोजसं । नः । होता ।
मंद्रः । विशां । दमूनाः । तिरः । तमः । ददृशे । रम्याणां । अमूरः ।
कविः । अदितिः । विवस्वान् । सुऽसंसत् । मित्रः । अतिथिः । शिवः ।
नः । चित्रऽभानुः । उषसां । भाति । अग्रे । अपां । गर्भः । प्रऽस्वः ।
आ । विवेश । ईळेन्यः । वः । मनुषः । युगेषु । समनऽगाः । अशुचत् ।
जातऽवेदाः । सुऽसंदृशा । भानुना । यः । विऽभाति । प्रति । गावः ।
संऽइधानं । बुधंत । अग्ने । याहि । दूत्यं । मा । रिषण्यः । देवान् ।
अच्छ । ब्रह्मऽकृता । गणेन । सरस्वतीं । मरुतः । अश्विना । अपः ।
यक्षि । देवान् । रत्नऽधेयाय । विश्वान् । त्वां । अग्ने । संऽइधानः ।
वसिष्ठः । जरूथं । हन् । यक्षि । राये । पुरंऽधिं । पुरुऽनीथा ।
जातऽवेदः । जरस्व ॥ ० ॥ १२ ॥ उषः । न । जारः । पृथु । पाजः ।
अश्रेत् । दविद्युतत् । दीद्यत् । शोशुचानः । वृषा । हरिः । शुचिः ।
आ । भाति । भासा । धियः । हिन्वानः । उशतीः । अजीगरिति ।
स्वः । न । वस्तोः । उषसां । अरोचि । यज्ञं । तन्वानाः । उशिजः ।
न । मन्म । अग्निः । जन्मानि । देवः । आ । वि । विद्वान् । द्रवत् ।
दूतः । देवऽयावा । वनिष्ठः । अच्छ । गिरः । मतयः । देवऽयंतीः ।
अग्निं । यंति । द्रविणं । भिक्षमाणाः । सुऽसंदृशं । सुऽप्रतीकं । सुऽ-
अंचं । हव्यऽवाहं । अरतिं । मानुषाणां । इंद्रं । नः । अग्ने । वसुऽभिः ।
सऽजोषाः । रुद्रं । रुद्रेभिः । आ । वह । बृहंतं । आदित्येभिः ।

अदितिं । विश्वऽजन्यां । बृहस्पतिं । ऋक्वऽभिः । विश्वऽवारं । मंद्रं ।
होतारं । उशिजः । यविष्ठं । अग्निं । विशः । ईळते । अध्वरेषु । सः । हि ।
क्षपाऽवान् । अभवत् । रयीणां । अतंद्रः । दूतः । यजथाय । देवान् ॥ १३ ॥
महान् । असि । अध्वरस्य । प्रऽकेतः । न । ऋते । त्वत् । अमृताः ।
मादयंते । आ । विश्वेभिः । सऽरथं । याहि । देवैः । नि । अग्ने ।
होता । प्रथमः । सद । इह । त्वां । ईळते । अजिरं । दूत्याय ।
हविष्मंतः । सदं । इत् । मानुषासः । यस्य । देवैः । आ । असदः ।
बर्हिः । अग्ने । अहानि । अस्मै । सुऽदिना । भवंति । त्रिः । चित् ।
अक्तोः । प्र । चिकितुः । वसूनि । त्वेइति । अंतः । दाशुषे । मर्त्याय ।
मनुष्वत् । अग्ने । इह । यक्षि । देवान् । भव । नः । दूतः ।
अभिशस्तिऽपावा ॥ ० ॥ अध्वरस्य । अग्निः । विश्वस्य । हविषः ।
कृतस्य । क्रतुं । हि । अस्य । वसवः । जुषंत । अथ । देवाः । दधिरे ।
हव्यऽवाहं । आ । अग्ने । वह । हविःऽअद्याय । देवान् । इंद्रऽज्येष्ठासः ।
इह । मादयंतां । इमं । यज्ञं । दिवि । देवेषु । धेहि ॥ ० ॥ १४ ॥
अगन्म । महा । नमसा । यविष्ठं । यः । दीदाय । संऽइद्धः । स्वे ।
दुरोणे । चित्रऽभानुं । रोदसीइति । अंतः । उर्वीइति । सुऽआहुतं ।
विश्वतः । प्रत्यंचं ॥ सः । मह्ना । विश्वा ॥ दुःऽइतानि । सह्वान् ।
अग्निः । स्तवे । दमे । आ । जातऽवेदाः । सः । नः । रक्षिषत् ।
दुःऽइतात् । अवद्यात् । अस्मान् । गृणंतः । उत । नः । मघोनः । त्वं ।
वरुणः । उत । मित्रः । अग्ने । त्वां । वर्धंति । मतिऽभिः । वसिष्ठाः ।
त्वेइति । वसु । सुऽसननानि । संतु ॥ ० ॥ १५ ॥ प्र । अग्नये ।
विश्वऽशुचे । धियंऽधे । असुरऽघ्ने । मन्म । धीतिं । भरध्वं ॥ भरे ।
हविः । न । बर्हिषि । प्रीणानः । वैश्वानराय । यतये । मतीनां । त्वं ।
अग्ने । शोचिषा । शोशुचानः । आ । रोदसीइति । अपृणाः । जायमानः ।
त्वं । देवान् । अभिऽशस्तेः । अमुंचः । वैश्वानर । जातऽवेदः ।
महिऽत्वा । जातः । यत् । अग्ने । भुवना । वि । अख्यः । पशून् ।

न । गोपाः । इयः । परिऽज्मा । वैश्वानर । ब्रह्मणे । विंद । गातुं ॥ ० ॥
॥ १६ ॥ संऽइधा । जातऽवेदसे । देवाय । देवहूतिऽभिः । हविःऽ-
भिः । शुक्रऽशोचिषे । नमस्विनः । वयं । दाशेम । अग्नये । वयं ।
ते । अग्ने । संऽइधा । विधेम । वयं । दाशेम । सुऽस्तुती । यजत्र ।
वयं । घृतेन । अध्वरस्य । होतः । वयं । देव । हविषा । भद्रऽशोचे ।
आ । नः । देवेभिः । उप । देवऽहूतिं । अग्ने । याहि । वषट्ऽकृतिं ।
जुषाणः । तुभ्यं । देवाय । दाशतः । स्याम ॥ ० ॥ १७ ॥ उपऽ-
सद्याय । मीळ्हुषे । आस्ये । जुहुत । हविः । यः । नः । नेदिष्ठं । आप्यं ।
यः । पंच । चर्षणीः । अभि । निऽससाद । दमेऽदमे ॥ ० ॥ सः ।
नः । वेदः । अमात्यं । अग्निः । रक्षतु । विश्वतः । उत । अस्मान् ।
पातु । अंहसः । नवं । नु । स्तोमं । अग्नये । दिवः । श्येनाय ।
जीजनं । वस्वः । कुवित् । वनाति । नः । स्पार्हाः । यस्य । श्रियः ।
दृशे । रयिः । वीरऽवतः । यथा । अग्रे । यज्ञस्य । शोचतः ॥ १८ ॥
सः । इमां । वेतु । वषट्ऽकृतिं । अग्निः । जुषत । नः । गिरः ।
यजिष्ठः । हव्यऽवाहनः । नि । त्वा । नक्ष्य । विश्पते । द्युऽमंतं ।
देव । धीमहि । सुऽवीरं । अग्ने । आऽहुत । क्षपः । उस्रः । च ।
दीदिहि । सुऽअग्नयः । त्वया । वयं । सुऽवीराः । त्वं । अस्मऽयुः ।
उप । त्वा । सातये । नरः । विप्रासः । यंति । धीतिऽभिः । उप ।
अक्षरा । सहस्रिणी ॥ अग्निः । रक्षांसि । सेधति । शुक्रऽशोचिः ।
अमर्त्यः । शुचिः । पावकः । ईड्यः ॥ १९ ॥ सः । नः । राधांसि ।
आ । भर । ईशानः । सहसः । यहो इति । भगः । च । दातु । वार्यं ।
त्वं । अग्ने । वीरऽवत् । यशः । देवः । च । सविता । भगः । दितिः ।
च । दाति । वार्यं । अग्ने । रक्ष । नः । अंहसः । प्रति । स्म । देव ।
रिषतः । तपिष्ठैः । अजरः । दह । अध । मही । नः । आयसी । अनाधृष्टः ।
नृऽपीतये । पूः । भव । शतऽभुजिः ॥ ० ॥ दोषाऽवस्तः । अघऽ-
यतः । दिवा । नक्तं । अदाभ्य ॥ २० ॥ एना । वः । अग्निं । नमसा ।

ऊर्जः । नपातं । आ । हुवे । प्रियं । चेतिष्ठं । अरतिं । सुऽअध्वरं । विश्वस्य । दूतं । अमृतं । सः । योजते । अरुषा । विश्वऽभोजसा । सः । दुद्रवत् । सुऽआहुतः । सुऽब्रह्मा । यज्ञः । सुऽशमी । वसूनां । देवं । राधः । जनानां । उत् । अस्य । शोचिः । अस्थात् । आऽजुह्वानस्य । मीळ्हुषः । उत् । धूमासः । अरुषासः । दिविऽस्पृशः । सं । अग्निं । इंधते । नरः । तं । त्वा । दूतं । कृण्महे । यशःऽतमं । देवान् । आ । वीतये । वह । विश्वा । सूनोइति । सहसः । मर्तऽभोजना । रास्व । तत् । यत् । त्वा । ईमहे । त्वं । अग्ने । गृहऽपतिः । त्वं । होता । नः । अध्वरे । त्वं । पोता । विश्वऽवार । प्रऽचेताः । यक्षि । वेषि । च । वार्यं । कृधि । रत्नं । यजमानाय । सुक्रतोइतिसुऽक्रतो ॥ ० ॥ आ । नः । ऋते । शिशीहि । विश्वं । ऋत्विजं । सुऽशंसः । यः । च । दक्षते ॥ २१ ॥ त्वेइति । अग्ने । सुऽआहुत । प्रियासः । संतु । सूरयः । यंतारः । ये । मघऽवानः । जनानां । ऊर्वान् । दयंत । गोनां । येषां । इळा । घृतऽहस्ता । दुरोणे । आ । अपि । प्राता । निऽसीदति । तान् । त्रायस्व । सहस्य । द्रुहः । निदः । यच्छ । नः । शर्म । दीर्घऽश्रुत् । सः । मंद्रया । च । जिह्वया । वह्निः । आसा । विदुःऽतरः । अग्ने । रयिं । मघवत्ऽभ्यः । नः । आ । वह । हव्यऽदातिं । च । सूदय । ये । राधांसि । ददति । अश्व्या । मघा । कामेन । श्रवसः । महः । तान् । अंहसः । पिपृहि । पर्तृऽभिः । त्वं । शतं । पूःऽभिः । यविष्ठ्य । देवः । वः । द्रविणःऽदाः । पूर्णां । विवष्टि । आऽसिचं । उत् । वा । सिंचध्वं । उप । वा । पृणध्वं । आत् । इत् । वः । देवः । ओहते । तं । होतारं । अध्वरस्य । प्रऽचेतसं । वह्निं । देवाः । अकृण्वत । दधाति । रत्नं । विधते । सुऽवीर्यं । अग्निः । जनाय । दाशुषे ॥ २२ ॥ अग्ने । भव । सुऽसमिधा । संऽइद्धः । उत । बर्हिः । उर्विया । वि । स्तृणीतां । उत । द्वारः । उशतीः । वि । श्रयंतां । उत । देवान् । उशतः । आ । वह । इह । अग्ने । वीहि ।

हविषा । यक्षि । देवान् । सुऽअध्वरा । कृणुहि । जातऽवेदः । सुऽअध्वरा । करति । जातऽवेदाः । यक्षत् । देवान् । अमृतान् । पिप्रयत् । च । वस्व । विश्वा । वार्याणि । प्रचेतइतिप्रऽचेतः । सत्याः । भवंतु । आऽशिषः । नः । अद्य । त्वां । ऊँइति । ते । दधिरे । हव्यऽवाहं । देवासः । अग्ने । ऊर्जः । आ । नपातं । ते । ते । देवाय । दाशतः । स्याम । महः । नः । रत्ना । वि । दधः । इयानः ॥ २३ ॥

इति प्रथमोनुवाकः ॥ —::— ॥ त्वेइति । ह । यत् । पितरः । चित् । नः । इंद्र । विश्वा । वामा । जरितारः । असन्वन् । त्वेइति । गावः । सुऽदुघाः । त्वेइति । हि । अश्वाः । त्वं । वसु । देवऽयते । वनिष्ठः । राजाऽइव । हि । जनिऽभिः । क्षेषि । एव । अव । द्युऽभिः । अभि । विदुः । कविः । सन् । पिशा । गिरः । मघऽवन् । गोभिः । अश्वैः । त्वाऽयतः । शिशीहि । रये । अस्मान् । इमाः । ऊँइति । त्वा । पस्पृधानासः । अत्र । मंद्राः । गिरः । देवऽयंतीः । उप । स्थुः । अर्वाची । ते । पथ्या । रायः । एतु । स्याम । ते । सुऽमतौ । इंद्र । शर्मन् । धेनुं । न । त्वा । सुऽयवसे । दुधुक्षन् । उप । ब्रह्माणि । ससृजे । वसिष्ठः । त्वां । इत् । मे । गोऽपतिं । विश्वः । आह । आ । नः । इंद्रः । सुऽमतिं । गंतु । अच्छ । अर्णांसि । चित् । पप्रथाना । सुऽदासे । इंद्रः । गाधानि । अकृणोत् । सुऽपारा । शर्धंतं । शिम्युं । उचथस्य । नव्यः । शापं । सिंधूनां । अकृणोत् । अशस्तीः ॥ २४ ॥ पुरोळाः । इत् । तुर्वशः । यक्षुः । आसीत् । राये । मत्स्यासः । निऽशिताः । अपिऽइव । श्रुष्टिं । चक्रुः । भृगवः । द्रुह्यवः । च । सखा । सखायं । अतरत् । विषूचोः । आ । पक्थासः । भलानसः । भनंत । आ । अलिनासः । विषाणिनः । शिवासः । आ । यः । अनयत् । सधऽमाः । आर्यस्य । गव्या । तृत्सुऽभ्यः । अजगन् । युधा । नॄन् । दुःऽआध्यः । अदितिं । स्रेवयंतः । अचेतसः । वि । जगृभ्रे । परुष्णीं । मह्ना । अविव्यक् । पृथिवीं । पत्यमानः । पशुः । कविः । अशयत् । चायमानः ।

ईयुः । अर्थं । न । निऽअर्थं । परुष्णीं । आशुः । चन । इत् । अभिऽपित्वं । जगाम । सुऽदासे । इंद्रः । सुऽतुकान् । अमित्रान् । अरंधयत् । मानुषे । वध्रिऽवाचः । ईयुः । गावः । न । यवसात् । अगोपाः । यथाऽकृतं । अभि । मित्रं । चितासः । पृश्निऽगावः । पृश्निऽनिप्रेषितासः । श्रुष्टिं । चक्रुः । निऽयुतः । रंतयः । च ॥ २५ ॥ एकं । च । यः । विंशतिं । च । श्रवस्या । वैकर्णयोः । जनान् । राजा । नि । अस्तरित्यस्तः । दस्मः । न । सद्मन् । नि । शिशाति । बर्हिः । शूरः । सर्गं । अकृणोत् । इंद्रः । एषां । अध । श्रुतं । कवषं । वृद्धं । अप्ऽसु । अनु । द्रुह्युं । नि । वृणक् । वज्रऽबाहुः । वृणानाः । अत्र । सख्याय । सख्यं । त्वाऽयंतः । ये । अमदन् । अनु । त्वा । वि । सद्यः । विश्वा । दृंहितानि । एषां । इंद्रः । पुरः । सहसा । सप्त । दर्दरितिदर्दः । वि । आनवस्य । तृत्सवे । गयं । भाक् । जेष्म । पुरुं । विदथे । मृध्रऽवाचं । नि । गव्यवः । अनवः । द्रुह्यवः । च । षष्टिः । शता । सुसुपुः । षट् । सहस्रा । षष्टिः । वीरासः । अधि । षट् । दुवःऽयु । विश्वा । इत् । इंद्रस्य । वीर्या । कृतानि । इंद्रेण । एते । तृत्सवः । वेविषाणाः । आपः । न । सृष्टाः । अधवंत । नीचीः । दुःऽमित्रासः । प्रकलऽवित् । मिमानाः । जहुः । विश्वानि । भोजना । सुऽदासे ॥ २६ ॥ अर्धं । वीरस्य । शृतऽपां । अनिंद्रं । परा । शर्धंतं । नुनुदे । अभि । क्षां । इंद्रः । मन्यु । मन्युऽम्यः । मिमाय । भेजे । पथः । वर्तनिं । पत्यमानः । अध्रेण । चित् । तत् । ऊँइति । एकं । चकार । सिंह्यं । चित् । पेत्वेन । जघान । अव । स्रक्तीः । वेश्या । अवृश्चत् । इंद्रः । प्र । अयच्छत् । विश्वा । भोजना । सुऽदासे । शश्वंतः । हि । शत्रवः । रराधुः । ते । भेदस्य । चित् । शर्धतः । विंद । रंधिं । मर्तान् । एनः । स्तुवतः । यः । कृणोति । तिग्मं । तस्मिन् । नि । जहि । वज्रं । इंद्र । आवत् । इंद्रं । यमुना । तृत्सवः । च । प्र । अत्र । भेदं । सर्वऽताता । मुषायत । अजासः । च । शिग्रवः ।

यक्षवः । च । बलिं । शीर्षाणि । जभ्रुः । अश्व्यानि । न । ते । इंद्र ।
सुऽमतयः । न । रायः । संऽचक्षे । पूर्वीः । उषसः । न । नूत्नाः ।
देवकं । चित् । मान्यमानं । जघंथ । अव । त्मना । बृहतः । शंबरं ।
भेत् ॥ २७ ॥ प्र । ये । गृहात् । अममदुः । त्वाऽया । पराऽशरः ।
शतऽयातुः । वसिष्ठः । न । ते । भोजस्य । सख्यं । मृषंत । अध ।
सूरिऽभ्यः । सुऽदिना । वि । उच्छान् । द्वेइति । नप्तुः । देवऽवतः ।
शतेइति । गोः । द्वा । रथा । वधूऽमंता । सुऽदासः । अर्हन् । अग्ने ।
पैजऽवनस्य । दानं । होताऽइव । सद्म । परि । एमि । रेभन् ।
चत्वारः । मा । पैजऽवनस्य । दानाः । स्मत्ऽदिष्टयः । कृशनिनः ।
निरेके । ऋज्रासः । मा । पृथिविऽस्थाः । सुऽदासः । तोकं । तोकाय ।
श्रवसे । वहंति । यस्य । श्रवः । रोदसीइति । अंतः । उर्वीइति ।
शीर्ष्णेऽशीर्ष्णे । विऽबभाज । विऽभक्ता । सप्त । इत् । इंद्रं । न ।
स्रवतः । गृणंति । नि । युध्यामधिं । अशिशात् । अभीके । इमं ।
नरः । मरुतः । सश्चत । अनु । दिवःऽदासं । न । पितरं । सुऽदासः ।
अविष्टन । पैजऽवनस्य । केतं । दुःऽनशं । क्षत्रं । अजरं । दुवःऽ-
यु ॥ २९ ॥ यः । तिग्मऽशृंगः । वृषभः । न । भीमः । एकः । कृष्टीः ।
च्यवयति । प्र । विश्वाः । यः । शश्वतः । अदाशुषः । गयस्य । प्रऽ-
यंता । असि । सुष्विऽतराय । वेदः ॥ ० ॥ कुत्सं । आवः ।
शुश्रूषमाणः । तन्वा । सऽमर्ये । दासं । यत् । शुष्णं । कुयवं । नि ।
अस्मै । अरंधयः । आर्जुनेयाय । शिक्षन् । त्वं । धृष्णोइति । धृषता ।
वीतऽहव्यं । प्र । आवः । विश्वाभिः । ऊतिऽभिः । सुऽदासं । प्र ।
पौरुऽकुत्सिं । त्रसदस्युं । आवः । क्षेत्रऽसाता । वृत्रऽहत्येषु । पूरुं ।
त्वं । नृऽभिः । नृऽमनः । देवऽवीतौ । भूरीणि । वृत्रा । हरिऽअश्व ।
हंसि । त्वं । नि । दस्युं । चुमुरिं । धुनिं । च । अस्वापयः ।
दभीतये । सुऽहंतु । तव । च्यौत्नानि । वज्रऽहस्त । तानि । नव ।
यत् । पुरः । नवतिं । च । सद्यः । निऽवेशने । शततमा । अविवेषीः ।

अहन् । च । वृत्रं । नमुचिं । उत । अहन् ॥ २९ ॥ ० ॥ भोजनानि । रातऽहव्याय । दाशुषे । सुऽदासे । वृष्णे । ते । हरीइति । वृषणा । युनज्मि । व्यंतु । ब्रह्माणि । पुरुऽशाक । वाजं । मा । ते । अस्यां । सहसाऽवन् । परिष्टौ । अघाय । भूम । हरिऽवः । पराऽदै । त्रायस्व । नः । अवृकेभिः । वरूथैः । तव । प्रियासः । सूरिषु । स्याम । प्रियासः । इत् । ते । मघऽवन् । अभिष्टौ । नरः । मदेम । शरणे । सखायः । नि । तुर्वशं । नि । याद्वं । शिशीहि । अतिथिऽग्वाय । शंस्यं । करिष्यन् । सद्यः । चित् । नु । ते । मघऽवन् । अभिष्टौ । नरः । शंसंति । उक्थऽशासः । उक्था । ये । ते । हवेभिः । वि । पणीन् । अदाशन् । अस्मान् । वृणीष्व । युज्याय । तस्मै । एते । स्तोमाः । नरां । नृऽतम । तुभ्यं । अस्मद्र्यंचः । ददतः । मघानि । तेषां । इंद्र । वृत्रऽहत्ये । शिवः । भूः । सखा । च । शूरः । अविता । च । नृणां । नु । इंद्र । शूर । स्तवमानः । ऊती । ब्रह्मऽजूतः । तन्वा । ववृधस्व । उप । नः । वाजान् । मिमीहि । उप । स्तीन् ॥ ० ॥ ३० ॥

इति पञ्चमाष्टके द्वितीयोध्यायः ॥ २ ॥



## ॥ अथ तृतीयोध्यायः ॥

हरिः ॐ ॥ उग्रः । जज्ञे । वीर्याय । स्वधाऽवान् । चक्रिः । अपः । नर्यः । यत् । करिष्यन् । जग्मिः । युवा । नृऽसदनं । अवःऽभिः । त्राता । नः । इंद्रः । एनसः । महः । चित् । हंता । वृत्रं । इंद्रः । शूशुवानः । प्र । आवीत् । नु । वीरः । जरितारं । ऊती । कर्ता । सुऽदासे । अह । वै । ऊँइति । लोकं । दाता । वसु । मुहुः । आ ।

दाशुषे । भूत् । शुष्मः । अनर्वा । खज्ऽकृत् । सुमत्ऽवा । शूरः । सत्राषाट् । जनुषा । ई । अषाळ्हः । वि । आसे । इंद्रः । पृतनाः । सुऽओजाः । अध । विश्वं । शत्रुऽयंतं । जघान । उभेइति । चित् । इंद्र । रोदसीइति । महिऽत्वा । आ । पप्राथ । तविषीभिः । तुविष्मः । नि । वज्रं । इंद्रः । हरिऽवान् । मिमिक्षन् । सं । अंधसा । मदेषु । वै । उवोच ॥ वृषा । जजान । वृषणं । रणाय । तं । ऊंइति । चित् । नारी । नर्यं । ससूव ॥ प्र । यः । सेनाऽनीः । अध । नृऽभ्यः । अस्ति । इनः । सत्वा । गोऽएषणः । सः । धृष्णुः ॥ १ ॥ नु । चित् । सः । भ्रेषते । जनः । न । रेषत् । मनः । यः । अस्य । घोरं । आऽविवासात् । यज्ञैः । यः । इंद्रे । दधते । दुवांसि । क्षयत् । सः । राये । ऋतऽपाः । ऋतेऽजाः । यत् । इंद्र । पूर्वः । अपराय । शिक्षन् । अयत् । ज्यायान् । कनीयसः । देष्णं ॥ अमृतः । इत् । परि । आसीत । दूरं । आ । चित्र । चित्र्यं । भर । रयिं । नः । यः । ते । इंद्र । प्रियः । जनः । ददाशत् । असत् । निरेके । अद्रिऽवः । सखा । ते । वयं । ते । अस्यां । सुऽमतौ । चनिष्ठाः । स्याम । वरूथे । अघ्नतः । नृऽपीतौ । एषः । स्तोमः । अचिक्रदत् । वृषा । ते । उत । स्तामुः । मघऽवन् । अक्रपिष्ट । रायः । कामः । जरितारं । ते । आ । अगन् । त्वं । अंग । शक्र । वस्वः । आ । शकः । नः । सः । नः । इंद्र । त्वऽयतायै । इषे । धाः । त्मना । च । ये । मघऽवानः । जुनंति । वस्वी । सु । ते । जरित्रे । अस्तु । शक्तिः ॥ ० ॥ २ ॥ असावि । देवं । गोऽऋजीकं । अंधः । नि । अस्मिन् । इंद्रः । जनुषा । ई । उवोच ॥ बोधामसि । त्वा । हरिऽअश्व । यज्ञैः । बोध । नः । स्तोमं । अंधसः । मदेषु । प्र । यंति । यज्ञं । विपयंति । बर्हिः । सोमऽमादः । विदथे । दुध्रऽवाचः । नि । ऊंइति । भ्रियंते । यशसः । गृभात् । आ । दूरेऽउपब्दः । वृषणः । नृऽसाचः । त्वं । इंद्र । स्रवितवै । अपः । कः । परिऽस्थिताः । अहिना । शूर । पूर्वीः । त्वत् । वावक्रे । रथ्यः । न ।

धेनाः । रेजंते । विश्वा । कृत्रिमाणि । भीषा । भीमः ॥ विवेष ।
आयुधेभिः । एषां । अपांसि । विश्वा । नर्याणि । विद्वान् । इंद्रः । पुरः ।
जर्हृषाणः । वि । दुधोत् । वि । वज्रऽहस्तः । महिना । जघान ॥ न ।
यातवः । इंद्र । जूजुवुः । नः । न । वंदना । शविष्ठ । वेद्याभिः ॥ सः ।
शर्धत् । अर्यः । विषुणस्य । जंतोः । मा । शिश्नऽदेवाः । अपि । गुः ।
ऋतं । नः ॥ ३ ॥ अभि । क्रत्वा । इंद्र । भूः । अध । ज्मन् । न ।
ते । विव्यक् । महिमानं । रजांसि । स्वेन । हि । वृत्रं । शवसा ।
जघंथ । न । शत्रुः । अंतं । विविदत् । युधा । ते । देवाः । चित् ।
ते । असुर्याय । पूर्वे । अनु । क्षत्राय । ममिरे । सहांसि ॥ इंद्रः ।
मघानि । दयते । विऽसह्य । इंद्रं । वाजस्य । जोहुवंत । सातौ ।
कीरिः । चित् । हि । त्वां । अवसे । जुहाव । ईशानं । इंद्र ।
सौभगस्य । भूरेः । अवः । बभूथ । शतंऽऊते । अस्मेइति । अभिऽक्षत्तुः ।
त्वाऽवतः । वरूता । सखायः । ते । इंद्र । विश्वहं । स्याम । नमःऽ-
वृधासः । महिना । तरुत्र । वन्वंतु । स्म । ते । अवसा । संऽईके ।
अभिऽईतिं । अर्यः । वनुषां । शवांसि ॥ ० ॥ ४ ॥ पिब । सोमं ।
इंद्र । मंदतु । त्वा । यं । ते । सुसाव । हरिऽअश्व । अद्रिः । सोतुः ।
बाहुऽभ्यां । सुऽयतः । न । अर्वा । यः । ते । मदः । युज्यः । चारुः ।
अस्ति । येन । वृत्राणि । हरिऽअश्व । हंसि । सः । त्वां । इंद्र ।
प्रभुवसोइतिप्रभुऽवसो । ममत्तु । बोध । सु । मे । मघऽवन् । वाचं ।
आ । इमां । यां । ते । वसिष्ठः । अर्चति । प्रऽशस्ति । इमा । ब्रह्म ।
सधऽमादे । जुषस्व । श्रुधि । हवं । विऽपिपानस्य । अद्रेः । बोध ।
विप्रस्य । अर्चतः । मनीषां । कृष्व । दुवांसि । अंतमा । सचा ।
इमा । न । ते । गिरः । अपि । मृष्ये । तुरस्य । न । सुऽस्तुतिं ।
असुर्यस्य । विद्वान् । सदा । ते । नाम । स्वऽयशः । विवक्मि ॥ ५ ॥
भूरि । हि । ते । सवना । मानुषेषु । भूरि । मनीषी । हवते । त्वां ।
इत् । मा । आरे । अस्मत् । मघऽवन् । ज्योक् । करितिकः । तुभ्यं ।

इत् । इमा । सवना । शूर । विश्वा । तुभ्यं । ब्रह्माणि । वर्धना । कृणोमि । त्वं । नृऽभिः । हव्यः । विश्वधा । असि । नु । चित् । नु । ते । मन्यमानस्य । दस्म । उत् । अश्नुवंति । महिमानं । उग्र । न । वीर्यं । इंद्र । ते । न । राधः । ये । च । पूर्वे । ऋषयः । ये । च । नूत्नाः । इंद्र । ब्रह्माणि । जनयंत । विप्राः । अस्मेइति । ते । संतु । सख्या । शिवानि ॥ ० ॥ ६ ॥ उत् । ऊँइति । ब्रह्माणि । ऐरत । श्रवस्या । इंद्रं । सऽमर्ये । महय । वसिष्ठ । आ । यः । विश्वानि । शवसा । ततान । उपऽश्रोता । मे । ईवतः । वचांसि । अयामि । घोषः । इंद्र । देवऽजामिः । इरज्यंत । यत् । शुरुधः । विऽवाचि । नहि । स्वं । आयुः । चिकिते । जनेषु । तानि । इत् । अंहांसि । अति । पर्षि । अस्मान् । युजे । रथं । गोऽएषणं । हरिऽभ्यां । उप । ब्रह्माणि । जुजुषाणं । अस्थुः । वि । बाधिष्ट । स्यः । रोदसीइति । महिऽत्वा । इंद्रः । वृत्राणि । अप्रति । जघन्वान् । आपः । चित् । पिप्युः । स्तर्यः । न । गावः । नक्षन् । ऋतं । जरितारः । ते । इंद्र । याहि । वायुः । न । निऽयुतः । नः । अच्छ । त्वं । हि । धीभिः । दयसे । वि । वाजान् । ते । त्वा । मदाः । इंद्र । मादयंतु । शुष्मिणं । तुविऽराधसं । जरित्रे । एकः । देवऽत्रा । दयसे । हि । मर्तान् । अस्मिन् । शूर । सवने । मादयस्व । एव । इत् । इंद्रं । वृषणं । वज्रऽबाहुं । वसिष्ठासः । अभि । अर्चंति । अर्कैः ॥ ० ॥ ७ ॥ ० ॥ सदने ॥ ० ॥ नृऽभिः । पुरुऽहूत । प्र । याहि । असः । यथा । नः । अविता । वृधे । च । ददः । वसूनि । ममदः । च । सोमैः । गृभीतं । ते । मनः । इंद्र । द्विऽबर्हाः । सुतः । सोमः । परिऽसिक्ता । मधूनि । विसृष्टऽधेना । भरते । सुऽवृक्तिः । इयं । इंद्रं । जोहुवती । मनीषा । आ । नः । दिवः । आ । पृथिव्याः । ऋजीषिन् । इदं । बर्हिः । सोमऽपेयाय । याहि । वहंतु । त्वा । हरयः । मद्र्यंचं । आंगूषं । अच्छ । तवसं । मदाय । आ । नः । विश्वाभिः । ऊतिऽभिः । सऽ-

जोषाः । ब्रह्म । जुषाणः । हरिऽअश्व । याहि । वरीवृजत् । स्थविरेभिः । सुऽशिप्र । अस्मेइति । दधत् । वृषणं । शुष्मं । इंद्र । एषः । स्तोमः । महे । उग्राय । वाहे । धुरिऽइव । अत्यः । न । वाजयन् । अधायि । इंद्र । त्वा । अयं । अर्कः । ईट्टे । वसूनां । दिविऽइव । द्यां । अधि । नः । श्रोमतं । धाः । एव । नः । इंद्र । वार्यस्य । पूर्धि । प्र । ते । महीं । सुऽमतिं । वेविदाम ॥ इषं । पिन्व । मघवत्ऽभ्यः । सुऽवीरां ॥ ० ॥ ८ ॥ आ । ते । महः । इंद्र । ऊती । उग्र । सऽमन्यवः । यत् । संऽअरंत । सेनाः । पताति । दिद्युत् । नर्यस्य । बाह्वोः । मा । ते । मनः । विष्वद्र्यक् । वि । चारीत् । नि । दुःऽगे । इंद्र । श्नथिहि । अमित्रान् । अभि । ये । नः । मर्तासः । अमंति । आरे । तं । शंसं । कृणुहि । निनित्सोः । आ । नः । भर । संऽभरणं । वसूनां । शतं । ते । शिप्रिन् । ऊतयः । सुऽदासे । सहस्रं । शंसाः । उत । रातिः । अस्तु । जहि । वधः । वनुषः । मर्त्यस्य । अस्मेइति । द्युम्नं । अधि । रत्नं । च । धेहि । त्वाऽवतः । हि । इंद्र । क्रत्वे । अस्मि । त्वाऽवतः । अवितुः । शूर । रातौ । विश्वा । इत् । अहानि । तविषीऽवः । उग्र । ओकः । कृणुष्व । हरिऽवः । न । मर्धीः । कुत्साः । एते । हरिऽअश्वाय । शूषं । इंद्रे । सहः । देवऽजूतं । इयानाः । सत्रा । कृधि । सुऽहना । शूर । वृत्रा । वयं । तरुत्राः । सनुयाम । वाजं ॥ ० ॥ ॥ ९ ॥ न । सोमः । इंद्रं । असुतः । ममाद । न । अब्रह्माणः । मघऽवानं । सुतासः ॥ यत् । ईं । सऽबाधः । पितरं । न । पुत्राः । समानऽदक्षाः । अवसे । हवंते । चकार । ता । कृणवत् । नूनं । अन्या । यानि । ब्रुवंति । वेधसः । सुतेषु । जनीःऽइव । पतिः । एकः । समानः । नि । ममृजे । पुरः । इंद्रः । सु । सर्वाः । एव । तं । आहुः । उत । शृण्वे । इंद्रः । एकः । विऽभक्ता । तरणिः । मघानां । मिथःऽतुरः । ऊतयः । यस्य । पूर्वीः । अस्मेइति । भद्राणि । सश्चत । प्रियाणि । एव । वसिष्ठाः । इंद्रं । ऊतये । नॄन् । कृष्टीनां । वृषभं ।

सुते । गृणाति । सहस्रिणः । उप । नः । माहि । वाजान् ॥ ० ॥ १० ॥
इंद्रं । नरः । नेमऽधिता । हवंते । यत् । पार्याः । युनजंते । धियः ।
ताः । शूरः । नृऽसाता । शवसः । चकानः । आ । गोऽमति । व्रजे ।
भज । त्वं । नः । यः । इंद्र । शुष्मः । मघऽवन् । ते । अस्ति ।
शिक्ष । सखिऽभ्यः । पुरुऽहूत । नृऽभ्यः । त्वं । हि । दृळ्हा । मघऽ-
वन् । विऽचेताः । अप । वृधि । परिऽवृतं । न । राधः । इंद्रः ।
राजा । जगतः । चर्षणीनां । अधि । क्षमि । विषुऽरूपं । यत् । अस्ति ।
ततः । ददाति । दाशुषे । वसूनि । चोदत् । राधः । उपऽस्तुतः ।
चित् । अर्वाक् । नु । चित् । नः । इंद्रः । मघऽवा । सऽहूती ।
दानः । वाजं । नि । यमते । नः । ऊती । अनूना । यस्य । दक्षिणा ।
पीपाय । वामं । नृऽभ्यः । अभिऽवीता । सखिऽभ्यः । नु । इंद्र ।
राये । वरिवः । कृधि । नः । आ । ते । मनः । ववृत्याम । मघाय ।
गोऽमत् । अश्वऽवत् । रथऽवत् । व्यंतः ॥ ० ॥ ११ ॥ ब्रह्म । नः ।
इंद्र । उप । याहि । विद्वान् । अर्वाचः । ते । हरयः । संतु । युक्ताः ।
विश्वे । चित् । हि । त्वा । विऽहवंत । मर्ताः । अस्माकं । इत् ।
शृणुहि । विश्वंऽइन्व । हवं । ते । इंद्र । महिमा । वि । आनट् ।
ब्रह्म । यत् । पासि । शवसिन् । ऋषीणां । आ । यत् । वज्रं ।
दधिषे । हस्ते । उग्र । घोरः । सन् । क्रत्वा । जनिष्ठाः । अषाळ्हः ।
तव । प्रऽनीती । इंद्र । जोहुवानान् । सं । यत् । नॄन् । न ।
रोदसीइति । निनेथ । महे । क्षत्राय । शवसे । हि । जज्ञे । अतूतुजिं ।
चित् । तूतुजिः । अशिश्नत् ॥ एभिः । नः । इंद्र । अहऽभिः । दशस्य ।
दुःऽमित्रासः । हि । क्षितयः । पवंते । प्रति । यत् । चष्टे । अनृतं ।
अनेनाः । अव । द्विता । वरुणः । मायी । नः । सात् । वोचेम । इत् ।
इंद्रं । मघऽवानं । एनं । महः । रायः । राधसः । यत् । ददत् ।
नः । यः । अर्चतः । ब्रह्मऽकृतिं । अविष्ठः ॥ ० ॥ १२ ॥ अयं ।
सोमः । इंद्र । तुभ्यं । सुन्वे । आ । तु । प्र । याहि । हरिऽवः ।

तत्ऽओकाः । पिब । तु । अस्य । सुऽसुतस्य । चारोः । ददः ।
मघानि । मघऽवन् । इयानः । ब्रह्मन् । वीर । ब्रह्मऽकृतिं । जुषाणः ।
अर्वाचीनः । हरिऽभिः । याहि । तूयं । अस्मिन् । ऊंइति । सु ।
सवने । मादयस्व । उप । ब्रह्माणि । शृणवः । इमा । नः । का । ते ।
अस्ति । अरंऽकृतिः । सुऽउक्तैः । कदा । नूनं । ते । मघऽवन् ।
दाशेम । विश्वाः । मतीः । आ । ततने । त्वाऽया । अध । मे । इंद्र ।
शृणवः । हवा । इमा । उतोइति । घ । ते । पुरुष्याः । इत् । आसन् ।
येषां । पूर्वेषां । अशृणोः । ऋषीणां । अध । अहं । त्वा । मघऽवन् ।
जोहवीमि । त्वं । नः । इंद्र । असि । प्रऽमतिः । पिताऽइव ॥ ० ॥
॥ १३ ॥ आ । नः । देव । शवसा । याहि । शुष्मिन् । भव । वृधः ।
इंद्र । रायः । अस्य । महे । नृम्णाय । नृऽपते । सुऽवज्र । महि ।
क्षत्राय । पौंस्याय । शूर । हवंते । ऊंइति । त्वा । हव्यं । विऽवाचि ।
तनूषु । शूराः । सूर्यस्य । सातौ । त्वं । विश्वेषु । सेन्यः । जनेषु ।
त्वं । वृत्राणि । रंधय । सुऽहंतु । अहा । यत् । इंद्र । सुऽदिना ।
विऽउच्छान् । दधः । यत् । केतुं । उपऽमं । समत्ऽसु । नि । अग्निः ।
सीदत् । असुरः । न । होता । हुवानः । अत्र । सुऽभगाय । देवान् ।
वयं । ते । ते । इंद्र । ये । च । देव । स्तवंत । शूर । ददतः ।
मघानि । यच्छ । सूरिऽभ्यः । उपऽमं । वरूथं । सुऽआभुवः । जरणां ।
अश्नवंत ॥ ० ॥ १४ ॥ प्र । वः । इंद्राय । मादनं । हरिऽअश्वाय ।
गायत । सखायः । सोमऽपाव्ने । शंस । इत् । उक्थं । सुऽदानवे ।
उत । द्युक्षं । यथा । नरः । चकृम । सत्यऽराधसे । त्वं । नः । इंद्र ।
वाजऽयुः । त्वं । गव्युः । शतक्रतोइतिशतऽक्रतो । त्वं । हिरण्यऽयुः ।
वसोइति ॥ ० ॥ अभि । प्र । नोनुमः । वृषन् । विद्धि । तु । अस्य ।
नः । वसोइति । मा । नः । निदे । च । वक्तवे । अर्यः । रंधीः ।
अराव्णे । त्वेइति । अपि । क्रतुः । मम । त्वं । वर्म । असि । सऽ
प्रथः । पुरःऽयोधः । च । वृत्रऽहन् । त्वया । प्रति । ब्रुवे ।

युजा ॥ १५ ॥ महान् । उत । असि । यस्य॑ । ते । अनु । स्वधावरीइतिस्वधाऽवरी । सहः । मम्नातेइति । इंद्र । रोदसीइति । तं । त्वा । मरुत्वती । परि । भुवत् । वाणी । सऽयावरी । नक्षमाणा । सह । द्युऽभिः । ऊर्ध्वासः । त्वा । अनु । इंदवः । भुवन् । दस्मं । उप । द्यवि । सं । ते । नमंत । कृष्टयः ॥ ० ॥ महिऽवृधे । भरध्वं । प्रऽचेतसे । प्र । सुऽमतिं । कृणुध्वं । विशः । पूर्वीः । प्र । चर । चर्षणिऽप्राः । उरुऽव्यचसे । महिने । सुऽवृक्तिं । इंद्राय । ब्रह्म । जनयंत । विप्राः । तस्य । व्रतानि । न । मिनंति । धीराः । इंद्रं । वाणीः । अनुत्तऽमन्युं । एव । सत्रा । राजानं । दधिरे । सहध्यै । हरिऽअश्वाय । बर्हय । सं । आपीन् ॥ १६ ॥ मोइति । सु । त्वा । वाघतः । चन । आरे । अस्मत् । नि । रीरमन् । आरात्तात् । चित् । सधऽमादं । नः । आ । गहि । इह । वा । सन् । उप । श्रुधि । इमे । हि । ते । ब्रह्मऽकृतः । सुते । सचा । मधौ । न । मक्षः । आसते । इंद्रे । कामं । जरितारः । वसुऽयवः । रथे । न । पादं । आ । दधुः । रायःऽकामः । वज्रऽहस्तं । सुऽदक्षिणं । पुत्रः । न । पितरं । हुवे । इमे । इंद्राय । सुन्विरे । सोमासः । दधिऽआशिरः । तान् । आ । मदाय । वज्रऽहस्त । पीतये । हरिऽभ्यां । याहि । ओकः । आ । श्रवत् । श्रुतऽकर्णः । ईयते । वसूनां । नु । चित् । नः । मर्धिषत् । गिरः । सद्यः । चित् । यः । सहस्राणि । शता । ददत् । नकिः । दित्संतं । आ । मिनत् ॥ १७ ॥ सः । वीरः । अप्रतिऽस्कुतः । इंद्रेण । शुशुवे । नृऽभिः । यः । ते । गभीरा । सवनानि । वृत्रऽहन् । सुनोति । आ । च । धावति । भवं । वरूथं । मघऽवन् । मघोनां । यत् । संऽअजासि । शर्धतः । वि । त्वाऽहतस्य । वेदनं । भजेमहि । आ । दुःऽनशः । भर । गयं ॥ सुनोत । सोमऽपाव्ने । सोमं । इंद्राय । वज्रिणे । पचत । पक्तीः । अवसे । कृणुध्वं । इत् । पृणन् । इत् । पृणते । मयः । मा । स्रेधत । सोमिनः । दक्षत । महे । कृणुध्वं । राये ।

आऽतुजे ॥ तरणिः । इत् । जयति । क्षेति । पुष्यति । न । देवासः । कवत्नवे । नकिः । सुऽदासः । रथं । परि । आस । न । रीरमत् । इंद्रः । यस्य । अविता । यस्य । मरुतः । गमत् । सः । गोऽमति । व्रजे । ॥ १८ ॥ गमत् । वाजं । वाजयन् । इंद्र । मर्त्यः । यस्य । त्वं । अविता । भुवः ॥ ० ॥ रथानां । अस्माकं । शूर । नृणां । उत् । इत् । नु । अस्य । रिच्यते । अंशः । धनं । न । जिग्युषः । यः । इंद्रः । हरिऽवान् । न । दभंति । तं । रिपः । दक्षं । दधाति । सोमिनि । मंत्रं । अखर्वं । सुऽधितं । सुऽपेशसं । दधात । यज्ञियेषु । आ । पूर्वीः । चन । प्रऽसितयः । तरंति । तं । यः । इंद्रे । कर्मणा । भुवत् । कः । तं । इंद्र । त्वाऽवसुं । आ । मर्त्यः । दधर्षति । श्रद्धा । इत् । ते । मघऽवन् । पार्ये । दिवि । वाजी । वाजं । सिसासति । मघोनः । स्म । वृत्रऽहत्येषु । चोदय । ये । ददति । प्रिया । वसु । तव । प्रऽनीती । हरिऽअश्व । सूरिऽभिः । विश्वा । तरेम । दुःऽइता ॥ १९ ॥ तव । इत् । इंद्र । अवमं । वसु । त्वं । पुष्यसि । मध्यमं । सत्रा । विश्वस्य । परमस्य । राजसि । नकिः । त्वा । गोषु । वृण्वते । त्वं । विश्वस्य । धनऽदाः । असि । श्रुतः । ये । ईं । भवंति । आजयः । तव । अयं । विश्वः । पुरुऽहूत । पार्थिवः । अवस्युः । नाम । भिक्षते । यत् । इंद्र । यावतः । त्वं । एतावत् । अहं । ईशीय । स्तोतारं । इत् । दिधिषेय । रदवसोइतिरदऽवसो । न । पापऽत्वाय । रासीय । शिक्षेयं । इत् । महऽयते । दिवेऽदिवे । रायः । आ । कुहचित्ऽविदे । नहि । त्वत् । अन्यत् । मघऽवन् । नः । आप्यं । वस्यः । अस्ति । पिता । चन । तरणिः । इत् । सिसासति । वाजं । पुरंऽध्या । युजा । आ । वः । इंद्रं । पुरुऽहूतं । नमे । गिरा । नेमिं । तष्टाऽइव । सुऽद्रुवं ॥ २० ॥ न । दुःऽस्तुती । मर्त्यः । विंदते । वसु । न । स्रेधंतं । रयिः । नशत् । सुऽशक्तिः । इत् । मघऽवन् । तुभ्यं । माऽवते । देष्णं । यत् । पार्ये । दिवि । अभि । त्वा । शूर ।

नोनुमः । अदुग्धाःऽइव । धेनवः । ईशानं । अस्य । जगतः । स्वःऽदृशं । ईशानं । इंद्र । तस्थुषः । न । त्वाऽवान् । अन्यः । दिव्यः । न । पार्थिवः । न । जातः । न । जनिष्यते । अश्वऽयंतः । मघऽवन् । इंद्र । वाजिनः । गव्यंतः । त्वा । हवामहे । अभि । सतः । तत् । आ । भर । इंद्र । ज्यायः । कनीयसः । पुरुऽवसुः । हि । मघऽवन् । सनात् । असि । भरेऽभरे । च । हव्यः । परा । नुदस्व । मघऽवन् । अमित्रान् । सुऽवेदा । नः । वसु । कृधि ॥ ० ॥ भव । वृधः । सखीनां । इंद्र । क्रतुं । नः । आ । भर । पिता । पुत्रेभ्यः । यथा । शिक्ष । नः । अस्मिन् । पुरुऽहूत । यामनि । जीवाः । ज्योतिः । अशीमहि । मा । नः । अज्ञाताः । वृजनाः । दुःऽआध्यः । मा । अशिवासः । अव । क्रमुः । त्वया । वयं । प्रऽवतः । शश्वतीः । अपः । अति । शूर । तरामसि ॥ २१ ॥ श्वित्यंचः । मा । दक्षिणतःऽकपर्दाः । धियंऽजिन्वासः । अभि । हि । प्रऽमंदुः । उत्ऽतिष्ठन् । वोचे । परि । बर्हिषः । नृन् । न । मे । दूरात् । अवितवे । वसिष्ठाः । दूरात् । इंद्रं । अनयन् । आ । सुतेन । तिरः । वैशंतं । अति । पांतं । उग्रं । पाशऽद्युम्नस्य । वायतस्य । सोमात् । सुतात् । इंद्रः । अवृणीत । वसिष्ठान् । एव । इत् । नु । कं । सिंधुं । एभिः । ततार ॥ ० ॥ भेदं । एभिः । जघान ॥ ० ॥ दाशऽराज्ञे । सुऽदासं । प्र । आवत् । इंद्रः । ब्रह्मणा । वः । वसिष्ठाः । जुष्टी । नरः । ब्रह्मणा । वः । पितृणां । अक्षं । अव्ययं । न । किल । रिषाथ । यत् । शक्वरीषु । बृहता । रवेण । इंद्रे । शुष्मं । अदधात । वसिष्ठाः । उत् । द्यांऽइव । इत् । तृष्णऽजः । नाथितासः । अदीधयुः । दाशऽराज्ञे । वृतासः । वसिष्ठस्य । स्तुवतः । इंद्रः । अश्रोत् । उरुं । तृत्सुऽभ्यः । अकृणोत् । ऊँ इति । लोकं ॥ २२ ॥ दंडाःऽइव । इत् । गोऽअजनासः । आसन् । परिऽछिन्नाः । भरताः । अर्भकासः । अभवत् । च । पुरःऽएता । वसिष्ठः । आत् । इत् । तृत्सूनां । विशः । अप्रथंत । त्रयः । कृण्वंति ।

भुवनेषु । रेतः । तिस्रः । प्रऽजाः । आर्याः । ज्योतिःऽअग्राः । त्रयः । घर्मासः । उषसं । सचंते । सर्वान् । इत् । तान् । अनु । विदुः । वसिष्ठाः । सूर्यस्यऽइव । वक्षथः । ज्योतिः । एषां । समुद्रस्यऽइव । महिमा । गभीरः । वातस्यऽइव । प्रऽजवः । न । अन्येन । स्तोमः । वसिष्ठाः । अनुऽएतवे । वः । ते । इत् । निण्यं । हृदयस्य । प्रऽकेतैः । सहस्रऽवल्शं । अभि । सं । चरंति । यमेन । ततं । परिऽधिं । वयंतः । अप्सरसः । उप । सेदुः । वसिष्ठाः । विऽद्युतः । ज्योतिः । परि । संऽजिहानं । मित्रावरुणा । यत् । अपश्यतां । त्वा । तत् । ते । जन्म । उत । एकं । वसिष्ठ । अगस्त्यः । यत् । त्वा । विशः । आऽजभार ॥ २३ ॥ उत । असि । मैत्रावरुणः । वसिष्ठ । उर्वश्याः । ब्रह्मन् । मनसः । अधि । जातः । द्रप्सं । स्कन्नं । ब्रह्मणा । दैव्येन । विश्वे । देवाः । पुष्करे । त्वा । अददंत । सः । प्रऽकेतः । उभयस्य । प्रऽविद्वान् । सहस्रऽदानः । उत । वा । सऽदानः ॥ ० ॥ वयिष्यन् । अप्सरसः । परि । जज्ञे । वसिष्ठः । सत्रे । ह । जातौ । इषिता । नमःऽभिः । कुंभे । रेतः । सिसिचतुः । समानं । ततः । ह । मानः । उत् । इयाय । मध्यात् । ततः । जातं । ऋषिं । आहुः । वसिष्ठं । उक्थऽभृतं । सामऽभृतं । बिभर्ति । ग्रावाणं । बिभ्रत् । प्र । वदाति । अग्रे । उप । एनं । आध्वं । सुऽमनस्यमानाः । आ । वः । गच्छाति । प्रऽतृदः । वसिष्ठः ॥ २४ ॥ इति द्वितीयोनुवाकः ॥–::–॥ प्र । शुक्रा । एतु । देवी । मनीषा । अस्मत् । सुऽतष्टः । रथः । न । वाजी । विदुः । पृथिव्याः । दिवः । जनित्रं । शृण्वंति । आपः । अध । क्षरंतीः । आपः । चित् । अस्मै । पिन्वंत । पृथ्वीः । वृत्रेषु । शूराः । मंसंते । उग्राः ॥ आ । धूःऽसु । अस्मै । दधात । अश्वान् । इंद्रः । न । वज्री । हिरण्यऽबाहुः । अभि । प्र । स्थात । अहिःऽइव । यज्ञं । याताऽइव । पत्मन् । त्मना । हिनोत । त्मना । समत्ऽसु । हिनोत । यज्ञं । दधात । केतुं । जनाय । वीरं । उत । अस्य । शुष्मात् । भानुः । न । आर्त । बिभर्ति । भारं । पृथिवी ।

न । भूम । ह्वयामि । देवान् । अयातुः । अग्ने । साधन् । ऋतेन । धियं । दधामि । अभि । वः । देवीं । धियं । दधिध्वं । प्र । वः । देवऽत्रा । वाचं । कृणुध्वं । आ । चष्टे । आसां । पाथः । नदीनां । वरुणः । उग्रः । सहस्रऽचक्षाः ॥ २५ ॥ राजा । राष्ट्रानां । पेशः । नदीनां । अनुत्तं । अस्मै । क्षत्रं । विश्वऽआयु । आविष्टोइति । अस्मान् । विश्वासु । विक्षु । अद्युं । कृणोत । शंसं । निनित्सोः । वि । एतु । दिद्युत् । द्विषां । अशेवा । युयोत । विष्वक् । रपः । तनूनां । अवीत् । नः । अग्निः । हव्यऽअत् । नमःऽभिः । प्रेष्ठः । अस्मै । अधायि । स्तोमः । सऽजूः । देवेभिः । अपां । नपातं । सखायं । कृध्वं । शिवः । नः । अस्तु । अप्ऽजां । उक्थैः । अहिं । गृणीषे । बुध्ने । नदीनां । रजःऽसु । सीदन् ॥ ० ॥ मा । यज्ञः । अस्य । स्रिधत् । ऋतऽयोः । उत । नः । एषु । नृषु । श्रवः । धुः । प्र । राये । यंतु । शर्धंतः । अर्यः । तपंति । शत्रुं । स्वः । न । भूम । महाऽसेनासः । अमेभिः । एषां । आ । यत् । नः । पत्नीः । गमंति । अच्छ । त्वष्टा । सुऽपाणिः । दधातु । वीरान् ॥ २६ ॥ प्रति । नः । स्तोमं । त्वष्टा । जुषेत । स्यात् । अस्मेइति । अरमतिः । वसुऽयुः । ता । नः । रासन् । रातिऽसाचः । वसूनि ॥ ० ॥ वरूत्रीभिः । सुऽशरणः । नः । अस्तु । त्वष्टा । सुऽदत्रः । वि । दधातु । रायः । तत् । नः । रायः । पर्वताः । तत् । नः । आपः । तत् । रातिऽसाचः । ओषधीः । उत । द्यौः । वनस्पतिऽभिः । पृथिवी । सऽजोषाः । उभेइति । रोदसीइति । परि । पासतः । नः । अनु । तत् । उर्वीइति । रोदसीइति । जिहातां । अनु । द्युक्षः । वरुणः । इंद्रऽसखा । अनु । विश्वे । मरुतः । ये । सहासः । रायः । स्याम । धरुणं । धियध्यै । तत् । नः । इंद्रं । वरुणः । मित्रः । अग्निः । आपः । ओषधीः । वनिनः । जुषंत । शर्मन् । स्याम । मरुतां । उपऽस्थे ॥ ० ॥ २७ ॥ शं । नः । इंद्राग्नीइति । भवतां । अवःऽभिः । शं । नः । इंद्रावरुणा । रातऽहव्या । शं । इंद्रासोमा ।

सुवितायं । शं । योः । शं । नः । इंद्रापूषणां । वाजंऽसातौ । शं । नः । भगंः । शं । ऊँइतिं । नः । शंसंः । अस्तु । शं । नः । पुरंऽधिः । शं । ऊँइतिं । संतु । रायंः । शं । नः । सत्यस्यं । सुऽयमंस्य । शंसंः । शं । नः । अर्यमा । पुरुऽजातः । अस्तु । शं । नः । धाता । शं । ऊँइतिं । धर्ता । नः । अस्तु । शं । नः । उरूची । भवतु । स्वधाभिः । शं । रोदंसीइतिं । बृहतीइतिं । शं । नः । अद्रिः । शं । नः । देवानां । सुऽहवानि । संतु । शं । नः । अग्निः । ज्योतिःऽअनीकः । अस्तु । शं । नः । मित्रावरुणौ । अश्विनां । शं । शं । नः । सुऽकृतां । सुऽकृतानि । संतु । शं । नः । इषिरः । अभि । वातु । वातः । शं । नः । द्यावापृथिवीइतिं । पूर्वऽहूंतौ । शं । अंतरिक्षं । दृशयें । नः । अस्तु । शं । नः । ओषधीः । वनिनंः । भवंतु । शं । नः । रजंसः । पतिः । अस्तु । जिष्णुः ॥ २८ ॥

शं । नः । इंद्रः । वसुंऽभिः । देवः । अस्तु । शं । आदित्येभिः । वरुंणः । सुऽशंसंः । शं । नः । रुद्रः । रुद्रेभिः । जलाषः । शं । नः । त्वष्टा । ग्नाभिः । इह । शृणोतु । शं । नः । सोमंः । भवतु । ब्रह्म । शं । नः । शं । नः । ग्रावांणः । शं । ऊँइतिं । संतु । यज्ञाः । शं । नः । स्वरूंणां । मितयंः । भवंतु । शं । नः । प्रऽस्वंः । शं । ऊँइतिं । अस्तु । वेदिः । शं । नः । सूर्यंः । उरुऽचक्षाः । उत् । एतु । शं । नः । चतंस्रः । प्रऽदिशंः । भवंतु । शं । नः । पर्वताः । ध्रुवयंः । भवंतु । शं । नः । सिंधवः । शं । ऊँइतिं । संतु । आपंः । शं । नः । अदिंतिः । भवतु । व्रतेभिंः । शं । नः । भवंतु । मरुतंः । सुऽअर्काः । शं । नः । विष्णुंः । शं । ऊँइतिं । पूषा । नः । अस्तु । शं । नः । भवित्रं । शं । ऊँइतिं । अस्तु । वायुः । शं । नः । देवः । सविता । त्रायंमाणः । शं । नः । भवंतु । उषसंः । विऽभातीः । शं । नः । पर्जन्यंः । भवतु । प्रऽजाभ्यंः । शं । नः । क्षेत्रंस्य । पतिः । अस्तु । शंऽभुः ॥ २९ ॥ शं । नः । देवाः । विश्वऽदेवाः । भवंतु । शं । सरंस्वती । सह । धीभिः । अस्तु । शं । अभिऽसाचंः । शं । ऊँइतिं । रातिऽसाचंः । शं । नः । दिव्याः ।

पार्थिवाः । शं । नः । अप्याः ॥ ० ॥ पतयः । भवंतु । शं । नः । अर्वंतः । शं । ऊँइति । संतु । गावः । शं । नः । ऋभवः । सुऽकृतः । सुऽहस्ताः । शं । नः । भवंतु । पितरः । हवेषु । शं । नः । अजः । एकऽपाद् । देवः । अस्तु । शं । नः । अहिः । बुध्न्यः । शं । समुद्रः । शं । नः । अपां । नपात् । पेरुः । अस्तु । शं । नः । पृश्निः । भवतु । देवऽगोपा ॥ ० ॥ जुषंत । इदं । ब्रह्म । क्रियमाणं । नवीयः । शृण्वंतु । नः । दिव्याः । पार्थिवासः । गोऽजाताः । उत । ये । यज्ञियासः ॥ ये । देवानां । यज्ञियाः । यज्ञियानां । मनोः । यजत्राः । अमृताः । ऋतऽज्ञाः । ते । नः । रासंतां । उरुऽगायं । अद्य ॥ ० ॥ ३० ॥

इति पञ्चमाष्टके तृतीयोऽध्यायः ॥ ३ ॥

## ॥ अथ चतुर्थोऽध्यायः ॥

हरिः ॐ ॥ प्र । ब्रह्म । एतु । सदनात् । ऋतस्य । वि । रश्मिऽभिः । ससृजे । सूर्यः । गाः । वि । सानुना । पृथिवी । सस्रे । उर्वी । पृथु । प्रतीकं । अधि । आ । ईधे । अग्निः । इमां । वां । मित्रावरुणा । सुऽवृक्तिं । इषं । न । कृण्वे । असुरा । नवीयः । इनः । वां । अन्यः । पदऽवीः । अदब्धः । जनं । च । मित्रः । यतति । ब्रुवाणः । आ । वातस्य । ध्रजतः । रंते । इत्याः । अपीपयंत । धेनवः । न । सूदाः । महः । दिवः । सदने । जायमानः । अचिक्रदत् । वृषभः । सस्मिन् । ऊधन् । गिरा । यः । एता । युनजत् । हरीइति । ते । इंद्र । प्रिया । सुऽरथा । शूर । धायूइति । प्र । यः । मन्युं । रिरिक्षतः । मिनाति । आ । सुऽक्रतुं । अर्यमणं । ववृत्यां । यजंते । अस्य । सख्यं । वयः ।

च । नमस्विनः । स्वे । ऋतस्य । धामन् । वि । पृक्षः । बाबधे ।
नृऽभिः । स्तवानः । इदं । नमः । रुद्राय । प्रेष्ठं ॥ १ ॥ आ । यत् ।
साकं । यशसः । वावशानाः । सरस्वती । सप्तथी । सिंधुऽमाता ।
याः । सुस्वयंत । सुऽदुघाः । सुऽधाराः । अभि । स्वेन । पयसा ।
पीप्यानाः । उत । त्ये । नः । मरुतः । मंदसानाः । धियं । तोकं ।
च । वाजिनः । अवंतु । मा । नः । परि । ख्यत् । अक्षरा । चरंती ।
अवीवृधन् । युज्यं । ते । रयिं । नः । प्र । वः । महीं । अरमतिं ।
कृणुध्वं । प्र । पूषणं । विदथ्यं । न । वीरं । भगं । धियः । अवितारं ।
नः । अस्याः । सातौ । वाजं । रातिऽसाचं । पुरंऽधिं । अच्छ । अयं ।
वः । मरुतः । श्लोकः । एतु । अच्छ । विष्णुं । निसिक्तऽपां । अवःऽभिः ।
उत । प्रऽजायै । गृणते । वयः । धुः ॥ ० ॥ २ ॥ आ । वः । वाहिष्ठः ।
वहतु । स्तवध्यै । रथः । वाजाः । ऋभुक्षणः । अमृक्तः । अभि ।
त्रिऽपृष्ठैः । सवनेषु । सोमैः । मदे । सुऽशिप्राः । महऽभिः । पृणध्वं ।
यूयं । ह । रत्नं । मघवत्ऽसु । धत्थ । स्वःऽदृशः । ऋभुक्षणः ।
अमृक्तं ॥ सं । यज्ञेषु । स्वधाऽवंतः । पिबध्वं । वि । नः । राधांसि ।
मतिऽभिः । दयध्वं । उवोचिथ । हि । मघऽवन् । देष्णं । महः ।
अर्भस्य । वसुनः । विऽभागे । उभा । ते । पूर्णा । वसुना । गभस्तीइति ।
न । सूनृता । नि । यमते । वसव्या । त्वं । इंद्र । स्वऽयशाः । ऋभुक्षाः ।
वाजः । न । साधुः । अस्तं । एषि । ऋक्वा । वयं । नु । ते । दाश्वांसः ।
स्याम । ब्रह्म । कृण्वंतः । हरिऽवः । वसिष्ठाः । सनिता । असि ।
प्रऽवतः । दाशुषे । चित् । याभिः । विवेषः । हरिऽअश्व । धीभिः ।
ववन्म । नु । ते । युज्याभिः । ऊती । कदा । नः । इंद्र । रायः । आ ।
दशस्येः ॥ ३ ॥ वासयसिऽइव । वेधसः । त्वं । नः । कदा ।
नः । इंद्र । वचसः । बुबोधः ॥ अस्तं । तात्या । धिया । रयिं ।
सुऽवीरं । पृक्षः । नः । अर्वा । नि । उहीत । वाजी । अभि ।
यं । देवी । [illegible] । [illegible] । शरदः ।

सुऽपृक्षः । उप । त्रिऽबंधुः । जरत्ऽअष्टि । एति । अस्वऽवेशं ।
यं । कृणवंत । मर्ताः । आ । नः । राधांसि । सवितरिति । स्तवध्यै ।
आ । रायः । यंतु । पर्वतस्य । रातौ । सदा । नः । दिव्यः । पायुः ।
सिसक्तु ॥ ० ॥ ४ ॥ ० ॥ ययाम ॥ ० ॥ नूनं । भगः । हव्यः ।
मानुषेभिः । वि । यः । रत्ना । पुरुऽवसुः । दधाति । उत् । ऊँइति ।
तिष्ठ । सवितरिति । श्रुधि । अस्य । हिरण्यऽपाणे । प्रऽभृतौ ।
ऋतस्य । वि । उर्वीं । पृथ्वीं । अमतिं । सृजानः । आ । नृऽभ्यः ।
मर्तऽभोजनं । सुवानः । अपि । स्तुतः । सविता । देवः । अस्तु ।
यं । आ । चित् । विश्वे । वसवः । गृणंति । सः । नः । स्तोमान् ।
नमस्यः । चनः । धात् । विश्वेभिः । पातु । पायुऽभिः । नि ।
सूरीन् ॥ ० ॥ अदितिः । गृणाति । सवं । देवस्य । सवितुः ।
जुषाणा । अभि । संऽराजः । वरुणः । गृणंति । अभि । मित्रासः ।
अर्यमा । सऽजोषाः । अभि । ये । मिथः । वनुषः । सपंते । रातिं ।
दिवः । रातिऽसाचः । पृथिव्याः । अहिः । बुध्न्यः । उत । नः ।
शृणोतु । वरूत्री । एकधेनुऽभिः । नि । पातु । अनु । तत् । नः ।
जाःपतिः । मंसीष्ट । रत्नं । देवस्य । सवितुः । इयानः । भगं । उग्रः ।
अवसे । जोहवीति । भगं । अनुग्रः । अध । याति । रत्नं । शं । नः ।
भवंतु । वाजिनः । हवेषु । देवऽताता । मितऽद्रवः । सुऽअर्काः ।
जंभयंतः । अहिं । वृकं । रक्षांसि । सनेमि । अस्मत् । युयवन् ।
अमीवाः । वाजेऽवाजे । अवत । वाजिनः । नः । धनेषु । विप्राः ।
अमृताः । ऋतऽज्ञाः । अस्य । मध्वः । पिबत । मादयध्वं । तृप्ताः ।
यात । पथिऽभिः । देवऽयानैः ॥ ५ ॥ ऊर्ध्वः । अग्निः । सुऽमतिं ।
वस्वः । अश्रेत् । प्रतीची । जूर्णिः । देवऽतातिं । एति । भेजातेइति ।
अद्रीइति । रथ्याऽइव । पंथां । ऋतं । होता । नः । इषितः ।
यजाति । प्र । वव्रुजे । सुऽप्रयाः । बर्हिः । एषां । आ । विश्पतीइवेति-
विश्पतीऽइव । बीरिटे । इयातेइति । विशां । अक्तोः । उषसः ।

पूर्वऽहूतौ । वायुः । पूषा । स्वस्तये । नियुत्वान् । उमयाः । अत्र ।
वसवः । रंत । देवाः । उरौ । अंतरिक्षे मर्जयंत । शुभ्राः । अर्वाक् ।
पथः । उरुऽज्रयः । कृणुध्वं । श्रोत । दूतस्य । जग्मुषः । नः । अस्य ।
ते । हि । यज्ञेषु । यज्ञियासः । ऊमाः । सधऽस्थं । विश्वे । अभि ।
संति । देवाः । तान् । अध्वरे । उशतः । यक्षि । अग्ने । श्रुष्टी । भगं ।
नासत्या । पुरंऽधिं । आ । अग्ने । गिरः । दिवः । आ । पृथिव्याः ।
मित्रं । वह । वरुणं । इंद्रं । अग्निं । आ । अर्यमणं । अदितिं । विष्णुं ।
एषां । सरस्वती । मरुतः । मादयंतां । रे । हव्यं । मतिऽभिः ।
यज्ञियानां । नक्षत् । कामं । मर्त्यानां । असिन्वन् । धात । रयिं ।
अविऽदस्यं । सदाऽसां । सक्षीमहि । युज्येभिः । नु । देवैः । नु ।
रोदसीइति । अभिस्तुतेइत्यभिऽस्तुते । वसिष्ठः । ऋतऽवानः । वरुणः ।
मित्रः । अग्निः । यच्छंतु । चंद्राः । उपऽमं । नः । अर्कं ॥ ० ॥ ६ ॥
ओइति । श्रुष्टिः । विदथ्या । सं । एतु । प्रति । स्तोमं । दधीमहि ।
तुराणां । यत् । अद्य । देवः । सविता । सुवाति । स्याम । अस्य ।
रत्निनः । विऽभागे । मित्रः । तत् । नः । वरुणः । रोदसीइति । च ।
द्युऽभक्तं । इंद्रः । अर्यमा । ददातु । दिदेष्टु । देवी । अदितिः । रेक्णः ।
वायुः । च । यत् । नियुवैतेइतिनिऽयुवैते । भगः । च । सः । इत् ।
उग्रः । अस्तु । मरुतः । सः । शुष्मी । यं । मर्त्यं । पृषत्ऽअश्वाः ।
अवाथ । उत । ईं । अग्निः । सरस्वती । जुनंति । न । तस्य । रायः ।
परिऽएता । अस्ति ॥ अयं । हि । नेता । वरुणः । ऋतस्य । मित्रः ।
राजानः । अर्यमा । अपः । धुरितेधुः । सुऽहवा । देवी । अदितिः ।
अनर्वा । ते । नः । अंहः । अति । पर्षन् । अरिष्टान् ॥ अस्य ।
देवस्य । मीळ्हुषः । वयाः । विष्णोः । एषस्य । प्रऽभृथे । हविःऽभिः ।
विदे । हि । रुद्रः । रुद्रियं । महिऽत्वं । यासिष्टं । वर्तिः । अश्विनौ ।
इराऽवत् । मा । अत्र । पूषन् । आघृणे । इरस्यः । वरूत्री । यत् ।
रातिऽसाचः । च । रासन् । मयःऽभुवः । नः । अवंतः । नि । पांतु ।

वृष्टिं । परिऽज्मा । वातः । ददातु ॥ ० ॥ ७ ॥ प्रातः । अग्निं । प्रातः ।
इंद्रं । हवामहे । प्रातः । मित्रावरुणा । प्रातः । अश्विना । प्रातः ।
भगं । पूषणं । ब्रह्मणः । पतिं । प्रातरिति । सोमं । उत । रुद्रं ।
हुवेम । प्रातःऽजितं । भगं । उग्रं । हुवेम । वयं । पुत्रं । अदितेः ।
यः । विऽधर्ता । आध्रः । चित् । यं । मन्यमानः । तुरः । चित् ।
राजा । चित् । यं । भगं । भक्षि । इति । आह । भग । प्रनेतरितिप्रऽ-
नेतः । भग । सत्यऽराधः । भग । इमां । धियं । उत् । अव । ददत् ।
नः । भग । प्र । नः । जनय । गोभिः । अश्वैः । भग । प्र । नृऽभिः ।
नृऽवंतः । स्याम । उत । इदानीं । भगऽवंतः । स्याम । उत । प्रऽ-
पित्वे । उत । मध्ये । अह्नां । उत । उत्ऽइता । मघऽवन् । सूर्यस्य ।
वयं । देवानां । सुऽमतौ । स्याम ॥ भगः । एव । भगऽवान् । अस्तु ।
देवाः । तेन । वयं । भगऽवंतः । स्याम । तं । त्वा । भग । सर्वः ।
इत् । जोहवीति । सः । नः । भग । पुरःऽएता । भव । इह । सं ।
अध्वराय । उषसः । नमंत । दधिक्रावाऽइव । शुचये । पदाय ।
अर्वाचीनं । वसुऽविदं । भगं । नः । रथंऽइव । अश्वाः । वाजिनः ।
आ । वहंतु । अश्वऽवतीः । गोऽमतीः । नः । उषसः । वीरऽवतीः ।
सदं । उच्छंतु । भद्राः । घृतं । दुहानाः । विश्वतः । प्रऽपीताः ॥ ० ॥
॥ ८ ॥ प्र । ब्रह्माणः । अंगिरसः । नक्षंत । प्र । क्रंदनुः । नभन्यस्य ।
वेतु । प्र । धेनवः । उदऽप्रुतः । नवंत । युज्यतां । अद्रीइति ।
अध्वरस्य । पेशः । सुऽगः । ते । अग्ने । सनऽवित्तः । अध्वा । युक्ष्व ।
सुते । हरितः । रोहितः । च । ये । वा । सद्मन् । अरुषाः । वीरऽ-
वाहः । हुवे । देवानां । जनिमानि । सत्तः । सं । ऊँइति । वः । यज्ञं ।
महयन् । नमःऽभिः । प्र । होता । मंद्रः । रिरिचे । उपाके । यजस्व ।
सु । पुरुऽअनीक । देवान् । आ । यज्ञियां । अरमतिं । ववृत्याः । यदा ।
वीरस्य । रेवतः । दुरोणे । स्योनऽशीः । अतिथिः । आऽचिकेतत् ।
सुऽप्रीतः । अग्निः । सुऽधितः । दमे । आ । सः । विशे । दाति ।

वार्यै । इयत्यै ॥ इमं । नः । अग्ने । अध्वरं । जुषस्व । मरुत्ऽसु । इंद्रे ।
यशसं । कृधि । नः । आ । नक्ता । बर्हिः । सदतां । उषसा । उशंता ।
मित्रावरुणा । यज । इह ॥ एव । अग्निं । सहस्यं । वसिष्ठः । रायःऽ-
कामः । विश्वऽप्स्न्यस्य । स्तौत् । इषं । रयिं । पप्रथत् । वाजं ।
अस्मेइति ॥ ० ॥ ९ ॥ प्र । वः । यज्ञेषु । देवऽयंतः । अर्चन् । द्यावा ।
नमःऽभिः । पृथिवीइति । इषध्यै । येषां । ब्रह्माणि । असमानि ।
विप्रा । विष्वक् । विऽयति । वनिनः । न । शाखाः ॥ प्र । यज्ञः । एतु ।
हेत्वः । न । सप्तिः । उत् । यच्छध्वं । सऽमनसः । घृताचीः ।
स्तृणीत । बर्हिः । अध्वराय । साधु । ऊर्ध्वा । शोचींषि । देवऽयूनि ।
अस्थुः ॥ आ । पुत्रासः । न । मातरं । विऽभृत्राः । सानौ ।
देवासः । बर्हिषः । सदंतु । आ । विश्वाची । विदथ्यां । अनक्तु ।
अग्ने । मा । नः । देवऽताता । मृधः । करितिकः ॥ ते । सीषपंत ।
जोषं । आ । यजत्राः । ऋतस्य । धाराः । सुऽदुघाः । दुहानाः ।
ज्येष्ठं । वः । अद्य । महः । आ । वसूनां । आ । गंतन । सऽमनसः ।
यति । स्थ ॥ एव । नः । अग्ने । विक्षु । आ । दशस्य । त्वया । वयं ।
सहसाऽवन् । आस्क्राः । राया । युजा । सधऽमादः । अरिष्टाः ॥ ० ॥
॥ १० ॥ दधिऽक्रां । वः । प्रथमं । अश्विना । उषसं । अग्निं । संऽ-
इद्धं । भगं । ऊतये । हुवे । इंद्रं । विष्णुं । पूषणं । ब्रह्मणः । पतिं ।
आदित्यान् । द्यावापृथिवीइति । अपः । स्वः रितिस्वः ॥ दधिऽक्रां ।
ऊँइति । नमसा । बोधयंतः । उत्ऽईराणः । यज्ञं । उपऽप्रयंतः । इळां ।
देवीं । बर्हिषि । सादयंतः । अश्विना । विप्रा । सुऽहवा । हुवेम ॥
दधिऽक्रावाणं । बुबुधानः । अग्निं । उप । ब्रुवे । उषसं । सूर्यं । गां ।
ब्रध्नं । मंश्चतोः । वरुणस्य । बभ्रुं । ते । विश्वा । अस्मत् । दुःऽइता ।
यवयंतु ॥ दधिऽक्रावा । प्रथमः । वाजी । अर्वा । अग्रे । रथानां ।
भवति । प्रऽजानन् । संऽविदानः । उषसा । सूर्येण । आदित्येभिः ।
वसुऽभिः । अंगिरःऽभिः ॥ आ । नः । दधिऽक्राः । पथ्यां । अनक्तु ।

ऋतस्य । पंथां । अनुऽएतवै । ऊँइति । शृणोतु । नः । दैव्यं । शर्धः । अग्निः । शृण्वंतु । विश्वे । महिषाः । अमूराः ॥ ११ ॥ आ । देवः । यातु । सविता । सुऽरत्नः । अंतरिक्षऽप्राः । वहमानः । अश्वैः । हस्ते । दधानः । नर्या । पुरूणि । निऽवेशयन् । च । प्रऽसुवन् । च । भूम ॥ उत् । अस्य । बाहूइति । शिथिरा । बृहंता । हिरण्यया । दिवः । अंतान् । अनष्टां । नूनं । सः । अस्य । महिमा । पनिष्ट । सूरः । चित् । अस्मै । अनु । दात् । अपस्यां ॥ सः । घ । नः । देवः । सविता । सहऽवा । आ । साविषत् । वसुऽपतिः । वसूनि । विऽश्रयमाणः । अमतिं । उरूचीं । मर्तऽभोजनं । अध । रासते । नः ॥ इमाः । गिरः । सवितारं । सुऽजिह्वं । पूर्णऽगभस्ति । ईळते । सुऽपाणिं । चित्रं । वयः । बृहत् । अस्मेइति । दधातु ॥ ० ॥ १२ ॥ इमाः । रुद्राय । स्थिरऽधन्वने । गिरः । क्षिप्रऽइषवे । देवाय । स्वधाऽव्ने । अषाळ्हाय । सहमानाय । वेधसे । तिग्मऽआयुधाय । भरत । शृणोतु । नः । सः । हि । क्षयेण । क्षम्यस्य । जन्मनः । सांऽराज्येन । दिव्यस्य । चेतति । अवन् । अवंतीः । उप । नः । दुरः । चर । अनमीवः । रुद्र । जासु । नः । भव ॥ यां । ते । दिद्युत् । अवऽसृष्टा । दिवः । परि । क्ष्मया । चरति । परि । सा । वृणक्तु । नः । सहस्रं । ते । सुऽअपिवात । भेषजा । मा । नः । तोकेषु । तनयेषु । रिरिषः ॥ मा । नः । वधीः । रुद्र । मा । परा । दाः । मा । ते । भूम । प्रऽसितौ । हीळितस्य । आ । न । भज । बर्हिषि । जीवऽशंसे ॥ ० ॥ १३ ॥ आपः । यं । वः । प्रथमं । देवऽयंतः । इंद्रऽपानं । ऊर्मिं । अकृण्वत । इळः । तं । वः । वयं । शुचिं । अरिप्रं । अद्य । घृतऽप्रुषं । मधुऽमंतं । वनेम ॥ तं । ऊर्मिं । आपः । मधुमत्ऽतमं । वः । अपां । नपात् । अवतु । आशुऽहेमा । यस्मिन् । इंद्रः । वसुऽभिः । मादयाते । तं । अश्याम । देवऽयंतः । वः । अद्य ॥ शतऽपवित्राः । स्वधया । मदंतीः । देवीः । देवानां । अपि । यंति । पाथः । ताः । इंद्रस्य । न । मिनंति । व्रतानि ।

सिंधुऽभ्यः । हव्यं । घृतऽवत् । जुहोत ॥ याः । सूर्यः । रश्मिऽभिः । आऽततान । याभ्यः । इंद्रः । अरदत् । गातुं । ऊर्मि । ते । सिंधवः । वरिवः । धातन । नः ॥ ० ॥ १४ ॥ ऋभुक्षणः । वाजाः । मादयध्वं । अस्मेइति । नरः । मघऽवानः । सुतस्य । आ । वः । अर्वाचः । क्रतवः । न । यातां । विऽभ्वः । रथं । नर्यं । वर्तयंतु ॥ ऋभुः । ऋभुऽभिः । अभि । वः । स्याम । विऽभ्वः । विभुऽभिः । शवसा । शवांसि । वाजः । अस्मान् । अवतु । वाजऽसातौ । इंद्रेण । युजा । तरुषेम । वृत्रं ॥ ते । चित् । हि । पूर्वीः । अभि । संति । शासा । विश्वान् । अर्यः । उपरऽताति । वन्वन् । इंद्रः । विऽभ्वा । ऋभुक्षाः । वाजः । अर्यः । शत्रोः । मिथत्या । कृणवन् । वि । नृम्णं ॥ नु । देवासः । वरिवः । कर्तन । नः । भूत । नः । विश्वे । अवसे । सऽजोषाः । सं । अस्मेइति । इषं । वसवः । ददीरन् ॥ ० ॥ १५ ॥ समुद्रऽज्येष्ठाः । सलिलस्य । मध्यात् । पुनानाः । यंति । अनिऽविशमानाः । इंद्रः । याः । वज्री । वृषभः । ररादं । ताः । आपः । देवीः । इह । मां । अवंतु ॥ याः । आपः । दिव्याः । उत । वा । स्रवंति । खनित्रिमाः । उत । वा । याः । स्वयंऽजाः । समुद्रऽअर्थाः । याः । शुचयः । पावकाः ॥ ० ॥ यासां । राजा । वरुणः । याति । मध्ये । सत्यानृतेइति । अवऽपश्यन् । जनानां । मधुऽश्चुतः । शुचयः । याः । पावकाः ॥ ० ॥ यासु । राजा । वरुणः । यासु । सोमः । विश्वे । देवाः । यासु । ऊर्जं । मदंति । वैश्वानरः । यासु । अग्निः । प्रऽविष्टः ॥ ० ॥ १६ ॥ आ । मां । मित्रावरुणा । इह । रक्षतं । कुलाययत् । विऽश्वयत् । मा । नः । आ । गन् । अजकाऽवं । दुःऽदृशीकं । तिरः । दधे । मा । मां । पद्येन । रपसा । विदत् । त्सरुः ॥ यत् । विऽजामन् । परुषि । वंदनं । भुवत् । अष्ठीवंतौ । परि । कुल्फौ । च । देहत् । अग्निः । तत् । शोचन् । अप । बाधतां । इतः ॥ ० ॥ यत् । शल्मलौ । भवंति । यत् । नदीषु । यत् । ओषधीभ्यः । परि ।

जायते । विषं । विश्वे । देवाः । निः । इतः । तत् । सुवंतु ॥ ० ॥
याः । प्रऽवतः । निऽवतः । उत्ऽवतः । उदन्ऽवतीः । अनुदकाः ।
च । याः । ताः । अस्मभ्यं । पयसा । पिन्वमानाः । शिवाः ।
देवीः । अशिपदाः । भवंतु । सर्वाः । नद्यः । अशिमिदाः ।
भवंतु ॥ १७ ॥ आदित्यानां । अवसा । नूतनेन । सक्षीमहि । शर्मणा ।
शंऽतमेन । अनागाःऽत्वे । अदितिऽत्वे । तुरासः । इमं । यज्ञं । दधतु ।
श्रोषमाणाः ॥ आदित्यासः । अदितिः । मादयंतां । मित्रः । अर्यमा ।
वरुणः । रजिष्ठाः । अस्माकं । संतु । भुवनस्य । गोपाः । पिबंतु ।
सोमं । अवसे । नः । अद्य । आदित्याः । विश्वे । मरुतः । च । विश्वे ।
देवाः । च । विश्वे । ऋभवः । च । विश्वे । इंद्रः । अग्निः । अश्विना ।
तुस्तुवानाः ॥ ० ॥ १८ ॥ आदित्यासः । अदितयः । स्याम । पूः ।
देवऽत्रा । वसवः । मर्त्यऽत्रा । सनेम । मित्रावरुणा । सनंतः । भवेम ।
द्यावापृथिवीइति । भवंतः ॥ ० ॥ ममहंत । शर्म । तोकाय । तनयाय ।
गोपाः । मा । वः । भुजेम । अन्यऽजातं । एनः । मा । तत् । कर्म ।
वसवः । यत् । चयध्वे ॥ तुरण्यवः । अंगिरसः । नक्षंत । रत्नं । देवस्य ।
सवितुः । इयानाः । पिता । च । तत् । नः । महान् । यजत्रः । विश्वे ।
देवाः । सऽमनसः । जुषंत ॥ १९ ॥ ० ॥ नमःऽभिः । सऽबाधः । ईळे ।
बृहतीइति । यजत्रेइति । तेइति । चित् । हि । पूर्वे । कवयः । गृणंतः ।
पुरः । महीइति । दधिरे । देवपुत्रेइतिदेवऽपुत्रे ॥ प्र । पूर्वजेइतिपूर्वऽजे ।
पितरा । नव्यसीभिः । गीःऽभिः । कृणुध्वं । सदनेइति । ऋतस्य ।
आ । नः । द्यावाथिवीइति । दैव्येन । जनेन । यातं । महि । वां ।
वरूथं । उतोइति । हि । वां । रत्नऽधेयानि । संति । पुरूणि ।
द्यावापृथिवीइति । सुऽदासे । अस्मेइति । धत्तं । यत् । असत् ।
अस्कृधोयु ॥ ० ॥ २० ॥ वास्तोः । पते । प्रति । जानीहि । अस्मान् ।
सुऽआवेशः । अनमीवः । भव । नः । यत् । त्वा । ईमहे । प्रति ।
तत् । नः । जुषस्व । शं । नः । भव । द्विऽपदे । शं । चतुःऽपदे ।

वास्तोः । पते । प्रऽतरणः । नः । एधि । गयऽस्फानः । गोभिः ।
अश्वेभिः । इंदोइति । अजरासः । ते । सख्ये । स्याम । पिताऽइव ।
पुत्रान् । प्रति । नः । जुषस्व । वास्तोः । पते । शग्मया । संऽसदा ।
ते । सक्षीमहि । रण्वया । गातुऽमत्या । पाहि । क्षेमे । उत । योगे ।
वरं । नः ॥ ० ॥ २१ ॥ अमीवऽहा । वास्तोः । पते । विश्वा ।
रूपाणि । आऽविशन् । सखा । सुऽशेवः । एधि । नः । यत् ।
अर्जुन । सारमेय । दतः । पिशंग । यच्छसे । विऽइव । भ्राजंते ।
ऋष्टयः । उप । स्रक्केषु । बप्सतः । नि । सु । स्वप । स्तेनं । राय ।
सारमेय । तस्करं । वा । पुनःऽसर । स्तोतॄन् । इंद्रस्य । रायसि ।
किं । अस्मान् । दुच्छुनऽयसे ॥ ० ॥ त्वं । सूकरस्य । दर्दृहि । तव ।
दर्दर्तु । सूकरः ॥ ० ॥ सस्तु । माता । सस्तु । पिता । सस्तु । श्वा ।
सस्तु । विश्पतिः । ससंतु । सर्वे । ज्ञातयः । सस्तु । अयं । अभितः ।
जनः । यः । आस्ते । यः । च । चरति । यः । च । पश्यति । नः ।
जनः । तेषां । सं । हन्मः । अक्षाणि । यथा । इदं । हर्म्यं । तथा ।
सहस्रऽशृंगः । वृषभः । यः । समुद्रात् । उत्ऽआचरत् । तेन ।
सहस्येन । वयं । नि । जनान् । स्वापयामसि । प्रोष्ठेऽशयाः । वह्येऽ-
शयाः । नारीः । याः । तल्पऽशीवरीः । स्त्रियः । याः । पुण्यऽगंधाः ।
ताः । सर्वाः । स्वापयामसि ॥ २२ ॥ इति तृतीयोनुवाकः ॥ –::– ॥
के । ईं । विऽअक्ताः । नरः । सऽनीळाः । रुद्रस्य । मर्याः ।
अध । सुऽअश्वाः । नकिः । हि । एषां । जनूंषि । वेद । ते ।
अंग । विद्रे । मिथः । जनित्रं । अभि । स्वऽपूभिः । मिथः ।
वपंत । वातऽस्वनसः । श्येनाः । अस्पृध्रन् । एतानि । धीरः ।
निण्या । चिकेत । पृश्निः । यत् । ऊधः । मही । जभार ।
सा । विट् । सुऽवीरा । मरुत्ऽभिः । अस्तु । सनात् । सहंती । पुष्यंती ।
नृम्णं । यामं । येष्ठाः । शुभा । शोभिष्ठाः । श्रिया । संऽमिश्लाः ।
ओजःऽभिः । उग्राः । उग्रं । वः । ओजः । स्थिरा । शवांसि । अध ।

मरुत्ऽभिः । गणः । तुविष्मान् । शुभ्रः । वः । शुष्मः । ऋुध्मी । मनांसि । धुनिः । मुनिःऽइव । शर्धस्य । धृष्णोः । सनेमि । अस्मत् । युयोत । दिद्युं । मा । वः । दुःऽमतिः । इह । प्रणक् । नः । प्रिया । वः । नाम । हुवे । तुराणां । आ । यत् । तृपत् । मरुतः । वावशानाः ॥ २३ ॥ सुऽआयुधासः । इष्मिणः । सुऽनिष्काः । उत । स्वयं । तन्वः । शुंभमानाः । शुची । वः । हव्या । मरुतः । शुचीनां । शुचिं । हिनोमि । अध्वरं । शुचिऽभ्यः । ऋतेन । सत्यं । ऋतऽसापः । आयन् । शुचिऽजन्मानः । शुचयः । पावकाः । अंसेषु । आ । मरुतः । खादयः । वः । वक्षःऽसु । रुक्माः । उपऽशिश्रियाणाः । वि । विऽद्युतः । न । वृष्टिऽभिः । रुचानाः । अनु । स्वधां । आयुधैः । यच्छमानाः । प्र । बुध्न्या । वः । ईरते । महांसि । प्र । नामानि । प्रऽयज्यवः । तिरध्वं । सहस्रियं । दम्यं । भागं । एतं । गृहऽमेधीयं । मरुतः । जुषध्वं । यदि । स्तुतस्य । मरुतः । अधिऽइथ । इत्था । विप्रस्य । वाजिनः । हवीमन् । मक्षु । रायः । सुऽवीर्यस्य । दात । नु । चित् । यं । अन्यः । आऽदभत् । अरावा ॥ २४ ॥ अत्यासः । न । ये । मरुतः । सुऽअंचः । यक्षऽदृशः । न । शुभयंत । मर्याः । ते । हर्म्येऽस्थाः । शिशवः । न । शुभ्राः । वत्सासः । न । प्रऽक्रीळिनः । पयःऽधाः । दशस्यंतः । नः । मरुतः । मृळंतु । वरिवस्यंतः । रोदसीइति । सुमेकेइतिसुऽमेके । आरे । गोऽहा । नृऽहा । वधः । वः । अस्तु । सुम्नेभिः । अस्मेइति । वसवः । नमध्वं । आ । वः । होता । जोहवीति । सत्तः । सत्राचीं । रातिं । मरुतः । गृणानः । यः । ईवतः । वृषणः । अस्ति । गोपाः । सः । अद्वयावी । हवते । वः । उक्थैः । इमे । तुरं । मरुतः । रमयंति । इमे । सहः । सहसः । आ । नमंति । इमे । शंसं । वनुष्यतः । नि । पांति । गुरु । द्वेषः । अररुषे । दधंति । इमे । रध्रं । चित् । मरुतः । जुनंति । भृमिं । चित् । यथा । वसवः । जुषंत । अप । बाधध्वं । वृषणः । तमांसि । धत्त । विश्वं । तनयं । तोकं । अस्मेइति ॥ २५ ॥

मा । वः । दात्रात् । मरुतः । निः । अराम । मा । पश्चात् । दघ्म । रथ्यः । विऽभागे । आ । नः । स्पार्हे । भजतन । वसव्ये । यत् । ईं । सुऽजातं । वृषणः । वः । अस्ति । सं । यत् । हनंत । मन्युऽभिः । जनासः । शूराः । यह्वीषु । ओषधीषु । विक्षु । अध । स्म । नः । मरुतः । रुद्रियासः । त्रातारः । भूत । पृतनासु । अर्यः । भूरि । चक्र । मरुतः । पित्र्याणि । उक्थानि । या । वः । शस्यंते । पुरा । चित् । मरुत्ऽभिः । उग्रः । पृतनासु । साळ्हा । मरुत्ऽभिः । इत् । सनिता । वाजं । अर्वा । अस्मेइति । धीरः । मरुतः । शुष्मी । अस्तु । जनानां । यः । असुरः । विऽधर्ता । अपः । येन । सुऽक्षितये । तरेम । अध । स्वं । ओकः । अभि । वः । स्याम ॥ ० ॥ २६ ॥ मध्वः । वः । नाम । मारुतं । यजत्राः । प्र । यज्ञेषु । शवसा । मदंति । ये । रेजयंति । रोदसीइति । चित् । उर्वीइति । पिन्वंति । उत्सं । यत् । अयासुः । उग्राः । निऽचेतारः । हि । मरुतः । गृणंतं । प्रऽनेतारः । यजमानस्य । मन्म । अस्माकं । अद्य । विदथेषु । बर्हिः । आ । वीतये । सदत । पिप्रियाणाः । न । एतावत् । अन्ये । मरुतः । यथा । इमे । भ्राजंते । रुक्मैः । आयुधैः । तनूभिः । आ । रोदसीइति । विश्वऽपिशः । पिशानाः । समानं । अंजि । अंजते । शुभे । कं । ऋधक् । सा । वः । मरुतः । दिद्युत् । अस्तु । यत् । वः । आगः । पुरुषता । कराम । मा । वः । तस्यां । अपि । भूम । यजत्राः । अस्मेइति । वः । अस्तु । सुऽमतिः । चनिष्ठा । कृते । चित् । अत्र । मरुतः । रणंत । अनवद्यासः । शुचयः । पावकाः । प्र । नः । अवत । सुमतिऽभिः । यजत्राः । प्र । वाजेभिः । तिरत । पुष्यसे । नः । उत । स्तुतासः । मरुतः । व्यंतु । विश्वेभिः । नामऽभिः । नरः । हवींषि । ददात । नः । अमृतस्य । प्रऽजायै । जिगृत । रायः । सूनृता । मघानि । आ । स्तुतासः । मरुतः । विश्वे । ऊती । अच्छ । सूरीन् । सर्वऽताता । जिगात । ये । नः । त्मना । शतिनः । वर्धयंति ॥ ० ॥ २७ ॥ प्र । साकंऽउक्षे ।

अर्चत । गणाय । यः । दैव्यस्य । धाम्नः । तुविष्मान् । उत । क्षोदंति । रोदसीइति । महिऽत्वा । नक्षंते । नाकं । निःऽऋतेः । अवंशात् । जनूः । चित् । वः । मरुतः । त्वेष्येण । भीमासः । तुविऽमन्यवः । अयासः । प्र । ये । महःऽभिः । ओजसा । उत । संति । विश्वः । वः । यामन् । भयते । स्वःऽदृक् । बृहत् । वयः । मघवत्ऽभ्यः । दधात । जुजोषन् । इत् । मरुतः । सुऽस्तुतिं । नः । गतः । न । अध्वा । वि । तिराति । जंतुं । प्र । नः । स्पार्हाभिः । ऊतिऽभिः । तिरेत । युष्माऽऊतः । विप्रः । मरुतः । शतस्वी । युष्माऽऊतः । अर्वा । सहुरिः । सहस्री । युष्माऽऊतः । संऽराट् । उत । हंति । वृत्रं । प्र । तत् । वः । अस्तु । धूतयः । देष्णं । तान् । आ । रुद्रस्य । मीळ्हुषः । विवासे । कुवित् । नंसंते । मरुतः । पुनः । नः । यत् । सस्वर्ता । जिहीळिरे । यत् । आविः । अव । तत् । एनः । ईमहे । तुराणां ॥ प्र । सा । वाचि । सुऽस्तुतिः । मघोनां । इदं । सुऽउक्तं । मरुतः । जुषंत । आरात् । चित् । द्वेषः । वृषणः । युयोत ॥ ० ॥ २८ ॥ यं । त्रायध्वे । इदंऽइदं । देवासः । यं । च । नयथ । तस्मै । अग्ने । वरुण । मित्र । अर्यमन् । मरुतः । शर्म । यच्छत ॥ ० ॥ ईजानः । तरति । द्विषः । प्र । सः । क्षयं । तिरते । वि । महीः । इषः । यः । वः । वराय । दाशति । नहि । वः । चरमं । चन । वसिष्ठः । परिऽमंसते । अस्माकं । अद्य । मरुतः । सुते । सचा । विश्वे । पिबत । कामिनः । नहि । वः । ऊतिः । पृतनासु । मर्धति । यस्मै । अराध्वं । नरः । अभि । वः । आ । अवर्त् । सुऽमतिः । नवीयसी । तूयं । यात । पिपीषवः । ओइति । सु । घृष्विऽराधसः । यातन । अंधांसि । पीतये । इमा । वः । हव्या । मरुतः । ररे । हि । कं । मोइति । सु । अन्यत्र । गंतन । आ । च । नः । बर्हिः । सदत । अवित । च । नः । स्पार्हाणि । दातवे । वसु । अस्रेधंतः । मरुतः । सोम्ये । मधौ । स्वाहा । इह । मादयाध्वै ॥ २९ ॥ सस्वरिति । चित् । हि । तन्वः । शुंभमानाः ।

आ । हंसासः । नीलऽपृष्ठाः । अपप्तन् । विश्वं । शर्धः । अभितः । मा । नि । सेद । नरः । न । रण्वाः । सवने । मदंतः । यः । नः । मरुतः । अभि । दुःऽहृणायुः । तिरः । चित्तानि । वसवः । जिघांसति । द्रुहः । पाशान् । प्रति । सः । मुचीष्ट । तपिष्ठेन । हन्मना । हंतन । तं । सांऽतपनाः । इदं । हविः । मरुतः । तत् । जुजुष्टन । युष्माकं । ऊती । रिशादसः । गृहऽमेधासः । आ । गत । मरुतः । मा । अप । भूतन । युष्माकं । ऊती । सुऽदानवः । इहऽइह । वः । स्वऽतवसः । कवयः । सूर्यऽत्वचः । यज्ञं । मरुतः । आ । वृणे ॥ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ ३० ॥

इति पञ्चमाष्टके चतुर्थोध्यायः ॥ ४ ॥

## ॥ अथ पञ्चमोध्यायः ॥

हरिः ॐ ॥ यत् । अद्य । सूर्य । ब्रवः । अनागाः । उत्ऽयन् । मित्राय । वरुणाय । सत्यं । वयं । देवऽत्रा । अदिते । स्याम । तव । प्रियासः । अर्यमन् । गृणंतः । एषः । स्यः । मित्रावरुणा । नृऽचक्षाः । उभेइति । उत् । एति । सूर्यः । अभि । ज्मन् । विश्वस्य । स्थातुः । जगतः । च । गोपाः । ऋजु । मर्तेषु । वृजिना । च । पश्यन् । अयुक्त । सप्त । हरितः । सधऽस्थात् । याः । ईं । वहंति । सूर्यं । घृताचीः । धामानि । मित्रावरुणा । युवाकुः । सं । यः । यूथाऽइव । जनिमानि । चष्टे । उत् । वां । पृक्षासः । मधुऽमंतः । अस्थुः । आ । सूर्यः । अरुहत् । शुक्रं । अर्णः । यस्मै । आदित्याः । अध्वनः । रदंति । मित्रः । अर्यमा । वरुणः । सऽजोषाः । इमे । चेतारः । अनृतस्य ।

भूरैः । मित्रः । अर्यमा । वरुणः । हि । संति । इमे । ऋतस्य । ववृधुः ।
दुरोणे । शग्मासः । पुत्राः । अदितेः । अदब्धाः । इमे । मित्रः ।
वरुणः । दुःऽदभासः । अचेतसं । चित् । चितयंति । दक्षैः । अपि ।
क्रतुं । सुऽचेतसं । वतंतः । तिरः । चित् । अंहः । सुऽपथा ।
नयंति ॥ १ ॥ इमे । दिवः । अनिऽमिषा । पृथिव्याः । चिकित्वांसः ।
अचेतसं । नयंति । प्रऽव्राजे । चित् । नद्यः । गाधं । अस्ति । पारं ।
नः । अस्य । विष्पितस्य । पर्षन् । यत् । गोपावत् । अदितिः । शर्म ।
भद्रं । मित्रः । यच्छंति । वरुणः । सुऽदासे । तस्मिन् । आ । तोकं ।
तनयं । दधानाः । मा । कर्म । देवऽहेळनं । तुरासः । अव । वेदिं ।
होत्राभिः । यजेत । रिपः । काः । चित् । वरुणऽध्रुतः । सः । परि ।
द्वेषःऽभिः । अर्यमा । वृणक्तु । उरुं । सुऽदासे । वृषणौ । ऊँइति ।
लोकं ॥ ० ॥ संऽऋतिः । त्वेषी । एषां । अपीच्येन । सहसा ।
सहंते । युष्मत् । भिया । वृषणः । रेजमानाः । दक्षस्य । चित् ।
महिना । मृळत । नः । यः । ब्रह्मणे । सुऽमतिं । आऽयजाते ।
वाजस्य । सातौ । परमस्य । रायः । सीक्षंत । मन्युं । मघऽवानः ।
अर्यः । उरु । क्षयाय । चक्रिरे । सुऽधातु । इयं । देवा । पुरःऽहितिः ।
युवऽभ्यां । यज्ञेषु । मित्रावरुणा । अकारि । विश्वानि । दुःऽगा ।
पिपृतं । तिरः । नः ॥ ० ॥ २ ॥ उत् । वां । चक्षुः । वरुणा ।
सुऽप्रतीकं । देवयोः । एति । सूर्यः । ततन्वान् । अभि । यः । विश्वा ।
भुवनानि । चष्टे । सः । मन्युं । मर्त्येषु । आ । चिकेत । प्र । वां ।
सः । मित्रावरुणौ । ऋतऽवा । विप्रः । मन्मानि । दीर्घऽश्रुत् । इयर्ति ।
यस्य । ब्रह्माणि । सुक्रतूइतिसुऽक्रतू । अवाथः । आ । यत् । क्रत्वा । न ।
शरदः । पृणथेइति ॥ प्र । उरोः । मित्रावरुणा । पृथिव्याः । प्र । दिवः ।
ऋष्वात् । बृहतः । सुदानूइतिसुऽदानू । स्पशः । दधाथेइति । ओषधीषु ।
विक्षु । ऋधक् । यतः । अनिऽमिषं । रक्षमाणा । शंसं । मित्रस्य ।
वरुणस्य । धाम । शुष्मः । रोदसीइति । बद्बधे । महिऽत्वा । अयन् ।

मासाः । अयंज्वनां । अवीराः । प्र । यज्ञऽमन्मा । वृजने । तिराते । अमूरा । विश्वा । वृषणौ । इमा । वां । न । यासु । चित्रं । ददृशे । न । यक्षं । द्रुहः । सचन्ते । अनृता । जनानां । न । वां । निण्यानि । अचिते । अभूवन् । सं । ऊँइति । वां । यज्ञं । महयं । नमःऽभिः । हुवे । वां । मित्रावरुणा । सऽबाधः । प्र । वां । मन्मानि । ऋचसे । नवानि । कृतानि । ब्रह्म । जुजुषन् । इमानि ॥ ० ॥ ३ ॥ उत् । सूर्यः । बृहत् । अर्चींषि । अश्रेत् । पुरु । विश्वा । जनिम । मानुषाणां । समः । दिवा । ददृशे । रोचमानः । क्रत्वा । कृतः । सुऽकृतः । कर्तृऽभिः । भूत् । सः । सूर्य । प्रति । पुरः । नः । उत् । गाः । एभिः । स्तोमेभिः । एतशेभिः । एवैः । प्र । नः । मित्राय । वरुणाय । वोचः । अनागसः । अर्यम्णे । अग्नये । च । वि । नः । सहस्रं । शुरुधः । रदंतु । ऋतऽवानः । वरुणः । मित्रः । अग्निः ॥ ० ॥ आ । नः । कामं । पूपुरंतु । स्तवानाः । द्यावाभूमीइति । अदिते । त्रासीथां । नः । ये । वां । जज्ञुः । सुऽजनिमानः । ऋष्वेइति । मा । हेळे । भूम । वरुणस्य । वायोः । मा । मित्रस्य । प्रियऽतमस्य । नृणां । प्र । बाहवा । सिसृतं । जीवसे । नः । आ । नः । गव्यूतिं । उक्षतं । घृतेन । आ । नः । जने । श्रवयतं । युवाना । श्रुतं । मे । मित्रावरुणा । हवा । इमा । नु । मित्रः । वरुणः । अर्यमा । नः । त्मने । तोकाय । वरिवः । दधंतु । सुऽगा । नः । विश्वा । सुऽपथानि । संतु ॥ ० ॥ ॥ ४ ॥ उत् । ऊँइति । एति । सुऽभगः । विश्वऽचक्षाः । साधारणः । सूर्यः । मानुषाणां । चक्षुः । मित्रस्य । वरुणस्य । देवः । चर्मऽइव । यः । संऽअविव्यक् । तमांसि ॥ ० ॥ प्रऽसविता । जनानां । महान् । केतुः । अर्णवः । सूर्यस्य । समनं । चक्रं । परिऽआविवृत्सन् । यत् । एतशः । वहति । धूःऽसु । युक्तः । विऽभ्राजमानः । उषसां । उपऽस्थात् । रेभैः । उत् । एति । अनुऽमद्यमानः । एषः । मे । देवः । सविता । चच्छंद । यः । समानं । न । प्रऽमिमाति । धाम । दिवः ।

रुक्मः । उरुऽचक्षाः । उत् । एति । दूरेऽअर्थः । तरणिः । भ्राजमानः ।
नूनं । जनाः । सूर्येण । प्रऽसूताः । अयन् । अर्थानि । कृणवन् ।
अपांसि । यत्र । चक्रुः । अमृताः । गातुं । अस्मै । श्येनः । न । दीयन् ।
अनु । एति । पाथः । प्रति । वां । सूरे । उत्ऽइते । विधेम । नमःऽभिः ।
मित्रावरुणा । उत । हव्यैः ॥ ० ॥ ५ ॥ दिवि । क्षयंता । रजसः ।
पृथिव्यां । प्र । वां । घृतस्य । निःऽनिजः । ददीरन् । हव्यं । नः ।
मित्रः । अर्यमा । सुऽजातः । राजा । सुऽक्षत्रः । वरुणः । जुषंत ।
आ । राजाना । महः । ऋतस्य । गोपा । सिंधुपतीइतिसिंधुऽपती ।
क्षत्रिया । यातं । अर्वाक् । इळां । नः । मित्रावरुणा । उत । वृष्टिं ।
अव । दिवः । इन्वतं । जीरदानूइतिजीरऽदानू ॥ ० ॥ देवः । अर्यः ।
प्र । साधिष्ठेभिः । पथिऽभिः । नयंतु । ब्रवत् । यथा । नः । आत् ।
अरिः । सुऽदासे । इषा । मदेम । सह । देवऽगोपाः । यः । वां ।
गर्तं । मनसा । तक्षत् । एतं । ऊर्ध्वां । धीतिं । कृणवत् । धारयत् ।
च । उक्षेथां । मित्रावरुणा । घृतेन । ता । राजाना । सुऽक्षितीः ।
तर्पयेथां । एषः । स्तोमः । वरुण । मित्र । तुभ्यं । सोमः । शुक्रः ।
न । वायवे । अयामि ॥ ० ॥ ६ ॥ ० ॥ सुऽउक्तैः । मित्रं । हुवे ।
वरुणं । पूतऽदक्षं । ययोः । असुर्यं । अक्षितं । ज्येष्ठं । विश्वस्य ।
यामन् । आऽचिता । जिगत्नु । ता । हि । देवानां । असुरा । तौ ।
अर्या । ता । नः । क्षितीः । करतं । ऊर्जयंतीः । अश्याम । मित्रावरुणा ।
वयं । वां । द्यावा । च । यत्र । पीपयन् । अहा । च । ता । भूरिऽ-
पाशौ । अनृतस्य । सेतूइति । दुरत्येतूइतिदुःऽअत्येतू । रिपवे । मर्त्याय ॥
ऋतस्य । मित्रावरुणा । पथा । वां । अपः । न । नावा । दुःऽइता ।
तरेम । आ । नः । मित्रावरुणा । हव्यऽजुष्टिं । घृतैः । गव्यूतिं ।
उक्षतं । इळाभिः । प्रति । वां । अत्र । वरं । आ । जनाय । पृणीतं ।
उद्नः । दिव्यस्य । चारोः ॥ ० ॥ ७ ॥ प्र । मित्रयोः । वरुणयोः ।
स्तोमः । नः । एतु । शूष्यः । नमस्वान् । तुविऽजातयोः । या ।

धारयंत । देवाः । सुऽदक्षा । दक्षऽपितरा । असुर्याय । प्रऽमहसा । ता । नः । क्षितिऽपा । तनूऽपा । वरुण । जरितॄणां । मित्र । साधयंत । धियः । यत् । अद्य । सूरे । उत्ऽइते । अनागाः । मित्रः । अर्यमा । सुवाति । सविता । भगः । सुप्रऽअवीः । अस्तु । सः । क्षयः । प्र । नु । यामन् । सुऽदानवः । ये । नः । अंहः । अतिऽपिप्रति ॥ ८ ॥ उत । स्वऽराजः । अदितिः । अदब्धस्य । व्रतस्य । ये । महः । राजानः । ईशते ॥ ० ॥ मित्रं । गृणीषे । वरुणं । अर्यमणं । रिशादसं । राया । हिरण्यऽया । मतिः । इयं । अवृकाय । शवसे । इयं । विप्रा । मेधऽसातये । ते । स्याम । देव । वरुण । ते । मित्र । सूरिऽभिः । सह । इषं । स्वरितिस्वः । च । धीमहि । बहवः । सूरऽचक्षसः । अग्निऽजिह्वाः । ऋतऽवृधः । त्रीणि । ये । येमुः । विदथानि । धीतिऽभिः । विश्वानि । परिभूतिऽभिः ॥ ९ ॥ वि । ये । दधुः । शरदं । मासं । आत् । अहः । यज्ञं । अक्तुं । च । आत् । ऋचं । अनाप्यं । वरुणः । मित्रः । अर्यमा । क्षत्रं । राजानः । आशत । तत् । वः । अद्य । मनामहे । सुऽउक्तैः । सूरे । उत्ऽइते । यत् । ओहते । वरुणः । मित्रः । अर्यमा । यूयं । ऋतस्य । रथ्यः । ऋतऽवानः । ऋतऽजाताः । ऋतऽवृधः । घोरासः । अनृतऽद्विषः । तेषां । वः । सुम्ने । सुच्छर्दिःऽतमे । नरः । स्याम । ये । च । सूरयः । उत् । ऊँइति । त्यत् । दर्शतं । वपुः । दिवः । एति । प्रतिऽह्वरे । यत् । ईं । आशुः । वहति । देवः । एतशः । विश्वस्मै । चक्षसे । अरं । शीर्ष्णःऽशीर्ष्णः । जगतः । तस्थुषः । पतिं । समया । विश्वं । आ । रजः । सप्त । स्वसारः । सुविताय । सूर्यं । वहंति । हरितः । रथे ॥ १० ॥ तत् । चक्षुः । देवऽहितं । शुक्रं । उत्ऽचरत् । पश्येम । शरदः । शतं । जीवेम । शरदः । शतं । काव्येभिः । अदाभ्या । आ । यातं । वरुण । द्युऽमत् । मित्रः । च । सोमऽपीतये । दिवः । धामऽभिः । वरुण । मित्रः । आ । च । आ । यातं । अद्रुहा । पिबतं । सोमं । आतुजीइत्याऽतुजी ।

यातं । मित्रावरुणा । जुषाणौ । आऽहुतिं । नरा ॥ ० ॥ ११ ॥ प्रति । वां । रथं । नृपतीइतिनृऽपती । जरध्यै । हविष्मता । मनसा । यज्ञियेन । यः । वां । दूतः । न । धिष्ण्यौ । अजीगः । अच्छ । सूनुः । न । पितरा । विवक्मि ॥ अशोचि । अग्निः । संऽइधानः । अस्मेइति । उपोइति । अदृश्रन् । तमसः । चित् । अंताः । अचेति । केतुः । उषसः । पुरस्तात् । श्रिये । दिवः । दुहितुः । जायमानः । अभि । वां । नूनं । अश्विना । सुऽहोता । स्तोमैः । सिसक्ति । नासत्या । विवक्वान् । पूर्वीभिः । यातं । पथ्याभिः । अर्वाक् । स्वःऽविदा । वसुऽमता । रथेन । अवोः । वां । नूनं । अश्विना । युवाकुः । हुवे । यत् । वां । सुते । माध्वीइति । वसुऽयुः । आ । वां । वहंतु । स्थविरासः । अश्वाः । पिबाथः । अस्मेइति । सुऽसुता । मधूनि । प्राचीं । ऊँइति । देवा । अश्विना । धियं । मे । अमृध्रां । सातये । कृतं । वसुऽयुं । विश्वाः । अविष्टं । वाजे । आ । पुरंऽधीः । ता । नः । शक्तं । शचीपतीइतिशचीऽपती । शचीभिः ॥ १२ ॥ अविष्टं । धीषु । अश्विना । नः । आसु । प्रजाऽवत् । रेतः । अह्रयं । नः । अस्तु । आ । वां । तोके । तनये । तूतुजानाः । सुऽरत्नासः । देवऽवीतिं । गमेम ॥ एषः । स्यः । वां । पूर्वगत्वाऽइव । सख्ये । निऽधिः । हितः । माध्वीइति । रातः । अस्मेइति । अहेळता । मनसा । आ । यातं । अर्वाक् । अश्नंता । हव्यं । मानुषीषु । विक्षु । एकस्मिन् । योगे । भुरणा । समाने । परि । वां । सप्त । स्रवतः । रथः । गात् । न । वायंति । सुऽभ्वः । देवऽयुक्ताः । ये । वां । धूःऽसु । तरणयः । वहंति । असश्चता । मघवत्ऽभ्यः । हि । भूतं । ये । राया । मघऽदेयं । जुनंति । प्र । ये । बंधुं । सूनृताभिः । तिरंते । गव्या । पृंचंतः । अश्व्या । मघानि । नु । मे । हवं । आ । शृणुतं । युवाना । यासिष्टं । वर्तिः । अश्विनौ । इराऽवत् । धत्तं । रत्नानि । जरतं । च । सूरीन् ॥ ० ॥ ॥ १३ ॥ आ । शुभ्रा । यातं । अश्विना । सुऽअश्वा । गिरः । दस्रा ।

जुजुषाणा । युवाकोः । हव्यानि । च । प्रतिऽभृता । वीतं । नः । प्र । वां । अंधांसि । मद्यानि । अस्थुः । अरं । गंतं । हविषः । वीतये । मे । तिरः । अर्यः । हवनानि । श्रुतं । नः । प्र । वां । रथः । मनःऽजवाः । इयर्ति । तिरः । रजांसि । अश्विना । शतऽऊतिः । अस्मभ्यं । सूर्यावसूइति । इयानः । अयं । ह । यत् । वां । देवऽयाः । ऊँइति । अद्रिः । ऊर्ध्वः । विवक्ति । सोमऽसुत् । युवऽभ्यां । आ । वल्गूइति । विप्रः । ववृतीत । हव्यैः । चित्रं । ह । यत् । वां । भोजनं । नु । अस्ति । नि । अत्रये । महिष्वंतं । युयोतं । यः । वां । ओमानं । दधते । प्रियः । सन् ॥ १४ ॥ उत । त्यत् । वां । जुरते । अश्विना । भूत् । च्यवानाय । प्रतीत्यं । हविःऽदे । अधि । यत् । वर्पः । इतःऽऊति । धत्थः । उत । त्यं । भुज्युं । अश्विना । सखायाः । मध्ये । जहुः । दुःऽएवासः । समुद्रे । निः । ईं । पर्षत् । अरावा । यः । युवाकुः । वृकाय । चित् । जसमानाय । शक्तं । उत । श्रुतं । शयवे । हूयमाना । यौ । अघ्न्यां । अपिन्वतं । अपः । न । स्तर्यं । चित् । शक्ती । अश्विना । शचीभिः । एषः । स्यः । कारुः । जरते । सुऽउक्तैः । अग्रे । बुधानः । उषसां । सुऽमन्मा । इषा । तं । वर्धत् । अघ्न्या । पयःऽभिः ॥ ० ॥ १५ ॥ आ । वां । रथः । रोदसीइति । बद्बधानः । हिरण्ययः । वृषऽभिः । यातु । अश्वैः । घृतऽवर्तनिः । पविऽभिः । रुचानः । इषां । वोळ्हा । नृऽपतिः । वाजिनीऽवान् । सः । पप्रथानः । अभि । पंच । भूम । त्रिऽवंधुरः । मनसा । आ । यातु । युक्तः । विशः । येन । गच्छथः । देवऽयंतीः । कुत्र । चित् । यामं । अश्विना । दधाना । सुऽअश्वा । यशसा । आ । यातं । अर्वाक् । दस्रा । निऽधिं । मधुऽमंतं । पिबाथः । वि । वां । रथः । वध्वा । यादमानः । अंतान् । दिवः । बाधते । वर्तनिऽभ्यां । युवोः । श्रियं । परि । योषा । अवृणीत । सूरः । दुहिता । परिऽतक्म्यायां । यत् । देवऽयंतं । अवथः । शचीभिः । परि । घ्रंसं । ओमना । वां । वयः । गात् । यः । ह । स्यः । वां । रथिरा । वस्ते ।

उस्राः । रथः । युजानः । परिऽयाति । वर्तिः । तेन । नः । शं । योः । उषसः । विऽउष्टौ । नि । अश्विना । वहतं । यज्ञे । अस्मिन् । नरा । गौराऽइव । विऽद्युतं । तृषाणा । अस्माकं । अद्य । सवना । उप । यातं । पुरुऽत्रा । हि । वां । मतिऽभिः । हवंते । मा । वां । अन्ये । नि । यमन् । देवऽयंतः । युवं । भुज्युं । अवऽविद्धं । समुद्रे । उत् । ऊहथुः । अर्णसः । अस्रिधानैः । पतत्रिऽभिः । अश्रमैः । अव्यथिऽभिः । दंसनाभिः । अश्विना । पारयंता ॥ ० ॥ १६ ॥ आ । विश्वऽवारा । अश्विना । गतं । नः । प्र । तत् । स्थानं । अवाचि । वां । पृथिव्यां । अश्वः । न । वाजी । शुनऽपृष्ठः । अस्थात् । आ । यत् । सेदथुः । ध्रुवसे । न । योनिं । सिसक्ति । सा । वां । सुऽमतिः । चनिष्ठा । अतापि । घर्मः । मनुषः । दुरोणे । यः । वां । समुद्रात् । सरितः । पिपर्ति । एतऽग्वा । चित् । न । सुऽयुजा । युजानः । यानि । स्थानानि । अश्विना । दधाथेइति । दिवः । यह्वीषु । ओषधीषु । विक्षु । नि । पर्वतस्य । मूर्धनि । सदंता । इषं । जनाय । दाशुषे । वहंता । चनिष्ठं । देवौ । ओषधीषु । अप्ऽसु । यत् । योग्याः । अश्नवैथेइति । ऋषीणां । पुरूणि । रत्ना । दधतौ । नि । अस्मेइति । अनु । पूर्वाणि । चख्यथुः । युगानि । शुश्रुऽवांसा । चित् । अश्विना । पुरूणि । अभि । ब्रह्माणि । चक्षाथेइति । ऋषीणां । प्रति । प्र । यातं । वरं । आ । जनाय । अस्मेइति । वां । अस्तु । सुऽमतिः । चनिष्ठा । यः । वां । यज्ञः । नासत्या । हविष्मान् । कृतऽब्रह्मा । सऽमर्यः । भवाति । उप ॥ ० ॥ वसिष्ठं । इमा । ब्रह्माणि । ऋच्यंते । युवऽभ्यां । इयं । मनीषा । इयं । अश्विना । गीः । इमां । सुऽवृक्तिं । वृषणा । जुषेथां । इमा । ब्रह्माणि । युवऽयूनि । अग्मन् ॥ ० ॥ १७ ॥ इति चतुर्थोनुवाकः ॥ — :: — ॥

अप । स्वसुः । उषसः । नक् । जिहीते । रिणक्ति । कृष्णीः । अरुषाय । पंथां । अश्वऽमघा । गोऽमघा । वां । हुवेम । दिवा । नक्तं । शरुं । अस्मत् । युयोतं । उपऽआयातं । दाशुषे । मर्त्याय । रथेन । वामं ।

अश्विना । वहंता । युयुतं । अस्मत् । अनिरां । अमीवां । दिवां । नक्तं । माध्वीइति । त्रासीथां । नः । आ । वां । रथं । अवमस्यां । विऽउंष्टौ । सुम्नऽयवंः । वृषणः । वर्तयंतु । स्यूमंऽगभस्ति । ऋतयुक्ऽभिः । अश्वैः । आ । अश्विना । वसुऽमंतं । वहेथां । यः । वां । रथः । नृपतीइतिऽनृपती । अस्ति । वोळ्हा । त्रिऽवंधुरः । वसुऽमान् । उस्रऽयांमा । आ । नः । एना । नासत्या । उप । यातं । अभि । यत् । वां । विश्वऽप्स्न्यः । जिगाति । युवं । च्यवानं । जरसंः । अमुमुक्तं ॥ ० ॥ निः । अंहसः । तमसः । स्पर्तं । अत्रिं । नि । जाहुषं । शिथिरे । धातं । अंतरिति ॥ ० ॥ १८ ॥ आ । गोऽमंता । नासत्या । रथेन । अश्वंऽवता । पुरुऽचंद्रेण । यातं । अभि । वां । विश्वाः । निऽयुतंः । सचंते । स्पार्हया । श्रिया । तन्वां । शुभाना । आ । नः । देवेभिः । उप । यातं । अर्वाक् । सऽजोषसा । नासत्या । रथेन । युवोः । हि । नः । सख्या । पित्र्याणि । समानः । बंधुः । उत । तस्य । वित्तं । उत् । ऊंइति । स्तोमासः । अश्विनोः । अबुध्रन् । जामि । ब्रह्माणि । उषसंः । च । देवीः । आऽविवासन् । रोदसीइति । धिष्ण्येइति । इमेइति । अच्छ । विप्रः । नासत्या । विवक्ति । वि । च । इत् । उच्छंति । अश्विनौ । उषसंः । प्र । वां । ब्रह्माणि । कारवंः । भरंते ॥ ० ॥ बृहत् । अन्नयः । संऽइध्यां । जरंते । आ । पश्चातात् । नासत्या । आ । पुरस्तात् । आ । अश्विना । यातं । अधरात् । उदक्तात् ॥ आ । विश्वतः । पांचंऽजन्येन । राया ॥ ० ॥ १९ ॥ ॥ ० ॥ स्तोमं । देवऽयंतः । दधानाः । पुरुऽदंसा । पुरुऽतमा । पुराऽजा । अमर्त्या । हवते । अश्विना । गीः । नि । ऊंइति । प्रियः । मनुषः । सादि । होता । नासत्या । यः । यजते । वंदते । च । अश्नीतं । मध्वः । अश्विनौ । उपाके । आ । वां । वोचे । विदथेषु । प्रयस्वान् । अहेम । यज्ञं । पथां । उराणाः । इमां । सुऽवृक्तिं । वृषणा । जुषेथां । श्रुष्टीवाऽइंव । प्रऽइंषितः । वां । अबोधि । प्रति । स्तोमैः ।

जरमाणः । वसिष्ठः । उप । त्वा । वह्नीइति । गमतः । विशः । नः ।
रक्षःऽहना । संऽभृता । वीळुपाणीइतिवीळुऽपाणी । सं । अंधांसि ।
अग्मत । मत्सराणि । मा । नः । मर्धिष्ट । आ । गतं । शिवेन ॥ ० ॥
॥ २० ॥ ० ॥ दिविष्टयः । उस्रा । हवंते । अश्विना । अयं । वां ।
अह्वे । अवसे । शचीवसूइतिशचीऽवसू । विशंऽविशं । हि । गच्छथः ।
युवं । चित्रं । ददथुः । भोजनं । नरा । चोदेथां । सूनृताऽवते ।
अर्वाक् । रथं । सऽमनसा । नि । यच्छतं ॥ ० ॥ आ । यातं । उप ।
भूषतं । मध्वः । पिबतं । अश्विना । दुग्धं । पयः । वृषणा । जेन्यावसू-
इति ॥ ० ॥ अश्वासः । ये । वां । उप । दाशुषः । गृहं । युवां ।
दीयंति । बिभ्रतः । मक्षुयुऽभिः । नरा । हयेभिः । अश्विना । आ ।
देवा । यातं । अस्मयूइत्यस्मऽयू । अधं । ह । यंतः । अश्विना । पृक्षः ।
सचंत । सूरयः । ता । यंसतः । मघवत्ऽभ्यः । ध्रुवं । यशः । छर्दिः ।
अस्मभ्यं । नासत्या । प्र । ये । ययुः । अवृकासः । रथाःऽइव ।
नृऽपातारः । जनानां । उत । स्वेन । शवसा । शूशुवुः । नरः । उत ।
क्षियंति । सुऽक्षितिं ॥ २१ ॥ वि । उषाः । आवः । दिविऽजाः ।
ऋतेन । आविःऽकृण्वाना । महिमानं । आ । अगात् । अप । द्रुहः ।
तमः । आवः । अजुष्टं । अंगिरःऽतमा । पथ्याः । अजीगरिति । महे ।
नः । अद्य । सुवितायं । बोधि । उषः । महे । सौभगाय । प्र । यंधि ।
चित्रं । रयिं । यशसं । धेहि । अस्मेइति । देवि । मर्तेषु । मानुषि ।
श्रवस्युं । एते । त्ये । भानवः । दर्शतायाः । चित्राः । उषसः । अमृतासः ।
आ । अगुः । जनयंतः । दैव्यानि । व्रतानि । आऽपृणंतः । अंतरिक्षा ।
वि । अस्थुः । एषा । स्या । युजाना । पराकात् । पंच । क्षितीः ।
परि । सद्यः । जिगाति । अभिऽपश्यंती । वयुना । जनानां । दिवः ।
दुहिता । भुवनस्य । पत्नी । वाजिनीऽवती । सूर्यस्य । योषा । चित्रऽमघा ।
रायः । ईशे । वसूनां । ऋषिऽस्तुता । जरयंती । मघोनी । उषाः ।
उच्छति । वह्निऽभिः । गृणाना । प्रति । द्युतानां । अरुषासः । अश्वाः ।

चित्राः । अदृश्रन् । उषसं । वहंतः । याति । शुभ्रा । विश्वऽपिशा । रथेन । दधाति । रत्नं । विधते । जनाय । सत्या । सत्येभिः । महती । महत्ऽभिः । देवी । देवेभिः । यजता । यजत्रैः । रुजत् । दृळ्हानि । ददत् । उस्रियाणां । प्रति । गावः । उषसं । वावशंत । नु । नः । गोऽमत् । वीरऽवत् । धेहि । रत्नं । उषः । अश्वऽवत् । पुरुऽभोजः । अस्मेइति । मा । नः । बर्हिः । पुरुषता । निदे । कः ॥ ० ॥ २२ ॥ उत् । ऊंइति । ज्योतिः । अमृतं । विश्वऽजन्यं । विश्वानरः । सविता । देवः । अश्रेत् । क्रत्वा । देवानां । अजनिष्ट । चक्षुः । आविः । अकः । भुवनं । विश्वं । उषाः । प्र । मे । पंथाः । देवऽयानाः । अदृश्रन् । अमर्धंतः । वसुऽभिः । इष्कृतासः । अभूत् । ऊंइति । केतुः । उषसः । पुरस्तात् । प्रतीची । आ । अगात् । अधि । हर्म्येभ्यः । तानि । इत् । अहानि । बहुलानि । आसन् । या । प्राचीनं । उत्ऽइता । सूर्यस्य । यतः । परि । जारःऽइव । आऽचरंती । उषः । ददृक्षे । न । पुनः । यतीऽइव । ते । इत् । देवानां । सधऽमादः । आसन् । ऋतऽवानः । कवयः । पूर्व्यासः । गूळ्हं । ज्योतिः । पितरः । अनु । आविंदन् । सत्यऽमंत्राः । अजनयन् । उषसं । समने । ऊंवें । अधि । संऽगतासः । सं । जानते । न । यतंते । मिथः । ते । ते । देवानां । न । मिनंति । व्रतानि । अमर्धंतः । वसुऽभिः । यादमानाः । प्रति । त्वा । स्तोमैः । ईळते । वसिष्ठाः । उषःऽबुधः । सुऽभगे । तुस्तुऽवांसः । गवां । नेत्री । वाजऽपत्नी । नः । उच्छ । उषः । सुऽजाते । प्रथमा । जरस्व । एषा । नेत्री । राधसः । सूनृतानां । उषाः । उच्छंती । रिभ्यते । वसिष्ठैः । दीर्घऽश्रुतं । रयिं । अस्मेइति । दधाना ॥ ० ॥ २३ ॥ उपोइति । रुरुचे । युवतिः । न । योषा । विश्वं । जीवं । प्रऽसुवंती । चरायै । अभूत् । अग्निः । संऽइधे । मानुषाणां । अकः । ज्योतिः । बाधमाना । तमांसि । विश्वं । प्रतीची । सऽप्रथाः । उत् । अस्थात् । रुशत् । वासः । बिभ्रती । शुक्रं । अश्वैत् । हिरण्यऽवर्णा । सुदृशीकऽसंदृक् । गवां । माता ।

नेत्री । अह्नां । अरोचि । देवानां । चक्षुः । सुऽभगा । वहंती । श्वेतं । नयंती । सुऽदृशीकं । अश्वं । उषाः । अदर्शि । रश्मिऽभिः । विऽअक्ता । चित्रऽमघा । विश्वं । अनु । प्रऽभूता । अंतिऽवामा । दूरे । अमित्रं । उच्छ । उर्वीं । गव्यूतिं । अभयं । कृधि । नः । यवय । द्वेषः । आ । भर । वसूनि । चोदय । राधः । गृणते । मघोनि । अस्मेइति । श्रेष्ठेभिः । भानुऽभिः । वि । भाहि । उषः । देवि । प्रऽतिरंती । नः । आयुः । इषं । च । नः । दधती । विश्वऽवारे । गोऽमत् । अश्वऽवत् । रथऽवत् । च । राधः । यां । त्वा । दिवः । दुहितः । वर्धयंति । उषः । सुऽजाते । मतिऽभिः । वसिष्ठाः । सा । अस्मासु । धाः । रयिं । ऋष्वं । बृहतं ॥ ० ॥ २४ ॥ प्रति । केतवः । प्रथमाः । अदृश्रन् । ऊर्ध्वाः । अस्याः । अंजयः । वि । श्रयंते । उषः । अर्वाचा । बृहता । रथेन । ज्योतिष्मता । वामं । अस्मभ्यं । वक्षि । प्रति । सीं । अग्निः । जरते । संऽइद्धः । प्रति । विप्रासः । मतिऽभिः । गृणंतः । उषाः । याति । ज्योतिषा । बाधमाना । विश्वा । तमांसि । दुःऽइता । अप । देवी ॥ ० ॥ प्रति । अदृश्रन् । पुरस्तात् । ज्योतिः । यच्छंतीः । उषसः । विऽभातीः । अजीजनन् । सूर्यं । यज्ञं । अग्निं । अपाचीनं । तमः । अगात् । अजुष्टं । अचेति । दिवः । दुहिता । मघोनी । विश्वे । पश्यंति । उषसं । विऽभातीं ॥ ० ॥ स्वधया । युज्यमानं । आ । यं । अश्वासः । सुऽयुजः । वहंति । प्रति । त्वा । अद्य । सुऽमनसः । बुधेत । अस्माकासः । मघऽवानः । वयं । च । तिल्विलायध्वं । उषसः । विऽभातीः ॥ ० ॥ २५ ॥ ० ॥ पथ्या । जनानां । पंच । क्षितीः । मानुषीः । बोधयंती । सुसंदृक्ऽभिः । उक्षऽभिः भानुं । अश्रेत् । वि । सूर्यः । रोदसीइति । चक्षसा । आवरित्यावः । वि । अंजते । दिवः । अंतेषु । अक्तून् । विशः । न । युक्ताः । उषसः । यतंते । सं । ते । गावः । तमः । आ । वर्तयंति । ज्योतिः । यच्छंति । सविताऽइव ; बाहूइति । अभूत । उषाः । इंद्रऽतमा । मघोनी ।

अजीजनत् । सुविताय । श्रवांसि । वि । दिवः । देवी । दुहिता । दधाति । अंगिरःऽतमा । सुऽकृते । वसूनि । तावत् । उषः । राधः । अस्मभ्यं । रास्व । यावत् । स्तोतृऽभ्यः । अरदः । गृणाना । यां । त्वा । जज्ञुः । वृषभस्य । रवेण । वि । दृळ्हस्य । दुरः । अद्रेः । और्णोः । देवंऽदेवं । राधसे । चोदयंती । अस्मद्र्यक् । सूनृताः । ईरयंती । विऽउच्छंती । नः । सनये । धियः । धाः ॥ ० ॥ २६ ॥ प्रति । स्तोमेभिः । उषसं । वसिष्ठाः । गीःऽभिः । विप्रासः । प्रथमाः । अबुध्रन् । विऽवर्तयंती । रजसीइति । समंतेइतिसम्ऽअंते । आविःऽकृण्वती । भुवनानि । विश्वा । एषा । स्या । नव्यं । आयुः । दधाना । गूढ्वी । तमः । ज्योतिषा । उषाः । अबोधि । अग्रे । एति । युवतिः । अह्रयाणा । प्र । अचिकितत् । सूर्यं । यज्ञं । अग्निं ॥ ० ॥ २७ ॥

इति पञ्चमाष्टके पञ्चमोध्यायः ॥ ५ ॥





## ॥ अथ षष्ठोध्यायः ॥

हरिः ॐ ॥ प्रति । ऊंइति । अदर्शि । आऽयती । उच्छंती । दुहिता । दिवः । अपोइति । मही । व्ययति । चक्षसे । तमः । ज्योतिः । कृणोति । सूनरी । उत् । उस्रियाः । सृजते । सूर्यः । सचा । उत्ऽयत् । नक्षत्रं । अर्चिऽवत् । तव । इत् । उषः । विऽउषि । सूर्यस्य । च । सं । भक्तेन । गमेमहि । प्रति । त्वा । दुहितः । दिवः । उषः । जीराः । अभुत्स्महि । या । वहसि । पुरु । स्पार्हं । वनन्ऽवति । रत्नं । न । दाशुषे । मयः । उच्छंती । या । कृणोषि । मंहना । महि । प्रऽख्यै । देवि । स्वः । दृशे । तस्याः । ते । रत्नऽभाजः । ईमहे । वयं । स्याम ।

मातुः । न । सूनवः । तत् । चित्रं । राधः । आ । भर । उषः । यत् । दीर्घश्रुत्ऽतमं । यत् । ते । दिवः । दुहितः । मर्तऽभोजनं । तत् । रास्व । भुनजामहै । श्रवः । सूरिऽभ्यः । अमृतं । वसुऽत्वनं । वाजान् । अस्मभ्यं । गोऽमतः । चोदयित्री । मघोनः । सूनृताऽवती । उषाः । अच्छत् । अप । स्रिधः ॥ १ ॥ इंद्रावरुणा । युवं । अध्वराय । नः । विशे । जनाय । महि । शर्म । यच्छतं । दीर्घऽप्रयज्युं । अति । यः । वनुष्यति । वयं । जयेम । पृतनासु । दुःऽध्यः । सम्ऽराट् । अन्यः । स्वऽराट् । अन्यः । उच्यते । वां । महांतौ । इंद्रावरुणा । महावसूइति- महाऽवसू । विश्वे । देवासः । परमे । विऽओमनि । सं । वां । ओजः । वृषणा । सं । बलं । दधुः । अनु । अपां । खानि । अतृंतं । ओजसा । आ । सूर्यं । ऐरयतं । दिवि । प्रऽभुं । इंद्रावरुणा । मदे । अस्य । मायिनः । अपिन्वतं । अपितः । पिन्वतं । धियः । युवां । इत् । युत्ऽसु । पृतनासु । वह्नयः । युवां । क्षेमस्य । प्रऽसवे । मितऽज्ञवः । ईशाना । वस्वः । उभयस्य । कारवः । इंद्रावरुणा । सुऽहवा । हवामहे । इंद्रावरुणा । यत् । इमानि । चक्रथुः । विश्वा । जातानि । भुवनस्य । मज्मना । क्षेमेण । मित्रः । वरुणं । दुवस्यति । मरुत्ऽभिः । उग्रः । शुभं । अन्यः । ईयते ॥ २ ॥ महे । शुल्काय । वरुणस्य । नु । त्विषे । ओजः । मिमातेइति । ध्रुवं । अस्य । यत् । स्वं । आजामिं । अन्यः । श्नथयंतं । आ । अतिरत् । दभ्रेभिः । अन्यः । प्र । वृणोति । भूयसः ॥ ० ॥ दुःऽइतानि । मर्त्यं । इंद्रावरुणा । न । तपः । कुतः । चन । यस्य । देवा । गच्छथः । वीथः । अध्वरं । न । तं । मर्तस्य । नशते । परिऽह्वृतिः । अर्वाक् । नरा । दैव्येन । अवसा । आ । गतं । शृणुतं । हवं । यदि । मे । जुजोषथः । युवोः । हि । सख्यं । उत । वा । यत् । आप्यं । मार्डीकं । इंद्रावरुणा । नि । यच्छतं । अस्माकं । इंद्रावरुणा । भरेऽभरे । पुरःऽयोधा । भवतं । कृष्टिऽओजसा । यत् । वां । हवंते । उभये । अध । स्पृधि । नरः । तोकस्य । तनयस्य । सातिषु । अस्मेइति ।

इंद्रः । वरुणः । मित्रः । अर्यमा । द्युम्नं । यच्छंतु । महि । शर्म । सऽप्रथः । अवध्रं । ज्योतिः । अदितेः । ऋतऽवृधः । देवस्य । श्लोकं । सवितुः । मनामहे ॥ ३ ॥ युवां । नरा । पश्यमानासः । आप्यं । प्राचा । गव्यंतः । पृथुऽपर्शवः । ययुः । दासा । च । वृत्रा । हतं । आर्याणि । च । सुऽदासं । इंद्रावरुणा । अवसा । अवतं । यत्र । नरः । संऽअयंते । कृतऽध्वजः । यस्मिन् । आजा । भवति । किं । चन । प्रियं । यत्र । भयंते । भुवना । स्वःऽदृशः । तत्र । नः । इंद्रावरुणा । अधि । वोचतं । सं । भूम्याः । अंताः । ध्वसिराः । अदृक्षत । इंद्रावरुणा । दिवि । घोषः । आ । अरुहत् । अस्थुः । जनानां । उप । मां । अरातयः । अर्वाक् । अवसा । हवनऽश्रुता । आ । गतं । इंद्रावरुणा । वधनाभिः । अप्रति । भेदं । वन्वंता । प्र । सुऽदासं । आवतं । ब्रह्माणि । एषां । शृणुतं । हवीमनि । सत्या । तृत्सूनां । अभवत् । पुरःऽहितिः । इंद्रावरुणौ । अभि । आ । तपंति । मा । अघानि । अर्यः । वनुषां । अरातयः । युवं । हि । वस्वः । उभयस्य । राजथः । अध । स्म । नः । अवतं । पार्ये । दिवि ॥ ४ ॥ युवां । हवंते । उभयासः । आजिषु । इंद्रं । च । वस्वः । वरुणं । च । सातये । यत्र । राजऽभिः । दशऽभिः । निऽबाधितं । प्र । सुऽदासं । आवतं । तृत्सुऽभिः । सह । दश । राजानः । संऽइताः । अयज्यवः । सुऽदासं । इंद्रावरुणा । न । युयुधुः । सत्या । नृणां । अद्मऽसदां । उपऽस्तुतिः । देवाः । एषां । अभवन् । देवऽहूतिषु । दाशऽराज्ञे । परिऽयत्ताय । विश्वतः । सुऽदासे । इंद्रावरुणौ । अशिक्षतं । श्वित्यंचः । यत्र । नमसा । कपर्दिनः । धिया । धीऽवंतः । असपंत । तृत्सवः । वृत्राणि । अन्यः । संऽइथेषु । जिघ्नते । व्रतानि । अन्यः । अभि । रक्षते । सदा । हवामहे । वां । वृषणा । सुवृक्तिऽभिः । अस्मेइति । इंद्रावरुणा । शर्म । यच्छतं ॥ ० ॥ ५ ॥ आ । वां । राजानौ । अध्वरे । ववृत्यां । हव्येभिः । इंद्रावरुणा । नमःऽभिः । प्र । वां । घृताची । बाह्वोः । दधाना । परि ।

त्मना । विषुऽरूपा । जिगाति । युवोः । राष्ट्रं । बृहत् । इन्वति । द्यौः । यौ ।
सेतृऽभिः । अरज्जुऽभिः । सिनीथः । परि । नः । हेळः । वरुणस्य ।
वृज्याः । उरुं । नः । इंद्रः । कृणवत् । ऊँइति । लोकं । कृतं । नः । यज्ञं ।
विदथेषु । चारुं । कृतं । ब्रह्माणि । सूरिषु । प्रऽशस्ता । उपोइति ।
रयिः । देवऽजूतः । नः । एतु । प्र । नः । स्पार्हाभिः । ऊतिऽभिः । तिरेतं ।
असेइति । इंद्रावरुणा । विश्वऽवारं । रयिं । धत्तं । वसुऽमंतं । पुरुऽक्षुं ।
प्र । यः । आदित्यः । अनृता । मिनाति । अमिता । शूरः । दयते । वसूनि ।
इयं । इंद्रं । वरुणं । अष्ट । मे । गीः । प्र । आवत् । तोके । तनये ।
तूतुजाना । सुऽरत्नासः । देवऽवीतिं । गमेम ॥ ० ॥ ६ ॥ पुनीषे ।
वां । अरक्षसं । मनीषां । सोमं । इंद्राय । वरुणाय । जुह्वत् । घृतऽ-
प्रतीकां । उषसं । न । देवीं । ता । नः । यामन् । उरुष्यतां । अभीके ।
स्पर्धंते । वै । ऊँइति । देवऽहूये । अत्र । येषु । ध्वजेषु । दिद्यवः ।
पतंति । युवं । तान् । इंद्रावरुणौ । अमित्रान् । हतं । पराचः । शर्वा ।
विषूचः । आपः । चित् । हि । स्वऽयशसः । सदःऽसु । देवीः । इंद्रं ।
वरुणं । देवता । धुरितिधुः । कृष्टीः । अन्यः । धारयति । प्रऽविक्ताः ।
वृत्राणि । अन्यः । अप्रतीनि । हंति । सः । सुऽक्रतुः । ऋतऽचित् ।
अस्तु । होता । यः । आदित्या । शवसा । वां । नमस्वान् । आऽ-
ववर्तत् । अवसे । वां । हविष्मान् । असत् । इत् । सः । सुविताय ।
प्रयस्वान् ॥ ० ॥ ७ ॥ धीरा । तु । अस्य । महिना । जनूंषि । वि ।
यः । तस्तंभ । रोदसीइति । चित् । उर्वीइति । प्र । नाकं । ऋष्वं ।
नुनुदे । बृहंतं । द्विता । नक्षत्रं । पप्रथत् । च । भूम । उत । स्वयां ।
तन्वा । सं । वदे । तत् । कदा । नु । अंतः । वरुणे । भुवानि । किं ।
मे । हव्यं । अहृणानः । जुषेत । कदा । मृळीकं । सुऽमनाः । अभि ।
ख्यं । पृच्छे । तत् । एनः । वरुण । दिदृक्षु । उपोइति । एमि ।
चिकितुषः । विऽपृच्छं । समानं । इत् । मे । कवयः । चित् । आहुः ।
अयं । ह । तुभ्यं । वरुणः । हृणीते । किं । आगः । आस । वरुण ।

ज्येष्ठं । यत् । स्तोतारं । जिघांससि । सखायं । प्र । तत् । मे । वोचः । दुःऽदभ । स्वधाऽवः । अव । त्वा । अनेनाः । नमसा । तुरः । इयां । अव । द्रुग्धानि । पित्र्या । सृज । नः । अव । या । वयं । चकृम । तनूभिः । अव । राजन् । पशुऽतृपं । न । तायुं । सृज । वत्सं । न । दाम्नः । वसिष्ठं । न । सः । स्वः । दक्षः । वरुण । ध्रुतिः । सा । सुरा । मन्युः । विऽभीदकः । अचित्तिः । अस्ति । ज्यायान् । कनीयसः । उपऽअरे । स्वप्नः । चन । इत् । अनृतस्य । प्रऽयोता । अरं । दासः । न । मीळ्हुषे । कराणि । अहं । देवाय । भूर्णये । अनागाः । अचेतयत् । अचितः । देवः । अर्यः । गृत्सं । राये । कविऽतरः । जुनाति । अयं । सु । तुभ्यं । वरुण । स्वधाऽवः । हृदि । स्तोमः । उपऽश्रितः । चित् । अस्तु । शं । नः । क्षेमे । शं । ऊँइति । योगे । नः । अस्तु ॥ ० ॥ ८ ॥ रदत् । पथः । वरुणः । सूर्याय । प्र । अर्णांसि । समुद्रियां । नदीनां । सर्गः । न । सृष्टः । अर्वतीः । ऋतऽयन् । चकार । महीः । अवनीः । अहऽभ्यः । आत्मा । ते । वातः । रजः । आ । नवीनोत् । पशुः । न । भूर्णिः । यवसे । ससऽवान् । अंतः । महीइति । रोदसीइति । इमेइति । विश्वा । ते । धाम । वरुण । प्रियाणि । परि । स्पशः । वरुणस्य । स्मत्ऽइष्टाः । उभेइति । पश्यंति । रोदसीइति । सुमेकेइतिसुऽमेके । ऋतऽवानः । कवयः । यज्ञऽधीराः । प्रऽचेतसः । ये । इषयंत । मन्म । उवाच । मे । वरुणः । मेधिराय । त्रिः । सप्त । नाम । अघ्न्या । बिभर्ति । विद्वान् । पदस्य । गुह्या । न । वोचत् । युगाय । विप्रः । उपराय । शिक्षन् । तिस्रः । द्यावः । निऽहिताः । अंतः । अस्मिन् । तिस्रः । भूमीः । उपराः । षट्ऽविधानाः । गृत्सः । राजा । वरुणः । चक्रे । एतं । दिवि । प्रऽईखं । हिरण्ययं । शुभे । कं । अव । सिंधुं । वरुणः । द्यौःऽइव । स्थात् । द्रप्सः । न । श्वेतः । मृगः । तुविष्मान् । गंभीरऽशंसः । रजसः । विऽमानः । सुपारऽक्षत्रः । सुतः । अस्य । राजा । सः । मृळयाति । चकुषे । चित् ।

आगः । वयं । स्याम । वरुणे । अनागाः । अनु । व्रतानि । अदितेः । ऋधंतः ॥ ० ॥ ९ ॥ प्र । शुंध्युवं । वरुणाय । प्रेष्ठां । मतिं । वसिष्ठ । मीळ्हुषे । भरस्व । यः । ईं । अर्वांचं । करते । यजंत्र । सहस्रऽमघं । वृषणं । बृहंतं । अधं । नु । अस्य । संऽदृशं । जगन्वान् । अग्नेः । अनीकं । वरुणस्य । मंसि । स्वः । यत् । अश्मन् । अधिऽपाः । ऊँइति । अंधः । अभि । मा । वपुः । दृशये । निनीयात् । आ । यत् । रुहाव । वरुणः । च । नावं । प्र । यत् । समुद्रं । ईरयाव । मध्यं । अधि । यत् । अपां । स्नुऽभिः । चराव । प्र । प्रऽईंखे । ईंखयावहै । शुभे । कं । वसिष्ठं । ह । वरुणः । नावि । आ । अधात् । ऋषिं । चकार । सुऽअपाः । महःऽभिः । स्तोतारं । विप्रः । सुदिनऽत्वे । अह्नां । यात् । नु । द्यावः । ततनन् । यात् । उषसः । क्व । त्यानि । नौ । सख्या । बभूवुः । सचावहेइति । यत् । अवृकं । पुरा । चित् । बृहंतं । मानं । वरुण । स्वधाऽवः । सहस्रऽद्वारं । जगम । गृहं । ते । यः । आपिः । नित्यः । वरुण । प्रियः । सन् । त्वां । आगांसि । कृणवत् । सखा । ते । मा । ते । एनस्वंतः । यक्षिन् । भुजेम । यंधि । स्म । विप्रः । स्तुवते । वरूथं । ध्रुवासु । त्वा । आसु । क्षितिषु । क्षियंतः । वि । अस्मत् । पाशं । वरुणः । मुमोचत् । अवः । वन्वानाः । अदितेः । उपऽस्थात् ॥ ० ॥ १० ॥ मोइति । सु । वरुण । मृत्ऽमयं । गृहं । राजन् । अहं । गमं । मृळ । सुऽक्षत्र । मृळय । यत् । एमि । प्रस्फुरन्ऽइव । दृतिः । न । ध्मातः । अद्रिऽवः ॥ ० ॥ क्रत्वः । समह । दीनता । प्रतिऽईपं । जगम । शुचे ॥ ० ॥ अपां । मध्ये । तस्थिऽवांसं । तृष्णा । अविदत् । जरितारं ॥ ० ॥ यत् । किं । च । इदं । वरुण । दैव्ये । जने । अभिऽद्रोहं । मनुष्याः । चरामसि । अचित्ती । यत् । तव । धर्म । युयोपिम । मा । नः । तस्मात् । एनसः । देव । रिरिषः ॥ ११ ॥

इति पञ्चमोऽनुवाकः ॥ – :: – ॥ प्र । वीरऽया । शुचयः । दद्रिरे । वां । अध्वर्युऽभिः । मधुऽमंतः । सुतासः । वह । वायोइति । निऽयुतः ।

याहि । अच्छ । पिब । सुतस्य । अन्धसः । मदाय । ईशानाय । प्रऽहुतिं । यः । ते । आनट् । शुचिं । सोमं । शुचिऽपाः । तुभ्यं । वायोइति । कृणोषि । तं । मर्त्येषु । प्रऽशस्तं । जातःऽजातः । जायते । वाजी । अस्य । राये । नु । यं । जज्ञतुः । रोदसीइति । इमेइति । राये । देवी । धिषणा । धाति । देवं । अध । वायुं । निऽयुतः । सश्चत । स्वाः । उत । श्वेतं । वसुऽधितिं । निरेके । उच्छन् । उषसः । सुऽदिनाः । अरिप्राः । उरु । ज्योतिः । विविदुः । दीध्यानाः । गव्यं । चित् । ऊर्वं । उशिजः । वि । वव्रुः । तेषां । अनु । प्रऽदिवः । सस्रुः । आपः । ते । सत्येन । मनसा । दीध्यानाः । स्वेन । युक्तासः । क्रतुना । वहंति । इंद्रवायूइति । वीरऽवाहं । रथं । वां । ईशानयोः । अभि । पृक्षः । सचंते । ईशानासः । ये । दधते । स्वः । नः । गोभिः । अश्वेभिः । वसुऽभिः । हिरण्यैः । इंद्रवायूइति । सूरयः । विश्वं । आयुः । अर्वत्ऽभिः । वीरैः । पृतनासु । सह्युः । अर्वंतः । न । श्रवसः । भिक्षमाणाः । इंद्रवायूइति । सुस्तुतिऽभिः । वसिष्ठाः । वाजऽयंतः । सु । अवसे । हुवेम ॥ ० ॥ १२ ॥ कुवित् । अंग । नमसा । ये । वृधासः । पुरा । देवाः । अनवद्यासः । आसन् । ते । वायवे । मनवे । बधिताय । अवासयन् । उषसं । सूर्येण । उशंता । दूता । न । दभाय । गोपा । मासः । च । पाथः । शरदः । च । पूर्वीः । इंद्रवायूइति । सुऽस्तुतिः । वां । इयाना । मार्डीकं । ईट्टे । सुवितं । च । नव्यं । पीवःऽअन्नात् । रयिऽवृधः । सुऽमेधाः । श्वेतः । सिसक्ति । निऽयुतां । अभिऽश्रीः । ते । वायवे । सऽमनसः । वि । तस्थुः । विश्वा । इत् । नरः । सुऽअपत्यानि । चक्रुः । यावत् । तरः । तन्वः । यावत् । ओजः । यावत् । नरः । चक्षसा । दीध्यानाः । शुचिं । सोमं । शुचिऽपा । पातं । अस्मेइति । इंद्रवायूइति । सदतं । बर्हिः । आ । इदं । निऽयुवाना । निऽयुतः । स्पार्हऽवीराः । इंद्रवायूइति । सऽरथं । यातं । अर्वाक् । इदं । हि । वां । प्रऽभृतं । मध्वः । अग्रं । अध । प्रीणाना । वि । मुमुक्तं ।

असेइति । याः । वां । शतं । निऽयुतः । याः । सहस्रं । इंद्रवायूइति । विश्वऽवाराः । सचंते । आ । आभिः । यातं । सुऽविदत्राभिः । अर्वाक् । पातं । नरा । प्रतिऽभृतस्य । मध्वः ॥ ० ॥ १३ ॥ आ । वायोइति । भूष । शुचिऽपाः । उप । नः । सहस्रं । ते । निऽयुतः । विश्वऽवार । उपोइति । ते । अंधः । मद्यं । अयामि । यस्य । देव । दधिषे । पूर्वऽपेयं । प्र । सोता । जीरः । अध्वरेषु । अस्थात् । सोमं । इंद्राय । वायवे । पिबध्यै ॥ प्र । यत् । वां । मध्वः । अग्रियं । भरंति । अध्वर्यवः । देवऽयंतः । शचीभिः । प्र । याभिः । यासि । दाश्वांसं । अच्छ । नियुत्ऽभिः । वायोइति । इष्टये । दुरोणे । नि । नः । रयिं । सुऽभोजसं । युवस्व । नि । वीरं । गव्यं । अश्व्यं । च । राधः । ये । वायवे । इंद्रऽमादनासः । आऽदेवासः । निऽतोशनासः । अर्यः । घ्नंतः । वृत्राणि । सूरिऽभिः । स्याम । ससह्वांसः । युधा । नृऽभिः । अमित्रान् ॥ ० ॥ वायोइति । अस्मिन् । सवने । मादयस्व ॥ ० ॥ ॥ १४ ॥ शुचिं । नु । स्तोमं । नवऽजातं । अद्य । इंद्राग्नीइति । वृत्रऽहना । जुषेथां । उभा । हि । वां । सुऽहवा । जोहवीमि । ता । वाजं । सद्यः । उशते । धेष्ठा । ता । सानसीइति । शवसाना । हि । भूतं । साकंऽवृधा । शवसा । शूशुऽवांसा । क्षयंतौ । रायः । यवसस्य । भूरेः । पृंक्तं । वाजस्य । स्थविरस्य । घृष्वेः । उपोइति । ह । यत् । विदथं । वाजिनः । गुः । धीभिः । विप्राः । प्रऽमतिं । इच्छमानाः । अर्वंतः । न । काष्ठां । नक्षमाणाः । इंद्राग्नीइति । जोहुवतः । नरः । ते । गीःऽभिः । विप्रः । प्रऽमतिं । इच्छमानः । ईट्टे । रयिं । यशसं । पूर्वऽभाजं । इंद्राग्नीइति । वृत्रऽहना । सुऽवज्रा । प्र । नः । नव्येभिः । तिरतं । देष्णैः ॥ सं । यत् । महीइति । मिथतीइति । स्पर्धमानेइति । तनूऽरुचा । शूरऽसाता । यतैतेइति । अदेवऽयुं । विदथे । देवयुऽभिः । सत्रा । हतं । सोमऽसुता । जनेन ॥ १५ ॥ इमां । ऊँइति । सु । सोमऽसुतिं । उप । नः । आ । इंद्राग्नीइति ।

सौमनसाय । यातं । नु । चित् । हि । परिमज्माथेइतिपरिऽमज्माथे ।
अस्मान् । आ । वां । शश्वत्ऽभिः । ववृतीय । वाजैः । सः । अग्ने ।
एना । नमसा । संऽइद्धः । अच्छ । मित्रं । वरुणं । इंद्रं । वोचेः ॥ ० ॥
मृळ । तत् । अर्यमा । अदितिः । शिश्रथंतु । एताः । अग्ने ।
आशुषाणासः । इष्टीः । युवोः । सचा । अभि । अश्याम । वाजान् ।
मा । इंद्रः । नः । विष्णुः । मरुतः । परि । ख्यन् ॥ ० ॥ १६ ॥
इयं । वां । अस्य । मन्मनः । इंद्राग्नीइति । पूर्व्यऽस्तुतिः । अभ्रात् ।
वृष्टिःऽइव । अजनि । शृणुतं । जरितुः । हवं । इंद्राग्नीइति । वनतं ।
गिरः । ईशाना । पिप्यतं । धियः । मा । पापऽत्वाय । नः । नरा ।
इंद्राग्नीइति । मा । अभिऽशस्तये । मा । नः । रीरधतं । निदे । इंद्रे ।
अग्ना । नमः । बृहत् । सुऽवृक्तिं । आ । ईरयामहे । धिया धेनाः ।
अवस्यवः । ता । हि । शश्वतः । ईळते । इत्था । विप्रासः । ऊतये ।
सऽबाधः । वाजऽसातये । ता । वां । गीःऽभिः । विपन्यवः । प्रयस्वंतः ।
हवामहे । मेधऽसाता । सनिष्यवः ॥ १७ ॥ इंद्राग्नीइति । अवसा ।
आ । गतं । अस्मभ्यं । चर्षणिऽसहा ॥ ० ॥ मा । कस्य । नः ॥ ० ॥
गोऽमत् । हिरण्यऽवत् । वसु । यत् । वां । अश्वऽवत् । ईमहे ।
इंद्राग्नीइति । तत् । वनेमहि । यत् । सोमे । आ । सुते । नरः ।
इंद्राग्नीइति । अजोहवुः । सप्तिऽवंता । सपर्यवः । उक्थेभिः । वृत्रहन्ऽ-
तमा । या । मंदाना । चित् । आ । गिरा । आंगूषैः । आऽविवासतः ।
तौ । इत् । दुःऽशंसं । मर्त्यं । दुःऽविद्वांसं । रक्षस्विनं । आऽभोगं ।
हन्मना । हतं । उदऽधिं । हन्मना । हतं ॥ १८ ॥ प्र । क्षोदसा ।
धायसा । सस्रे । एषा । सरस्वती । धरुणं । आयसी । पूः ।
प्रऽबाबधाना । रथ्याऽइव । याति । विश्वाः । अपः । महिना । सिंधुः ।
अन्याः । एका । अचेतत् । सरस्वती । नदीनां । शुचिः । यती ।
गिरिऽभ्यः । आ । समुद्रात् । रायः । चेतंती । भुवनस्य । भूरेः ।
घृतं । पयः । दुदुहे । नाहुषाय । सः । ववृधे । नर्यः । योषणासु ।

वृषा । शिशुः । वृषभः । यज्ञियासु । सः । वाजिनं । मघवत्ऽभ्यः । दधाति । वि । सातये । तन्वं । ममृजीत । उत । स्या । नः । सरस्वती । जुषाणा । उप । श्रवत् । सुऽभगा । यज्ञे । अस्मिन् । मितज्ञुऽभिः । नमस्यैः । इयाना । राया । युजा । चित् । उत्ऽतरा । सखिऽभ्यः । इमा । जुह्वानाः । युष्मत् । आ । नमःऽभिः । प्रति । स्तोमं । सरस्वति । जुषस्व । तव । शर्मन् । प्रियऽतमे । दधानाः । उप । स्थेयाम । शरणं । न । वृक्षं । अयं । ऊँइति । ते । सरस्वति । वसिष्ठः । द्वारौ । ऋतस्य । सुऽभगे । वि । आवरित्यावः । वर्ध । शुभ्रे । स्तुवते । रासि । वाजान् ॥ ० ॥ १९ ॥ बृहत् । ऊँइति । गायिषे । वचः । असुर्या । नदीनां । सरस्वतीं । इत् । महय । सुवृक्तिऽभिः । स्तोमैः । वसिष्ठ । रोदसीइति । उभेइति । यत् । ते । महिना । शुभ्रे । अंधसीइति । अधिऽक्षियंति । पूरवः । सा । नः । बोधि । अवित्री । मरुत्ऽसखा । चोद । राधः । मघानां । भद्रं । इत् । भद्रा । कृणवत् । सरस्वती । अकवऽरी । चेतति । वाजिनीऽवती । गृणाना । जमदग्निऽवत् । स्तुवाना । च । वसिष्ठऽवत् । जनिऽयंतः । नु । अग्रवः । पुत्रिऽयंतः । सुऽदानवः । सरस्वंतं । हवामहे । ये । ते । सरस्वः । ऊर्मयः । मधुऽमंतः । घृतऽश्चुतः । तेभिः । नः । अविता । भव । पीपिऽवांसं । सरस्वतः । स्तनं । यः । विश्वऽदर्शतः । भक्षीमहि । प्रऽजां । इषं ॥ २० ॥ यज्ञे । दिवः । नृऽसदने । पृथिव्याः । नरः । यत्र । देवऽयवः । मदंति । इंद्राय । यत्र । सवनानि । सुन्वे । गमत् । मदाय । प्रथमं । वयः । च । आ । दैव्या । वृणीमहे । अवांसि । बृहस्पतिः । नः । महे । आ । सखायः । यथा । भवेम । मीळ्हुषे । अनागाः । यः । नः । दाता । पराऽवतः । पिताऽइव । तं । ऊँइति । ज्येष्ठं । नमसा । हविःऽभिः । सुऽशेवं । ब्रह्मणः । पतिं । गृणीषे । इंद्रं । श्लोकः । महि । दैव्यः । सिसक्तु । यः । ब्रह्मणः । देवऽकृतस्य । राजा । सः । आ । नः । योनिं । सदतु । प्रेष्ठः । बृहस्पतिः । विश्वऽवारः । यः । आस्ति । कामः । रायः । सुऽवीर्यस्य ।

तं । दात् । पर्षत् । नः । अति । सश्वतः । अरिष्टान् । तं । आ । नः । अर्कं । अमृताय । जुष्टं । इमे । धासुः । अमृतासः । पुराऽजाः । शुचिऽक्रंदं । यजतं । पस्त्यानां । बृहस्पतिं । अनर्वाणं । हुवेम ॥ २१ ॥ तं । शग्मासः । अरुषासः । अश्वाः । बृहस्पतिं । सहऽवाहः । वहंति । सहः । चित् । यस्य । नीलऽवत् । सधऽस्थं । नभः । न । रूपं । अरुषं । वसानाः । सः । हि । शुचिः । शतऽपत्रः । सः । शुंध्युः । हिरण्यऽवाशीः । इषिरः । स्वःऽसाः । बृहस्पतिः । सः । सुऽआवेशः । ऋष्वः । पुरु । सखिऽभ्यः । आऽसुतिं । करिष्ठः । देवीइति । देवस्य । रोदसीइति । जनित्रीइति । बृहस्पतिं । ववृधतुः । महिऽत्वा । दक्षाय्याय । दक्षत । सखायः । करत् । ब्रह्मणे । सुऽतरा । सुऽगाधा । इयं । वां । ब्रह्मणः । पते । सुऽवृक्तिः । ब्रह्म । इंद्राय । वज्रिणे । अकारि ॥ ० ॥ बृहस्पते । युवं । इंद्रः । च । वस्वः । दिव्यस्य । ईशाथेइति । उत । पार्थिवस्य । धत्तं । रयिं । स्तुवते । कीरये । चित् ॥ ० ॥ २२ ॥ अध्वर्यवः । अरुणं । दुग्धं । अंशुं । जुहोतन । वृषभाय । क्षितीनां । गौरात् । वेदीयान् । अवऽपानं । इंद्रः । विश्वाहा । इत् । याति । सुतऽसोमं । इच्छन् । यत् । दधिषे । प्रऽदिवि । चारु । अन्नं । दिवेऽदिवे । पीतिं । इत् । अस्य । वक्षि । उत । हृदा । उत । मनसा । जुषाणः । उशन् । इंद्र । प्रऽस्थितान् । पाहि । सोमान् । जज्ञानः । सोमं । सहसे । पपाथ । प्र । ते । माता । महिमानं । उवाच । आ । इंद्र । पप्राथ । उरु । अंतरिक्षं । युधा । देवेभ्यः । वरिवः । चकर्थ । यत् । योधयाः । महतः । मन्यमानान् । साक्षाम । तान् । बाहुऽभिः । शाशदानान् । यत् । वा । नृऽभिः । वृतः । इंद्र । अभिऽयुध्याः । तं । त्वया । आजिं । सौश्रवसं । जयेम । प्र । इंद्रस्य । वोचं । प्रथमा । कृतानि । प्र । नूतना । मघऽवा । या । चकार । यदा । इत् । अदेवीः । असहिष्ट । मायाः । अथ । अभवत् । केवलः । सोमः । अस्य । तव । इदं । विश्वं । अभितः । पशव्यं । यत् । पश्यसि । चक्षसा । सूर्यस्य ।

गवां । असि । गोऽपतिः । एकः । इंद्र । भक्षीमहि । ते । प्रऽयतस्य ।
वस्वः ॥ ० ॥ २३ ॥ परः । मात्रया । तन्वा । वृधान । न । ते ।
महिऽत्वं । अनु । अश्नुवंति । उभेइति । ते । विद्म । रजसीइति ।
पृथिव्याः । विष्णोइति । देव । त्वं । परमस्य । वित्से । न । ते ।
विष्णोइति । जायमानः । न । जातः । देव । महिम्नः । परं । अंतं ।
आप । उत् । अस्तभ्नाः । नाकं । ऋष्वं । बृहंतं । दाधर्थ । प्राचीं ।
ककुभं । पृथिव्याः । इरावतीइतीराऽवती । धेनुमतीइतिधेनुऽमती ।
हि । भूतं । सुयवसिनीइतिसुऽयवसिनी । मनुषे । दशस्या । वि ।
अस्तभ्नाः । रोदसीइति । विष्णोइति । एतेइति । दाधर्थ । पृथिवीं ।
अभितः । मयूखैः । उरुं । यज्ञाय । चक्रथुः । ऊँइति । लोकं । जनयंता ।
सूर्यं । उषसं । अग्निं । दासस्य । चित् । वृषऽशिप्रस्य । मायाः ।
जघ्नथुः । नरा । पृतनाज्येषु । इंद्राविष्णूइति । दृंहिताः । शंबरस्य । नव ।
पुरः । नवतिं । च । श्नथिष्टं । शतं । वर्चिनः । सहस्रं । च । साकं ।
हथः । अप्रति । असुरस्य । वीरान् । इयं । मनीषा । बृहती । बृहंता ।
उरुऽक्रमा । तवसा । वर्धयंती । ररे । वां । स्तोमं । विदथेषु ।
विष्णोइति । पिन्वतं । इषः । वृजनेषु । इंद्र । वषट् । ते । विष्णोइति ।
आसः । आ । कृणोमि । तत् । मे । जुषस्व । शिपिऽविष्ट । हव्यं ।
वर्धंतु । त्वा । सुऽस्तुतयः । गिरः । मे ॥ ० ॥ २४ ॥ नु । मर्तः ।
दयते । सनिष्यन् । यः । विष्णवे । उरुऽगायाय । दाशत् । प्र । यः ।
सत्राचा । मनसा । यजाते । एतावंतं । नर्यं । आऽविवासात् । त्वं ।
विष्णोइति । सुऽमतिं । विश्वऽजन्यां । अप्रऽयुतां । एवऽयावः । मतिं ।
दाः । पर्चः । यथा । नः । सुवितस्य । भूरेः । अश्वऽवतः । पुरुऽ-
चंद्रस्य । रायः । त्रिः । देवः । पृथिवीं । एषः । एतां । वि । चक्रमे ।
शतऽअर्चसं । महिऽत्वा । प्र । विष्णुः । अस्तु । तवसः । तवीयान् ।
त्वेषं । हि । अस्य । स्थविरस्य । नाम । वि । चक्रमे । पृथिवीं । एषः ।
एतां । क्षेत्राय । विष्णुः । मनुषे । दशस्यन् । ध्रुवासः । अस्य ।

कीरयः । जनासः । उरुऽक्षितिं । सुऽजनिमा । चकार । प्र । तत् । ते । अद्य । शिपिऽविष्ट । नाम । अर्यः । शंसामि । वयुनानि । विद्वान् । तं । त्वा । गृणामि । तवसं । अतव्यान् । क्षयंतं । अस्य । रजसः । पराके । किं । इत् । ते । विष्णोइति । परिऽचक्ष्यं । भूत् । प्र । यत् । ववक्षे । शिपिऽविष्टः । अस्मि । मा । वर्पः । अस्मत् । अप । गूहः । एतत् । यत् । अन्यऽरूपः । संऽइथे । बभूथ ॥ ० ॥ २५ ॥

इति पञ्चमाष्टके षष्ठोध्यायः ॥ ६ ॥





## ॥ अथ सप्तमोध्यायः ॥

हरिः ॐ ॥ तिस्रः । वाचः । प्र । वद । ज्योतिःऽअग्राः । याः । एतत् । दुहे । मधुऽदोघं । ऊधः । सः । वत्सं । कृण्वन् । गर्भं । ओषधीनां । सद्यः । जातः । वृषभः । रोरवीति । यः । वर्धनः । ओषधीनां । यः । अपां । यः । विश्वस्य । जगतः । देवः । ईशे । सः । त्रिऽधातु । शरणं । शर्म । यंसत् । त्रिऽवर्तु । ज्योतिः । सुऽअभिष्टि । अस्मेइति । स्तरीः । ऊँइति । त्वत् । भवति । सूते । ऊँइति । त्वत् । यथाऽवशं । तन्वं । चक्रे । एषः । पितुः । पयः । प्रति । गृभ्णाति । माता । तेन । पिता । वर्धते । तेन । पुत्रः । यस्मिन् । विश्वानि । भुवनानि । तस्थुः । तिस्रः । द्यावः । त्रेधा । सस्रुः । आपः । त्रयः । कोशासः । उपऽसेचनासः । मध्वः । श्चोतंति । अभितः । विऽरप्शं । इदं । वचः । पर्जन्याय । स्वऽराजे । हृदः । अस्तु । अंतरं । तत् । जुजोषत् । मयःऽभुवः । वृष्टयः । संतु । अस्मेइति । सुऽपिप्पलाः । ओषधीः । देवऽगोपाः । सः । रेतःऽधाः । वृषभः । शश्वतीनां ।

तस्मिन् । आत्मा । जगतः । तस्थुषः । च । तत् । मा । ऋतं । पातु । शतऽशारदाय ॥ ० ॥ १ ॥ पर्जन्याय । प्र । गायत । दिवः । पुत्राय । मीळ्हुषे । सः । नः । यवसं । इच्छतु । यः । गर्भं । ओषधीनां । गवां । कृणोति । अर्वतां । पर्जन्यः । पुरुषीणां । तस्मै । इत् । आस्ये । हविः । जुहोत । मधुमत्ऽतमं । इळां । नः । संऽयतं । करत् ॥ २ ॥ संवत्सरं । शशयानाः । ब्राह्मणाः । व्रतऽचारिणः । वाचं । पर्जन्यऽजिन्वितां । प्र । मंडूकाः । अवादिषुः । दिव्याः । आपः । अभि । यत् । एनं । आयन् । दृतिं । न । शुष्कं । सरसीऽइति । शयानं । गवां । अह । न । मायुः । वत्सिनीनां । मंडूकानां । वग्नुः । अत्र । सं । एति । यत् । ईं । एनान् । उशतः । अभि । अवर्षीत् । तृष्याऽवतः । प्रावृषि । आऽगतायां । अख्खलीकृत्य । पितरं । न । पुत्रः । अन्यः । अन्यं । उप । वदंतं । एति । अन्यः । अन्यं । अनु । गृभ्णाति । एनोः । अपां । प्रऽसर्गे । यत् । अमंदिषातां । मंडूकः । यत् । अभिऽवृष्टः । कनिस्कन् । पृश्निः । संऽपृंक्ते । हरितेन । वाचं । यत् । एषां । अन्यः । अन्यस्य । वाचं । शाक्तस्यऽइव । वदति । शिक्षमाणः । सर्वं । तत् । एषां । समृधाऽइव । पर्व । यत् । सुऽवाचः । वदथन । अधि । अप्ऽसु ॥ ३ ॥ गोऽमायुः । एकः । अजऽमायुः । एकः । पृश्निः । एकः । हरितः । एकः । एषां । समानं । नाम । बिभ्रतः । विऽरूपाः । पुरुऽत्रा । वाचं । पिपिशुः । वदंतः । ब्राह्मणासः । अतिऽरात्रे । न । सोमे । सरः । न । पूर्णं । अभितः । वदंतः । संवत्सरस्य । तत् । अहरिति । परि । स्थ । यत् । मंडूकाः । प्रावृषीणं । बभूव । ब्राह्मणासः । सोमिनः । वाचं । अक्रत । ब्रह्म । कृण्वंतः । परिवत्सरीणं । अध्वर्यवः । घर्मिणः । सिसिदानाः । आविः । भवंति । गुह्याः । न । के । चित् । देवऽहितिं । जुगुपुः । द्वादशस्य । ऋतुं । नरः । न । प्र । मिनंति । एते । संवत्सरे । प्रावृषि । आऽगतायां । तप्ताः । घर्माः । अश्नुवते । विऽसर्गं । गोऽमायुः । अदात् । अजऽमायुः । अदात् । पृश्निः । अदात् । हरितः । नः ।

वसूनि । गवां । मंडूकाः । ददतः । शतानि । सहस्रऽसावे । प्र । तिरंते । आयुः ॥ ४ ॥ इंद्रासोमा । तपतं । रक्षः । उब्जतं । नि । अर्पयतं । वृषणा । तमःऽवृधः । परा । शृणीतं । अचितः । नि । ओषतं । हतं । नुदेथां । नि । शिशीतं । अत्रिणः । इंद्रासोमा । सं । अघऽशंसं । अभि । अघं । तपुः । ययस्तु । चरुः । अग्निवान्ऽइव । ब्रह्मऽद्विषे । क्रव्यऽअदे । घोरऽचक्षसे । द्वेषः । धत्तं । अनवायं । किमीदिने । इंद्रासोमा । दुःऽकृतः । वव्रे । अंतः । अनारंभणे । तमसि । प्र । विध्यतं । यथा । न । अतः । पुनः । एकः । चन । उत्ऽअयत् । तत् । वां । अस्तु । सहसे । मन्युऽमत् । शवः । इंद्रासोमा । वर्तयतं । दिवः । वधं । सं । पृथिव्याः । अघऽशंसाय । तर्हणं । उत् । तक्षतं । स्वर्यं । पर्वतेभ्यः । येन । रक्षः । ववृधानं । निऽजूर्वथः ॥ ० ॥ परि । अग्निऽतप्तेभिः । युवं । अश्मंहन्मऽभिः । तपुःऽवधेभिः । अजरेभिः । अत्रिणः । नि । पर्शाने । विध्यतं । यंतु । निऽस्वरं ॥ ५ ॥ इंद्रासोमा । परि । वां । भूतु । विश्वतः । इयं । मतिः । कक्ष्या । अश्वाऽइव । वाजिना । यां । वां । होत्रां । परिऽहिनोमि । मेधया । इमा । ब्रह्माणि । नृपतीइवेतिनृपतीऽइव । जिन्वतं । प्रति । स्मरेथां । तुजयत्ऽभिः । एवैः । हतं । द्रुहः । रक्षसः । भंगुरऽवतः । इंद्रासोमा । दुःऽकृते । मा । सुऽगं । भूत् । यः । नः । कदा । चित् । अभिऽदासति । द्रुहा । यः । मा । पाकेन । मनसा । चरंतं । अभिऽचष्टे । अनृतेभिः । वचःऽभिः । आपःऽइव । काशिना । संऽगृभीताः । असन् । अस्तु । असतः । इंद्र । वक्ता । ये । पाकऽशंसं । विऽहरंते । एवैः । ये । वा । भद्रं । दूषयंति । स्वधाभिः । अहये । वा । तान् । प्रऽददातु । सोमः । आ । वा । दधातु । निःऽऋतेः । उपऽस्थे । यः । नः । रसं । दिप्सति । पित्वः । अग्ने । यः । अश्वानां । यः । गवां । यः । तनूनां । रिपुः । स्तेनः । स्तेयऽकृत् । दभ्रं । एतु । नि । सः । हीयतां । तन्वा । तना । च ॥ ६ ॥ परः । सः । अस्तु । तन्वा । तना । च । तिस्रः । पृथिवीः ।

अधः । अस्तु । विश्वाः । प्रति । शुष्यतु । यशः । अस्य । देवाः ।
यः । नः । दिवा । दिप्सति । यः । च । नक्तं । सुऽविज्ञानं ।
चिकितुषे । जनाय । सत् । च । असत् । च । वचसीइति ।
पस्पृधातेइति ॥ तयोः । यत् । सत्यं । यतरत् । ऋजीयः । तत् । इत् ।
सोमः । अवति । हंति । असत् । न । वै । ऊंइति । सोमः । वृजिनं ।
हिनोति । न । क्षत्रियं । मिथुया । धारयंतं । हंति । रक्षः । हंति ।
असत् । वदंतं । उभौ । इंद्रस्य । प्रऽसितौ । शयातेइति । यदि । वा ।
अहं । अनृतऽदेवः । आस । मोघं । वा । देवान् । अपिऽऊहे । अग्ने ।
किं । अस्मभ्यं । जातऽवेदः । हृणीषे । द्रोघऽवाचः । ते । निःऽऋथं ।
सचंतां । अद्य । मुरीय । यदि । यातुऽधानः । अस्मि । यदि । वा ।
आयुः । ततप । पुरुषस्य । अग्ने । सः । वीरैः । दशऽभिः । वि ।
युयाः । यः । मा । मोघं । यातुऽधान । इति । आह ॥ ७ ॥ यः ।
मा । अयातु । यातुऽधान । इति । आह । यः । वा । रक्षाः । शुचिः ।
अस्मि । इति । आह । इंद्रः । तं । हंतु । महता । वधेन । विश्वस्य ।
जंतोः । अधमः । पदीष्ट । प्र । या । जिगाति । खर्गलाऽइव । नक्तं ।
अप । द्रुहा । तन्वं । गूहमाना । वव्रान् । अनंतान् । अव । सा ।
पदीष्ट । ग्रावाणः । घ्नंतु । रक्षसः । उपब्दैः । वि । तिष्ठध्वं । मरुतः ।
विक्षु । इच्छत । गभायत । रक्षसः । सं । पिनष्टन । वयः । ये ।
भूत्वी । पतयंति । नक्तऽभिः । ये । वा । रिपः । दधिरे । देवे ।
अध्वरे । प्र । वर्तय । दिवः । अश्मानं । इंद्र । सोमऽशितं । मघऽवन् ।
सं । शिशाधि । प्राक्तात् । अपाक्तात् । अधरात् । उदक्तात् । अभि । जहि ।
रक्षसः । पर्वतेन । एते । ऊंइति । त्ये । पतयंति । श्वऽयातवः । इंद्रं ।
दिप्संति । दिप्सवः । अदाभ्यं । शिशीते । शक्रः । पिशुनेभ्यः । वधं ।
नूनं । सृजत् । अशनिं । यातुमत्ऽभ्यः ॥ ८ ॥ इंद्रः । यातूनां ।
अभवत् । पराऽशरः । हविःऽमथीनां । अभि । आऽविवासतां । अभि ।
इत् । ऊंइति । शक्रः । परशुः । यथा । वनं । पात्राऽइव । भिंदन् ।

सतः । एति । रक्षसः । उलूकऽयातुं । शुशुलूकऽयातुं । जहि । श्वऽयातुं । उत । कोकऽयातुं । सुपर्णऽयातुं । उत । गृध्रऽयातुं । दृषदाऽइव । प्र । मृण । रक्षः । इंद्र । मा । नः । रक्षः । अभि । नट् । यातुऽमावतां । अप । उच्छतु । मिथुना । या । किमीदिना । पृथिवी । नः । पार्थिवात् । पातु । अंहसः । अंतरिक्षं । दिव्यात् । पातु । अस्मान् । इंद्र । जहि । पुमांसं । यातुऽधानं । उत । स्त्रियं । मायया । शाशदानां । विऽग्रीवासः । मूरऽदेवाः । ऋदंतु । मा । ते । दृशन् । सूर्यं । उत्ऽचरंतं । प्रति । चक्ष्व । वि । चक्ष्व । इंद्रः । च । सोम । जागृतं । रक्षःऽभ्यः । वधं । अस्यतं । अशनिं । यातुमत्ऽभ्यः ॥ ९ ॥ इति षष्ठोनुवाकः ॥

॥ – :: – ॥ इति सप्तमं मण्डलं समाप्तं ॥ मा । चित् । अन्यत् । वि । शंसत । सखायः । मा । रिषण्यत । इंद्रं । इत् । स्तोत । वृषणं । सचा । सुते । मुहुः । उक्था । च । शंसत । अवऽक्रक्षिणं । वृषभं । यथा । अजुरं । गां । न । चर्षणिऽसहं । विऽद्वेषणं । संऽवननां । उभयंऽकरं । मंहिष्ठं । उभयाविनं । यत् । चित् । हि । त्वा । जनाः । इमे । नाना । हवंते । ऊतये । अस्माकं । ब्रह्म । इदं । इंद्र । भूतु । ते । अहा । विश्वा । च । वर्धनं । वि । तर्तूर्यंते । मघऽवन् । विपःऽचितः । अर्यः । विपः । जनानां । उप । क्रमस्व । पुरुऽरूपं । आ । भर । वाजं । नेदिष्ठं । ऊतये । महे । चन । त्वां । अद्रिऽवः । परा । शुल्काय । देयां । न । सहस्राय । न । अयुताय । वज्रिऽवः । न । शताय । शतऽमघ ॥ १० ॥ वस्यान् । इंद्र । असि । मे । पितुः । उत । भ्रातुः । अभुंजतः । माता । च । मे । छदयथः । समा । वसोइति । वसुऽत्वनाय । राधसे । क्व । इयथ । क्व । इत् । असि । पुरुऽत्रा । चित् । हि । ते । मनः । अलर्षि । युध्म । खजऽकृत् । पुरंऽदर । प्र । गायत्राः । अगासिषुः । प्र । अस्मै । गायत्रं । अर्चत । ववातुः । यः । पुरंऽदरः । याभिः । काण्वस्य । उप । बर्हिः । आऽसदं । यासत् । वज्री । भिनत् । पुरः । ये । ते । संति । दशऽग्विनः । शतिनः । ये । सहस्रिणः ।

अश्वासः । ये । ते । वृषणः । रघुऽद्रुवः । तेभिः । नः । तूयं । आ । गहि ।
आ । तु । अद्य । सबःऽदुघां । हुवे । गायत्रऽवेपसं । इंद्रं । धेनुं । सुऽदुघां ।
अन्यां । इषं । उरुऽधारां । अरंऽकृतं ॥ ११ ॥ यत् । तुदत् । सूरः ।
एतशं । वंकूइति । वातस्य । पर्णिना । वहत् । कुत्सं । आर्जुनेयं ।
शतऽक्रतुः । त्सरत् । गंधर्वं । अस्तृतं । यः । ऋते । चित् । अभिऽ-
श्रिषः । पुरा । जत्रुऽभ्यः । आऽतृदः । संऽधाता । संऽधिं । मघऽवा ।
पुरुऽवसुः । इष्कर्ता । विऽह्रुतं । पुनरिति । मा । भूम । निष्ट्याःऽइव ।
इंद्र । त्वत् । अरणाःऽइव । वनानि । न । प्रऽजहितानि । अद्रिऽवः ।
दुरोषासः । अमन्महि । अमन्महि । इत् । अनाशवः । अनुऽग्रासः ।
च । वृत्रऽहन् । सकृत् । सु । ते । महता । शूर । राधसा । अनु ।
स्तोमं । मुदीमहि । यदि । स्तोमं । मम । श्रवत् । अस्माकं । इंद्रं ।
इंदवः । तिरः । पवित्रं । ससृऽवांसः । आशवः । मंदंतु । तुग्र्यऽ-
वृधः ॥ १२ ॥ ० ॥ सधऽस्तुतिं । वबातुः । सख्युः । आ । गहि ।
उपऽस्तुतिः । मघोनां । प्र । त्वा । अवतु । अध । ते । वश्मि ।
सुऽस्तुतिं । सोत । हि । सोमं । अद्रिऽभिः । आ । ईं । एनं । अप्ऽसु ।
धावत । गव्या । वस्त्राऽइव । वासयंतः । इत् । नरः । निः । धुक्षन् ।
वक्षणाभ्यः । अध । ज्मः । अध । वा । दिवः । बृहतः । रोचनात् ।
अधि । अया । वर्धस्व । तन्वा । गिरा । मम । आ । जाता ।
सुक्रतोइतिसुऽक्रतो । पृण । इंद्राय । सु । मदिन्ऽतमं । सोमं । सोत ।
वरेण्यं । शक्रः । एनं । पीपयत् । विश्वया । धिया । हिन्वानं । न ।
वाजऽयुं । मा । त्वा । सोमस्य । गल्दया । सदा । याचन् । अहं ।
गिरा । भूर्णिं । मृगं । न । सवनेषु । चुक्रुधं । कः । ईशानं । न ।
याचिषत् ॥ १३ ॥ मदेन । इषितं । मदं । उग्रं । उग्रेण । शवसा ।
विश्वेषां । तरुतारं । मदऽच्युतं । मदे । हि । स्म । ददाति । नः ।
शेवारे । वार्या । पुरु । देवः । मर्ताय । दाशुषे । स । सुन्वते । च ।
स्तुवते । च । रासते । विश्वऽगूर्तः । अरिऽस्तुतः । आ । इंद्र । याहि ।

मत्स्वं । चित्रेणं । देव । राधंसा । सरंः । न । प्रासि । उदरं ।
सपीतिऽभिः । आ । सोमेभिः । उरु । स्फिरं । आ । त्वा । सहस्रं ।
आ । शतं । युक्ताः । रथे । हिरण्यये । ब्रह्मऽयुजंः । हरंयः । इंद्र ।
केशिनंः । वहंतु । सोमंऽपीतये । आ । त्वा । रथे । हिरण्यये ।
हरीइति । मयूरंऽशेप्या । शितिऽपृष्ठा । वहतां । मध्वंः । अंधसः ।
विवक्षणस्य । पीतये ॥ १४ ॥ पिबं । तु । अस्य । गिर्वणः । सुतस्य ।
पूर्वपाःऽइव । परिंऽकृतस्य । रसिनंः । इयं । आऽसुतिः । चारुः ।
मदाय । पत्यते । यः । एकंः । अस्ति । दंसना । महान् । उग्रः । अभि ।
व्रतैः । गमंत् । सः । शिप्री । न । सः । योषत् । आ । गमत् । हवं ।
न । परिं । वर्जति । त्वं । पुरं । चरिष्णवं । वधैः । शुष्णस्य । सं ।
पिणक् । त्वं । भाः । अनुं । चरः । अधं । द्विता । यत् । इंद्र । हव्यः ।
भुवंः । ममं । त्वा । सूरे । उत्ऽइते । ममं । मध्यंदिने । दिवः । ममं ।
प्रऽपित्वे । अपिऽशर्वरे । वसोइति । आ । स्तोमासः । अवृत्सत ।
स्तुहि । स्तुहि । इत् । एते । घ । ते । मंहिष्ठासः । मघोनां । निंदितऽ-
अंश्वः । प्रऽपथी । परमऽज्याः । मघस्य । मेध्यऽअतिथे ॥ १५ ॥ आ ।
यत् । अश्वान् । वनंन्ऽवतः । श्रद्धया । अहं । रथे । रुहं । उत । वामस्यं ।
वसुनः । चिकेतति । यः । अस्ति । याद्वः । पशुः । यः । ऋज्रा ।
महीं । ममहे । सह । त्वचा । हिरण्यया । एषः । विश्वानि । अभि ।
अस्तु । सौभगा । आऽसंगस्यं । स्वनत्ऽरथः । अधं । प्लायोगिः ।
अतिं । दासत् । अन्यान् । आऽसंगः । अग्ने । दशऽभिः । सहस्रैः ।
अधं । उक्षणंः । दशं । महीं । रुशंतः । नळाःऽइव । सरसः । निः ।
अतिष्ठन् । अनुं । अस्य । स्थूरं । ददृशे । पुरस्तात् । अनस्थः । ऊरुः ।
अवऽरंबमाणः । शश्वंती । नारीं । अभिऽचक्ष्य । आह । सुऽभद्रं ।
अर्य । भोजनं । बिभर्षि ॥ १६ ॥ इदं । वसोइति । सुतं । अंधः ।
पिबं । सुऽपूर्णं । उदरं । अनाभयिन् । ररिम । ते । नृऽभिः । धूतः ।
सुतः । अश्वैः । अव्यः । वारैः । परिंऽपूतः । अश्वः । न । निक्तः ।

नदीषु । तं । ते । यवं । यथा । गोभिः । स्वादुं । अकर्म । श्रीणंतः ।
इंद्र । त्वा । अस्मिन् । सधऽमादे । इंद्रः । इत् । सोमऽपाः । एकः ।
इंद्रः । सुतऽपाः । विश्वऽआयुः । अंतः । देवान् । मर्त्यान् । च । न ।
यं । शुक्रः । न । दुःऽआशीः । न । तृप्राः । उरुऽव्यचसं । अपऽ-
स्पृण्वते । सुऽहार्दं ॥ १७ ॥ गोभिः । यत् । ईं । अन्ये । अस्मत् ।
मृगं । न । व्राः । मृगयंते । अभिऽत्सरंति । धेनुऽभिः । त्रयः ।
इंद्रस्य । सोमाः । सुतासः । संतु । देवस्य । स्वे । क्षये । सुतऽपाव्नः ।
त्रयः । कोशासः । श्चोतंति । तिस्रः । चम्वः । सुऽपूर्णाः । समाने ।
अधि । भार्मन् । शुचिः । असि । पुरुनिःऽस्थाः । क्षीरैः । मध्यतः ।
आऽशीर्तः । दध्ना । मंदिष्ठः । शूरस्य । इमे । ते । इंद्र । सोमाः ।
तीव्राः । अस्मेइति । सुतासः । शुक्राः । आऽशिरं । याचंते ॥ १८ ॥
तान् । आऽशिरं । पुरोळाशं । इंद्र । इमं । सोमं । श्रीणीहि । रेवंतं ।
हि । त्वा । शृणोमि । हृत्ऽसु । पीतासः । युध्यंते । दुःऽमदासः ।
न । सुरायां । ऊधः । न । नग्नाः । जरंते । रेवान् । इत् । रेवतः ।
स्तोता । स्यात् । त्वाऽवतः । मघोनः । प्र । इत् । ऊँइति । हरिऽवः ।
श्रुतस्य । उक्थं । चन । शस्यमानं । अगोः । अरिः । आ । चिकेत ।
न । गायत्रं । गीयमानं । मा । नः । इंद्र । पीयत्नवे । मा । शर्धते ।
परा । दाः । शिक्ष । शचीऽवः । शचीभिः ॥ १९ ॥ ० ॥ तदित्ऽ-
अर्थाः । इंद्र । त्वाऽयंतः । सखायः । कण्वाः । उक्थेभिः । जरंते ।
न । घ । ईं । अन्यत् । आ । पपन । वज्रिन् । अपसः । नविष्टौ ।
तव । इत् । ऊँइति । स्तोमं । चिकेत । इच्छंति । देवाः । सुन्वंतं । न ।
स्वप्नाय । स्पृहयंति । यंति । प्रऽमादं । अतंद्राः । ओइति । सु । प्र ।
याहि । वाजेभिः । मा । हृणीथाः । अभि । अस्मान् । महान्ऽइव ।
युवऽजानिः । मोइति । सु । अद्य । दुःऽहनावान् । सायं । करत् ।
आरे । अस्मत् । अश्रीरःऽइव । जामाता ॥ २० ॥ विद्म । हि । अस्य ।
वीरस्य । भूरिऽदावरीं । सुऽमतिं । त्रिषु । जातस्य । मनांसि । आ ।

तु । सिंच । कण्वंऽमंतं । न । घ । विद्म । शवसानात् । यशःऽतरं । शतंऽऊतेः । ज्येष्ठेन । सोतः । इंद्राय । सोमं । वीराय । शक्राय । भर । पिबत् । नर्याय । यः । वेदिष्ठः । अव्यथिषु । अश्वंऽवंतं । जरितृऽभ्यः । वाजं । स्तोतृऽभ्यः । गोऽमंतं । पन्यंऽपन्यं । इत् । सोतारः । आ । धावत । मद्याय । सोमं । वीराय । शूराय ॥ २१ ॥ पाता । वृत्रऽहा । सुतं । आ । घ । गमत् । न । आरे । अस्मत् । नि । यमते । शतंऽऊतिः । आ । इह । हरीइति । ब्रह्मऽयुजा । शग्मा । वक्षतः । सखायं । गीःऽभिः । श्रुतं । गिर्वणसं । स्वादवः । सोमाः । आ । याहि । श्रीताः । सोमाः । आ । याहि । शिप्रिन् । ऋषिऽवः । शचीऽवः । न । अयं । अच्छ । सधऽमादं । स्तुतः । च । याः । त्वा । वर्धंति । महे । राधसे । नृम्णाय । इंद्र । कारिणं । वृधंतः । गिरः । च । याः । ते । गिर्वाहः । उक्था । च । तुभ्यं । तानि । सत्रा । दधिरे । शवांसि ॥ २२ ॥ एव । इत् । एषः । तुविऽकूर्मिः । वाजान् । एकः । वज्रऽहस्तः । सनात् । अमृक्तः । दयते । हंता । वृत्रं । दक्षिणेन । इंद्रः । पुरु । पुरुऽहूतः । महान् । महीभिः । शचीभिः ॥ यस्मिन् । विश्वाः । चर्षणयः । उत । च्यौत्ना । ज्रयांसि । च । अनु । घ । इत् । मंदी । मघोनः । एषः । एतानि । चकार । इंद्रः । विश्वा । यः । अति । शृण्वे । वाजऽदावा । मघोनां । प्रऽभर्ता । रथं । गव्यंतं । अपाकात् । चित् । यं । अवति । इनः । वसु । सः । हि । वोळ्हा ॥ २३ ॥ सनिता । विप्रः । अर्वत्ऽभिः । हंता । वृत्रं । नृऽभिः । शूरः । सत्यः । अविता । विधंतं । यजध्व । एनं । प्रियऽमेधाः । इंद्रं । सत्राचा । मनसा । यः । भूत् । सोमैः । सत्यऽमद्वा । गाथऽश्रवसं । सत्ऽपतिं । श्रवःऽकामं । पुरुऽत्मानं । कण्वासः । गात । वाजिनं । यः । ऋते । चित् । गाः । पदेभ्यः । दात् । सखा । नृऽभ्यः । शचीऽवान् । ये । अस्मिन् । कामं । अश्रियन् । इत्था । धीऽवंतं । अद्रिऽवः । काण्वं । मेध्यंऽअतिथिं । मेषः । भूतः । अभि । यन् ।

अयं । शिक्ष । विभिंदोइतिविऽभिंदो । अस्मै । चत्वारि । अयुता । ददत् । अष्ट । परः । सहस्रा । सु । त्येइति । पयःऽवृधा । माकीइति । रणस्य । नप्तया । जनिऽत्वनाय । ममहे ॥ २४ ॥ पिब । सुतस्य । रसिनः । मत्स्व । नः । इंद्र । गोऽमतः । आपिः । नः । बोधि । सधऽमाद्यः । वृधे । अस्मान् । अवंतु । ते । धियः । भूयाम । ते । सुऽमतौ । वाजिनः । वयं । मा । नः । स्तः । अभिऽमातये । अस्मान् । चित्राभिः । अवतात् । अभिष्टिऽभिः । आ । नः । सुम्नेषु । यमय । इमाः । ऊँइति । त्वा । पुरुवसोइतिपुरुऽवसो । गिरः । वर्धंतु । याः । मम । पावकऽवर्णाः । शुचयः । विपःऽचितः । अभि । स्तोमैः । अनूषत । अयं । सहस्रं । ऋषिऽभिः । सहःऽकृतः । समुद्रःऽइव । पप्रथे । सत्यः । सः । अस्य । महिमा । गृणे । शवः । यज्ञेषु । विप्रऽराज्ये ॥ इंद्रं । इत् । देवऽतातये । इंद्रं । प्रऽयति । अध्वरे । इंद्रं । संऽईके । वनिनः । हवामहे । इंद्रं । धनस्य । सातये ॥ २५ ॥ इंद्रः । मह्ना । रोदसीइति । पप्रथत् । शवः । इंद्रः । सूर्यं । अरोचयत् । इंद्रे । ह । विश्वा । भुवनानि । येमिरे । इंद्रे । सुवानासः । इंदवः ॥ ० ॥ इंद्र । स्तोमेभिः । आयवः । संऽईचीनासः । ऋभवः । सं । अस्वरन् । रुद्राः । गृणंत । पूर्व्यं । अस्य । इत् । इंद्रः । ववृधे । वृष्ण्यं । शवः । मदे । सुतस्य । विष्णवि । अद्य । तं । अस्य । महिमानं । आयवः । अनु । स्तुवंति । पूर्वऽथा । तत् । त्वा । यामि । सुऽवीर्यं । तत् । ब्रह्म । पूर्वऽचित्तये । येन । यतिऽभ्यः । भृगवे । धने । हिते । येन । प्रस्कण्वं । आविथ । येन । समुद्रं । असृजः । महीः । अपः । तत् । इंद्र । वृष्णि । ते । शवः । सद्यः । सः । अस्य । महिमा । न । संऽनशे । यं । क्षोणीः । अनुऽचक्रदे ॥ २६ ॥ शग्धि । नः । इंद्र । यत् । त्वा । रयिं । यामि । सुऽवीर्यं । शग्धि । वाजाय । प्रथमं । सिसासते । शग्धि । स्तोमाय । पूर्व्य । शग्धि । नः । अस्य । यत् । ह । पौरं । आविथ । धियः । इंद्र । सिसासतः । शग्धि । यथा ।

रुशमं । श्यावकं । कृपं । इंद्र । प्र । आवः । स्वःऽनरं । कत् । नव्यः । अतसीनां । तुरः । गृणीत । मर्त्यः । नहि । नु । अस्य । महिमानं । इंद्रियं । स्वः । गृणंतः । आनशुः । कत् । ऊँइति । स्तुवंतः । ऋतऽयंत । देवता । ऋषिः । कः । विप्रः । ओहते । कदा । हवं । मघऽवन् । इंद्र । सुन्वतः । कत् । ऊँइति । स्तुवतः । आ । गमः । उत् । ऊँइति । त्ये । मधुमत्ऽतमाः । गिरः । स्तोमासः । ईरते । सत्राऽजितः । धनऽसाः । अक्षितऽऊतयः । वाजऽयंतः । रथाःऽइव ॥ २७ ॥ कण्वाःऽइव । भृगवः । सूर्याःऽइव । विश्वं । इत् । धीतं । आनशुः । इंद्रं । स्तोमेभिः । महयंतः । आयवः । प्रियऽमेधासः । अस्वरन् । युक्ष्व । हि । वृत्रहन्ऽतम । हरीइति । इंद्र । पराऽवतः । अर्वाचीनः । मघऽवन् । सोमऽपीतये । उग्रः । ऋष्वेभिः । आ । गहि । इमे । हि । ते । कारवः । वावशुः । धिया । विप्रासः । मेधऽसातये । सः । त्वं । नः । मघऽवन् । इंद्र । गिर्वणः । वेनः । न । शृणुधि । हवं । निः । इंद्र । बृहतीभ्यः । वृत्रं । धनुऽभ्यः । अस्फुरः । निः । अर्बुदस्य । मृगयस्य । मायिनः । निः । पर्वतस्य । गाः । आजः । निः । अंतरिक्षात् । अधमः । महां । अहिं । कृषे । तत् । इंद्र । पौंस्यं ॥ २८ ॥ यं । मे । दुः । इंद्रः । मरुतः । पाकऽस्थामा । कौरयाणः । विश्वेषां । त्मना । शोभिष्ठं । उपऽइव । दिवि । धावमानं । रोहितं । मे । पाकऽस्थामा । सुऽधुरं । कक्ष्यऽप्रां । अदात् । रायः । विऽबोधनं । यस्मैं । अन्ये । दश । प्रति । धुरं । वहंति । वह्नयः । अस्तं । वयः । न । तुग्र्यं । आत्मा । पितुः । तनूः । वासः । ओजःऽदाः । अभिऽअंजनं । तुरीयं । इत् । रोहितस्य । पाकऽस्थामानं । भोजं । दातारं । अब्रवं ॥ २९ ॥ यत् । इंद्र । प्राक् । अपाक् । उदक् । न्यक् । वा । हूयसे । नृऽभिः । सिम । पुरु । नृऽसूतः । असि । आनवे । असि । प्रऽशर्ध । तुर्वशे । यत् । वा । रुमे । रुशमे । श्यावके । कृपे । इंद्र । मादयसे । सचा । कण्वासः । त्वा । ब्रह्मऽभिः । स्तोमऽवाहसः । इंद्र । आ । यच्छंति । आ । गहि ।

यथा । गौरः । अपा । कृतं । तृष्यन् । एति । अव । इरिणं । आऽपित्वे । नः । प्रऽपित्वे । तूयं । आ । गहि । कण्वेषु । सु । सचा । पिब ।
मंदंतु । त्वा । मघऽवन् । इंद्र । इंदवः । राधःऽदेयाय । सुन्वते ।
आऽमुष्य । सोमं । अपिबः । चमूइति । सुतं । ज्येष्ठं । तत् । दधिषे ।
सहः । प्र । चक्रे । सहसा । सहः । बभंज । मन्युं । ओजसा । विश्वे ।
ते । इंद्र । पृतनाऽयवः । यह्वोइति । नि । वृक्षाःऽइव । येमिरे ॥ ३० ॥
सहस्रेणऽइव । सचते । यविऽयुधा । यः । ते । आनट् । उपऽस्तुतिं ।
पुत्रं । प्रावर्गं । कृणुते । सुऽवीर्ये । दाश्नोति । नमउक्तिऽभिः । मा ।
भेम । मा । श्रमिष्म । उग्रस्य । सख्ये । तव । महत् । ते । वृष्णः ।
अभिऽचक्ष्यं । कृतं । पश्येम । तुर्वशं । यदुं । सव्यां । अनु । स्फिग्यं ।
ववसे । वृषा । न । दानः । अस्य । रोषति । मध्वा । संऽपृक्ताः ।
सारघेण । धेनवः । तूयं । आ । इहि । द्रव । पिब । अश्वी । रथी ।
सुऽरूपः । इत् । गोऽमान् । इत् । इंद्र । ते । सखा । श्वात्रऽभाजा ।
वयसा । सचते । सदा । चंद्रः । याति । सभां । उप । ऋश्यः । न ।
तृष्यन् । अवऽपानं । आ । गहि । पिब । सोमं । वशान् । अनु ।
निऽमेघमानः । मघऽवन् । दिवेऽदिवे । ओजिष्ठं । दधिषे । सहः ॥ ३१ ॥
अध्वर्योइति । द्रवय । त्वं । सोमं । इंद्रः । पिपासति । उप । नूनं ।
युयुजे । वृषणा । हरीइति । आ । च । जगाम । वृत्रऽहा । स्वयं । चित् ।
सः । मन्यते । दाशुरिः । जनः । यत्र । सोमस्य । तृपसि । इदं । ते ।
अन्नं । युज्यं । संऽउक्षितं । तस्य । आ । इहि । प्र । द्रव । पिब । रथेऽस्थाय । अध्वर्यवः । सोमं । इंद्राय । सोतन । अधि । ब्रध्नस्य । अद्रयः ।
वि । चक्षते । सुन्वंतः । दाशुऽअध्वरं । उप । ब्रध्नं । ववाता । वृषणा ।
हरीइति । इंद्रं । अपऽसु । वक्षतः । अर्वाचं । त्वा ॥ ० ॥ प्र । पूषणं ।
वृणीमहे । युज्याय । पुरुऽवसुं । सः । शक्र । शिक्ष । पुरुऽहूत । नः ।
धिया । तुजे । राये । विऽमोचन ॥ ३२ ॥ सं । नः । शिशीहि ।
भुरिजोःऽइव । क्षुरं । रास्व । रायः । विऽमोचन । त्वेइति । तत् । नः ।

सुऽवेदं । उस्रियं । वसु । यं । त्वं । हिनोषि । मर्त्यं । वेमि । त्वा । पूषन् । ऋंजसे । वेमि । स्तोतवे । आघृणे । न । तस्य । वेमि । अरणं । हि । तत् । वसोइति । स्तुषे । पज्राय । साम्ने । परा । गावः । यवसं । कत् । चित् । आघृणे । नित्यं । रेक्णः । अमर्त्य । अस्माकं । पूषन् । अविता । शिवः । भव । मंहिष्ठः । वाजऽसातये । स्थूरं । राधः । शतऽअश्वं । कुरुंगस्य । दिविंइष्टिषु । राज्ञः । त्वेषस्य । सुऽभगस्य । रातिषु । तुर्वशेषु । अमन्महि । धीभिः । सातानि । काण्वस्य । वाजिनः । प्रियऽमेधैः । अभिद्युऽभिः । षष्टिं । सहस्रा । अनु । निःऽमजां । अजे । निः । यूथानि । गवां । ऋषिः । वृक्षाः । चित् । मे । अभिऽपित्वे । अररणुः । गां । भजंत । मेहना । अश्वं । भजंत । मेहना ॥ ३२ ॥

इति पञ्चमाष्टके सप्तमोध्यायः ॥ ७ ॥






हरिः ॐ ॥ दूरात् । इहऽइव । यत् । सती । अरुणऽप्सुः । अशिश्वितत् । वि । भानुं । विश्वधा । अतनत् । नृऽवत् । दस्रा । मनःऽयुजा । रथेन । पृथुऽपाजसा । सचेथेइति । अश्विना । उषसं । युवाभ्यां । वाजिनीवसूइतिवाजिनीऽवसू । प्रति । स्तोमाः । अदृक्षत । वाचं । दूतः । यथा । ओहिषे । पुरुऽप्रिया । नः । ऊतये । पुरुऽमंद्रा । पुरुवसूइतिपुरुऽवसू । स्तुषे । कण्वासः । अश्विना । मंहिष्ठा । वाजऽसातमा । इषयंता । शुभः । पतीइति । गंतारा । दाशुषः । गृहं ॥ १ ॥ ता । सुऽदेवाय । दाशुषे । सुऽमेधां । अविऽतारिणीं । घृतैः । गव्यूतिं ।

उक्षतं । आ । नः । स्तोमं । उपं । द्रवत् । तूयं । श्येनेभिः । आशुऽभिः । यातं । अश्वेभिः । अश्विना । येभिः । तिस्रः । पराऽवतः । दिवः । विश्वानि । रोचना । त्रीन् । अक्तून् । परिऽदीयथः । उत । नः । गोऽमतीः । इषः । उत । सातीः । अहःऽविदा । वि । पथः । सातये । सितं ॥ आ । नः । गोऽमंतं । अश्विना । सुऽवीरं । सुऽरथं । रयिं । वोळ्हं । अश्वऽवतीः । इषः ॥ २ ॥ ववृधाना । शुभः । पतीइति । दस्रा । हिरंण्यवर्तनीइतिहिरंण्यऽवर्तनी । पिबंतं । सोम्यं । मधु । अस्मभ्यं । वाजिनीवसूइतिवाजिनीऽवसू । मघवत्ऽभ्यः । च । सऽप्रथः । छर्दिः । यंतं । अदाभ्यं । नि । सु । ब्रह्म । जनानां । या । अविष्टं । तूयं । आ । गतं । मोइति । सु । अन्यान् । उपं । अरतं । अस्य । पिबतं । अश्विना । युवं । मदस्य । चारुणः । मध्वः । रातस्य । धिष्ण्या । अस्मेइति । आ । वहतं । रयिं । शतऽवंतं । सहस्रिणं । पुरुऽक्षुं । विश्वऽधायसं ॥ ३ ॥ पुरुऽत्रा । चित् । हि । वां । नरा । विऽह्वयंते । मनीषिणः । वाघत्ऽभिः । अश्विना । आ । गतं । जनासः । वृक्तऽबर्हिषः । हविष्मंतः । अरंऽकृतः । युवां । हवंते । अश्विना । अस्माकं । अद्य । वां । अयं । स्तोमः । वाहिष्ठः । अंतमः । युवाभ्यां । भूतु । अश्विना । यः । ह । वां । मधुनः । दृतिः । आऽहितः । रथऽचर्षणे । ततः । पिबतं । अश्विना । तेन । नः । वाजिनीवसूइतिवाजिनीऽवसू । पश्वे । तोकाय । शं । गवे । वहतं । पीवरीः । इषः ॥ ४ ॥ उत । नः । दिव्याः । इषः । उत । सिंधून् । अहःऽविदा । अपं । द्वाराऽइव । वर्षथः । कदा । वां । तौग्र्यः । विधत् । समुद्रे । जहितः । नरा ॥ ० ॥ युवं । कण्वाय । नासत्या । अपिऽरिप्ताय । हर्म्ये । शश्वत् । ऊतीः । दशस्यथः । ताभिः । आ । यातं । ऊतिऽभिः । नव्यसीभिः । सुशस्तिऽभिः । यत् । वां । वृषण्वसूइतिवृषण्ऽवसू । हुवे । यथा । चित् । कण्वं । आवतं । प्रियऽमेधं । उपऽस्तुतं । अत्रिं । शिंजारं । अश्विना ॥ ५ ॥ यथा । उत । कृत्व्ये । धने । अंशुं । गोषु ।

अगस्त्यं । यथा । वाजेषु । सोभरिं । एतावत् । वां । वृषण्वसूइति-वृषण्ऽवसू । अतः । वा । भूयः । अश्विना । गृणंतः । सुम्नं । ईमहे । रथं । हिरण्यऽवंधुरं । हिरण्यऽअभीशुं । अश्विना । आ । हि । स्थाथः । दिविऽस्पृशं । हिरण्ययी । वां । रभिः । ईषा । अक्षः । हिरण्ययः । उभा । चक्रा । हिरण्यया ॥ ० ॥ पराऽवतः । चित् । आ । गतं । उप । इमां । सुऽस्तुतिं । मम ॥ ६ ॥ आ । वहेथेइति । पराकात् । पूर्वीः । अश्नंतौ । अश्विना । इषः । दासीः । अमर्त्या ॥ आ । नः । द्युम्नैः । आ । श्रवःऽभिः । आ । राया । यातं । अश्विना । पुरुऽचंद्रा । नासत्या । आ । इह । वां । प्रुषितऽप्सवः । वयः । वहंतु । पर्णिनः । अच्छ । सुऽअध्वरं । जनं । रथं । वां । अनुऽगायसं । यः । इषा । वर्तते । सह । न । चक्रं । अभि । बाधते । हिरण्ययेन । रथेन । द्रवत्पाणिऽभिः । अश्वैः । धीऽजवना । नासत्या ॥ ७ ॥ युवं । मृगं । जागृऽवांसं । स्वदथः । वा । वृषण्वसूइतिवृषण्ऽवसू । ता । नः । पृंक्तं । इषा । रयिं । ता । मे । अश्विना । सनीनां । विद्यातं । नवानां । यथा । चित् । चैद्यः । कशुः । शतं । उष्ट्रानां । ददत् । सहस्रा । दश । गोनां । यः । मे । हिरण्यऽसंदृशः । दश । राज्ञः । अमंहत । अधःऽपदाः । इत् । चैद्यस्य । कृष्टयः । चर्मऽम्नाः । अभितः । जनाः । माकिः । एना । पथा । गात् । येन । इमे । यंति । चेदयः । अन्यः । न । इत् । सूरिः । ओहते । भूरिदावत्ऽतरः । जनः ॥ ८ ॥ इति प्रथमोनुवाकः ॥

॥ – :: – ॥ महान् । इंद्रः । यः । ओजसा । पर्जन्यः । वृष्टिमान्ऽइव । स्तोमैः । वत्सस्य । वृवृधे । प्रऽजां । ऋतस्य । पिप्रतः । प्र । यत् । भरंत । वह्नयः । विप्राः । ऋतस्य । वाहसा । कण्वाः । इंद्रं । यत् । अक्रत । स्तोमैः । यज्ञस्य । साधनं । जामि । ब्रुवते । आयुधं । सं । अस्य । मन्यवे । विशः । विश्वाः । नमंत । कृष्टयः । समुद्रायऽइव । सिंधवः । ओजः । तत् । अस्य । तित्विषे । उभेइति । यत् । संऽअवर्तयत् । इंद्रः । चर्मऽइव । रोदसीइति ॥ ९ ॥ वि । चित् । वृत्रस्य । दोधतः । वज्रेण ।

शतऽपर्वणा । शिरः । विभेद । वृष्णिना । इमाः । अभि । प्र । नोनुमः ।
विपां । अग्रेषु । धीतयः । अग्नेः । शोचिः । न । दिद्युतः । गुहा ।
सतीः । उप । त्मना । प्र । यत् । शोचंत । धीतयः । कण्वाः ।
ऋतस्य । धारया । प्र । तं । इंद्र । नशीमहि । रयिं । गोऽमंतं ।
अश्विनं । प्र । ब्रह्म । पूर्वऽचित्तये । अहं । इत् । हि । पितुः । परि ।
मेधां । ऋतस्य । जग्रभ । अहं । सूर्यःऽइव । अजनि ॥ १० ॥ अहं ।
प्रत्नेन । मन्मना । गिरः । शुंभामि । कण्वऽवत् । येन । इंद्रः । शुष्मं ।
इत् । दधे । ये । त्वां । इंद्र । न । तुस्तुवुः । ऋषयः । ये । च ।
तुस्तुवुः । मम । इत् । वर्धस्व । सुऽस्तुतः । यत् । अस्य । मन्युः ।
अध्वनीत् । वि । वृत्रं । पर्वऽशः । रुजन् । अपः । समुद्रं । ऐरयत् ।
नि । शुष्णे । इंद्र । धर्णसिं । वज्रं । जघंथ । दस्यवि । वृषा । हि ।
उग्र । शृण्विषे । न । द्यावः । इंद्रं । ओजसा । न । अंतरिक्षाणि ।
वज्रिणं । न । विव्यचंत । भूमयः ॥ ११ ॥ यः । ते । इंद्र । महीः ।
अपः । स्तभुऽयमानः । आ । अशयत् । नि । तं । पद्यासु । शिश्नथः ।
यः । इमेइति । रोदसीइति । महीइति । समीचीइतिसंऽईची ।
संऽअजग्रभीत् । तमःऽभिः । इंद्र । तं । गुहः । ये । इंद्र । यतयः ।
त्वा । भृगवः । ये । च । तुस्तुवुः । मम । इत् । उग्र । श्रुधि । हवं ।
इमाः । ते । इंद्र । पृश्नयः । घृतं । दुहते । आऽशिरं । एनां । ऋतस्य ।
पिप्युषीः । याः । इंद्र । प्रऽस्वः । त्वा । आसा । गर्भं । अचक्रिरन् ।
परि । धर्मऽइव । सूर्यं ॥ १२ ॥ त्वां । इत् । शवसः । पते । कण्वाः ।
उक्थेन । ववृधुः । त्वां । सुतासः । इंदवः । तव । इत् । इंद्र ।
प्रऽनीतिषु । उत । प्रऽशस्तिः । अद्रिऽवः । यज्ञः । वितंतसाय्यः । आ ।
नः । इंद्र । महीं । इषं । पुरं । न । दर्षि । गोऽमतीं । उत । प्रऽजां ।
सुऽवीर्यं । उत । त्यत् । आशुऽअश्व्यं । यत् । इंद्र । नाहुषीषु । आ ।
अग्रे । विक्षु । प्रऽदीदयत् । अभि । व्रजं । न । तत्निषे । सूरः ।
उपाकऽचक्षसं । यत् । इंद्र । मळयासि । नः ॥ १३ ॥ यत् । अंग ।

तविषीऽयसे । इंद्र । प्रऽराजसि । क्षितीः । महान् । अपारः । ओजसा । तं । त्वा । हविष्मतीः । विशः । उप । ब्रुवते । ऊतये । उरुऽज्रयसं । इंदुऽभिः । उपऽह्वरे । गिरीणां । संऽगथे । च । नदीनां । धिया । विप्रः । अजायत । अतः । समुद्रं । उत्ऽवतः । चिकित्वान् । अव । पश्यति । यतः । विपानः । एजति । आत् । इत् । प्रत्नस्य । रेतसः । ज्योतिः । पश्यंति । वासरं । परः । यत् । इध्यते । दिवा ॥ १४ ॥ कण्वासः । इंद्र । ते । मतिं । विश्वे । वर्धंति । पौंस्यं । उतोइति । शविष्ठ । वृष्ण्यं । इमां । मे । इंद्र । सुऽस्तुतिं । जुषस्व । प्र । सु । मां । अव । उत । प्र । वर्धय । मतिं । उत । ब्रह्मण्या । वयं । तुभ्यं । प्रऽवृद्ध । वज्रिऽवः । विप्राः । अतक्ष्म । जीवसे । अभि । कण्वाः । अनूषत । आपः । न । प्रऽवता । यतीः । इंद्रं । वनन्ऽवती । मतिः । इंद्रं । उक्थानि । वावृधुः । समुद्रंऽइव । सिंधवः । अनुत्तऽमन्युं । अजरं ॥ १५ ॥ आ । नः । याहि । पराऽवतः । हरिऽभ्यां । हर्यताभ्यां । इमं । इंद्र । सुतं । पिब । त्वां । इत् । वृत्रहन्ऽतम । जनासः । वृक्तऽबर्हिषः । हवंते । वाजऽसातये । अनु । त्वा । रोदसीइति । उभेइति । चक्रं । न । वर्ति । एतशं । अनु । सुवानासः । इंदवः । मंदस्व । सु । स्वःऽनरे । उत । इंद्र । शर्यणाऽवति । मत्स्व । विवस्वतः । मती । ववृधानः । उप । द्यवि । वृषा । वज्री । अरोरवीत् । वृत्रऽहा । सोमऽपातमः ॥ १६ ॥ ऋषिः । हि । पूर्वऽजाः । असि । एकः । ईशानः । ओजसा । इंद्र । चोष्कूयसे । वसु । अस्माकं । त्वा । सुतान् । उप । वीतऽपृष्ठाः । अभि । प्रयः । शतं । वहंतु । हरयः । इमां । सु । पूर्व्यां । धियं । मधोः । घृतस्य । पिप्युषीं । कण्वाः । उक्थेन । वावृधुः । इंद्रं । इत् । विऽमहीनां । मेधे । वृणीत । मर्त्यः । इंद्रं । सनिष्युः । ऊतये । अर्वाचं । त्वा । पुरुऽस्तुत । प्रियमेधऽस्तुता । हरीइति । सोमऽपेयाय । वक्षतः । शतं । अहं । तिरिंदिरे । सहस्रं । पर्शौ । आ । ददे । राधांसि । याद्वानां । त्रीणि । शतानि । अर्वतां ।

अयंज्वनः । भुवत् ॥ न । यजमान । रिष्यसि । न । सुन्वान । न । देवयोइतिदेवऽयो ॥ ० ॥ नकिः । तं । कर्मणा । नशत् । न । प्र । योषत् । न । योषति ॥ ० ॥ असत् । अत्र । सुऽवीर्यं । उत । त्यत् । आशुऽअश्व्यं ॥ ० ॥ ४० ॥

इति षष्ठाष्टके द्वितीयोध्यायः ॥ २ ॥





## ॥ अथ तृतीयोध्यायः ॥

हरिः ॐ ॥ प्र । कृतानि । ऋजीषिणः । कण्वाः । इंद्रस्य । गाथया ॥ मदे । सोमस्य । वोचत ॥ यः । सृबिंदं । अनर्शनिं । पिप्रुं । दासं । अहीशुवं । वधीत् । उग्रः । रिणन् । अपः । नि । अर्बुदस्य । विष्टपं । वर्ष्माणं । बृहतः । तिर ॥ कृषे । तत् । इंद्र । पौंस्यं । प्रति । श्रुताय । वः । धृषत् । तूर्णाशं । न । गिरेः । अधि । हुवे । सुऽशिप्र । ऊतये ॥ सः । गोः । अश्वस्य । वि । व्रजं । मंदानः । सोम्येभ्यः । पुरं । न । शूर । दर्षसि ॥ १ ॥ यदि । मे । ररणः । सुते । उक्थे । वा । दधसे । चनः । आरात् । उप । स्वधा । आ । गहि ॥ वयं । घ । ते । अपि । स्मसि । स्तोतारः । इंद्र । गिर्वणः ॥ त्वं । नः । जिन्व । सोमऽपाः ॥ उत । नः । पितुं । आ । भर । संऽरराणः । अविऽक्षितं । मघऽवन् । भूरि । ते । वसु ॥ उत । नः । गोऽमतः । कृधि । हिरण्यऽवतः । अश्विनः ॥ इळाभिः । सं । रभेमहि ॥ बृबत्ऽउक्थं । हवामहे । सृप्रऽकरस्नं । ऊतये । साधु । कृण्वंतं । अवसे ॥ २ ॥ यः । संऽस्थे । चित् । शतऽक्रतुः । आत् । ईं । कृणोति । वृत्रऽहा । जरितृऽभ्यः । पुरुऽवसुः ॥ सः । नः । शक्रः । चित् । आ । शकत् ।

दानऽवान् । अंतरऽआभरः । इंद्रः । विश्वाभिः । ऊतिऽभिः ॥ ० ॥
तं । इंद्रं । अभि । गायत ॥ आऽयंतारं । महिं । स्थिरं । पृतनासु ।
श्रवःऽजितं । भूरेः । ईशानं । ओजसा ॥ नकिः । अस्य । शचीनां ।
निऽयंता । सूनृतानां । नकिः । वक्ता । न । दात् । इति ॥ ३ ॥ न ।
नूनं । ब्रह्मणां । ऋणं । प्राशूनां । अस्ति । सुन्वतां ॥ न । सोमः ।
अप्रता । पपे ॥ पन्ये । इत् । उप । गायत । पन्यै । उक्थानि ।
शंसत ॥ ब्रह्म । कृणोत । पन्यै । इत् ॥ पन्यः । आ । दर्दिरत् । शता ।
सहस्रा । वाजी । अवृतः । इंद्रः । यः । यज्वनः । वृधः ॥ वि । सु ।
चर । स्वधाः । अनु । कृष्टीनां । अनु । आऽहुवः ॥ इंद्र । पिब ।
सुतानां ॥ पिब । स्वऽधैनवानां । उत । यः । तुग्र्यै । सचा ॥ उत ।
अयं । इंद्र । यः । तव ॥ ४ ॥ अति । इहि । मन्युऽसाविनं । सुसुऽ-
वांसं । उपऽअरणे ॥ इमं । रातं । सुतं । पिब ॥ इहि । तिस्रः ।
पराऽवतः । इहि । पंच । जनान् । अति । धेनाः । इंद्र । अवऽ-
चाकशत् ॥ सूर्यः । रश्मिं । यथा । सृज । आ । त्वा । यच्छंतु । मे ।
गिरः । निम्नं । आपः । न । सध्र्यक् ॥ अध्वर्योइति । आ । तु । हि ।
सिंच । सोमं । वीराय । शिप्रिणे । भर । सुतस्य । पीतये ॥ यः ।
उद्नः । फलिऽगं । भिनत् । न्यक् । सिंधून् । अवऽअसृजत् । यः । गोषु ।
पक्वं । धारयत् ॥ ५ ॥ अहन् । वृत्रं । ऋचीषमः । और्णऽवाभं ।
अहीशुवं । हिमेन । अविध्यत् । अर्बुदं ॥ प्र । वः । उग्राय । निःऽतुरे ।
अषाळ्हाय । प्रऽसक्षिणे ॥ ० ॥ यः । विश्वानि । अभि । व्रता ।
सोमस्य । मदे । अंधसः ॥ इंद्रः । देवेषु । चेतति ॥ ० ॥ हरीइति ।
हिरण्यऽकेश्या ॥ वोळ्हां । अभि । प्रयः । हितं ॥ ० ॥ ६ ॥ वयं ।
घ । त्वा । सुतऽवंतः । आपः । न । वृक्तऽबर्हिषः । पवित्रस्य । प्रऽ-
स्रवणेषु । वृत्रऽहन् । परि । स्तोतारः । आसते ॥ स्वरंति । त्वा । सुते ।
नरः । वसोइति । निरेके । उक्थिनः । कदा । सुतं । तृषाणः । ओकः ।
आ । गमः । इंद्र । स्वब्दीऽइव । वंसगः ॥ कण्वेभिः । धृष्णोइति । आ ।

धृषत् । वाजं । दर्षि । सहस्रिणं । पिशंगऽरूपं । मघऽवन् । विऽचर्षणे । मक्षु । गोऽमंतं । ईमहे ॥ पाहि । गायं । अंधसः । मदे । इंद्राय । मेध्यऽअतिथे । यः । संऽमिश्लः । हर्योः । यः । सुते । सचा । वज्री । रथः । हिरण्ययः ॥ यः । सुऽसव्यः । सुऽदक्षिणः । इनः । यः । सुऽक्रतुः । गृणे । यः । आऽकरः । सहस्रा । यः । शतऽमघः । इंद्रः । यः । पूःऽभित् । आरितः ॥ ७ ॥ यः । धृषितः । यः । अवृतः । यः । अस्ति । श्मश्रुषु । श्रितः । विभूतऽद्युम्नः । च्यवनः । पुरुऽस्तुतः । क्रत्वा । गौःऽइव । शाकिनः ॥ कः । ईं । वेद । सुते । सचा । पिबंतं । कत् । वयः । दधे ॥ अयं । यः । पुरः । विऽभिनत्ति । ओजसा । मंदानः । शिप्री । अंधसः । दाना । मृगः । न । वारणः । पुरुऽत्रा । चरथं । दधे ॥ नकिः । त्वा । नि । यमत् । आ । सुते । गमः । महान् । चरसि । ओजसा । यः । उग्रः । सन् । अनिःऽस्तृतः । स्थिरः । रणाय । संस्कृतः ॥ यदि । स्तोतुः । मघऽवा । शृणवत् । हवं । न । इंद्रः । योषति । आ । गमत् ॥ सत्यं । इत्था । वृषा । इत् । असि । वृषऽजूतिः । नः । अवृतः ॥ वृषा । हि । उग्र । शृण्विषे । पराऽवति । वृषोइति । अर्वाऽवति । श्रुतः ॥ ८ ॥ वृषणः । ते । अभीशवः । वृषा । कशा । हिरण्ययी । वृषा । रथः । मघऽवन् । वृषणा । हरीइति । वृषा । त्वं । शतक्रतोइतिशतऽक्रतो । वृषा । सोता । सुनोतु । ते । वृषन् । ऋजीपिन् । आ । भर ॥ वृषा । दधन्वे । वृषणं । नदीषु । आ । तुभ्यं । स्थातः । हरीणां ॥ आ । इंद्र । याहि । पीतये । मधु । शविष्ठ । सोम्यं । न । अयं । अच्छ । मघऽवा । शृणवत् । गिरः । ब्रह्म । उक्था । च । सुऽक्रतुः ॥ वहंतु । त्वा । रथेऽस्थां । आ । हरयः । रथऽयुजः । तिरः । चित् । अयं । सवनानि । वृत्रऽहन् । अन्येषां । या । शतक्रतोइतिशतऽक्रतो ॥ अस्माकं । अद्य । अंतमं । स्तोमं । धिष्व । महाऽमह । अस्माकं । ते । सवना । संतु । शंऽतमा । मदाय । द्युक्ष । सोमऽपाः ॥ ९ ॥ नहि । सः । तव । नोइति । मम ।

शास्त्रे । अन्यस्यं । रण्यति । यः । अस्मान् । वीरः । आ । अनयत् ॥
इंद्रः । चित् । घ । तत् । अब्रवीत् । स्त्रियाः । अशास्यं । मनः ।
उतोइति । अहं । क्रतुं । रघुं ॥ सप्तीइति । चित् । घ । मदऽच्युता ।
मिथुना । वहतः । रथं । एव । इत् । धूः । वृष्णः । उत्ऽतरा ॥
अधः । पश्यस्व । मा । उपरि । संऽतरां । पादकौ । हर । मा । ते ।
कशऽप्लकौ । दृशन् । स्त्री । हि । ब्रह्मा । बभूविथ ॥ १० ॥ ० ॥
हरिऽभिः । उप । कण्वस्य । सुऽस्तुतिं । दिवः । अमुष्य । शासतः ।
दिवं । यय । दिवावसोइतिदिवाऽवसो ॥ आ । त्वा । ग्रावा । वदन् ।
इह । सोमी । घोषेण । यच्छतु ॥ ० ॥ अत्र । वि । नेमिः । एषां ।
उरां । न । धूनुते । वृकः ॥ ० ॥ आ । त्वा । कण्वाः । इह । अवसे ।
हवंते । वाजऽसातये ॥ ० ॥ दधामि । ते । सुतानां । वृष्णे । न ।
पूर्वऽपाय्यं ॥ ० ॥ ११ ॥ स्मत्ऽपुरंधिः । नः । आ । गहि । विश्वतःऽ-
धीः । नः । ऊतये ॥ ० ॥ आ । नः । याहि । महेऽमते । सहस्रऽऊते ।
शतऽमघ ॥ ० ॥ आ । त्वा । होता । मनुःऽहितः । देवऽत्रा । वक्षत् ।
ईड्यः ॥ ० ॥ आ । त्वा । मदऽच्युता । हरीइति । श्येनं । पक्षाऽइव ।
वक्षतः ॥ ० ॥ आ । याहि । अर्यः । आ । परि । स्वाहा । सोमस्य ।
पीतये ॥ ० ॥ १२ ॥ ० ॥ उपऽश्रुति । उक्थेषु । रणय । इह ॥ ० ॥
सऽरूपैः । आ । सु । नः । गहि । संऽभृतैः । संभृतऽअश्वः ॥ ० ॥ आ ।
याहि । पर्वतेभ्यः । समुद्रस्य । अधि । विष्टपः ॥ ० ॥ आ । नः । गव्यानि ।
अश्व्या । सहस्रा । शूर । दर्दृहि ॥ ० ॥ आ । नः । सहस्रऽशः ।
भर । अयुतानि । शतानि । च ॥ ० ॥ आ । यत् । इंद्रः । च ।
दद्वहेइति । सहस्रं । वसुऽरोचिषः । ओजिष्ठं । अश्व्यं । पशुं ॥ ये ।
ऋज्राः । वातऽरंहसः । अरुषासः । रघुऽस्यदः । भ्राजंते । सूर्याःऽइव ॥
पारावतस्य । रातिषु । द्रवत्ऽचक्रेषु । आशुषु । तिष्ठं । वनस्य ।
मध्ये । आ ॥ १३ ॥ अग्निना । इंद्रेण । वरुणेन । विष्णुना । आदित्यैः ।
रुद्रैः । वसुऽभिः । सचाऽभुवा । सऽजोषसौ । उषसा । सूर्येण । च ।

सोमं । पिबतं । अश्विना ॥ विश्वाभिः । धीभिः । भुवनेन । वाजिना । दिवा । पृथिव्या । अद्रिऽभिः । सचाऽभुवा ॥ ० ॥ विश्वैः । देवैः । त्रिऽभिः । एकादशैः । इह । अत्ऽभिः । मरुत्ऽभिः । भृगुऽभिः । सचाऽभुवा ॥ ० ॥ जुषेथां । यज्ञं । बोधतं । हवस्य । मे । विश्वा । इह । देवौ । सवना । अव । गच्छतं ॥ ० ॥ आ । इषं । नः । वोळ्हं । अश्विना ॥ स्तोमं । जुषेथां । युवशाऽइव । कन्यना ॥ ० ॥ गिरः । जुषेथां । अध्वरं । जुषेथां ॥ ॥ ० ॥ १४ ॥ हारिद्रवाऽइव । पतथः । वना । इत् । उप । सोमं । सुतं । महिषाऽइव । अव । गच्छथः । त्रिः । वर्तिः । यातं । अश्विना ॥ हंसौऽइव । पथतः । अध्वगौऽइव ॥ ० ॥ श्येनौऽइव । पतथः । हव्यऽदातये ॥ ० ॥ पिबतं । च । तृप्णुतं । च । आ । च । गच्छतं । प्रऽजां । च । धत्तं । द्रविणं । च । धत्तं ॥ ० ॥ ऊर्जं । नः । धत्तं । अश्विना ॥ जयतं । च । प्र । स्तुतं । च । प्र । च । अवतं ॥ ० ॥ हतं । च । शत्रून् । यततं । च । मित्रिणः ॥ ० ॥ १५ ॥ मित्रावरुणऽवंतौ । उत । धर्मऽवंता । मरुत्वंता । जरितुः । गच्छथः । हवं ॥ ० ॥ आदित्यैः । यातं । अश्विना ॥ अंगिरस्वंतौ । उत । विष्णुऽवंता ॥ ० ॥ ऋभुऽमंता । वृषणा । वाजऽवंता ॥ ० ॥ ब्रह्म । जिन्वतं । उत । जिन्वतं । धियः । हतं । रक्षांसि । सेधतं । अमीवाः ॥ ० ॥ सोमं । सुन्वतः । अश्विना ॥ क्षत्रं ॥ ० ॥ नॄन् ॥ ० ॥ धेनूः ॥ ० ॥ विशः ॥ ० ॥ १६ ॥ अत्रेःऽइव । शृणुतं । पूर्व्यऽस्तुतिं । श्यावऽअश्वस्य । सुन्वतः । मदऽच्युता ॥ ० ॥ आश्विना । तिरःऽअह्न्यं ॥ सर्गान्ऽइव । सृजतं । सुऽस्तुतीः । उप ॥ ० ॥ रश्मीन्ऽइव । यच्छतं । अध्वरान् । उप ॥ ० ॥ अर्वाक् । रथं । नि । यच्छतं ॥ ० ॥ अवस्युः । वां । अहं । हुवे । धत्तं । रत्नानि । दाशुषे ॥ नमःऽवाके । प्रऽस्थिते । अध्वरे । नरा । विवक्षणस्य । पीतये ॥ ० ॥ स्वाहाऽकृतस्य । तृपतं । सुतस्य । देवौ । अंधसः ॥ ० ॥ १७ ॥ अविता । असि । सुन्वतः । वृक्तऽबर्हिषः । पिब । सोमं । मदाय ।

कं । शतक्रतोइतिशतऽक्रतो । यं । ते । भागं । अधारयन् । विश्वाः ।
सेहानः । पृतनाः । उरु । ज्रयः । सं । अप्सुऽजित् । मरुत्वान् । इंद्र ।
सत्ऽपते ॥ प्र । अव । स्तोतारं । मघऽवन् । अव । त्वां ॥ ० ॥ ऊर्जा ।
देवान् । अवसि । ओजसा । त्वां ॥ ० ॥ जनिता । दिवः । जनिता ।
पृथिव्याः ॥ ० ॥ जनिता । अश्वानां । जनिता । गवां । असि ॥ ० ॥
अत्रीणां । स्तोमं । अद्रिऽवः । महः । कृधि ॥ ० ॥ श्यावऽअश्वस्य । सुन्वतः ।
तथा । शृणु । यथा । अशृणोः । अत्रेः । कर्माणि । कृण्वतः । प्र ।
त्रसदस्युं । आविथ । त्वं । एकः । इत् । नृऽसह्ये । इंद्र । ब्रह्माणि ।
वर्धयन् ॥ १८ ॥ प्र । इदं । ब्रह्म । वृत्रऽतूर्येषु । आविथ । प्र । सुन्वतः ।
शचीऽपते । इंद्र । विश्वाभिः । ऊतिऽभिः । माध्यंदिनस्य । सवनस्य ।
वृत्रऽहन् । अनेद्य । पिब । सोमस्य । वज्रिऽवः ॥ सेहानः । उग्र ।
पृतनाः । अभि । द्रुहः ॥ ० ॥ एकऽराट् । अस्य । भुवनस्य ।
राजसि ॥ ० ॥ सऽस्थावाना । यवयसि । त्वं । एकः । इत् ॥ ० ॥
क्षेमस्य । च । प्रऽयुजः । च । त्वं । ईशिषे ॥ ० ॥ क्षत्राय । त्वं ।
अवसि । न । त्वं । आविथ ॥ ० ॥ श्यावऽअश्वस्य । रेभतः ॥ ० ॥
क्षत्राणि । वर्धयन् ॥ १९ ॥ यज्ञस्य । हि । स्थः । ऋत्विजा ।
सस्नीइति । वाजेषु । कर्मऽसु । इंद्राग्नीइति । तस्य । बोधतं ॥
तोशासा । रथऽयावाना । वृत्रऽहना । अपराऽजिता ॥ ० ॥ इदं ।
वां । मदिरं । मधु । अधुक्षन् । अद्रिऽभिः । नरः ॥ ० ॥ जुषेथां ।
यज्ञं । इष्टये । सुतं । सोमं । सधस्तुतीइतिसधऽस्तुती । इंद्राग्नीइति ।
आ । गतं । नरा ॥ इमा । जुषेथां । सवना । येभिः । हव्यानि ।
ऊहथुः ॥ ० ॥ इमां । गायत्रऽवर्तनिं । जुषेथां । सुऽस्तुतिं । मम ॥ ० ॥
॥ २० ॥ प्रातर्यावऽभिः । आ । गतं । देवेभिः । जेन्यावसूइति ।
इंद्राग्नीइति । सोमऽपीतये ॥ श्यावऽअश्वस्य । सुन्वतः । अत्रीणां ।
शृणुतं । हवं ॥ ० ॥ एव । वां । अह्वे । ऊतये । यथा । अहुवंत ।
मेधिराः ॥ ० ॥ आ । अहं । सरस्वतीऽवतोः । इंद्राग्न्योः । अवः ।

वृणे । याभ्यां । गायत्रं । ऋच्यते ॥ २१ ॥ अग्निं । अस्तोषि । ऋग्मियं । अग्निं । ईळा । यजध्यै । अग्निः । देवान् । अनक्तु । नः । उभेइति । हि । विदथेइति । कविः । अंतरिति । चरति । दूत्यं । नभंतां । अन्यके । समे ॥ नि । अग्ने । नव्यसा । वचः । तनूषु । शंसं । एषां । नि । अरातीः । रराव्णां । विश्वाः । अर्यः । अरातीः । इतः । युच्छंतु । आऽमुरः ॥ ० ॥ अग्ने । मन्मानि । तुभ्यं । कं । घृतं । न । जुह्वे । आसनि । सः । देवेषु । प्र । चिकिद्धि । त्वं । हि । असि । पूर्व्यः । शिवः । दूतः । विवस्वतः ॥ ० ॥ तत्ऽतत् । अग्निः । वयः । दधे । यथाऽयथा । कृपण्यति । ऊर्जाऽआहुतिः । वसूनां । शं । च । योः । च । मयः । दधे । विश्वस्यै । देवऽहूत्यै ॥ ० ॥ सः । चिकेत । सहीयसा । अग्निः । चित्रेण । कर्मणा । सः । होता । शश्वतीनां । दक्षिणाभिः । अभिऽवृतः । इनोति । च । प्रतीव्यं ॥ ० ॥ २२ ॥ अग्निः । जाता । देवानां । अग्निः । वेद । मर्तानां । अपीच्यं । अग्निः । सः । द्रविणःऽदाः । अग्निः । द्वारा । वि । ऊर्णुते । सुऽआहुतः । नवीयसा ॥ ० ॥ अग्निः । देवेषु । संऽवसुः । सः । विक्षु । यज्ञियासु । आ । सः । मुदा । काव्या । पुरु । विश्वं । भूमऽइव । पुष्यति । देवः । देवेषु । यज्ञियः ॥ ० ॥ यः । अग्निः । सप्तऽमानुषः । श्रितः । विश्वेषु । सिंधुषु । तं । आ । अगन्म । त्रिऽपस्त्यं । मंधातुः । दस्युहन्ऽतमं । अग्निं । यज्ञेषु । पूर्व्यं ॥ ० ॥ अग्निः । त्रीणि । त्रिऽधातूनि । आ । क्षेति । विदथा । कविः । सः । त्रीन् । एकादशान् । इह । यक्षत् । च । पिप्रयत् । च । नः । विप्रः । दूतः । परिऽकृतः ॥ ० ॥ त्वं । नः । अग्ने । आयुषु । त्वं । देवेषु । पूर्व्य । वस्वः । एकः । इरज्यसि । त्वां । आपः । परिऽस्रुतः । परि । यंति । स्वऽसेतवः ॥ ० ॥ २३ ॥ इंद्राग्नीइति । युवं । सु । नः । सहंता । दासथः । रयिं । येन । दृळ्हा । समत्ऽसु । आ । वीळु । चित् । सहिषीमहि । अग्निः । वनाऽइव । वाते । इत् ॥ ० ॥ नहि । वां । वव्रयामहे । अथ । इंद्रं ।

इत् । यजामहे । शविष्ठं । नृणां । नरं । सः । नः । कदा । चित् ।
अर्वता । गमत् । आ । वाजऽसातये । गमत् । आ । मेधऽसातये ॥ ० ॥
ता । हि । मध्यं । भराणां । इंद्राग्नीइति । अधिऽक्षितः । तौ ।
ऊँइति । कविऽत्वना । कवीइति । पृच्छ्यमाना । सखिऽयते । सं ।
धीतं । अश्नुतं । नरा ॥ ० ॥ अभि । अर्च । नभाकऽवत् । इंद्राग्नीइति ।
यजसा । गिरा । ययोः । विश्वं । इदं । जगत् । इयं । द्यौः । पृथिवी ।
महि । उपऽस्थे । बिभृतः । वसु ॥ ० ॥ प्र । ब्रह्माणि । नभाकऽवत् ।
इंद्राग्निऽभ्यां । इरज्यत । या । सप्तऽबुध्नं । अर्णवं । जिह्मऽवारं ।
अपऽऊर्णुतः । इंद्रः । ईशानः । ओजसा ॥ ० ॥ अपि । वृश्च ।
पुराणऽवत् । व्रततेःऽइव । गुष्पितं । ओजः । दासस्य । दंभय । वयं ।
तत् । अस्य । संऽभृतं । वसु । इंद्रेण । वि । भजेमहि ॥ ० ॥ २४ ॥ यत् ।
इंद्राग्नीइति । जनाः । इमे । विऽह्वयंते । तना । गिरा । अस्माकेभिः ।
नृऽभिः । वयं । ससह्याम । पृतन्यतः । वनुयाम । वनुष्यतः ॥ ० ॥
या । नु । श्वेतौ । अवः । दिवः । उत्ऽचरातः । उप । द्युऽभिः ।
इंद्राग्न्योः । अनु । व्रतं । उहानाः । यंति । सिंधवः । यान् ।
सीं । बंधात् । अमुंचतां ॥ ० ॥ पूर्वीः । ते । इंद्र । उपऽ-
मातयः । पूर्वीः । उत । प्रऽशस्तयः । सूनोइति । हिन्वस्य ।
हरिऽवः । वस्वः । वीरस्य । आऽपृचः । याः । नु । साधंत । नः ।
धियः ॥ ० ॥ तं । शिशीत । सुवृक्तिऽभिः । त्वेषं । सत्वानं ।
ऋग्मियं । उतोइति । नु । चित् । यः । ओजसा । शुष्णस्य ।
आंडानि । भेदति । जेषत् । स्वःऽवतीः । अपः ॥ ० ॥ तं । शिशीत ।
सुऽअध्वरं । सत्यं । सत्वानं । ऋत्वियं ॥ ० ॥ ओहते । आंडा ।
शुष्णस्य । भेदति । अजैः । स्वःऽवतीः । अपः ॥ ० ॥ एव ।
इंद्राग्निऽभ्यां । पितृऽवत् । नवीयः । मंधातृऽवत् । अंगिरस्वत् ।
अवाचि । त्रिऽधातुना । शर्मणा । पातं । अस्मान् ॥ ० ॥ २५ ॥
अस्मै । ऊँइति । सु । प्रऽभृतये । वरुणाय । मरुत्ऽभ्यः । अर्च ।

विदुःऽतरेभ्यः । यः । धीता । मानुषाणां । पश्वः । गाःऽइव । रक्षति ॥ ० ॥ तं । ऊँइति । सु । समना । गिरा । पितॄणां । च । मन्मऽभिः । नाभाकस्य । प्रशस्तिऽभिः । यः । सिंधूनां । उप । उत्ऽअये । सप्तऽस्वसा । सः । मध्यमः ॥ ० ॥ सः । क्षपः । परि । सस्वजे । नि । उस्रः । मायया । दधे । सः । विश्वं । परि । दर्शतः । तस्य । वेनीः । अनु । व्रतं । उषः । तिस्रः । अवर्धयन् ॥ ० ॥ यः । ककुभः । निऽधारयः । पृथिव्यां । अधि । दर्शतः । सः । माता । पूर्व्यं । पदं । तत् । वरुणस्य । सप्त्यं । सः । हि । गोपाःऽइव । इर्यः ॥ ० ॥ यः । धर्ता । भुवनानां । यः । उस्राणां । अपीच्या । वेद । नामानि । गुह्या । सः । कविः । काव्या । पुरु । रूपं । द्यौःऽइव । पुष्यति ॥ ० ॥ २६ ॥ यस्मिन् । विश्वानि । काव्या । चक्रे । नाभिःऽइव । श्रिता । त्रितं । जूती । सपर्यत । व्रजे । गावः । न । संऽयुजे । युजे । अश्वान् । अयुक्षत ॥ ० ॥ यः । आसु । अत्कः । आऽशये । विश्वा । जातानि । एषां । परि । धामानि । मर्मृशत् । वरुणस्य । पुरः । गये । विश्वे । देवाः । अनु । व्रतं ॥ ० ॥ सः । समुद्रः । अपीच्यः । तुरः । द्यांऽइव । रोहति । नि । यत् । आसु । यजुः । दधे । सः । मायाः । अर्चिना । पदा । अस्तृणात् । नाकं । आ । अरुहत् ॥ ० ॥ यस्य । श्वेता । विऽचक्षणा । तिस्रः । भूमीः । अधिऽक्षितः ॥ त्रिः । उत्ऽतराणि । पप्रतुः । वरुणस्य । ध्रुवं । सदः । सः । सप्तानां । इरज्यति ॥ ० ॥ यः । श्वेतान् । अधिऽनिर्निजः । चक्रे । कृष्णान् । अनु । व्रता । सः । धाम । पूर्व्यं । ममे । यः । स्कंभेन । वि । रोदसीइति । अजः । न । द्यां । अधारयत् ॥ ० ॥ ॥ २७ ॥ अस्तभ्नात् । द्यां । असुरः । विश्वऽवेदाः । अमिमीत । वरिमाणं । पृथिव्याः । आ । असीदत् । विश्वा । भुवनानि । संऽराट् । विश्वा । इत् । तानि । वरुणस्य । व्रतानि ॥ एव । वंदस्व । वरुणं । बृहंतं । नमस्य । धीरं । अमृतस्य । गोपां । सः । नः । शर्म । त्रिऽ-

वरूथं । वि । यंसत् । पातं । नः । द्यावापृथिवीइति । उपऽस्थे ॥ इमां ।
धियं । शिक्षमाणस्य । देव । क्रतुं । दक्षं । वरुण । सं । शिशाधि ।
यया । अति । विश्वा । दुःऽइता । तरेम । सुऽतर्माणं । अधि । नावं ।
रुहेम । आ । वां । ग्रावाणः । अश्विना । धीभिः । विप्राः । अचुच्यवुः ॥
नासत्या । सोमऽपीतये ॥ ० ॥ यथा । वां । अत्रिः । अश्विना । गीःऽ-
भिः । विप्रः । अजोहवीत् ॥ ० ॥ २८ ॥ इति पञ्चमोनुवाकः ॥ –::– ॥
इमे । विप्रस्य । वेधसः । अग्नेः । अस्तृतऽयज्वनः । गिरः । स्तोमासः ।
ईरते ॥ अस्मै । ते । प्रतिऽहर्यते । जातऽवेदः । विऽचर्षणे ।
अग्ने । जनामि । सुऽस्तुतिं ॥ आरोकाःऽइव । घ । इत् । अह ।
तिग्माः । अग्ने । तव । त्विषः । दत्ऽभिः । वनानि । बप्सति ॥
हरयः । धूमऽकेतवः । वातऽजूताः । उप । द्यवि । यतते ।
वृथक् । अग्नयः ॥ एते । त्ये । वृथक् । अग्नयः । इद्धासः ।
सं । अदृक्षत । उषसांऽइव । केतवः ॥ २९ ॥ कृष्णा । रजांसि ।
पत्सुतः । प्रऽयाने । जातऽवेदसः । अग्निः । यत् । रोधति ।
क्षमि ॥ धासिं । कृण्वानः । ओषधीः । बप्सत् । अग्निः । न । वायति ।
पुनः । यन् । तरुणीः । अपि ॥ जिह्वाभिः । अह । नंनमत् । अर्चिषा ।
जंजणाऽभवन् । अग्निः । वनेषु । रोचते ॥ अप्ऽसु । अग्ने । सधिः ।
तव । सः । ओषधीः । अनु । रुध्यसे । गर्भे । सन् । जायसे ।
पुनरिति । उत् । अग्ने । तव । तत् । घृतात् । अर्चिः । रोचते । आऽ-
हुतं । निंसानं । जुह्वः । मुखे ॥ ३० ॥ उक्षऽअन्नाय । वशाऽअन्नाय ।
सोमऽपृष्ठाय । वेधसे । स्तोमैः । विधेम । अग्नये ॥ उत । त्वा ।
नमसा । वयं । होतः । वरेण्यक्रतोइतिवरेण्यऽक्रतो । अग्ने । समित्ऽ-
भिः । ईमहे ॥ उत । त्वा । भृगुऽवत् । शुचे । मनुष्वत् । अग्ने । आऽ-
हुत । अंगिरस्वत् । हवामहे ॥ त्वं । हि । अग्ने । अग्निना । विप्रः ।
विप्रेण । सन् । सता । सखा । सख्या । संऽइध्यसे ॥ सः । त्वं ।
विप्राय । दाशुषे ॥ रयिं । देहि । सहस्रिणं । अग्ने । वीरऽवतीं ।

इषं ॥ ३१ ॥ अग्ने । भ्रातरिति । सहःऽकृत । रोहित्ऽअश्व । शुचिऽव्रता । इमं । स्तोमं । जुषस्व । मे ॥ उत । त्वा । अग्ने । मम । स्तुतः । वाश्राय । प्रतिऽहर्यते । गोऽस्थं । गावःऽइव । आशत ॥ तुभ्यं । ताः । अंगिरःऽतम । विश्वाः । सुऽक्षितयः । पृथक् । अग्ने । कामाय । येमिरे ॥ अग्निं । धीभिः । मनीषिणः । मेधिरासः । विपःऽचितः । अद्मऽसद्याय । हिन्विरे ॥ तं । त्वां । अज्मेषु । वाजिनं । तन्वानाः । अग्ने । अध्वरं । वह्निं । होतारं । ईळते ॥ ३२ ॥ ० ॥ आऽहुतः । अग्निः । विऽभ्राजते । घृतैः । इमं । नः । शृणवत् । हवं ॥ तं । त्वा । वयं । हवामहे । शृण्वंतं । जातऽवेदसं । अग्ने । घ्नंतं । अप । द्विषः ॥ विशां । राजानं । अद्भुतं । अधिऽअक्षं । धर्मणां । इमं । अग्निं । ईळे । सः । ऊँइति । श्रवत् ॥ अग्निं । विश्वायुऽवेपसं । मर्यं । न । वाजिनं । हितं । सप्तिं । न । वाजयामसि ॥ ३३ ॥ घ्नन् । मृध्राणि । अप । द्विषः । दहन् । रक्षांसि । विश्वहा । अग्ने । तिग्मेन । दीदिहि ॥ यं । त्वा । जनासः । इंधते । मनुष्वत् । अंगिरःऽतम । अग्ने । सः । बोधि । मे । वचः ॥ यत् । अग्ने । दिविऽजाः । असि । अप्सुऽजाः । वा । सहःऽकृत । तं । त्वा । गीःऽभिः । हवामहे ॥ तुभ्यं । घ । इत् । ते । जनाः । इमे । विश्वाः । सुऽक्षितयः । पृथक् । धासिं । हिन्वंति । अत्तवे ॥ ० ॥ अहा । विश्वा । नृऽचक्षसः । तरंतः । स्याम । दुःऽगहा ॥ ३४ ॥ अग्निं । मंद्रं । पुरुऽप्रियं । शीरं । पावकऽशोचिषं । हृत्ऽभिः । मंद्रेभिः । ईमहे ॥ सः । त्वं । अग्ने । विभाऽवसुः । सृजन् । सूर्यः । न । रश्मिऽभिः । शर्धन् । तमांसि । जिघ्नसे ॥ तत् । ते । सहस्वः । ईमहे । दात्रं । यत् । न । उपऽदस्यति । त्वत् । अग्ने । वार्यं । वसु ॥ ३५ ॥ संऽइधा । अग्निं । दुवस्यत । घृतैः । बोधयत । अतिथिं । आ । अस्मिन् । हव्या । जुहोतन ॥ अग्ने । स्तोमं । जुषस्व । मे । वर्धस्व । अनेन । मन्मना । प्रति । सुऽउक्तानि । हर्य । नः ॥ अग्निं । दूतं । पुरः । दधे । हव्यऽवाहं । उप । ब्रुवे । देवान् ।

आ । सादयात् । इह ॥ उत् । ते । बृहंतः । अर्चयः । संऽइधानस्य ।
दीदिऽवः । अग्ने । हव्या । जुषस्व । नः ॥ ३६ ॥ मंद्रं । होतारं ।
ऋत्विजं । चित्रऽभानुं । विभाऽवसुं ॥ ० ॥ प्रत्नं । होतारं । ईड्यं ।
जुष्टं । अग्निं । कविऽक्रतुं । अध्वराणां । अभिऽश्रियं ॥ जुषाणः ।
अंगिरःऽतम । इमा । हव्यानि । आनुषक् । अग्ने । यज्ञं । नय । ऋतुऽ-
था ॥ संऽइधानः । ऊँइति । संत्य । शुक्रऽशोचे । इह । आ । वह ।
चिकित्वान् । दैव्यं । जनं ॥ विप्रं । होतारं । अद्रुहं । धूमऽकेतुं ।
विभाऽवसुं । यज्ञानां । केतुं । ईमहे ॥ ३७ ॥ अग्ने । नि । पाहि ।
नः । त्वं । प्रति । स्म । देव । रिषतः । भिंधि । द्वेषः । सहःऽकृत ॥
अग्निः । प्रत्नेन । मन्मना । शुंभानः । तन्वं । स्वां । कविः । विप्रेण ।
ववृधे ॥ ऊर्जः । नपातं । आ । हुवे । अग्निं । पावकऽशोचिषं । अस्मिन् ।
यज्ञे । सुऽअध्वरे ॥ सः । नः । मित्रऽमहः । त्वं । अग्ने । शुक्रेण ।
शोचिषा ॥ ० ॥ यः । अग्निं । तन्वः । दमे । देवं । मर्तः । सपर्यति ।
तस्मै । इत् । दीदयत् । वसु ॥ ३८ ॥ अग्निः । मूर्धा । दिवः । ककुत् ।
पतिः । पृथिव्याः । अयं । अपां । रेतांसि । जिन्वति ॥ उत् । अग्ने ।
शुचयः । तव । शुक्राः । भ्राजंतः । ईरते ॥ तव । ज्योतींषि । अर्चयः ॥
ईशिषे । वार्यस्य । हि । दात्रस्य । अग्ने । स्वःऽपतिः । स्तोता । स्यां ।
तव । शर्मणि ॥ त्वां । अग्ने । मनीषिणः । त्वां । हिन्वंति । चित्तिऽ-
भिः । त्वां । वर्धंतु । नः । गिरः ॥ अदब्धस्य । स्वधाऽवतः । दूतस्य ।
रेभतः । सदा ॥ अग्नेः । सख्यं । वृणीमहे ॥ ३९ ॥ अग्निः । शुचिव्रतऽ-
तमः । शुचिः । विप्रः । शुचिः । कविः । शुचिः । रोचते । आऽहुतः ॥
उत । त्वा । धीतयः । मम । गिरः । वर्धंतु । विश्वहा । अग्ने ।
सख्यस्य । बोधि । नः ॥ यत् । अग्ने । स्यां । अहं । त्वं । त्वं । वा ।
घ । स्याः । अहं । स्युः । ते । सत्याः । इह । आऽशिषः ॥ वसुः ।
वसुऽपतिः । हि । कं । असि । अग्ने । विभाऽवसुः । स्याम । ते ।
सुऽमतौ । अपि ॥ अग्ने । धृतऽव्रताय । ते । समुद्रायऽइव । सिंधवः ।

गिरः । वाश्रासः । ईरते ॥ ४० ॥ युवानं । विश्पतिं । कविं । विश्वऽ-
अदं । पुरुऽवेपसं । अग्निं । शुंभामि । मन्मऽभिः ॥ यज्ञानां । रथ्ये ।
वयं । तिग्मऽजंभाय । वीळवे । स्तोमैः । इषेम । अग्नये ॥ अयं । अग्ने ।
त्वेइति । अपि । जरिता । भूतु । सत्य ॥ ० ॥ धीरः । हि । असि ।
अद्मऽसत् । विप्रः । न । जागृविः । सदा । अग्ने । दीदयसि । द्यवि ॥
पुरा । अग्ने । दुःऽइतेभ्यः । पुरा । मृध्रेभ्यः । कवे । प्र । नः । आयुः ।
वसोइति । तिर ॥ ४१ ॥ आ । घ । ये । अग्निं । इंधते । स्तृणंति ।
बर्हिः । आनुषक् । येषां । इंद्रः । युवा । सखा ॥ बृहन् । इत् । इध्मः ।
एषां । भूरि । शस्तं । पृथुः । स्वरुः ॥ ० ॥ अयुद्धः । इत् । युधा ।
वृतं । शूरः । आ । अजति । सत्वऽभिः ॥ ० ॥ आ । बुंदं । वृत्रऽहा ।
ददे । जातः । पृच्छत् । वि । मातरं । के । उग्राः । के । ह ।
शृण्विरे ॥ प्रति । त्वा । शवसी । वदत् । गिरौ । अप्सः । न ।
योधिषत् । यः । ते । शत्रुऽत्वं । आऽचके ॥ ४२ ॥ उत । त्वं । मघऽ-
वन् । शृणु । यः । ते । वष्टि । ववक्षि । तत् । यत् । वीळयासि । वीळु ।
तत् ॥ यत् । आजिं । याति । आजिऽकृत् । इंद्रः । स्वश्वऽयुः । उप ॥
रथिऽतमः । रथिनां ॥ वि । सु । विश्वाः । अभिऽयुजः । वज्रिन् ।
विष्वक् । यथा । वृह । भव । नः । सुश्रवःऽतमः ॥ अस्माकं । सु ।
रथं । पुरः । इंद्रः । कृणोतु । सातये । न । यं । धूर्वंति । धूर्तयः ॥
वृज्याम । ते । परि । द्विषः । अरं । ते । शक्र । दावने । गमेम ।
इत् । इंद्र । गोऽमतः ॥ ४३ ॥ शनैः । चित् । यंतः । अद्रिऽवः ।
अश्वऽवंतः । शतऽग्विनः । विवक्षणाः । अनेहसः ॥ ऊर्ध्वा । हि ।
ते । दिवेऽदिवे । सहस्रा । सूनृता । शता ॥ जरितृऽभ्यः । विऽमंहते ॥
विद्म । हि । त्वा । धनंऽजयं । इंद्र । दृळहा । चित् । आऽरुजं । आऽ-
दारिणं । यथा । गयं ॥ ककुहं । चित् । त्वा । कवे । मंदंतु । धृष्णोइति ।
इंदवः । आ । त्वा । पणिं । यत् । ईमहे ॥ यः । ते । रेवान् ।
अदाशुरिः । प्रऽममर्ष । मघत्तये । तस्य । नः । वेदः । आ । भर ॥ ४४ ॥

इमे । ऊँइति । त्वा । वि । चक्षते । सखायः । इंद्र । सोमिनः ।
पुष्टऽवंतः । यथा । पशुं ॥ उत । त्वा । अबधिरं । वयं । श्रुतऽकर्णं ।
संतं । ऊतये । दूरात् । इह । हवामहे ॥ यत् । शुश्रुयाः । इमं ।
हवं । दुःऽमर्षं । चक्रियाः । उत । भवेः । आपिः । नः । अंतमः ॥ यत् ।
चित् । हि । ते । अपि । व्यथिः । जगन्वांसः । अमन्महि । गोऽदाः ।
इत् । इंद्र । बोधि । नः ॥ आ । त्वा । रंभं । न । जिव्रयः । ररभ्म ।
शवसः । पते । उश्मसि । त्वा । सधऽस्थे । आ ॥ ४५ ॥ स्तोत्रं ।
इंद्राय । गायत । पुरुऽनृम्णाय । सत्वने । नकिः । यं । वृण्वते ।
युधि ॥ अभि । त्वा । वृषभ । सुते । सुतं । सृजामि । पीतये । तृप ।
वि । अश्नुहि । मदं ॥ मा । त्वा । मूराः । अविष्यवः । मा । उपऽ-
हस्वानः । आ । दभन् । माकीं । ब्रह्मऽद्विषः । वनः ॥ इह । त्वा । गोऽ-
परीणसा । महे । मंदंतु । राधसे । सरः । गौरः । यथा । पिब ॥ या ।
वृत्रऽहा । पराऽवति । सना । नवा । च । चुच्युवे । ता । संसत्ऽसु ।
प्र । वोचत ॥ ४६ ॥ अपिबत् । कद्रुवः । सुतं । इंद्रः । सहस्रऽबाह्वे ।
अत्र । अदेदिष्ट । पौंस्यं ॥ सत्यं । तत् । तुर्वशे । यदौ । विदानः ।
अह्नवाय्यं । वि । आनट् । तुर्वणे । शमि ॥ तरणिं । वः । जनानां ।
त्रदं । वाजस्य । गोऽमतः । समानं । ऊँइति । प्र । शंसिषं ॥ ऋभुक्षणं ।
न । वर्तवे । उक्थेषु । तुग्र्यऽवृधं ॥ ० ॥ यः । कृंतत् । इत् । वि ।
योन्यं । त्रिऽशोकाय । गिरिं । पृथुं । गोभ्यः । गातुं । निःऽएतवे ॥ ४७ ॥
यत् । दधिषे । मनस्यसि । मंदानः । प्र । इत् । इयक्षसि । मा । तत् ।
कः । इंद्र । मृळय ॥ दभ्रं । चित् । हि । त्वाऽवतः । कृतं । शृण्वे ।
अधि । क्षमि । जिगातु । इंद्र । ते । मनः ॥ तव । इत् । ऊँइति ।
ताः । सुऽकीर्तयः । असन् । उत । प्रऽशस्तयः ॥ ० ॥ मा । नः ।
एकस्मिन् । आ । गसि । मा । द्वयोः । उत । त्रिषु । वधीः । मा ।
शूर । भूरिषु ॥ बिभय । हि । त्वाऽवतः । उग्रात् । अभिऽप्रभंगिनः ।
दस्मात् । अहं । ऋतिऽसहः ॥ ४८ ॥ मा । सख्युः । शूनं । आ ।

विद्मे । मा । पुत्रस्य॑ । प्रभुवसोइतिप्रभुऽवसो । आऽवृत्वत् । भुतु । ते । भर्नः ॥ कः । नु । मर्याः । अमिथितः । सखा । सखायं । अब्रवीत् ॥ जहा । कः । अस्मत् । ईषते ॥ एवारे । वृषभ । सुते । असिन्वन् । भूरि । आवयः । श्वघ्नीऽइव । निऽवता । चरन् ॥ आ । ते । एता । वचःऽयुजा । हरीइति । गृभ्णे । सुमत्ऽरथा । यत् । ईं । ब्रह्मऽभ्यः । इत् । ददः ॥ भिंधि । विश्वाः । अप । द्विषः । परि । बाधः । जहि । मृधः । वसु । स्पार्हं । तत् । आ । भर ॥ यत् । वीळौ । इंद्र । यत् । स्थिरे । यत् । पर्शाने । पराऽभृतं ॥ ० ॥ यस्य । ते । विश्वऽमानुषः । भूरेः । दत्तस्य । वेदति ॥ ० ॥ ४९ ॥

इति षष्ठाष्टके तृतीयोध्यायः ॥ ३ ॥





॥ अथ चतुर्थोध्यायः ॥

हरिः ॐ ॥ त्वाऽवंतः । पुरुवसोइतिपुरुऽवसो । वयं । इंद्र । प्रनेतरितिप्रऽनेतः । स्मसि । स्थातः । हरीणां ॥ त्वां । हि । सत्यं । अद्रिऽवः । विद्म । दातारं । इषां । विद्म । दातारं । रयीणां ॥ आ । यस्य । ते । महिमानं । शतंऽऊते । शतक्रतोइतिशतंऽक्रतो । गीःऽभिः । गृणंति । कारवः ॥ सुऽनीथः । घ । सः । मर्त्यः । यं । मरुतः । यं । अर्यमा । मित्रः । पांति । अद्रुहः ॥ दधानः । गोऽमत् । अश्वऽवत् । सुऽवीर्यं । आदित्यऽजूतः । एधते । सदा । राया । पुरुऽस्पृहा ॥ १ ॥ तं । इंद्रं । दानं । ईमहे । शवसानं । अभीर्वं । ईशानं । रायः । ईमहे ॥ तस्मिन् । हि । संति । ऊतयः । विश्वाः । अभीरवः । सचा । तं । आ । वहंतु ।

सप्तयः । पुरुऽवसुं । मदाय । हरयः । सुतं ॥ यः । ते । मदः ।
वरेण्यः । यः । इंद्र । वृत्रहन्ऽतमः ॥ यः । आऽददिः । स्वः । नृऽभिः ।
यः । पृतनासु । दुस्तरः । यः । दुस्तरः । विश्वऽवार । श्रवाय्यः ।
वाजेषु । अस्ति । तरुता ॥ सः । नः । शविष्ठ । सवना । आ ।
वसोइति । गहि । गमेम । गोऽमति । व्रजे । गव्योइति । सु । नः ।
यथा । पुरा । अश्वऽया । उत । रथऽया ॥ वरिवस्य । महाऽमह ॥ २ ॥
नहि । ते । शूर । राधसः । अंतं । विंदामि । सत्रा । दशस्य । नः ।
मघऽवन् । नु । चित् । अद्रिऽवः । धियः । वाजेभिः । आविथ । यः ।
ऋष्वः । श्रवयत्ऽसखा । विश्वा । इत् । सः । वेद । जनिम । पुरुऽ-
स्तुतः । तं । विश्वे । मानुषा । युगा । इंद्रं । हवंते । तविषं । यतऽ-
स्रुचः ॥ सः । नः । वाजेषु । अविता । पुरुऽवसुः । पुरःऽस्थाता ।
मघऽवा । वृत्रऽहा । भुवत् । अभि । वः । वीरं । अंधसः । मदेषु ।
गाय । गिरा । महा । विऽचेतसं ॥ इंद्रं । नाम । श्रुत्यं । शाकिनं ।
वचः । यथा । ददिः । रेक्णः । तन्वे । ददिः । वसु । ददिः । वाजेषु ।
पुरुऽहूत । वाजिनं । नूनं । अथ ॥ ३ ॥ विश्वेषां । इरज्यंतं । वसूनां ।
ससह्वांसं । चित् । अस्य । वर्पसः । कृपऽयतः । नूनं । अति । अथ ॥
महः । सु । वः । अरं । इषे । स्तवामहे । मीळ्हुषे । अरंऽगमाय ।
जग्मये । यज्ञेभिः । गीःऽभिः । विश्वऽमनुषां । मरुतां । इयक्षसि ।
गाये । त्वा । नमसा । गिरा ॥ ये । पातयंते । अज्मऽभिः । गिरीणां ।
स्नुऽभिः । एषां । यज्ञं । महिऽस्वनीनां । सुम्नं । तुविऽस्वनीनां ।
प्र । अध्वरे ॥ प्रऽभंगं । दुःऽमतीनां । इंद्र । शविष्ठ । आ । भर ।
रयिं । अस्मभ्यं । युज्यं । चोदयत्ऽमते । ज्येष्ठं । चोदयत्ऽमते ॥
सनितरिति । सुऽसनितः । उग्र । चित्र । चेतिष्ठ । सूनृत ॥
प्रऽसहा । संऽराट् । सहुरिं । सहंतं । भुज्युं । वाजेषु । पूर्व्यं ॥ ४ ॥
आ । सः । एतु । यः । ईवत् । आ । अदेवः । पूर्तं । आऽ-
ददे । यथा । चित् । वशः । अश्व्यः । पृथुऽश्रवसि । कानीते ।

अस्याः । विऽउर्षि । आऽददे । षष्टिं । सहस्रा । अश्व्यस्य । अयुता । असनं । उष्ट्रानां । विंशतिं । शता ॥ दश । श्यावीनां । शता । दश । त्रिऽअरुषीणां । दश । गवां । सहस्रा । दश । श्यावाः । ऋधत्ऽरयः । वीतऽवारासः । आशवः । मथ्राः । नेमिं । नि । ववृतुः ॥ दानासः । पृथुऽश्रवसः । कानीतस्य । सुऽराधसः । रथं । हिरण्ययं । ददत् । मंहिष्ठः । सूरिः । अभूत् । वर्षिष्ठं । अकृत । श्रवः ॥ आ । नः । वायोइति । महे । तने । याहि । मखाय । पाजसे । वयं । हि । ते । चकृम । भूरि । दावने । सद्यः । चित् । महि । दावने ॥ ५ ॥ यः । अश्वेभिः । वहते । वस्ते । उस्राः । त्रिः । सप्त । सप्ततीनां । एभिः । सोमेभिः । सोमसुत्ऽभिः । सोमऽपाः । दानाय । शुक्रपूतऽपाः ॥ यः । मे । इमं । चित् । ऊँइति । त्मना । अमंदत् । चित्रं । दावने । अरट्वे । अक्षे । नहुषे । सुऽकृत्वनि । सुकृत्ऽतराय । सुऽक्रतुः ॥ उचथ्ये । वपुषि । यः । स्वऽराट् । उत । वायोइति । घृतऽस्नाः । अश्वऽइषितं । रजःऽइषितं । शुनाऽइषितं । प्र । अज्म । तत् । इदं । नु । तत् ॥ अध । प्रियं । इषिराय । षष्टिं । सहस्रा । असनं । अश्वानां । इत् । न । वृष्णयां ॥ गावः । न । यूथं । उप । यंति । वध्रयः । उप । मा । आ । यंति । वध्रयः ॥ अध । यत् । चारथे । गणे । शतं । उष्ट्रान् । अचिक्रदत् । अध । श्वित्नेषु । विंशतिं । शता ॥ शतं । दासे । बल्बूथे । विप्रः । तरुक्षे । आ । ददे । ते । ते । वायोइति । इमे । जनाः । मदंति । इंद्रऽगोपाः । मदंति । देवऽगोपाः ॥ अध । स्या । योषणा । मही । प्रतीची । वशं । अश्व्यं । अधिऽरुक्मा । वि । नीयते ॥ ६ ॥ महि । वः । महतां । अवः । वरुण । मित्र । दाशुषे । यं । आदित्याः । अभि । द्रुहः । रक्षथ । न । ईं । अघं । नशत् । अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ विद । देवाः । अघानां । आदित्यासः । अपऽआकृतिं । पक्षा । वयः । यथा । उपरि । वि । अस्मेइति । शर्म । यच्छत ॥ ७ ॥ वि । अस्मेइति । अधि ।

शर्म । तत् । पक्षा । वयः । न । यंतन । विश्वानि । विश्वऽवेदसः ।
वरूथ्या । मनामहे ॥ ० ॥ यस्मै । अरासत । क्षयं । जीवातुं । च ।
प्रऽचेतसः । मनोः । विश्वस्य । घ । इत् । इमे । आदित्याः ।
रायः । ईशते ॥ ० ॥ परि । नः । वृणजत् । अघा । दुःऽगानि ।
रथ्यः । यथा ॥ ० ॥ आदित्यानां । उत । अवसि ॥ ७ ॥
परिऽह्वृता । इत् । अना । जनः । युष्माऽदत्तस्य । वायति । देवाः ।
अदभ्रं । आश । वः । यं । आदित्याः । अहेतन ॥ ० ॥ न । तं ।
तिग्मं । चन । त्यजः । न । द्रासत् । अभि । तं । गुरु । यस्मै ।
ऊँइति । शर्म । सऽप्रथः । आदित्यासः । अराध्वं ॥ ० ॥ युष्मेइति ।
देवाः । अपि । स्मसि । युध्यन्तःऽइव । वर्मऽसु । यूयं । महः । नः ।
एनसः । यूयं । अर्भात् । उरुष्यत ॥ ० ॥ अदितिः । नः । उरुष्यतु ।
अदितिः । शर्म । यच्छतु । माता । मित्रस्य । रेवतः । अर्यम्णः । वरुणस्य ।
च ॥ ० ॥ यत् । देवाः । शर्म । शरणं । यत् । भद्रं । यत् । अनातुरं ।
त्रिऽधातु । यत् । वरूथ्यं । तत् । अस्मासु । वि । यंतन ॥ ० ॥ ८ ॥
आदित्याः । अव । हि । ख्यत । अधि । कूलात्ऽइव । स्पशः । सुऽ-
तीर्थं । अर्वतः । यथा । अनु । नः । नेषथ । सुऽगं ॥ ० ॥ न । इह ।
भद्रं । रक्षस्विने । न । अवऽयै । न । उपऽयै । उत । गवे । च ।
भद्रं । धेनवे । वीराय । च । श्रवस्यते ॥ ० ॥ यत् । आविः । यत् ।
अपीच्यं । देवासः । अस्ति । दुःऽकृतं । त्रिते । तत् । विश्वं । आप्त्ये ।
आरे । अस्मत् । दधातन ॥ ० ॥ यत् । च । गोषु । दुःऽस्वप्न्यं ।
यत् । च । अस्मेइति । दुहितः । दिवः । त्रिताय । तत् । विभाऽवरि ।
आप्त्याय । परा । वह ॥ ० ॥ निष्कं । वा । घ । कृणवते । स्रजं ।
वा । दुहितः । दिवः । त्रिते । दुःऽस्वप्न्यं । सर्वं । आप्त्ये । परि ।
दद्मसि ॥ ० ॥ ९ ॥ तत्ऽअन्नाय । तत्ऽअपसे । तं । भागं । उपऽ-
सेदुषे । त्रिताय । च । द्विताय । च । उषः । दुःऽस्वप्न्यं । वह ॥ ० ॥
यथा । कलां । यथा । शफं । यथा । ऋणं । संऽनयामसि । एव ।

दुःऽस्वप्न्यं । सर्वं । आप्त्ये । सं । नयामसि ॥ ० ॥ अजैष्म । अद्य । असनाम । च । अभूम । अनागसः । वयं । उषः । यस्मात् । दुःऽस्वप्न्यात् । अभैष्म । अप । तत् । उच्छतु ॥ ० ॥ १० ॥ स्वाद्रोः । अभक्षि । वयसः । सुऽमेधाः । सुऽआध्यः । वरिवोवित्ऽतरस्य । विश्वे । यं । देवाः । उत । मर्त्यासः । मधु । ब्रुवंतः । अभि । संऽचरंति ॥ अंतरिति । च । प्र । अगाः । अदितिः । भवासि । अवऽयाता । हरसः । दैव्यस्य । इंदोइति । इंद्रस्य । सख्यं । जुषाणः । श्रौष्टीऽइव । धुरं । अनु । राये । ऋध्याः ॥ अपाम । सोमं । अमृताः । अभूम । अगन्म । ज्योतिः । अविदाम । देवान् । किं । नूनं । अस्मान् । कृणवत् । अरातिः । किं । ऊँइति । धूर्तिः । अमृत । मर्त्यस्य ॥ शं । नः । भव । हृदे । आ । पीतः । इंदोइति । पिताऽइव । सोम । सूनवे । सुऽशेवः । सखाऽइव । सख्ये । उरुऽशंस । धीरः । प्र । नः । आयुः । जीवसे । सोम । तारीः ॥ इमे । मा । पीताः । यशसः । उरुष्यवः । रथं । न । गावः । सं । अनाह । पर्वऽसु । ते । मा । रक्षंतु । विऽस्रसः । चरित्रात् । उत । मा । स्रामात् । यवयंतु । इंदवः ॥ ११ ॥ अग्निं । न । मा । मथितं । सं । दिदीपः । प्र । चक्षय । कृणुहि । वस्यसः । नः । अथ । हि । ते । मदे । आ । सोम । मन्ये । रेवान्ऽइव । प्र । चर । पुष्टिं । अच्छ ॥ इषिरेण । ते । मनसा । सुतस्य । भक्षीमहि । पित्र्यस्यऽइव । रायः ॥ सोम । राजन् । प्र । नः । आयूंषि । तारीः । अहानिऽइव । सूर्यः । वासराणि ॥ सोम । राजन् । मृळय । नः । स्वस्ति । तव । स्मसि । व्रत्याः । तस्य । विद्धि । अलर्ति । दक्षः । उत । मन्युः । इंदोइति । मा । नः । अर्यः । अनुऽकामं । परा । दाः ॥ त्वं । हि । नः । तन्वः । सोम । गोपाः । गात्रेऽगात्रे । निऽससत्थ । नृऽचक्षाः ॥ यत् । ते । वयं । प्रऽमिनाम । व्रतानि । सः । नः । मृळ । सुऽसखा । देव । वस्यः ॥ ऋदूदरेण । सख्या । सचेय । यः । मा । न । रिष्येत् । हरिऽअश्व । पीतः । अयं । यः । सोमः । नि ।

अधायि । असेइति । तस्मै । इंद्रं । प्रऽतिरं । एमि । आयुः ॥ १२ ॥
अप । त्याः । अस्थुः । अनिराः । अमीवाः । निः । अत्रसन् ।
तमिषीचीः । अभैषुः । आ । सोमः । अस्मान् । अरुहत् । विऽहायाः ।
अगन्म । यत्र । प्रऽतिरंते । आयुः ॥ यः । नः । इंदुः । पितरः ।
हृत्ऽसु । पीतः । अमर्त्यः । मर्त्यान् । आऽविवेश । तस्मै । सोमाय ।
हविषा । विधेम । मृळीके । अस्य । सुऽमतौ । स्याम ॥ त्वं । सोम ।
पितृऽभिः । संऽविदानः । अनु । द्यावापृथिवीइति । आ । ततंथ ।
तस्मै । ते । इंदोइति । हविषा । विधेम ॥ ० ॥ त्रातारः । देवाः ।
अधि । वोचत । नः । मा । नः । निऽद्रा । ईशत । मा । उत ।
जल्पिः । वयं । सोमस्य । विश्वह । प्रियासः । सुऽवीरासः । विदथं ।
आ । वदेम ॥ त्वं । नः । सोम । विश्वतः । वयःऽधाः । त्वं । स्वःऽवित् ।
आ । विश । नृऽचक्षाः । त्वं । नः । इंदोइति । ऊतिऽभिः । सऽजोषाः ।
पाहि । पश्चातात् । उत । वा । पुरस्तात् । अथवालखिल्यं ॥ १३ ॥
अभि । प्र । वः । सुऽराधसं । इंद्रं । अर्च । यथा । विदे । यः ।
जरितृऽभ्यः । मघऽवा । पुरुऽवसुः । सहस्रेणऽइव । शिक्षति ॥
शतानीकाऽइव । प्र । जिगाति । धृष्णुऽया । हंति । वृत्राणि । दाशुषे ।
गिरेःऽइव । प्र । रसाः । अस्य । पिन्विरे । दत्राणि । पुरुऽभोजसः ॥
आ । त्वा । सुतासः । इंदवः । मदाः । ये । इंद्र । गिर्वणः । आपः ।
न । वज्रिन् । अनु । ओक्यं । सरः । पृणंति । शूर । राधसे ॥
अनेहसं । प्रऽतरणं । विवक्षणं । मध्वः । स्वादिष्ठं । ईं । पिब । आ ।
यथा । मंदसानः । किरासि । नः । प्र । क्षुद्राऽइव । त्मना । धृषत् ॥
आ । नः । स्तोमं । उप । द्रवत् । हियानः । अश्वः । न । सोतृऽभिः ।
यं । ते । स्वधाऽवन् । स्वदयंति । धेनवः । इंद्र । कण्वेषु ।
रातयः ॥ १४ ॥ उग्रं । न । वीरं । नमसा । उप । सेदिम । विऽ-
भूतिं । अक्षितऽवसुं । उद्रीऽइव । वज्रिन् । अवतः । न । सिंचते ।
क्षरंति । इंद्र । धीतयः । यत् । हू । नूनं । यत् । वा । यज्ञे । यत् ।

वा । पृथिव्यां । अधि ॥ अतः । नः । यज्ञं । आशुऽभिः । महेऽमते । उग्रः । उग्रेभिः । आ । गहि ॥ अजिरासः । हरयः । ये । ते । आशवः । वाताःऽइव । प्रऽसक्षिणः । येभिः । अपत्यं । मनुषः । परिऽईयसे । येभिः । विश्वं । स्वः । दृशे ॥ एतावतः । ते । ईमहे । इंद्र । सुम्नस्य । गोऽमतः । यथा । प्र । आवः । मघऽवन् । मेध्यऽअतिथिं । यथा । नीपऽअतिथिं । धने । यथा । कण्वे । मघऽवन् । त्रसदस्यवि । यथा । पक्थे । दशऽव्रजे । यथा । गोऽशर्ये । असनोः । ऋजिश्वनि । इंद्र । गोऽमत् । हिरण्यऽवत् ॥ १५ ॥ प्र । सु । श्रुतं । सुऽराधसं । अर्च । शक्रं । अभिष्टये । यः । सुन्वते । स्तुवते । काम्यं । वसु । सहस्रेणऽइव । मंहते ॥ शतऽअनीकाः । हेतयः । अस्य । दुस्तराः । इंद्रस्य । संऽइषः । महीः । गिरिः । न । भुज्मा । मघवत्ऽसु । पिन्वते । यत् । ईं । सुताः । अमंदिषुः ॥ यत् । ईं । सुतासः । इंदवः । अभि । प्रियं । अमंदिषुः । आपः । न । धायि । सवनं । मे । आ । वसोइति । दुघाःऽइव । उप । दाशुषे ॥ अनेहसं । वः । हवमानं । ऊतये । मध्वः । क्षरंति । धीतयः । आ । त्वा । वसोइति । हवमानासः । इंदवः । उप । स्तोत्रेषु । दधिरे ॥ आ । नः । सोमे । सुऽअध्वरे । इयानः । अत्यः । न । तोशते । यं । ते । स्वदाऽवन् । स्वदंति । गूर्तयः । पौरे । छंदयसे । हवं ॥ १६ ॥ प्र । वीरं । उग्रं । विविचिं । धनऽस्पृतं । विऽभूतिं । राधसः । महः ॥ ० ॥ वसुऽत्वना । सदा । पीपेथ । दाशुषे ॥ ० ॥ पराऽवति ॥ ० ॥ दिवि । युजानः । इंद्र । हरिऽभिः । महेऽमते । ऋष्वः । ऋष्वेभिः । आ । गहि ॥ रथिरासः ॥ ० ॥ अस्त्रिधः । ओजः । वातस्य । पिप्रति । येभिः । नि । दस्युं । मनुषः । निऽघोषयः । येभिः । स्वः१रितिस्वः । परिऽईयसे ॥ एतावतः । ते । वसोइति । विद्याम । शूर । नव्यसः ॥ ० ॥ एतशं । कृत्व्ये । धने । यथा । वशं । दशऽव्रजे ॥ ० ॥ मेध्ये । अध्वरे । दीर्घऽनीथे । दमूनसि । यथा । गोऽशर्ये । असिसासः ।

अद्रिऽवः । मयि । गोत्रं । हरिऽश्रियं ॥ १७ ॥ यथा । मनौ । सांऽवरणौ । सोमं । इंद्र । अपिबः । सुतं । नीपऽअतिथौ । मघऽवन् । मेध्यऽअतिथौ । पुष्टिऽगौ । श्रुष्टिऽगौ । सचा ॥ पार्षद्वाणः । प्रस्कण्वं । सं । असादयत् । शयानं । जिव्रिं । उद्धितं । सहस्राणि । असिसासत् । गवां । ऋषिः । त्वाऽऊतः । दस्यवे । वृकः ॥ यः । उक्थेभिः । न । विंधते । चिकित् । यः । ऋषिऽचोदनः । इंद्रं । तं । अच्छ । वद । नव्यस्या । मती । अरिष्यंतं । न । भोजसे ॥ यस्मै । अर्कं । सप्तऽशीर्षाणं । आनृचुः । त्रिऽधातुं । उत्ऽतमे । पदे । सः । तु । इमा । विश्वा । भुवनानि । चिक्रदत् । आत् । इत् । जनिष्ट । पौंस्यं ॥ यः । नः । दाता । वसूनां । इंद्रं । तं । हूमहे । वयं । विद्म । हि । अस्य । सुऽमतिं । नवीयसीं । गमेम । गोऽमति । व्रजे ॥ १८ ॥ यस्मै । त्वं । वसोइति । दानाय । शिक्षसि । सः । रायः । पोषं । अश्नुते । तं । त्वा । वयं । मघऽवन् । इंद्र । गिर्वणः । सुतऽवंतः । हवामहे ॥ कदा । चन । स्तरीः । असि । न । इंद्र । सश्चसि । दाशुषे । उपऽउप । इत् । नु । मघऽवन् । भूयः । इत् । नु । ते । दानं । देवस्य । पृच्यते ॥ प्र । यः । ननक्षे । अभि । ओजसा । क्रिविं । वधैः । शुष्णं । निऽघोशयन् । यदा । इत् । अस्तंभीत् । प्रथयन् । अमूं । दिवं । आत् । इत् । जनिष्ट । पार्थिवः ॥ यस्य । अयं । विश्वः । आर्यः । दासः । शेवधिऽपाः । अरिः । तिरः । चित् । अर्ये । रुशमे । पवीरवि । तुभ्यं । इत् । सः । अज्यते । रयिः ॥ तुरण्यवः । मधुऽमंतं । घृतऽश्चुतं । विप्रासः । अर्कं । आनृचुः ॥ अस्मेइति । रयिः । पप्रथे । वृष्ण्यं । शवः । अस्मेइति । सुवानासः । इंदवः ॥ १९ ॥ यथा । मनौ । विवस्वति । सोमं । शक्र । अपिबः । सुतं । यथा । त्रिते । छंदः । इंद्र । जुजोषसि । आयौ । मादयसे । सचा ॥ पृषध्रे । मेध्ये । मातरिश्वनि । इंद्र । सुवाने । अमंदथाः । यथा । सोमं । दशऽशिप्रे । दशऽओण्ये । स्यूमऽरश्मौ । ऋजूनसि ॥ यः । उक्था । केवला ।

दधे । यः । सोमं । धृषिता । अपिबत् । यस्मै । विष्णुः । त्रीणि । पदा । विऽचक्रमे । उप । मित्रस्य । धर्मऽभिः ॥ यस्य । त्वं । इंद्र । स्तोमेषु । चाकनः । वाजे । वाजिन् । शतक्रतोइतिशतऽक्रतो ॥ ० ॥ सुदुघांऽइव । गोऽदुहः । जुहूमसि । श्रवस्यवः ॥ ० ॥ सः । नः । पिता । महान् । उग्रः । ईशानऽकृत् । अयामन् । उग्रः । मघऽवा । पुरुऽवसुः । गोः । अश्वस्य । प्र । दातु । नः ॥ २० ॥ ० ॥ मंहसे ॥ ० ॥ इन्वति । वसुऽयवः । वसुऽपतिं । शतऽक्रतुं । स्तोमैः । इंद्रं । हवामहे । कदा । चन । प्र । युच्छसि । उभेइति । नि । पासि । जन्मनीइति । तुरीय । आदित्य । हवनं । ते । इंद्रियं । आ । तस्थौ । अमृतं । दिवि ॥ यस्मै । त्वं । मघऽवन् । इंद्र । गिर्वणः । शिक्षोइति । शिक्षसि । दाशुषे । अस्माकं । गिरः । उत । सुऽस्तुतिं । वसोइति । कण्वऽवत् । शृणुधि । हवं ॥ अस्तावि । मन्म । पूर्व्यं । ब्रह्म । इंद्राय । वोचत । पूर्वीः । ऋतस्य । बृहतीः । अनूषत । स्तोतुः । मेधाः । असृक्षत ॥ सं । इंद्रः । रायः । बृहतीः । अधूनुत । सं । क्षोणीइति । सं । ऊँइति । सूर्यं । सं । शुक्रासः । शुचयः । सं । गोऽआशिरः । सोमाः । इंद्रं । अमंदिषुः ॥ २१ ॥ उपऽमं । त्वा । मघोनां । ज्येष्ठं । च । वृषभाणां । पूर्भित्ऽतमं । मघऽवन् । इंद्र । गोऽविदं । ईशानं । रायः । ईमहे ॥ यः । आयुं । कुत्सं । अतिथिऽग्वं । अर्दयः । ववृधानः । दिवेऽदिवे ॥ ० ॥ हरिऽअश्वं । शतऽक्रतुं । वाजऽयंतः । हवामहे ॥ आ । नः । विश्वेषां । रसं । मध्वः । सिंचंतु । अद्रयः । ये । पराऽवति । सुन्विरे । जनेषु । आ । ये । अर्वाऽवति । इंदवः ॥ विश्वा । द्वेषांसि । जहि । च । अव । च । आ । कृधि । विश्वे । सन्वंतु । आ । वसु । शीर्ष्टेषु । चित् । ते । मदिरासः । अंशवः । यत्र । सोमस्य । तृंपसि ॥ २२ ॥ इंद्र । नेदीयः । आ । इत् । इहि । मितऽमेधाभिः । ऊतिऽभिः । आ । शंऽतम । शंऽतमाभिः । अभिष्टिऽभिः । आ । सुऽआपे । स्वापिऽभिः ॥ आजिऽतुरं । सत्ऽपतिं ।

विश्वऽचर्षणिं । कृधि । प्रऽजासु । आऽभगं । प्र । सु । तिर । शचीभिः । ये । ते । उक्थिनः । क्रतुं । पुनते । आनुषक् ॥ यः । ते । साधिष्ठः । अवसे । ते । स्याम । भरेषु । ते । वयं । होत्राभिः । उत । देवहूतिऽभिः । ससऽवांसः । मनामहे ॥ अहं । हि । ते । हरिऽवः । ब्रह्म । वाजऽयुः । आजिं । यामि । सदा । ऊतिऽभिः । त्वां । इत् । एव । तं । अमे । सं । अश्वऽयुः । गव्युः । अग्रे । मथीनां ॥ २३ ॥ एतत् । ते । इंद्र । वीर्यं । गीःऽभिः । गृणंति । कारवः । ते । स्तोभंतः । ऊर्जं । आवन् । घृतऽश्चुतं । पौरासः । नक्षन् । धीतिऽभिः ॥ नक्षंते । इंद्रं । अवसे । सुऽकृत्यया । येषां । सुतेषु । मंदसे । यथा । संऽवर्ते । अमदः । यथा । कृशे । एव । अस्मेइति । इंद्र । मत्स्व ॥ आ । नः । विश्वे । सऽजोषसः । देवासः । गंतन । उप । नः ॥ वसवः । रुद्राः । अवसे । नः । आ । गमन् । शृण्वंतु । मरुतः । हवं ॥ पूषा । विष्णुः । हवनं । मे । सरस्वती । अवंतु । सप्त । सिंधवः । आपः । वातः । पर्वतासः । वनस्पतिः । शृणोतु । पृथिवी । हवं ॥ २४ ॥ यत् । इंद्र । राधः । अस्ति । ते । माघोनं । मघवत्ऽतम । तेन । नः । बोधि । सधऽमाद्यः । वृधे । भगः । दानाय । वृत्रऽहन् ॥ आजिऽपते । नृऽपते । त्वं । इत् । हि । नः । वाजे । आ । वक्षि । सुक्रतोइतिसुऽक्रतो । वीती । होत्राभिः । उत । देववीतिऽभिः । ससऽवांसः । वि । शृण्विरे ॥ संति । हि । अर्ये । आऽशिषः । इंद्रे । आयुः । जनानां । अस्मान् । नक्षस्व । मघऽवन् । उप । अवसे । धुक्षस्व । पिप्युषीं । इषं ॥ वयं । ते । इंद्र । स्तोमेभिः । विधेम । त्वं । अस्माकं । शतक्रतोइतिशतऽक्रतो । महि । स्थूरं । शशयं । राधः । अह्रयं । प्रस्कण्वाय । नि । तोशय ॥ २५ ॥ भूरि । इत् । इंद्रस्य । वीर्यं । वि । अख्यं । अभि । आ । अयति । राधः । ते । दस्यवे । वृक ॥ शतं । श्वेतासः । उक्षणः । दिवि । तारः । न । रोचंते । मह्ना । दिवं । न । तस्तभुः ॥ शतं । वेणून् । शतं । शुनः । शतं । चर्माणि । म्लातानि । शतं । मे । बल्बजऽस्तुकाः ।

अरुषीणां । चतुःऽशतं ॥ सुऽदेवाः । स्थ । काण्वायनाः । वयःऽवयः । विऽचरंतः । अश्वासः । न । चंक्रमत ॥ आत् । इत् । साप्तस्य । चर्किरन् । न । अनूनस्य । महि । श्रवः । श्यावीः । अतिऽध्वसन् । पथः । चक्षुषा । चन । संऽनशे ॥ २६ ॥ प्रति । ते । दस्यवे । वृक । राधः । अदर्शि । अह्रयं । द्यौः । न । प्रथिना । शवः ॥ दश । मह्यं । पौतऽक्रतः । सहस्रा । दस्यवे । वृकः । नित्यात् । रायः । अमंहत ॥ शतं । मे । गर्दभानां । शतं । ऊर्णाऽवतीनां । शतं । दासान् । अति । स्रजः ॥ तत्रोइति । अपि । प्र । अनीयत । पूतऽक्रतायै । विऽअक्ता । अश्वानां । इत् । न । यूथ्यां ॥ अचेति । अग्निः । चिकितुः । हव्यऽवाट् । सः । सुमत्ऽरथः । अग्निः । शुक्रेण । शोचिषा । बृहत् । सूरः । अरोचत । दिवि । सूर्यः । अरोचत ॥ २७ ॥ युवं । देवा । क्रतुना । पूर्व्येण । युक्ताः । रथेन । तविषं । यजत्रा । आ । अगच्छतं । नासत्या । शचीभिः । इदं । तृतीयं । सवनं । पिबाथः ॥ युवां । देवाः । त्रयः । एकादशासः । सत्याः । सत्यस्य । ददृशे । पुरस्तात् । अस्माकं । यज्ञं । सवनं । जुषाणा । पातं । सोमं । अश्विना । दीद्यग्नीइतिदीदिऽअग्नी । पनाय्यं । तत् । अश्विना । कृतं । वां । वृषभः । दिवः । रजसः । पृथिव्याः ॥ सहस्रं । शंसाः । उत । ये । गोऽइष्टौ । सर्वान् । इत् । तान् । उप । यात । पिबध्यै ॥ अयं । वां । भागः । निऽहितः । यजत्रा । इमाः । गिरः । नासत्या । उप । यातं ॥ पिबतं । सोमं । मधुऽमंतं । अस्मेइति । प्र । दाश्वांसं । अवतं । शचीभिः ॥ २८ ॥ यं । ऋत्विजः । बहुधा । कल्पयंतः । सऽचेतसः । यज्ञं । इमं । वहंति । यः । अनूचानः । ब्राह्मणः । युक्तः । आसीत् । का । स्वित् । तत्र । यजमानस्य । संऽवित् ॥ एकः । एव । अग्निः । बहुधा । संऽइद्धः । एकः । सूर्यः । विश्वं । अनु । प्रऽभूतः । एका । एव । उषाः । सर्वं । इदं । वि । भाति । एकं । वै । इदं । वि । बभूव । सर्वं ॥ ज्योतिष्मंतं । केतुऽमंतं । त्रिऽचक्रं । सुऽखं । रथं । सुऽसदं । भूरिऽवारं । चित्रऽमघा ।

यस्यं । योगे । अधिऽजज्ञे । तं । वां । हुवे । अति । रिक्तं । पिबध्यै ॥ २९ ॥ इमानि । वां ॥ भागऽधेयानि । सिस्रते । इंद्रावरुणा । प्र । महे । सुतेषु । वां । यज्ञेऽयंज्ञे । ह । सवना । भुरण्यथः । यत् । सुन्वते । यजमानाय । शिक्षथः ॥ निःऽसिध्वरीः । ओषधीः । आपः । आस्तां । इंद्रावरुणा । महिमानं । आशत । या । सिस्रतुः । रजसः । पारे । अध्वनः । ययोः । शत्रुः । नकिः । अदेवः । ओहते ॥ सत्यं । तत् । इंद्रावरुणा । कृशस्य । वां । मध्वः । ऊर्मिं । दुहते । सप्त । वाणीः । ताभिः । दश्वांसं । अवतं । शुभः । पतीइति । यः । वां । अदब्धः । ऊभि । पाति । चित्तिऽभिः ॥ घृतऽप्रुषः । सौम्याः । जीरऽदानवः । सप्त । स्वसारः । सदने । ऋतस्य । याः । ह । वां । इंद्रावरुणा । घृतऽश्चुतः । ताभिः । धत्तं । यजमानाय । शिक्षतं ॥ ३० ॥ अवोचाम । महते । सौभगाय । सत्यं । त्वेषाभ्यां । महिमानं । इंद्रियं । अस्मान् । सु । इंद्रावरुणा । घृतऽश्चुतः । त्रिऽभिः । साप्तेभिः । अवतं । शुभः । पतीइति ॥ इंद्रावरुणा । यत् । ऋषिऽभ्यः । मनीषां । वाचः । मतिं । श्रुतं । अदत्तं । अग्रे । यानि । स्थानानि । असृजंत । धीराः । यज्ञं । तन्वानाः । तपसा । अभि । अपश्यं ॥ इंद्रावरुणा । सौमनसं । अदृप्तं । रायः । पोषं । यजमानेषु । धत्तं । प्रऽजां । पुष्टिं । भूतिं । अस्मासु । धत्तं । दीर्घायुऽत्वाय । प्र । तिरतं । नः । आयुः ॥ ३१ ॥

इति षष्ठोनुवाकः ॥ — :: — ॥ अग्ने । आ । याहि । अग्निऽभिः । होतारं । त्वा । वृणीमहे । आ । त्वां । अनक्तु । प्रऽयता । हविष्मती । यजिष्ठं । बर्हिः । आऽसदे ॥ अच्छ । हि । त्वा । सहसः । सूनोइति । अंगिरः । स्रुचः । चरंति । अध्वरे । ऊर्जः । नपातं । घृतऽकेशं । ईमहे । अग्निं । यज्ञेषु । पूर्व्यं ॥ अग्ने । कविः । वेधाः । असि । होता । पावक । यक्ष्यः । मंद्रः । यजिष्ठः । अध्वरेषु । ईड्यः । विप्रेभिः । शुक्र । मन्मऽभिः ॥ अद्रोघं । आ । वह । उशतः । यविष्ठ्य । देवान् । अजस्र । वीतये । अभि । प्रयांसि । सुऽधिता । आ ।

वसोइति । गहि । मंदस्व । धीतिऽभिः । हितः ॥ त्वं । इत् । सऽप्रथाः । असि । अग्ने । त्रातः । ऋतः । कविः । त्वां । विप्रासः । संऽइधान । दीदिऽवः । आ । विवासंति । वेधसः ॥ ३२ ॥ शोच । शोचिष्ठ । दीदिहि । विशे । मयः । रास्व । स्तोत्रे । महान् । असि । देवानां । शर्मन् । मम । संतु । सूरयः । शत्रुऽसहः । सुऽअग्नयः ॥ यथा । चित् । वृद्धं । अतसं । अग्ने । संऽजूर्वसि । क्षमि । एव । दह । मित्रऽमहः । यः । अस्मऽध्रुक् । दुःऽमन्मा । कः । च । वेनति ॥ मा । नः । मर्ताय । रिपवे । रक्षस्विने । मा । अघऽशंसाय । रीरधः । अस्रेधत्ऽभिः । तरणिऽभिः । यविष्ठ्य । शिवेभिः । पाहि । पायुऽभिः ॥ पाहि । नः । अग्ने । एकया । पाहि । उत । द्वितीयया । पाहि । गीःऽभिः । तिसृऽभिः । ऊर्जां । पते । पाहि । चतसृऽभिः । वसोइति ॥ पाहि । विश्वस्मात् । रक्षसः । अराव्णः । प्र । स्म । वाजेषु । नः । अव । त्वां । इत् । हि । नेदिष्ठं । देवऽतातये । आपिं । नक्षामहे । वृधे ॥ ३३ ॥ आ । नः । अग्ने । वयःऽवृधं । रयिं । पावक । शंस्यं । रास्व । च । नः । उपऽमाते । पुरुऽस्पृहं । सुऽनीती । स्वयशःऽतरं ॥ येन । वंसाम पृतनासु । शर्धतः । तरंतः । अर्यः । आऽदिशः । सः । त्वं । नः । वर्ध । प्रयसा । शचीवसोइतिशचीऽवसो । जिन्व । धियः । वसुऽविदः ॥ शिशानः । वृषभः । यथा । अग्निः । शृंगेइति । दविध्वत् । तिग्माः । अस्य । हनवः । न । प्रतिऽधृषे । सुऽजंभः । सहसः । यहुः ॥ नहि । ते । अग्ने । वृषभ । प्रतिऽधृषे । जंभासः । यत् । विऽतिष्ठसे ॥ ० ॥ होतरिति । सुऽहुतं । हविः । कृधि । वंस्व । नः । वार्या । पुरु ॥ सेषे । वनेषु । मात्रोः । सं । त्वा । मर्तासः । इंधते ॥ अतंद्रः । हव्या । वहसि । हविःऽकृतः । आत् । इत् । देवेषु । राजसि ॥ ३४ ॥ सप्त । होतारः । तं । इत् । ईळते । त्वा । अग्ने । सुऽत्यजं । अह्रयं ॥ भिनत्सि । अद्रिं । तपसा । वि । शोचिषा । प्र । अग्ने । तिष्ठ । जनान् । अति ॥ अग्निंऽअग्निं । वः । अध्रिऽगुं । हुवेम ।

वृक्तऽबर्हिषः ॥ अग्निं । हितऽप्रयसः । शश्वतीषु । आ । होतारं । चर्षणीनां ॥ केतेन । शर्मन् । सचते । सुऽसामनि । अग्ने । तुभ्यं । चिकित्वना ॥ इषण्यया । नः । पुरुऽरूपं । आ । भर । वाजं । नेदिष्ठं । ऊतये ॥ अग्ने । जरितः । विश्पतिः । तेपानः । देव । रक्षसः । अप्रोषिऽवान् । गृहऽपतिः । महान् । असि । दिवः । पायुः । दुरोणऽयुः ॥ मा । नः । रक्षः । आ । वेशीत् । आघृणिवसोइत्याघृणिऽवसो । मा । यातुः । यातुऽमावतां ॥ परःऽगव्यूति । अनिरां । अप । क्षुधं । अग्ने । सेध । रक्षस्विनः ॥ ३५ ॥ उभयं । शृणवत् । च । नः । इंद्रः । अर्वाक् । इदं । वचः । सत्राच्या । मघऽवा । सोमऽपीतये । धिया । शविष्ठः । आ । गमत् ॥ तं । हि । स्वऽराजं । वृषभं । तं । ओजसे । धिषणेइति । निःऽततक्षतुः । उत । उपऽमानां । प्रथमः । नि । सीदसि । सोमऽकामं । हि । ते । मनः ॥ आ । वृषस्व । पुरुवसोइतिपुरुऽवसो । सुतस्य । इंद्र । अंधसः । विद्म । हि । त्वा । हरिऽवः । पृत्ऽसु । ससहिं । अधृष्टं । चित् । दधृष्वणिं ॥ अप्रामिऽसत्य । मघऽवन् । तथा । इत् । असत् । इंद्र । क्रत्वा । यथा । वशः । सनेम । वाजं । तव । शिप्रिन् । अवसा । मक्षु । चित् । यंतः । अद्रिऽवः ॥ शग्धि । ऊइति । सु । शचीऽपते । इंद्र । विश्वाभिः । ऊतिऽभिः । भगं । न । हि । त्वा । यशसं । वसुऽविदं । अनु । शूर । चरामसि ॥ ३६ ॥ पौरः । अश्वस्य । पुरुऽकृत् । गवां । असि । उत्सः । देव । हिरण्ययः । नकिः । हि । दानं । परिऽमर्धिषत् । त्वेइति । यत्ऽयत् । यामि । तत् । आ । भर ॥ त्वं । हि । आ । इहि । चेरवे । विदाः । भगं । वसुत्तये । उत् । ववृषस्व । मघऽवन् । गोऽइष्टये । उत् । इंद्र । अश्वऽइष्टये ॥ त्वं । पुरु । सहस्राणि । शतानि । च । यूथा । दानाय । मंहसे । आ । पुरंऽदरं । चकृम । विप्रऽवचसः । इंद्रं । गायंतः । अवसे ॥ अविप्रः । वा । यत् । अविधत् । विप्रः । वा । इंद्र । ते । वचः । सः । प्र । ममंदत् । त्वाऽया । शतक्रतोइतिशतऽक्रतो ।

प्राचामन्योइतिप्राचाऽमन्यो । अहंऽसन ॥ उग्रऽबाहुः । म्रक्षऽकृत्वा । पुरंऽदरः । यदि । मे । शृणवत् । हवं । वसुऽयवः । वसुऽपतिं । शतऽक्रतुं । स्तोमैः । इंद्रं । हवामहे ॥ ३७ ॥ न । पापासः । मनामहे । न । अरायासः । न । जल्हवः । यत् । इत् । नु । इंद्रं । वृषणं । सचा । सुते । सखायं । कृणवामहै ॥ उग्रं । युयुज्म । पृतनासु । सासहिं । ऋणऽकातिं । अदाभ्यं । वेद । भृमं । चित् । सनिता । रथिऽतमः । वाजिनं । यं । इत् । ऊंइति । नशत् ॥ यतः । इंद्र । भयामहे । ततः । नः । अभयं । कृधि । मघऽवन् । शग्धि । तव । तत् । नः । ऊतिऽभिः । वि । द्विषः । वि । मृधः । जहि ॥ त्वं । हि । राधःपते । राधसः । महः । क्षयस्य । असि । विधतः । तं । त्वा । वयं । मघऽवन् । इंद्र । गिर्वणः । सुतऽवंतः । हवामहे ॥ इंद्रः । स्पट् । उत । वृत्रऽहा । परःऽपाः । नः । वरेण्यः । सः । नः । रक्षिषत् । । चरमं । सः । मध्यमं । सः । पश्चात् । पातु । नः । पुरः ॥ ३८ ॥ त्वं । नः । पश्चात् । अधरात् । उत्तरात् । पुरः । इंद्र । नि । पाहि । विश्वतः । आरे । अस्मत् । कृणुहि । दैव्यं । भयं । आरे । हेतीः । अदेवीः ॥ अद्यऽअद्य । श्वःऽश्वः । इंद्र । त्रास्व । परे । च । नः ॥ विश्वा । च । नः । जरितॄन् । सत्ऽपते । अहा । दिवा । नक्तं । च । रक्षिषः ॥ प्रऽभंगी । शूरः । मघऽवा । तुविऽमघः । संऽमिश्लः । वीर्याय । कं ॥ उभा । ते । बाहूइति । वृषणा । शतक्रतोइतिशतऽक्रतो । नि । या । वज्रं । मिमिक्षतुः ॥ ३९ ॥ प्रोइति । अस्मै । उपऽस्तुतिं । भरत । यत् । जुजोषति । उक्थैः । इंद्रस्य । माहिनं । वयः । वर्धंति । सोमिनः । भद्राः । इंद्रस्य । रातयः ॥ अयुजः । असमः । नृऽभिः । एकः । कृष्टीः । अयास्यः । पूर्वीः । अति । प्र । ववृधे । विश्वा । जातानि । ओजसा ॥ ० ॥ आहितेन । चित् । अर्वता । जीरऽदानुः । सिसासति । प्रऽवाच्यं । इंद्र । तत् । तव । वीर्याणि । करिष्यतः ॥ ० ॥ आ । याहि । कृणवाम । ते । इंद्र । ब्रह्माणि ।

वर्धना । येभिः । शविष्ठ । चाकनः । भद्रं । इह । श्रवस्यते ॥ ० ॥ धृषतः । चित् । धृषत् । मनः । कृणोषि । इंद्र । यत् । त्वं । तीव्रैः । सोमैः । सपर्यतः । नमःऽभिः । प्रतिऽभूषतः ॥ ० ॥ अव । चष्टे । ऋचीषमः । अवतान्ऽइव । मानुषः । जुष्ट्वी । दक्षस्य । सोमिनः । सखायं । कृणुते । युजं ॥ ० ॥ ४० ॥ विश्वे । ते । इंद्र । वीर्यं । देवाः । अनु । क्रतुं । ददुः । भुवः । विश्वस्य । गोऽपतिः । पुरुऽस्तुत ॥ ० ॥ गृणे । तत् । इंद्र । ते । शवः । उपऽमं । देवऽतातये । यत् । हंसि । वृत्रं । ओजसा । शचीऽपते ॥ ० ॥ समनाऽइव । वपुष्यतः । कृणवत् । मानुषा । युगा । धिये । तत् । इंद्रः । चेतनं । अधं । श्रुतः ॥ ० ॥ उत् । जातं । इंद्र । ते । शवः । उत् । त्वां । उत् । तव । क्रतुं । भूरिगोइतिभूरिऽगो । भूरि । ववृधुः । मघऽवन् । तव । शर्मणि ॥ ० ॥ अहं । च । त्वं । च । वृत्रऽहन् । सं । युज्याव । सनिऽभ्यः । आ । अरातिऽवा । चित् । अद्रिऽवः । अनु । नौ । शूर । मंसते ॥ ० ॥ सत्यं । इत् । वै । ऊँइति । तं । वयं । इंद्रं । स्तवाम । न । अनृतं । महान् । असुन्वतः । वधः । भूरि । ज्योतींषि । सुन्वतः ॥ ० ॥ ॥ ४१ ॥ सः । पूर्व्यः । महानां । वेनः । क्रतुऽभिः । आनजे । यस्य । द्वारा । मनुः । पिता । देवेषु । धियः । आनजे ॥ दिवः । मानं । न । उत् । सदन् । सोमऽपृष्ठासः । अद्रयः । उक्था । ब्रह्म । च । शंस्या ॥ सः । विद्वान् । अंगिरःऽभ्यः । इंद्रः । गाः । अवृणोत् । अप । स्तुषे । तत् । अस्य । पौंस्यं ॥ सः । प्रत्नऽथा । कविऽवृधः । इंद्रः । वाकस्य । वक्षणिः । शिवः । अर्कस्य । होमनि । अस्मऽत्रा । गंतु । अवसे ॥ आत् । ऊँइति । नु । ते । अनु । क्रतुं । स्वाहा । वरस्य । यज्यवः । श्वात्रं । अर्काः । अनूषत । इंद्रं । गोत्रस्य । दावने ॥ इंद्रे । विश्वानि । वीर्यं । कृतानि । कर्त्वानि । च । यं । अर्काः । अध्वरं । विदुः ॥ ४२ ॥ यत् । पांचऽजन्यया । विशा । इंद्रे । घोषाः । असृक्षत । अस्तृणात् । बर्हणा । विपः । अर्यः । मानस्य । सः । क्षयः ॥ इयं ।

ऊँइति । ते । अनुऽस्तुतिः । चकृषे । तानि । पौंस्या । प्र । आवः । चक्रस्य । वर्तनिं ॥ अस्य । वृष्णः । विऽओदने । उरु । क्रमिष्ट । जीवसे । यवं । न । पश्वः । आ । ददे ॥ तत् । दधानाः । अवस्यवः । युष्माभिः । दक्षऽपितरः । स्याम । मरुत्वतः । वृधे ॥ बट् । ऋत्वियाय । धाम्ने । ऋक्वऽभिः । शूर । नोनुमः । जेषाम । इंद्र । त्वया । युजा ॥ अस्मेइति । रुद्राः । मेहना । पर्वतासः । वृत्रऽहत्ये । भरंऽहूतौ । सऽजोषाः ॥ ० ॥ धायि । पज्रः । इंद्रऽज्येष्ठाः । अस्मान् । अवंतु । देवाः ॥ ४३ ॥ उत् । त्वा । मंदंतु । स्तोमाः । कृणुष्व । राधः । अद्रिऽवः । अव । ब्रह्मऽद्विषः । जहि ॥ पदा । पणीन् । अराधसः । नि । बाधस्व । महान् । असि । नहि । त्वा । कः । चन । प्रति ॥ त्वं । ईशिषे । सुतानां । इंद्र । त्वं । असुतानां । त्वं । राजा । जनानां ॥ आ । इहि । प्र । इहि । क्षयः । दिवि । आऽघोषन् । चर्षणीनां । आ । उभेइति । पृणासि । रोदसीइति ॥ त्यं । चित् । पर्वतं । गिरिं । शतऽवंतं । सहस्रिणं । वि । स्तोतृऽभ्यः । रुरोजिथ ॥ वयं । ऊँइति । त्वा । दिवा । सुते । वयं । नक्तं । हवामहे । अस्माकं । कामं । आ । पृण ॥ ४४ ॥ कं । स्यः । वृषभः । युवा । तुविऽग्रीवः । अनानतः । ब्रह्मा । कः । तं । सपर्यति ॥ कस्य । स्वित् । सवनं । वृषा । जुजुष्वान् । अव । गच्छति । इंद्रं । कः । ऊँइति । स्वित् । आ । चके ॥ कं । ते । दानाः । असक्षत । वृत्रऽहन् । कं । सुऽवीर्या । उक्थे । कः । ऊँइति । स्वित् । अंतमः ॥ अयं । ते । मानुषे । जने । सोमः । पूरुषु । सूयते । तस्य । आ । इहि । प्र । द्रव । पिब ॥ अयं । ते । शर्यणाऽवति । सुऽसोमायां । अधि । प्रियः । आर्जीकीये । मदिन्ऽतमः ॥ तं । अद्य । राधसे । महे । चारुं । मदाय । घृष्वये । आ । इहि । ईं । इंद्र । द्रव । पिब ॥ ४५ ॥ ० ॥ आ । याहि । तूयं । आशुऽभिः ॥ यत् । वा । प्रऽस्रवणे । दिवः । मादयासे । स्वःऽनरे । यत् । वा । समुद्रे । अंधसः ॥ आ । त्वा । गीःऽभिः । महां । उरुं । हुवे । गांऽइव ।

भोजसे । इंद्र । सोमस्य । पीतये ॥ आ । ते । इंद्र । महिमानं । हरयः । देव । ते । महः । रथे । वहंतु । बिभ्रतः ॥ इंद्र । गृणीषे । ऊँइति । स्तुषे । महान् । उग्रः । ईशानऽकृत् । आ । इहि । नः । सुतं । पिब ॥ सुतऽवंतः । त्वा । वयं । प्रयस्वंतः । हवामहे ॥ ० ॥ ॥ ४६ ॥ ० ॥ इदं । ते । सोम्यं । मधु । अधुक्षन् । अद्रिऽभिः । नरः । जुषाणः । इंद्र । तत् । पिब ॥ विश्वान् । अर्यः । विपःऽचितः । अति । ख्यः । तूयं । आ । गहि ॥ ० ॥ दाता । मे । पृषतीनां । राजा । हिरण्यऽवीनां । मा । देवाः । मघऽवा । रिषत् ॥ सहस्रे । पृषतीनां । अधि । चंद्रं । बृहत् । पृथु । शुक्रं । हिरण्यं । आ । ददे ॥ नपातः । दुःऽगहस्य । मे । सहस्रेण । सुऽराधसः । श्रवः । देवेषु । अक्रत ॥ ४७ ॥ तरःऽभिः । वः । विदत्ऽवसुं । इंद्रं । सऽबाधः । ऊतये । बृहत् । गायंतः । सुतऽसोमे । अध्वरे । हुवे । भरं । न । कारिणं ॥ न । यं । दुध्राः । वरंते । न । स्थिराः । मुरः । मदे । सुऽशिप्रं । अंधसः । यः । आऽदृत्य । शशमानाय । सुन्वते । दाता । जरित्रे । उक्थ्यं ॥ यः । शक्रः । मृक्षः । अश्व्यः । यः । वा । कीजः । हिरण्ययः । सः । ऊर्वस्य । रेजयति । अपऽवृतिं । इंद्रः । गव्यस्य । वृत्रऽहा ॥ निऽखातं । चित् । यः । पुरुऽसंभृतं । वसु । उत् । इत् । वपति । दाशुषे । वज्री । सुऽशिप्रः । हरिऽअश्वः । इत् । करत् । इंद्रः । क्रत्वा । यथा । वशत् ॥ यत् । ववंथ । पुरुऽस्तुत । पुरा । चित् । शूर । नृणां । वयं । तत् । ते । इंद्र । सं । भरामसि । यज्ञं । उक्थं । तुरं । वचः ॥ ४८ ॥ सचा । सोमेषु । पुरुऽहूत । वज्रिऽवः । मदाय । द्युक्ष । सोमऽपाः । त्वं । इत् । हि । ब्रह्मऽकृते । काम्यं । वसु । देष्ठः । सुन्वते । भुवः ॥ वयं । एनं । इदा । ह्यः । अपीपेम । इह । वज्रिणं । तस्मै । ऊँइति । अद्य । समना । सुतं । भर । आ । नूनं । भूषत । श्रुते ॥ वृकः । चित् । अस्य । वारणः । उराऽमथिः । आ । वयुनेषु । भूषति । सः । इमं । नः । स्तोमं । जुजुषाणः । आ ।

गहि । इंद्र । प्र । चित्रया । धिया ॥ कत् । ऊँइति । नु । अस्य ।
अकृतं । इंद्रस्य । अस्ति । पौंस्यं । केनोइति । नु । कं । श्रोमतेन ।
न । शुश्रुवे । जनुषः । परि । वृत्रऽहा ॥ कत् । ऊँइति । महीः ।
अधृष्टाः । अस्य । तविषीः । कत् । ऊँइति । वृत्रऽघ्नः । अस्तृतं ।
इंद्रः । विश्वान् । बेकऽनाटान् । अहःऽदृशः । उत । क्रत्वा । पणीन् ।
अभि ॥ ४९ ॥ वयं । घ । ते । अपूर्व्या । इंद्र । ब्रह्माणि । वृत्रऽहन् ।
पुरुऽतमासः । पुरुऽहूत । वज्रिऽवः । भृतिं । न । प्र । भरामसि ॥
पूर्वीः । चित् । हि । त्वेइति । तुविऽकूर्मिन् । आऽशसः । हवंते ।
इंद्र । ऊतयः । तिरः । चित् । अर्यः । सवना । आ । वसोइति ।
गहि । शविष्ठ । श्रुधि । मे । हवं ॥ ० ॥ त्वेइति । इत् । ऊँइति ।
इंद्र । विप्राः । अपि । स्मसि । नहि । त्वत् । अन्यः । पुरुऽहूत ।
कः । चन । मघऽवन् । अस्ति । मर्डिता । त्वं । नः । अस्याः ।
अमतेः । उत । क्षुधः । अभिऽशस्तेः । अव । स्पृधि । त्वं । नः ।
ऊती । तव । चित्रया । धिया । शिक्ष । शचिष्ठ । गातुऽवित् ॥
सोमः । इत् । वः । सुतः । अस्तु । कलयः । मा । बिभीतन । अप ।
इत् । एषः । ध्वस्मा । अयति । स्वयं । घ । एषः । अप । अयति ॥ ५० ॥
त्यान् । नु । क्षत्रियान् । अवः । आदित्यान् । याचिषामहे । सुऽ-
मृळीकान् । अभिष्टये ॥ मित्रः । नः । अति । अंहति । वरुणः । पर्षत् ।
अर्यमा । आदित्यासः । यथा । विदुः ॥ तेषां । हि । चित्रं । उक्थ्यं ।
वरूथं । अस्ति । दाशुषे । आदित्यानां । अरंऽकृते ॥ ० ॥ जीवान् ।
नः । अभि । धेतन । आदित्यासः । पुरा । हथात् । कत् । ह । स्थ ।
हवनऽश्रुतः ॥ ५१ ॥ यत् । वः । श्रांताय । सुन्वते । वरूथं । अस्ति ।
यत् । छर्दिः । तेन । नः । अधि । वोचत ॥ अस्ति । देवाः । अंहोः ।
उरु । अस्ति । रत्नं । अनागसः । आदित्याः । अद्भुतऽएनसः ॥ मा ।
नः । सेतुः । सिसेत् । अयं । महे । वृणक्तु । नः । परि । इंद्रः । इत् ।
हि । श्रुतः । वशी ॥ मा । नः । मृचा । रिपूणां । वृजिनानां ।

अविष्यवः । देवाः । अभि । प्र । मृक्षत ॥ उत । त्वां । अदिते । महि । अहं । देवि । उप । ब्रुवे । सुऽमृळीकां । अभिष्टये ॥ ५२ ॥ पर्षि । दीने । गभीरे । आ । उग्रऽपुत्रे । जिघांसतः । माकिः । तोकस्य । नः । रिषत् ॥ अनेहः । नः । उरुऽव्रजे । उरूचि । वि । प्रऽसर्तवे । कृधि । तोकाय । जीवसे ॥ ये । मूर्धानः । क्षितीनां । अदब्धासः । स्वऽयशसः । व्रता । रक्षंते । अद्रुहः ॥ ते । नः । आस्नः । वृकाणां । आदित्यासः । मुमोचत । स्तेनं । बद्धंऽइव । अदिते ॥ अपोइति । सु । नः । इयं । शरुः । आदित्याः । अप । दुःऽमतिः । अस्मत् । एतु । अजघ्नुपी ॥ ५३ ॥ शश्वत् । हि । वः । सुऽदानवः । आदित्याः । ऊतिऽभिः । वयं । पुरा । नूनं । बुभुज्महे ॥ शश्वंतं । हि । प्रऽचेतसः । प्रतिऽयंतं । चित् । एनसः । देवाः । कृणुथ । जीवसे ॥ ० ॥ नव्यं । सन्यसे ॥ ० ॥ बंधात् । बद्धंऽइव । अदिते । न । अस्माकं । अस्ति । तत् । तरः । आदित्यासः । अतिऽस्कदे । यूयं । अस्मभ्यं । मृळत ॥ मा । नः । हेतिः । विवस्वतः । आदित्याः । कृत्रिमा । शरुः । पुरा । नु । जरसः । वधीत् ॥ वि । सु । द्वेषः । वि । अंहतिं । आदित्यासः । वि । संऽहितं । विष्वक् । वि । वृहत । रपः ॥ ५४ ॥

इति षष्ठाष्टके चतुर्थोध्यायः ॥ ४ ॥



## ॥ अथ पञ्चमोध्यायः ॥

हरिः ॐ ॥ आ । त्वा । रथं । यथा । ऊतये । सुम्नाय । वर्तयामसि । तुविऽकूर्मिं । ऋतिऽसहं । इंद्र । शविष्ठ । सत्ऽपते ॥ तुविऽशुष्म । तुविक्रतोइतितुविऽक्रतो । शचीऽवः । विश्वया । मते । आ । पप्राथ ।

महिऽत्वना ॥ यस्य । ते । महिना । महः । परि । ज्मायंतं । ईयतुः । हस्ता । वज्रं । हिरण्ययं ॥ विश्वानरस्य । वः । पतिं । अनानतस्य । शवसः । एवैः । च । चर्षणीनां । ऊती । हुवे । रथानां ॥ अभिष्टये । सदाऽवृधं । स्वःऽमीळ्हेषु । यं । नरः । नाना । हवंते । ऊतये ॥ १ ॥ परःऽमात्रं । ऋचीषमं । इंद्रं । उग्रं । सुऽराधसं । ईशानं । चित् । वसूनां ॥ तंऽतं । इत् । राधसे । महे । इंद्रं । चोदामि । पीतये । यः । पूर्व्यां । अनुऽस्तुतिं । ईशे । कृष्टीनां । नृतुः ॥ न । यस्य । ते । शवसान । सख्यं । आनंश । मर्त्यः । नकिः । शवांसि । ते । नशत् ॥ त्वाऽऊतासः । त्वा । युजा । अप्ऽसु । सूर्ये । महत् । धनं । जयेम । पृत्ऽसु । वज्रिऽवः ॥ तं । त्वा । यज्ञेभिः । ईमहे । तं । गीःऽभिः । गिर्वणःऽतम । इंद्र । यथा । चित् । आविथ । वाजेषु । पुरुऽमाय्यं ॥ २ ॥ यस्य । ते । स्वादु । सख्यं । स्वाद्वी । प्रऽनीतिः । अद्रिऽवः । यज्ञः । वितंतसाय्यः ॥ उरु । नः । तन्वे । तने । उरु । क्षयाय । नः । कृधि । उरु । नः । यंधि । जीवसे ॥ उरुं । नृऽभ्यः । उरुं । गवे । उरुं । रथाय । पंथां । देवऽवीतिं । मनामहे ॥ उप । मा । षट् । द्वाऽद्वा । नरः । सोमस्य । हर्ष्या । तिष्ठंति । स्वादुऽरातयः ॥ ऋज्रौ । इंद्रोते । आ । ददे । हरीइति । ऋक्षस्य । सूनवि । आश्वऽमेधस्य । रोहिता ॥ ३ ॥ सुऽरथान् । आतिथिऽग्वे । सुऽअभीशून् । आर्क्षे । आश्वऽमेधे । सुऽपेशसः ॥ षट् । अश्वान् । आतिथिऽग्वे । इंद्रोते । वधूऽमतः । सचा । पूतऽक्रतौ । सनं ॥ आ । एषु । चेतत् । वृषण्ऽवती । अंतः । ऋज्रेषु । अरुषी । सुऽअभीशुः । कशाऽवती ॥ न । युष्मेइति । वाजऽबंधवः । निनित्सुः । चन । मर्त्यः । अवद्यं । अधि । दीधरत् ॥ ४ ॥ प्रऽप्र ॥ ० ॥ मंदत्ऽवीराय । इंदवे । धिया । वः । मेधऽसातये । पुरंऽध्या । आ । विवासति ॥ नदं । वः । ओदतीनां । नदं । योयुवतीनां । पतिं । वः । अघ्न्यानां । धेनूनां । इषुध्यसि ॥ ताः । अस्य । सूदऽदोहसः । सोमं । श्रीणंति । पृश्नयः । जन्मन् । देवानां । विशः । त्रिषु । आ ।

रोचने । दिवः ॥ अभि । प्र । गोऽपतिं । गिरा । इंद्रं । अर्च । यथा । विदे । सूनुं । सत्यस्य । सत्ऽपतिं ॥ आ । हरयः । ससृज्रिरे । अरुषीः । अधि । बर्हिषि । यत्र । अभि । संऽनवामहे ॥ ५ ॥ इंद्राय । गावः । आऽशिरं । दुदुहे । वज्रिणे । मधु । यत् । सीं । उपऽह्वरे । विदत् ॥ उत् । यत् । ब्रध्नस्य । विष्टपं । गृहं । इंद्रः । च । गन्वहि । मध्वः । पीत्वा । सचेवहि । त्रिः । सप्त । सख्युः । पदे । अर्चत । प्र । अर्चत । प्रियऽमेधासः । अर्चत । अर्चंतु । पुत्रकाः । उत । पुरं । न । धृष्णु । अर्चत ॥ अव । स्वराति । गर्गरः । गोधा । परि । सनिस्वनत् । पिंगा । परि । चनिस्कदत् । इंद्राय । ब्रह्म । उत्ऽयतं ॥ आ । यत् । पतंति । एन्यः । सुऽदुघाः । अनपऽस्फुरः । अपऽस्फुरं । गृभायत । सोमं । इंद्राय । पातवे ॥ ६ ॥ अपात् । इंद्रः । अपात् । अग्निः । विश्वे । देवाः । अमत्सत । वरुणः । इत् । इह । क्षयत् । तं । आपः । अभि । अनूषत । वत्सं । संशिश्वरीःऽइव ॥ सुऽदेवः । असि । वरुण । यस्य । ते । सप्त । सिंधवः । अनुऽक्षरंति । काकुदं । सूर्म्यं । सुषिरांऽइव ॥ यः । व्यतीन् । अफाणयत् । सुऽयुक्तान् । उप । दाशुषे । तक्वः । नेता । तत् । इत् । वपुः । उपऽमा । यः । अमुच्यत ॥ अति । इत् । ऊं इति । शक्रः । ओहते । इंद्रः । विश्वाः । अति । द्विषः । भिनत् । कनीनः । ओदनं । पच्यमानं । परः । गिरा ॥ अर्भकः । न । कुमारकः । अधि । तिष्ठत् । नवं । रथं । सः । पक्षत् । महिषं । मृगं । पित्रे । मात्रे । विभुऽक्रतुं ॥ आ । तु । सुऽशिप्र । दंऽपते । रथं । तिष्ठ । हिरण्ययं । अध । द्युक्षं । सचेवहि । सहस्रऽपादं । अरुषं । स्वस्तिऽगां । अनेहसं ॥ ० ॥ अथ । चित् । अस्य । सुऽधितं । यत् । एतवे । आऽवर्तयंति । दावने ॥ ० ॥ प्रियऽमेधासः । एषां ॥ ० ॥ वृक्तऽबर्हिषः । हितऽप्रयसः । आशत ॥ ७ ॥ इति सप्तमोनुवाकः ॥ ॥ – :: – ॥ यः । राजा । चर्षणीनां । याता । रथेभिः । अध्रिऽगुः । विश्वासां । तरुता । पृतनानां । ज्येष्ठः । यः । वृत्रऽहा । गृणे ॥

इंद्रं । तं । शुंभ । पुरुऽहन्मन् । अवसे । यस्य । द्विता । विऽधर्तरि । हस्ताय । वज्रः । प्रति । धायि । दर्शतः । महः । दिवे । न । सूर्यः ॥ ० ॥ यः । चकार । सदाऽवृधं ॥ इंद्रं । न । यज्ञैः । विश्वऽगूर्तं । ऋभ्वसं । अधृष्टं । धृष्णुऽओजसं । अषाळ्हं । उग्रं । पृतनासु । ससहिं । यस्मिन् । महीः । उरुऽज्रयः ॥ सं । धेनवः । जायमाने । अनोनवुः । द्यावः । क्षामः । अनोनवुः ॥ यत् । द्यावः । इंद्र । ते । शतं । शतं । भूमीः । उत । स्युः । न । त्वा । वज्रिन् । सहस्रं । सूर्याः । अनु । न । जातं । अष्ट । रोदसीइति ॥ ८ ॥ आ । पप्राथ । महिना । वृष्ण्या । वृषन् । विश्वा । शविष्ठ । शवसा । अस्मान् । अव । मघऽवन् । गोऽमति । व्रजे । वज्रिन् । चित्राभिः । ऊतिऽभिः ॥ न । सीं । अदेवः । आपत् । इषं । दीर्घायोइतिदीर्घऽआयो । मर्त्यः । एतऽग्वा । चित् । यः । एतशा । युयोजते । हरीइति । इंद्रः । युयोजते ॥ तं । वः । महः । महाय्यं । इंद्रं । दानाय । सक्षणिं । यः । गाधेषु । यः । आऽअरणेषु । हव्यः । वाजेषु । अस्ति । हव्यः ॥ उत् । ऊँइति । सु । नः । वसोइति । महे । मृशस्व । शूर । राधसे ॥ उत् । ऊँइति । सु । मह्यै । मघऽवन् । मघत्तये । उत् । इंद्र । श्रवसे । महे ॥ त्वं । नः । इंद्र । ऋतऽयुः । त्वाऽनिदः । नि । तृंपसि । मध्ये । वसिष्व । तुविऽनृम्ण । ऊर्वोः । नि । दासं । शिश्नथः । हथैः ॥ ९ ॥ अन्यऽव्रतं । अमानुषं । अयज्वानं । अदेवऽयुं । अव । स्वः । सखा । दुधुवीत । पर्वतः । सुऽघ्नाय । दस्युं । पर्वतः ॥ ० ॥ आसां । हस्ते । शविष्ठ । दावने । धानानां । न । सं । गृभाय । अस्मऽयुः । द्विः । सं । गृभाय । अस्मऽयुः ॥ सखायः । क्रतुं । इच्छत । कथा । राधाम । शरस्य । उपऽस्तुतिं । भोजः । सूरिः । यः । अह्रयः ॥ भूरिऽभिः । समह । ऋषिऽभिः । बर्हिष्मत्ऽभिः । स्तविष्यसे । यत् । इत्थं । एकंऽएकं । इत् । शरं । वत्सान् । पराऽददः ॥ कर्णऽगृह्य । मघऽवा । शौरऽदेव्यः । वत्सं । नः । त्रिऽभ्यः । आ । अनयत् ॥ अजां । सूरिः ।

न । धातवे ॥ १० ॥ ० ॥ महःऽभिः । पाहि । विश्वस्याः । अरातेः ।
उत । द्विषः । मर्त्यस्य ॥ नहि । मन्युः । पौरुषेयः । ईशे । हि । वः ।
प्रियऽजात । त्वं । इत् । असि । क्षपाऽवान् ॥ सः । नः । विश्वेभिः । देवेभिः ।
ऊर्जः । नपात् । भद्रऽशोचे । रयिं । देहि । विश्वऽवारं ॥ न । तं ।
अग्ने । अरातयः । मर्तं । युवंत । रायः । यं । त्रायसे । दाश्वांसं ॥
यं । त्वं । विप्र । मेधऽसातौ । अग्ने । हिनोषि । धनाय । सः ।
तव । ऊती । गोषु । गंता ॥ ११ ॥ त्वं । रयिं । पुरुऽवीरं । अग्ने ।
दाशुषे । मर्ताय । प्र । नः । नय । वस्यः । अच्छ ॥ उरुष्य । नः ।
मा । परा । दाः । अघऽयते । जातऽवेदः । दुःऽआध्ये । मर्ताय ॥
अग्ने । माकिः । ते । देवस्य । रातिं । अदेवः । युयोत । त्वं । ईशिषे ।
वसूनां ॥ सः । नः । वस्वः । उप । मासि । ऊर्जः । नपात् । माहिनस्य ।
सखे । वसोइति । जरितृऽभ्यः ॥ अच्छ । नः । शीरऽशोचिषं । गिरः ।
यंतु । दर्शतं । अच्छ । यज्ञासः । नमसा । पुरुऽवसुं । पुरुऽप्रशस्तं ।
ऊतये ॥ १२ ॥ अग्निं । सूनुं । सहसः । जातऽवेदसं । दानाय ।
वार्याणां । द्विता । यः । भूत् । अमृतः । मर्त्येषु । आ । होता ।
मंद्रऽतमः । विशि ॥ अग्निं । वः । देवऽयज्यया । अग्निं । प्रऽयति ।
अध्वरे । अग्निं । धीषु । प्रथमं । अग्निं । अर्वति । अग्निं । क्षैत्राय ।
साधसे ॥ अग्निः । इषां । सख्ये । ददातु । नः । ईशे । यः । वार्याणां ।
अग्निं । तोके । तनये । शश्वत् । ईमहे । वसुं । संतं । तनूऽपां ॥
अग्निं । ईळिष्व । अवसे । गाथाभिः । शीरऽशोचिषं । अग्निं । राये ।
पुरुऽमीळ्ह । श्रुतं । नरः । अग्निं । सुऽदीतये । छर्दिः ॥ अग्निं । द्वेषः ।
योतवै । नः । गृणीमसि । अग्निं । शं । योः । च । दातवे ।
विश्वासु । विक्षु । अविताऽइव । हव्यः । भुवत् । वस्तुः । ऋषूणां ॥ १३ ॥
हविः । कृणुध्वं । आ । गमत् । अध्वर्युः । वनते । पुनरिति । विद्वान् ।
अस्य । प्रऽशासनं ॥ नि । तिग्मं । अभि । अंशुं । सीदत् । होता ।
मनौ । अधि । जुषाणः । अस्य । सख्यं ॥ अंतः । इच्छंति । तं । जने ।

रुद्रं । परः । मनीषया । गृभ्णंति । जिह्वया । ससं ॥ जामि । अतीतपे ।
धनुः । वयःऽधाः । अरुहत् । वनं । दृषदं । जिह्वया । आ । अवधीत् ॥
चरन् । वत्सः । रुशन् । इह । निऽदातारं । न । विंदते । वेति ।
स्तोतवे । अंब्यं ॥ १४ ॥ उतोइति । नु । अस्य । यत् । महत् । अश्वऽवत् ।
योजनं । बृहत् । दामा । रथस्य । ददृशे ॥ दुहंति । सप्त । एकां । उप ।
द्वा । पंच । सृजतः । तीर्थे । सिंधोः । अधि । स्वरे । आ । दशऽभिः ।
विवस्वतः । इंद्रः । कोशं । अचुच्यवीत् । खेदया । त्रिऽवृता । दिवः ॥ परि ।
त्रिऽधातुः । अध्वरं । जूर्णिः । एति । नवीयसी । मध्वा । होतारः ।
अंजते ॥ सिंचंति । नमसा । अवतं । उच्चाऽचक्रं । परिऽज्मानं ।
नीचीनऽबारं । अक्षितं ॥ १५ ॥ अभिऽआरं । इत् । अद्रयः । निऽसिक्तं ।
पुष्करे । मधु । अवतस्य । विऽसर्जने ॥ गावः । उप । अवत । अवतं ।
महीइति । यज्ञस्य । रप्सुदा । उभा । कर्णा । हिरण्यया ॥ आ । सुते ।
सिंचत । श्रियं । रोदस्योः । अभिऽश्रियं । रसा । दधीत । वृषभं ॥
ते । जानत । स्वं । ओक्यं । सं । वत्सासः । न । मातृऽभिः ॥
मिथः । नसंत । जामिऽभिः ॥ उप । स्रक्वेषु । बप्सतः । कृण्वते ।
धरुणं । दिवि । इंद्रे । अग्ना । नमः । स्वः१रितिस्वः ॥ १६ ॥ अधुक्षत् ।
पिप्युषीं । इषं । ऊर्जं । सप्तऽपदीं । अरिः । सूर्यस्य । सप्त । रश्मिऽ-
भिः ॥ सोमस्य । मित्रावरुणा । उत्ऽइता । सूरे । आ । ददे । तत् ।
आतुरस्य । भेषजं ॥ ० ॥ पदं । हर्यतस्य । निऽधान्यं । परि । द्यां ।
जिह्वया । अतनत् ॥ १७ ॥ उत् । ईराथां । ऋतऽयते । युंजाथां ।
अश्विना । रथं । अंति । सत् । भूतु । वां । अवः ॥ निऽमिषः ।
चित् । जवीयसा । रथेन । आ । यातं । अश्विना ॥ ० ॥ उप ।
स्तृणीतं । अत्रये । हिमेन । घर्मं । अश्विना ॥ ० ॥ कुह । स्थः ।
कुह । जग्मथुः । कुह । श्येनाऽइव । पेतथुः ॥ ० ॥ यत् । अद्य ।
कर्हि । कर्हि । चित् । शुश्रुयातं । इमं । हवं ॥ ० ॥ १८ ॥ अश्विना ।
यामऽहूतमा । नेदिष्ठं । यामि । आप्यं ॥ ० ॥ अवंतं । अत्रये । गृहं ।

कृणुतं । युवं । अश्विना ॥ ० ॥ वरेथेइति । अग्निं । आऽतपः । वदते ।
वल्गु । अत्रये ॥ ० ॥ प्र । सप्तऽवध्रिः । आऽशसा । धारां । अग्नेः ।
अशायत ॥ ० ॥ इह । आ । गतं । वृषण्वसूइतिवृषण्ऽवसू । शृणुतं ।
मे । इमं । हवं ॥ ० ॥ १९ ॥ किं । इदं । वां । पुराणऽवत् । जरतोःऽ-
इव । शस्यते ॥ ० ॥ समानं । वां । सऽजात्यं । समानः । बंधुः ।
अश्विना ॥ ० ॥ यः । वां । रजांसि । अश्विना । रथः । विऽयाति ।
रोदसीइति ॥ ० ॥ आ । नः । गव्येभिः । अश्व्यैः । सहस्रैः । उप ।
गच्छतं ॥ ० ॥ मा ॥ ० ॥ सहस्रेभिः । अति । ख्यतं ॥ ० ॥ अरुणऽ-
प्सुः । उषाः । अभूत् । अकः । ज्योतिः । ऋतऽवरी ॥ ० ॥ अश्विना ।
सु । विऽचाकशत् । वृक्षं । परशुमान्ऽइव ॥ ० ॥ पुरं । न । धृष्णोइति ।
आ । रुज । कृष्णया । बाधितः । विशा ॥ ० ॥ २० ॥ विशःऽविशः ।
वः । अतिथिं । वाजऽयंतः । पुरुऽप्रियं । अग्निं । वः । दुर्यं । वचः ।
स्तुषे । शूषस्य । मन्मऽभिः ॥ यं । जनासः । हविष्मंतः । मित्रं । न ।
सर्पिःऽआसुतिं । प्रऽशंसंति । प्रशस्तिऽभिः ॥ पन्यांसं । जातऽवेदसं ।
यः । देवऽताति । उत्ऽयता । हव्यानि । ऐरयत् । दिवि । आ ।
अगन्म । वृत्रहन्ऽतमं । ज्येष्ठं । अग्निं । आनवं ॥ यस्य । श्रुतर्वा ।
बृहन् । आर्क्षः । अनीके । एधते । अमृतं । जातऽवेदसं । तिरः ।
तमांसि । दर्शतं । घृतऽआहवनं । ईड्यं ॥ २१ ॥ सऽबाधः । यं ।
जनाः । इमे । अग्निं । हव्येभिः । ईळते । जुह्वानासः । यतऽस्रुचः ॥
इयं । ते । नव्यसी । मतिः । अग्ने । अधायि । अस्मत् । आ । मंद्र ।
सुऽजात । सुक्रतोइतिसुऽक्रतो । अमूर । दस्म । अतिथे ॥ सा । ते ।
अग्ने । शंऽतमा । चनिष्ठा । भवतु । प्रिया । तया । वर्धस्व । सुऽ-
स्तुतः ॥ सा । द्युम्नैः । द्युम्निनी । बृहत् । उपऽउप । श्रवसि । श्रवः ।
दधीत । वृत्रऽतूर्ये ॥ अश्वं । इत् । गां । रथऽप्रां । त्वेषं । इंद्रं । न ।
सत्ऽपतिं । यस्य । श्रवांसि । तूर्वथ । पन्यंऽपन्यं । च । कृष्टयः ॥ २२ ॥
यं । त्वा । गोपवनः । गिरा । चनिष्ठत् । अग्ने । अंगिरः । सः ।

पावक । श्रुधि । हवं ॥ यं । त्वा । जनासः । ईळते । सऽबाधः । वाजऽसातये । सः । बोधि । वृत्रऽतूर्ये ॥ अहं । हुवानः । आर्क्षे । श्रुतर्वणि । मदऽच्युति । शर्धांसिऽइव । स्तुकाऽविनां । मृक्षा । शीर्षा । चतुर्णां ॥ मां । चत्वारः । आशवः । शविष्ठस्य । द्रवित्नवः । सुऽरथासः । अभि । प्रयः । वक्षन् । वयः । न । तुग्र्यं । सत्यं । इत् । त्वा । महेऽनदि । परुष्णि । अव । देदिशं । न । ई । आपः । अश्वऽदातरः । शविष्ठात् । अस्ति । मर्त्यः ॥ २३ ॥ युक्ष्व । हि । देवऽहूतमान् । अश्वान् । अग्ने । रथीःऽइव । नि । होता । पूर्व्यः । सदः ॥ उत । नः । देव । देवान् । अच्छ । वोचः । विदुःऽतरः । श्रत् । विश्वा । वार्या । कृधि ॥ त्वं । ह । यत् । यविष्ठ्य । सहसः । सूनोइति । आऽहुत । ऋतऽवा । यज्ञियः । भुवः ॥ अयं । अग्निः । सहस्रिणः । वाजस्य । शतिनः । पतिः । मूर्धा । कविः । रयीणां ॥ तं । नेमिं । ऋभवः । यथा । आ । नमस्व । सहूतिऽभिः । नेदीयः । यज्ञं । अंगिरः ॥ २४ ॥ तस्मै । नूनं । अभिऽद्यवे । वाचा । विऽरूप । नित्यया । वृष्णे । चोदस्व । सुऽस्तुतिं ॥ कं । ऊँइति । स्वित् । अस्य । सेनया । अग्नेः । अपाकऽचक्षसः । पणिं । गोषु । स्तरामहे ॥ मा । नः । देवानां । विशः । प्रस्नातीःऽइव । उस्राः । कृशं । न । हासुः । अघ्न्याः ॥ मा । नः । समस्य । दुःऽध्यः । परिऽद्वेषसः । अंहतिः । ऊर्मिः । न । नावं । आ । वधीत् ॥ नमः । ते । अग्ने । ओजसे । गृणंति । देव । कृष्टयः । अमैः । अमित्रं । अर्दय ॥ २५ ॥ कुवित् । सु । नः । गोऽइष्टये । अग्ने । संऽवेषिषः । रयिं । उरुऽकृत् । उरु । नः । कृधि ॥ मा । नः । अस्मिन् । महाऽधने । परा । वर्क् । भारऽभृत् । यथा । संऽवर्गं । सं । रयिं । जय ॥ अन्यं । असत् । भियै । इयं । अग्ने । सिसक्तु । दुच्छना । वर्ध । नः । अमऽवत् । शवः ॥ यस्य । अजुषत् । नमस्विनः । शमीं । अदुःऽमखस्य । वा । तं । घ । इत् । अग्निः । वृधा । अवति ॥ परस्याः । अधि । संऽवतः । अवरान् । अभि । आ ।

तर । यत्र । अहं । अस्मि । तान् । अव ॥ विद्म । हि । ते । पुरा । वयं । अग्ने । पितुः । यथा । अवसः । अध । ते । सुम्नं । ईमहे ॥ २६ ॥ इमं । नु । मायिनं । हुवे । इंद्रं । ईशानं । ओजसा । मरुत्वंतं । न । वृंजसे ॥ अयं । इंद्रः । मरुत्ऽसखा । वि । वृत्रस्य । अभिनत् । शिरः । वज्रेण । शतऽपर्वणा ॥ ववृधानः । मरुत्ऽसखा । इंद्रः । वि । वृत्रं । ऐरयत् । सृजन् । समुद्रियाः । अपः ॥ अयं । ह । येन । वै । इदं । स्वः । मरुत्वता । जितं । इंद्रेण । सोमऽपीतये ॥ मरुत्वंतं । ऋजीषिणं । ओजस्वंतं । विऽरप्शिनं । इंद्रं । गीःऽभिः । हवामहे ॥ इंद्रं । प्रत्नेन । मन्मना । मरुत्वंतं । हवामहे ॥ ० ॥ २७ ॥ मरुत्वान् । इंद्र । मीढ्वः । पिब । सोमं । शतक्रतोइतिशतऽक्रतो । अस्मिन् । यज्ञे । पुरुऽस्तुत ॥ तुभ्यं । इत् । इंद्र । मरुत्वते । सुताः । सोमासः । अद्रिऽवः । हृदा । हूयंते । उक्थिनः ॥ पिब । इत् । इंद्र । मरुत्ऽसखा । सुतं । सोमं । दिविष्टिषु । वज्रं । शिशानः । ओजसा ॥ उत्ऽतिष्ठन् । ओजसा । सह । पीत्वी । शिप्रेइति । अवेपयः । सोमं । इंद्र । चमूइति । सुतं ॥ ० ॥ ऋक्षमाणं । अकृपेतां । इंद्रं । यत् । दस्युऽहा । अभवः ॥ वाचं । अष्टाऽपदीं । अहं । नवऽस्रक्तिं । ऋतऽस्पृशं । इंद्रात् । परि । तन्वं । ममे ॥ २८ ॥ जज्ञानः । नु । शतऽक्रतुः । वि । पृच्छत् । इति । मातरं । के । उग्राः । के । ह । शृण्विरे ॥ आत् । ईं । शवसी । अब्रवीत् । और्णऽवाभं । अहीशुवं । ते । पुत्र । संतु । निःऽतुरः ॥ सं । इत् । तान् । वृत्रऽहा । अखिदत् । खे । अरान्ऽइव । खेदया । प्रऽवृद्धः । दस्युऽहा । अभवत् ॥ एकया । प्रतिऽधा । अपिबत् । साकं । सरांसि । त्रिंशतं । इंद्रः । सोमस्य । काणुका ॥ अभि । गंधर्वं । अतृणत् । अबुध्नेषु । रजःऽसु । आ । इंद्रः । ब्रह्मऽभ्यः । इत् । वृधे ॥ २९ ॥ निः । अविध्यत् । गिरिऽभ्यः । आ । धारयत् । पक्वं । ओदनं । इंद्रः । बुंदं । सुऽआततं ॥ शतऽब्रध्नः । इषुः । तव । सहस्रऽपर्णः । एकः । इत् । यं । इंद्र । चकृषे । युजं ॥ तेन ।

स्तोतृऽभ्यः । आ । भर । नृऽभ्यः । नारिऽभ्यः । अत्तवे । सद्यः । जातः । ऋभुऽस्थिर ॥ एता । च्यौत्नानि । ते । कृता । वर्षिष्ठानि । परीणसा । हृदा । वीळु । अधारयः ॥ विश्वा । इत् । ता । विष्णुः । आ । अभरत् । उरुऽक्रमः । त्वाऽइषितः । शतं । महिषान् । क्षीरऽपाकं । ओदनं । वराहं । इंद्रः । एमुषं । तुविऽक्षं । ते । सुऽकृतं । सुऽमयं । धनुः । साधुः । बुंदः । हिरण्ययः ॥ ० ॥ रण्या । सुऽसंस्कृता । ऋदुऽपे । चित् । ऋदुऽवृधा ॥ ३० ॥ पुरोळाशं । नः । अंधसः । इंद्र । सहस्रं । आ । भर । शता । च । शूर । गोनां ॥ आ । नः । भर । विऽअंजनं । गां । अश्वं । अभिऽअंजनं । सचा । मना । हिरण्यया ॥ उत । नः । कर्णऽशोभना । पुरूणि । धृष्णोइति । आ । भर । त्वं । हि । शृण्विषे । वसोइति ॥ नकीं । वृधीकः । इंद्र । ते । न । सुऽसाः । न । सुऽदाः । उत । न । अन्यः । त्वत् । शूर । वाघतः ॥ नकीं । इंद्रः । निऽकर्तवे । न । शक्रः । परिऽशक्तवे । विश्वं । शृणोति । पश्यति ॥ ३१ ॥ सः । मन्युं । मर्त्यानां । अदब्धः । नि । चिकीषते । पुरा । निदः । चिकीषते ॥ क्रत्वः । इत् । पूर्णं । उदरं । तुरस्य । अस्ति । विधतः । वृत्रऽघ्नः । सोमऽपाव्नः । त्वेइति । वसूनि । संऽगता । विश्वा । च । सोम । सौभगा । सुऽदातु । अपरिऽह्वृता ॥ त्वां । इत् । यवऽयुः । मम । कामः । गव्युः । हिरण्यऽयुः । त्वां । अश्वऽयुः । आ । ईषते ॥ तव । इत् । इंद्र । अहं । आऽशसा । हस्ते । दात्रं । चन । आ । ददे । दिनस्य । वा । मघऽवन् । संऽभृतस्य । वा । पूर्धि । यवस्य । काशिना ॥ ३२ ॥ अयं । कृत्नुः । अगृभीतः । विश्वऽजित् । उत्ऽभित् । इत् । सोमः । ऋषिः । विप्रः । काव्येन ॥ अभि । ऊर्णोति । यत् । नग्नं । भिषक्ति । विश्वं । यत् । तुरं । प्र । ईं । अंधः । ख्यत् । निः । श्रोणः । भूत् ॥ त्वं । सोम । तनूकृत्ऽभ्यः । द्वेषःऽभ्यः । अन्यऽकृतेभ्यः । उरु । यंता । असि । वरूथं ॥ त्वं । चित्ती । तव । दक्षैः । दिवः । आ । पृथिव्याः । ऋजीषिन् । यावीः ।

अघस्य । चित् । द्वेषः ॥ अर्थिनः । यंति । च । इत् । अर्थं । गच्छान् ।
इत् । ददुषः । रातिं । ववृज्युः । तृष्यंतः । कामं ॥ ३३ ॥ विदत् ।
यत् । पूर्व्यं । नष्टं । उत् । ईं । ऋतऽयुं । ईरयत् । प्र । ईं । आयुः ।
तारीत् । अतीर्णं ॥ सुऽशेवः । नः । मृळयाकुः । अदृप्तऽक्रतुः । अवातः ।
भव । नः । सोम । शं । हृदे ॥ मा । नः । सोम । सं । वीविजः । मा । वि ।
बीभिषथाः । राजन् । मा । नः । हार्दि । त्विषा । वधीः ॥ अव । यत् ।
स्वे । सधऽस्थे । देवानां । दुःऽमतीः । ईक्षे । राजन् । अप । द्विषः ।
सेध । मीढ्वः । अप । स्रिधः । सेध ॥ ३४ ॥ नहि । अन्यं । बळा । अकरं ।
मर्डितारं । शतक्रतोइतिशतऽक्रतो । त्वं । नः । इंद्र । मृळय ॥ यः । नः ।
शश्वत् । पुरा । आविथ । अमृध्रः । वाजऽसातये ॥ ० ॥ किं । अंग ।
रध्रऽचोदनः । सुन्वानस्य । अविता । इत् । असि । कुवित् । सु । इंद्र ।
नः । शकः ॥ इंद्र । प्र । नः । रथं । अव । पश्चात् । चित् । संतं । अद्रिऽ-
वः । पुरस्तात् । एनं । मे । कृधि ॥ हंतोइति । नु । किं । आससे । प्रथमं ।
नः । रथं । कृधि । उपऽमं । वाजऽयु । श्रवः ॥ ३५ ॥ अव । नः ।
वाजऽयुं । रथं । सुऽकरं । ते । किं । इत् । परि । अस्मान् । सु । जिग्युषः ।
कृधि ॥ इंद्र । दृह्यस्व । पूः । असि । भद्रा । ते । एति । निःऽकृतं । इयं ।
धीः । ऋत्वियऽवती ॥ मा । सीं । अवद्ये । आ । भाक् । उर्वी । काष्ठा ।
हितं । धनं । अपऽआवृक्ताः । अरत्नयः ॥ तुरीयं । नाम । यज्ञियं । यदा ।
करः । तत् । उश्मसि । आत् । इत् । पतिः । नः । ओहसे ॥ अवीवृधत् ।
वः । अमृताः । अमंदीत् । एकऽद्यूः । देवाः । उत । याः । च । देवीः ।
तस्मै । ऊँइति । राधः । कृणुत । प्रऽशस्तं ॥ ० ॥ ३६ ॥ इति
अष्टमोऽनुवाकः ॥ ० ॥ क्षुऽमंतं । चित्रं । ग्राभं । सं । गृभाय ।
महाऽहस्ती । दक्षिणेन ॥ विद्म । हि । त्वा । तुविऽकूर्मिं । तुविऽदेष्णं ।
तुविऽमघं । तुविऽमात्रं । अवःऽभिः । नहि । त्वा । शूर । देवाः ।
न । मर्तासः । दित्संतं । भीमं । न । गां । वारयंते ॥ ० ॥ ईशानं ।
वस्वः । स्वऽराजं । न । राधसा । मर्धिषत् । नः ॥ प्र । स्तोषत् ।

उप । गासिषत् । श्रवत् । साम । गीयमानं । अभि । राधसा । जुगुरत् ॥ ३७ ॥ ० ॥ दक्षिणेन । अभि । सव्येन । प्र । मृश । इंद्र । मा । नः । वसोः । निः । भाक् ॥ उप । क्रमस्व । आ । भर । धृषता । धृष्णोइति । जनानां । अदाशूःऽतरस्य । वेदः ॥ इंद्र । यः । ऊँइति । नु । ते । अस्ति । वाजः । विप्रेभिः । सनित्वः । अस्माभिः । सु । तं । सनुहि ॥ सद्यःऽजुवः । ते । वाजाः । अस्मभ्यं । विश्वऽचंद्राः । वशैः । च । मक्षु । जरंते ॥ ३८ ॥

इति षष्ठाष्टके पञ्चमोध्यायः ॥ ५ ॥

## ॥ अथ षष्ठोध्यायः ॥

हरिः ॐ ॥ आ । प्र । द्रव । पराऽवतः । अर्वाऽवतः । च । वृत्रऽहन् । मध्वः । प्रति । प्रऽभर्मणि ॥ ० ॥ सुतासः । मादयिष्णवः । पिब । दधृक् । यथा । ओचिषे ॥ इषा । मंदस्व । आत् । ऊँइति । ते । अरं । वराय । मन्यवे । भुवत् । ते । इंद्र । शं । हृदे ॥ आ । तु । अशत्रोइति । आ । गहि । नि । उक्थानि । च । हूयसे । उपऽमे । रोचने । दिवः ॥ तुभ्यं । अयं । अद्रिऽभिः । सुतः । गोभिः । श्रीतः । मदाय । कं ॥ प्र । सोमः । इंद्र । हूयते ॥ १ ॥ इंद्र । श्रुधि । सु । मे । हवं । अस्मेइति । सुतस्य । गोऽमतः । वि । पीतिं । तृप्तिं । अश्नुहि ॥ यः । इंद्र । चमसेषु । आ । सोमः । चमूषु । ते । सुतः । पिब । इत् । अस्य । त्वं । ईशिषे ॥ यः । अप्ऽसु । चंद्रमाःऽइव । सोमः । चमूषु । ददृशे ॥ ० ॥ यं । ते । श्येनः । पदा । आ । अभरत् । तिरः । रजांसि । अस्पृतं ॥ ० ॥ २ ॥ देवानां । इत् । अवः ।

महत् । तत् । आ । वृणीमहे । वयं । वृष्णां । अस्मभ्यं । ऊतये ॥
ते । नः । संतु । युजः । सदा ॥ ० ॥ वृधासः । च । प्रऽचेतसः ॥
अति । नः । विष्पिता । पुरु । नौभिः । अपः । न । पर्षथ ।
यूयं । ऋतस्य । रथ्यः ॥ वामं । नः । अस्तु । अर्यमन् ।
वामं । वरुण । शंस्यं । वामं । हि । आऽवृणीमहे ॥ वामस्य ।
हि । प्रऽचेतसः । ईशानासः । रिशादसः । न । ईं । आदित्याः ।
अघस्य । यत् ॥ ३ ॥ वयं । इत् । वः । सुऽदानवः । क्षियंतः ।
यांतः । अध्वन् । आ । देवाः । वृधाय । हूमहे ॥ अधि । नः । इंद्र ।
एषां । विष्णोइति । सऽजात्यानां । इत । मरुतः । अश्विना ॥ प्र ।
भ्रातृऽत्वं । सुऽदानवः । अध । द्विता । समान्या । मातुः । गर्भे ।
भरामहे ॥ ० ॥ अध । चित् । वः । उत । ब्रुवे ॥ ४ ॥ प्रेष्ठं । वः ।
अतिथिं । स्तुषे । मित्रंऽइव । प्रियं । अग्निं । रथं । न । वेद्यं ॥
कविंऽइव । प्रऽचेतसं । यं । देवासः । अध । द्विता । नि । मर्त्येषु ।
आऽदधुः ॥ त्वं । यविष्ठ । दाशुषः । नॄन् । पाहि । शृणुधि । गिरः ।
रक्ष । तोकं । उत । त्मना ॥ कया । ते । अग्ने । अंगिरः । ऊर्जः ।
नपात् । उपऽस्तुतिं ॥ वराय । देव । मन्यवे ॥ दाशेम । कस्य ।
मनसा । यज्ञस्य । सहसः । यहोइति । कत् । ऊँइति । वोचे । इदं ।
नमः ॥ ५ ॥ अध । त्वं । हि । नः । करः । विश्वाः । अस्मभ्यं । सुऽ-
क्षितीः । वाजऽद्रविणसः । गिरः ॥ कस्य । नूनं । परीणसः । धियः ।
जिन्वसि । दंऽपते । गोऽसाता । यस्य । ते । गिरः ॥ तं । मर्जयंत ।
सुऽक्रतुं । पुरःऽयावानं । आजिषु । स्वेषु । क्षयेषु । वाजिनं ॥ क्षेति ।
क्षेमेभिः । साधुऽभिः । नकिः । यं । घ्नंति । हंति । यः । अग्ने ।
सुऽवीरः । एधते ॥ ६ ॥ आ । मे । हवं । नासत्या । अश्विना ।
गच्छतं । युवं । मध्वः । सोमस्य । पीतये ॥ इमं । मे । स्तोमं ।
अश्विना । इमं । मे । शृणुतं । हवं ॥ ० ॥ अयं । वां । कृष्णः ।
अश्विना । हवते । वाजिनीवसूइतिवाजिनीऽवसू ॥ ० ॥ शृणुतं ।

जरितुः । हवं । कृष्णस्य । स्तुवतः । नरा ॥ ० ॥ छर्दिः । यंतं ।
अदाभ्यं । विप्राय । सुवते । नरा ॥ ० ॥ ७ ॥ गच्छंतं । दाशुषः ।
गृहं । इत्था । स्तुवतः । अश्विना ॥ ० ॥ युंजाथां । रासभं । रथे ।
वीळुऽअंगे । वृषण्वसूइतिवृषण्ऽवसू ॥ ० ॥ त्रिऽवंधुरेण । त्रिऽवृता ।
रथेन । आ । यातं । अश्विना ॥ ० ॥ नु । मे । गिरः । नसत्या । अश्विना ।
प्र । अवतं । युवं ॥ ० ॥ ८ ॥ उभा । हि । दस्रा । भिषजा । मयःऽ-
भुवा । उभा । दक्षस्य । वचसः । बभूवथुः । ता । वां । विश्वकः ।
हवते । तनूऽकृथे । मा । नः । वि । यौष्टं । सख्या । मुमोचतं ॥
कथा । नूनं । वां । विऽमनाः । उप । स्तवत् । युवं । धियं । ददथुः ।
वस्यःऽइष्टये ॥ ० ॥ युवं । हि । स्म । पुरुऽभुजा । इमं । एधतुं ।
विष्णाप्वे । ददथुः । वस्यःऽइष्टये ॥ ० ॥ उत । त्यं । वीरं । धनऽ-
सां । ऋजीषिणं । दूरे । चित् । संतं । अवसे । हवामहे ॥ यस्य ।
स्वादिष्ठा । सुऽमतिः । पितुः । यथा ॥ ० ॥ ऋतेन । देवः । सविता ।
शंऽआयते । ऋतस्य । शृंगं । उर्विया । वि । पप्रथे । ऋतं । ससाह ।
महि । चित् । पृतन्यतः ॥ ० ॥ ९ ॥ द्युम्नी । वां । स्तोमः । अश्विना ।
क्रिविः । न । सेके । आ । गतं । मध्वः । सुतस्य । सः । दिवि ।
प्रियः । नरा । पातं । गौरौऽइव । इरिणे ॥ पिबतं । घर्मं । मधुऽमंतं ।
अश्विना । आ । बर्हिः । सीदतं । नरा । ता । मंदसाना । मनुषः ।
दुरोणे । आ । नि । पातं । वेदसा । वयः ॥ ० ॥ ता । वर्तिः ।
यातं । उप । वृक्तऽबर्हिषः । जुष्टं । यज्ञं । दिविष्टिषु । पिबतं ।
सोमं ॥ ० ॥ सुऽमत् । ता । ववृधानौ । उप । सुऽस्तुतिं । दिवः ।
गतं । गौरौऽइव । इरिणं ॥ ० ॥ अश्वैभिः । प्रुषितप्सुऽभिः ॥ दस्रा ।
हिरण्यवर्तनीइतिहिरण्यऽवर्तनी । शुभः । पतीइति ॥ ० ॥ विपन्यवः ।
विप्रासः । वाजऽसातये ॥ ० ॥ पुरुऽदंससा । धिया । अश्विना ।
श्रुष्टी । आ । पर् । गतं ॥ १० ॥ तं । वः । दस्मं । ऋतिऽसहं । वसोः ।
मंदानं । अंधसः । अभि । वत्सं । न । स्वसरेषु । धेनवः ।

इंद्रं । गीःऽभिः । नवामहे ॥ द्युक्षं । सुऽदानुं । तविषीभिः ।
आऽवृतं । गिरिं । न । पुरुऽभोजसं । क्षुऽमंतं । वाजं । शतिनं ।
सहस्रिणं । मक्षु । गोऽमंतं । ईमहे ॥ न । त्वा । बृहंतः ।
अद्रयः । वरंते । इंद्र । वीळवः । यत् । दित्ससि । स्तुवते । माऽ-
वते । वसु । नकिः । तत् । आ । मिनाति । ते ॥ योद्धा । असि ।
क्रत्वा । शवसा । उत । दंसना । विश्वा । जाता । अभि । मज्मना ।
आ । त्वा । अयं । अर्कः । ऊतये । ववर्तति । यं । गोतमाः ।
अजीजनन् ॥ प्र । हि । रिरिक्षे । ओजसा । दिवः । अंतेभ्यः । परि ।
न । त्वा । विव्याच । रजः । इंद्र । पार्थिवं । अनु । स्वधां । ववक्षिथ ॥
नकिः । परिष्टिः । मघऽवन् । मघस्य । ते । यत् । दाशुषे । दशस्यसि ।
अस्माकं । बोधि । उचथस्य । चोदिता । मंहिष्ठः । वाजऽसातये ॥ ११ ॥
बृहत् । इंद्राय । गायत । मरुतः । वृत्रहंऽतमं । येन । ज्योतिः ।
अजनयन् । ऋतऽवृधः । देवं । देवाय । जागृवि ॥ अप । अधमत् ।
अभिऽशस्तीः । अशस्तिऽहा । अथ । इंद्रः । द्युम्नी । आ । अभवत् । देवाः ।
ते । इंद्र । सख्याय । येमिरे । बृहद्भानोइतिबृहत्ऽभानो । मरुत्ऽगण ॥
प्र । वः । इंद्राय । बृहते । मरुतः । ब्रह्म । अर्चत । वृत्रं । हनति ।
वृत्रऽहा । शतऽक्रतुः । वज्रेण । शतऽपर्वणा ॥ अभि । प्र । भर ।
धृषता । धृषत्ऽमनः । श्रवः । चित् । ते । असत् । बृहत् । अर्षंतु ।
आपः । जवसा । वि । मातरः । हनः । वृत्रं । जय । स्व१रितिस्वः ॥
यत् । जायथाः । अपूर्व्य । मघऽवन् । वृत्रऽहत्याय । तत् । पृथिवीं ।
अप्रथयः । तत् । अस्तभ्नाः । उत । द्यां ॥ तत् । ते । यज्ञः ।
अजायत । तत् । अर्कः । उत । हस्कृतिः ॥ तत् । विश्वं । अभिऽभूः ।
असि । यत् । जातं । यत् । च । जंतवं ॥ आमासु । पक्वं । ऐरयः ।
आ । सूर्यं । रोहयः । दिवि । घर्मं । न । साम । तपत । सुवृक्तिऽभिः ।
जुष्टं । गिर्वणसे । बृहत् ॥ १२ ॥ आ । नः । विश्वासु । हव्यः । इंद्रः ।
समत्ऽसु । भूषतु । उप । ब्रह्माणि । सवनानि । वृत्रऽहा । परमऽज्याः ।

ऋचीषमः ॥ त्वं । दाता । प्रथमः । राधसां । असि । असि । सत्यः । ईशानऽकृत् । तुविऽद्युम्नस्य । युज्या । आ । वृणीमहे । पुत्रस्य । शवसः । महः । ब्रह्म । ते । इंद्र । गिर्वणः । क्रियंते । अनतिऽद्भुता । इमा । जुषस्व । हरिऽअश्व । योजना । इंद्र । या । ते । अमन्महि ॥ त्वं । हि । सत्यः । मघऽवन् । अनानतः । वृत्रा । भूरि । निऽऋंजसे । सः । त्वं । शविष्ठ । वज्रऽहस्त । दाशुषे । अर्वाचं । रयिं । आ । कृधि ॥ त्वं । इंद्र । यशाः । असि । ऋजीषी । शवसः । पते । त्वं । वृत्राणि । हंसि । अप्रतीनि । एकः । इत् । अनुत्ता । चर्षणिऽधृता ॥ तं । ऊँइति । त्वा । नूनं । असुर । प्रऽचेतसं । राधः । भागंऽइव । ईमहे । महीऽइव । कृत्तिः । शरणा । ते । इंद्र । प्र । ते । सुम्ना । नः । अश्नवन् ॥ १३ ॥ कन्या । वाः । अवऽयती । सोमं । अपि । स्रुता । अविदत् । अस्तं । भरंती । अब्रवीत् । इंद्राय । सुनवै । त्वा । शक्राय । सुनवै । त्वा । असौ । यः । एषि । वीरकः । गृहंऽगृहं । विऽचाकशत् । इमं । जंभऽसुतं । पिब ॥ ० ॥ आ । चन । त्वा । चिकित्सामः । अधि । चन । त्वा । न । इमसि ॥ शनैःऽइव । शनकैःऽइव । इंद्राय । इंदोइति । परि । स्रव ॥ कुवित् । शकत् । कुवित् । करत् । कुवित् । नः । वस्यसः । करत् । कुवित् । पतिऽद्विषः । यतीः । इंद्रेण । संऽगमामहै ॥ इमानि । त्रीणि । विष्टपा । तानि । इंद्र । वि । रोहय । शिरः । ततस्य । उर्वरां । आत् । इदं । मे । उप । उदरे ॥ असौ । च । या । नः । उर्वरा । आत् । इमां । तन्वं । मम । अथोइति । ततस्य । यत् । शिरः । सर्वा । ता । रोमशा । कृधि ॥ खे । रथस्य । खे । अनसः । खे । युगस्य । शतक्रतोइतिशतऽक्रतो । अपालां । इंद्र । त्रिः । पूत्वी । अकृणोः । सूर्यऽत्वचं ॥ १४ ॥ पांत । आ । वः । अंधसः ॥ ० ॥ विश्वऽसहं । शतऽक्रतुं । मंहिष्ठं । चर्षणीनां ॥ पुरुऽहूतं । पुरुऽस्तुतं । गाथान्यं । सनऽश्रुतं ॥ इंद्रः । इति । ब्रवीतन ॥ इंद्रः । इत् । नः । महानां ।

दाता । वाजानां । नृतुः । महान् । अभिऽज्ञु । आ । यमत् ॥ अपात् ।
ऊँइति । शिप्री । अंधसः । सुऽदक्षस्य । प्रऽहोषिणः । इंदोः । इंद्रः । यवऽ-
आशिरः ॥ ० ॥ अर्चत । इंद्रं । सोमस्य । पीतये ॥ तत् । इत् । हि ।
अस्य । वर्धनं ॥ १५ ॥ अस्य । पीत्वा । मदानां । देवः । देवस्य ।
ओजसा ॥ विश्वा । अभि । भुवना । भुवत् । त्वं । ऊँइति । वः ।
सत्राऽसहं । विश्वासु । गीर्षु । आऽयतं । आ । च्यवयसि । ऊतये ॥
युध्मं । संतं । अनर्वाणं । सोमऽपां । अनपऽच्युतं । नरं । अवार्यऽ-
क्रतुं ॥ शिक्ष । नः । इंद्र । रायः । आ । पुरु । विद्वान् । ऋचीषम ॥
अव । नः । पार्ये । धने ॥ अतः । चित् । इंद्र । नः । उप । आ ।
याहि । शतऽवाजया । इषा । सहस्रऽवाजया ॥ १६ ॥ अयाम ।
धीऽवतः । धियः । अर्वत्ऽभिः । शक्र । गोऽदरे । जयेम । पृत्ऽसु ।
वज्रिऽवः ॥ वयं । ऊँइति । त्वा । शतक्रतोइतिशतऽक्रतो । गावः ।
न । यवसेषु । आ । उक्थेषु । रणयामसि ॥ विश्वाः । हि । मर्त्यऽ-
त्वना । अनुऽकामा । शतक्रतोइतिशतऽक्रतो ॥ अगन्म । वज्रिन् ।
आऽशसः ॥ त्वेइति । सु । पुत्र । शवसः । अवृत्रन् । कामऽ-
कातयः ॥ न । त्वां । इंद्र । अति । रिच्यते ॥ सः । नः ।
वृषन् । सनिष्ठया । सं । घोरया । द्रवित्न्वा । धिया । अविड्ढि ।
पुरंऽध्या ॥ १७ ॥ यः । ते । नूनं । शतक्रतोइतिशतऽक्रतो । इंद्र ।
द्युम्निऽतमः । मदः । तेन । नूनं । मदे । मदेरितिमदेः ॥ यः । ते ।
चित्रश्रवःऽतमः । यः । इंद्र । वृत्रहन्ऽतमः । यः । ओजःऽदातमः ।
मदः ॥ विद्म । हि । यः । ते । अद्रिऽवः । त्वाऽदत्तः । सत्य ।
सोमऽपाः । विश्वासु । दस्म । कृष्टिषु ॥ इंद्राय । मद्वने । सुतं । परि ।
स्तोभंतु । नः । गिरः । अर्कं । अर्चंतु । कारवः ॥ यस्मिन् । विश्वाः ।
अधि । श्रियः । रणंति । सप्त । संऽसदः । इंद्रं । सुते । हवामहे ॥ १८ ॥
॥ ० ॥ समुद्रऽइव । सिंधवः ॥ ० ॥ विव्यक्थ । महिना । वृषन् ।
भक्षं । सोमस्य । जागृवे । यः । इंद्र । जठरेषु । ते ॥ अरं । इंद्र ।

कुक्षये । सोमः । भवतु । वृत्रऽहन् । अरं । धामऽभ्यः । इंद्वः । अरं । अश्वाय । गायति । श्रुतऽकक्षः । अरं । गवे । अरं । इंद्रस्य । धाम्ने ॥ अरं । हि । स्म । सुतेषु । नः । सोमेषु । इंद्र । भूषसि । अरं । ते । शक्र । दावने ॥ १९ ॥ पराकात्तात् । चित् । अद्रिऽवः । त्वां । नक्षंत । नः । गिरः । अरं । गमाम । ते । वयं ॥ एव । हि । असि । वीरऽयुः । एव । शूरः । उत । स्थिरः ॥ एव । ते । राध्यं । मनः ॥ एव । रातिः । तुविऽमघ । विश्वेभिः । धायि । धातृऽभिः । अध । चित् । इंद्र । मे । सचा ॥ मोइति । सु । ब्रह्माऽइव । तंद्रयुः । भुवः । वाजानां । पते । मत्स्व । सुतस्य । गोऽमतः ॥ मा । नः । इंद्र । अभि । आऽदिशः । सूरः । अक्तुषु । आ । यमन् । त्वा । युजा । वनेम । तत् ॥ त्वया । इत् । इंद्र । युजा । वयं । प्रति । ब्रुवीमहि । स्पृधः । त्वं । अस्माकं । तव । स्मसि ॥ त्वां । इत् । हि । त्वाऽयवः । अनुऽनोनुवतः । चरान् । सखायः । इंद्र । कारवः ॥ २० ॥ उत् । घ । इत् । अभि । श्रुतऽमघं । वृषभं । नर्यऽअपसं । अस्तारं । एषि । सूर्य ॥ नव । यः । नवतिं । पुरः । बिभेद । बाहुऽओजसा । अहिं । च । वृत्रऽहा । अवधीत् ॥ सः । नः । इंद्रः । शिवः । सखा । अश्वऽवत् । गोऽमत् । यवऽमत् । उरुधाराऽइव । दोहते ॥ यत् । अद्य । कत् । च । वृत्रऽहन् । उत्ऽअगाः । अभि । सूर्य । सर्वं । तत् । इंद्र । ते । वशे ॥ यत् । वा । प्रऽवृद्ध । सत्ऽपते । न । मरै । इति । मन्यसे । उतोइति । तत् । सत्यं । इत् । तव ॥ २१ ॥ ये । सोमासः । पराऽवति । ये । अर्वाऽवति । सुन्विरे । सर्वान् । तान् । इंद्र । गच्छसि ॥ तं । इंद्रं । वाजयामसि । महे । वृत्राय । हंतवे । सः । वृषा । वृषभः । भुवत् ॥ इंद्रः । सः । दामने । कृतः । ओजिष्ठः । सः । मदे । हितः । द्युम्नी । श्लोकी । सः । सोम्यः ॥ गिरा । वज्रः । न । संऽभृतः । सऽबलः । अनपऽच्युतः । ववक्षे । ऋष्वः । अस्तृतः ॥ दुःऽगे । चित् । नः । सुऽगं । कृधि । गृणानः । इंद्र ।

गिर्वणः । त्वं । च । मघऽवन् । वशः ॥ २२ ॥ यस्य । ते । नु । चित् । आऽदिशं । न । मिनंति । स्वऽराज्यं । न । देवः । न । अधिऽगुः । जनः । अध । ते । अप्रतिऽस्कुतं । देवीइति । शुष्मं । सपर्यतः । उभेइति । सुऽशिप्र । रोदसीइति ॥ त्वं । एतत् । अधारयः । कृष्णासु । रोहिणीषु । च । परुष्णीषु । रुशत् । पयः ॥ वि । यत् । अहेः । अध । त्विषः । विश्वे । देवासः । अक्रमुः । विदत् । मृगस्य । तान् । अमः ॥ आत् । ऊँइति । मे । निऽवरः । भुवत् । वृत्रऽहा । अदिष्ट । पौंस्यं ॥ अजातऽशत्रुः । अस्तृतः ॥ २३ ॥ श्रुतं । वः । वृत्रहन्ऽतमं । प्र । शर्धं । चर्षणीनां । आ । शुषे । राधसे । महे ॥ अया । धिया । च । गव्यऽया । पुरुऽनामन् । पुरुऽस्तुत । यत् । सोमेऽसोमे । आ । अभवः ॥ बोधित्ऽमनाः । इत् । अस्तु । नः । वृत्रऽहा । भूरिऽआसुतिः । शृणोतु । शक्रः । आऽशिषं ॥ कया । त्वं । नः । ऊत्या । अभि । प्र । मंदसे । वृषन् । कया । स्तोतृऽभ्यः । आ । भर ॥ कस्य । वृषा । सुते । सचा । नियुत्वान् । वृषभः । रणत् । वृत्रऽहा । सोमऽपीतये ॥ २४ ॥ अभि । सु । नः । त्वं । रयिं । मंदसानः । सहस्रिणं । प्रऽयंता । बोधि । दाशुषे ॥ पत्नीऽवंतः । सुताः । इमे । उशंतः । यंति । वीतये । अपां । जग्मिः । निऽचुंपुणः ॥ इष्टाः । होत्राः । असृक्षत । इंद्रं । वृधासः । अध्वरे । अच्छ । अवऽभृथं । ओजसा ॥ ० ॥ तुभ्यं । सोमाः । सुताः । इमे । स्तीर्णं । बर्हिः । विभावसोइतिविभाऽवसो । स्तोतृऽभ्यः । इंद्रं । आ । वह ॥ २५ ॥ आ । ते । दक्षं । वि । रोचना । दधत् । रत्ना । वि । दाशुषे । स्तोतृऽभ्यः । इंद्रं । अर्चत ॥ आ । ते । दधामि । इंद्रियं । उक्था । विश्वा । शतक्रतोइतिशतऽक्रतो । स्तोतृऽभ्यः । इंद्र । मृळय ॥ भद्रंऽभद्रं । नः । आ । भर । इषं । ऊर्जं । शतक्रतोइतिशतऽक्रतो ॥ ० ॥ सः । नः । विश्वानि । आ । भर । सुवितानि । शतक्रतोइतिशतऽक्रतो ॥ ० ॥ सुतऽवंतः । हवामहे ॥ ० ॥ २६ ॥ उप । नः ।

हरिऽभिः । सुतं । याहि । मदानां । पते ॥ ० ॥ द्विता । यः । वृत्रहन्ऽतमः । विदे । इंद्रः । शतऽक्रतुः ॥ ० ॥ त्वं । हि । वृत्रऽहन् । एषां । पाता । सोमानां । असि ॥ ० ॥ इंद्रः । इषे । ददातु । नः । ऋभुक्षणं । ऋभुं । रयिं । वाजी । ददातु । वाजिनं ॥ २७ ॥ इति नवमोऽनुवाकः ॥ गौः । धयति । मरुतां । श्रवस्युः । माता । मघोनां ॥ युक्ता । वह्निः । रथानां ॥ यस्याः । देवाः । उपऽस्थे । व्रता । विश्वे । धारयंते । सूर्यामासा । दृशे । कं ॥ ० ॥ मरुतः । सोमऽपीतये ॥ अस्ति । सोमः । अयं । सुतः । पिबंति । अस्य । मरुतः ॥ उत । स्वऽराजः । अश्विना ॥ पिबंति । मित्रः । अर्यमा । तना । पूतस्य । वरुणः । त्रिऽसधस्थस्य । जाऽवंतः ॥ ० ॥ जोषं । आ । इंद्रः । सुतस्य । गोऽमंतः । प्रातः । होताऽइव । मत्सति ॥ २८ ॥ कत् । अतिविषत । सूरयः । तिरः । आपःऽइव । स्रिधः । अर्षति । पूतऽदक्षसः ॥ कत् । वः । अद्य । महानां । देवानां । अवः । वृणे । त्मना । च । दस्मऽवर्चसां ॥ आ । ये । विश्वा । पार्थिवानि । पप्रथन् । रोचना । दिवः । मरुतः । सोमऽपीतये ॥ त्यान् । नु । पूतऽदक्षसः । दिवः । वः । मरुतः । हुवे ॥ ० ॥ त्या । नु । ये । वि । रोदसीइति । तस्तभुः । मरुतः । हुवे ॥ ० ॥ त्यं । नु । मारुतं । गणं । गिरिऽस्थां । वृषणं । हुवे ॥ ० ॥ ॥ २९ ॥ आ । त्वा । गिरः । रथीःऽइव । अस्थुः । सुतेषु । गिर्वणः । अभि । त्वा । सं । अनूषत । इंद्र । वत्सं । न । मातरः ॥ आ । त्वा । शुक्राः । अचुच्यवुः । सुतासः । इंद्र । गिर्वणः । पिब । तु । अस्य । अंधसः । इंद्र । विश्वासु । ते । हितं । पिब । सोमं । मदाय । कं । इंद्र । श्येनऽआभृतं । सुतं ॥ त्वं । हि । शश्वतीनां । पतिः । राजा । विशां । असि ॥ श्रुधि । हवं । तिरश्चाः । इंद्र । यः । त्वा । सपर्यति । सुऽवीर्यस्य । गोऽमतः । रायः । पूर्धि । महान् । असि । इंद्र । यः । ते । नवीयसीं । गिरं । मंद्रां । अजीजनत् । चिकित्वित्ऽमनसं । धियं । प्रत्नां । ऋतस्य । पिप्युषीं ॥ ३० ॥ तं । ऊँइति । स्तवाम

यं । गिरः । इंद्रं । उक्थानि । ववृधुः । पुरूणि । अस्य । पौंस्या ।
सिसासंतः । वनामहे ॥ ० ॥ शुद्धं । शुद्धेन । साम्ना । शुद्धः । उक्थैः ।
ववृध्वांसं । शुद्धः । आशीःऽवान् । ममत्तु ॥ इंद्र । शुद्धः । नः । आ ।
गहि । शुद्धः । शुद्धाभिः । ऊतिऽभिः । शुद्धः । रयिं । नि । धारय ।
शुद्धः । ममद्धि । सोम्यः ॥ इंद्र । शुद्धः । हि । नः । रयिं । शुद्धः ।
रत्नानि । दाशुषे । शुद्धः । वृत्राणि । जिघ्नसे । शुद्धः । वाजं ।
सिसाससि ॥ ३१ ॥ अस्मै । उषसः । आ । अतिरंत । यामं । इंद्राय ।
नक्तं । ऊर्म्याः । सुऽवाचः । अस्मै । आपः । मातरः । सप्त । तस्थुः ।
नृऽभ्यः । तराय । सिंधवः । सुऽपाराः ॥ अतिऽविद्धा । विथुरेण ।
चित् । अस्त्रा । त्रिः । सप्त । सानु । संऽहिता । गिरीणां । न ।
तत् । देवः । न । मर्त्यः । तुतुर्यात् । यानि । प्रऽवृद्धः । वृषभः ।
चकार ॥ इंद्रस्य । वज्रः । आयसः । निऽमिश्लः । इंद्रस्य । बाह्वोः ।
भूयिष्ठं । ओजः । शीर्षन् । इंद्रस्य । क्रतवः । निरेके । आसन् । आ ।
ईषंत । श्रुत्यै । उपाके ॥ मन्ये । त्वा । यज्ञियं । यज्ञियानां । मन्ये ।
त्वा । च्यवनं । अच्युतानां । मन्ये । त्वा । सत्वनां । इंद्र । केतुं ।
मन्ये । त्वा । वृषभं । चर्षणीनां ॥ आ । यत् । वज्रं । बाह्वोः । इंद्र ।
धत्से । मदऽच्युतं । अहये । हंतवै । ऊँइति । प्र । पर्वताः ।
अनवंत । प्र । गावः । प्र । ब्रह्माणः । अभिऽनक्षंतः । इंद्रं ॥ ३२ ॥
तं । ऊं इति । स्तवाम । यः । इमा । जजान । विश्वा । जातानि ।
अवराणि । अस्मात् । इंद्रेण । मित्रं । दिधिषेम । गीःऽभिः । उपो-
इति । नमःऽभिः । वृषभं । विशेम ॥ वृत्रस्य । त्वा । श्वसथात् ।
ईषमाणाः । विश्वे । देवाः । अजहुः । ये । सखायः । मरुत्ऽभिः ।
इंद्र । सख्यं । ते । अस्तु । अथ । इमाः । विश्वाः । पृतनाः ।
जयासि ॥ त्रिः । षष्टिः । त्वा । मरुतः । ववृधानाः । उस्राःऽइव ।
राशयः । यज्ञियासः । उप । त्वा । आ । इमः । कृधि । नः । भागऽ-
धेयं । शुष्मं । ते । एना । हविषा । विधेम ॥ तिग्मं । आयुधं ।

मरुतां । अनीकं । कः । ते । इंद्र । प्रति । वज्रं । दधर्ष । अनायुधासः । असुराः । अदेवाः । चक्रेण । तान् । अप । वप । ऋजीषिन् ॥ मह्ने । उग्राय । तवसे । सुऽवृक्तिं । प्र । ईरय । शिवऽतमाय । पश्वः । गिर्वाहसे । गिरः । इंद्राय । पूर्वीः । धेहि । तन्वे । कुवित् । अंग । वेदत् ॥ ३३ ॥ उक्थऽवाहसे । विऽभ्वे । मनीषां । द्रुणा । न । पारं । ईरय । नदीनां । नि । स्पृश । धिया । तन्वि । श्रुतस्य । जुष्टऽतरस्य ॥ ० ॥ तत् । विविड्ढि । यत् । ते । इंद्रः । जुजोषत् । स्तुहि । सुऽस्तुतिं । नमसा । आ । विवास ॥ उप । भूष । जरितः । मा । रुवण्यः । श्रवयं । वाचं ॥ ० ॥ अव । द्रप्सः । अंशुऽमतीं । अतिष्ठत् । इयानः । कृष्णः । दशऽभिः । सहस्रैः । आवत् । तं । इंद्रः । शच्या । धमंतं । अप । स्नेहितीः । नृऽमनाः । अधत्त ॥ द्रप्सं । अपश्यं । विषुणे । चरंतं । उपऽह्वरे । नद्यः । अंशुऽमत्याः । नभः । न । कृष्णं । अवतस्थिऽवांसं । इष्यामि । वः । वृषणः । युध्यत । आजौ ॥ अध । द्रप्सः । अंशुऽमत्याः । उपऽस्थे । अधारयत् । तन्वं । तित्विषाणः । विशः । अदेवीः । अभि । आऽचरंतीः । बृहस्पतिना । युजा । इंद्रः । ससहे ॥ ३४ ॥ ० ॥ सप्तऽभ्यः । जायमानः । अशत्रुऽभ्यः । अभवः । शत्रुः । इंद्र । गूळ्हे इति । द्यावापृथिवी इति । अनु । अविंदः । विभुमत्ऽभ्यः । भुवनेभ्यः । रणं । धाः ॥ ० ॥ अप्रतिऽमानं । ओजः । वज्रेण । वज्रिन् । धृषितः । जघंथ । त्वं । शुष्णस्य । अव । अतिरः । वधत्रैः । त्वं । गाः । इंद्र । शच्या । इत् । अविंदः ॥ ० ॥ वृषभ । चर्षणीनां । घनः । वृत्राणां । तविषः । बभूथ । त्वं । सिंधून् । असृजः । तस्तभानान् । त्वं । अपः । अजयः । दासऽपत्नीः ॥ सः । सुऽक्रतुः । रणिता । यः । सुतेषु । अनुत्तऽमन्युः । यः । अहाऽइव । रेवान् ॥ ० ॥ नर्य । अपांसि । कर्ता । सः । वृत्रऽहा । प्रति । इत् । अन्यं । आहुः ॥ ० ॥ चर्षणिऽधृत् । तं । सुऽस्तुत्या । हव्यं । हुवेम । सः । प्रऽअविता । मघऽवा । नः ।

अधिऽवक्ता । सः । वाजस्य । श्रवस्यस्य । दाता ॥ ० ॥ ऋभुक्षाः । सद्यः । जज्ञानः । हव्यः । बभूव । कृण्वन् । अपांसि । नर्या । पुरूणि । सोमः । न । पीतः । हव्यः । सखिऽभ्यः ॥ ३५ ॥ याः । इंद्र । भुजः । आ । अभरः । स्वःऽवान् । असुरेभ्यः । स्तोतारं । इत् । मघऽवन् । अस्य । वर्धय । ये । च । त्वे इति । वृक्तऽबर्हिषः ॥ यं । इंद्र । दधिषे । त्वं । अश्वं । गां । भागं । अव्ययं ॥ यजमाने । सुन्वति । दक्षिणाऽवति । तस्मिन् । तं । धेहि । मा । पणौ । यः । इंद्र । सस्ति । अव्रतः । अनुऽस्वापं । अदेवऽयुः ॥ स्वैः । सः । एवैः । मुमुरत् । पोष्यं । रयिं । सनुतः । धेहि । तं । ततः ॥ ० ॥ अतः । त्वा । गीःऽभिः । द्युऽगत् । इंद्र । केशिऽभिः । सुतऽवान् । आ । विवासति । यत् । पार्थिवे । सदने । वृत्रहन्ऽतम । यत् । अंतरिक्षे । आ । गहि ॥ ३६ ॥ सः । नः । सोमेषु । सोमऽपाः । सुतेषु । शवसः । पते । मादयस्व । राधसा । सूनृताऽवता । इंद्र । राया । परीणसा ॥ मा । नः । इंद्र । परा । वृणक् । भव । नः । सधऽमाद्यः । त्वं । नः । ऊती । त्वं । इत् । नः । आप्यं ॥ ० ॥ अस्मे इति । इंद्र । सचा । सुते । नि । सद । पीतये । मधु । कृधि । जरित्रे । मघऽवन् । अवः । महत् ॥ ० ॥ न । त्वा । देवासः । आशत । न । मर्त्यासः । अद्रिऽवः । विश्वा । जातानि । शवसा । अभिऽभूः । असि ॥ ० ॥ विश्वाः । पृतनाः । अभिऽभूतरं । नरं । सऽजूः । ततक्षुः । इंद्रं । जजनुः । च । राजसे । क्रत्वा । वरिष्ठं । वरे । आऽमुरिं । उत । उग्रं । ओजिष्ठं । तवसं । तरस्विनं ॥ ३७ ॥ सं । ईं । रेभासः । अस्वरन् । इंद्रं । सोमस्य । पीतये । स्वःऽपतिं । यत् । ईं । वृधे । धृतऽव्रतः । हि । ओजसा । सं । ऊतिऽभिः ॥ नेमिं । नमंति । चक्षसा । मेषं । विप्राः । अभिऽस्वरा । सुऽदीतयः । वः । अद्रुहः । अपि । कर्णे । तरस्विनः । सं । ऋक्वऽभिः ॥ तं । इंद्रं । जोहवीमि । मघऽवानं । उग्रं । सत्रा । दधानं । अप्रतिऽस्कुतं ।

शवांसि । मंहिष्ठः । गीःऽभिः । आ । च । यज्ञियः । ववर्तत् । राये । नः । विश्वा । सुऽपथा । कृणोतु । वज्री ॥ त्वं । पुरः । इंद्र । चिकित् । एनाः । वि । ओजसा । शविष्ठ । शक्र । नाशयध्यै । त्वत् । विश्वानि । भुवनानि । वज्रिन् । द्यावा । रेजेतेइति । पृथिवीइति । च । भीषा ॥ तत् । मा । ऋतं । इंद्र । शूर । चित्र । पातु । अपः । न । वज्रिन् । दुःऽइता । अति । पर्षि । भूरि ॥ ० ॥ विश्वऽस्तयस्य । स्पृहयाय्यस्य । राजन् ॥ ३८ ॥

इति षष्ठाष्टके षष्ठोध्यायः ॥ ६ ॥





## ॥ अथ सप्तमोध्यायः ॥

हरिः ॐ ॥ इंद्राय । साम । गायत । विप्राय । बृहते । बृहत् । धर्मऽकृते । विपःऽचिते । पनस्यवे ॥ त्वं । इंद्र । अभिऽभूः । असि । त्वं । सूर्यं । अरोचयः । विश्वऽकर्मा । विश्वऽदेवः । महान् । असि ॥ विऽभ्राजन् । ज्योतिषा । स्वः । अगच्छः । रोचनं । दिवः । देवाः । ते । इंद्र । सख्याय । येमिरे ॥ आ । इंद्र । नः । गधि । प्रियः । सत्राऽजित् । अगोह्यः । गिरिः । न । विश्वतः । पृथुः । पतिः । दिवः ॥ अभि । हि । सत्य । सोमऽपाः । उभेइति । बभूथ । रोदसीइति । इंद्र । असि । सुन्वतः । वृधः । पतिः । दिवः ॥ ० । इंद्र । दर्ता । पुरां । असि । हंता । दस्योः । मनोः । वृधः । पतिः । दिवः ॥ १ ॥ अध । हि । इंद्र । गिर्वणः । उप । त्वा । कामान् । महः । ससृज्महे । उदाऽइव । यंतः । उदऽभिः ॥ वाः । न । त्वा । यव्याभिः । वर्धति । शूर । ब्रह्माणि । ववृध्वांसं ।

चित् । अद्रिऽवः । दिवेऽदिवे ॥ युंजंति । हरीइति । इषिरस्य । गाथया । उरौ । रथे । उरुऽयुगे । इंद्रऽवाहा । वचःऽयुजा ॥ त्वं । नः । इंद्र । आ । भर । ओजः । नृम्णं । शतक्रतोइतिशतऽक्रतो । विऽचर्षणे । आ । वीरं । पृतनाऽसहं ॥ त्वं । हि । नः । पिता । वसोइति । त्वं । माता । शतक्रतोइतिशतऽक्रतो । वभूविथ । अध । ते । सुम्नं । ईमहे ॥ त्वां । शुष्मिन् । पुरुऽहूत । वाजऽयंतं । उप । ब्रुवे । शतक्रतोइतिशतऽक्रतो । सः । नः । रास्व । सुऽवीर्यं ॥ २ ॥ त्वां । इंद्र । ह्यः । नरः । अपीप्यन् । वज्रिन् । भूर्णयः । सः । इंद्र । स्तोमऽवाहसां । इह । श्रुधि । उप । स्वसरं । आ । गहि ॥ मत्स्व । सुऽशिप्र । हरिऽवः । तत् । ईमहे । त्वेइति । आ । भूषंति । वेधसः । तव । श्रवांसि । उपऽमानि । उक्थ्या । सुतेषु । इंद्र । गिर्वणः ॥ श्रायंतःऽइव । सूर्यं । विश्वा । इत् । इंद्रस्य । भक्षत । वसूनि । जाते । जनमाने । ओजसा । प्रति । भागं । न । दीधिम ॥ अनर्शऽरातिं । वसुऽदां । उप । स्तुहि ॥ ० ॥ सः । अस्य । कामं । विधतः । न । रोषति । मनः । दानाय । चोदयन् ॥ त्वं । इंद्र । प्रऽतूर्तिषु । अभि । विश्वाः । असि । स्पृधः । अशास्तिऽहा । जनिता । विश्वऽतूः । असि । त्वं । तूर्य । तरुष्यतः ॥ अनु । ते । शुष्मं । तुरयंतं । ईयतुः । क्षोणीइति । शिशुं । न । मातरा । विश्वाः । ते । स्पृधः । श्नथयंत । मन्यवे । वृत्रं । यत् । इंद्र । तूर्वसि ॥ इतः । ऊती । वः । अजरं । प्रऽहेतारं । अप्रऽहितं । आशुं । जेतारं । हेतारं । रथिऽतमं । अतूर्तं । तुग्रयऽवृधं ॥ इष्कर्तारं । अनिःऽकृतं । सहःऽकृतं । शतंऽऊतिं । शतऽक्रतुं । समानं । इंद्रं । अवसे । हवामहे । वसवानं । वसुऽजुवं ॥ ३ ॥ अयं । ते । एमि । तन्वा । पुरस्तात् । विश्वे । देवाः । अभि । मा । यंति । पश्चात् । यदा । मह्यं । दीधरः । भागं । इंद्र । आत् । इत् । मया । कृणवः । वीर्याणि ॥ दधामि । ते । मधुनः । भक्षं । अग्रे । हितः । ते । भागः । सुतः । अस्तु । सोमः । असः ।

च । त्वं । दक्षिणतः । सखा । मे । अध । वृत्राणि । जंघनाव । भूरि ॥ प्र । सु । स्तोमं । भरत । वाजऽयंतः । इंद्राय । सत्यं । यदि । सत्यं । अस्ति । न । इंद्रः । अस्ति । इति । नेमः । ऊँ इति । त्वः । आह । कः । ईं । ददर्श । कं । अभि । स्तवाम । अयं । अस्मि । जरितरिति । पश्य । मा । इह । विश्वा । जातानि । अभि । अस्मि । मह्ना । ऋतस्य । मा । प्रऽदिशः । वर्धयंति । आऽदर्दिरः । भुवना । दर्दरीमि । आ । यत् । मा । वेनाः । अरुहन् । ऋतस्य । एकं । आसीनं । हर्यतस्य । पृष्ठे । मनः । चित् । मे । हृदे । आ । प्रति । अवोचत् । अचिक्रदन् । शिशुऽमंतः । सखायः ॥ ० ॥ या । चकर्थ । मघऽवन् । इंद्र । सुन्वते । पारावतं । यत् । पुरुऽसंभृतं । वसु । अपऽअवृणोः । शरभाय । ऋषिऽबंधवे ॥ ४ ॥ प्र । नूनं । धावत । पृथक् । न । इह । यः । वः । अवावरीत् । नि । सीं । वृत्रस्य । मर्मणि । वज्रं । इंद्रः । अपीपतत् ॥ मनःऽजवाः । अयमानः । आयसीं । अतरत् । पुरं । दिवं । सुऽपर्णः । गत्वाय । सोमं । वज्रिणे । आ । अभरत् । समुद्रे । अंतरिति । शयते । उद्ना । वज्रः । अभिऽवृतः । भरंति । अस्मै । संऽयतः । पुरःऽप्रस्रवणाः । बलिं ॥ यत् । वाक् । वदंती । अविऽचेतनानि । राष्ट्री । देवानां । निऽससाद । मंद्रा । चतस्रः । ऊर्जं । दुदुहे । पयांसि । क्व । स्वित् । अस्याः । परमं । जगाम ॥ देवीं । वाचं । अजनयंत । देवाः । तां । विश्वऽरूपाः । पशवः । वदंति । सा । नः । मंद्रा । इषं । ऊर्जं । दुहाना । धेनुः । वाक् । अस्मान् । उप । सुऽस्तुता । आ । एतु ॥ ० ॥ द्यौः । देहि । लोकं । वज्राय । विऽस्कभे । हनाव । वृत्रं । रिणचाव । सिंधून् । इंद्रस्य । यंतु । प्रऽसवे । विऽसृष्टाः ॥ ५ ॥ ऋधक् । इत्था । सः । मर्त्यः । शशमे । देवऽतातये । यः । नूनं । मित्रावरुणौ । अभिष्टये । आऽचक्रे । हव्यऽदातये ॥ वर्षिष्ठऽक्षत्रौ । उरुऽचक्षसा । नरा । राजाना । दीर्घश्रुत्ऽतमा । ता । बाहुता । न । दंसना ।

रथ्यतः । साकं । सूर्यस्य । रश्मिऽभिः ॥ प्र । यः । वां । मित्रावरुणा ।
अजिरः । दूतः । अद्रवत् । अयःऽशीर्षा । मदेऽरघुः । न । यः ।
संऽपृच्छे । न । पुनः । हवीतवे । न । संऽवादाय । रमते । तस्मात् ।
नः । अद्य । संऽऋतेः । उरुष्यतं । बाहुऽभ्यां । नः । उरुष्यतं ॥ प्र ।
मित्राय । प्र । अर्यम्णे । सचथ्यं । ऋतवसोइतिऋतऽवसो । वरूथ्यं ।
वरुणे । छंद्यं । वचः । स्तोत्रं । राजऽसु । गायत ॥ ६ ॥ ते । हिन्वरे ।
अरुणं । जेन्यं । वसु । एकं । पुत्रं । तिसृणां । ते । धामानि ।
अमृताः । मर्त्यानां । अदब्धाः । अभि । चक्षते ॥ आ । मे । वचांसि ।
उत्ऽयता । द्युमत्ऽतमानि । कर्त्वा । उभा । यातं । नासत्या । सऽ-
जोषसा । प्रति । हव्यानि । वीतये ॥ रातिं । यत् । वां । अरक्षसं ।
हवामहे । युवाभ्यां । वाजिनीवसूइतिवाजिनीऽवसू । प्राचीं । होत्रां ।
प्रऽतिरंतौ । इतं । नरा । गृणाना । जमत्ऽअग्निना ॥ आ । नः । यज्ञं ।
दिविऽस्पृशं । वायोइति । याहि । सुमन्मऽभिः । अंतरिति । पवित्रे ।
उपरि । श्रीणानः । अयं । शुक्रः । अयामि । ते ॥ वेति । अध्वर्युः ।
पथिऽभिः । रजिष्ठैः । प्रति । हव्यानि । वीतये ॥ अध । नियुत्वः ।
उभयस्य । नः । पिब । शुचिं । सोमं । गोऽआशिरं ॥ ७ ॥ बट् ।
महान् । असि । सूर्य । बट् । आदित्य । महान् । असि । महः । ते ।
सतः । महिमा । पनस्यते । अद्धा । देव । महान् । असि ॥ बट् ।
सूर्य । श्रवसा । महान् । असि । सत्रा । देव । महान् । असि ।
मह्ना । देवानां । असुर्यः । पुरःऽहितः । विऽभु । ज्योतिः । अदाभ्यं ॥
इयं । या । नीची । अर्किणी । रूपा । रोहिण्या । कृता । चित्राऽइव ।
प्रति । अदर्शि । आऽयती । अंतः । दशऽसु । बाहुऽसु ॥ प्रऽजाः । ह ।
तिस्रः । अतिऽआयं । ईयुः । नि । अन्याः । अर्कं । अभितः । विविश्रे ।
बृहत् । ह । तस्थौ । भुवनेषु । अंतरिति । पवमानः । हरितः । आ ।
विवेश ॥ माता । रुद्राणां । दुहिता । वसूनां । स्वसा । आदित्यानां ।
अमृतस्य । नाभिः । प्र । नु । वोचं । चिकितुषे । जनाय । मा । गां ।

अनागां । अदितिं । वधिष्ट ॥ वचःऽविदं । वाचं । उत्ऽईरयंतीं ।
विश्वाभिः । धीभिः । उपऽतिष्ठमानां । देवीं । देवेभ्यः । परि । आऽ-
ईयुषीं । गां । आ । मा । अवृक्त । मर्त्यः । दभ्रऽचेताः ॥ ८ ॥ त्वं । अग्ने ।
बृहत् । वयः । दधासि । देव । दाशुषे ॥ ० ॥ सः । नः । ईळानया ।
सह । देवान् । अग्ने । दुवस्युवा ॥ चिकित् । विभानोइतिविऽभानो ।
आ । वह ॥ ० ॥ चोदिष्ठेन । यविष्ठ्य । अभि । सः । वाजऽसातये ।
और्वभृगुऽवत् । शुचिं । अप्नवानऽवत् । आ । हुवे । अग्निं । समुद्रऽ-
वाससं ॥ हुवे । वातऽस्वनं । कविं । पर्जन्यऽक्रद्यं । सहः ॥ ० ॥
॥ ९ ॥ आ । सवं । सवितुः । यथा । भगस्यऽइव । भुजिं ।
हुवे ॥ ० ॥ अग्निं । वः । वृधंतं । अध्वराणां । पुरुऽतमं । अच्छ ।
नप्त्रे । सहस्वते ॥ अयं । यथा । नः । आऽभुवत् । त्वष्टा । रूपाऽइव ।
तक्ष्या । अस्य । क्रत्वा । यशस्वतः ॥ अयं । विश्वाः । अभि । श्रियः ।
अग्निः । देवेषु । पत्यते ॥ आ । वाजैः । उप । नः । गमत् ॥ विश्वेषां ।
इह । स्तुहि । होतॄणां । यशःऽतमं । अग्निं । यज्ञेषु । पूर्व्यं ॥ १० ॥
शीरं । पावकऽशोचिषं । ज्येष्ठः । यः । दमेषु । आ । दीदाय ।
दीर्घश्रुत्ऽतमः ॥ ० ॥ गृणीहि । विप्र । शुष्मिणं । मित्रं । न ।
यातयत्ऽजनं ॥ उप । त्वा । जामयः । गिरः । देदिशतीः । हविःऽ-
कृतः ॥ वायोः । अनीके । अस्थिरन् ॥ यस्य । त्रिऽधातु । अवृतं ।
बर्हिः । तस्थौ । असंऽदिनं । आपः । चित् । नि । दध । पदं ॥ पदं ।
देवस्य । मीळ्हुषः । अनाधृष्टाभिः । ऊतिऽभिः । भद्रा । सूर्यःऽइव ।
उपऽदृक् ॥ ११ ॥ अग्ने । घृतस्य । धीतिऽभिः । तेपानः । देव ।
शोचिषा ॥ ० ॥ तं । त्वा । अजनंत । मातरः । कविं । देवासः ।
अंगिरः । हव्यऽवाहं । अमर्त्य ॥ प्रऽचेतसं । त्वा । कवे । अग्ने । दूतं ।
वरेण्यं । हव्यऽवाहं । नि । सेदिरे ॥ नहि । मे । अस्ति । अघ्न्या । न ।
स्वऽधितिः । वननऽवति । अथ । एतादृक् । भरामि । ते ॥ यत् । अग्ने ।
कानि । कानि । चित् । आ । ते । दारूणि । दध्मसि । ता । जुषस्व ।

यविष्ठ्य ॥ यत् । अत्ति । उपऽजिह्विका । यत् । वम्रः । अतिऽसर्पति । सर्वं । तत् । अस्तु । ते । घृतं ॥ अग्निं । इंधानः । मनसा । धियं । सचेत । मर्त्यः । अग्निं । ईधे । विवस्वऽभिः ॥ १२ ॥ अदर्शि । गातुवित्ऽतमः । यस्मिन् । व्रतानि । आऽदधुः । उपोइति । सु । जातं । आर्यस्य । वर्धनं । अग्निं । नक्षंत । नः । गिरः ॥ प्र । दैवःऽदासः । अग्निः । देवान् । अच्छ । न । मज्मना । अनु । मातरं । पृथिवीं । वि । ववृते । तस्थौ । नाकस्य । सानवि ॥ यस्मात् । रेजंत । कृष्टयः । चर्कृत्यानि । कृण्वतः । सहस्रऽसां । मेधसातौऽइव । त्मना । अग्निं । धीभिः । सपर्यत ॥ प्र । यं । राये । निनीषसि । मर्तः । यः । ते । वसोइति । दाशत् । सः । वीरं । धत्ते । अग्ने । उक्थऽशंसिनं । त्मना । सहस्रऽपोषिणं ॥ सः । दृळ्हे । चित् । अभि । तृणत्ति । वाजं । अर्वता । सः । धत्ते । अक्षिति । श्रवः । त्वेइति । देवऽत्रा । सदा । पुरुवसोइतिपुरुऽवसो । विश्वा । वामानि । धीमहि ॥ १३ ॥ यः । विश्वा । दयते । वसु । होता । मंद्रः । जनानां । मधोः । न । पात्रा । प्रथमानि । अस्मै । प्र । स्तोमाः । यंति । अग्नये ॥ अश्वं । न । गीःऽभिः । रथ्यं । सुऽदानवः । मर्मृज्यंते । देवऽयवः । उभेइति । तोकेइति । तनये । दस्म । विश्पते । पर्षि । राधः । मघोनां ॥ प्र । मंहिष्ठाय । गायत । ऋतऽव्ने । बृहते । शुक्रऽशोचिषे । उपऽस्तुतासः । अग्नये ॥ आ । वंसते । मघऽवा । वीरऽवत् । यशः । संऽइद्धः । द्युम्नी । आऽहुतः । कुवित् । नः । अस्य । सुऽमतिः । नवीयसी । अच्छ । वाजेभिः । आऽगमत् ॥ प्रेष्ठं । ऊँइति । प्रियाणां । स्तुहि । आऽसाव । अतिथिं । अग्निं । रथानां । यमं ॥ १४ ॥ उत्ऽइता । यः । निऽदिता । वेदिता । वसु । आ । यज्ञियः । ववर्तति । दुस्तराः । यस्य । प्रवणे । न । ऊर्मयः । धिया । वाजं । सिसासतः ॥ मा । नः । हृणीतां । अतिथिः । वसुः । अग्निः । पुरुऽप्रशस्तः । एषः । यः । सुहोता । सुऽअध्वरः ॥ मोइति । ते । रिषन् । ये । अच्छोक्तिऽभिः । वसोइति ।

अग्ने । केभिः । चित् । एवैः । कीरिः । चित् । हि । त्वां । ईट्टे । दूत्याय । रातऽहव्यः । सुऽअध्वरः ॥ आ । अग्ने । याहि । मरुत्ऽसखा । रुद्रेभिः । सोमऽपीतये । सोभर्याः । उप । सुऽस्तुतिं । मादयस्व । स्वःऽनरे ॥ १५ ॥ इत्यष्टमंमंडलं ॥ ॐस्वादिष्ठया । मदिष्ठया । पवस्व । सोम । धारया । इंद्राय । पातवे । सुतः ॥ रक्षःऽहा । विश्वऽचर्षणिः । अभि । योनिं । अयःऽहतं । द्रुणा । सधऽस्थं । आ । असदत् ॥ वरिवःऽधातमः । भव । मंहिष्ठः । वृत्रहन्ऽतमः । पर्षि । राधः । मघोनां ॥ अभि । अर्ष । महानां । देवानां । वीतिं । अंधसा । अभि । वाजं । उत । श्रवः । त्वां । अच्छ । चरामसि । तत् । इत् । अर्थं । दिवेऽदिवे । इंदोइति । त्वेइति । नः । आऽशसः ॥ १६ ॥ पुनाति । ते । परिऽस्रुतं । सोमं । सूर्यस्य । दुहिता । वारेण । शश्वता । तना ॥ तं । ईं । अण्वीः । सऽमर्ये । आ । गृभ्णंति । योषणः । दश । स्वसारः । पार्ये । दिवि ॥ तं । ईम् । हिन्वंति । अग्रुवः । धमंति । बाकुरं । दृतिं । त्रिऽधातु । वारणं । मधु ॥ अभि । इमं । अघ्न्याः । उत । श्रीणंति । धेनवः । शिशुं । सोमं । इंद्राय । पातवे ॥ अस्य । इत् । इंद्रः । मदेषु । आ । विश्वा । वृत्राणि । जिघ्नते । शूरः । मघा । च । मंहते ॥ १७ ॥ पवस्व । देवऽवीः । अति । पवित्रं । सोम । रंह्या । इंद्रं । इंदोइति । वृषा । आ । विश ॥ आ । वच्यस्व । महि । प्सरः । वृषा । इंदोइति । द्युम्नवत्ऽतमः । आ । योनिं । धर्णसिः । सदः ॥ अधुक्षत । प्रियं । मधु । धारा । सुतस्य । वेधसः । अपः । वसिष्ट । सुऽक्रतुः ॥ महांतं । त्वा । महीः । अनु । आपः । अर्षंति । सिंधवः । यत् । गोभिः । वासयिष्यसे ॥ समुद्रः । अप्ऽसु । ममृजे । विष्टंभः । धरुणः । दिवः । सोमः । पवित्रे । अस्मऽयुः ॥ १८ ॥ अचिक्रदत् । वृषा । हरिः । महान् । मित्रः । न । दर्शतः । सं । सूर्येण । रोचते ॥ गिरः । ते । इंदोइति । ओजसा । मर्मृज्यंते । अपस्युवः । याभिः । मदाय । शुंभसे ॥ तं । त्वा । मदाय । घृष्वये । ऊँइति । लोकऽ-

क्रतुं । ईमहे । तव । प्रऽशस्तयः । महीः ॥ अस्मभ्यं । इंदोइति । इंद्रऽयुः । मध्वः । पवस्व । धारया । पर्जन्यः । वृष्टिमान्ऽइव ॥ गोऽसाः । इंदोइति । नृऽसाः । असि । अश्वऽसाः । वाजऽसाः । उत । आत्मा । यज्ञस्य । पूर्व्यः ॥ १९ ॥ एषः । देवः । अमर्त्यः । पर्णवीःऽइव । दीयति । अभि । द्रोणानि । आऽसदं ॥ एषः । देवः । विपा । कृतः । अति । ह्वरांसि । धावति । पवमानः । अदाभ्यः ॥ एषः । देवः । विपन्युऽभिः । पवमानः । ऋतयुऽभिः । हरिः । वाजाय । मृज्यते ॥ एषः । विश्वानि । वार्या । शूरः । यन्ऽइव । सत्वऽभिः । पवमानः । सिसासति ॥ एषः । देवः । रथर्यति । पवमानः । दशस्यति । आविः । कृणोति । वग्वनुं ॥ २० ॥ एषः । विप्रैः । अभिऽस्तुतः । अपः । देवः । वि । गाहते । दधत् । रत्नानि । दाशुषे ॥ एषः । दिवं । वि । धावति । तिरः । रजांसि । धारया । पवमानः । कनिक्रदत् ॥ एषः । दिवं । वि । आ । असरत् । तिरः । रजांसि । अस्पृतः । पवमानः । सुऽअध्वरः ॥ एषः । प्रत्नेन । जन्मना । देवः । देवेभ्यः । सुतः । हरिः । पवित्रे । अर्षति ॥ एषः । ऊँइति । स्यः । पुरुऽव्रतः । जज्ञानः । जनयन् । इषः । धारया । पवते । सुतः ॥ ११ ॥ सन । च । सोम । जेषि । च । पवमान । महि । श्रवः । अथ । नः । वस्यसः । कृधि ॥ सन । ज्योतिः । सन । स्वः । विश्वा । च । सोम । सौभगा ॥ ० ॥ सन । दक्षं । उत । क्रतुं । अप । सोम । मृधः । जहि ॥ ० ॥ पवितारः । पुनीतन । सोमं । इंद्राय । पातवे ॥ ० ॥ त्वं । सूर्ये । नः । आ । भज । तव । क्रत्वा । तव । ऊतिऽभिः ॥ ० ॥ २२ ॥ ० ॥ ज्योक् । पश्येम । सूर्यं ॥ ० ॥ अभि । अर्ष । सुऽआयुध । सोम । द्विऽबर्हसं । रयिं ॥ ० ॥ अभि । अर्ष । अनपऽच्युतः । रयिं । समत्ऽसु । ससहिं ॥ ० ॥ त्वां । यज्ञैः । अवीवृधन् । पवमान । विऽधर्मणि ॥ ० ॥ रयिं । नः । चित्रं । अश्विनं । इंदोइति । विश्वऽआयुं । आ । भर ॥ ० ॥ २३ ॥ संऽइद्धः ।

विश्वतः । पतिः । पवमानः । वि । राजति । प्रीणन् । वृषा । कनिक्रदत् ॥ तनूऽ३नपात् । पवमानः । शृंगेइति । शिशानः । अर्षति । अंतरिक्षेण । रारजत् ॥ ईळेन्यः । पवमानः । रयिः । वि । राजति । द्युऽमान् । मधोः । धाराभिः । ओजसा ॥ बर्हिः । प्राचीनं । ओजसा । पवमानः । स्तृणन् । हरिः । देवेषु । देवः । ईयते ॥ उत् । आतैः । जिहते । बृहत् । द्वारः । देवीः । हिरण्ययीः । पवमानेन । सुऽस्तुताः ॥ २४ ॥ सुशिल्पेइतिसुऽशिल्पे । बृहतीइति । महीइति । पवमानः । वृषण्यति । नक्तोषसा । न । दर्शतेइति ॥ उभा । देवा । नृऽचक्षसा । होतारा । दैव्या । हुवे । पवमानः । इंद्रः । वृषा ॥ भारती । पवमानस्य । सरस्वती । इळा । मही । इमं । नः । यज्ञं । आ । गमन् । तिस्रः । देवीः । सुऽपेशसः ॥ त्वष्टारं । अग्रऽजां । गोपां । पुरःऽयावानं । आ । हुवे । इंदुः । इंद्रः । वृषा । हरिः । पवमानः । प्रजाऽपतिः ॥ वनस्पतिं । पवमान । मध्वा । सं । अंग्धि । धारया । सहस्रऽवल्शं । हरितं । भ्राजमानं । हिरण्ययं ॥ विश्वे । देवाः । स्वाहाऽकृतिं । पवमानस्य । आ । गत । वायुः । बृहस्पतिः । सूर्यः । अग्निः । इंद्रः । सऽजोषसः ॥ २५ ॥ मंद्रया । सोम । धारया । वृषा । पवस्व । देवऽयुः । अव्यः । वारेषु । अस्मऽयुः ॥ अभि । त्यं । मद्यं । मदं । इंदोइति । इंद्रः । इति । क्षर । अभि । वाजिनः । अर्वतः ॥ अभि । त्यं । पूर्व्यं । मदं । सुवानः । अर्ष । पवित्रे । आ । अभि । वाजं । उत । श्रवः ॥ अनु । द्रप्सासः । इंदवः । आपः । न । प्रऽवता । असरन् । पुनानाः । इंद्रं । आशत ॥ यं । अत्यंऽइव । वाजिनं । मृजंति । योषणः । दश । वने । क्रीळंतं । अतिऽअविं ॥ २६ ॥ तं । गोभिः । वृषणं । रसं । मदाय । देवऽवीतये । सुतं । भराय । सं । सृज ॥ देवः । देवाय । धारया । इंद्राय । पवते । सुतः । पयः । यत् । अस्य । पीपयत् ॥ आत्मा । यज्ञस्य । रंह्या । सुस्वानः । पवते । सुतः । प्रत्नं । नि । पाति । काव्यं ॥ एव । पुनानः । इंद्रऽयुः । मदं । मदिष्ठ ।

वीतये । गुहा । चित् । दधिषे । गिरः ॥ २७ ॥ असृग्रं । इंदवः । पथा । धर्मन् । ऋतस्य । सुऽश्रियः । विदानाः । अस्य । योजनं ॥ प्र । धाराः । मध्वः । अग्रियः । महीः । अपः । वि । गाहते । हविः । हविष्षु । वंद्यः ॥ प्रऽयुजः । वाचः । अग्रियः । वृषा । अव । चक्रदत् । वने । सद्म । अभि । सत्यः । अध्वरः ॥ परि । यत् । काव्या । कविः । नृम्णा । वसानः । अर्षति । स्वः । वाजी । सिसासति ॥ पवमानः । अभि । स्पृधः । विशः । राजाऽइव । सीदति । यत् । ईं । ऋण्वंति । वेधसः ॥ २८ ॥ अव्यः । वारे । परि । प्रियः । हरिः । वनेषु । सीदति । रेभः । वनुष्यते । मती ॥ सः । वायुं । इंद्रं । अश्विना । साकं । मदेन । गच्छति । रण । यः । अस्य । धर्मऽभिः ॥ आ । मित्रावरुणा । भगं । मध्वः । पवंते । ऊर्मयः । विदानाः । अस्य । शक्मऽभिः ॥ अस्मभ्यं । रोदसीइति । रयिं । मध्वः । वाजस्य । सातये । श्रवः । वसूनि । सं । जितं ॥ २९ ॥ एते । सोमाः । अभि । प्रियं । इंद्रस्य । कामं । अक्षरन् । वर्धंतः । अस्य । वीर्यं ॥ पुनानासः । चमूऽसदः । गच्छंतः । वायुं । अश्विना । ते । नः । धांतु । सुऽवीर्यं ॥ इंद्रस्य । सोम । राधसे । पुनानः । हार्दि । चोदय । ऋतस्य । योनिं । आऽसदं ॥ मृजंति । त्वा । दश । क्षिपः । हिन्वंति । सप्त । धीतयः । अनु । विप्राः । अमादिषुः ॥ देवेभ्यः । त्वा । मदाय । कं । सृजानं । अति । मेष्यः । सं । गोभिः । वासयामसि ॥ ३० ॥ पुनानः । कलशेषु । आ । वस्त्राणि । अरुषः । हरिः । परि । गव्यानि । अव्यत ॥ मघोनः । आ । पवस्व । नः । जहि । विश्वाः । अप । द्विषः । इंदोइति । सखायं । आ । विश ॥ वृष्टिं । दिवः । परि । स्रव । द्युम्नं । पृथिव्याः । अधि । सहः । नः । सोम । पृत्ऽसु । धाः ॥ नृऽचक्षसं । त्वा । वयं । इंद्रऽपीतं । स्वःऽविदं । सक्षीमहि । प्रऽजां । इषं ॥ ३१ ॥ परि । प्रिया । दिवः । कविः । वयांसि । नप्त्योः । हितः । सुवानः । याति । कविऽक्रतुः ॥

प्रऽप्र । क्षयाय । पन्यसे । जनाय । जुष्टः । अद्रुहे । वीती । अर्ष । चनिष्ठया ॥ सः । सूनुः । मातरा । शुचिः । जातः । जातेइति । अरोचयत् । महान् । महीइति । ऋतऽवृधा ॥ सः । सप्त । धीतिऽभिः । हितः । नद्यः । अजिन्वत् । अद्रुहः । याः । एकं । अक्षि । ववृधुः ॥ ताः । अभि । संतं । अस्तृतं । महे । युवानं । आ । दधुः । इंदुं । इंद्र । तव । व्रते ॥ ३२ ॥ अभि । वह्निः । अमर्त्यः । सप्त । पश्यति । वावहिः । क्रिविः । देवीः । अतर्पयत् ॥ अव । कल्पेषु । नः । पुमः । तमांसि । सोम । योध्या । तानि । पुनान । जंघनः ॥ नु । नव्यसे । नवीयसे । सुऽउक्ताय । साधय । पथः । प्रत्नऽवत् । रोचय । रुचः ॥ पवमान । महि । श्रवः । गां । अश्वं । रासि । वीरऽवत् । सन । मेधां । सन । स्वः रितिस्वः ॥ ३३ ॥ प्र । स्वानासः । रथाःऽइव । अर्वंतः । न । श्रवस्यवः । सोमासः । राये । अक्रमुः ॥ हिन्वानासः । रथाःऽइव । दधन्विरे । गभस्त्योः । भरासः । कारिणांऽइव ॥ राजानः । न । प्रशस्तिऽभिः । सोमासः । गोभिः । अंजते । यज्ञः । न । सप्त । धातृऽभिः ॥ परि । सुवानासः । इंदवः । मदाय । बर्हणा । गिरा । सुताः । अर्षंति । धारया ॥ आपानासः । विवस्वतः । जनंतः । उषसः । भगं । सूराः । अण्वं । वि । तन्वते ॥ ३४ ॥ अप । द्वारा । मतीनां । प्रत्नाः । ऋण्वंति । कारवः । वृष्णः । हरसे । आयवः ॥ संऽईचीनासः । आसते । होतारः । सप्तऽजामयः । पदं । एकस्य । पिप्रतः ॥ नाभा । नाभिं । नः । आ । ददे । चक्षुः । चित् । सूर्ये । सचा । कवेः । अपत्यं । आ । दुहे ॥ अभि । प्रिया । दिवः । पदं । अध्वर्युऽभिः । गुहा । हितं । सूरः । पश्यति । चक्षसा ॥ ३५ ॥ उप । अस्मै । गायत । नरः । पवमानाय । इंदवे । अभि । देवान् । इयक्षते ॥ अभि । ते । मधुना । पयः । अथर्वाणः । अशिश्रयुः । देवं । देवाय । देवऽयु ॥ सः । नः । पवस्व । शं । गवे । शं । जनाय । शं । अर्वते । शं । राजन् । ओषधीभ्यः ॥ बभ्रवे । नु । स्वऽ-

तवसे । अरुणाय । दिविऽस्पृशे । सोमाय । गाथं । अर्चत ॥ हस्तऽच्युतेभिः । अद्रिऽभिः । सुतं । सोमं । पुनीतन । मधौ । आ । धावत । मधु ॥ ३६ ॥ नमसा । इत् । उप । सीदत । दध्ना । इत् । अभि । श्रीणीतन । इंदुं । इंद्रे । दधातन ॥ अमित्रऽहा । विऽचर्षणिः । पवस्व । सोम । शं । गवे । देवेभ्यः । अनुकामऽकृत् ॥ इंद्राय । सोम । पातवे । मदाय । परि । सिच्यसे । मनःऽचित् । मनसः । पतिः ॥ पवमान । सुऽवीर्यं । रयिं । सोम । रिरीहि । नः । इंदोइति । इंद्रेण । नः । युजा ॥ ३७ ॥ सोमाः । असृग्रं । इंदवः । सुताः । ऋतस्य । सदने । इंद्राय । मधुमत्ऽतमाः ॥ अभि । विप्राः । अनूषत । गावः । वत्सं । न । मातरः । इंद्रं । सोमस्य । पीतये ॥ मदऽच्युत् । क्षेति । सदने । सिंधोः । ऊर्मा । विपःऽचित् । सोमः । गौरीइति । अधि । श्रितः ॥ दिवः । नाभा । विऽचक्षणः । अव्यः । वारे । महीयते । सोमः । यः । सुऽक्रतुः । कविः ॥ यः । सोमः । कलशेषु । आ । अंतरिति । पवित्रे । आऽहितः । तं । इंदुः । परि । सस्वजे ॥ ३८ ॥ प्र । वाचं । इंदुः । इष्यति । समुद्रस्य । अधि । विष्टपि । जिन्वन् । कोशं । मधुऽश्चुतं ॥ नित्यऽस्तोत्रः । वनस्पतिः । धीनां । अंतरिति । सबःऽदुघः । हिन्वानः । मानुषा । युगा ॥ अभि । प्रिया । दिवः । पदा । सोमः । हिन्वानः । अर्षति । विप्रस्य । धारया । कविः ॥ आ । पवमान । धारय । रयिं । सहस्रऽवर्चसं । अस्मेइति । इंदोइति । सुऽआभुवं ॥ ३९ ॥

इति षष्ठाष्टके सप्तमोऽध्यायः ॥ ७ ॥



## ॥ अथ अष्टमोध्यायः ॥

हरिः ॐ ॥ सोमः । पुनानः । अर्षति । सहस्रऽधारः । अतिऽअविः । वायोः । इंद्रस्य । निःऽकृतं ॥ पवमानं । अवस्यवः । विप्रं । अभि । प्र । गायत । सुस्वानं । देवऽवीतये ॥ पवंते । वाजऽसातये । सोमाः । सहस्रऽपाजसः । गृणानाः । देवऽवीतये ॥ उत । नः । वाजऽसातये । पवस्व । बृहतीः । इषः । द्युऽमत् । इंदोइति । सुऽवीर्यं ॥ ते । नः । सहस्रिणं । रयिं । पवंतां । आ । सुऽवीर्यं । सुवानाः । देवासः । इंदवः ॥ १ ॥ अत्याः । हियानाः । न । हेतृऽभिः । असृग्रं । वाजऽसातये । वि । वारं । अव्यं । आशवः ॥ वाश्राः । अर्षति । इंदवः । अभि । वत्सं । न । धेनवः । दधन्विरे । गभस्त्योः ॥ जुष्टः । इंद्राय । मत्सरः । पवमान । कनिक्रदत् । विश्वाः । अप । द्विषः । जहि ॥ अपऽघ्नंतः । अराव्णः । पवमानाः । स्वःऽदृशः । योनौ । ऋतस्य । सीदत ॥ २ ॥ परि । प्र । असिस्यदत् । कविः । सिंधोः । ऊर्मौ । अधि । श्रितः । कारं । बिभ्रत् । पुरुऽस्पृहं ॥ गिरा । यदि । सऽबंधवः । पंच । व्राताः । अपस्यवः । परिऽकृण्वंति । धर्णसिं ॥ आत् । अस्य । शुष्मिणः । रसे । विश्वे । देवाः । अमत्सत । यदि । गोभिः । वसायते ॥ निऽरिणानः । वि । धावति । जहत् । शर्याणि । तान्वा । अत्र । सं । जिघ्नते । युजा ॥ नप्तीभिः । यः विवस्वतः । शुभ्रः । न । ममृजे । युवा । गाः । कृण्वानः । न । निःऽनिजं ॥ ३ ॥ अति । श्रिती । तिरश्चता । गव्या । जिगाति । अण्व्या । वग्नुं । इयर्ति । यं । विदे ॥ अभि । क्षिपः । सं । अग्मत । मर्जयंतीः । इषः । पतिं । पृष्ठा । गृभ्णत । वाजिनः ॥ परि ।

दिव्यानि । मर्मृशत् । विश्वानि । सोम । पार्थिवा । वसूनि । याहि । अस्मऽयुः ॥ ४ ॥ एषः । धिया । याति । अण्व्या । शूरः । रथेभिः । आशुऽभिः । गच्छन् । इंद्रस्य । निःऽकृतं ॥ एषः । पुरु । धियाऽयते । बृहते । देवऽतातये । यत्र । अमृतासः । आसते ॥ एषः । हितः । वि । नीयते । अंतरिति । शुभ्रऽवता । पथा । यदि । तुंजंति । भूर्णयः ॥ एषः । शृंगाणि । दोधुवत् । शिशीते । यूथ्यः । वृषा । नृम्णा । दधानः । ओजसा ॥ एषः । रुक्मिऽभिः । ईयते । वाजी । शुभ्रेभिः । अंशुऽभिः । पतिः । सिंधूनां । भवन् ॥ एषः । वसूनि । पिब्दना । परुषा । ययिऽवान् । अति । अव । शादेषु । गच्छति ॥ एतं । मृजंति । मर्ज्यं । उप । द्रोणेषु । आयवः । प्रऽचक्राणं । महीः । इषः ॥ एतं । ऊँइति. । त्यं । दश । क्षिपः । मृजंति । सप्त । धीतयः । सुऽआयुधं । मदिन्ऽतमं ॥ ५ ॥ प्र । ते । सोतारः । ओण्योः । रसं । मदाय । घृष्वये । सर्गः । नः । तक्ति । एतशः ॥ क्रत्वा । दक्षस्य । रथ्यं । अपः । वसानं । अंधसा । गोऽसां । अण्वेषु । सश्चिम ॥ अनप्तं । अप्ऽसु । दुस्तरं । सोमं । पवित्रे । आ । सृज । पुनीहि । इंद्राय । पातवे ॥ प्र । पुनानस्य । चेतसा । सोमः । पवित्रे । अर्षति । क्रत्वा । सधऽस्थं । आ । असदत् ॥ प्र । त्वा । नमःऽभिः । इंदवः । इंद्र । सोमाः । असृक्षत । महे । भराय । कारिणः ॥ पुनानः । रूपे । अव्यये । विश्वाः । अर्षन् । अभि । श्रियः । शूरः । न । गोषु । तिष्ठति ॥ दिवः । न । सानु । पिप्युषी । धारा । सुतस्य । वेधसः । वृथा । पवित्रे । अर्षति ॥ त्वं । सोम । विपःऽचितं । तना । पुनानः । आयुषु । अव्यः । वारं । वि । धावसि ॥ ६ ॥ प्र । निम्नेनऽइव । सिंधवः । घ्नंतः । वृत्राणि । भूर्णयः । सोमाः । असृग्रं । आशवः ॥ अभि । सुवानासः । इंदवः । वृष्टयः । पृथिवींऽइव । इंद्रं । सोमासः । अक्षरन् ॥ अतिऽऊर्मिः । मत्सरः । मदः । सोमः । पवित्रे । अर्षति । विऽघ्नन् । रक्षांसि । देवऽयुः ॥ आ । कलशेषु । धावति । पवित्रे । परि । सिच्यते ।

उक्थैः । यज्ञेषु । वर्धते ॥ अति । त्री । सोम । रोचना । रोहन् । न । भ्राजसे । दिवं । इष्णन् । सूर्यं । न । चोदयः ॥ अभि । विप्राः । अनूषत । मूर्धन् । यज्ञस्य । कारवः । दधानाः । चक्षसि । प्रियं ॥ तं । ऊँइति । त्वा । वाजिनं । नरः । धीभिः । विप्राः । अवस्यवः । मृजंति । देवऽतातये ॥ मधोः । धाराः । अनु । क्षर । तीव्रः । सधऽस्थं । आ । असदः । चारुः । ऋताय । पीतये ॥ ७ ॥ परि । सुवानः । गिरिऽस्थाः । पवित्रे । सोमः । अक्षारिति । मदेषु । सर्वऽधाः । असि ॥ त्वं । विप्रः । त्वं । कविः । मधु । प्र । जातं । अंधसः ॥ ० ॥ तव । विश्वे । सऽजोषसः । देवासः । पीतिं । आशत ॥ ० ॥ आ । यः । विश्वानि । वार्या । वसूनि । हस्तयोः । दधे ॥ ० ॥ यः । इमेइति । रोदसीइति । महीइति । सं । मातराऽइव । दोहते ॥ ० ॥ परि । यः । रोदसीइति । उभेइति । सद्यः । वाजेभिः । अर्षति ॥ ० ॥ सः । शुष्मी । कलशेषु । आ । पुनानः । अचिक्रदत् ॥ ० ॥ ८ ॥ यत् । सोम । चित्रं । उक्थ्यं । दिव्यं । पार्थिवं । वसु । तत् । नः । पुनानः । आ । भर ॥ युवं । हि । स्थः । स्वःपतीइतिस्वःऽपती । इंद्रः । च । सोमः । गोपतीइतिगोऽपती । ईशाना । पिप्यतं । धियः ॥ वृषा । पुनानः । आयुषु । स्तनयन् । अधि । बर्हिषि । हरिः । सन् । योनिं । आ । असदत् ॥ अवावशंत । धीतयः । वृषभस्य । अधि । रेतसि । सूनोः । वत्सस्य । मातरः ॥ कुवित् । वृषण्यंतीभ्यः । पुनानः । गर्भं । आऽदधत् । याः । शुक्रं । दुहते । पयः ॥ उप । शिक्ष । पतऽस्थुषः । भियसं । आ । धेहि । शत्रुषु । पवमान । विदाः । रयिं ॥ नि । शत्रोः । सोम । वृष्ण्यं । नि । शुष्मं । नि । वयः । तिर ॥ दूरे । वा । सतः । अंति । वा ॥ ९ ॥ प्र । कविः । देवऽवीतये । अव्यः । वारेभिः । अर्षति । सह्वान् । विश्वाः । अभि । स्पृधः ॥ सः । हि । स्म । जरितृऽभ्यः । आ । वाजं । गोऽमंतं । इन्वति । पवमानः । सहस्रिणं ॥ परि । विश्वानि । चेतसा । मृशसे । पवसे । मती । सः ।

तः। सोम। श्रवः। विदः॥ अभि। अर्ष। बृहत्। यशः। मघवत्ऽ-
भ्यः। ध्रुवं। रयिं। इषं। स्तोतृऽभ्यः। आ। भर॥ त्वं। राजाऽइव।
सुऽव्रतः। गिरः। सोम। आ। विवेशिथ। पुनानः। वह्ने। अद्भुत।
सः। वह्निः। अप्ऽसु। दुस्तरः। मृज्यमानः। गभस्त्योः। सोमः।
चमूषु। सीदति॥ क्रीळुः। मखः। न। मंहयुः। पवित्रं। सोम।
गच्छसि। दधत्। स्तोत्रे। सुऽवीर्यं॥ १०॥ एते। धावंति। इंदवः।
सोमाः। इंद्राय। घृष्वयः। मत्सरासः। स्वःऽविदः। प्रऽवृण्वंतः।
अभिऽयुजः। सुस्वये। वरिवःऽविदः। स्वयं। स्तोत्रे। वयःऽकृतः॥
वृथा। क्रीळंतः। इंदवः। सधऽस्थं। अभि। एकं। इत्। सिंधोः।
ऊर्मा। वि। अक्षरन्॥ एते। विश्वानि। वार्या। पवमानासः।
आशत। हिताः। न। सप्तयः। रथे॥ आ। अस्मिन्। पिशंगं।
इंदवः। दधात। वेनं। आऽदिशे। यः अस्मभ्यं। अरावा॥ ऋभुः।
न। रथ्यं। नवं। दधात। केतं। आऽदिशे। शुक्राः। पवध्वं।
अर्णसा॥ एते। ऊँइति। त्ये। अवीवशन्। काष्ठां। वाजिनः।
अक्रत। सतः। प्र। असाविषुः। मतिं॥ ११॥ एते। सोमासः।
आशवः। रथाःऽइव। प्र। वाजिनः। सर्गाः। सृष्टाः। अहेषत॥
एते। वाताःऽइव। उरवः। पर्जन्यस्यऽइव। वृष्टयः। अग्नेःऽइव।
भ्रमाः। वृथा॥ एते। पूताः। विपःऽचितः। सोमासः। दधिऽ-
आशिरः। विपा। वि। आनशुः। धियः॥ एते। मृष्टाः। अमर्त्याः।
ससृऽवांसः। न। शश्रमुः। इयक्षंतः। पथः। रजः॥ एते। पृष्ठानि।
रोदसोः। विऽप्रयंतः। वि। आनशुः॥ उत। इदं। उत्ऽतमं।
रजः॥ तंतुं। तन्वानं। उत्ऽतमं। अनु। प्रऽवतः। आशत।
उत। इदं। उत्तमाय्यं॥ त्वं। सोम। पणिऽभ्यः। आ।
वसु। गव्यानि। धारयः। ततं। तंतुं। अचिक्रदः॥ १२॥
सोमाः। असृग्रं। आशवः। मधोः। मदस्य। धारया। अभि।
विश्वानि। काव्या॥ अनु। प्रत्नासः। आयवः। पदं। नवीयः।

अक्रमुः । रुचे । जनंत । सूर्यं ॥ आ । पवमान । नः । भर । अर्यः । अदाशुषः । गयं । कृधि । प्रजाऽवंतीः । इषः ॥ अभि । सोमासः । आयवः । पवंते । मद्यं । मदं । अभि । कोशं । मधुऽश्चुतं ॥ सोमः । अर्षति । धर्णसिः । दधानः । इंद्रियं । रसं । सुऽवीरः । अभिशस्तिऽपाः ॥ इंद्राय । सोम । पवसे । देवेभ्यः । सधऽमाद्यः । इंदोइति । वाजं । सिसाससि ॥ अस्य । पीत्वा । मदानां । इंद्रः । वृत्राणि । अप्रति । जघान । जघनंत् । च । नु ॥ १३ ॥ प्र । सोमासः । अधन्विषुः । पवमानासः । इंदवः । श्रीणानाः । अप्ऽसु । मृंजत ॥ अभि । गावः । अधन्विषुः । आपः । न । प्रऽवता । यतीः । पुनानाः । इंद्रं । आशत ॥ प्र । पवमान । धन्वसि । सोम । इंद्राय । पातवे । नृऽभिः । यतः । वि । नीयसे ॥ त्वं । सोम । नृऽमादनः । पवस्व । चर्षणिऽसहे । सस्निः । यः । अनुऽमाद्यः ॥ इंदोइति । यत् । अद्रिऽभिः । सुतः । पवित्रं । परिऽधावसि । अरं । इंद्रस्य । धाम्ने ॥ पवस्व । वृत्रहन्ऽतम । उक्थेभिः । अनुऽमाद्यः । शुचिः । पावकः । अद्भुतः ॥ शुचिः । पावकः । उच्यते । सोमः । सुतस्य । मध्वः । देवऽअवीः । अघशंसऽहा ॥ १४ ॥ पवस्व । दक्षऽसाधनः । देवेभ्यः । पीतये । हरे । मरुत्ऽभ्यः । वायवे । मदः ॥ पवमान । धिया । हितः । अभि । योनिं । कनिक्रदत् । धर्मणा । वायुं । आ । विश ॥ सं । देवैः । शोभते । वृषा । कविः । योनौ । अधि । प्रियः । वृत्रऽहा । देवऽवीतमः ॥ विश्वा । रूपाणि । आऽविशन् । पुनानः । याति । हर्यतः । यत्र । अमृतासः । आसते ॥ अरुषः । जनयन् । गिरः । सोमः । पवते । आयुषक् । इंद्रं । गच्छन् । कविऽक्रतुः ॥ आ । पवस्व । मदिन्ऽतम । पवित्रं । धारया । कवे । अर्कस्य । योनिं । आसदं ॥ १५ ॥ तं । अमृक्षंत । वाजिनं । उपऽस्थे । अदितेः । अधि । विप्रासः । अण्व्या । धिया ॥ तं । गावः । अभि । अनूषत । सहस्रऽधारं । अक्षितं । इंदुं । धर्तारं । आ । दिवः ॥ तं । वेधां । मेधया ।

अह्वन् । पवमानं । अधि । द्यवि । धर्णसिं । भूरिऽधायसं ॥ तं । अह्वन् । भुरिजोः । धिया । संऽवसानं । विवस्वतः । पतिं । वाचः । अदाभ्यं ॥ तं । सानौ । अधि । जामयः । हरिं । हिन्वंति । अद्रिऽभिः । हर्यतं । भूरिऽचक्षसं ॥ तं । त्वा । हिन्वंति । वेधसः । पवमान । गिराऽवृधं । इंदो इति । इंद्राय । मत्सरं ॥ १६ ॥ एषः । कविः । अभिऽस्तुतः । पवित्रे । अधि । तोशते । पुनानः । घ्नन् । अप । स्रिधः ॥ एषः । इंद्राय । वायवे । स्वःऽजित् । परि । सिच्यते । पवित्रे । दक्षऽसाधनः ॥ एषः । नृऽभिः । वि । नीयते । दिवः । मूर्धा । वृषा । सुतः । सोमः । वनेषु । विश्वऽवित् ॥ एषः । गव्युः । अचिक्रदत् । पवमानः । हिरण्यऽयुः । इंदुः । सत्राऽजित् । अस्तृतः ॥ एषः । सूर्येण । हासते । पवमानः । अधि । द्यवि । पवित्रे । मत्सरः । मदः ॥ एषः । शुष्मी । असिस्यदत् । अंतरिक्षे । वृषा । हरिः । पुनानः । इंदुः । इंद्रं । आ ॥ १७ ॥ एषः । वाजी । हितः । नृऽभिः । विश्वऽवित् । मनसः । पतिः । अव्यः । वारं । वि । धावति ॥ एषः । पवित्रे । अक्षरत् । सोमः । देवेभ्यः । सुतः । विश्वा । धामानि । आऽविशन् ॥ एषः । देवः । शुभायते । अधि । योनौ । अमर्त्यः । वृत्रऽहा । देवऽवीतमः ॥ एषः । वृषा । कनिक्रदत् । दशऽभिः । जामिऽभिः । यतः । अभि । द्रोणानि । धावति ॥ एषः । सूर्यं । अरोचयत् । पवमानः । विऽचर्षणिः । विश्वा । धामानि । विश्वऽवित् ॥ एषः । शुष्मी । अदाभ्यः । सोमः । पुनानः । अर्षति । देवऽअवीः । अघशंसऽहा ॥ १८ ॥ प्र । अस्य । धाराः । अक्षरन् । वृष्णः । सुतस्य । ओजसा । देवान् । अनु । प्रऽभूषतः ॥ सप्तिं । मृजंति । वेधसः । गृणंतः । कारवः । गिरा । ज्योतिः । जज्ञानं । उक्थ्यं ॥ सुऽसहा । सोम । तानि । ते । पुनानाय । प्रभुवसो इति प्रभुऽवसो । वर्ध । समुद्रं । उक्थ्यं ॥ विश्वा । वसूनि । संऽजयन् । पवस्व । सोम । धारया । इनु । द्वेषांसि । सध्र्यक् ॥ रक्ष । सु । नः । अररुषः । स्वनात् । समस्य । कस्य ।

चित् । निदः । यत्र । मुमुच्महे ॥ आ । इंदोइति । पार्थिवं । रयिं । दिव्यं । पवस्व । धारया । द्युऽमंतं । शुष्मं । आ । भर ॥ १९ ॥ प्र । धाराः । अस्य । शुष्मिणः । वृथा । पवित्रे । अक्षरन् । पुनानः । वाचं । इष्यति ॥ इंदुः । हियानः । सोतृऽभिः । मृज्यमानः । कनिक्रदत् । इयर्ति । वग्नुं । इंद्रियं ॥ आ । नः । शुष्मं । नृऽसह्यं । वीरऽवंतं । पुरुऽस्पृहं । पवस्व । सोम । धारया ॥ प्र । सोमः । अति । धारया । पवमानः । असिस्यदत् । अभि । द्रोणानि । आऽसदं ॥ अप्ऽसु । त्वा । मधुमत्ऽतमं । हरिं । हिन्वंति । अद्रिऽभिः । इंदोइति । इंद्राय । पीतये ॥ सुनोत । मधुमत्ऽतमं । सोमं । इंद्राय । वज्रिणे । चारुं । शर्धाय । मत्सरं ॥ २० ॥ प्र । सोमासः । सुऽआध्यः । पवमानासः । अक्रमुः । रयिं । कृण्वंति । चेतनं ॥ दिवः । पृथिव्याः । अधि । भव । इंदोइति । द्युम्नऽवर्धनः । भव । वाजानां । पतिः ॥ तुभ्यं । वाताः । अभिऽप्रियः । तुभ्यं । अर्षंति । सिंधवः । सोम । वर्धंति । ते । महः ॥ ० ॥ तुभ्यं । गावः । घृतं । पयः । बभ्रोइति । दुदुह्रे । अक्षितं । वर्षिष्ठे । अधि । सानवि ॥ सुऽआयुधस्य । ते । सतः । भुवनस्य । पते । वयं । इंदोइति । सखिऽत्वं । उश्मसि ॥ २१ ॥ प्र । सोमासः । मदऽच्युतः । श्रवसे । नः । मघोनः । सुताः । विदथे । अक्रमुः ॥ आत् । ईं । त्रितस्य । योषणः । हरिं । हिन्वंति । अद्रिऽभिः । इंदुं । इंद्राय । पीतये ॥ आत् । ईं । हंसः । यथा । गणं । विश्वस्य । अवीवशत् । मतिं । अत्यः । न । गोभिः । अज्यते ॥ उभेइति । सोम । अवऽचाकशत् । मृगः । न । तक्तः । अर्षसि । सीदन् । ऋतस्य । योनिं । आ ॥ अभि । गावः । अनूषत । योषा । जारंऽइव । प्रियं । अगन् । आजिं । यथा । हितं ॥ अस्मेइति । धेहि । द्युऽमत् । यशः । मघवत्ऽभ्यः । च । मह्यं । च । सनिं । मेधां । उत । श्रवः ॥ २२ ॥ प्र । सोमासः । विपःऽचितः । अपां । न । यंति । ऊर्मयः । वनानि । महिषाःऽइव ॥ अभि । द्रोणानि । बभ्रवः ।

शुक्राः । ऋतस्य । धारया । वाजं । गोऽमंतं । अक्षरन् ॥ सुताः । इंद्राय । वायवे । वरुणाय । मरुत्ऽभ्यः । सोमाः । अर्षति । विष्णवे ॥ तिस्रः । वाचः । उत् । इरते । गावः । मिमंति । धेनवः । हरिः । एति । कनिक्रदत् ॥ अभि । ब्रह्मीः । अनूषत । यह्वीः । ऋतस्य । मातरः । मर्मृज्यंते । दिवः । शिशुं ॥ रायः । समुद्रान् । चतुरः । अस्मभ्यं । सोम । विश्वतः । आ । पवस्व । सहस्रिणः ॥ २३ ॥ प्र । सुवानः । धारय । तना । इंदुः । हिन्वानः । अर्षति । रुजत् । दृळ्हा । वि । ओजसा ॥ सुतः । इंद्राय । वायवे । वरुणाय । मरुत्ऽभ्यः । सोमः । अर्षति । विष्णवे ॥ वृषाणं । वृषऽभिः । यतं । सुन्वंति । सोमं । अद्रिऽभिः । दुहंति । शक्मना । पयः ॥ भुवत् । त्रितस्य । मर्ज्यः । भुवत् । इंद्राय । मत्सरः । सं । रूपैः । अज्यते । हरिः ॥ अभि । ईं । ऋतस्य । विष्टपं । दुहते । पृश्निऽमातरः । चारु । प्रियऽतमं । हविः ॥ सं । एनं । अहुताः । इमाः । गिरः । अर्षति । सऽस्रुतः । धेनूः । वाश्रः । अवीवशत् ॥ २४ ॥ आ । नः । पवस्व । धारया । पवमान । रयिं । पृथुं । यया । ज्योतिः । विदासि । नः ॥ इंदो इति । समुद्रऽईंखय । पवस्व । विश्वंऽएजय । रायः । धर्ता । नः । ओजसा ॥ त्वया । वीरेण । वीरऽवः । अभि । स्याम । पृतन्यतः । क्षर । नः । अभि । वार्यं ॥ प्र । वाचं । इंदुः । इष्यति । सिसासन् । वाजऽसाः । ऋषिः । व्रता । विदानः । आयुधा ॥ तं । गीःऽभिः । वाचंऽईंखयं । पुनानं । वासयामसि । सोमं । जनस्य । गोऽपतिं ॥ विश्वः । यस्य । व्रते । जनः । दाधार । धर्मणः । पतेः । पुनानस्य । प्रभुऽवसोः ॥ २५ ॥ असर्जि । रथ्यः । यथा । पवित्रे । चम्वोः । सुतः । कार्ष्मन् । वाजी । नि । अक्रमीत् ॥ सः । वह्निः । सोम । जागृविः । पवस्व । देवऽवीः । अति । अभि । कोशं । मधुऽश्चुतं ॥ सः । नः । ज्योतींषि । पूर्व्य । पवमान । वि । रोचय । क्रत्वे । दक्षाय । नः । हिनु ॥ शुंभमानः । ऋतयुऽभिः । मृज्यमानः । गभस्त्योः । पवते । वारे । अव्यये ॥ सः ।

विश्वा । दाशुषे । वसु । सोमः । दिव्यानि । पार्थिवा । पर्वता । आ । अंतरिक्ष्या ॥ आ । दिवः । पृष्ठं । अश्वऽयुः । गव्यऽयुः । सोम । रोहसि । वीरऽयुः । शवसः । पते ॥ २६ ॥ सः । सुतः । पीतये । वृषा । सोमः । पवित्रे । अर्षति । विऽघ्नन् । रक्षांसि । देवऽयुः ॥ सः । पवित्रे । विऽचक्षणः । हरिः । अर्षति । धर्णसिः । अभि । योनिं । कनिक्रदत् ॥ सः । वाजी । रोचना । दिवः । पवमानः । वि । धावति । रक्षःऽहा । वारं । अव्ययं ॥ सः । त्रितस्य । अधि । सानवि । पवमानः । अरोचयत् । जामिऽभिः । सूर्यं । सह ॥ सः । वृत्रऽहा । वृषा । सुतः । वरिवःऽवित् । अदाभ्यः । सोमः । वाजंऽइव । असरत् ॥ सः । देवः । कविना । इषितः । अभि । द्रोणानि । धावति । इंदुः । इंद्राय । मंहना ॥ २७ ॥ एषः । ऊँइति । स्यः । वृषा । रथः । अव्यः । वारेभिः । अर्षति । गच्छन् । वाजं । सहस्रिणं ॥ एतं । त्रितस्य । योषणः । हरिं । हिन्वंति । अद्रिऽभिः । इंदुं । इंद्राय । पीतये ॥ एतं । त्यं । हरितः । दश । मर्मृज्यंते । अपस्युवः । याभिः । मदाय । शुंभते ॥ एषः । स्यः । मानुषीषु । आ । श्येनः । न । विक्षु । सीदति । गच्छन् । जारः । न । योषितं ॥ एषः । स्यः । मद्यः । रसः । अव । चष्टे । दिवः । शिशुः । यः । इंदुः । वारं । आ । अविशत् ॥ एषः । स्यः । पीतये । सुतः । हरिः । अर्षति । धर्णसिः । क्रंदन् । योनिं । अभि । प्रियं ॥ २८ ॥ आशुः । अर्ष । बृहत्ऽमते । परि । प्रियेण । धाम्ना । यत्र । देवाः । इति । ब्रुवन् ॥ परिऽकृण्वन् । अनिःऽकृतं । जनाय । यातयन् । इषः । वृष्टिं । दिवः । परि । स्रव ॥ सुतः । एति । पवित्रे । आ । त्विषिं । दधानः । ओजसा । विऽचक्षाणः । विऽरोचयन् ॥ अयं । सः । यः । दिवः । परि । रघुऽयामा । पवित्रे । आ । सिंधोः । ऊर्मा । वि । अक्षरत् ॥ आऽविवासन् । पराऽवतः । अथोइति । अर्वाऽवतः । सुतः । इंद्राय । सिच्यते । मधु ॥ संऽईचीनाः । अनूषत । हरिं । हिन्वंति । अद्रिऽ-

भिः ॥ योनौ । ऋतस्य । सीदत ॥ २९ ॥ पुनानः । अक्रमीत् । अभि ।
विश्वाः । मृधः । विऽचर्षणिः । शुंभंति । विप्रं । धीतिऽभिः ॥ आ ।
योनिं । अरुणः । रुहत् । गमत् । इंद्रं । वृषा । सुतः । ध्रुवे ।
सदसि । सीदति ॥ नु । नः । रयिं । महां । इंदोइति । अस्मभ्यं ।
सोम । विश्वतः । आ । पवस्व । सहस्रिणं ॥ विश्वा । सोम ।
पवमान । द्युम्नानि । इंदोइति । आ । भर । विदाः । सहस्रिणीः ।
इषः ॥ सः । नः । पुनानः । आ । भर । रयिं । स्तोत्रे । सुऽवीर्यं ।
जरितुः । वर्धय । गिरः ॥ पुनानः । इंदोइति । आ । भर । सोम ।
द्विऽबर्हसं । रयिं । वृषन् । इंदोइति । नः । उक्थ्यं ॥ ३० ॥ प्र । ये ।
गावः । न । भूर्णयः । त्वेषाः । अयासः । अक्रमुः । घ्नंतः । कृष्णां ।
अप । त्वचं ॥ सुवितस्य । मनामहे । अति । सेतुं । दुःऽआव्यं ।
सह्वांसः । दस्युं । अव्रतं ॥ शृण्वे । वृष्टेःऽइव । स्वनः । पवमानस्य ।
शुष्मिणः । चरंति । विऽद्युतः । दिवि ॥ आ । पवस्व । महीं । इषं ।
गोऽमत् । इंदोइति । हिरण्यऽवत् । अश्वऽवत् । वाजऽवत् । सुतः ॥
सः । पवस्व । विऽचर्षणे । आ । महीइति । रोदसीइति । पृण ।
उषाः । सूर्यः । न । रश्मिऽभिः ॥ परि । नः । शर्मऽयंत्या । धारया ।
सोम । विश्वतः । सर । रसाऽइव । विष्टपं ॥ ३१ ॥ जनयन् ।
रोचना । दिवः । जनयन् । अप्ऽसु । सूर्यं । वसानः । गाः । अपः ।
हरिः ॥ एषः । प्रत्नेन । मन्मना । देवः । देवेभ्यः । परि । धारया ।
पवते । सुतः ॥ ववृधानाय । तूर्वये । पवंते । वाजऽसातये । सोमाः ।
सहस्रऽपाजसः ॥ दुहानः । प्रत्नं । इत् । पयः । पवित्रे । परि ।
सिच्यते । क्रंदन् । देवान् । अजीजनत् ॥ अभि । विश्वानि । वार्या ।
अभि । देवान् । ऋतऽवृधः । सोमः । पुनानः । अर्षति ॥ गोऽमत् ।
नः । सोम । वीरऽवत् । अश्वऽवत् । वाजऽवत् । सुतः । पवस्व ।
बृहतीः । इषः ॥ ३२ ॥ यः । अत्यःऽइव । मृज्यते । गोभिः । मदाय ।
हर्यतः । तं । गीःऽभिः । वासयामसि ॥ तं । नः । विश्वाः ।

अवस्युवंः । गिरंः । शुंभंति । पूर्वऽथां । इंदुं । इंद्राय । पीतयें ॥ पुनानः । याति । हुर्यतः । सोमः । गीःऽभिः । परिऽकृतः । विप्रस्य । मेध्यंऽअतिथेः ॥ पर्वमान । विदाः । रयिं । अस्मभ्यं । सोम । सुऽश्रियं । इंदोइति । सहस्रऽवर्चसं ॥ इंदुः । अत्यः । न । वाजऽसृत् । कनिक्रंति । पवित्रे । आ । यत् । अक्षाः । अति । देवऽयुः ॥ पर्वस्व । वाजंऽसातये । विप्रस्य । गृणतः । वृधे । सोमं । रास्व । सुऽवीर्यं ॥ ३३ ॥

इति षष्ठाष्टके अष्टमोध्यायः ॥ ८ ॥

इति षष्ठाष्टकः संपूर्णः ॥ ८ ॥



॥ ॐ ॥




हरिः ॐ ॥ प्र । नः । इंदोइति । महे । तने । ऊर्मिं । न । बिभ्रत् । अर्षसि । अभि । देवान् । अयास्यः ॥ मती । जुष्टः । धिया । हितः । सोमः । हिन्वे । पराऽवति । विप्रस्य । धारया । कविः ॥ अयं । देवेषु । जागृविः । सुतः । एति । पवित्रे । आ । सोमः । याति । विऽचर्षणिः ॥ सः । नः । पवस्व । वाजऽयुः । चक्राणः । चारुं । अध्वरं । बर्हिष्मान् । आ । विवासति ॥ सः । नः । भगाय । वायवे । विप्रऽवीरः । सदाऽवृधः । सोमः । देवेषु । आ । यमत् ॥ सः । नः । अद्य । वसुत्तये । क्रतुऽवित् । गातुवित्ऽतमः । वाजं । जेषि । श्रवः । बृहत् ॥ १ ॥ सः । पवस्व । मदाय । कं । नृऽचक्षाः । देवऽवीतये । इंदोइति । इंद्राय । पीतये ॥ सः । नः । अर्ष । अभि । दूत्यं । त्वं । इंद्राय । तोशसे । देवान् । सखिऽभ्यः । आ । वरं ॥ उत । त्वां । अरुणं । वयं । गोभिः । अंज्मः । मदाय । कं । वि । नः । राये । दुरः । वृधि ॥ अति । ऊंइति । पवित्रं । अक्रमीत् । वाजी । धुरं । न । यामनि । इंदुः । देवेषु । पत्यते ॥ सं । ईमिति । सखायः । अस्वरन् । वने । क्रीळंतं । अतिऽअविं । इंदुं । नावाः । अनूषत ॥ तया । पवस्व । धारया । यया । पीतः । विऽचक्षसे । इंदोइति । स्तोत्रे । सुऽवीर्यं ॥ २ ॥ असृग्रन् । देवऽवीतये । अत्यासः । कृत्व्याःऽइव । क्षरंतः । पर्वतऽ-

वृधः ॥ परिऽकृतासः । इंदवः । योषाऽइव । पित्र्यऽवती । वायुं । सोमाः । असृक्षत ॥ एते । सोमासः । इंदवः । प्रयस्वंतः । चमूइति । सुताः । इंद्रं । वर्धति । कर्मऽभिः ॥ आ । धावत । सुऽहस्त्यः । शुक्रा । गृभ्णीत । मंथिना । गोभिः । श्रीणीत । मत्सरं ॥ सः । पवस्व । धनंऽजय । प्रऽयंता । राधसः । महः । अस्मभ्यं । सोम । गातुऽवित् ॥ एतं । मृजंति । मर्ज्यं । पवमानं । दश । क्षिपः । इंद्राय । मत्सरं । मदं ॥ ३ ॥ अया । सोमः । सुऽकृत्यया । महः । चित् । अभि । अवर्धत । मंदानः । उत् । वृषऽयते ॥ कृतानि । इत् । अस्य । कर्त्वा । चेतंते । दस्युऽतर्हणा । ऋणा । च । धृष्णुः । चयते ॥ आत् । सोमः । इंद्रियः । रसः । वज्रः । सहस्रऽसाः । भुवत् । उक्थं । यत् । अस्य । जायते ॥ स्वयं । कविः । विऽधर्तरि । विप्राय । रत्नं । इच्छति । यदि । मर्मृज्यते । धियः ॥ सिसासतुः । रयीणां । वाजेषु । अर्वतांऽइव । भरेषु । जिग्युषां । असि ॥ ४ ॥ तं । त्वा । नृम्णानि । बिभ्रतं । सधऽस्थेषु । महः । दिवः । चारुं । सुऽकृत्यया । ईमहे ॥ संवृक्तऽधृष्णुं । उक्थं । महाऽमहिव्रतं । मदं । शतं । पुरः । रुरुक्षणिं ॥ अतः । त्वा । रयिं । अभि । राजानं । सुक्रतोइतिसुऽक्रतो । दिवः । सुऽपर्णः । अव्यथिः । भरत् ॥ विश्वस्मै । इत् । स्वः । दृशे । साधारणं । रजःऽतुरं । गोपां । ऋतस्य । विः । भरत् ॥ अध । हिन्वानः । इंद्रियं । ज्यायः । महिऽत्वं । आनशे । अभिष्टिऽकृत् । विऽचर्षणिः ॥ ५ ॥ पवस्व । वृष्टिं । आ । सु । नः । अपां । ऊर्मिं । दिवः । परि । अयक्ष्माः । बृहतीः । इषः ॥ तया । पवस्व । धारया । यया । गावः । इह । आऽगमन् । जन्यासः । उप । नः । गृहं ॥ घृतं । पवस्व । धारया । यज्ञेषु । देवऽवीतमः । अस्मभ्यं । वृष्टिं । आ । पव ॥ सः । नः । ऊर्जे । वि । अव्ययं । पवित्रं । धाव । धारया । देवासः । शृणवन् । हि । कं ॥ पवमानः । असिस्यदत् । रक्षांसि । अपऽजंघनत् । प्रत्नऽवत् । रोचयन् । रुचः ॥ ६ ॥ उत् । ते । शुष्मासः । ईरते । सिंधोः ।

ऊर्मिःऽइव । स्वनः । वाणस्य । चोदय । पविं ॥ प्रऽसवे । ते । उत् ।
ईरते । तिस्रः । वाचः । मखस्युवः । यत् । अव्यः । एषि । सानवि ॥
अव्यः । वारे । प्रियं । हरिं । हिन्वंति । अद्रिऽभिः । पवमानं । मधुऽ-
श्चुतं ॥ ० ॥ सः । पवस्व । मदिन्ऽतम । गोभिः । अंजानः । अक्तुऽ-
भिः । इंदोइति । इंद्राय । पीतये ॥ ७ ॥ अध्वर्योइति । अद्रिऽभिः ।
सुतं । सोमं । पवित्रे । आ । सृज । पुनीहि । इंद्राय । पातवे ॥ दिवः ।
पीयूषं । उत्ऽतमं । सोमं । इंद्राय । वज्रिणे । सुनोत । मधुमत्ऽतमं ॥
तव । त्ये । इंदोइति । अंधसः । देवाः । मधोः । वि । अश्नते ।
पवमानस्य । मरुतः ॥ त्वं । हि । सोम । वर्धयन् । सुतः । मदाय ।
भूर्णये । वृषन् । स्तोतारं । ऊतये ॥ अभि । अर्ष । विऽचक्षण ।
पवित्रं । धारया । सुतः । अभि । वाजं । उत । श्रवः ॥ ८ ॥ परि ।
द्युक्षः । सनत्ऽरयिः । भरत् । वाजं । नः । अंधसा । सुवानः । अर्ष ।
पवित्रे । आ ॥ तव । प्रत्नेभिः । अध्वऽभिः । अव्यः । वारे । परि ।
प्रियः । सहस्रऽधारः । यात् । तना ॥ चरुः । न । यः । तं । ईंखय ।
इंदोइति । न । दानं । ईंखय । वधैः । वधस्नोइतिवधऽस्नो । ईंखय ।
नि । शुष्मं । इंदोइति । एषां । पुरुऽहूत । जनानां । यः ।
अस्मान् । आऽदिदेशति ॥ शतं । नः । इंदोइति । ऊतिऽभिः । सहस्रं ।
वा । शुचीनां । पवस्व । मंहयत्ऽरयिः ॥ ९ ॥ उत् । ते । शुष्मासः ।
अस्थुः । रक्षः । भिंदंतः । अद्रिऽवः । नुदस्व । याः । परिऽस्पृधः ॥
अया । निऽजघ्निः । ओजसा । रथऽसंगे । धने । हिते । स्तवै ।
अबिभ्युषा । हृदा ॥ अस्य । व्रतानि । न । आऽधृषे । पवमानस्य ।
दुःऽध्या । रुज । यः । त्वा । पृतन्यति ॥ तं । हिन्वंति । मदऽच्युतं ।
हरिं । नदीषु । वाजिनं । इंदुं । इंद्राय । मत्सरं ॥ १० ॥ अस्य ।
प्रत्नां । अनु । द्युतं । शुक्रं । दुदुहे । अह्रयः । पयः । सहस्रऽसां ।
ऋषिं ॥ अयं । सूर्यःऽइव । उपऽदृक् । अयं । सरांसि । धावति । सप्त ।
प्रऽवतः । आ । दिवं ॥ अयं । विश्वानि । तिष्ठति । पुनानः । भुवना ।

उपरि । सोमः । देवः । न । सूर्यः ॥ परि । नः । देवऽवीतये । वाजान् । अर्षसि । गोऽमतः । पुनानः । इंदोइति । इंद्रऽयुः ॥ ११ ॥ यवंऽयवं । नः । अंधसा । पुष्टंऽपुष्टं । परि । स्रव । सोम । विश्वा । च । सौभगा ॥ इंदोइति । यथा । तव । स्तवः । यथा । ते । जातं । अंधसः । नि । बर्हिषि । प्रिये । सदः ॥ उत । नः । गोऽवित् । अश्वऽवित् । पवस्व । सोम । अंधसा । मक्षुऽतमेभिः । अहऽभिः ॥ यः । जिनाति । न । जीयते । हंति । शत्रुं । अभिऽइत्य । सः । पवस्व । सहस्रऽजित् ॥ १२ ॥ परि । सोमः । ऋतं । बृहत् । आशुः । पवित्रे । अर्षति । विऽघ्नन् । रक्षांसि । देवऽयुः ॥ यत् । सोमः । वाजं । अर्षति । शतं । धाराः । अपस्युवः । इंद्रस्य । सख्यं । आऽविशन् ॥ अभि । त्वा । योषणः । दश । जारं । न । कन्या । अनूषत । मृज्यसे । सोम । सातये ॥ त्वं । इंद्राय । विष्णवे । स्वादुः । इंदोइति । परि । स्रव । नॄन् । स्तोतॄन् । पाहि । अंहसः ॥ १३ ॥ प्र । ते । धाराः । असश्चतः । दिवः । न । यंति । वृष्टयः । अच्छ । वाजं । सहस्रिणं ॥ अभि । प्रियाणि । काव्या । विश्वा । चक्षाणः । अर्षति । हरिः । तुजानः । आयुधा ॥ सः । ममृजानः । आयुऽभिः । इभः । राजाऽइव । सुऽव्रतः । श्येनः । न । वंसु । सीदति ॥ सः । नः । विश्वा । दिवः । वसु । उतोइति । पृथिव्याः । अधि । पुनानः । इंदोइति । आ । भर ॥ १४ ॥ तरत् । सः । मंदी । धावति । धारा । सुतस्य । अंधसः ॥ ० ॥ उस्रा । वेद । वसूनां । मर्तस्य । देवी । अवसः ॥ ० ॥ ध्वस्रयोः । पुरुऽसंत्योः । आ । सहस्राणि । दद्महे ॥ ० ॥ आ । ययोः । त्रिंशतं । तना । सहस्राणि । च । दद्महे ॥ ० ॥ १५ ॥ पवस्व । गोऽजित् । अश्वऽजित् । विश्वऽजित् । सोम । रण्यऽजित् । प्रजाऽवत् । रत्नं । आ । भर ॥ पवस्व । अत्ऽभ्यः । अदाभ्यः । पवस्व । ओषधीभ्यः । पवस्व । धिषणाभ्यः । त्वं । सोम । पवमानः । विश्वानि । दुःऽइता । तर । कविः । सीद । नि । बर्हिषि ॥ पवमान । स्वः । विदः । जायमानः । अभवः । महान् । इंदोइति ।

विश्वान् । अभि । इत् । असि ॥ १६ ॥ प्र । गायत्रेण । गायत ।
पवमानं । विऽचर्षणिं । इंदुं । सहस्रऽचक्षसं ॥ तं । त्वा । सहस्रऽ-
चक्षसं । अथोइति । सहस्रऽभर्णसं । अति । वारं । अपाविषुः ॥ अति ।
वारान् । पवमानः । असिस्यदत् । कलशान् । अभि । धावति । इंद्रस्य ।
हार्दि । आऽविशन् ॥ इंद्रस्य । सोम । राधसे । शं । पवस्व । विऽ-
चर्षणे । प्रजाऽवत् । रेतः । आ । भर ॥ १७ ॥ अया । वीती । परि ।
स्रव । यः । ते । इंदोइति । मदेषु । आ । अवऽअहन् । नवतीः ।
नव ॥ पुरः । सद्यः । इत्थाऽधिये । दिवःऽदासाय । शंबरं । अध ।
त्य । तुर्वशं । यदुं ॥ परि । नः । अश्वं । अश्वऽवित् । गोऽमत् ।
इंदोइति । हिरण्यऽवत् । क्षर । सहस्रिणीः । इषः ॥ पवमानस्य । ते ।
वयं । पवित्रं । अभिऽउंदतः । सखिऽत्वं । आ । वृणीमहे ॥ ये । ते ।
पवित्रं । ऊर्मयः । अभिऽक्षरंति । धारया । तेभिः । नः । सोम ।
मृळय ॥ १८ ॥ सः । नः । पुनानः । आ । भर । रयिं । वीरऽवतीं ।
इषं । ईशानः । सोम । विश्वतः ॥ एतं । ऊँइति । त्यं । दश । क्षिपः ।
मृजंति । सिंधुऽमातरं । सं । आदित्येभिः । अख्यत ॥ सं । इंद्रेण ।
उत । वायुना । सुतः । एति । पवित्रे । आ । सं । सूर्यस्य । रश्मिऽ-
भिः ॥ सः । नः । भगाय । वायवे । पूष्णे । पवस्व । मधुऽमान् ।
चारुः । मित्रे । वरुणे । च ॥ उच्चा । ते । जातं । अंधसः । दिवि ।
सत् । भूमिः । आ । ददे । उग्रं । शर्म । महि । श्रवः ॥ १९ ॥ एना ।
विश्वानि । अर्यः । आ । द्युम्नानि । मानुषाणां । सिसासंतः । वनामहे ॥
सः । नः । इंद्राय । यज्यवे । वरुणाय । मरुत्ऽभ्यः । वरिवःऽवित् ।
परि । स्रव ॥ उपोइति । सु । जातं । अप्ऽतुरं । गोभिः । भंगं ।
परिऽकृतं । इंदुं । देवाः । अयासिषुः ॥ तं । इत् । वर्धंतु । नः । गिरः ।
वत्सं । संऽशिश्वरीःऽइव । यः । इंद्रस्य । हृदंऽसनिः ॥ अर्ष । नः ।
सोम । शं । गवे । धुक्षस्व । पिप्युषीं । इषं । वर्ध । समुद्रं ।
उक्थ्यं ॥ २० ॥ पवमानः । अजीजनत् । दिवः । चित्रं । न । तन्यतुं ।

ज्योतिः । वैश्वानरं । बृहत् ॥ पवमानस्य । ते । रसः । मदः । राजन् । अदुच्छुनः । वि । वारं । अव्यं । अर्षति ॥ पवमान । रसः । तव । दक्षः । वि । राजति । द्युऽमान् । ज्योतिः । विश्वं । स्वः । दृशे । यः । ते । मदः । वरेण्यः । तेन । पवस्व । अंधसा । देवऽअवीः । अघशंसऽहा ॥ जघ्निः । वृत्रं । अमित्रियं । सस्निः । वाजं । दिवेऽदिवे । गोऽसाः । ऊँइति । अश्वऽसाः । असि ॥ २१ ॥ संऽमिश्लः । अरुषः । भव । सुऽउपस्थाभिः । न । धेनुऽभिः । सीदन् । श्येनः । न । योनिं । आ ॥ सः । पवस्व । यः । आविथ । इंद्रं । वृत्राय । हंतवे । वव्रिऽवांसं । महीः । अपः ॥ सुऽवीरासः । वयं । धना । जयेम । सोम । मीढ्वः । पुनानः । वर्ध । नः । गिरः ॥ त्वाऽऊतासः । तव । अवसा । स्याम । वन्वंतः । आऽमुरः । सोम । व्रतेषु । जागृहि ॥ अपऽघ्नन् । पवते । मृधः । अप । सोमः । अराव्णः । गच्छन् । इंद्रस्य । निःऽकृतं ॥ २२ ॥ महः । नः । रायः । आ । भर । पवमान । जहि । मृधः । रास्व । इंदोइति । वीरऽवत् । यशः ॥ न । त्वा । शतं । चन । हुतः । राधः । दित्संतं । आ । मिनन् । यत् । पुनानः । मखस्यसे ॥ पवस्व । इंदोइति । वृषा । सुतः । कृधि । नः । यशसः । जने । विश्वाः । अप । द्विषः । जहि ॥ अस्य । ते । सख्ये । वयं । तव । इंदोइति । द्युम्ने । उत्ऽतमे । ससह्याम । पृतन्यतः ॥ या । ते । भीमानि । आयुधा । तिग्मानि । संति । धूर्वणे । रक्ष । समस्य । नः । निदः ॥ २३ ॥ एते । असृग्रं । इंदवः । तिरः । पवित्रं । आशवः । विश्वानि । अभि । सौभगा ॥ विऽघ्नंतः । दुःऽइता । पुरु । सुऽगा । तोकाय । वाजिनः । तना । कृण्वंतः । अर्वते । कृण्वंतः । वरिवः । गवे । अभि । अर्षति । सुऽस्तुतिं । इळां । अस्मभ्यं । संऽयतं ॥ असावि । अंशुः । मदाय । अप्ऽसु । दक्षः । गिरिऽस्थाः । श्येनः । न । योनिं । आ । असदत् ॥ शुभ्रं । अंधः । देवऽवातं । अप्ऽसु । धूतः । नृऽभिः । सुतः । स्वदंति । गावः । पयःऽभिः ॥ २४ ॥ आत् । ईं । अश्वं । न ।

हेतारः । अशुंभन् । अमृताय । मध्वः । रसं । सधऽमादे ॥ याः ।
ते । धाराः । मधुऽश्चुतः । असृग्रं । इंदो इति । ऊतये । ताभिः ।
पवित्रं । आ । असदः ॥ सः । अर्ष । इंद्राय । पीतये । तिरः ।
रोमाणि । अव्यया । सीदन् । योना । वनेषु । आ ॥ त्वं । इंदो इति ।
परि । स्रव । स्वादिष्ठः । अंगिरःऽभ्यः । वरिवःऽवित् । घृतं । पयः ॥
अयं । विऽचर्षणिः । हितः । पवमानः । सः । चेतति । हिन्वानः ।
आप्यं । बृहत् ॥ २५ ॥ एषः । वृषा । वृषऽव्रतः । पवमानः ।
अशस्तिऽहा । करत् । वसूनि । दाशुषे ॥ आ । पवस्व । सहस्रिणं ।
रयिं । गोऽमंतं । अश्विनं । पुरुऽचंद्रं । पुरुऽस्पृहं ॥ एषः । स्यः ।
परि । सिच्यते । मर्मृज्यमानः । आयुऽभिः । उरुऽगायः । कविऽक्रतुः ॥
सहस्रऽऊतिः । शतऽमघः । विऽमानः । रजसः । कविः । इंद्राय ।
पवते । मदः ॥ गिरा । जातः । इह । स्तुतः । इंदुः । इंद्राय । धीयते ।
विः । योना । वसतौऽइव ॥ २६ ॥ पवमानः । सुतः । नृऽभिः ।
सोमः । वाजंऽइव । असरत् । चमूषु । शक्मना । आऽसदं ॥ तं ।
त्रिऽपृष्ठे । त्रिऽवंधुरे । रथे । युंजंति । यातवे । ऋषीणां । सप्त ।
धीतिऽभिः ॥ तं । सोतारः । धनऽस्पृतं । आशुं । वाजाय । यातवे ।
हरिं । हिनोत । वाजिनं ॥ आऽविशन् । कलशं । सुतः । विश्वाः ।
अर्षन् । अभि । श्रियः । शूरः । न । गोषु । तिष्ठति ॥ आ । ते ।
इंदो इति । मदाय । कं । पयः । दुहंति । आयवः । देवाः । देवेभ्यः ।
मधु ॥ २७ ॥ आ । नः । सोमं । पवित्रं । आ । सृजत । मधुमत्ऽ-
तमं । देवेभ्यः । देवश्रुत्ऽतमं ॥ एते । सोमाः । असृक्षत । गृणानाः ।
श्रवसे । महे । मदिन्ऽतमस्य । धारया ॥ अभि । गव्यानि । वीतये ।
नृम्णा । पुनानः । अर्षसि । सनत्ऽवाजः । परि । स्रव ॥ उत । नः ।
गोऽमतीः । इषः । विश्वाः । अर्ष । परिऽस्तुभः । गृणानः । जमत्ऽ-
अग्निना ॥ पवस्व । वाचः । अग्रियः । सोम । चित्राभिः । ऊतिऽभिः ।
अभि । विश्वानि । काव्या ॥ २८ ॥ त्वं । सुमद्रियाः । अपः । अग्रियः ।

वाचः । ईरयन् । पवस्व । विश्वंऽएजय ॥ तुभ्यं । इमा । भुवना । कवे । महिम्ने । सोम । तस्थिरे । तुभ्यं । अर्षंति । सिंधवः ॥ प्र । ते । दिवः । न । वृष्टयः । धाराः । यंति । असश्चतः । अभि । शुक्रां । उपऽस्तिरं ॥ इंद्राय । इंदुं । पुनीतन । उग्रं । दक्षाय । साधनं । ईशानं । वीतिऽराधसं ॥ पवमानः । ऋतः । कविः । सोमः । पवित्रं । आ । असदत् । दधत् । स्तोत्रे । सुऽवीर्यं ॥ २९ ॥ आ । पवस्व । सहस्रिणं । रयिं । सोम । सुऽवीर्यं । अस्मेइति । श्रवांसि । धारय ॥ इषं । ऊर्जं । च । पिन्वसे । इंद्राय । मत्सरिन्ऽतमः । चमूषु । आ । नि । सीदसि ॥ सुतः । इंद्राय । विष्णवे । सोमः । कलशे । अक्षरत् । मधुऽमान् । अस्तु । वायवे ॥ एते । असृग्रं । आशवः । अति । ह्वरांसि । बभ्रवः । सोमाः । ऋतस्य । धारया ॥ इंद्रं । वर्धंतः । अप्ऽतुरः । कृण्वंतः । विश्वं । आर्यं । अपऽघ्नंतः । अराव्णः ॥ ३० ॥ सुताः । अनु । स्वं । आ । रजः । अभि । अर्षंति । बभ्रवः । इंद्रं । गच्छंतः । इंदवः ॥ अया । पवस्व । धारया । यया । सूर्यं । अरोचयः । हिन्वानः । मानुषीः । अपः ॥ अयुक्त । सूरः । एतशं । पवमानः । मनौ । अधि । अंतरिक्षेण । यातवे ॥ उत । त्याः । हरितः । दश । सूरः । अयुक्त । यातवे । इंदुः । इंद्रः । इति । ब्रुवन् ॥ परि । इतः । वायवे । सुतं । गिरः । इंद्राय । मत्सरं । अव्यः । वारेषु । सिंचत ॥ ३१ ॥ पवमान । विदाः । रयिं । अस्मभ्यं । सोम । दुस्तरं । यः । दुःऽनशः । वनुष्यता ॥ अभि । अर्ष । सहस्रिणं । रयिं । गोऽमंतं । अश्विनं । अभि । वाजं । उत । श्रवः ॥ सोमः । देवः । न । सूर्यः । अद्रिऽभिः । पवते । सुतः । दधानः । कलशे । रसं ॥ एते । धामानि । आर्या । शुक्राः । ऋतस्य । धारया । वाजं । गोऽमंतं । अक्षरन् ॥ सुताः । इंद्राय । वज्रिणे । सोमासः । दधिऽआशिरः । पवित्रं । अति । अक्षरन् ॥ ३२ ॥ प्र । सोम । मधुमत्ऽतमः । राये । अर्ष । पवित्रे । आ । मदः । यः । देवऽवीतमः ॥ तं । ईमिति । मृजंति । आयवः । हरिं । नदीषु ।

वाजिनं । इंदुं । इंद्राय । मत्सरं ॥ आ । पवस्व । हिरण्यऽवत् ।
अश्वऽवत् । सोम । वीरऽवत् । वाजं । गोऽमंतं । आ । भर ॥ परि ।
वाजे । न । वाजऽयुं । अव्यः । वारेषु । सिंचत । इंद्राय । मधुमत्ऽ-
तमं ॥ कविं । मृजंति । मर्ज्यं । धीभिः । विप्राः । अवस्यवः । वृषा ।
कनिक्रत् । अर्षति ॥ ३३ ॥ वृषणं । धीभिः । अप्ऽतुरं । सोमं ।
ऋतस्य । धारया । मती । विप्राः । सं । अस्वरन् ॥ पवस्व । देव ।
आयुषक् । इंद्रं । गच्छतु । ते । मदः । वायुं । आ । रोह । धर्मणा ॥
पवमान । नि । तोशसे । रयिं । सोम । श्रवाय्यं । प्रियः । समुद्रं ।
आ । विश ॥ अपऽघ्नन् । पवसे । मृधः । क्रतुऽवित् । सोम । मत्सरः ।
नुदस्व । अदेवऽयुं । जनं ॥ पवमानाः । असृक्षत । सोमाः । शुक्रासः ।
इंदवः । अभि । विश्वानि । काव्या ॥ ३४ ॥ पवमानासः । आशवः ।
शुभ्राः । असृग्रं । इंदवः । घ्नंतः । विश्वाः । अप । द्विषः ॥ पवमानाः ।
दिवः । परि । अंतरिक्षात् । असृक्षत । पृथिव्याः । अधि । सानवि ॥
पुनानः । सोम । धारया । इंदोइति । विश्वाः । अप । स्रिधः । जहि ।
रक्षांसि । सुक्रतोइतिसुऽक्रतो ॥ अपऽघ्नन् । सोम । रक्षसः । अभि ।
अर्ष । कनिक्रदत् । द्युऽमंतं । शुष्मं । उत्ऽतमं ॥ अस्मेइति । वसूनि ।
धारय । सोम । दिव्यानि । पार्थिवा । इंदोइति । विश्वानि ।
वार्या ॥ ३५ ॥ वृषा । सोम । द्युऽमान् । असि । वृषा । देव । वृषऽ-
व्रतः । वृषा । धर्माणि । दधिषे ॥ वृष्णः । ते । वृष्ण्यं । शवः । वृषा ।
वनं । वृषा । मदः । सत्यं । वृषन् । वृषा । इत् । असि ॥ अश्वः ।
न । चक्रदः । वृषा । सं । गाः । इंदोइति । सं । अर्वतः । वि । नः ।
राये । दुरः । वृधि ॥ असृक्षत । प्र । वाजिनः । गव्या । सोमासः ।
अश्वऽया । शुक्रासः । वीरऽया । आशवः ॥ शुंभमानाः । ऋतयुऽभिः ।
मृज्यमानाः । गभस्त्योः । पवंते । वारे । अव्यये ॥ ३६ ॥ ते । विश्वा ।
दाशुषे । वसु । सोमाः । दिव्यानि । पार्थिवा । पवंतां । आ ।
अंतरिक्ष्या ॥ पवमानस्य । विश्वऽवित् । प्र । ते । सर्गाः । असृक्षत ।

सूर्यस्यऽइव । न । रश्मयः ॥ केतुं । कृण्वन् । दिवः । परि । विश्वा ।
रूपा । अभि । अर्षसि । समुद्रः । सोम । पिन्वसे ॥ हिन्वानः । वाचं ।
इष्यसि । पवमान । विऽधर्मणि । अक्रान् । देवः । न । सूर्यः ॥ इंदुः ।
पविष्ट । चेतनः । प्रियः । कवीनां । मती । सृजत् । अश्वं । रथीःऽ-
इव ॥ ३७ ॥ ऊर्मिः । यः । ते । पवित्रे । आ । देवऽअवीः । परिऽ-
अक्षरत् । सीदन् । ऋतस्य । योनिं । आ ॥ सः । नः । अर्ष ।
पवित्रे । आ । मदः । यः । देवऽवीतमः । इंदोइति । इंद्राय ।
पीतये ॥ इषे । पवस्व । धारया । मृज्यमानः । मनीषिऽभिः । इंदोइति ।
रुचा । अभि । गाः । इहि ॥ पुनानः । वरिवः । कृधि । ऊर्जं । जनाय ।
गिर्वणः । हरे । सृजानः । आऽशिरं ॥ पुनानः । देवऽवीतये । इंद्रस्य ।
याहि । निःऽकृतं । द्युतानः । वाजिऽभिः । यतः ॥ ३८ ॥ प्र ।
हिन्वानासः । इंदवः । अच्छ । समुद्रं । आशवः । धिया । जूताः ।
असृक्षत ॥ मर्मृजानासः । आयवः । वृथा । समुद्रं । इंदवः । अग्मन् ।
ऋतस्य । योनिं । आ ॥ परि । नः । याहि । अस्मऽयुः । विश्वा ।
वसूनि । ओजसा । पाहि । नः । शर्म । वीरऽवत् ॥ मिमाति । वह्निः ।
एतशः । पदं । युजानः । ऋक्वऽभिः । प्र । यत् । समुद्रे । आऽहितः ॥
आ । यत् । योनिं । हिरण्ययं । आशुः । ऋतस्य । सीदति । जहाति ।
अप्रऽचेतसः ॥ ३९ ॥ अभि । वेनाः । अनूषत । इयक्षंति । प्रऽचेतसः ।
मज्जंति । अविऽचेतसः ॥ इंद्राय । इंदोइति । मरुत्वते । पवस्व ।
मधुमत्ऽतमः । ऋतस्य । योनिं । आऽसदं ॥ तं । त्वा । विप्राः ।
वचःऽविदः । परि । कृण्वंति । वेधसः । सं । त्वा । मृजंति । आयवः ॥
रसं । ते । मित्रः । अर्यमा । पिबंति । वरुणः । कवे । पवमानस्य ।
मरुतः ॥ त्वं । सोम । विपःऽचितं । पुनानः । वाचं । इष्यसि ।
इंदोइति । सहस्रऽभर्णसं ॥ ४० ॥ उतोइति । सहस्रऽभर्णसं । वाचं ।
सोम । मखस्युवं । पुनानः । इंदोइति । आ । भर ॥ पुनानः ।
इंदोइति । एषां । पुरुऽहूत । जनानां । प्रियः । समुद्रं । आ । विश ॥

दविद्युतत्या । रुचा । परिऽस्तोभंत्या । कृपा । सोमाः । शुक्राः । गोऽआशिरः ॥ हिन्वानः । हेतृऽभिः । यतः । आ । वाजं । वाजी । अक्रमीत् । सीदंतः । वनुषः । यथा ॥ ऋधक् । सोम । स्वस्तये । संऽजग्मानः । दिवः । कविः । पवस्व । सूर्यः । दृशे ॥ ४१ ॥

इति सप्तमाष्टके प्रथमोध्यायः ॥ १ ॥






हरिः ॐ ॥ हिन्वंति । सूरं । उस्रयः । स्वसारः । जामयः । पतिं । महां । इंदुं । महीयुवः ॥ पवमान । रुचाऽरुचा । देवः । देवेभ्यः । परि । विश्वा । वसूनि । आ । विश ॥ आ । पवमान । सुऽस्तुतिं । वृष्टिं । देवेभ्यः । दुवः । इषे । पवस्व । संऽयतं ॥ वृषा । हि । असि । भानुना । द्युऽमंतं । त्वा । हवामहे । पवमान । सुऽआध्यः ॥ आ । पवस्व । सुऽवीर्यं । मंदमानः । सुऽआयुध । इहोइति । सु । इंदोइति । आ । गहि ॥ १ ॥ यत् । अत्ऽभिः । परिऽसिच्यसे । मृज्यमानः । गभस्त्योः । द्रुणा । सधऽस्थं । अश्नुषे ॥ प्र । सोमाय । व्यश्वऽवत् । पवमानाय । गायत । महे । सहस्रऽचक्षसे ॥ यस्य । वर्णं । मधुऽश्चुतं । हरिं । हिन्वंति । अद्रिऽभिः । इंदुं । इंद्राय । पीतये ॥ तस्य । ते । वाजिनः । वयं । विश्वा । धनानि । जिग्युषः । सखिऽत्वं । आ । वृणीमहे ॥ वृषा । पवस्व । धारया । मरुत्वते । च । मत्सरः । विश्वा । दधानः । ओजसा ॥ २ ॥ तं । त्वा । धर्तारं । ओण्योः । पवमान । स्वःऽदृशं । हिन्वे । वाजेषु । वाजिनं ॥ अया । चित्तः । विपा । अनया । हरिः । पवस्व । धारया । युजं । वाजेषु । चोदय ॥ आ । नः । इंदोइति ।

मही॑म् । इष॑म् । पवस्व । विश्वऽदर्शतः । अस्मभ्य॑म् । सोम । गातुऽवित् ॥ आ । कलशाः । अनूषत । इंदोइति॑ । धारा॑भिः । ओज॑सा । आ । इंद्र॑स्य । पीतये॑ । विश ॥ यस्य॑ । ते । मद्य॑म् । रस॑म् । तीव्रम् । दुहंति॑ । अद्रि॑ऽभिः । सः । पवस्व । अभिमातिऽहा ॥ ३ ॥ राजा॑ । मेधाभिः । ईयते । पव॑मानः । मनौ । अधि॑ । अंतरि॑क्षेण । यात॑वे ॥ आ । नः । इंदोइति॑ । शतऽग्विन॑म् । गवा॑म् । पोष॑म् । सुऽअश्व्य॑म् । वह॑ । भग॑त्ति । ऊतये॑ ॥ आ । नः । सोम । सहः॑ । जुवः॑ । रूप॑म् । न । वर्च॑से । भर । सुस्वानः । देवऽवी॑तये ॥ अर्ष॑ । सोम । द्युमत्ऽत॑मः । अभि । द्रोणा॑नि । रोरु॑वत् । सीद॑न् । श्येनः । न । योनि॑म् । आ ॥ अप्साः । इंद्रा॑य । वायवे॑ । वरु॑णाय । मरुत्ऽभ्यः॑ । सोमः॑ । अर्षति । विष्ण॑वे ॥ ४ ॥ इष॑म् । तोकाय॑ । नः । दध॑त् । अस्मभ्य॑म् । सोम । विश्वतः॑ । आ । पवस्व । सहस्रिण॑म् ॥ ० ॥ ये । वा । अदः । शर्यणाऽव॑ति ॥ ये । आर्जी॑केषु । कृत्व॑ऽसु । ये । मध्ये॑ । पस्त्या॑नाम् । ये । वा । जने॑षु । पंचऽसु ॥ ते । नः । वृष्टि॑म् । दिवः । परि॑ । पव॑ताम् । आ । सुऽवीर्य॑म् । सुवानाः । देवासः॑ । इंद॑वः ॥ पव॑ते । हर्य॑तः । हरि॑ः । गृणानः । जमत्ऽअ॑ग्निना । हिन्वानः । गोः । अधि॑ । त्वचि ॥ ५ ॥ प्र । शुक्रास॑ः । वयः॑ऽजुवः॑ । हिन्वानास॑ः । न । सप्त॑यः । श्रीणानाः । अप्ऽसु । मृंजत ॥ तम् । त्वा । सुतेषु॑ । आऽभुव॑ः । हिन्विरे । देवऽता॑तये । सः । पवस्व । अनया॑ । रुचा ॥ आ । ते । दक्ष॑म् । मयः॑ऽभुव॑म् । वह्नि॑म् । अद्य । वृणीमहे । पात॑म् । आ । पुरुऽस्पृह॑म् ॥ आ । मंद्र॑म् । आ । वरे॑ण्यम् । आ । विप्र॑म् । आ । मनीषिण॑म् ॥ ० ॥ आ । रयि॑म् । आ । सुऽचेतुन॑म् । आ । सुक्रतोइति॑सुऽक्रतो । तनूषु॑ । आ ॥ ० ॥ ६ ॥ पव॑स्व । विश्वऽचर्षणे । अभि । विश्वा॑नि । काव्या॑ । सखा॑ । सखि॑ऽभ्यः । ईड्य॑ः ॥ ताभ्या॑म् । विश्व॑स्य । राजसि । येइति॑ । पवमान । धाम॑नीइति॑ । प्रतीचीइति॑ । सोम । तस्थतुः॑ ॥ परि॑ । धामा॑नि । यानि॑ । ते । त्वम् । सोम । असि । विश्वतः॑ । पव॑मान । ऋतुऽभिः । कवे ॥ पव॑स्व । जनय॑न् । इष॑ः । अभि । विश्वा॑नि ।

वायो । सखा । सखिऽभ्यः । ऊतये ॥ तव । शुक्रासः । अर्चयः । दिवः ।
पृष्ठे । वि । तन्वते । पवित्रं । सोम । धामऽभिः ॥ ७ ॥ तव । इमे ।
सप्त । सिंधवः । प्रऽशिषं । सोम । सिस्रते । तुभ्यं । धावंति ।
धेनवः ॥ प्र । सोम । याहि । धारया । सुतः । इंद्राय । मत्सरः ।
दधानः । अक्षिति । श्रवः ॥ सं । ऊँइति । त्वा । धीभिः । अस्वरन् ।
हिन्वतीः । सप्त । जामयः । विप्रं । आजा । विवस्वतः ॥ मृजंति ।
त्वा । सं । अग्रुवः । अव्ये । जीरौ । अधि । स्वनि । रेभः । यत् ।
अज्यसे । वने ॥ पवमानस्य । ते । कवे । वाजिन् । सर्गाः । असृक्षत ।
अर्वंतः । न । श्रवस्यवः ॥ ८ ॥ अच्छ । कोशं । मधुऽश्चुतं । असृग्रं ।
वारे । अव्यये । अवावशंत । धीतयः ॥ अच्छ । समुद्रं । इंदवः ।
अस्तं । गावः । न । धेनवः । अग्मन् । ऋतस्य । योनिं । आ ॥ प्र ।
नः । इंदो इति । महे । रणे । आपः । अर्षंति । सिंधवः । यत् । गोभिः ।
वासयिष्यसे ॥ अस्य । ते । सख्ये । वयं । इयक्षंतः । त्वाऽऊतयः ।
इंदो इति । सखिऽत्वं । उश्मसि ॥ आ । पवस्व । गोऽइष्टये । महे । सोम ।
नृऽचक्षसे । आ । इंद्रस्य । जठरे । विश ॥ ९ ॥ महान् । असि ।
सोम । ज्येष्ठः । उग्राणां । इंदो इति । ओजिष्ठः । युध्वा । सन् ।
शश्वत् । जिगेथ ॥ यः । उग्रेभ्यः । चित् । ओजीयान् । शूरेभ्यः ।
चित् । शूरऽतरः । भूरिऽदाभ्यः । चित् । मंहीयान् ॥ त्वं । सोम ।
सूरः । आ । इषः । तोकस्य । साता । तनूनां । वृणीमहे । सख्याय ।
वृणीमहे । युज्याय ॥ अग्ने । आयूंषि । पवसे । आ । सुव । ऊर्जं ।
इषं । च । नः । आरे । बाधस्व । दुच्छुनां ॥ अग्निः । ऋषिः । पवमानः ।
पांचऽजन्यः । पुरःऽहितः । तं । ईमहे । महाऽगयं ॥ १० ॥ अग्ने ।
पवस्व । सुऽअपाः । अस्मे इति । वर्चः । सुऽवीर्यं । दधत् । रयिं ।
मयि । पोषं ॥ पवमानः । अति । स्रिधः । अभि । अर्षति । सुऽस्तुतिं ।
सूरः । न । विश्वऽदर्शतः ॥ सः । मर्मृजानः । आयुऽभिः । प्रयस्वान् ।
प्रयसे । हितः । इंदुः । अत्यः । विऽचक्षणः ॥ पवमानः । ऋतं ।

बृहत् । शुक्रं । ज्योतिः । अजीजनत् । कृष्णा । तमांसि । जंघनत् ॥
पवमानस्य । जंघ्नतः । हरेः । चंद्राः । असृक्षत । जीराः । अजिरऽ-
शोचिषः ॥ ११ ॥ पवमानः । रथिऽतमः । शुभ्रेभिः । शुभ्रशःऽतमः ।
हरिऽचंद्रः । मरुत्ऽगणः ॥ पवमानः । वि । अश्नवत् । रश्मिऽभिः ।
वाजऽसातमः । दधत् । स्तोत्रे । सुऽवीर्यं ॥ प्र । सुवानः । इंदुः ।
अक्षारिति । पवित्रं । अति । अव्ययं । पुनानः । इंदुः । इंद्रं । आ ॥
एषः । सोमः । अधि । त्वचि । गवां । क्रीळति । अद्रिऽभिः । इंद्रं ।
मदाय । जोहुवत् ॥ यस्य । ते । द्युम्नऽवत् । पयः । पवमान । आऽ-
भृतं । दिवः । तेन । नः । मृळ । जीवसे ॥ १२ ॥ त्वं । सोम । असि ।
धारयुः । मंद्रः । ओजिष्ठः । अध्वरे । पवस्व । मंहयत्ऽरयिः ॥ त्वं ।
सुतः । नृऽमादनः । दधन्वान् । मत्सरिन्ऽतमः । इंद्राय । सूरिः ।
अंधसा ॥ त्वं । सुस्वानः । अद्रिऽभिः । अभि । अर्ष । कनिक्रदत् । द्युऽ-
मंतं । शुष्मं । उत्ऽतमं ॥ इंदुः । हिन्वानः । अर्षति । तिरः । वाराणि ।
अव्यया । हरिः । वाजं । अचिक्रदत् ॥ इंदोइति । वि । अव्यं । अर्षसि ।
वि । श्रवांसि । वि । सौभगा । वि । वाजान् । सोम । गोऽमतः ॥ १३ ॥
आ । नः । इंदोइति । शतऽग्विनं । रयिं । गोऽमंतं । अश्विनं । भर ।
सोम । सहस्रिणं ॥ पवमानासः । इंदवः । तिरः । पवित्रं । आशवः ।
इंद्रं । यामेभिः । आशत ॥ ककुहः । सोम्यः । रसः । इंदुः । इंद्राय ।
पूर्व्यः । आयुः । पवते । आयवे ॥ हिन्वंति । सूरं । उस्रयः । पवमानं ।
मधुऽश्चुतं । अभि । गिरा । सं । अस्वरन् ॥ अविता । नः । अजऽ-
अश्वः । पूषा । यामनिऽयामनि । आ । भक्षत् । कन्यासु । नः ॥ १४ ॥
अयं । सोमः । कपर्दिने । घृतं । न । पवते । मधु ॥ ० ॥ अयं । ते ।
आघृणे । सुतः । घृतं । न । पवते । शुचि ॥ ० ॥ वाचः । जंतुः ।
कवीनां । पवस्व । सोम । धारया । देवेषु । रत्नऽधाः । असि ॥ आ ।
कलशेषु । धावति । श्येनः । वर्म । वि । गाहते । अभि । द्रोणा ।
कनिक्रदत् ॥ परि । प्र । सोम । ते । रसः । असर्जि । कलशे । सुतः ।

श्येनः । न । तक्तः । अर्षति ॥ १५ ॥ पवस्व । सोम । मंदयन् ।
इंद्राय । मधुमत्ऽतमः ॥ असृग्रन् । देवऽवीतये । वाजऽयंतः । रथाःऽ-
इव ॥ ते । सुतासः । मदिन्ऽतमाः । शुक्राः । वायुं । असृक्षत ॥
ग्राव्णा । तुन्नः । अभिऽस्तुतः । पवित्रं । सोम । गच्छसि । दधत् ।
स्तोत्रे । सुऽवीर्यं ॥ एषः । तुन्नः । अभिऽस्तुतः । पवित्रं । अति ।
गाहते । रक्षःऽहा । वारं । अव्ययं ॥ १६ ॥ यत् । अंति । यत् । च ।
दूरके । भयं । विंदति । मां । इह । पवमान । वि । तत् । जहि ॥
पवमानः । सः । अद्य । नः । पवित्रेण । विऽचर्षणिः । यः । पोता ।
सः । पुनातु । नः ॥ यत् । ते । पवित्रं । अर्चिषि । अग्ने । विऽततं ।
अंतः । आ । ब्रह्म । तेन । पुनीहि । नः । यत् । ते । पवित्रं ।
अर्चिःऽवत् । अग्ने । तेन । पुनीहि । नः । ब्रह्मऽसवैः । पुनीहि ।
नः ॥ उभाभ्यां । देव । सवितरिति । पवित्रेण । सवेन । च ।
मां । पुनीहि । विश्वतः ॥ १७ ॥ त्रिऽभिः । त्वं । देव ।
सवितः । वर्षिष्ठैः । सोम । धामऽभिः । अग्ने । दक्षैः । पुनीहि ।
नः ॥ पुनंतु । मां । देवऽजनाः । पुनंतु । वसवः । धिया ।
विश्वे । देवाः । पुनीत । मा । जातऽवेदः । पुनीहि । मा ॥ प्र ।
प्यायस्व । प्र । स्यंदस्व । सोम । विश्वेभिः । अंशुऽभिः । देवेभ्यः ।
उत्ऽतमं । हविः ॥ उप । प्रियं । पनिप्नतं । युवानं । आहुतिऽवृधं ।
अगन्म । बिभ्रतः । नमः ॥ अलाय्यस्य । परशुः । ननाश । तं । आ ।
पवस्व । देव । सोम । आखुं । चित् । एव । देव । सोम ॥ यः ।
पावमानीः । अधिऽएति । ऋषिऽभिः । संऽभृतं । रसं । सर्वं । सः ।
पूतं । अश्नाति । स्वदितं । मातरिश्वना ॥ पावमानीः । यः ।
अधिऽएति । ऋषिऽभिः । संऽभृतं । रसं । तस्मै । सरस्वती ।
दुहे । क्षीरं । सर्पिः । मधु । उदकं ॥ इति तृतीयोऽनुवाकः ॥ – :: – ॥
॥ १८ ॥ प्र । देवं । अच्छ । मधुऽमंतः । इंदवः । असिस्यदंत ।
गावः । आ । न । धेनवः । बर्हिऽसदः । वचनाऽवंतः । ऊधऽ-

भिः । परिऽस्रुतं । उस्रियाः । निःऽनिजं । धिरे ॥ सः । रोरुवत् । अभि । पूर्वाः । अचिक्रदत् । उपऽआरुहः । श्रथयन् । स्वादते । हरिः । तिरः । पवित्रं । परिऽयन् । उरु । ज्रयः । नि । शर्याणि । दधते । देवः । आ । वरं ॥ वि । यः । ममे । यम्या । संयतीइतिसंऽयती । मदः । साकंऽवृधा । पयसा । पिन्वत् । अक्षिता । महीइति । अपारेइति । रजसीइति । विऽवेविदत् । अभिऽव्रजन् । अक्षितं । पाजः । आ । ददे । सः । मातरा । विऽचरन् । वाजयन् । अपः । प्र । मेधिरः । स्वधया । पिन्वते । पदं ॥ अंशुः । यवेन । पिपिशे । यतः । नृऽभिः । सं । जामिऽभिः । नसते । रक्षते । शिरः । सं । दक्षेण । मनसा । जायते । कविः । ऋतस्य । गर्भः । निऽहितः । यमा । परः ॥ यूना । ह । संता । प्रथमं । वि । जज्ञतुः । गुहा । हितं । जनिम । नेमं । उत्ऽयतं ॥ १९ ॥ मंद्रस्य । रूपं । विविदुः । मनीषिणः । श्येनः । यत् । अंधः । अभरत् । पराऽवतः । तं । मर्जयंत । सुऽवृधं । नदीषु । आ । उशंतं । अंशुं । परिऽयंतं । ऋग्मियं ॥ त्वां । मृजंति । दश । योषणः । सुतं । सोम । ऋषिऽभिः । मतिऽभिः । धीतिऽभिः । हितं । अव्यः । वारेभिः । उत । देवहूतिऽभिः । नृऽभिः । यतः । वाजं । आ । दर्षि । सातये ॥ परिऽप्रयंतं । वय्यं । सुऽसंसदं । सोमं । मनीषाः । अभि । अनूषत । स्तुभः । यः । धारया । मधुऽमान् । ऊर्मिणा । दिवः । इयर्ति । वाचं । रयिषाट् । अमर्त्यः ॥ अयं । दिवः । इयर्ति । विश्वं । आ । रजः । सोमः । पुनानः । कलशेषु । सीदति । अत्ऽभिः । गोभिः । मृज्यते । अद्रिऽभिः । सुतः । पुनानः । इंदुः । वरिवः । विदत् । प्रियं ॥ एव । नः । सोम । परिऽसिच्यमानः । वयः । दधत् । चित्रऽतमं । पवस्व । अद्वेषेइति । द्यावापृथिवीइति । हुवेम । देवाः । धत्त । रयिं । असेइति । सुऽवीरं ॥ २० ॥ इषुः । न । धन्वन् । प्रति । धीयते । मतिः । वत्सः । न । मातुः । उप । सर्जि । ऊधनि । उरुधाराऽइव । दुहे । अग्रे । आऽयती । अस्य । व्रतेषु । अपि । सोमः । इष्यते ॥

उपोइति । मतिः । पृच्यते । सिच्यते । मधु । मंद्रऽअजनी । चोदते । अंतः । आसनि । पवमानः । संऽतनिः । प्रघ्नतांऽइव । मधुऽमान् । द्रप्सः । परि । वारं । अर्षति ॥ अव्ये । वधूऽयुः । पवते । परि । त्वचि । श्रथ्नीते । नप्तीः । अदितेः । ऋतं । यते । हरिः । अक्रान् । यजतः । संऽयतः । मदः । नृम्णा । शिशानः । महिषः । न । शोभते ॥ उक्षा । मिमाति । प्रति । यंति । धेनवः । देवस्य । देवीः । उप । यंति । निःऽकृतं । अति । अक्रमीत् । अर्जुनं । वारं । अव्ययं । अत्कं । न । निक्तं । परि । सोमः । अव्यत ॥ अमृक्तेन । रुशता । वाससा । हरिः । अमर्त्यः । निःऽनिजानः । परि । व्यत । दिवः । पृष्ठं । बर्हणा । निःऽनिजे । कृत । उपऽस्तरणं । चम्वोः । नभस्मयं ॥ २१ ॥ सूर्यस्यऽइव । रश्मयः । द्रवयित्नवः । मत्सरासः । प्रऽसुपः । साकं । ईरते । ततं । तंतुं । परि । सर्गासः । आशवः । न । इंद्रात् । ऋते । पवते । धाम । किं । चन ॥ सिंधोःऽइव । प्रवणे । निम्ने । आशवः । वृषऽच्युताः । मदासः । गातुं । आशत । शं । नः । निऽवेशे । द्विऽपदे । चतुःऽपदे । अस्मेइति । वाजाः । सोम । तिष्ठंतु । कृष्टयः ॥ आ । नः । पवस्व । वसुऽमत् । हिरण्यऽवत् । अश्वऽवत् । गोऽमत् । यवऽमत् । सुऽवीर्यं । यूयं । हि । सोम । पितरः । मम । स्थन । दिवः । मूर्धानः । प्रऽस्थिताः । वयःऽकृतः ॥ एते । सोमाः । पवमानासः । इंद्रं । रथाःऽइव । प्र । ययुः । साति । अच्छ । सुताः । पवित्रं । अति । यंति । अव्यं । हित्वी । वव्रिं । हरितः । वृष्टिं । अच्छ ॥ इंदोइति । इंद्राय । बृहते । पवस्व । सुऽमृळीकः । अनवद्यः । रिशादाः । भर । चंद्राणि । गृणते । वसूनि ॥ ० ॥ २२ ॥ त्रिः । अस्मै । सप्त । धेनवः । दुदुह्रे । सत्यां । आऽशिरं । पूर्व्ये । विऽओमनि । चत्वारि । अन्या । भुवनानि । निःऽनिजे । चारूणि । चक्रे । यत् । ऋतैः । अवर्धत ॥ सः । भिक्षमाणः । अमृतस्य । चारुणः । उभेइति । द्यावा । काव्येन । वि । शश्रथे । तेजिष्ठाः । अपः । मंहना । परि । व्यत । यदि । देवस्य ।

श्रवसा । सदः । विदुः ॥ ते । अस्य । सन्तु । केतवः । अमृत्यवः । अदाभ्यासः । जनुषीइति । उभेइति । अनु । येभिः । नृम्णा । च । देव्या । च । पुनते । आत् । इत् । राजानं । मननाः । अगृभ्णत ॥ सः । मृज्यमानः । दशऽभिः । सुकर्मऽभिः । प्र । मध्यमासु । मातृषु । प्रऽमे । सचा । व्रतानि । पानः । अमृतस्य । चारुणः । उभेइति । नृऽचक्षाः । अनु । पश्यते । विशौ ॥ सः । मर्मृजानः । इंद्रियाय । धायसे । आ । उभेइति । अंतरिति । रोदसीइति । हर्षते । हितः । वृषा । शुष्मेण । बाधते । वि । दुःऽमतीः । आऽदेदिशानः । शर्यहाऽइव । शुरुधः ॥ २३ ॥ सः । मातरा । न । ददृशानः । उस्रियः । नानदत् । एति । मरुताऽइव । स्वनः । जानन् । ऋतं । प्रथमं । यत् । स्वःऽनरं । प्रऽशस्तये । कं । अवृणीत । सुक्रतुः ॥ रुवति । भीमः । वृषभः । तविष्यया । शृंगेइति । शिशानः । हरिणीइति । विऽचक्षणः । आ । योनिं । सोमः । सुऽकृतं । नि । सीदति । गव्ययी । त्वक् । भवति । निःऽनिक् । अव्ययी ॥ शुचिः । पुनानः । तन्वं । अरेपसं । अव्ये । हरिः । नि । अधाविष्ट । सानवि । जुष्टः । मित्राय । वरुणाय । वायवे । त्रिऽधातु । मधु । क्रियते । सुकर्मऽभिः ॥ पवस्व । सोम । देवऽवीतये । वृषा । इंद्रस्य । हार्दि । सोमऽधानं । आ । विश । पुरा । नः । बाधात् । दुःऽइता । अति । पारय । क्षेत्रऽवित् । हि । दिशः । आह । विऽपृच्छते ॥ हितः । न । सप्तिः । अभि । वाजं । अर्ष । इंद्रस्य । इंदोइति । जठरं । आ । पवस्व । नावा । न । सिंधुं । अति । पर्षि । विद्वान् । शूरः । न । युध्यन् । अव । नः । निदः । स्परितिस्पः ॥ २४ ॥ आ । दक्षिणा । सृज्यते । शुष्मी । आऽसदं । वेति । द्रुहः । रक्षसः । पाति । जागृविः । हरिः । ओपशं । कृणुते । नभः । पयः । उपऽस्तिरे । चम्वोः । ब्रह्म । निःऽनिजे ॥ प्र । कृष्टिहाऽइव । शूषः । एति । रोरुवत् । असुर्यं । वर्णं । नि । रिणीते । अस्य । तं । जहाति । वव्रिं । पितुः । एति । निःऽकृतं । उपऽप्रुतं । कृणुते ।

निःऽनिजं । तना ॥ अद्रिऽभिः । सुतः । पवते । गभस्त्योः । वृषऽयते । नभसा । वेपते । मती । सः । मोदते । नसते । साधते । गिरा । नेनिक्ते । अप्ऽसु । यजते । परीमणि ॥ परि । द्युक्षं । सहसः । पर्वतऽवृधं । मध्वः । सिंचंति । हर्म्यस्य । सक्षणिं । आ । यस्मिन् । गावः । सुहुतऽअदः । ऊधनि । मूर्धन् । श्रीणंति । अग्रियं । वरीमऽभिः ॥ सं । ईमिति । रथं । न । भुरिजोः । अहेषत । दश । स्वसारः । अदितेः । उपऽस्थे । आ । जिगात् । उप । ज्रयति । गोः । अपीच्यं । पदं । यत् । अस्य । मतुथाः । अजीजनन् ॥ २५ ॥ श्येनः । न । योनिं । सदनं । धिया । कृतं । हिरण्ययं । आऽसदं । देवः । आ । ईषति । आ । ईमिति । रिणंति । बर्हिषि । प्रियं । गिरा । अश्वः । न । देवान् । अपि । एति । यज्ञियः ॥ परा । विऽअक्तः । अरुषः । दिवः । कविः । वृषा । त्रिऽपृष्ठः । अनविष्ट । गाः । अभि । सहस्रऽनीतिः । यतिः । पराऽयतिः । रेभः । न । पूर्वीः । उषसः । वि । राजति ॥ त्वेषं । रूपं । कृणुते । वर्णः । अस्य । सः । यत्र । अशयत् । संऽकृता । सेधति । स्रिधः । अप्साः । याति । स्वधया । दैव्यं । जनं । सं । सुऽस्तुती । नसते । सं । गोऽअग्रया ॥ उक्षाऽइव । यूथा । परिऽयन् । अरावीत् । अधि । त्विषीः । अधित । सूर्यस्य । दिव्यः । सुऽपर्णः । अव । चक्षत । क्षां । सोमः । परि । क्रतुना । पश्यते । जाः ॥ २६ ॥ हरिं । मृजंति । अरुषः । न । युज्यते । सं । धेनुऽभिः । कलशे । सोमः । अज्यते । उत् । वाचं । ईरयति । हिन्वते । मती । पुरुऽस्तुतस्य । कति । चित् । परिऽप्रियः ॥ साकं । वदंति । बहवः । मनीषिणः । इंद्रस्य । सोमं । जठरे । यत् । आऽदुदुः । यदि । मृजंति । सुऽगभस्तयः । नरः । सऽनीळाभिः । दशऽभिः । काम्यं । मधु ॥ अरममाणः । अति । एति । गाः । अभि । सूर्यस्य । प्रियं । दुहितुः । तिरः । रवं । अनु । अस्मै । जोषं । अभरत् । विनंऽगृसः । सं । द्वयीभिः । स्वसृऽभिः । क्षेति । जामिऽभिः ॥ नृऽधूतः । अद्रिऽ-

सुतः । बर्हिषि । प्रियः । पतिः । गवां । प्रऽदिवः । इंदुः । ऋत्वियः ।
पुरंधिऽवान् । मनुषः । यज्ञऽसाधनः । शुचिः । धिया । पवते ।
सोमः । इंद्र । ते ॥ आ । अप्राः । क्रतून् । सं । अज्रैः । अध्वरे ।
मतीः । वेः । न । द्रुऽसत् । चम्वोः । आ । असदत् । हरिः ॥ २७ ॥
अंशुं । दुहंति । स्तनयंतं । अक्षितं । कविं । कवयः । अपसः ।
मनीषिणः । सं । ईं । इति । गावः । मतयः । यंति । संऽयतः ।
ऋतस्य । योना । सदने । पुनःऽभुवः ॥ नाभा । पृथिव्याः । धरुणः ।
महः । दिवः । अपां । ऊर्मौ । सिंधुषु । अंतः । उक्षितः । इंद्रस्य ।
वज्रः । वृषभः । विभुऽवसुः । सोमः । हृदे । पवते । चारु । मत्सरः ॥
सः । तु । पवस्व । परि । पार्थिवं । रजः । स्तोत्रे । शिक्षन् । आऽ-
धून्वते । च । सुक्रतोइतिसुऽक्रतो । मा । नः । निः । भाक् । वसुनः ।
सदनऽस्पृशः । रयिं । पिशंगं । बहुलं । वसीमहि ॥ आ । तु । नः ।
इंदोइति । शतऽदातु । अश्व्यं । सहस्रऽदातु । पशुऽमत् । हिरण्यऽ-
वत् । उप । मास्व । बृहतीः । रेवतीः । इषः । अधि । स्तोत्रस्य ।
पवमान । नः । गहि ॥ २८ ॥ स्रक्के । द्रप्सस्य । धमतः । सं ।
अस्वरन् । ऋतस्य । योना । सं । अरंत । नाभयः । त्रीन् । सः ।
मूर्ध्नः । असुरः । चक्रे । आऽरभे । सत्यस्य । नावः । सुऽकृतं ।
अपीपरन् ॥ सम्यक् । सम्यंचः । महिषाः । अहेषत । सिंधोः । ऊर्मौ ।
अधि । वेनाः । अवीविपन् । मधोः । धाराभिः । जनयंतः । अर्कं ।
इत् । प्रियां । इंद्रस्य । तन्वं । अवीवृधन् ॥ पवित्रऽवंतः । परि । वाचं ।
आसते । पिता । एषां । प्रत्नः । अभि । रक्षति । व्रतं । महः । समुद्रं ।
वरुणः । तिरः । दधे । धीराः । इत् । शेकुः । धरुणेषु । आऽरभं ॥
सहस्रऽधारे । अव । ते । सं । अस्वरन् । दिवः । नाके । मधुऽजिह्वाः ।
असश्चतः । अस्य । स्पशः । न । नि । मिषंति । भूर्णयः । पदेऽपदे ।
पाशिनः । संति । सेतवः ॥ पितुः । मातुः । अधि । आ । ये । संऽअस्वरन् ।
ऋचा । शोचंतः । संऽदहंतः । अव्रतान् । इंद्रऽद्विष्टां । अप । धमंति ।

मायया । त्वचं । असिक्नीं । भूमनः । दिवः । परिं ॥ २९ ॥ प्रत्नात् । मानात् ॥ ० ॥ श्लोकऽयंत्रासः । रभसस्यं । मंतवः । अपं । अनक्षासंः । बधिराः । अहासत । ऋतस्यं । पंथां । न । तरंति । दुःऽकृतः ॥ सहस्रंऽधारे । विऽतंते । पवित्रें । आ । वाचं । पुनंति । कवयंः । मनीषिणंः । रुद्रासंः । एषां । इषिरासंः । अद्रुहंः । स्पशंः । सुऽअंचः । सुऽदृशंः । नृऽचक्षंसः ॥ ऋतस्यं । गोपाः । न । दभाय । सुऽक्रतुः । त्री । सः । पवित्रा । हृदि । अंतः । आ । दधे । विद्वान् । सः । विश्वां । भुवंना । अभि । पश्यति । अवं । अजुंष्टान् । विध्यति । कर्तें । अव्रतान् ॥ ऋतस्यं । तंतुः । विऽततः । पवित्रें । आ । जिह्वायाः । अग्रें । वरुणस्य । माययां । धीरांः । चित् । तत् । संऽइनंक्षंतः । आशत । अत्रं । कर्तं । अवं । पदाति । अप्रंऽभुः ॥ ३० ॥ शिशुः । न । जातः । अवं । चक्रदत् । वनें । स्वंः । यत् । वाजी । अरुषः । सिसांसति । दिवः । रेतंसा । सचते । पयःऽवृधां । तं । ईमहे । सुऽमती । शर्मं । सऽप्रथः । दिवः । यः । स्कंभः । धरुणंः । सुऽआंततः । आऽपूर्णः । अंशुः । परिऽएतिं । विश्वतः । सः । इमेइतिं । महीइतिं । रोदसीइतिं । यक्षत् । आऽवृतां । समीचीनेइतिंसंऽईचीने । दाधार । सं । इषंः । कविः ॥ महिं । प्सरंः । सुऽकृतं । सोम्यं । मधुं । उर्वी । गव्यूंतिः । अदितेः । ऋतं । यते । ईशें । यः । वृष्टेः । इतः । उस्रियंः । वृषां । अपां । नेता । यः । इतःऽऊंतिः । ऋग्मियंः ॥ आत्मन्ऽवत् । नभंः । दुह्यते । घृतं । पयंः । ऋतस्यं । नाभिः । अमृतं । वि । जायते । संऽईचीनाः । सुऽदानंवः । प्रीणंति । तं । नरंः । हितं । अवं । मेहंति । पेरंवः ॥ अरांवीत् । अंशुः । सचंमानः । ऊर्मिणां । देवऽअव्यं । मनुंषे । पिन्वति । त्वचं । दधांति । गर्भं । अदितेः । उपऽस्थें । आ । येनं । तोकं । च । तनंयं । च । धामंहे ॥ ३१ ॥ सहस्रंऽधारे । अवं । ताः । असश्चतंः । तृतीयें । संतु । रजंसि । प्रजाऽवंतीः । चतंस्रः । नाभंः । निऽहिंताः । अवः । दिवः । हविः । भरंति । अमृतं । घृतऽश्चुतंः ॥

श्वेतं । रूपं । कृणुते । यत् । सिसासति । सोमः । मीढ्वान् । असुरः । वेद । भूमनः । धिया । शमी । सचते । सः । ईं । अभि । प्रऽवत् । दिवः । कवंधं । अव । दर्षत् । उद्रिणं ॥ ० ॥ कार्ष्मन् । आ । वाजी । अक्रमीत् । ससऽवान् । आ । हिन्विरे । मनसा । देवऽयंतः । कक्षीवते । शतऽहिमाय । गोनां ॥ अत्ऽभिः । सोम । पपृचानस्य । ते । रसः । अव्यः । वारं । वि । पवमान । धावति । सः । मृज्यमानः । कविऽभिः । मदिन्ऽतम । स्वदस्व । इंद्राय । पवमान । पीतये ॥ ३२ ॥

अभि । प्रियाणि । पवते । चनःऽहितः । नामानि । यह्वः । अधि । येषु । वर्धते । आ । सूर्यस्य । बृहतः । बृहन् । अधि । रथं । विष्वंचं । अरुहत् । विऽचक्षणः ॥ ऋतस्य । जिह्वा । पवते । मधु । प्रियं । वक्ता । पतिः । धियः । अस्याः । अदाभ्यः । दधाति । पुत्रः । पित्रोः । अपीच्यं । नाम । तृतीयं । अधि । रोचने । दिवः ॥ अव । द्युतानः । कलशान् । अचिक्रदत् । नृऽभिः । येमानः । कोशे । आ । हिरण्यये ॥ ० ॥ अधि । त्रिऽपृष्ठः । उषसः । वि । राजति ॥ अद्रिऽभिः । सुतः । मतिऽभिः । चनःऽहितः । प्रऽरोचयन् । रोदसीइति । मातरा । शुचिः । रोमाणि । अव्या । समया । वि । धावति । मधोः । धारा । पिन्वमाना । दिवेऽदिवे ॥ परि । सोम । प्र । धन्व । स्वस्तये । नृऽभिः । पुनानः । अभि । वासय । आऽशिरं ॥ ये । ते । मदाः । आहनसः । विऽहायसः । तेभिः । इंद्रं । चोदय । दातवे । मघं ॥ ३३ ॥

इति सप्तमाष्टके द्वितीयोध्यायः ॥ २ ॥



## ॥ अथ तृतीयोऽध्यायः ॥

हरिः ॐ ॥ धर्ता । दिवः । पवते । कृत्व्यः । रसः । दक्षः । देवानां । अनुऽमाद्यः । नृऽभिः । हरिः । सृजानः । अत्यः । न । सत्वऽभिः । वृथा । पाजांसि । कृणुते । नदीषु । आ ॥ शूरः । न । धत्ते । आयुधा । गभस्त्योः । स्वऽरितिस्वः । सिसासन् । रथिरः । गोऽइष्टिषु । इंद्रस्य । शुष्मं । ईरयन् । अपस्युऽभिः । इंदुः । हिन्वानः । अज्यते । मनीषिऽभिः ॥ इंद्रस्य । सोम । पवमानः । ऊर्मिणा । तविष्यमाणः । जठरेषु । आ । विश । प्र । नः । पिन्व । विऽद्युत् । अभ्राऽइव । रोदसीइति । धिया । न । वाजान् । उप । मासि । शश्वतः ॥ विश्वस्य । राजा । पवते । स्वःऽदृशः । ऋतस्य । धीतिं । ऋषिषाट् । अवीवशत् । यः । सूर्यस्य । असिरेण । मृज्यते । पिता । मतीनां । असमष्टऽकाव्यः ॥ वृषाऽइव । यूथा । परि । कोशं । अर्षसि । अपां । उपऽस्थे । वृषभः । कनिक्रदत् । सः । इंद्राय । पवसे । मत्सरिन्ऽतमः । यथा । जेषाम । संऽइथे । त्वाऽऊतयः ॥ १ ॥ एषः । प्र । कोशे । मधुऽमान् । अचिक्रदत् । इंद्रस्य । वज्रः । वपुषः । वपुःऽतरः । अभि । ईं । ऋतस्य । सुऽदुघाः । घृतऽश्चुतः । वाश्राः । अर्षति । पयसाऽइव । धेनवः ॥ सः । पूर्व्यः । पवते । यं । दिवः । परि । श्येनः । मथायत् । इषितः । तिरः । रजः । सः । मध्वः । आ । युवते । वेविजानः । इत् । कृशानोः । अस्तुः । मनसा । अह । बिभ्युषा ॥ ते । नः । पूर्वासः । उपरासः । इंदवः । महे । वाजाय । धन्वंतु । गोऽमते । ईक्षेण्यासः । अह्यः । न । चारवः । ब्रह्मऽब्रह्म । ये । जुजुषुः । हविःऽहविः ॥ अयं । नः । विद्वान् । वनवत् । वनुष्यतः ।

इंदुः । सत्राचा । मनसा । पुरुऽस्तुतः । इनस्य । यः । सदने । गर्भे । आऽदधे । गवां । उरुब्जं । अभि । अर्षति । व्रजं ॥ चक्रिः । दिवः । पवते । कृत्व्यः । रसः । महान् । अदब्धः । वरुणः । हुरुक् । यते । असावि । मित्रः । वृजनेषु । यज्ञियः । अत्यः । न । यूथे । वृषऽयुः । कनिक्रदत् ॥ २ ॥ प्र । राजा । वाचं । जनयन् । असिस्यदत् । अपः । वसानः । अभि । गाः । इयक्षति । गृभ्णाति । रिप्रं । अविः । अस्य । तान्वा । शुद्धः । देवानां । उप । याति । निःऽकृतं ॥ इंद्राय । सोम । परि । सिच्यसे । नृऽभिः । नृऽचक्षाः । ऊर्मिः । कविः । अज्यसे । वने । पूर्वीः । हि । ते । स्रुतयः । संति । यातवे । सहस्रं । अश्वाः । हरयः । चमूऽसदः ॥ समुद्रियाः । अप्सरसः । मनीषिणं । आसीनाः । अंतः । अभि । सोमं । अक्षरन् । ताः । ईं । हिन्वंति । हर्म्यस्य । सक्षणिं । याचंते । सुम्नं । पवमानं । अक्षितं ॥ गोऽजित् । नः । सोमः । रथऽजित् । हिरण्यऽजित् । स्वःऽजित् । अप्ऽजित् । पवते । सहस्रऽजित् । यं । देवासः । चक्रिरे । पीतये । मदं । स्वादिष्ठं । द्रप्सं । अरुणं । मयःऽभुवं ॥ एतानि । सोम । पवमानः । अस्मऽयुः । सत्यानि । कृण्वन् । द्रविणानि । अर्षसि । जहि । शत्रुं । अंतिके । दूरके । च । यः । उर्वीं । गव्यूतिं । अभयं । च । नः । कृधि ॥ ३ ॥ अचोदसः । नः । धन्वंतु । इंदवः । प्र । सुवानासः । बृहत्ऽदिवेषु । हरयः । वि । च । नशन् । नः । इषः । अरातयः । अर्यः । नशंत । सनिषंत । नः । धियः ॥ प्र । नः । धन्वंतु । इंदवः । मदऽच्युतः । धना । वा । येभिः । अर्वतः । जुनीमसि । तिरः । मर्तस्य । कस्य । चित् । परिऽह्वृतिं । वयं । धनानि । विश्वधा । भरेमहि ॥ उत । स्वस्याः । अरात्याः । अरिः । हि । सः । उत । अन्यस्याः । अरात्याः । वृकः । हि । सः । धन्वन् । न । तृष्णा । सं । अरीत । तान् । अभि । सोम । जहि । पवमान । दुःऽआध्यः ॥ दिवि । ते । नाभा । परमः । यः । आऽददे । पृथिव्याः । ते । रुरुहुः ।

सानवि । क्षिपः । अद्रयः । त्वा । बप्सति । गोः । अधि । त्वचि ।
अप्ऽसु । त्वा । हस्तैः । दुदुहुः । मनीषिणः ॥ एव । ते । इंदोइति ।
सुऽभ्वं । सुऽपेशसं । रसं । तुजंति । प्रथमाः । अभिऽश्रियः । निदंऽ-
निदं । पवमान । नि । तारिषः । आविः । ते । शुष्मः । भवतु । प्रियः ।
मदः ॥ ४ ॥ सोमस्य । धारा । पवते । नृऽचक्षसः । ऋतेन । देवान् ।
हवते । दिवः । परि । बृहस्पतेः । रवथेन । वि । दिद्युते । समुद्रासः ।
न । सवनानि । विव्यचुः ॥ यं । त्वा । वाजिन् । अघ्न्याः । अभि ।
अनूषत । अयःऽहतं । योनिं । आ । रोहसि । द्युऽमान् । मघोनां ।
आयुः । प्रऽतिरन् । महि । श्रवः । इंद्राय । सोम । पवसे । वृषा ।
मदः ॥ आ । इंद्रस्य । कुक्षा । पवते । मदिन्ऽतमः । ऊर्जं । वसानः ।
श्रवसे । सुऽमंगलः । प्रत्यङ् । सः । विश्वा । भुवना । अभि । पप्रथे ।
क्रीळन् । हरिः । अत्यः । स्यंदते । वृषा ॥ तं । त्वा । देवेभ्यः ।
मधुमत्ऽतमं । नरः । सहस्रऽधारं । दुहते । दश । क्षिपः । नृऽभिः ।
सोम । प्रऽच्युतः । ग्रावऽभिः । सुतः । विश्वान् । देवान् । आ ।
पवस्व । सहस्रऽजित् ॥ तं । त्वा । हस्तिनः । मधुऽमंतं । अद्रिऽभिः ।
दुहंति । अप्ऽसु । वृषभं । दश । क्षिपः । इंद्रं । सोम । मादयन् ।
दैव्यं । जनं । सिंधोःऽइव । ऊर्मिः । पवमानः । अर्षसि ॥ ५ ॥ प्र ।
सोमस्य । पवमानस्य । ऊर्मयः । इंद्रस्य । यंति । जठरं । सुऽपेशसः ।
दध्ना । यत् । ईं । उत्ऽनीताः । यशसा । गवां । दानाय । शूरं ।
उत्ऽअमंदिषुः । सुताः ॥ अच्छ । हि । सोमः । कलशान् । असिस्यदत् ।
अत्यः । न । वोळ्हा । रघुऽवर्तनिः । वृषा । अथ । देवानां । उभयस्य ।
जन्मनः । विद्वान् । अश्नोति । अमुतः । इतः । च । यत् ॥ आ । नः ।
सोम । पवमानः । किर । वसु । इंदोइति । भव । मघऽवा । राधसः ।
महः । शिक्ष । वयःऽधः । वसवे । सु । चेतुना । मा । नः । गयं ।
आरे । अस्मत् । परा । सिचः ॥ आ । नः । पूषा । पवमानः । सुऽ-
रातयः । मित्रः । गच्छंतु । वरुणः । सऽजोषसः । बृहस्पतिः । मरुतः ।

वायुः । अश्विना । त्वष्टा । सविता । सुऽयमा । सरस्वती ॥ उभेइति । द्यावापृथिवीइति । विश्वमिन्वेइतिविश्वंऽइन्वे । अर्यमा । देवः । अदितिः । विऽधाता । भगः । नृऽशंसः । उरु । अंतरिक्षं । विश्वे । देवाः । पवमानं । जुषंत ॥ ६ ॥ असावि । सोमः । अरुषः । वृषा । हरिः । राजाऽइव । दस्मः । अभि । गाः । अचिक्रदत् । पुनानः । वारं । परि । एति । अव्ययं । श्येनः । न । योनिं । घृतऽवंतं । आऽसदं ॥ कविः । वेधस्या । परि । एषि । माहिनं । अत्यः । न । मृष्टः । अभि । वाजं । अर्षसि । अपऽसेधन् । दुःऽइता । सोम । मृळय । घृतं । वसानः । परि । यासि । निःऽनिजं ॥ पर्जन्यः । पिता । महिषस्य । पर्णिनः । नाभा । पृथिव्याः । गिरिषु । क्षयं । दधे । स्वसारः । आपः । अभि । गाः । उत । असरन् । सं । ग्रावऽभिः । नसते । वीते । अध्वरे ॥ जायाऽइव । पत्यौ । अधि । शेव । मंहसे । पज्रायाः । गर्भ । शृणुहि । ब्रवीमि । ते । अंतः । वाणीषु । प्र । चर । सु । जीवसे । अनिंद्यः । वृजने । सोम । जागृहि ॥ यथा । पूर्वेभ्यः । शतऽसाः । अमृध्रः । सहस्रऽसाः । परिऽअयाः । वाजं । इंदोइति । एव । पवस्व । सुविताय । नव्यसे । तव । व्रतं । अनु । आपः । सचंते ॥ ७ ॥ पवित्रं । ते । विऽततं । ब्रह्मणः । पते । प्रऽभुः । गात्राणि । परि । एषि । विश्वतः । अतप्तऽतनूः । न । तत् । आमः । अश्नुते । शृतासः । इत् । वहंतः । तत् । सं । आशत ॥ तपोः । पवित्रं । विऽततं । दिवः । पदे । शोचंतः । अस्य । तंतवः । वि । अस्थिरन् । अवंति । अस्य । पवितारं । आशवः । दिवः । पृष्ठं । अधि । तिष्ठंति । चेतसा ॥ अरूरुचत् । उषसः । पृश्निः । अग्रियः । उक्षा । बिभर्ति । भुवनानि । वाजऽयुः । मायाऽविनः । ममिरे । अस्य । मायया । नृऽचक्षसः । पितरः । गर्भं । आ । दधुः ॥ गंधर्वः । इत्था । पदं । अस्य । रक्षति । पाति । देवानां । जनिमानि । अद्भुतः । गृभ्णाति । रिपुं । निऽधया । निधाऽपतिः । सुकृत्ऽतमाः । मधुनः । भक्षं । आशत ॥ हविः ।

हविष्मः । महि । सद्म । दैव्यं । नभः । वसानः । परि । यासि । अध्वरं । राजा । पवित्रऽरथः । वाजं । आ । अरुहः । सहस्रऽभृष्टिः । जयसि । श्रवः । बृहत् ॥ ८ ॥ पवस्व । देवऽमादनः । विऽचर्षणिः । अप्साः । इंद्राय । वरुणाय । वायवे । कृधि । नः । अद्य । वरिवः । स्वस्तिऽमत् । उरुऽक्षितौ । गृणीहि । दैव्यं । जनं ॥ आ । यः । तस्थौ । भुवनानि । अमर्त्यः । विश्वानि । सोमः । परि । तानि । अर्षति । कृण्वन् । संऽचृतं । विऽचृतं । अभिष्टये । इंदुः । सिसक्ति । उषसं । न । सूर्यः ॥ आ । यः । गोभिः । सृज्यते । ओषधीषु । आ । देवानां । सुम्ने । इषयन् । उपऽवसुः । आ । विऽद्युता । पवते । धारया । सुतः । इंद्रं । सोमः । मादयन् । दैव्यं । जनं ॥ एषः । स्यः । सोमः । पवते । सहस्रऽजित् । हिन्वानः । वाचं । इषिरां । उषःऽबुधं । इंदुः । समुद्रं । उत् । इयर्ति । वायुऽभिः । आ । इंद्रस्य । हार्दि । कलशेषु । सीदति ॥ अभि । त्यं । गावः । पयसा । पयःऽवृधं । सोमं । श्रीणंति । मतिऽभिः । स्वःऽविदं । धनंऽजयः । पवते । कृत्व्यः । रसः । विप्रः । कविः । काव्येन । स्वःऽचनाः ॥ ९ ॥ इंद्राय । सोम । सुऽसुतः । परि । स्रव । अप । अमीवा । भवतु । रक्षसा । सह । मा । ते । रसस्य । मत्सत । द्वयाविनः । द्रविणस्वंतः । इह । संतु । इंदवः ॥ अस्मान् । सऽमर्ये । पवमान । चोदय । दक्षः । देवानां । असि । हि । प्रियः । मदः । जहि । शत्रून् । अभि । आ । भंदनाऽयतः । पिब । इंद्र । सोमं । अव । नः । मृधः । जहि ॥ अदब्धः । इंदो इति । पवसे । मदिन्ऽतमः । आत्मा । इंद्रस्य । भवसि । धासिः । उत्ऽतमः । अभि । स्वरंति । बहवः । मनीषिणः । राजानं । अस्य । भुवनस्य । निसते ॥ सहस्रऽनीथः । शतऽधारः । अद्भुतः । इंद्राय । इंदुः । पवते । काम्यं । मधु । जयन् । क्षेत्रं । अभि । अर्ष । जयन् । अपः । ऊरुं । नः । गातुं । कृणु । सोम । मीढ्वः ॥ कनिक्रदत् । कलशे । गोभिः । अज्यसे । वि । अव्ययं । समया ।

वारं । अर्षसि । मर्मृज्यमानः । अत्यः । न । सानसिः । इंद्रस्य । सोम । जठरे । सं । अक्षरः ॥ स्वादुः । पवस्व । दिव्याय । जन्मने । स्वादुः । इंद्राय । सुहवीतुऽनाम्ने । स्वादुः । मित्राय । वरुणाय । वायवे । बृहस्पतये । मधुऽमान् । अदाभ्यः ॥ १० ॥ अत्यं । मृजंति । कलशे । दश । क्षिपः । प्र । विप्राणां । मतयः । वाचः । ईरते । पवमानाः । अभि । अर्षति । सुऽस्तुतिं । आ । इंद्रं । विशंति । मदिरासः । इंदवः ॥ पवमानः । अभि । अर्ष । सुऽवीर्यं । उर्वीं । गव्यूतिं । महि । शर्म । सऽप्रथः । माकिः । नः । अस्य । परिऽसूतिः । ईशत । इंदोइति । जयेम । त्वया । धनंऽधनं ॥ अधि । द्यां । अस्थात् । वृषभः । विऽचक्षणः । अरूरुचत् । वि । दिवः । रोचना । कविः । राजा । पवित्रं । अति । एति । रोरुवत् । दिवः । पीयूषं । दुहते । नृऽचक्षसः ॥ दिवः । नाके । मधुऽजिह्वाः । असश्चतः । वेनाः । दुहंति । उक्षणं । गिरिऽस्थां । अप्ऽसु । द्रप्सं । ववृधानं । समुद्रे । आ । सिंधोः । ऊर्मा । मधुऽमंतं । पवित्रे । आ ॥ नाके । सुऽपर्णं । उपपप्तिऽवांसं । गिरः । वेनानां । अकृपंत । पूर्वीः । शिशुं । रिहंति । मतयः । पनिप्नतं । हिरण्ययं । शकुनं । क्षामणि । स्थां ॥ ऊर्ध्वः । गंधर्वः । अधि । नाके । अस्थात् । विश्वा । रूपा । प्रतिऽचक्षाणः । अस्य । भानुः । शुक्रेण । शोचिषा । वि । अद्यौत् । प्र । अरूरुचत् । रोदसीइति । मातरा । शुचिः ॥ ११ ॥ प्र । ते । आशवः । पवमान । धीऽजवः । मदाः । अर्षति । रघुजाःऽइव । त्मना । दिव्याः । सुऽपर्णाः । मधुऽमंतः । इंदवः । मदिन्ऽतमासः । परि । कोशं । आसते ॥ प्र । ते । मदासः । मदिरासः । आशवः । असृक्षत । रथ्यासः । यथा । पृथक् । धेनुः । न । वत्सं । पयसा । अभि । वज्रिणं । इंद्रं । इंदवः । मधुऽमंतः । ऊर्मयः ॥ अत्यः । न । हियानः । अभि । वाजं । अर्ष । स्वःऽवित् । कोशं । दिवः । अद्रिऽमातरं । वृषा । पवित्रे । अधि । सानौ । अव्यये । सोमः । पुनानः । इंद्रियाय ।

धायसे ॥ प्र । ते । आश्विनीः । पवमान । धीऽजुवः । दिव्याः । असृग्रन् । पयसा । धरीमणि । प्र । अंतः । ऋषयः । स्थाविरीः । असृक्षत । ये । त्वा । मृजंति । ऋषिऽसान । वेधसः ॥ विश्वा । धामानि । विश्वऽचक्षः । ऋभ्वसः । प्रऽभोः । ते । सतः । परि । यंति । केतवः । विऽआनशिः । पवसे । सोम । धर्मऽभिः । पतिः । विश्वस्य । भुवनस्य । राजसि ॥ १२ ॥ उभयतः । पवमानस्य । रश्मयः । ध्रुवस्य । सतः । परि । यंति । केतवः । यदि । पवित्रे । अधि । मृज्यते । हरिः । सत्ता । नि । योना । कलशेषु । सीदति ॥ यज्ञस्य । केतुः । पवते । सुऽअध्वरः । सोमः । देवानां । उप । याति । निःऽकृतं । सहस्रऽधारः । परि । कोशं । अर्षति । वृषा । पवित्रं । अति । एति । रोरुवत् ॥ राजा । समुद्रं । नद्यः । वि । गाहते । अपां । ऊर्मिं । सचते । सिंधुषु । श्रितः । अधि । अस्थात् । सानु । पवमानः । अव्ययं । नाभा । पृथिव्याः । धरुणः । महः । दिवः ॥ दिवः । न । सानु । स्तनयन् । अचिक्रदत् । द्यौः । च । यस्य । पृथिवी । च । धर्मऽभिः । इंद्रस्य । सख्यं । पवते । विऽवेविदत् । सोमः । पुनानः । कलशेषु । सीदति ॥ ज्योतिः । यज्ञस्य । पवते । मधु । प्रियं । पिता । देवानां । जनिता । विभुऽवसुः । दधाति । रत्नं । स्वधयोः । अपीच्यं । मदिन्ऽतमः । मत्सरः । इंद्रियः । रसः ॥ १३ ॥ अभिऽक्रंदन् । कलशं । वाजी । अर्षति । पतिः । दिवः । शतऽधारः । विऽचक्षणः । हरिः । मित्रस्य । सदनेषु । सीदति । मर्मृजानः । अविऽभिः । सिंधुऽभिः । वृषा ॥ अग्रे । सिंधूनां । पवमानः । अर्षति । अग्रे । वाचः । अग्रियः । गोषु । गच्छति । अग्रे । वाजस्य । भजते । महाऽधनं । सुऽआयुधः । सोतृऽभिः । पूयते । वृषा ॥ अयं । मतऽवान् । शकुनः । यथा । हितः । अव्ये । ससार । पवमानः । ऊर्मिणा । तव । क्रत्वा । रोदसीइति । अंतरा । कवे । शुचिः । धिया । पवते । सोमः । इंद्र । ते ॥ द्रापिं । वसानः । यजतः । दिविऽस्पृशं । अंतरिक्षऽप्राः । भुवनेषु ।

अर्पितः । स्वः । जज्ञानः । नभसा । अभि । अक्रमीत् । प्रत्नं । अस्य । पितरं । आ । विवासति ॥ सः । अस्य । विशे । महि । शर्म । यच्छति । यः । अस्य । धाम । प्रथमं । विऽआनशे । पदं । यत् । अस्य । परमे । विऽओमनि । अतः । विश्वाः । अभि । सं । याति । संऽयतः ॥ १४ ॥ प्रोइति । अयासीत् । इंदुः । इंद्रस्य । निःऽकृतं । सखा । सख्युः । न । प्र । मिनाति । संऽगिरं । मर्यःऽइव । युवतिऽभिः । सं । अर्षति । सोमः । कलशे । शतऽयाम्ना । पथा ॥ प्र । वः । धियः । मंद्रऽयुवः । विपन्युवः । पनस्युवः । संऽवसनेषु । अक्रमुः । सोमं । मनीषाः । अभि । अनूषत । स्तुभः । अभि । धेनवः । पयसा । ईं । अशिश्रयुः ॥ आ । नः । सोम । संऽयतं । पिप्युषीं । इषं । इंदोइति । पवस्व । पवमानः । अस्रिधं । या । नः । दोहते । त्रिः । अहन् । असश्चुषी । क्षुऽमत् । वाजऽवत् । मधुऽमत् । सुऽवीर्यं ॥ वृषा । मतीनां । पवते । विऽचक्षणः । सोमः । अह्नः । प्रऽतरीता । उषसः । दिवः । क्राणा । सिंधूनां । कलशान् । अचीक्रशत् । इंद्रस्य । हार्दि । आऽविशन् । मनीषिऽभिः ॥ मनीषिऽभिः । पवते । पूर्व्यः । कविः । नृऽभिः । यतः । परि । कोशान् । अचिक्रदत् । त्रितस्य । नाम । जनयन् । मधु । क्षरत् । इंद्रस्य । वायोः । सख्याय । कर्तवे ॥ १५ ॥ अयं । पुनानः । उषसः । वि । रोचयत् । अयं । सिंधुऽभ्यः । अभवत् । ऊँइति । लोकऽकृत् । अयं । त्रिः । सप्त । दुदुहानः । आऽशिरं । सोमः । हृदे । पवते । चारु । मत्सरः ॥ पवस्व । सोम । दिव्येषु । धामऽसु । सृजानः । इंदोइति । कलशे । पवित्रे । आ । सीदन् । इंद्रस्य । जठरे । कनिक्रदत् । नृऽभिः । यतः । सूर्यं । आ । अरोहयः । दिवि ॥ अद्रिऽभिः । सुतः । पवसे । पवित्रे । आ । इंदोइति । इंद्रस्य । जठरेषु । आऽविशन् । त्वं । नृऽचक्षाः । अभवः । विऽचक्षण । सोम । गोत्रं । अंगिरःऽभ्यः । अवृणोः । अप ॥ त्वां । सोम । पवमानं । सुऽआध्यः । अनु । विप्रासः । अमदन् । अवस्यवः ।

त्वां । सुऽपर्णः । आ । अभरत् । दिवः । परि । इंदोइति । विश्वाभिः ।
मतिऽभिः । परिऽकृतं ॥ अव्ये । पुनानं । परि । वारे । ऊर्मिणा ।
हरिं । नवंते । अभि । सप्त । धेनवः । अपां । उपऽस्थे । अधि ।
आयवः । कविं । ऋतस्य । योना । महिषाः । अहेषत ॥ १६ ॥ इंदुः ।
पुनानः । अति । गाहते । मृधः । विश्वानि । कृण्वन् । सुऽपथानि ।
यज्यवे । गाः । कृण्वानः । निःऽनिजं । हर्यतः । कविः । अत्यः । न ।
क्रीळन् । परि । वारं । अर्षति ॥ असश्चतः । शतऽधाराः । अभिऽश्रियः ।
हरिं । नवंते । अव । ताः । उदन्युवः । क्षिपः । मृजंति । परि ।
गोभिः । आऽवृतं । तृतीये । पृष्ठे । अधि । रोचने । दिवः ॥ तव ।
इमाः । प्रऽजाः । दिव्यस्य । रेतसः । त्वं । विश्वस्य । भुवनस्य ।
राजसि । अथ । इदं । विश्वं । पवमान । ते । वशे । त्वं । इंदोइति ।
प्रथमः । धामऽधाः । असि ॥ त्वं । समुद्रः । असि । विश्वऽवित् ।
कवे । तव । इमाः । पंच । प्रदिशः । विऽधर्मणि । त्वं ।
द्यां । च । पृथिवीं । च । अति । जभ्रिषे । तव । ज्योतींषि ।
पवमान । सूर्यः ॥ त्वं । पवित्रे । रजसः । विऽधर्मणि । देवेभ्यः ।
सोम । पवमान । पूयसे । त्वां । उशिजः । प्रथमाः । अगृभ्णत ।
तुभ्य । इमा । विश्वा । भुवनानि । येमिरे ॥ १७ ॥ प्र ।
रेभः । एति । अति । वारं । अव्ययं । वृषा । वनेषु । अव ।
चक्रदत् । हरिः । सं । धीतयः । वावशानाः । अनूषत । शिशुं ।
रिहंति । मतयः । पनिप्नतं ॥ सः । सूर्यस्य । रश्मिऽभिः । परि ।
व्यत । तंतुं । तन्वानः । त्रिऽवृतं । यथा । विदे । नयन् । ऋतस्य ।
प्रऽशिषः । नवीयसीः । पतिः । जनीनां । उप । याति । निःऽकृतं ॥
राजा । सिंधूनां । पवते । पतिः । दिवः । ऋतस्य । याति । पथिऽ-
भिः । कनिक्रदत् । सहस्रऽधारः । परि । सिच्यते । हरिः । पुनानः ।
वाचं । जनयन् । उपऽवसुः ॥ पवमान । महि । अर्णः । वि । धावसि ।
सूरः । न । चित्रः । अव्ययानि । पव्यया । गभस्तिऽपूतः । नृऽभिः ।

अद्रिऽभिः । सुतः । महे । वाजाय । धन्याय । धन्वासि ॥ इषं । ऊर्जं ।
पवमान । अभि । अर्षसि । श्येनः । न । वंसु । कलशेषु । सीदसि ।
इंद्राय । मद्वा । मद्यः । मदः । सुतः । दिवः । विष्टंभः । उपऽमः ।
विऽचक्षणः ॥ १८ ॥ सप्त । स्वसारः । अभि । मातरः । शिशुं । नवं ।
जज्ञानं । जेन्यं । विपःऽचितं । अपां । गंधर्वं । दिव्यं । नृऽचक्षसं ।
सोमं । विश्वस्य । भुवनस्य । राजसे ॥ ईशानः । इमा । भुवनानि ।
वि । ईयसे । युजानः । इंदोइति । हरितः । सुऽपर्ण्यः । ताः । ते ।
क्षरंतु । मधुऽमत् । घृतं । पयः । तव । व्रते । सोम । तिष्ठंतु । कृष्टयः ॥
त्वं । नृऽचक्षाः । असि । सोम । विश्वतः । पवमान । वृषभ । ता ।
वि । धावसि । सः । नः । पवस्व । वसुऽमत् । हिरण्यऽवत् । वयं ।
स्याम । भुवनेषु । जीवसे ॥ गोऽवित् । पवस्व । वसुऽमत् । हिरण्यऽ-
वत् । रेतःऽधाः । इंदोइति । भुवनेषु । अर्पितः । त्वं । सुऽवीरः ।
असि । सोम । विश्वऽवित् । तं । त्वा । विप्राः । उप । गिरा । इमे ।
आसते ॥ उत् । मध्वः । ऊर्मिः । वननाः । अतिस्थिपत् । अपः ।
वसानः । महिषः । वि । गाहते । राजा । पवित्रऽरथः । वाजं । आ ।
अरुहत् । सहस्रऽभृष्टिः । जयति । श्रवः । बृहत् ॥ १९ ॥ सः ।
भंदनाः । उत् । इयर्ति । प्रजाऽवतीः । विश्वऽआयुः । विश्वाः । सुऽ-
भराः । अहःऽदिवि । ब्रह्म । प्रजाऽवत् । रयिं । अश्वऽपस्त्यं । पीतः ।
इंदोइति । इंद्रं । अस्मभ्यं । याचतात् ॥ सः । अग्रे । अह्नां । हरिः ।
हर्यतः । मदः । प्र । चेतसा । चेतयते । अनु । द्युऽभिः । द्वा । जना ।
यातयन् । अंतः । ईयते । नराशंसं । च । दैव्यं । च । धर्तरि ॥ अंजते ।
वि । अंजते । सं । अंजते । क्रतुं । रिहंति । मधुना । अभि । अंजते ।
सिंधोः । उत्ऽश्वासे । पतयंतं । उक्षणं । हिरण्यऽपावाः । पशुं ।
आसु । गृभ्णते ॥ विपःऽचिते । पवमानाय । गायत । मही । न । धारा ।
अति । अंधः । अर्षति । अहिः । न । जूर्णां । अति । सर्पति । त्वचं ।
अत्यः । न । क्रीळन् । असरत् । वृषा । हरिः ॥ अग्रेऽगः । राजा ।

अर्यः । तविष्यते । विऽमानः । अह्नां । भुवनेषु । अर्पितः । हरिः ।
घृतऽस्नुः । सुऽदृशीकः । अर्णवः । ज्योतिःऽरथः । पवते । राये ।
ओक्यः ॥ २० ॥ असर्जि । स्कंभः । दिवः । उत्ऽयतः । मदः । परि ।
त्रिऽधातुः । भुवनानि । अर्पति । अंशुं । रिहंति । मतयः । पनिप्नतं ।
गिरा । यदि । निःऽनिजं । ऋग्मिणः । ययुः ॥ प्र । ते । धाराः ।
अति । अण्वानि । मेष्यः । पुनानस्य । संऽयतः । यंति । रंहयः ।
यत् । गोभिः । इंदोइति । चम्वोः । संऽअज्यसे । आ । सुवानः ।
सोम । कलशेषु । सीदसि ॥ पवस्व । सोम । क्रतुऽवित् । नः ।
उक्थ्यः । अव्यः । वारे । परि । धाव । मधु । प्रियं । जहि । विश्वान् ।
रक्षसः । इंदोइति । अत्रिणः ॥ ० ॥ २१ ॥ प्र । तु । द्रव । परि ।
कोशं । नि । सीद । नृऽभिः । पुनानः । अभि । वाजं । अर्ष । अश्वं ।
न । त्वा । वाजिनं । मर्जयंतः । अच्छ । बर्हिः । रशनाभिः । नयंति ॥
सुऽआयुधः । पवते । देवः । इंदुः । अशस्तिऽहा । वृजनं । रक्षमाणः ।
पिता । देवानां । जनिता । सुऽदक्षः । विष्टंभः । दिवः । धरुणः ।
पृथिव्याः ॥ ऋषिः । विप्रः । पुरःऽएता । जनानां । ऋभुः । धीरः ।
उशना । काव्येन । सः । चित् । विवेद । निऽहितं । यत् । आसां ।
अपीच्यं । गुह्यं । नाम । गोनां ॥ एषः । स्यः । ते । मधुऽमान् ।
इंद्र । सोमः । वृषा । वृष्णे । परि । पवित्रे । अक्षारिति । सहस्रऽ-
साः । शतऽसाः । भूरिऽदावा । शश्वत्ऽतमं । बर्हिः । आ । वाजी ।
अस्थात् ॥ एते । सोमाः । अभि । गव्या । सहस्रा । महे । वाजाय ।
अमृताय । श्रवांसि । पवित्रेभिः । पवमानाः । असृग्रन् । श्रवस्यवः ।
न । पृतनाजः । अत्याः ॥ २२ ॥ परि । हि । स्म । पुरुऽहूतः । जनानां ।
विश्वा । असरत् । भोजना । पूयमानः । अथ । आ । भर । श्येनऽभृत ।
प्रयांसि । रयिं । तुंजानः । अभि । वाजं । अर्ष ॥ एषः । सुवानः ।
परि । सोमः । पवित्रे । सर्गः । न । सृष्टः । अदधावत् । अर्वा ।
तिग्मेइति । शिशानः । महिषः । न । शृंगेइति । गाः । गव्यन् ।

अभि । शूरः । न । सत्वा ॥ एषा । आ । ययौ । परमात् । अंतः । अद्रेः । कूऽचित् । सतीः । ऊर्वे । गाः । वि । वेद । दिवः । न । विऽद्युत् । स्तनयंती । अभ्रैः । सोमस्य । ते । पवते । इंद्र । धारा ॥ उत । स्म । राशिं । परि । यासि । गोनां । इंद्रेण । सोम । सऽरथं । पुनानः । पूर्वीः । इषः । बृहतीः । जीरदानोइतिजीरऽदानो । शिक्ष । शचीऽवः । तव । ताः । उपऽस्तुत् ॥ २३ ॥ ० ॥ तुभ्यं । पवते । त्वं । अस्य । पाहि । त्वं । ह । यं । चकृषे । त्वं । ववृषे । इंदुं । मदाय । युज्याय । सोमं । सः । ईं । रथः । न । भुरिषाट् । अयोजि । महः । पुरूणि । सातये । वसूनि । आत् । ईं । विश्वा । नहुष्याणि । जाता । स्वःऽसाता । वने । ऊर्ध्वा । नवंत ॥ वायुः । न । यः । नियुत्वान् । इष्टऽयामा । नासत्याऽइव । हवे । आ । शंऽभविष्ठः । विश्वऽवारः । द्रविणोदाःऽइव । त्मन् । पूषाऽइव । धीऽजवनः । असि । सोम ॥ इंद्रः । न । यः । महा । कर्माणि । चक्रिः । हंता । वृत्राणां । असि । सोम । पूःऽभित् । पैद्वः । न । हि । त्वं । अहिऽनाम्नां । हंता । विश्वस्य । असि । सोम । दस्योः ॥ अग्निः । न । यः । वने । आ । सृज्यमानः । वृथा । पाजांसि । कृणुते । नदीषु । आ । जनः । न । युध्वा । महतः । उपब्दिः । इयर्ति । सोमः । पवमानः । ऊर्मिं ॥ एते । सोमाः । अति । वाराणि । अव्या । दिव्याः । न । कोशासः । अभ्रऽवर्षाः । वृथा । समुद्रं । सिंधवः । न । नीचीः । सुतासः । अभि । कलशान् । असृग्रन् ॥ शुष्मी । शर्धः । न । मारुतं । पवस्व । अनभिऽशस्ता । दिव्या । यथा । विट् । आपः । न । मक्षु । सुऽमतिः । भव । नः । सहस्रऽअप्साः । पृतनाषाट् । न । यज्ञः ॥ ० ॥ २४ ॥ प्रोइति । स्यः । वह्निः । पथ्याभिः । अस्यान् । दिवः । न । वृष्टिः । पवमानः । अक्षारिति । सहस्रऽधारः । असदत् । नि । अस्मेइति । मातुः । उपऽस्थे । वने । आ । च । सोमः ॥ राजा । सिंधूनां । अवसिष्ट । वासः ।

ऋतस्यं । नावं । आ । अरुहत् । रजिष्ठां । अप्ऽसु । द्रप्सः । ववृधे ।
श्येनऽजूतः । दुहे । ईं । पिता । दुहे । ईं । पितुः । जां ॥ सिंहं ।
नसंत । मध्वः । अयासं । हरिं । अरुषं । दिवः । अस्य । पतिं ।
शूरः । युत्ऽसु । प्रथमः । पृच्छते । गाः । अस्य । चक्षसा । परि ।
पाति । उक्षा ॥ मधुऽपृष्ठं । घोरं । अयासं । अश्वं । रथे । युंजंति ।
उरुऽचक्रे । ऋष्वं । स्वसारः । ईं । जामयः । मर्जयंति । सऽनाभयः ।
वाजिनं । ऊर्जयंति ॥ चतस्रः । ईं । घृतऽदुहः । सचंते । समाने ।
अंतः । धरुणे । निऽसंत्ताः । ताः । ईं । अर्षंति । नमसा ।
पुनानाः । ताः । ईं । विश्वतः । परि । संति । पूर्वीः ॥
विष्टंभः । दिवः । धरुणः । पृथिव्याः । विश्वाः । उत ।
क्षितयः । हस्ते । अस्य । असंत् । ते । उत्सः । गृणते ।
नियुत्वान् । मध्वः । अंशुः । पवते । इंद्रियाय ॥ वन्वन् ।
अवातः । अभि । देवऽवीतिं । इंद्राय । सोम । वृत्रऽहा ।
पवस्व । शग्धि । महः । पुरुऽचंद्रस्य । रायः । सुऽवीर्यस्य । पतयः ।
स्याम ॥ २५ ॥ प्र । हिन्वानः । जनिता । रोदस्योः । रथः । न ।
वाजं । सनिष्यन् । अयासीत् । इंद्रं । गच्छन् । आयुधा । संऽशिशानः ।
विश्वा । वसु । हस्तयोः । आऽदधानः ॥ अभि । त्रिऽपृष्ठं । वृषणं ।
वयःऽधां । आंगूषाणां । अवावशंत । वाणीः । वना । वसानः । वरुणः ।
न । सिंधून् । वि । रत्नऽधाः । दयते । वार्याणि ॥ शूरऽग्रामः ।
सर्वऽवीरः । सहावान् । जेता । पवस्व । सनिता । धनानि । तिग्मऽ-
आयुधः । क्षिप्रऽधन्वा । समत्ऽसु । अषाळ्हः । सह्वान् । पृतनासु ।
शत्रून् ॥ उरुऽगव्यूतिः । अभयानि । कृण्वन् । समीचीनेइतिसंऽ-
ईचीने । आ । पवस्व । पुरंधीइतिपुरंधीइतिपुरंऽधी । अपः । सिसासन् ।
उषसः । स्वः । गाः । सं । चिक्रदः । महः । अस्मभ्यं । वाजान् ॥
मत्सि । सोम । वरुणं । मत्सि । मित्रं । मत्सि । इंद्रं । इंदोइति ।
पवमान । विष्णुं । मत्सि । शर्धः । मारुतं । मत्सि । देवान् । मत्सि ।

मुहां । इंद्रं । इंदोइति । मदाय । एव । राजाऽइव । क्रतुऽमान् । अमेन । विश्वा । घनिघ्नत् । दुःऽइता । पवस्व । इंदोइति । सुऽउक्ताय । वचसे । वयः । धाः ॥ ० ॥ २६ ॥

इति सप्तमाष्टके तृतीयोध्यायः ॥ ३ ॥



अष्टक ७, अध्याय ४, मण्डल ९, अनुवाक ५, वर्ग १.




हरिः ॐ ॥ असर्जि । वक्वा । रथ्ये । यथा । आजौ । धिया । मनोता । प्रथमः । मनीषी । दश । स्वसारः । अधि । सानौ । अव्ये । अजंति । वह्निं । सदनानि । अच्छ ॥ वीती । जनस्य । दिव्यस्य । कव्यैः । अधि । सुवानः । नहुष्येभिः । इंदुः । प्र । यः । नृऽभिः । अमृतः । मर्त्येभिः । ममृजानः । अविंऽभिः । गोभिः अत्ऽभिः ॥ वृषा । वृष्णे । रोरुवत् । अंशुः । अस्मै । पवमानः । रुशत् । ईर्ते । पयः । गोः ॥ सहस्रं । ऋक्वा । पथिऽभिः । वचःऽवित् । अध्वस्मऽभिः । सूरः । अण्वं । वि । याति ॥ रुज । दृळ्हा । चित् । रक्षसः । सदांसि । पुनानः । इंदोइति । ऊर्णुहि । वि । वाजान् ॥ वृश्च । उपरिष्टात् । तुजता । वधेन । ये । अंति । दूरात् । उपऽनायं । एषां ॥ सः । प्रत्नऽवत् । नव्यसे । विश्वऽवार । सुऽउक्ताय । पथः । कृणुहि । प्राचः ॥ ये । दुःऽसहासः । वनुषा । बृहंतः । तान् । ते । अश्याम । पुरुऽकृत् । पुरुक्षोइतिपुरुऽक्षो । एव । पुनानः । अपः । स्वः । गाः । अस्मभ्यं । तोका । तनयानि । भूरि । शं । नः । क्षेत्रं । उरु ।

ज्योतींषि । सोम । ज्योक् । नः । सूर्यं । दृशये । रिरीहि ॥ १ ॥
परि । सुवानः । हरिः । अंशुः । पवित्रे । रथः । न । सर्जि । सनये ।
हियानः । आपत् । श्लोकं । इंद्रियं । पूयमानः । प्रति । देवान् ।
अजुषत । प्रयःऽभिः ॥ अच्छ । नृऽचक्षाः । असरत् । पवित्रे । नाम ।
दधानः । कविः । अस्य । योनौ । सीदन् । होताऽइव । सदने ।
चमूषु । उप । ईं । अग्मन् । ऋषयः । सप्त । विप्राः ॥ प्र । सुऽमेधाः ।
गातुऽवित् । विश्वऽदेवः । सोमः । पुनानः । सदः । एति । नित्यं ।
भुवत् । विश्वेषु । काव्येषु । रंता । अनु । जनान् । यतते । पंच ।
धीरः ॥ तव । त्ये । सोम । पवमान । निण्ये । विश्वे । देवाः । त्रयः ।
एकादशासः । दश । स्वधाभिः । अधि । सानौ । अव्ये । मृजंति ।
त्वा । नद्यः । सप्त । यह्वीः ॥ तत् । नु । सत्यं । पवमानस्य । अस्तु ।
यत्र । विश्वे । कारवः । संऽनसंत । ज्योतिः । यत् । अह्ने । अकृणोत् ।
ऊँइति । लोकं । प्र । आवत् । मनुं । दस्यवे । करः । अभीकं ॥ परि ।
सद्मऽइव । पशुऽमांति । होता । राजा । न । सत्यः । संऽइतीः ।
इयानः । सोमः । पुनानः । कलशान् । अयासीत् । सीदन् । मृगः ।
न । महिषः । वनेषु ॥ २ ॥ साकंऽउक्षः । मर्जयंत । स्वसारः । दश ।
धीरस्य । धीतयः । धनुत्रीः । हरिः । परि । अद्रवत् । जाः । सूर्यस्य ।
द्रोणं । ननक्षे । अत्यः । न । वाजी ॥ सं । मातृऽभिः । न । शिशुः ।
वावशानः । वृषा । दधन्वे । पुरुऽवारः । अत्ऽभिः । मर्यः । न ।
योषां । अभि । निःऽकृतं । यन् । सं । गच्छते । कलशे । उस्रियाभिः ॥
उत । प्र । पिप्ये । ऊधः । अघ्न्यायाः । इंदुः । धाराभिः । सचते ।
सुऽमेधाः । मूर्धानं । गावः । पयसा । चमूषु । अभि । श्रीणंति ।
वसुऽभिः । न । निक्तैः ॥ सः । नः । देवेभिः । पवमान । रद ।
इंदोइति । रयिं । अश्विनं । वावशानः । रथिरायतां । उशती ।
पुरंऽधिः । अस्मद्र्यक् । आ । दावने । वसूनां ॥ नु । नः । रयिं ।
उप । मास्व । नृऽवंतं । पुनानः । वाताप्यं । विश्वऽचंद्रं । प्र ।

वांदितुः । इंदोइति । तारि । आयुः ॥ ० ॥ ३ ॥ अधि । यत् । अस्मिन् । वाजिनिऽइव । शुभः । स्पर्धंते । धियः । सूर्ये । न । विशः । अपः । वृणानः । पवते । कविऽयन् । व्रजं । न । पशुऽवर्धनाय । मन्मं ॥ द्विता । विऽऊर्ण्वन् । अमृतस्य । धाम । स्वःऽविदे । भुवनानि । प्रथंत । धियः । पिन्वानाः । स्वसरे । न । गावः । ऋतऽयंतीः । अभि । वावश्रे । इंदुं ॥ परि । यत् । कविः । काव्या । भरते । शूरः । न । रथः । भुवनानि । विश्वा । देवेषु । यशः । मर्ताय । भूषन् । दक्षाय । रायः । पुरुऽभूषु । नव्यः ॥ श्रिये । जातः । श्रिये । आ । निः । इयाय । श्रियं । वयः । जरितृऽभ्यः । दधाति । श्रियं । वसानाः । अमृतऽत्वं । आयन् । भवंति । सत्या । संऽइथा । मितऽद्रौ ॥ इषं । ऊर्जं । अभि । अर्ष । अश्वं । गां । उरु । ज्योतिः । कृणुहि । मत्सि । देवान् । विश्वानि । हि । सुऽसहा । तानि । तुभ्यं । पवमान । बाधसे । सोम । शत्रून् ॥ ४ ॥ कनिक्रंति । हरिः । आ । सृज्यमानः । सीदन् । वनस्य । जठरे । पुनानः । नृऽभिः । यतः । कृणुते । निःऽनिजं । गाः । अतः । मतीः । जनयत । स्वधाभिः ॥ हरिः । सृजानः । पथ्यां । ऋतस्य ॥ • ॥ देवः । देवानां । गुह्यानि । नाम । आविः । कृणोति । बर्हिषि । प्रऽवाचे । अपांऽइव । इत् । ऊर्मयः । ततुराणाः । प्र । मनीषाः । ईरते । सोमं । अच्छ ॥ नमस्यंतीः । उप । च । यंति । सं । च । आ । च । विशंति । उशतीः । उशतं । तं । ममृजानं । महिषं । न । सानौ । अंशुं । दुहंति । उक्षणं । गिरिऽस्थां ॥ तं । वावशानं । मतयः । सचंते । त्रितः । बिभर्ति । वरुणं । समुद्रे । इष्यन् । वाचं । उपवक्ताऽइव । होतुः । पुनानः । इंदोइति । वि । स्य । मनीषां ॥ इंद्रः । च । यत् । क्षयथः । सौभगाय । सुऽवीर्यस्य । पतयः । स्याम ॥ ५ ॥ प्र । सेनाऽनीः । शूरः । अग्रे । रथानां । गव्यन् । एति । हर्षते । अस्य । सेना । भद्रान् । कृण्वन् । इंद्रऽहवान् । सखिऽभ्यः । आ । सोमः । वस्त्रा । रभसानि । दत्ते ॥ सं । अस्य । हरिं । हरयः ।

मृजंति । अश्वऽहृयैः । अनिंऽशितं । नमःऽभिः । आ । तिष्ठति । रथं ।
इंद्रस्य । सखा । विद्वान् । एन । सुऽमतिं । याति । अच्छ ॥
सः । नः । देव । देवऽताते । पवस्व । महे । सोम । प्सरंसे ।
इंद्रऽपानः । कृण्वन् । अपः । वर्षयन् । द्यां । उत । इमां । उरोः । आ ।
नः । वरिवस्य । पुनानः ॥ अजीतये । अहतये । पवस्व । स्वस्तये ।
सर्वऽतातये । बृहते । तत् । उशंति । विश्वे । इमे । सखायः । तत् ।
अहं । वश्मि । पवमान । सोम ॥ सोमः । पवते । जनिता । मतीनां ।
जनिता । दिवः । जनिता । पृथिव्याः । जनिता । अग्नेः ।
जनिता । सूर्यस्य । जनिता । इंद्रस्य । जनिता । उत । विष्णोः ॥ ६ ॥
ब्रह्मा । देवानां । पदऽवीः । कवीनां । ऋषिः । विप्राणां । महिषः ।
मृगाणां । श्येनः । गृध्राणां । स्वऽधितिः । वनानां । सोमः । पवित्रं ।
अति । एति । रेभन् ॥ प्र । अवीविपत् । वाचः । ऊर्मिं । न । सिंधुः ।
गिरः । सोमः । पवमानः । मनीषाः । अंतः । पश्यन् । वृजना ।
इमा । अवराणि । आ । तिष्ठति । वृषभः । गोषु । जानन् ॥ सः ।
मत्सरः । पृत्ऽसु । वन्वन् । अवातः । सहस्रऽरेताः । अभि । वाजं ।
अर्ष । इंद्राय । इंदो इति । पवमानः । मनीषी । अंशोः । ऊर्मिं ।
ईरय । गाः । इषण्यन् ॥ परि । प्रियः । कलशे । देवऽवातः । इंद्राय ।
सोमः । रण्यः । मदाय । सहस्रऽधारः । शतऽवाजः । इंदुः । वाजी ।
न । सप्तिः । समना । जिगाति ॥ सः । पूर्व्यः । वसुऽवित् । जायमानः ।
मृजानः । अप्ऽसु । दुदुहानः । अद्रौ । अभिशस्तिऽपाः । भुवनस्य ।
राजा । विदत् । गातुं । ब्रह्मणे । पूयमानः ॥ ७ ॥ त्वया । हि । नः ।
पितरः । सोम । पूर्वे । कर्माणि । चक्रुः । पवमान । धीराः । वन्वन् ।
अवातः । परिऽधीन् । अप । ऊर्णु । वीरेभिः । अश्वैः । मघऽवा ।
भव । नः ॥ यथा । अपवथाः । मनवे । वयःऽधाः । अमित्रऽहा ।
वरिवःऽवित् । हविष्मान् । एव । पवस्व । द्रविणं । दधानः । इंद्रे ।
सं । तिष्ठ । जनय । आयुधानि ॥ पवस्व । सोम । मधुऽमान् । ऋतऽ-

वा । अपः । वसानः । अधि । सानौ । अव्ये । अव । द्रोणानि । घृतऽवंति । सीद । मदिन्ऽतमः । मत्सरः । इंद्रऽपानः ॥ वृष्टिं । दिवः । शतऽधारः । पवस्व । सहस्रऽसाः । वाजऽयुः । देवऽवीतौ । सं । सिंधुऽभिः । कलशे । वावशानः । सं । उस्रियाभिः । प्रऽतिरन् । नः । आयुः ॥ एषः । स्यः । सोमः । मतिऽभिः । पुनानः । अत्यः । न । वाजी । तरति । इत् । अरातीः । पयः । न । दुग्धं । अदितेः । इषिरं । उरुऽइव । गातुः । सुऽयमः । न । वोळ्हा ॥ ८ ॥ सुऽआयुधः । सोतृऽभिः । पूयमानः । अभि । अर्ष । गुह्यं । चारु । नाम । अभि । वाजं । सप्तिःऽइव । श्रवस्या । अभि । वायुं । अभि । गाः । देव । सोम ॥ शिशुं । जज्ञानं । हर्यतं । मृजंति । शुंभंति । वह्निं । मरुतः । गणेन । कविः । गीःऽभिः । काव्येन । कविः । सन् । सोमः । पवित्रं । अति । एति । रेभन् ॥ ऋषिऽमनाः । यः । ऋषिऽकृत् । स्वःऽसाः । सहस्रऽनीथः । पदऽवीः । कवीनां । तृतीयं । धाम । महिषः । सिसासन् । सोमः । विऽराजं । अनु । राजति । स्तुप् ॥ चमूऽसत् । श्येनः । शकुनः । विऽभृत्वा । गोऽविंदुः । द्रप्सः । आयुधानि । बिभ्रत् । अपां । ऊर्मिं । सचमानः । समुद्रं । तुरीयं । धाम । महिषः । विवक्ति ॥ मर्यः । न । शुभ्रः । तन्वं । मृजानः । अत्यः । न । सृत्वा । सनये । धनानां । वृषाऽइव । यूथा । परि । कोशं । अर्षन् । कनिक्रदत् । चम्वोः । आ । विवेश ॥ ९ ॥ पवस्व । इंदोइति । पवमानः । महःऽभिः । कनिक्रदत् । परि । वाराणि । अर्ष । क्रीळन् । चम्वोः । आ । विश । पूयमानः । इंद्रं । ते । रसः । मदिरः । ममत्तु ॥ प्र । अस्य । धाराः । बृहतीः । असृग्रन् । अक्तः । गोभिः । कलशान् । आ । विवेश । साम । कृण्वन् । सामन्यः । विपःऽचित् । क्रंदन् । एति । अभि । सख्युः । न । जामिं ॥ अपऽघ्नन् । एषि । पवमान । शत्रून् । प्रियां । न । जारः । अभिऽगीतः । इंदुः । सीदन् । वनेषु । शकुनः । न । पत्वा । सोमः । पुनानः ।

कलशेषु । सत्ता ॥ आ । ते । रुचः । पवमानस्य । सोम । योषाऽइव । यंति । सुऽदुघाः । सुऽधाराः । हरिः । आऽनीतः । पुरुऽवारः । अप्ऽसु । अचिक्रदत् । कलशे । देवऽयूनां ॥ इति पञ्चमोनुवाकः ॥ ॥ :: ॥ अथ षष्ठोनुवाकः ॥ १० ॥ अस्य । प्रेषा । हेमना । पूयमानः । देवः । देवेभिः । सं । अपृक्त । रसं । सुतः । पवित्रं । परि । एति । रेभन् । मिताऽइव । सद्म । पशुऽमंति । होता ॥ भद्रा । वस्त्रा । समन्या । वसानः । महान् । कविः । निऽवचनानि । शंसन् । आ । वच्यस्व । चम्वोः । पूयमानः । विऽचक्षणः । जागृविः । देवऽवीतौ ॥ सं । ऊँ इति । प्रियः । मृज्यते । सानौ । अव्ये । यशःऽतरः । यशसां । क्षैतः । अस्मेइति । अभि । स्वर । धन्व । पूयमानः ॥ ॥ ० ॥ प्र । गायत । अभि । अर्चाम । देवान् । सोमं । हिनोत । महते । धनाय । स्वादुः । पवाते । अति । वारं । अव्यं । आ । सीदाति । कलशं । देवऽयुः । नः ॥ इंदुः । देवानां । उप । सख्यं । आऽयन् । सहस्रऽधारः । पवते । मदाय । नृऽभिः । स्तवानः । अनु । धाम । पूर्वं । अगन् । इंद्रं । महते । सौभगाय ॥ ११ ॥ स्तोत्रे । राये । हरिः । अर्ष । पुनानः । इंद्रं । मदः । गच्छतु । ते । भराय । देवैः । याहि । सऽरथं । राधः । अच्छ ॥ ० ॥ प्र । काव्यं । उशनाऽइव । ब्रुवाणः । देवः । देवानां । जनिम । विवक्ति । महिऽव्रतः । शुचिऽबंधुः । पावकः । पदा । वराहः । अभि । एति । रेभन् ॥ प्र । हंसासः । तृपलं । मन्युं । अच्छ । अमात् । अस्तं । वृषऽगणाः । अयासुः । आंगूष्यं । पवमानं । सखायः । दुःऽमर्षं । साकं । प्र । वदंति । वाणं ॥ सः । रंहते । उरुऽगायस्य । जूतिं । वृथा । क्रीळंतं । मिमते । न । गावः । परीणसं । कृणुते । तिग्मऽशृंगः । दिवा । हरिः । ददृशे । नक्तं । ऋज्रः ॥ इंदुः । वाजी । पवते । गोऽन्योघाः । इंद्रे । सोमः । सहः । इन्वन् । मदाय । हंति । रक्षः । बाधते । परि । अरातीः । वरिवः । कृण्वन् । वृजनस्य । राजा ॥ १२ ॥ अध ।

धारया । मध्वा । पृचानः । तिरः । रोम । पवते । अद्रिऽदुग्धः । इंदुः । इंद्रस्य । सख्यं । जुषाणः । देवः । देवस्य । मत्सरः । मदाय ॥ अभि । प्रियाणि । पवते । पुनानः । देवः । देवान् । स्वेन । रसेन । पृंचन् । इंदुः । धर्माणि । ऋतुऽथा । वसानः । दश । क्षिपः । अव्यत । सानौ । अव्ये ॥ वृषा । शोणः । अभिऽकनिक्रदत् । गाः । नदयन् । एति । पृथिवीं । उत । द्यां । इंद्रस्यऽइव । वग्नुः । आ । शृण्वे । आजौ । प्रऽचेतयन् । अर्षति । वाचं । आ । इमां ॥ रसाय्यः । पयसा । पिन्वमानः । ईरयन् । एषि । मधुऽमंतं । अंशुं । पवमानः । संऽतनिं । एषि । कृण्वन् । इंद्राय । सोम । परिऽसिच्यमानः ॥ एव । पवस्व । मदिरः । मदाय । उदऽग्राभस्य । नमयन् । वधऽस्नैः । परि । वर्णं । भरमाणः । रुशंतं । गव्युः । नः । अर्ष । परि । सोम । सिक्तः ॥ १३ ॥ जुष्टी । नः । इंदोइति । सुऽपथा । सुऽगानि । उरौ । पवस्व । वरिवांसि । कृण्वन् । घनाऽइव । विष्वक् । दुःऽइतानि । विऽघ्नन् । अधि । स्नुना । धन्व । सानौ । अव्ये ॥ वृष्टिं । नः । अर्ष । दिव्यां । जिगत्नुं । इळाऽवतीं । शंऽगयीं । जीरऽदानुं । स्तुकाऽइव । वीता । धन्व । विऽचिन्वन् । बंधून् । इमान् । अवरान् । इंदोइति । वायून् ॥ ग्रंथिं । न । वि । स्य । ग्रथितं । पुनानः । ऋजुं । च । गातुं । वृजिनं । च । सोम । अत्यः । न । क्रदः । हरिः । आ । सृजानः । मर्यः । देव । धन्व । पस्त्यऽवान् ॥ जुष्टः । मदाय । देवऽताते । इंदोइति । परि । स्नुना । धन्व । सानौ । अव्ये । सहस्रऽधारः । सुरभिः । अदब्धः । परि । स्रव । वाजऽसातौ । नृऽसह्ये ॥ अरश्मानः । ये । अरथाः । अयुक्ताः । अत्यासः । न । ससृजानासः । आजौ । एते । शुक्रासः । धन्वंति । सोमाः । देवासः । तान् । उप । यात । पिबध्यै ॥ १४ ॥ एव । नः । इंदोइति । अभि । देवऽवीतिं । परि । स्रव । नभः । अर्णः । चमूषु । सोमः । अस्मभ्यं । काम्यं । बृहंतं । रयिं । ददातु । वीरऽवंतं । उग्रं ॥ तक्षत् । यदि । मनसः ।

वेनतः । वाक् । ज्येष्ठस्य । वा । धर्मणि । क्षोः । अनीके । आत् ।
ईं । आयन् । वरं । आ । वावशानाः । जुष्टं । पतिं । कलशे । गावः ।
इंदुं ॥ प्र । दानुऽदः । दिव्यः । दानुऽपिन्वः । ऋतं । ऋताय । पवते ।
सुऽमेधाः । धर्मा । भुवत् । वृजन्यस्य । राजा । प्र । रश्मिऽभिः ।
दशऽभिः । भारि । भूम ॥ पवित्रेभिः । पवमानः । नृऽचक्षाः । राजा ।
देवानां । उत । मर्त्यानां । क्षिता । भुवत् । रयिऽपतिः । रयीणां ।
ऋतं । भरत् । सुऽभृतं । चारु । इंदुः ॥ अर्वान्ऽइव । श्रवसे । सातिं ।
अच्छ । इंद्रस्य । वायोः । अभि । वीतिं । अर्ष । सः । नः । सहस्रा ।
बृहतीः । इषः । दाः । भव । सोम । द्रविणःऽवित् । पुनानः ॥ १५ ॥
देवऽअव्यः । नः । परिऽसिच्यमानाः । क्षयं । सुवीरं । धन्वंतु ।
सोमाः । आऽयज्यवः । सुऽमतिं । विश्वऽवाराः । होतारः । न ।
दिविऽयजः । मंद्रऽतमाः ॥ एव । देव । देवऽताते । पवस्व । महे ।
सोम । प्सरसे । देवऽपानः । महः । चित् । हि । स्मसि । हिताः ।
सऽमर्ये । कृधि । सुस्थानेइतिसुऽस्थाने । रोदसीइति । पुनानः ॥
अश्वः । न । क्रदः । वृषऽभिः । युजानः । सिंहः । न । भीमः ।
मनसः । जवीयान् । अर्वाचीनैः । पथिऽभिः । ये । रजिष्ठाः । आ ।
पवस्व । सौमनसं । नः । इंदोइति ॥ शतं । धाराः । देवऽजाताः ।
असृग्रन् । सहस्रं । एनाः । कवयः । मृजंति । इंदोइति । सनित्रं ।
दिवः । आ । पवस्व । पुरःऽएता । असि । महतः । धनस्य ॥ दिवः ।
न । सर्गाः । अससृग्रं । अह्नां । राजा । न । मित्रं । प्र । मिनाति ।
धीरः । पितुः । न । पुत्रः । क्रतुऽभिः । यतानः । आ । पवस्व ।
विशे । अस्यै । अजीतिं ॥ १६ ॥ प्र । ते । धाराः । मधुऽमतीः ।
असृग्रन् । वारान् । यत् । पूतः । अतिऽएषि । अव्यान् । पवमान ।
पवसे । धाम । गोनां । जज्ञानः । सूर्यं । अपिन्वः । अर्कैः ॥ कनिक्रदत् ।
अनु । पंथां । ऋतस्य । शुक्रः । वि । भासि । अमृतस्य । धाम ।
सः । इंद्राय । पवसे । मत्सरऽवान् । हिन्वानः । वाचं । मतिऽभिः ।

कवीनां ॥ दिव्यः । सुऽपर्णः । अव । चक्षि । सोम । पिन्वन् । धाराः । कर्मणा । देवऽवीतौ । आ । इंदोइति । विश । कलशं । सोमऽधानं । क्रंदन् । इहि । सूर्यस्य । उप । रश्मिं ॥ तिस्रः । वाचः । ईरयति । प्र । वह्निः । ऋतस्य । धीतिं । ब्रह्मणः । मनीषां । गावः । यंति । गोऽपतिं । पृच्छमानाः । सोमं । यंति । मतयः । वावशानाः ॥ सोमं । गावः । धेनवः । वावशानाः । सोमं । विप्राः । मतिऽभिः । पृच्छमानाः । सोमः । सुतः । पूयते । अज्यमानः । सोमे । अर्काः । त्रिऽस्तुभः । सं । नवंते ॥ १७ ॥ एव । नः । सोम । परिऽसिच्यमानः । आ । पवस्व । पूयमानः । स्वस्ति । इंद्रं । आ । विश । बृहता । रवेण । वर्धय । वाचं । जनय । पुरंऽधिं ॥ आ । जागृविः । विप्रः । ऋता । मतीनां । सोमः । पुनानः । असदत् । चमूषु । सपंति । यं । मिथुनासः । निऽकामाः । अध्वर्यवः । रथिरासः । सुऽहस्ताः ॥ सः । पुनानः । उप । सूरे । न । धाता । आ । उभेइति । अप्राः । रोदसीइति । वि । सः । आवरित्यावः । प्रिया । चित् । यस्य । प्रियसासः । ऊती । सः । तु । धनं । कारिणे । न । प्र । यंसत् ॥ सः । वर्धिता । वर्धनः । पूयमानः । सोमः । मीढ्वान् । अभि । नः । ज्योतिषा । आवीत् ॥ ० ॥ स्वःऽविदः । अभि । गाः । अद्रिं । उष्णन् ॥ अक्रान् । समुद्रः । प्रथमे । विऽधर्मन् । जनयन् । प्रऽजाः । भुवनस्य । राजा । वृषा । पवित्रे । अधि । सानौ । अव्ये । बृहत् । सोमः । ववृधे । सुवानः । इंदुः ॥ १८ ॥ महत् । तत् । सोमः । महिषः । चकार । अपां । यत् । गर्भः । अवृणीत । देवान् । अदधात् । इंद्रे । पवमानः । ओजः । अजनयत् । सूर्ये । ज्योतिः । इंदुः ॥ मत्सि । वायुं । इष्टये । राधसे । च । मत्सि । मित्रावरुणा । पूयमानः । मत्सि । शर्धः । मारुतं । मत्सि । देवान् । मत्सि । द्यावापृथिवीइति । देव । सोम ॥ ऋजुः । पवस्व । वृजिनस्य । हंता । अप । अमीवां । बाधमानः । मृधः । च । अभिऽश्रीणन् । पयः । पयसा । अभि । गोनां । इंद्रस्य । त्वं । तव । वयं । सखायः ॥ मध्वः ।

सुदं । पवस्व । वस्वः । उत्सं । वीरं । च । नः । आ । पवस्व । भगं । च । स्वर्दस्व । इंद्राय । पवमानः । इंदोइति । रयिं । च । नः । आ । पवस्व । समुद्रात् ॥ सोमः । सुतः । धारया । अत्यः । न । हित्वा । सिंधुः । न । निम्नं । अभि । वाजी । अक्षारिति । आ । योनिं । वन्यं । असदत् । पुनानः । सं । इंदुः । गोभिः । असरत् । सं । अत्ऽभिः ॥ १९ ॥ एषः । स्यः । ते । पवते । इंद्र । सोमः । चमूषु । धीरः । उशते । तवस्वान् । स्वः ऽचक्षाः । रथिरः । सत्यऽशुष्मः । कामः । न । देवऽयतां । असर्जि ॥ एषः । प्रत्नेन । वयसा । पुनानः । तिरः । वर्पांसि । दुहितुः । दधानः । वसानः । शर्म । त्रिऽवरूथं । अप्ऽसु । होताऽइव । याति । समनेषु । रेभन् ॥ नु । नः । त्वं । रथिरः । देव । सोम । परि । स्रव । चम्वोः । पूयमानः । अप्ऽसु । स्वादिष्ठः । मधुऽमान् । ऋतऽवा । देवः । न । यः । सविता । सत्यऽमन्मा ॥ अभि । वायुं । वीती । अर्ष । गृणानः । अभि । मित्रावरुणा । पूयमानः । अभि । नरं । धीऽजवनं । रथेऽस्थां । अभि । इंद्रं । वृषणं । वज्रऽबाहुं ॥ अभि । वस्त्रा । सुऽवसनानि । अर्ष । अभि । धेनूः । सुऽदुघाः । पूयमानः । अभि । चंद्रा । भर्तवे । नः । हिरण्या । अभि । अश्वान् । रथिनः । देव । सोम ॥ २० ॥ अभि । नः । अर्ष । दिव्या । वसूनि । अभि । विश्वा । पार्थिवा । पूयमानः । अभि । येन । द्रविणं । अश्नवाम । अभि । आर्षेयं । जमदग्निऽवत् । नः ॥ अया । पवा । पवस्व । एना । वसूनि । मांश्चत्वे । इंदोइति । सरसि । प्र । धन्व । ब्रध्नः । चित् । अत्र । वातः । न । जूतः । पुरुऽमेधः । चित् । तकवे । नरं । दात् ॥ उत । नः । एना । पवया । पवस्व । अधि । श्रुते । श्रवाय्यस्य । तीर्थे । षष्टिं । सहस्रा । नैगुतः । वसूनि । वृक्षं । न । पक्वं । धूनवत् । रणाय ॥ महि । इमेइति । अस्य । वृषनाम । शूषेइति । मांश्चत्वे । वा । पृशने । वा । वधत्रेइति । अस्वापयत् । निऽगुतः । स्नेहयत् । च । अप । अमित्रान् । अप । अचितः । अच । इतः ॥

सं । त्री । पवित्रा । विऽततानि । एषि । अनु । एकं । धावसि । पूयमानः । असि । भगः । असि । दात्रस्य । दाता । असि । मघऽवा । मघवत्ऽभ्यः । इंदोइति ॥ २१ ॥ एषः । विश्वऽवित् । पवते । मनीषी । सोमः । विश्वस्य । भुवनस्य । राजा । द्रप्सान् । ईरयन् । विदथेषु । इंदुः । वि । वारं । अव्यं । समया । अति । याति ॥ इंदुं । रिहंति । महिषाः । अदब्धाः । पदे । रेभंति । कवयः । न । गृध्राः । हिन्वंति । धीराः । दशऽभिः । क्षिपाभिः । सं । अंजते । रूपं । अपां । रसेन ॥ त्वया । वयं । पवमानेन । सोम । भरे । कृतं । वि । चिनुयाम । शश्वत् ॥ ० ॥ २२ ॥ अभि । नः । वाजऽसातमं । रयिं । अर्ष । पुरुऽस्पृहं । इंदोइति । सहस्रऽभर्णसं । तुविऽद्युम्नं । विभ्वऽसहं ॥ परि । स्यः । सुवानः । अव्ययं । रथे । न । वर्म । अव्यत । इंदुः । अभि । द्रुणा । हितः । हियानः । धाराभिः । अक्षारिति ॥ ० ॥ अक्षारिति । इंदुः । अव्यं । मदऽच्युतः । धारा । यः । ऊर्ध्वः । अध्वरे । भ्राजा । न । एति । गव्यऽयुः ॥ सः । हि । त्वं । देव । शश्वते । वसु । मर्ताय । दाशुषे । इंदोइति । सहस्रिणं । रयिं । शतऽआत्मानं । विवाससि ॥ ० ॥ वसोइति । वस्वः । पुरुऽस्पृहः । नि । नेदिष्ठऽतमाः । इषः । स्याम । सुम्नस्य । अध्रिगोइत्यध्रिऽगो ॥ द्विः । यं । पंच । स्वऽयशसं । स्वसारः । अद्रिऽसंहतं ॥ ० ॥ प्रऽस्नापयंति । ऊर्मिणं ॥ २३ ॥ परि । त्यं । हर्यतं । हरिं । बभ्रुं । पुनंति । वारेण । यः । देवान् । विश्वान् । इत् । परि । मदेन । सह । गच्छति ॥ अस्य । वः । हि । अवसा । पांतः । दक्षऽसाधनं । यः । सूरिषु । श्रवः । बृहत् । दधे । स्वः । न । हर्यतः ॥ सः । वां । यज्ञेषु । मानवीइति । इंदुः । जनिष्ट । रोदसीइति । देवः । देवीइति । गिरिऽस्थाः । अस्रेधन् । तं । तुविऽस्वनि ॥ ० ॥ वृत्रऽघ्ने । परि । सिच्यसे । नरे । च । दक्षिणाऽवते । देवाय । सदनऽसदे ॥ ते । प्रत्नासः । [illegible] । सोमाः । [illegible] । [illegible] । अप ऽप्रोथंतः ।

सुतः । हुरःऽचितः । प्रातरिति । तान् । अप्रऽचेतसः ॥ तं । सखायः ।
पुरःऽरुचं । यूयं । वयं । च । सूरयः । अश्याम । वाजऽगंध्यं ।
सनेम । वाजऽपस्त्यं ॥ २४ ॥ आ । हर्यताय । धृष्णवे । धनुः ।
तन्वंति । पौंस्यं । शुक्रां । वयंति । असुराय । निःऽनिजं । विपां ।
अग्रे । महीयुवः ॥ अध । क्षपा । परिऽकृतः । वाजान् । अभि । प्र ।
गाहते । यदि । विवस्वतः । धियः । हरिं । हिन्वंति । यातवे ॥ तं ।
अस्य । मर्जयामसि । मदः । यः । इंद्रऽपातमः । यं । गावः । आसऽ-
भिः । दधुः । पुरा । नूनं । च । सूरयः ॥ तं । गाथया । पुराण्या ।
पुनानं । अभि । अनूषत । उतोइति । कृपंत । धीतयः । देवानां ।
नाम । बिभ्रतीः ॥ तं । उक्षमाणं । अव्यये । वारे । पुनंति । धर्णसिं ।
दूतं । न । पूर्वऽचित्तये । आ । शासते । मनीषिणः ॥ २५ ॥ सः ।
पुनानः । मदिन्ऽतमः । सोमः । चमूषु । सीदति । पशौ । न । रेतः ।
आऽदधत् । पतिः । वचस्यते । धियः ॥ सः । मृज्यते । सुकर्मऽभिः ।
देवः । देवेभ्यः । सुतः । विदे । यत् । आसु । संऽददिः । महीः ।
अपः । वि । गाहते ॥ सुतः । इंदोइति । पवित्रे । आ । नृऽभिः ।
यतः । वि । नीयसे । इंद्राय । मत्सरिन्ऽतमः । चमूषु । आ । नि ।
सीदसि ॥ २६ ॥ अभि । नवंते । अद्रुहः ॥ ० ॥ वत्सं । न । पूर्वे ।
आयुनि । जातं । रिहंति । मातरः ॥ पुनानः । इंदोइति । आ । भर ।
सोम । द्विऽबर्हसं । रयिं । त्वं । वसूनि । पुष्यसि । विश्वानि ।
दाशुषः । गृहे ॥ त्वं । धियं । मनःऽयुजं । सृज । वृष्टिं । न । तन्यतुः ।
त्वं । वसूनि । पार्थिवा । दिव्या । च । सोम । पुष्यसि ॥ परि । ते ।
जिग्युषः । यथा । धारा । सुतस्य । धावति । रंहमाणा । वि ।
अव्ययं । वारं । वाजीऽइव । सानसिः ॥ क्रत्वे । दक्षाय । नः । कवे ।
पवस्व । सोम । धारया । इंद्राय । पातवे । सुतः । मित्राय ।
वरुणाय । च ॥ २७ ॥ पवस्व । वाजऽसातमः । पवित्रे । धारया ।
सुतः । इंद्राय । सोम । विष्णवे । देवेभ्यः । मधुमत्ऽतमः ॥ त्वां ।

रिहंति । मातरः । हरिं । पवित्रे । अद्रुहः । वत्सं । जातं । न । धेनवः । पवमान । विऽधर्मणि ॥ पवमान । महि । श्रवः । चित्रेभिः । यासि । रश्मिऽभिः । शर्धन् । तमांसि । जिघ्नसे । विश्वानि । दाशुषः । गृहे ॥ त्वं । द्यां । च । महिऽव्रत । पृथिवीं । च । अति । जभ्रिषे । प्रति । द्रापिं । अमुंचथाः । पवमान । महिऽत्वना ॥ २८ ॥

इति सप्तमाष्टके चतुर्थोऽध्यायः ॥ ४ ॥



अष्टक ७, अध्याय ५, मण्डल ९, अनुवाक ७, वर्ग १.




हरिः ॐ ॥ पुरःऽजिती । वः । अंधसः । सुताय । मादयित्नवे । अप । श्वानं । श्नथिष्टन । सखायः । दीर्घऽजिह्व्यं ॥ यः । धारया । पावकया । परिऽप्रस्यंदते । सुतः । इंदुः । अश्वः । न । कृत्व्यः ॥ तं । दुरोषं । अभि । नरः । सोमं । विश्वाच्या । धिया । यज्ञं । हिन्वंति । अद्रिऽभिः ॥ सुतासः । मधुमत्ऽतमाः । सोमाः । इंद्राय । मंदिनः । पवित्रऽवंतः । अक्षरन् । देवान् । गच्छंतु । वः । मदाः ॥ इंदुः । इंद्राय । पवते । इति । देवासः । अब्रुवन् । वाचः । पतिः । मखस्यते । विश्वस्य । ईशानः । ओजसा ॥ १ ॥ सहस्रऽधारः । पवते । समुद्रः । वाचंऽईखयः । सोमः । पतिः । रयीणां । सखा । इंद्रस्य । दिवेऽदिवे ॥ अयं । पूषा । रयिः । भगः । सोमः । पुनानः । अर्षति । पतिः । विश्वस्य । भूमनः । वि । अख्यत् । रोदसीइति । उभेइति ॥ सं । ऊँइति । प्रियाः । अनूषत । गावः । मदाय । वृष्वयः । सोमासः ।

कृण्वते । पथः । पवमानासः । इंदवः ॥ यः । ओजिष्ठः । तं । आ ।
भर । पवमान । श्रवाय्यं । यः । पंच । चर्षणीः । अभि । रयिं ।
येन । वनामहै ॥ सोमाः । पवंते । इंदवः । अस्मभ्यं । गातुवित्ऽतमाः ।
मित्राः । सुवानाः । अरेपसः । सुऽआध्यः । स्वःऽविदः ॥ २ ॥
सुस्वानासः । वि । अद्रिऽभिः । चितानाः । गोः । अधि । त्वचि ।
इषं । अस्मभ्यं । अभितः । सं । अस्वरन् । वसुऽविदः ॥ एते । पूताः ।
विपःऽचितः । सोमासः । दधिऽआशिरः । सूर्यासः । न । दर्शतासः ।
जिगत्नवः । ध्रुवाः । घृते ॥ प्र । सुन्वानस्य । अंधसः । मर्तः । न ।
वृत । तत् । वचः । अप । श्वानं । अराधसं । हत । मखं । न ।
भृगवः ॥ आ । जामिः । अत्के । अव्यत । भुजे । न । पुत्रः । ओण्योः ।
सरत् । जारः । न । योषणां । वरः । न । योनिं । आऽसदं ॥ सः ।
वीरः । दक्षऽसाधनः । वि । यः । तस्तंभ । रोदसीइति । हरिः ।
पवित्रे । अव्यत । वेधाः । न । योनिं । आऽसदं ॥ अव्यः । वारेभिः ।
पवते । सोमः । गव्ये । अधि । त्वचि । कनिक्रदत् । वृषा । हरिः ।
इंद्रस्य । अभि । एति । निःऽकृतं ॥ ३ ॥ क्राणा । शिशुः । महीनां ।
हिन्वन् । ऋतस्य । दीधितिं । विश्वा । परि । प्रिया । भुवत् । अध ।
द्विता ॥ उप । त्रितस्य । पाष्योः । अभक्त । यत् । गुहा । पदं ।
यज्ञस्य । सप्त । धामऽभिः । अध । प्रियं ॥ त्रीणि । त्रितस्य । धारया ।
पृष्ठेषु । आ । ईरय । रयिं । मिमीते । अस्य । योजना । वि । सुऽक्रतुः ॥
जज्ञानं । सप्त । मातरः । वेधां । अशासत । श्रिये । अयं । ध्रुवः ।
रयीणां । चिकेत । यत् ॥ अस्य । व्रते । सऽजोषसः । विश्वे ।
देवासः । अद्रुहः । स्पार्हाः । भवंति । रंतयः । जुषंत । यत् ॥ ४ ॥
यं । ईमिति । गर्भं । ऋतऽवृधः । दृशे । चारुं । अजीजनन् । कविं ।
मंहिष्ठं । अध्वरे । पुरुऽस्पृहं ॥ समीचीनेइतिसंऽईचीने । अभि ।
त्मना । यह्वीइति । ऋतस्य । मातरा । तन्वानाः । यज्ञं । आनुषक् ।
यत् । अंजते ॥ क्रत्वा । शुक्रेभिः । अक्षऽभिः । ऋणोः । अप । व्रजं ।

दिवः । हिन्वन् । ऋतस्य । दीधितिं । प्र । अध्वरे ॥ ५ ॥ प्र । पुनानाय । वेधसे । सोमाय । वचः । उत्ऽयतं । भृतिं । न । भर । मतिऽभिः । जुजोषते ॥ परि । वाराणि । अव्यया । गोभिः । अंजानः । अर्षति । त्री । सधऽस्था । पुनानः । कृणुते । हरिः ॥ परि । कोशं । मधुऽश्चुतं । अव्यये । वारे । अर्षति । अभि । वाणीः । ऋषीणां । सप्त । नूषत ॥ परि । नेता । मतीनां । विश्वऽदेवः । अदाभ्यः । सोमः । पुनानः । चम्वोः । विशत् । हरिः ॥ परि । दैवीः । अनु । स्वधाः । इंद्रेण । याहि । सऽरथं । पुनानः । वाघत् । वाघत्ऽभिः । अमर्त्यः ॥ परि । सप्तिः । न । वाजऽयुः । देवः । देवेभ्यः । सुतः । विऽआनशिः । पवमानः । वि । धावति ॥ ६ ॥ इति सप्तमोऽनुवाकः ॥ – :: – ॥ अथ अष्टमोऽनुवाकः ॥ – :: – ॥ सखायः । आ । नि । सीदत । पुनानाय । प्र । गायत । शिशुं । न । यज्ञैः । परि । भूषत । श्रिये ॥ सं । ईं । इति । वत्सं । न । मातृऽभिः । सृजत । गयऽसाधनं । देवऽअव्यं । मदं । अभि । द्विऽशवसं ॥ पुनात । दक्षऽसाधनं । यथा । शर्धाय । वीतये । यथा । मित्राय । वरुणाय । शंऽतमः ॥ अस्मभ्यं । त्वा । वसुऽविदं । अभि । वाणीः । अनूषत । गोभिः । ते । वर्णं । अभि । वासयामसि ॥ सः । नः । मदानां । पते । इंदो इति । देवऽप्सराः । असि । सखाऽइव । सख्ये । गातुवित्ऽतमः । भव ॥ सनेमि । कृधि । अस्मत् । आ । रक्षसं । कं । चित् । अत्रिणं । अप । अदेवं । द्वयुं । अंहः । युयोधि । नः ॥ ७ ॥ तं । वः । सखायः । मदाय । पुनानं । अभि । गायत ॥ ० ॥ स्वदयंत । गूर्तिऽभिः ॥ सं । वत्सःऽइव । मातृऽभिः । इंदुः । हिन्वानः । अज्यते । देवऽअवीः । मदः । मतिऽभिः । परिऽकृतः ॥ अयं । दक्षाय । साधनः । अयं । शर्धाय । वीतये । अयं । देवेभ्यः । मधुमत्ऽतमः । सुतः ॥ गोऽमत् । नः । इंदो इति । अश्वऽवत् । सुतः । सुऽदक्ष । धन्व । शुचिं । ते । वर्णं । अधि । गोषु । दीधरं ॥ सः । नः । हरीणां ।

पते । इंदोइति । देवप्सरःऽतमः । सखाऽइव । सख्ये । नर्यः ।
रुचे । भव ॥ सनेमि । त्वं । अस्मत् । आ । अदेवं । कं । चित् ।
अत्रिणं । सह्वान् । इंदोइति । परि । बाधः । अप । द्वयुं ॥ ८ ॥ इंद्रं ।
अच्छ । सुताः । इमे । वृषणं । यंतु । हरयः । श्रुष्टी । जातासः ।
इंदवः । स्वःऽविदः ॥ अयं । भराय । सानसिः । इंद्राय । पवते ।
सुतः । सोमः । जैत्रस्य । चेतति । यथा । विदे ॥ ० ॥ अस्य ।
गृभ्णीत । सानसिं । वज्रं । च । वृषणं । भरत् । सं । अप्सुऽजित् ॥
प्र । धन्व । सोम । जागृविः ॥ ० ॥ द्युऽमंतं । शुष्मं । आ । भर ।
स्वःऽविदं ॥ इंद्राय । वृषणं । मदं । पवस्व । विश्वऽदर्शतः । सहस्रऽ-
यामा । पथिऽकृत् । विऽचक्षणः ॥ ९ ॥ अस्मभ्यं । गातुवित्ऽतमः ।
देवेभ्यः । मधुमत्ऽतमः । सहस्रं । याहि । पथिऽभिः । कनिक्रदत् ॥
पवस्व । देवऽवीतये । इंदोइति । धाराभिः । ओजसा । आ । कलशं ।
मधुऽमान् । सोम । नः । सदः ॥ तव । द्रप्साः । उदऽप्रुतः । इंद्रं ।
मदाय । वावृधुः । त्वां । देवासः । अमृताय । कं । पपुः ॥ आ । नः ।
सुतासः । इंदवः । पुनानाः । धावत । रयिं । वृष्टिऽद्यावः । रीतिऽ-
आपः । स्वःऽविदः ॥ सोमः । पुनानः । ऊर्मिणा । अव्यः । वारं । वि ।
धावति । अग्रे । वाचः । पवमानः । कनिक्रदत् ॥ १० ॥ धीभिः ।
हिन्वंति । वाजिनं । वने । क्रीळंतं । अतिऽअविं । अभि । त्रिऽपृष्ठं ।
मतयः । सं । अस्वरन् ॥ असर्जि । कलशान् । अभि । मीळ्हे ।
सप्तिः । न । वाजऽयुः । पुनानः । वाचं । जनयन् । असिस्यदत् ॥
पवते । हर्यतः । हरिः । अति । ह्वरांसि । रंह्या । अभिऽअर्षन् ।
स्तोतृऽभ्यः । वीरऽवत् । यशः ॥ अया । पवस्व । देवऽयुः । मधोः ।
धाराः । असृक्षत । रेभन् । पवित्रं । परि । एषि । विश्वतः ॥ ११ ॥
परि । इतः । सिंचत । सुतं । सोमः । यः । उत्ऽतमं । हविः ।
दधन्वान् । यः । नर्यः । अप्ऽसु । अंतः । आ । सुसाव । सोमं ।
अद्रिऽभिः ॥ नूनं । पुनानः । अविऽभिः । परि । स्रव । अदब्धः ।

सुरभिऽतरः । सुते । चित् । त्वा । अप्ऽसु । मदामः । अंधसा । श्रीणंतः । गोभिः । उत्ऽतरं ॥ परि । सुवानः । चक्षसे । देवऽमादनः । क्रतुः । इंदुः । विऽचक्षणः ॥ पुनानः । सोम । धारया । अपः । वसानः । अर्षसि । आ । रत्नऽधाः । योनिं । ऋतस्य । सीदसि । उत्सः । देव । हिरण्ययः ॥ दुहानः । ऊधः । दिव्यं । मधु । प्रियं । प्रत्नं । सधऽस्थं । आ । असदत् । आऽपृच्छ्यं । धरुणं । वाजी । अर्षति । नृऽभिः । धूतः । विऽचक्षणः ॥ १२ ॥ पुनानः । सोम । जागृविः । अव्यः । वारे । परि । प्रियः । त्वं । विप्रः । अभवः । अंगिरःऽतमः । मध्वा । यज्ञं । मिमिक्ष । नः ॥ सोमः । मीढ्वान् । पवते । गातुवित्ऽतमः । ऋषिः । विप्रः । विऽचक्षणः । त्वं । कविः । अभवः । देवऽवीतमः । आ । सूर्यं । रोहयः । दिवि ॥ सोमः । ऊँ इति । सुवानः । सोतृऽभिः । अधि । स्नुऽभिः । अवीनां । अश्वयाऽइव । हरिता । याति । धारया । मंद्रया । याति । धारया ॥ अनूपे । गोऽमान् । गोभिः । अक्षारिति । सोमः । दुग्धाभिः । अक्षारिति । समुद्रं । न । संऽवरणानि । अग्मन् । मंदी । मदाय । तोशते ॥ आ । सोम । सुवानः । अद्रिऽभिः । तिरः । वाराणि । अव्यया । जनः । न । पुरि । चम्वोः । विशत् । हरिः । सदः । वनेषु । दधिषे ॥ १३ ॥ सः । मम‍ृजे । तिरः । अण्वानि । मेष्यः । मीळ्हे । सप्तिः । न । वाजऽयुः । अनुऽमाद्यः । पवमानः । मनीषिऽभिः । सोमः । विप्रेभिः । ऋक्वऽभिः ॥ प्र । सोम । देवऽवीतये । सिंधुः । न । पिप्ये । अर्णसा । अंशोः । पयसा । मदिरः । जागृविः । अच्छ । कोशं । मधुऽश्चुतं ॥ आ । हर्यतः । अर्जुने । अत्के । अव्यत । प्रियः । सूनुः । न । मर्ज्यः । तं । ईं । हिन्वंति । अपसः । यथा । रथं । नदीषु । आ । गभस्त्योः ॥ अभि । सोमासः । आयवः । पवंते । मद्यं । मदं । समुद्रस्य । अधि । विष्टपि । मनीषिणः । मत्सरासः । स्वःऽविदः ॥ तरत् । समुद्रं । पवमानः । ऊर्मिणा । राजा । देवः ।

ऋतं । बृहत् । अर्षत् । मित्रस्य । वरुणस्य । धर्मणा । प्र । हिन्वानः । ऋतं । बृहत् ॥ १४ ॥ नृऽभिः । येमानः । हर्यतः । विऽचक्षणः । राजा । देवः । समुद्रियः ॥ इंद्राय । पवते । मदः । सोमः । मरुत्वते । सुतः । सहस्रऽधारः । अति । अव्यं । अर्षति । तं । ईमिति । मृजंति । आयवः ॥ पुनानः । चमूइति । जनयन् । मतिं । कविः । सोमः । देवेषु । रण्यति । अपः । वसानः । परि । गोभिः । उत्ऽतरः । सीदन् । वनेषु । अव्यत ॥ तव । अहं । सोम । ररण । सख्ये । इंदोइति । दिवेऽदिवे । पुरूणि । बभ्रोइति । नि । चरंति । मां । अव । परिऽधीन् । अति । तान् । इहि ॥ उत । अहं । नक्तं । उत । सोम । ते । दिवा । सख्याय । बभ्रोइति । ऊधनि । घृण । तपंतं । अति । सूर्यं । परः । शकुनाःऽइव । पतिम ॥ १५ ॥ मृज्यमानः । सुऽहस्त्य । समुद्रे । वाचं । इन्वसि । रयिं । पिशंगं । बहुलं । पुरुऽस्पृहं । पवमान । अभि । अर्षसि ॥ मृजानः । वारे । पवमानः । अव्यये । वृषा । अव । चक्रदः । वने । देवानां । सोम । पवमान । निःऽकृतं । गोभिः । अंजानः । अर्षसि ॥ पवस्व । वाजऽसातये । अभि । विश्वानि । काव्या । त्वं । समुद्रं । प्रथमः । वि । धारयः । देवेभ्यः । सोम । मत्सरः ॥ ० ॥ दिव्या । च । सोम । धर्मऽभिः । त्वां । विप्रासः । मतिऽभिः । विऽचक्षण । शुभ्रं । हिन्वंति । धीतिऽभिः ॥ पवमानाः । असृक्षत । पवित्रं । अति । धारया । मरुत्वंतः । मत्सराः । इंद्रियाः । हयाः । मेधां । अभि । प्रयांसि । च ॥ ० ॥ कोशं । अर्षति । इंदुः । हियानः । स्रोतृऽभिः । जनयन् । ज्योतिः । मंदनाः । अवीवशत् । गाः । कृण्वानः । न । निःऽनिजं ॥ १६ ॥ पवस्व । मधुमत्ऽतमः । इंद्राय । सोम । क्रतुवित्ऽतमः । मदः । महि । द्युक्षऽतमः । मदः ॥ यस्य । ते । पीत्वा । वृषभः । वृषऽयते । अस्य । पीताः । स्वःऽविदः । सः । सुऽप्रकेतः । अभि । अक्रमीत् । इषः । अच्छ । वाजं । न । पतशः ॥ त्वं । हि । अंग । दैव्या । पवमान । जनिमानि । द्युमत्ऽ-

तमः । अमृतऽत्वाय । घोषयः ॥ येन । नवऽग्वः । दध्यङ् । अपऽऊर्णुते ।
येन । विप्रासः । आपिरे । देवानां । सुम्ने । अमृतस्य । चारुणः ।
येन । श्रवांसि । आनशुः ॥ एषः । स्यः । धारया । सुतः । अव्यः ।
वारेभिः । पवते । मदिन्ऽतमः । क्रीळन् । ऊर्मिः । अपांऽइव ॥ १७ ॥
यः । उस्रियाः । अप्याः । अंतः । अश्मनः । निः । गाः । अकृंतत् ।
ओजसा । अभि । व्रजं । तत्निषे । गव्यं । अश्व्यं । वर्मीऽइव ।
धृष्णो इति । आ । रुज ॥ आ । सोत । परि । सिंचत । अश्वं । न ।
स्तोमं । अप्ऽतुरं । रजःऽतुरं । वनऽक्रक्षं । उदऽप्रुतं ॥ सहस्रऽधारं ।
वृषभं । पयःऽवृधं । प्रियं । देवाय । जन्मने । ऋतेन । यः । ऋतऽ-
जातः । विऽववृधे । राजा । देवः । ऋतं । बृहत् ॥ अभि । द्युम्नं ।
बृहत् । यशः । इषः । पते । दिदीहि । देव । देवऽयुः । वि । कोशं ।
मध्यमं । युव ॥ आ । वच्यस्व । सुऽदक्ष । चम्वोः । सुतः । विशां ।
वह्निः । न । विश्पतिः । वृष्टिं । दिवः । पवस्व । रीतिं । अपां ।
जिन्व । गोऽइष्टये । धियः ॥ १८ ॥ एतं । ऊँ इति । त्यं । मदऽच्युतं ।
सहस्रऽधारं । वृषभं । दिवः । दुहुः । विश्वा । वसूनि । बिभ्रतं ॥
वृषा । वि । जज्ञे । जनयन् । अमर्त्यः । प्रऽतपन् । ज्योतिषा । तमः ।
सः । सुऽस्तुतः । कविऽभिः । निःऽनिजं । दधे । त्रिऽधातु । अस्य ।
दंससा ॥ सः । सुन्वे । यः । वसूनां । यः । रायां । आऽनेता । यः ।
इळानां । सोमः । यः । सुऽक्षितीनां ॥ यस्य । नः । इंद्रः । पिबात् ।
यस्य । मरुतः । यस्य । वा । अर्यमणा । भगः । आ । येन ।
मित्रावरुणा । करामहे । आ । इंद्रं । अवसे । महे ॥ इंद्राय । सोम ।
पातवे । नृऽभिः । यतः । सुऽआयुधः । मदिन्ऽतमः । पवस्व ।
मधुमत्ऽतमः ॥ इंद्रस्य । हार्दि । सोमऽधानं । आ । विश । समुद्रंऽ-
इव । सिंधवः । जुष्टः । मित्राय । वरुणाय । वायवे । दिवः । विष्टंभः ।
उत्ऽतमः ॥ १९ ॥ परि । प्र । धन्व । इंद्राय । सोम । स्वादुः ।
मित्राय । पूष्णे । भगाय ॥ इंद्रः । ते । सोम । सुतस्य । पेयाः ।

क्रत्वे । दक्षाय । विश्वे । च । देवाः ॥ एव । अमृताय । महे ।
क्षयाय । सः । शुक्रः । अर्ष । दिव्यः । पीयूषः ॥ पवस्व । सोम ।
महान् । समुद्रः । पिता । देवानां । विश्वा । अभि । धाम ॥ शुक्रः ।
पवस्व । देवेभ्यः । सोम । दिवे । पृथिव्यै । शं । च । प्रऽजायै ॥
दिवः । धर्ता । असि । शुक्रः । पीयूषः । सत्ये । विऽधर्मन् । वाजी ।
पवस्व ॥ पवस्व । सोम । द्युम्नी । सुऽधारः । महां । अवीनां । अनु ।
पूर्व्यः ॥ नृऽभिः । येमानः । जज्ञानः । पूतः । क्षरत् । विश्वानि ।
मंद्रः । स्वःऽवित् ॥ इंदुः । पुनानः । प्रऽजां । उराणः । करत् ।
विश्वानि । द्रविणानि । नः ॥ पवस्व । सोम । क्रत्वे । दक्षाय । अश्वः ।
न । निक्तः । वाजी । धनाय ॥ २० ॥ तं । ते । सोतारः । रसं ।
मदाय । पुनंति । सोमं । महे । द्युम्नाय ॥ शिशुं । जज्ञानं । हरिं ।
मृजंति । पवित्रे । सोमं । देवेभ्यः । इंदुं ॥ इंदुः । पविष्ट । चारुः ।
मदाय । अपां । उपऽस्थे । कविः । भगाय ॥ बिभर्ति । चारु । इंद्रस्य ।
नाम । येन । विश्वानि । वृत्रा । जघान ॥ पिबंति । अस्य । विश्वे ।
देवासः । गोभिः । श्रीतस्य । नृऽभिः । सुतस्य ॥ प्र । सुवानः ।
अक्षारिति । सहस्रऽधारः । तिरः । पवित्रं । वि । वारं । अव्यं ॥ सः ।
वाजी । अक्षारति । सहस्रऽरेताः । अत्ऽभिः । मृजानः । गोभिः ।
श्रीणानः ॥ प्र । सोम । याहि । इंद्रस्य । कुक्षा । नृऽभिः । येमानः ।
अद्रिऽभिः । सुतः ॥ असर्जि । वाजी । तिरः । पवित्रं । इंद्राय । सोमः ।
सहस्रऽधारः ॥ अंजंति । एनं । मध्वः । रसेन । इंद्राय । वृष्णे । इंदुं ।
मदाय ॥ देवेभ्यः । त्वा । वृथा । पाजसे । अपः । वसानं । हरिं ।
मृजंति ॥ इंदुः । इंद्राय । तोशते । नि । तोशते । श्रीणन् । उग्रः । रिणन् ।
अपः ॥ २१ ॥ परि । ऊँ इति । सु । प्र । धन्व । वाजऽसातये । परि ।
वृत्राणि । सक्षणिः । द्विषः । तरध्यै । ऋणऽयाः । नः । ईयसे ॥
अनु । हि । त्वा । सुतं । सोम । मदामसि । महे । समर्यऽराज्ये ।
वाजान् । अभि । पवमान । प्र । गाहसे ॥ अजीजनः । हि । पवमान ।

सूर्यै । वि॒ऽधारे॑ । शक्म॑ना । पय॑ः । गोऽजी॑रया । रंह॑माणः । पुरं॑ऽध्या ॥ अजी॑जनः । अ॒मृ॒त॒ । मर्त्ये॑षु । आ । ऋ॒तस्य॑ । धर्म॑न् । अ॒मृत॑स्य । चारु॑णः । सदा॑ । अ॒स॒रः॒ । वाजं॑ । अच्छ॑ । सनि॑स्यदत् ॥ अ॒भिऽअ॑भि । हि । श्रव॑सा । त॒तर्दि॑थ । उत्सं॑ । न । कं । चि॒त् । ज॒न॒ऽपानं॑ । अक्षि॑तं । शर्या॑भिः । न । भर॑माणः । गभ॑स्त्योः ॥ आत् । ई॒ । के । चि॒त् । पश्य॑मानासः । आप्यं॑ । व॒सु॒ऽरुचः॑ । दि॒व्याः । अ॒भि । अ॒नू॒ष॒त॒ । वारं॑ । न । दे॒वः । स॒वि॒ता । वि । ऊ॒र्णु॒ते॒ ॥ २२ ॥ त्वेइति॑ । सो॒म॒ । प्र॒थ॒माः । वृ॒क्तऽब॑र्हिषः । म॒हे । वाजा॑य । श्रव॑से । धियं॑ । द॒धुः॒ । सः । त्वं । न॒ः । वी॒र॒ । वी॒र्या॑य । चो॒द॒य॒ ॥ दि॒वः । पी॒यूषं॑ । पू॒र्व्यं । यत् । उ॒क्थ्यं॑ । म॒हः । गा॒हात् । दि॒वः । आ । निः । अ॒धु॒क्ष॒त॒ । इंद्रं॑ । अ॒भि । जाय॑मानं । सं । अ॒स्व॒र॒न् ॥ अध॑ । यत् । इ॒मेइति॑ । प॒व॒मा॒न॒ । रोद॑सीइति॑ । इ॒मा । च॒ । विश्वा॑ । भुव॑ना । अ॒भि॒ । म॒ज्मना॑ । यू॒थे । न । निः॒ऽस्थाः । वृ॒ष॒भः । वि । ति॒ष्ठ॒से॒ ॥ सोम॑ः । पु॒ना॒नः । अव्ये॑ । वारे॑ । शिशु॑ः । न । क्रीळ॑न् । पव॑मानः । अ॒क्षा॒रि॒ति॑ । स॒हस्र॑ऽधारः । श॒त॒ऽवा॑जः । इंदु॑ः ॥ ए॒षः । पु॒ना॒नः । मधु॑ऽमान् । ऋ॒त॒ऽवा॑ । इंद्रा॑य । इंदु॑ः । प॒व॒ते॒ । स्वा॒दुः । ऊ॒र्मिः । वा॒ज॒ऽस॒निः॑ । व॒रि॒वः॒ऽवित् । व॒यः॒ऽधाः ॥ सः । प॒व॒स्व॒ । सह॑मानः । पृ॒त॒न्यून् । सेध॑न् । रक्षां॑सि । अप॑ । दुः॒ऽगहा॑नि । सु॒ऽआ॒यु॒धः । स॒स॒ह्वान् । सो॒म॒ । शत्रू॑न् ॥ २३ ॥ अ॒या । रु॒चा । हरि॑ण्या । पु॒ना॒नः । विश्वा॑ । द्वेषां॑सि । त॒र॒ति॒ । स॒यु॒ग्व॑ऽभिः । सूर॑ः । न । स॒यु॒ग्व॑ऽभिः । धारा॑ । सु॒तस्य॑ । रो॒च॒ते॒ । पु॒ना॒नः । अ॒रु॒षः । हरि॑ः ॥ विश्वा॑ । यत् । रू॒पा । प॒रि॒ऽयाति॑ । ऋक्व॑ऽभिः । स॒प्तऽआ॑स्येभिः । ऋक्व॑ऽभिः । त्वं । त्यत् । प॒णी॒नां । वि॒दः॒ । वसु॑ । सं । मा॒तृऽभि॑ः । म॒र्जय॑सि । स्वे । आ । दमे॑ । ऋ॒तस्य॑ । धी॒तिऽभि॑ः । दमे॑ ॥ प॒रा॒ऽवतः॑ । न । साम॑ । तत् । यत्र॑ । रण॑ंति । धी॒तय॑ः । त्रि॒धातु॑ऽभिः । अरु॑षीभिः । वयः॑ । द॒धे॒ । रोच॑मानः । वयः॑ । द॒धे॒ ॥ पूर्वी॑ । अनु॑ । प्र॒दिशं॑ । याति॑ । चेकि॑तत् । सं । र॒श्मिऽभि॑ः । य॒त॒ते॒ ।

दर्शतः । रथः । दैव्यः । दर्शतः । रथः । अग्मन् । उक्थानि । पौंस्या । इंद्रं । जैत्राय । हर्षयन् । वज्रः । च । यत् । भवथः । अनपऽच्युता । समत्ऽसु । अनपऽच्युता ॥ २४ ॥ नानानं । वै । ऊँ इति । नः । धियः । वि । व्रतानि । जनानां । तक्षा । रिष्टं । रुतं । भिषक् । ब्रह्मा । सुन्वंतं । इच्छति ॥ ० ॥ जरतीभिः । ओषधीभिः । पर्णेभिः । शकुनानां । कार्मारः । अश्मऽभिः । द्युऽभिः । हिरण्यऽवंतं । इच्छति ॥ ० ॥ कारुः । अहं । ततः । भिषक् । उपलऽप्रक्षिणी । नना । नानाऽधियः । वसुऽयवः । अनु । गाःऽइव । तस्थिम ॥ ० ॥ अश्वः । वोळ्हा । सुऽखं । रथं । हसनां । उपऽमंत्रिणः । शेपः । रोमण्ऽवंतौ । भेदौ । वाः । इत् । मंडूकः । इच्छति ॥ ० ॥ २५ ॥ शर्यणाऽवति । सोमं । इंद्रः । पिबतु । वृत्रऽहा । बलं । दधानः । आत्मनि । करिष्यन् । वीर्यं । महत् ॥ ० ॥ आ । पवस्व । दिशां । पते । आर्जीकात् । सोम । मीढ्वः । ऋतऽवाकेन । सत्येन । श्रद्धया । तपसा । सुतः ॥ ० ॥ पर्जन्यऽवृद्धं । महिषं । तं । सूर्यस्य । दुहिता । आ । अभरत् । तं । गंधर्वाः । प्रति । अगृभ्णन् । तं । सोमे । रसं । आ । अदधुः ॥ ० ॥ ऋतं । वदन् । ऋतऽद्युम्न । सत्यं । वदन् । सत्यऽकर्मन् । श्रद्धां । वदन् । सोम । राजन् । धात्रा । सोम । परिऽकृतः ॥ ० ॥ सत्यंऽउग्रस्य । बृहतः । सं । स्रवंति । संऽस्रवाः । सं । यंति । रसिनः । रसाः । पुनानः । ब्रह्मणा । हरे ॥ ० ॥ २६ ॥ यत्र । ब्रह्मा । पवमान । छंदस्यां । वाचं । वदन् । ग्रावणा । सोमे । महीयते । सोमेन । आऽनंदं । जनयन् ॥ ० ॥ यत्र । ज्योतिः । अजस्रं । यस्मिन् । लोके । स्वः । हितं । तस्मिन् । मां । धेहि । पवमान । अमृते । लोके । अक्षिते ॥ ० ॥ यत्र । राजा । वैवस्वतः । यत्र । अवऽरोधनं । दिवः । यत्र । अमूः । यह्वतीः । आपः । तत्र । मां । अमृतं । कृधि ॥ ० ॥ यत्र । अनुऽकामं । चरणं । त्रिऽनाके । त्रिऽदिवे । दिवः । लोकाः । यत्र । ज्योतिष्मंतः ॥ ० ॥ यत्र । कामाः ।

नि॒ऽका॒माः । च॒ । यत्र॑ । ब्र॒ध्नस्य॑ । वि॒ष्टप॑ । स्व॒धा । च॒ । यत्र॑ । तृप्तिः । च॒ ॥ ० ॥ यत्र॑ । आ॒ऽन॒न्दाः । च॒ । मोदाः॑ । च॒ । मुदः॑ । प्र॒ऽमुदः॑ । आस॑ते । काम॑स्य । यत्र॑ । आ॒प्ताः । कामाः॑ ॥ ० ॥ २७ ॥ यः । इन्दोः॑ । पव॑मानस्य । अनु॑ । धामा॑नि । अक्र॑मीत् । तं । आ॒हुः । सु॒ऽप्र॒जाः । इति॑ । यः । ते॒ । सो॒म॒ । अवि॑धत् । मनः॑ ॥ ० ॥ ऋषे॑ । म॒न्त्र॒ऽकृतां॑ । स्तोमैः॑ । कश्य॑प । उ॒त्ऽव॒र्धय॑न् । गिरः॑ । सोम॑ । न॒म॒स्य॒ । राजा॑नं । यः । ज॒ज्ञे । वी॒रुधां॑ । पतिः॑ ॥ ० ॥ स॒प्त । दिशः॑ । नाना॑ऽसूर्याः । स॒प्त । होता॑रः । ऋ॒त्विजः॑ । दे॒वाः । आ॒दि॒त्याः । ये । स॒प्त । तेभिः॑ । सो॒म॒ । अ॒भि । र॒क्ष॒ । न॒ः ॥ ० ॥ यत् । ते॒ । रा॒ज॒न् । शृ॒तं । ह॒विः । तेन॑ । सो॒म॒ । अ॒भि । र॒क्ष॒ । न॒ः । अ॒रा॒ति॒ऽवा । मा । न॒ः । ता॒री॒त् । मोइति॑ । च॒ । न॒ः । किं । च॒न । आ॒म॒म॒त् ॥ ० ॥ इति सप्तमोऽनुवाकः ॥

॥ — :: — ॥ अथ प्रथमोऽनुवाकः ॥ — :: — ॥ ० ॥ २८ ॥ इति ९ मण्डळं ॥ अथ १० मण्डळं ॥ अग्रे॑ । बृ॒हन् । उ॒षसा॑ । ऊ॒र्ध्वः । अ॒स्था॒त् । निः॒ऽज॒ग॒न्वान् । तम॑सः । ज्योति॑षा । आ । अ॒गा॒त् । अ॒ग्निः । भा॒नुना॑ । रुश॑ता । सु॒ऽअङ्गः॑ । आ । जा॒तः । विश्वा॑ । सद्मा॑नि । अ॒प्राः ॥ सः । जा॒तः । गर्भः॑ । अ॒सि॒ । रोद॑स्योः । अग्ने॑ । चारुः॑ । विऽ-भृ॑तः । ओष॑धीषु । चि॒त्रः । शिशुः॑ । परि॑ । तमां॑सि । अ॒क्तून् । प्र । मा॒तृऽभ्यः॑ । अधि॑ । कनि॑क्रदत् । गाः ॥ विष्णुः॑ । इ॒त्था । प॒र॒मं । अ॒स्य॒ । वि॒द्वान् । जा॒तः । बृ॒हन् । अ॒भि । पा॒ति॒ । तृ॒तीयं॑ । आ॒सा । यत् । अ॒स्य॒ । पयः॑ । अक्र॑त । स्वं । स॒ऽचे॑तसः । अ॒भि । अ॒र्च॒न्ति॒ । अत्र॑ ॥ अतः॑ । ऊँइति॑ । त्वा॒ । पि॒तु॒ऽभृतः॑ । जनि॑त्रीः । अ॒न्न॒ऽवृधं॑ । प्रति॑ । च॒र॒न्ति॒ । अन्नैः॑ । ताः । ई॒ं । प्रति॑ । ए॒षि॒ । पुनः॑ । अ॒न्य॒ऽरू॑पाः । असि॑ । त्वं । वि॒क्षु । मानु॑षीषु । होता॑ ॥ होता॑रं । चि॒त्र॒ऽर॑थं । अ॒ध्व॒रस्य॑ । य॒ज्ञस्य॑ऽयज्ञस्य । के॒तुं । रुश॑न्तं । प्रति॑ऽअर्धिं । दे॒वस्य॑ऽदेवस्य । म॒ह्ना । श्रि॒या । तु । अ॒ग्निं । अति॑थिं । जना॑नां ॥ सः । तु । वस्त्रा॑णि । अध॑ । पेश॑नानि । वसा॑नः । अ॒ग्निः । नाभा॑ । पृ॒थि॒व्याः । अ॒रु॒षः । जा॒तः ।

पदे । इळायाः । पुरःऽहितः । राजन् । यक्षि । इह । देवान् ॥ आ ।
हि । द्यावापृथिवीइति । अग्ने । उभेइति । सदा । पुत्रः । न । मातरा ।
ततंथ । प्र । याहि । अच्छ । उशतः । यविष्ठ । अथ । आ । वह । सहस्य ।
इह । देवान् ॥ २९ ॥ प्रिप्रीहि । देवान् । उशते । यविष्ठ । विद्वान् ।
ऋतून् । ऋतुऽपते । यज । इह । ये । दैव्याः । ऋत्विजः । तेभिः ।
अग्ने । त्वं । होतॄणां । असि । आऽयजिष्ठः ॥ ० ॥ जनानां । संधाता ।
असि । द्रविणःऽदाः । ऋतऽवा । स्वाहा । वयं । कृणवाम । हवींषि ।
देवः । देवान् । यजतु । अग्निः । अर्हन् ॥ आ । देवानां । अपि ।
पंथां । अगन्म । यत् । शक्नवाम । तत् । अनु । प्रऽवोळ्हुं । अग्निः ।
विद्वान् । सः । यजात् । सः । इत् । ऊँइति । होता । सः । अध्वरान् ।
सः । ऋतून् । कल्पयाति ॥ यत् । वः । वयं । प्रऽमिनाम । व्रतानि ।
विदुषां । देवाः । अविदुःऽतरासः । अग्निः । तत् । विश्वं । आ ।
पृणाति । विद्वान् । येभिः । देवान् । ऋतुऽभिः । कल्पयाति ॥ यत् ।
पाकऽत्रा । मनसा । दीनऽदक्षाः । न । यज्ञस्य । मन्वते । मर्त्यासः ।
अग्निः । तत् । होता । क्रतुऽवित् । विऽजानन् । यजिष्ठः । देवान् ।
ऋतुऽशः । यजाति ॥ विश्वेषां । हि । अध्वराणां । अनीकं । चित्रं ।
केतुं । जनिता । त्वा । जजान । सः । आ । यजस्व । नृऽवतीः ।
अनु । क्षाः । स्पार्हाः । इषः । क्षुऽमतीः । विश्वऽजन्याः । यं । त्वा ।
द्यावापृथिवीइति । यं । त्वा । आपः । त्वष्टा । यं । त्वा । सुऽजनिमा ।
जजान । पंथां । अनु । प्रऽविद्वान् । पितृऽयानं । द्युऽमत् । अग्ने ।
संऽइधानः । वि । भाहि ॥ ३० ॥ इनः । राजन् । अरतिः । संऽ-
इद्धः । रौद्रः । दक्षाय । सुसुऽमान् । अदर्शि । चिकित् । वि । भाति ।
भासा । बृहता । असिक्नीं । एति । रुशतीं । अपऽअजन् ॥ कृष्णां ।
यत् । एनीं । अभि । वर्पसा । भूत् । जनयन् । योषां । बृहतः ।
पितुः । जां । ऊर्ध्वं । भानुं । सूर्यस्य । स्तभायन् । दिवः । वसुऽभिः ।
अरतिः । वि । भाति ॥ भद्रः । भद्रया । सचमानः । आ । अगात् ।

स्वसारं । जारः । अभि । एति । पश्चात् । सुऽप्रकेतैः । द्युऽभिः । अग्निः । विऽतिष्ठन् । रुशत्ऽभिः । वर्णैः । अभि । रामं । अस्थात् ॥ अस्य । यामासः । बृहतः । न । वग्नून् । इंधानाः । अग्नेः । सख्युः । शिवस्य । ईड्यस्य । वृष्णः । बृहतः । सुऽआसः । भामासः । यामन् । अक्तवः । चिकित्रे ॥ स्वनाः । न । यस्य । भामासः । पवंते । रोचमानस्य । बृहतः । सुऽदिवः । ज्येष्ठेभिः । यः । तेजिष्ठैः । क्रीळुमत्ऽभिः । वर्षिष्ठेभिः । भानुऽभिः । नक्षति । द्यां ॥ अस्य । शुष्मासः । ददृशानऽपवेः । जेहमानस्य । स्वनयन् । नियुत्ऽभिः । प्रत्नेभिः । यः । रुशत्ऽभिः । देवऽतमः । वि । रेभत्ऽभिः । अरतिः । भाति । विऽभ्वा ॥ सः । आ । वक्षि । महि । नः । आ । च । सत्सि । दिवःपृथिव्योः । अरतिः । युवत्योः । अग्निः । सुऽतुकः । सुऽतुकेभिः । अश्वैः । रभस्वत्ऽभिः । रभस्वान् । आ । इह । गम्याः ॥ ३१ ॥ प्र । ते । यक्षि । प्र । ते । इयर्मि । मन्म । भुवः । यथा । वंद्यः । नः । हवेषु । धन्वन्ऽइव । प्रऽपा । असि । त्वं । अग्ने । इयक्षवे । पूरवे । प्रत्न । राजन् ॥ यं । त्वा । जनासः । अभि । संऽचरंति । गावः । उष्णंऽइव । व्रजं । यविष्ठ । दूतः । देवानां । असि । मर्त्यानां । अंतः । महान् । चरसि । रोचनेन ॥ शिशुं । न । त्वा । जेन्यं । वर्धयंती । माता । बिभर्ति । सचनस्यमाना । धनोः । अधि । प्रऽवता । यासि । हर्यन् । जिगीषसे । पशुःऽइव । अवऽसृष्टः ॥ मूराः । अमूर । न । वयं । चिकित्वः । महिऽत्वं । अग्ने । त्वं । अंग । वित्से ॥ शये । वव्रिः । चरति । जिह्वया । अदन् । रेरिह्यते । युवतिं । विश्पतिः । सन् । कुऽचित् । जायते । सनयासु । नव्यः । वने । तस्थौ । पलितः । धूमऽकेतुः ॥ अस्नाता । आपः । वृषभः । न । प्र । वेति । सऽचेतसः । यं । प्रऽनयंत । मर्ताः । तनूत्यजाऽइव । तस्करा । वनर्गूइति । रशनाभिः । दशऽभिः । अभि । अधीतां ॥ इयं । ते । अग्ने । नव्यसी । मनीषा । युक्ष्व । रथं । न । शुचयत्ऽभिः । अंगैः ।

ब्रह्म । च । ते । जातऽवेदः । नमः । च । इयं । च । गीः । सदं । इत् । वर्धनी । भूत् ॥ ० ॥ तनयानि । तोका । रक्ष । उत । नः । तन्वः । अप्रऽयुच्छन् ॥ ३२ ॥ एकः । समुद्रः । धरुणः । रयीणां । अस्मत् । हृदः । भूरिऽजन्मा । वि । चष्टे । सिसक्ति । ऊधः । निण्योः । उपऽस्थे । उत्सस्य । मध्ये । निऽहितं । पदं । वेरितिवेः ॥ समानं । नीळं । वृषणः । वसानाः । सं । जग्मिरे । महिषाः । अर्वतीभिः । ऋतस्य । पदं । कवयः । नि । पांति । गुहा । नामानि । दधिरे । पराणि ॥ ऋतयिनीइत्यृतऽयिनी । मायिनीइति । सं । दधातेइति । मित्वा । शिशुं । जज्ञतुः । वर्धयंतीइति । विश्वस्य । नाभिं । चरतः । ध्रुवस्य । कवेः । चित् । तंतुं । मनसा । विऽयंतः ॥ ऋतस्य । हि । वर्तनयः । सुऽजातं । इषः । वाजाय । प्रऽदिवः । सचंते । अधीवासं । रोदसीइति । वसानेइति । घृतैः । अन्नैः । ववृधातेइति । मधूनां ॥ सप्त । स्वसॄः । अरुषीः । वावशानः । विद्वान् । मध्वः । उत् । जभार । दृशे । कं । अंतः । येमे । अंतरिक्षे । पुराऽजाः । इच्छन् । वव्रिं । अविदत् । पूषणस्य ॥ सप्त । मर्यादाः । कवयः । ततक्षुः । तासां । एकां । इत् । अभि । अंहुरः । गात् । आयोः । ह । स्कंभः । उपऽमस्य । नीळे । पथां । विऽसर्गे । धरुणेषु । तस्थौ ॥ असत् । च । सत् । च । परमे । विऽओमन् । दक्षस्य । जन्मन् । अदितेः । उपऽस्थे । अग्निः । ह । नः । प्रथमऽजाः । ऋतस्य । पूर्वे । आयुनि । वृषभः । च । धेनुः ॥ ३३ ॥

इति सप्तमाष्टके पञ्चमोध्यायः ॥ ५ ॥



अष्टक ७, अध्याय ६, मण्डल १०, अनुवाक १, वर्ग २.

॥ अथ षष्ठोऽध्यायः ॥

हरिः ॐ ॥ अयं । सः । यस्यं । शर्मन् । अवंःऽभिः । अग्नेः । एधंते । जरिता । अभिष्टौ । ज्येष्ठेभिः । यः । भानुऽभिः । ऋषूणां । परिऽएति । परिऽवीतः । विभाऽवां ॥ यः । भानुऽभिः । विभाऽवां । विऽभाति । अग्निः । देवेभिः । ऋतऽवां । अजंस्रः । आ । यः । विवायं । सख्या । सखिऽभ्यः । अपरिऽह्वृतः । अत्यंः । न । सप्तिः ॥ ईशें । यः । विश्वस्याः । देवऽवींतेः । ईशें । विश्वऽआंयुः । उषसंः । विऽउंष्टौ । आ । यस्मिन् । मना । हवींषि । अग्नौ । अरिष्टऽरथः । स्कभ्नाति । शूषैः ॥ शूषेभिः । वृधः । जुषाणः । अर्कैः । देवान् । अच्छं । रघुऽपत्वां । जिगाति । मंद्रः । होतां । सः । जुह्वां । यजिष्ठः । संऽमिश्लः । अग्निः । आ । जिघर्ति । देवान् ॥ तं । उस्रां । इंद्रं । न । रेजंमानं । अग्निं । गीःऽभिः । नमःऽभिः । आ । कृणुध्वं । आ । यं । विप्रांसः । मतिऽभिः । गृणंति । जातऽवेंदसं । जुह्वं । सहानां ॥ सं । यस्मिन् । विश्वां । वसूंनि । जग्मुः । वाजें । न । अश्वांः । सप्तिऽवंतः । एवैः । अस्मेइतिं । ऊतीः । इंद्रंवातऽतमाः । अर्वाचीनाः । अग्ने । आ । कृणुष्व । अधं । हि । अग्ने । मह्ना । निऽसद्यं । सद्यः । जज्ञानः । हव्यंः । बभूथं । तं । ते । देवासंः । अनुं । केतं । आयन् । अधं । अवर्धंत । प्रथमासंः । ऊमाः ॥ १ ॥ स्वस्ति । नः । दिवः । अग्ने । पृथिव्याः । विश्वऽआंयुः । धेहि । यजथांय । देव । सचेमहि । तवं । दस्म । प्रऽकेतैः । उरुष्य । नः । उरुऽभिः । देव । शंसैः ॥ इमाः । अग्ने । मतयंः । तुभ्यं । जाताः । गोभिः । अश्वैः । अभि । गृणंति । राधंः ॥ ० ॥ वसोइतिं । दधांनः ।

प्रतिऽभिः । सुऽजात ॥ अग्निं । मन्ये । पितरं । अग्निं । आपिं । अग्निं ।
भ्रातरं । सदं । इत् । सखायं । अग्नेः । अनीकं । बृहतः । सपर्यं ।
दिवि । शुक्रं । यजतं । सूर्यस्य ॥ सिध्राः । अग्ने । धियः । अस्मेइति ।
सनुत्रीः । यं । त्रायसे । दमे । आ । नित्यऽहोता । ऋतऽवा । सः ।
रोहित्ऽअश्वः । पुरुऽक्षुः । द्युऽभिः । अस्मै । अहऽभिः । वामं ।
अस्तु ॥ द्युऽभिः । हितं । मित्रंऽइव । प्रऽयोगं । प्रत्नं । ऋत्विजं ।
अध्वरस्य । जारं । बाहुऽभ्यां । अग्निं । आयवः । अजनंत । विक्षु ।
होतारं । नि । असादयंत ॥ स्वयं । यजस्व । दिवि । देव । देवान् ।
किं । ते । पाकः । कृणवत् । अप्रऽचेताः । यथा । अयजः । ऋतुऽभिः ।
देव । देवान् । एव । यजस्व । तन्वं । सुऽजात ॥ भव । नः । अग्ने ।
अविता । उत । गोपाः । भव । वयःऽकृत् । उत । नः । वयःऽधाः ।
रास्व । च । नः । सुऽमहः । हव्यऽदातिं । त्रास्व । उत । नः । तन्वः ।
अप्रऽयुच्छन् ॥ २ ॥ प्र । केतुना । बृहता । याति । अग्निः ॥ ० ॥ दिवः ।
चित् । अंतान् । उपऽमान् । उत् । आनट् । अपां । उपऽस्थे । महिषः ।
ववर्ध ॥ मुमोद । गर्भः । वृषभः । ककुत्ऽमान् । अस्रेमा । वत्सः ।
शिमीऽवान् । अरावीत् । सः । देवऽताति । उत्ऽयतानि । कृण्वन् ।
स्वेषु । क्षयेषु । प्रथमः । जिगाति ॥ आ । यः । मूर्धानं । पित्रोः ।
अरब्ध । नि । अध्वरे । दधिरे । सूरः । अर्णः । अस्य । पत्मन् ।
अरुषीः । अश्वऽबुध्नाः । ऋतस्य । योनौ । तन्वः । जुषंत ॥ उषःऽउषः ।
हि । वसोइति । अग्रं । एषि । त्वं । यमयोः । अभवः । विभाऽवा ।
ऋताय । सप्त । दधिषे । पदानि । जनयन् । मित्रं । तन्वे । स्वायै ॥
भुवः । चक्षुः । महः । ऋतस्य । गोपाः । भुवः । वरुणः । यत् ।
ऋताय । वेषि । भुवः । अपां । नपात् । जातऽवेदः । भुवः । दूतः ।
यस्य । हव्यं । जुजोषः ॥ ३ ॥ भुवः । यज्ञस्य । रजसः । च । नेता ।
यत्र । नियुत्ऽभिः । सचसे । शिवाभिः । दिवि । मूर्धानं । दधिषे ।
स्वःऽसां । जिह्वां । अग्ने । चकृषे । हव्यऽवाहं ॥ अस्य । त्रितः ।

क्रतुना । वव्रे । अंतः । इच्छन् । धीतिं । पितुः । एवैः । परस्य । सचस्यमानः । पित्रोः । उपऽस्थे । जामि । ब्रुवाणः । आयुधानि । वेति ॥ सः । पित्र्याणि । आयुधानि । विद्वान् । इंद्रऽइषितः । आप्त्यः । अभि । अयुध्यत् । त्रिऽशीर्षाणं । सप्तऽरश्मिं । जघन्वान् । त्वाष्ट्रस्य । चित् । निः । ससृजे । त्रितः । गाः ॥ भूरि । इत् । इंद्रः । उत्ऽइनक्षंतं । ओजः । अव । अभिनत् । सत्ऽपतिः । मन्यमानं । त्वाष्ट्रस्य । चित् । विश्वऽरूपस्य । गोनां । आऽचक्राणः । त्रीणि । शीर्षा । परा । वर्गितिवर्क् ॥ ४ ॥ आपः । हि । स्थ । मयःऽभुवः । ताः । नः । ऊर्जे । दधातन । महे । रणाय । चक्षसे ॥ यः । वः । शिवऽतमः । रसः । तस्य । भाजयत । इह । नः । उशतीःऽइव । मातरः ॥ तस्मै । अरं । गमाम । वः । यस्य । क्षयाय । जिन्वथ । आपः । जनयथ । च । नः ॥ शं । नः । देवीः । अभिष्टये । आपः । भवंतु । पीतये । शं । योः । अभि । स्रवंतु । नः ॥ ईशाना । वार्याणां । क्षयंतीः । चर्षणीनां । अपः । याचामि । भेषजं ॥ ० ॥ ५ ॥ ओइति । चित् । सखायं । सख्या । ववृत्यां । तिरः । पुरु । चित् । अर्णवं । जगन्वान् । पितुः । नपातं । आ । दधीत । वेधाः । अधि । क्षमि । प्रऽतरं । दीध्यानः ॥ न । ते । सखा । सख्यं । वष्टि । एतत् । सऽलक्ष्मा । यत् । विषुऽरूपा । भवाति । महः । पुत्रासः । असुरस्य । वीराः । दिवः । धर्तारः । उर्विया । परि । ख्यन् ॥ उशंति । घ । ते । अमृतासः । एतत् । एकस्य । चित् । त्यजसं । मर्त्यस्य । नि । ते । मनः । मनसि । धायि । अस्मेइति । जन्युः । पतिः । तन्वं । आ । विविश्याः ॥ न । यत् । पुरा । चकृम । कत् । ह । नूनं । ऋता । वदंतः । अनृतं । रपेम । गंधर्वः । अप्ऽसु । अप्या । च । योषा । सा । नः । नाभिः । परमं । जामि । तत् । नौ ॥ गर्भे । नु । नौ । जनिता । दंपतीइतिदंऽपती । कः । देवः । त्वष्टा । सविता । विश्वऽरूपः । नकिः । अस्य । प्र । मिनंति । व्रतानि । वेद । नौ । अस्य । पृथिवी । उत । द्यौः ॥ ६ ॥ कः ।

अस्य । वेद । प्रथमस्य । अह्नः । कः । ईं । ददर्श । कः । इह । प्र वोचत् । बृहत् । मित्रस्य । वरुणस्य । धाम । कत् । ऊँइति । ब्रवः । आहनः । वीच्या । नॄन् ॥ यमस्य । मा । यम्यं । कामः । आ । अगन् । समाने । योनौ । सहऽशेय्याय । जायाऽइव । पत्ये । तन्वं । रिरिच्यां । वि । चित् । वृहेव । रथ्याऽइव । चक्रा ॥ न । तिष्ठंति । न । नि । मिषंति । एते । देवानां । स्पशः । इह । ये । चरंति । अन्येन । मत् । आहनः । याहि । तूयं । तेन । वि । वृह । रथ्याऽइव । चक्रा ॥ रात्रीभिः । अस्मै । अहऽभिः । दशस्येत् । सूर्यस्य । चक्षुः । मुहुः । उत् । मिमीयात् । दिवा । पृथिव्या । मिथुना । सबंधूइतिसऽबंधू । यमीः । यमस्य । विभृयात् । अजामि ॥ आ । घ । ता । गच्छान् । उत्ऽतरा । युगानि । यत्र । जामयः । कृणवन् । अजामि । उप । बर्बृहि । वृषभाय । बाहुं । अन्यं । इच्छस्व । सुऽभगे । पतिं । मत् ॥ ७ ॥ किं । भ्राता । असत् । यत् । अनाथं । भवाति । किं । ऊँइति । स्वसा । यत् । निःऽऋतिः । निऽगच्छात् । कामऽमूता । बहु । एतत् । रपामि । तन्वा । मे । तन्वं । सं । पिपृग्धि । न । वै । ऊँइति । ते । तन्वा । तन्वं । सं । पपृच्यां । पापं । आहुः । यः । स्वसारं । निऽगच्छात् । अन्येन । मत् । प्रऽमुदः । कल्पयस्व । न । ते । भ्राता । सुऽभगे । वष्टि । एतत् ॥ बतः । बत । असि । यम । न । एव । ते । मनः । हृदयं । च । अविदाम । अन्या । किल । त्वां । कक्ष्याऽइव । युक्तं । परि । स्वजाते । लिबुजाऽइव । वृक्षं ॥ अन्यं । ऊँइति । सु । त्वं । यमि । अन्यः । ऊँइति । त्वां ॥ ० ॥ तस्य । वा । त्वं । मनः । इच्छ । सः । वा । तव । अध । कृणुष्व । संऽविदं । सुऽभद्रां ॥ ८ ॥ वृषा । वृष्णे । दुदुहे । दोहसा । दिवः । पयांसि । यह्वः । अदितेः । अदाभ्यः । विश्वं । सः । वेद । वरुणः । यथा । धिया । सः । यज्ञियः । यजतु । यज्ञियान् । ऋतून् ॥ रपत् । गंधर्वीः । अप्या । च । योषणा । नदस्य । नादे । परि । पातु । मे । मनः । इष्टस्य ।

मध्ये । अदितिः । नि । धातु । नः । भ्राता । नः । ज्येष्ठः । प्रथमः । वि । वोचति ॥ सोऽइति । चित् । नु । भद्रा । क्षुऽमती । यशस्वती । उषाः । उवास । मनवे । स्वःऽवती । यत् । ईं । उशन्तं । उशतां । अनु । क्रतुं । अग्निं । होतारं । विदथाय । जीजनन् ॥ अध । त्यं । द्रप्सं । विऽभ्वं । विऽचक्षणं । विः । आ । अभरत् । इषितः । श्येनः । अध्वरे । यदि । विशः । वृणते । दस्मं । आर्याः । अग्निं । होतारं । अध । धीः । अजायत ॥ सदा । असि । रण्वः । यवसाऽइव । पुष्यते । होत्राभिः । अग्ने । मनुषः । सुऽअध्वरः । विप्रस्य । वा । यत् । शशमानः । उक्थ्यं । वाजं । ससऽवान् । उपऽयासि । भूरिऽभिः ॥ ९ ॥

उत् । ईरय । पितरा । जारः । आ । भगं । इयक्षति । हर्यतः । हृत्तः । इष्यति । विवक्ति । वह्निः । सुऽअपस्यते । मखः । तविष्यते । असुरः । वेपते । मती ॥ यः । ते । अग्ने । सुऽमतिं । मर्तः । अक्षत् । सहसः । सूनोऽइति । अति । सः । प्र । शृण्वे । इषं । दधानः । वहमानः । अश्वैः । आ । सः । द्युऽमान् । अमऽवान् । भूषति । द्यून् ॥ यत् । अग्ने । एषा । संऽइतिः । भवाति । देवी । देवेषु । यजता । यजत्र । रत्ना । च । यत् । विऽभजासि । स्वधाऽवः । भागं । न । अत्र । वसुऽमंतं । वीतात् ॥ श्रुधि । नः । अग्ने । सदने । सधऽस्थे । युक्ष्व । रथं । अमृतस्य । द्रवित्नुं । आ । नः । वह । रोदसीइति । देवपुत्रेइतिदेवऽपुत्रे । माकिः । देवानां । अप । भूः । इह । स्याः ॥ १० ॥

द्यावा । ह । क्षामा । प्रथमेइति । ऋतेन । अभिऽश्रावे । भवतः । सत्यऽवाचा । देवः । यत् । मर्तान् । यजथाय । कृण्वन् । सीदत् । होता । प्रत्यङ् । स्वं । असुं । यन् ॥ देवः । देवान् । परिऽभूः । ऋतेन । वह । नः । हव्यं । प्रथमः । चिकित्वान् । धूमऽकेतुः । संऽइधा । भाःऽऋजीकः । मंद्रः । होता । नित्यः । वाचा । यजीयान् ॥ स्वावृक् । देवस्य । अमृतं । यदि । गोः । अतः । जातासः । धारयंते । उर्वीइति । विश्वे । देवाः । अनु । तत् । ते । यजुः । गुः । दुहे । यत् । एनी । दिव्यं । घृतं । वाःऽइतिवाः ॥ अर्चामि ।

वां । वर्धाय । आपः । घृतस्नूइतिघृतऽस्नू । द्यावाभूमीइति । शृणुतं ।
रोदसीइति । मे । अह्ना । यत् । द्यावः । असुऽनीतिं । अयन् । मध्वा ।
नः । अत्र । पितरा । शिशीतां ॥ किं । स्वित् । नः । राजा । जगृहे ।
कत् । अस्य । अति । व्रतं । चकृम । कः । वि । वेद । मित्रः ।
चित् । हि । स्म । जुहुराणः । देवान् । श्लोकः । न । यातां । अपि ।
वाजः । अस्ति ॥ ११ ॥ दुःऽमंतु । अत्र । अमृतस्य । नाम ॥ ० ॥
यमस्य । यः । मनवते । सुऽमंतु । अग्ने । तं । ऋष्व । पाहि । अप्रऽ-
युच्छन् ॥ यस्मिन् । देवाः । विदथे । मादयंते । विवस्वतः । सदने ।
धारयंते । सूर्ये । ज्योतिः । अदधुः । मासि । अक्तून् । परि । द्योतनिं ।
चरतः । अजस्रा ॥ यस्मिन् । देवाः । मन्मनि । संऽचरंति । अपीच्ये ।
न । वयं । अस्य । विद्म । मित्रः । नः । अत्र । अदितिः । अनागान् ।
सविता । देवः । वरुणाय । वोचत् ॥ ० ॥ १२ ॥ युजे । वां । ब्रह्म ।
पूर्व्यं । नमःऽभिः । वि । श्लोकः । एतु । पथ्याऽइव । सूरेः । शृण्वंतु ।
विश्वे । अमृतस्य । पुत्राः । आ । ये । धामानि । दिव्यानि । तस्थुः ॥
यमेइवेतियमेऽइव । यतमानेइति । यत् । ऐतं । प्र । वां । भरन् ।
मानुषाः । देवऽयंतः । आ । सीदतं । स्वं । ऊँइति । लोकं ।
विदानेइति । स्वासस्थेइतिसुऽआसस्थे । भवतं । इंदवे । नः ॥ पंच ।
पदानि । रुपः । अनु । अरोहं । चतुःऽपदीं । अनु । एमि । व्रतेन ।
अक्षरेण । प्रति । मिमे । एतां । ऋतस्य । नाभौ । अधि ।
सं । पुनामि ॥ देवेभ्यः । कं । अवृणीत । मृत्युं । प्रऽजायै । कं ।
अमृतं । न । अवृणीत । बृहस्पतिः । यज्ञं । अकृण्वत । ऋषिं ।
प्रियां । यमः । तन्वं । प्र । अरिरेचीत् ॥ सप्त । क्षरंति ।
शिशवे । मरुत्वते । पित्रे । पुत्रासः । अपि । अवीवतन् ।
ऋतं । उभेइति । इत् । अस्य । उभयस्य । राजतः । उभेइति ।
यतेतेइति । उभयस्य । पुष्यतः ॥ १३ ॥ परेयिऽवांसं । प्रऽवतः । महीः ।
अनु । बहुऽभ्यः । पंथां । अनुऽपस्पशानं । वैवस्वतं । संऽगमनं ।

जनानां । यमं । राजानं । हविषा । दुवस्य ॥ यमः । नः । गातुं । प्रथमः । विवेद । न । एषा । गव्यूतिः । अपऽभर्तवै । ऊँइति । यत्र । नः । पूर्वे । पितरः । पराऽईयुः । एना । जज्ञानाः । पथ्याः । अनु । स्वाः ॥ मातली । कव्यैः । यमः । अंगिरःऽभिः । बृहस्पतिः । ऋक्कऽभिः । वबृधानः । यान् । च । देवाः । वबृधुः । ये । च । देवान् । स्वाहा । अन्ये । स्वधया । अन्ये । मदंति ॥ इमं । यम । प्रऽस्तरं । आ । हि । सीद । अंगिरःऽभिः । पितृऽभिः । संऽविदानः । आ । त्वा । मंत्राः । कविऽशस्ताः । वहंतु । एना । राजन् । हविषा । मादयस्व ॥ अंगिरःऽभिः । आ । गहि । यज्ञियेभिः । यम । वैरूपैः । इह । मादयस्व । विवस्वंतं । हुवे । यः । पिता । ते । अस्मिन् । यज्ञे । बर्हिषि । आ । निऽसद्य ॥ १४ ॥ अंगिरसः । नः । पितरः । नवऽग्वाः । अथर्वाणः । भृगवः । सोम्यासः । तेषां । वयं । सुऽमतौ । यज्ञियानां ॥ ० ॥ प्र । इहि । प्र । इहि । पथिऽभिः । पूर्व्येभिः ॥ ० ॥ उभा । राजाना । स्वधया । मदंता । यमं । पश्यासि । वरुणं । च । देवं ॥ सं । गच्छस्व । पितृऽभिः । सं । यमेन । इष्टापूर्तेन । परमे । विऽओमन् । हित्वाय । अवद्यं । पुनः । अस्तं । आ । इहि । सं । गच्छस्व । तन्वा । सुऽवर्चाः ॥ अप । इत । वि । इत । वि । च । सर्पत । अतः । अस्मै । एतं । पितरः । लोकं । अक्रन् । अहःऽभिः । अत्ऽभिः । अक्तुऽभिः । विऽअक्तं । यमः । ददाति । अवऽसानं । अस्मै ॥ अति । द्रव । सारमेयौ । श्वानौ । चतुःऽअक्षौ । शबलौ । साधुना । पथा । अथ । पितॄन् । सुऽविदत्रान् । उप । इहि । यमेन । ये । सधऽमादं । मदंति ॥ १५ ॥ यौ । ते । श्वानौ । यम । रक्षितारौ । चतुःऽअक्षौ । पथिरक्षीइतिपथिऽरक्षी । नृऽचक्षसौ । ताभ्यां । एनं । परि । देहि । राजन् । स्वस्ति । च । अस्मै । अनमीवं । च । धेहि ॥ उरुऽनसौ । असुऽतृपौ । उदुंबलौ । यमस्य । दूतौ । चरतः । जनान् । अनु । तौ । अस्मभ्यं । दृशये । सूर्याय । पुनः । दातां । असुं ।

अद्य । इह । भद्रं ॥ यमाय । सोमं । सुनुत । यमाय ।
जुहुत । हविः । यमं । ह । यज्ञः । गच्छति । अग्निऽदूतः ।
अरंऽकृतः ॥ यमाय । घृतऽवत् । हविः ॥ ० ॥ सः । नः । देवेषु ।
आ । यमत् । दीर्घं । आयुः । प्र । जीवसे ॥ यमाय । मधुमत्ऽतमं ।
राज्ञे । हव्यं । जुहोतन । इदं । नमः । ऋषिऽभ्यः । पूर्वऽजेभ्यः ।
पूर्वेभ्यः । पथिकृत्ऽभ्यः ॥ त्रिऽकद्रुकेभिः । पतति । षट् । उर्वीः ।
एकं । इत् । बृहत् । त्रिऽस्तुप् । गायत्री । छंदांसि । सर्वा । ता ।
यमे । आऽहिता ॥ १६ ॥ उत् । ईरतां । अवरे । उत् । परासः । उत् ।
मध्यमाः । पितरः । सोम्यासः । असुं । ये । ईयुः । अवृकाः । ऋतऽ-
ज्ञाः । ते । नः । अवंतु । पितरः । हवेषु ॥ इदं । पितृऽभ्यः । नमः ।
अस्तु । अद्य । ये । पूर्वासः । ये । उपरासः । ईयुः । ये । पार्थिवे ।
रजसि । आ । निऽसत्ताः । ये । वा । नूनं । सुऽवृजनासु । विक्षु ॥ आ ।
अहं । पितॄन् । सुऽविदत्रान् । अवित्सि । नपातं । च । विऽक्रमणं ।
च । विष्णोः । बर्हिऽसदः । ये । स्वधया । सुतस्य । भजंत । पित्वः ।
ते । इह । आऽगमिष्ठाः ॥ बर्हिऽसदः । पितरः । ऊती । अर्वाक् ।
इमा । वः । हव्या । चकृम । जुषध्वं । ते । आ । गत । अवसा ।
शंऽतमेन । अथ । नः । शं । योः । अरपः । दधात ॥ उपऽहूताः ।
पितरः । सोम्यासः । बर्हिष्येषु । निऽधिषु । प्रियेषु । ते । आ ।
गमंतु । ते । इह । श्रुवंतु । अधि । ब्रुवंतु । ते । अवंतु । अस्मान् ॥ १७ ॥
आऽअच्य । जानु । दक्षिणतः । निऽसद्य । इमं । यज्ञं । अभि ।
गृणीत । विश्वे । मा । हिंसिष्ट । पितरः । केन । चित् । नः ॥ ० ॥
आसीनासः । अरुणीनां । उपऽस्थे । रयिं । धत्त । दाशुषे । मर्त्याय ।
पुत्रेभ्यः । पितरः । तस्य । वस्वः । प्र । यच्छत । ते । इह । ऊर्जं ।
दधात ॥ ये । नः । पूर्वे । पितरः । सोम्यासः । अनुऽऊहिरे । सोमऽ-
पीथं । वसिष्ठाः । तेभिः । यमः । संऽरराणः । हवींषि । उशन् । उशत्ऽ-
भिः । प्रतिऽकामं । अत्तु ॥ ये । ततृषुः । देवऽत्रा । जेहमानाः । होत्राऽ-

विदः । स्तोमऽतष्टासः । अर्कैः । आ । अग्ने । याहि । सुऽविदत्रेभिः ।
अर्वाङ् । सत्यैः । कव्यैः । पितृऽभिः । घर्मसत्ऽभिः ॥ ये । सत्यासः ।
हविःऽअदः । हविःऽपाः । इन्द्रेण । देवैः । सऽरथं । दधानाः ॥ ० ॥
सहस्रं । देवऽवंदैः । परैः । पूर्वैः । पितृऽभिः । घर्मसत्ऽभिः ॥ १८ ॥
अग्निऽस्वात्ताः । पितरः । आ । इह । गच्छत । सदःऽसदः । सदत ।
सुऽप्रनीतयः । अत्त । हवींषि । प्रऽयतानि । बर्हिषि । अथ । रयिं ।
सर्वऽवीरं । दधातन ॥ त्वं । अग्ने । ईळितः । जातऽवेदः । अवाट् ।
हव्यानि । सुरभीणि । कृत्वी । प्र । अदाः । पितृऽभ्यः । स्वधया ।
ते । अक्षन् । अद्धि । त्वं । देव । प्रऽयता । हवींषि ॥ ये । च । इह ।
पितरः । ये । च । न । इह । यान् । च । विद्म । यान् । ऊँइति । च ।
न । प्रऽविद्म । त्वं । वेत्थ । यति । ते । जातऽवेदः । स्वधाभिः ।
यज्ञं । सुऽकृतं । जुषस्व ॥ ये । अग्निऽदग्धाः । ये । अनग्निऽदग्धाः ।
मध्ये । दिवः । स्वधया । मादयन्ते । तेभिः । स्वऽराट् । असुऽनीतिं ।
एतां । यथाऽवशं । तन्वं । कल्पयस्व ॥ १९ ॥ मा । एनं । अग्ने । वि ।
दहः । मा । अभि । शोचः । मा । अस्य । त्वचं । चिक्षिपः । मा ।
शरीरं । यदा । शृतं । कृणवः । जातऽवेदः । अथ । ईं । एनं । प्र ।
हिणुतात् । पितृऽभ्यः ॥ शृतं । यदा । करसि । जातऽवेदः ॥ ० ॥
परि । दत्तात् । पितृऽभ्यः । यदा । गच्छाति । असुऽनीतिं । एतां ।
अथ । देवानां । वशऽनीः । भवाति ॥ सूर्यं । चक्षुः । गच्छतु । वातं ।
आत्मा । द्यां । च । गच्छ । पृथिवीं । च । धर्मणा । अपः । वा ।
गच्छ । यदि । तत्र । ते । हितं । ओषधीषु । प्रति । तिष्ठ । शरीरैः ॥
अजः । भागः । तपसा । तं । तपस्व । तं । ते । शोचिः । तपतु । तं । ते ।
अर्चिः । याः । ते । शिवाः । तन्वः । जातऽवेदः । ताभिः । वह । एनं ।
सुऽकृतां । ऊँइति । लोकं ॥ अव । सृज । पुनः । अग्ने । पितृऽभ्यः । यः ।
ते । आऽहुतः । चरति । स्वधाभिः । आयुः । वसानः । उप । वेतु ।
शेषः । सं । गच्छतां । तन्वा । जातऽवेदः ॥ २० ॥ यत् । ते ।

कृष्णः । शकुनः । आऽतुतोद । पिपीलः । सर्पः । उत । वा । श्वापदः । अग्निः । तत् । विश्वऽअत् । अगदं । कृणोतु । सोमः । च । यः । ब्राह्मणान् । आऽविवेश ॥ अग्नेः । वर्म । परि । गोभिः । व्ययस्व । सं । प्र । ऊर्णुष्व । पीवसा । मेदसा । च । न । इत् । त्वा । धृष्णुः । हरसा । जर्हृषाणः । दधृक् । विऽधक्ष्यन् । परिऽअंखयाते ॥ इमं । अग्ने । चमसं । मा । वि । जिह्वरः । प्रियः । देवानां । उत । सोम्यानां । एषः । यः । चमसः । देवऽपानः । तस्मिन् । देवाः । अमृताः । मादयंते ॥ क्रव्यऽअदं । अग्निं । प्र । हिणोमि । दूरं । यमऽराज्ञः । गच्छतु । रिप्रऽवाहः । इह । एव । अयं । इतरः । जातऽवेदाः । देवेभ्यः । हव्यं । वहतु । प्रऽजानन् ॥ यः । अग्निः । क्रव्यऽअत् । प्रऽविवेश । वः । गृहं । इमं । पश्यन् । इतरं । जातऽवेदसं । तं । हरामि । पितृऽयज्ञाय । देवं । सः । घर्मं । इन्वात् । परमे । सधऽस्थे ॥ २१ ॥ यः । अग्निः । क्रव्यऽवाहनः । पितॄन् । यक्षत् । ऋतऽवृधः । प्र । इत् । ऊँ इति । हव्यानि । वोचति । देवेभ्यः । च । पितृऽभ्यः । आ ॥ उशंतः । त्वा । नि । धीमहि । उशंतः । सं । इधीमहि । उशन् । उशतः । आ । वह । पितॄन् । हविषे । अत्तवे ॥ यं । त्वं । अग्ने । संऽअदहः । तं । ऊँ इति । निः । वापय । पुनरिति । कियांबु । अत्र । रोहतु । पाकऽदूर्वा । विऽअल्कशा ॥ शीतिके । शीतिकाऽवति । ह्लादिके । ह्लादिकाऽवति । मंडूक्या । सु । सं । गमः । इमं । सु । अग्निं । हर्षय ॥ २२ ॥

इति प्रथमोऽनुवाकः ॥ – :: – ॥ अथ द्वितीयोऽनुवाकः ॥ – :: – ॥

त्वष्टा । दुहित्रे । वहतुं । कृणोति । इति । इदं । विश्वं । भुवनं । सं । एति । यमस्य । माता । परिऽउह्यमाना । महः । जाया । विवस्वतः । ननाश ॥ अप । अगूहन् । अमृतां । मर्त्येभ्यः । कृत्वी । सऽवर्णां । अददुः । विवस्वते । उत । अश्विनौ । अभरत् । यत् । तत् । आसीत् । अजहात् । ऊँ इति । द्वा । मिथुना । सरण्यूः ॥ पूषा । त्वा । इतः । च्यवयतु । प्र । विद्वान् । अनष्टऽपशुः । भुवनस्य । गोपाः । सः ।

त्वा । एतेभ्यः । परि । ददत् । पितृऽभ्यः । अग्निः । देवेभ्यः । सुऽ-
विदत्रियेभ्यः ॥ आयुः । विश्वऽआयुः । परि । पासति । त्वा । पूषा ।
त्वा । पातु । प्रऽपथे । पुरस्तात् । यत्र । आसते । सुऽकृतः । यत्र ।
ते । ययुः । तत्र । त्वा । देवः । सविता । दधातु ॥ पूषा । इमाः ।
आशाः । अनु । वेद । सर्वाः । सः । अस्मान् । अभयऽतमेन । नेषत् ।
स्वस्तिऽदाः । आघृणिः । सर्वऽवीरः । अप्रऽयुच्छन् । पुरः । एतु ।
प्रऽजानन् ॥ २३ ॥ प्रऽपथे । पथां । अजनिष्ट । पूषा । प्रऽपथे ।
दिवः । प्रऽपथे । पृथिव्याः । उभेइति । अभि । प्रियतमेइतिप्रियऽतमे ।
सधस्थेइतिसधऽस्थे । आ । च । परा । च । चरति । प्रऽजानन् ॥
सरस्वतीं । देवऽयन्तः । हवंते । सरस्वतीं । अध्वरे । तायमाने ।
सरस्वतीं । सुऽकृतः । अह्वयंत । सरस्वती । दाशुषे । वार्यं ।
दात् ॥ सरस्वति । या । सऽरथं । ययाथ । स्वधाभिः । देवि ।
पितृऽभिः । मदंती । आऽसद्य । अस्मिन् । बर्हिषि । मादयस्व ।
अनमीवाः । इषः । आ । धेहि । अस्मेइति ॥ सरस्वतीं । यां । पितरः ।
हवंते । दक्षिणा । यज्ञं । अभिऽनक्षमाणाः । सहस्रऽअर्घं । इळः ।
अत्र । भागं । रायः । पोषं । यजमानेषु । धेहि ॥ आपः । अस्मान् ।
मातरः । शुंधयंतु । घृतेन । नः । घृतऽप्वः । पुनंतु । विश्वं । हि ।
रिप्रं । प्रऽवहंति । देवीः । उत् । इत् । आभ्यः । शुचिः । आ । पूतः ।
एमि ॥ २४ ॥ द्रप्सः । चस्कंद । प्रथमान् । अनु । द्यून् । इमं । च ।
योनिं । अनु । यः । च । पूर्वः । समानं । योनिं । अनु । संऽचरंतं ।
द्रप्सं । जुहोमि । अनु । सप्त । होत्राः ॥ यः । ते । द्रप्सः । स्कंदति ।
यः । ते । अंशुः । बाहुऽच्युतः । धिषणायाः । उपऽस्थात् । अध्वर्योः ।
वा । परि । वा । यः । पवित्रात् । तं । ते । जुहोमि । मनसा । वषट्ऽ-
कृतं ॥ ० ॥ स्कन्नः ॥ ० ॥ अवः । च । यः । परः । स्रुचा । अयं । देवः ।
बृहस्पतिः । सं । तं । सिंचतु । राधसे ॥ पयस्वतीः । ओषधयः ।
पयस्वत् । मामकं । वचः । अपां । पयस्वत् । इत् । पयः । तेन ।

मा । सह । शुंभत ॥ २५ ॥ परं । मृत्योइति । अनु । परा । इहि । पंथां । यः । ते । स्वः । इतरः । देवऽयानात् । चक्षुष्मते । शृण्वते । ते । ब्रवीमि । मा । नः । प्रऽजां । रिरिषः । मा । उत । वीरान् ॥ मृत्योः । पदं । योपयंतः । यत् । ऐत ॥ ० ॥ आऽप्यायमानाः । प्रऽजया । धनेन । शुद्धाः । पूताः । भवत । यज्ञियासः ॥ इमे । जीवाः । वि । मृतैः । आ । अववृत्रन् । अभूत् । भद्रा । देवऽहूतिः । नः । अद्य । प्रांचः । अगाम । नृतये । हसाय ॥ ० ॥ इमं । जीवेभ्यः । परिऽधिं । दधामि । मा । एषां । नु । गात् । अपरः । अर्थं । एतं ॥ शतं । जीवंतु । शरदः । पुरूचीः । अंतः । मृत्युं । दधतां । पर्वतेन ॥ यथा । अहानि । अनुऽपूर्वं । भवंति । यथा । ऋतवः । ऋतुऽभिः । यंति । साधु । यथा । न । पूर्वं । अपरः । जहाति । एव । धातः । आयूंषि । कल्पय । एषां ॥ २६ ॥ आ । रोहत । आयुः । जरसं । वृणानाः । अनुऽपूर्वं । यतमानाः । यति । स्थ । इह । त्वष्टा । सुऽजनिमा । सुऽजोषाः । दीर्घं । आयुः । करति । जीवसे । वः ॥ इमाः । नारीः । अविधवाः । सुऽपत्नीः । आऽअंजनेन । सर्पिषा । सं । विशंतु । अनश्रवः । अनमीवाः । सुऽरत्नाः । आ । रोहंतु । जनयः । योनिं । अग्रे ॥ उत् । ईर्ष्व । नारि । अभि । जीवऽलोकं । गतऽअसुं । एतं । उप । शेषे । आ । इहि । हस्तऽग्राभस्य । दिधिषोः । तव । इदं । पत्युः । जनिऽत्वं । अभि । सं । बभूथ ॥ धनुः । हस्तात् । आऽददानः । मृतस्य । अस्मेइति । क्षत्राय । वर्चसे । बलाय । अत्र । एव । त्वं । इह । वयं । सुऽवीराः । विश्वाः । स्पृधः । अभिऽमातीः । जयेम ॥ उप । सर्प । मातरं । भूमिं । एतां । उरुऽव्यचसं । पृथिवीं । सुऽशेवां । ऊर्णऽम्रदाः । युवतिः । दक्षिणाऽवते । एषा । त्वा । पातु । निःऽऋतेः । उपऽस्थात् ॥ २७ ॥ उत् । श्वंचस्व । पृथिवि । मा । नि । बाधथाः । सुऽउपायना । अस्मै । भव । सुऽउपवंचना । माता । पुत्रं । यथा । सिचा । अभि । एनं । भूमे । ऊर्णुहि ॥ उत्ऽश्वंचमाना ।

पृथिवी । सु । तिष्ठतु । सहस्रं । मितः । उप । हि । श्रयंतां । ते । गृहासः । घृतऽश्चुतः । भवंतु । विश्वाहा । अस्मै । शरणाः । संतु । अत्र ॥ उत् । ते । स्तभ्नामि । पृथिवीं । त्वत् । परि । इमं । लोगं । निऽदधत् । मोइति । अहं । रिषं । एतां । स्थूणां । पितरः । धारयंतु । ते । अत्र । यमः । सदना । ते । मिनोतु ॥ प्रतीचीने । मां । अहनि । इष्वाः । पर्णऽइंव । आ । दधुः । प्रतीचीं । जग्रभ । वाचं । अश्वं । रशनया । यथा ॥ २८ ॥

इति सप्तमाष्टके षष्ठोध्यायः ॥ ६ ॥



अष्टक ७, अध्याय ७, मण्डल १०, अनुवाक २, वर्ग १.



॥ अथ सप्तमोध्यायः ॥

हरिः ॐ ॥ नि । वर्तध्वं । मा । अनु । गात । अस्मान् । सिसक्त । रेवतीः । अग्नीषोमा । पुनर्वसूइतिपुनःऽवसू । अस्मेइति । धारयतं । रयिं ॥ पुनः । एनाः । नि । वर्तय । पुनः । एनाः । नि । आ । कुरु । इंद्रः । एनाः । नि । यच्छतु । अग्निः । एनाः । उपऽअजंतु ॥ पुनः । एताः । नि । वर्ततां । अस्मिन् । पुष्यंतु । गोऽपतौ । इह । एव । अग्ने । नि । धारय । इह । तिष्ठतु । या । रयिः ॥ यत् । निऽयानं । निऽअयनं । संऽज्ञानं । यत् । पराऽअयनं । आऽवर्तनं । निऽवर्तनं । यः । गोपाः । अपि । तं । हुवे ॥ यः । उत्ऽआनट् । विऽअयनं । यः । उत्ऽआनट् । पराऽअयनं । आऽवर्तनं । निऽअर्तनं । अपि । गोपाः । नि । वर्ततां ॥ आ । निऽवर्त । नि । वर्तय । पुनः ।

नः । इंद्र । गाः । देहि । जीवाभिः । भुनजामहै ॥ परि । वः ।
विश्वतः । दधे । ऊर्जा । घृतेन । पयसा । ये । देवाः । के । च ।
यज्ञियाः । ते । रय्या । सं । सृजंतु । नः ॥ आ । निऽवर्तन । वर्तय । नि ।
निऽवर्तन । वर्तय । भूम्याः । चतस्रः । प्रऽदिशः । ताभ्यः । एनाः ।
नि । वर्तय ॥ १ ॥ भद्रंनोअपिवातयमनः ॥ अग्निं । ईळे । भुजां ।
यविष्ठं । शासा । मित्रं । दुःऽधरीतुं । यस्य । धर्मन् । स्वः । एनीः ।
सपर्यंति । मातुः । ऊधः ॥ यं । आसा । कृपऽनीळं । भासाऽकेतुं ।
वर्धयंति । भ्राजते । श्रेणिऽदन् ॥ अर्यः । विशां । गातुः । एति । प्र ।
यत् । आनट् । दिवः । अंतान् । कविः । अभ्रं । दीद्यानः ॥ जुषत् ।
हव्या । मानुषस्य । ऊर्ध्वः । तस्थौ । ऋभ्वा । यज्ञे । मिन्वन् । सद्म ।
पुरः । एति ॥ सः । हि । क्षेमः । हविः । यज्ञः । श्रुष्टी । इत् । अस्य ।
गातुः । एति । अग्निं । देवाः । वाशीऽमंतं ॥ २ ॥ यज्ञऽसहं । दुवः ।
इषे । अग्निं । पूर्वस्य । शेवस्य । अद्रेः । सूनुं । आयुं । आहुः ॥ नरः ।
ये । के । च । अस्मत् । आ । विश्वा । इत् । ते । वामे । आ ।
स्युरितिस्युः । अग्निं । हविषा । वर्धंतः ॥ कृष्णः । श्वेतः । अरुषः ।
यामः । अस्य । ब्रध्नः । ऋज्रः । उत । शोणः । यशस्वान् । हिरण्यऽ-
रूपं । जनिता । जजान ॥ एव । ते । अग्ने । विऽमदः । मनीषां ।
ऊर्जः । नपात् । अमृतेभिः । सऽजोषाः । गिरः । आ । वक्षत् ।
सुऽमतीः । इयानः । इषं । ऊर्जं । सुऽक्षितिं । विश्वं । आ ।
अभारित्यभाः ॥ ३ ॥ आ । अग्निं । न । स्ववृक्तिऽभिः । होतारं । त्वा ।
वृणीमहे । यज्ञाय । स्तीर्णऽबर्हिषे । वि । वः । मदे । शीरं । पावकऽ-
शोचिषं । विवक्षसे ॥ त्वां । ऊँइति । ते । सुऽआभुवः । शुंभंति ।
अश्वऽराधसः । वेति । त्वां । उपऽसेचनी ॥ ० ॥ ऋजीतिः । अग्ने ।
आऽहुतिः । विवक्षसे ॥ त्वेइति । धर्माणः । आसते । जुहूभिः ।
सिंचतीःऽइव । कृष्णा । रूपाणि । अर्जुना ॥ ० ॥ विश्वाः । अग्ने ।
श्रियः । धिषे । विवक्षसे ॥ यं । अग्ने । मन्यसे । रयिं । सहसाऽवन् ।

अमर्त्यं । तं । आ । नः । वाजऽसातये ॥ ० ॥ यज्ञेषु । चित्रं । आ ।
भर । विवक्षसे ॥ अग्निः । जातः । अथर्वणा । विदत् । विश्वानि ।
काव्या । भुवत् । दूतः । विवस्वतः ॥ ० ॥ प्रियः । यमस्य । काम्यः ।
विवक्षसे ॥ ४ ॥ त्वां । यज्ञेषु । इळते । अग्ने । प्रऽयति । अध्वरे ।
त्वं । वसूनि । काम्या ॥ ० ॥ विश्वा । दधासि । दाशुषे ।
विवक्षसे ॥ ० ॥ चारुं । अग्ने । नि । सेदिरे । घृतऽप्रतीकं । मनुषः ॥ ० ॥
शुक्रं । चेतिष्ठं । अक्षऽभिः । विवक्षसे ॥ अग्ने । शुक्रेण । शोचिषा ।
उरु । प्रथयसे । बृहत् । अभिऽक्रंदन् । वृषऽयसे ॥ ० ॥ गर्भं ।
दधासि । जामिषु । विवक्षसे ॥ ५ ॥ कुहं । श्रुतः । इंद्रः । कस्मिन् ।
अद्य । जने । मित्रः । न । श्रूयते । ऋषीणां । वा । यः । क्षये । गुहा ।
वा । चर्कृषे । गिरा ॥ इह । श्रुतः । इंद्रः । अस्मेइति । अद्य ।
स्तवे । वज्री । ऋचीषमः । मित्रः । न । यः । जनेषु । आ ॥ ० ॥
महः । यः । पतिः । शवसः । असामि । आ । महः ।
नृम्णस्य । तूतुजिः । भर्ता । वज्रस्य । धृष्णोः । पिता । पुत्रंऽइव ।
प्रियं ॥ युजानः । अश्वा । वातस्य । धुनीइति । देवः । देवस्य ।
वज्रिऽवः । स्यंता । पथा । विरुक्मता । सृजानः । स्तोषि । अध्वनः ॥
त्वं । त्या । चित् । वातस्य । अश्वा । आ । अगाः । ऋज्रा । त्मना ।
वहध्यै । ययोः । देवः । न । मर्त्यः । यंता । नकिः । विदाय्यः ॥ ६ ॥
अध । ग्मंता । उशना । पृच्छते । वां । कत्ऽअर्था । नः । आ । गृहं ।
आ । जग्मथुः । पराकात् । दिवः । च । ग्मः । च । मर्त्यं ॥ आ । नः ।
इंद्र । पृक्षसे । अस्माकं । ब्रह्म । उत्ऽयतं । तत् । त्वा । याचामहे । अवः ।
शुष्णं । यत् । हन् । अमानुषं ॥ अकर्मा । दस्युः । अभि । नः ।
अमंतुः । अन्यऽव्रतः । अमानुषः । त्वं । तस्य । अमित्रऽहन् । वधः ।
दासस्य । दंभय ॥ त्वं । नः । इंद्र । शूर । शूरैः । उत । त्वाऽऊतासः ।
बर्हणा । पुरुऽत्रा । ते । वि । पूर्तयः । नवंत । क्षोणयः । यथा ॥ त्वं ।
तान् । वृत्रऽहत्ये । चोदयः । नॄन् । कार्पाणे । शूर । वज्रिऽवः ।

गुहा । यदि । कवीनां । विशां । नक्षत्रऽशवसां ॥ ७ ॥ मक्षु । ता । ते । इंद्र । दानऽअप्नसः । आक्षाणे । शूर । वज्रिऽवः । यत् । ह । शुष्णस्य । दंभयः । जातं । विश्वं । सयावऽभिः ॥ मा । अकुध्र्यक् । इंद्र । शूर । वस्वीः । अस्मेइति । भूवन् । अभिष्टयः । वयंऽवयं । ते । आसां । सुम्ने । स्याम । वज्रिऽवः ॥ अस्मेइति । ता । ते । इंद्र । संतु । सत्या । अहिंसंतीः । उपऽस्पृशः । विद्याम । यासां । भुजः । धेनूनां । न । वज्रिऽवः ॥ अहस्ता । यत् । अपदी । वर्धत । क्षाः । शचीभिः । वेद्यानां । शुष्णं । परि । प्रऽदक्षिणित् । विश्वऽआयवे । नि । शिश्नथः ॥ ० ॥ मा । रिषण्यः । वसवान । वसुः । सन् । उत । त्रायस्व । गृणतः । मघोनः । महः । च । रायः । रेवतः । कृधि । नः ॥ ८ ॥ यजामहे । इंद्रं । वज्रऽदक्षिणं । हरीणां । रथ्यं । विऽव्रतानां । प्र । श्मश्रु । दोधुवत् । ऊर्ध्वऽथा । भूत् । वि । सेनाभिः । दयमानः । वि । राधसा ॥ हरीइति । नु । अस्य । या । वने । विदे । वसु । इंद्रः । मघैः । मघऽवा । वृत्रऽहा । भुवत् । ऋभुः । वाजः । ऋभुक्षाः । पत्यते । शवः । अव । क्ष्णौमि । दासस्य । नाम । चित् ॥ यदा । वज्रं । हिरण्यं । इत् । अथ । रथं । हरीइति । यं । अस्य । वहतः । वि । सूरिऽभिः । आ । तिष्ठति । मघऽवा । सनऽश्रुतः । इंद्रः । वाजस्य । दीर्घऽश्रवसः । पतिः ॥ सोइति । चित् । नु । वृष्टिः । यूथ्या । स्वा । सचा । इंद्रः । श्मश्रूणि । हरिता । अभि । प्रुष्णुते । अव । वेति । सुऽक्षयं । सुते । मधु । उत् । इत् । धूनोति । वातः । यथा । वनं ॥ यः । वाचा । विऽवाचः । मृध्रऽवाचः । पुरु । सहस्रा । अशिवा । जघान ॥ ० ॥ पिताऽइव । यः । ताविषीं । ववृधे । शवः ॥ स्तोमं । ते । इंद्र । विऽमदाः । अजीजनन् । अपूर्व्यं । पुरुऽतमं । सुऽदानवे । विद्म । हि । अस्य । भोजनं । इनस्य । यत् । आ । पशुं । न । गोपाः । करामहे ॥ माकिः । नः । एना । सख्या । वि । यौषुः । तव । च । इंद्र । विऽमदस्य । च । ऋषेः । विद्म । हि । ते । प्रऽ-

मंति । देव । जामिऽवत् ॥ ० ॥ ९ ॥ इंद्र । सोमं । इमं । पिब । मधुंऽमंतं । चमूइति । सुतं ॥ ० ॥ सहस्रिणं । पुरुवसोइतिपुरुऽवसो । विवंक्षसे ॥ त्वां । यज्ञेभिः । उक्थैः । उपं । हव्येभिः । ईमहे । शचीऽपते । शचीनां ॥ ० ॥ श्रेष्ठं । नः । धेहि । वार्यं । विवंक्षसे ॥ यः । पतिः । वार्याणां । असिं । रध्रस्यं । चोदिता । इंद्रं । स्तोतॄणां । अविता ॥ ० ॥ द्विषः । नः । पाहि । अंहसः । विवंक्षसे ॥ युवं । शक्रा । मायाऽविना । समीचीइतिसंऽईची । निः । अमथतं । विऽमदेन । यत् । ईळिता । नासत्या । निःऽअमंथतं ॥ विश्वे । देवाः । अकृपंत । संऽईच्योः । निःऽपतंत्योः । नासत्यौ । अब्रुवन् । देवाः । पुनः । आ । वहतात् । इति ॥ मधुंऽमत् । मे । पराऽअयनं । मधुंऽमत् । पुनः । आऽअयनं । ता । नः । देवा । देवतंया । युवं । मधुंऽमतः । कृतं ॥ १० ॥ भद्रं । नः । अपि । वातय । मनः । दक्षं । उत । क्रतुं । अधं । ते । सख्ये । अंधसः ॥ ० ॥ रणंन् । गावंः । न । यवंसे । विवंक्षसे ॥ हृदिऽस्पृशंः । ते । आसते । विश्वेषु । सोम । धामंऽसु । अधं । कामाः । इमे । ममं ॥ ० ॥ वि । तिष्ठंते । वसुऽयवंः । विवंक्षसे ॥ उत । व्रतानि । सोम । ते । प्र । अहं । मिनामि । पाक्यां । अधं । पिताऽइंव । सूनवें ॥ ० ॥ मृळ । नः । अभि । चित् । वधात् । विवंक्षसे ॥ सं । ऊँइति । प्र । यंति । धीतयंः । सर्गासः । अवतान्ऽइंव । क्रतुं । नः । सोम । जीवसें ॥ ० ॥ धारयं । चमसान्ऽइंव । विवंक्षसे ॥ तवं । त्ये । सोम । शक्तिऽभिः । निऽकामासः । वि । ऋण्विरे । गृत्संस्य । धीराः । तवसंः ॥ ० ॥ व्रजं । गोऽमंतं । अश्विनं । विवंक्षसे ॥ ११ ॥ पशुं । नः । सोम । रक्षसि । पुरुऽत्रा । विऽस्थितं । जगंत् । संऽआकृणोषि । जीवसें ॥ ० ॥ विश्वां । संऽपश्यंन् । भुवंना । विवंक्षसे ॥ त्वं । नः । सोम । विश्वतंः । गोपाः । अदाभ्यः । भव । सेधं । राजन् । अपं । स्रिधंः ॥ ० ॥ मा । नः । दुःऽशंसंः । ईशत ।

विवक्षसे ॥ ० ॥ सुऽक्रतुः । वयःऽधेयाय । जागृहि । क्षेत्रवित्ऽतरः । मनुषः ॥ ० ॥ द्रुहः । नः । पाहि । अंहसः । विवक्षसे ॥ त्वं । नः । वृत्रहन्ऽतम । इंद्रस्य । इंदोइति । शिवः । सखा । यत् । सीं । हवंते । संऽइथे ॥ ० ॥ युध्यमानाः । तोकऽसातौ । विवक्षसे ॥ अयं । घ । सः । तुरः । मदः । इंद्रस्य । वर्धत । प्रियः । अयं । कक्षीवतः । महः ॥ ० ॥ मतिं । विप्रस्य । वर्धयत् । विवक्षसे ॥ अयं । विप्राय । दाशुषे । वाजान् । इयर्ति । गोऽमतः । अयं । सप्तऽभ्यः । आ । वरं ॥ ० ॥ प्र । अंधं । श्रोणं । च । तारिषत् । विवक्षसे ॥ १२ ॥ प्र । हि । अच्छ । मनीषाः । स्पार्हाः । यंति । निऽयुतः । प्र । दस्रा । नियुत्ऽरथः । पूषा । अविष्टु । माहिनः ॥ यस्य । त्यत् । महिऽत्वं । वाताप्यं । अयं । जनः । विप्रः । आ । वंसत् । धीतिऽभिः । चिकेत । सुऽस्तुतीनां ॥ सः । वेद । सुऽस्तुतीनां । इंदुः । न । पूषा । वृषा । अभि । प्सुरः । प्रुषायति । व्रजं । नः । आ । प्रुषायति ॥ मंसीमहि । त्वा । वयं । अस्माकं । देव । पूषन् । मतीनां । च । साधनं । विप्राणां । च । आऽधवं ॥ प्रतिऽअर्धिः । यज्ञानां । अश्वऽहयः । रथानां । ऋषिः । सः । यः । मनुःऽहितः । विप्रस्य । यवयत्ऽसखः ॥ १३ ॥ आऽधीषमाणायाः । पतिः । शुचायाः । च । शुचस्य । च । वासःऽवायः । अवीनां । आ । वासांसि । मर्मृजत् ॥ इनः । वाजानां । पतिः । इनः । पुष्टीनां । सखा । प्र । श्मश्रु । हर्यतः । दूधोत् । वि । वृथा । यः । अदाभ्यः ॥ आ । ते । रथस्य । पूषन् । अजाः । धुरं । ववृत्युः । विश्वस्य । अर्थिनः । सखा । सनःऽजाः । अनपऽच्युतः ॥ अस्माकं । ऊर्जा । रथं । पूषा । अविष्टु । माहिनः । भुवत् । वाजानां । वृधः । इमं । नः । शृणवत् । हवं ॥ १४ ॥ असत् । सु । मे । जरितरिति । सः । अभिऽवेगः । यत् । सुन्वते । यजमानाय । शिक्षं । अनाशीःऽदां । अहं । अस्मि । प्रऽहंता । सत्यऽध्वृतं । वृजिनऽयंतं । आभुं ॥ यदि । इत् । अहं ।

युध्यै । संऽनयानि । अदेवऽयून् । तन्वा । शूशुजानान् । अमा । ते ।
तुम्रं । वृषभं । पचानि । तीव्रं । सुतं । पंचऽदशं । नि । सिंचं ॥ न ।
अहं । तं । वेद । यः । इति । ब्रवीति । अदेवऽयून् । संऽअरणे ।
जघन्वान् । यदा । अवऽअख्यत् । संऽअरणं । ऋघावत् । आत् । इत् ।
ह । मे । वृषभा । प्र । ब्रुवंति ॥ यत् । अज्ञातेषु । वृजनेषु । आसं । विश्वे ।
सतः । मघऽवानः । मे । आसन् । जिनामि । वा । इत् । क्षेमे ।
आ । संतं । आभुं । प्र । तं । क्षिणां । पर्वते । पादऽगृह्य ॥ न । वै ।
ऊंइति । मां । वृजने । वारयंते । न । पर्वतासः । यत् । अहं ।
मनस्ये । मम । स्वनात् । कृध्रुऽकर्णः । भयाते । एव । इत् । अनु ।
द्यून् । किरणः । सं । एजात् ॥ १५ ॥ दर्शन् । नु । अत्र । शृतऽपान् ।
अनिंद्रान् । बाहुऽक्षदः । शरवे । पत्यमानान् । घृषुं । वा । ये ।
निनिदुः । सखायं । अधि । ऊँइति । नु । एषु । पवयः । ववृत्युः ॥
अभूः । ऊँइति । औक्षीः । वि । ऊँइति । आयुः । आनट् । दर्षत् ।
नु । पूर्वः । अपरः । नु । दर्षत् । द्वेइति । पवस्तेइति । परि । तं । न ।
भूतः । यः । अस्य । पारे । रजसः । विवेष ॥ गावः ।
यवं । प्रऽयुताः । अर्यः । अक्षन् । ताः । अपश्यं । सहऽगोपाः ।
चरंतीः । हवाः । इत् । अर्यः । अभितः । सं । आयन् । कियत् ।
आसु । स्वऽपतिः । छंदयाते ॥ सं । यत् । वयं । यवसऽअदः ।
जनानां । अहं । यवऽअदः । उरुऽअज्रे । अंतरिति । अत्र । युक्तः ।
अवऽसातारं । इच्छात् । अथोइति । अयुक्तं । युनजत् । ववन्वान् ॥
अत्र । इत् । ऊँइति । मे । मंससे । सत्यं । उक्तं । द्विऽपात् । च ।
यत् । चतुःऽपात् । संऽसृजानि । स्त्रीभिः । यः । अत्र । वृषणं ।
पृतन्यात् । अयुद्धः । अस्य । वि । भजानि । वेदः ॥ १६ ॥ यस्य ।
अनक्षा । दुहिता । जातु । आस । कः । तां । विद्वान् । अभि ।
मन्याते । अंधां । कतरः । मेनिं । प्रति । तं । मुचाते । यः । ईं ।
वहाते । यः । ईं । वा । वरेऽयात् ॥ कियती । योषा । मर्यतः ।

वधूऽयोः । परिऽप्रीता । पन्यसा । वार्येण । भद्रा । वधूः । भवति । यत् । सुऽपेशाः । स्वयं । सा । मित्रं । वनुते । जने । चित् ॥ पत्तः । जगार । प्रत्यंचं । अत्ति । शीर्ष्णा । शिरः । प्रति । दधौ । वरूथं । आसीनः । ऊर्ध्वा । उपसि । क्षिणाति । न्यङ् । उत्तानां । अनु । एति । भूमिं । बृहन् । अच्छायः । अपलाशः । अर्वा । तस्थौ । माता । विऽसितः । अत्ति । गर्भः ॥ ० ॥ सप्त । वीरासः । अधरात् । उत् । आयन् । अष्ट । उत्तरात्तात् । सं । अजग्मिरन् । ते । नव । पश्चातात् । स्थिविऽमंतः । आयन् । दश । प्राक् । सानु । वि । तिरंति । अश्नः ॥ १७ ॥ दशानां । एकं । कपिलं । समानं । तं । हिन्वंति । क्रतवे । पार्याय । गर्भं । माता । सुऽधितं । वक्षणासु । अवेनंतं । तुषयंती । बिभर्ति ॥ पीवानं । मेषं । अपचंत । वीराः । निऽउप्ताः । अक्षाः । अनु । दीवे । आसन् । द्वा । धनुं । बृहतीं । अप्ऽसु । अंतरिति । पवित्रऽवंता । चरतः । पुनंता ॥ वि । क्रोशनासः । विष्वंचः । आयन् । पचाति । नेमः । नहि । पक्षत् । अर्धः । अयं । मे । देवः । सविता । तत् । आह । द्रुऽअन्नः । इत् । वनवत् । सर्पिःऽअन्नः ॥ अपश्यं । ग्रामं । वहमानं । आरात् । अचक्रया । स्वधया । वर्तमानं । सिसक्ति । अर्यः । प्र । युगा । जनानां । सद्यः । शिश्ना । प्रऽमिनानः । नवीयान् ॥ एतौ । मे । गावौ । प्रऽमरस्य । युक्तौ । मो इति । सु । प्र । सेधीः । मुहुः । इत् । ममंधि । आपः । चित् । अस्य । वि । नशंति । अर्थं । सूरः । च । मर्कः । उपरः । बभूवान् ॥१८॥ अयं । यः । वज्रः । पुरुधा । विऽवृत्तः । अवः । सूर्यस्य । बृहतः । पुरीषात् । श्रवः । इत् । एना । परः । अन्यत् । अस्ति । तत् । अव्यथी । जरिमाणः । तरंति ॥ वृक्षेऽवृक्षे । निऽयता । मीमयत् । गौः । ततः । वयः । प्र । पतान् । पुरुषऽअदः । अध । इदं । विश्वं । भुवनं । भयाते । इंद्राय । सुन्वत् । ऋषये । च । शिक्षत् ॥ देवानां । माने । प्रथमाः । अतिष्ठन् । कृंतत्रात् । एषां । उपराः । उत् । आयन् । त्रयः ।

तपंति । पृथिवीं । अनूपाः । द्वा । बृबूकं । वहतः । पुरीषं ॥ सा । ते ।
जीवातुः । उत । तस्य । विद्धि । मा । स्म । एतादृक् । अप । गूहः ।
सऽमर्ये । आविः । स्वरिति स्वः । कृणुते । गूहते । बुसं । सः । पादुः ।
अस्य । निःऽनिजः । न । मुच्यते ॥ १९ ॥ विश्वः । हि । अन्यः ।
अरिः । आऽजगाम । मम । इत् । अह । श्वशुरः । न । आ । जगाम ।
जक्षीयात् । धानाः । उत । सोमं । पपीयात् । सुऽआशितः । पुनः ।
अस्तं । जगायात् ॥ सः । रोरुवत् । वृषभः । तिग्मऽशृंगः । वर्ष्मन् ।
तस्थौ । वरिमन् । आ । पृथिव्याः । विश्वेषु । एनं । वृजनेषु । पामि ।
यः । मे । कुक्षीइति । सुतऽसोमः । पृणाति ॥ अद्रिणा । ते । मंदिनः ।
इंद्र । तूयान् । सुन्वंति । सोमान् । पिबसि । त्वं । एषां । पचंति ।
ते । वृषभान् । अत्सि । तेषां । पृक्षेण । यत् । मघऽवन् । हूयमानः ॥
इदं । सु । मे । जरितः । आ । चिकिद्धि । प्रतिऽईपं । शापं । नद्यः ।
वहंति । लोपाशः । सिंहं । प्रत्यंचं । अत्सारिति । क्रोष्टा । वराहं ।
निः । अतक्त । कक्षात् ॥ कथा । ते । एतत् । अहं । आ । चिकेतं ।
गृत्सस्य । पाकः । तवसः । मनीषां ॥ त्वं । नः । विद्वान् । ऋतुऽथा ।
वि । वोचः । यं । अर्धं । ते । मघऽवन् । क्षेम्या । धूः ॥ एव । हि ।
मां । तवसं । वर्धयंति । दिवः । चित् । मे । बृहतः । उत्ऽतरा ।
धूः । पुरु । सहस्रा । नि । शिशामि । साकं । अशत्रुं । हि । मा ।
जनिता । जजान ॥ २० ॥ ० ॥ जज्ञुः । उग्रं । कर्मन्ऽकर्मन् ।
वृषणं । इंद्र । देवाः । वधीः । वृत्रं । वज्रेण । मंदसानः । अप ।
व्रजं । महिना । दाशुषे । वं ॥ देवासः । आयन् । परशून् । अबिभ्रन् ।
वना । वृश्चंतः । अभि । विट्ऽभिः । आयन् । नि । सुऽद्रुवं । दधतः ।
वक्षणासु । यत्र । कृपीटं । अनु । तत् । दहंति ॥ शशः । क्षुरं ।
प्रत्यंचं । जगार । अद्रिं । लोगेन । वि । अभेदं । आरात् । बृहंतं ।
चित् । ऋहते । रंधयानि । वयत् । वत्सः । वृषभं । शूशुवानः ॥
सुऽपर्णः । इत्था । नखं । आ । सिषाय । अवऽरुद्धः । परिऽपदं ।

न । सिंहः । निऽरुद्धः । चित् । महिषः । तृष्याऽवान् । गोधा ।
तस्मै । अयथं । कर्षत् । एतत् ॥ तेभ्यः । गोधाः । अयथं । कर्षत् ।
एतत् । ये । ब्रह्मणः । प्रतिऽपीयंति । अन्नैः । सिमः । उक्षणः ।
अवऽसृष्टान् । अदंति । स्वयं । बलानि । तन्वः । शृणानाः ॥ एते ।
शमीभिः । सुऽशमी । अभुवन् । ये । हिन्विरे । तन्वः । सोमे ।
उक्थैः । नृऽवत् । वदन् । उप । नः । माहि । वाजान् । दिवि ।
श्रवः । दधिषे । नाम । वीरः ॥ २१ ॥ वने । न । वा । यः । नि ।
अधायि । चाकन् । शुचिः । वां । स्तोमः । भुरणौ । अजीगरिति ।
यस्य । इत् । इंद्रः । पुरुऽदिनेषु । होता । नृणां । नर्यः । नृऽतमः ।
क्षपाऽवान् ॥ प्र । ते । अस्याः । उषसः । प्र । अपरस्याः । नृतौ । स्याम ।
नृऽतमस्य । नृणां । अनु । त्रिऽशोकः । शतं । आ । अवहत् । नृन् ।
कुत्सेन । रथः । यः । असत् । ससऽवान् ॥ कः । ते । मदः । इंद्र ।
रंत्यः । भूत् । दुरः । गिरः । अभि । उग्रः । वि । धाव । कत् ।
वाहः । अर्वाक् । उप । मा । मनीषा । आ । त्वा । शक्यां । उपऽमं ।
राधः । अन्नैः ॥ कत् । ऊँ इति । द्युम्नं । इंद्र । त्वाऽवतः । नृन् । कया ।
धिया । करसे । कत् । नः । आ । अगन् । मित्रः । न । सत्यः ।
उरुऽगाय । भृत्यै । अन्ने । समस्य । यत् । असत् । मनीषाः ॥ प्र ।
ईरय । सूरः । अर्थं । न । पारं । ये । अस्य । कामं । जनिधाःऽइव ।
ग्मन् । गिरः । च । ये । ते । तुविऽजात । पूर्वीः । नरः । इंद्र । प्रतिऽ-
शिक्षंति । अन्नैः ॥ २२ ॥ मात्रेइति । नु । ते । सुमितेइतिसुऽमिते ।
इंद्र । पूर्वीइति । द्यौः । मज्मना । पृथिवी । काव्येन । वराय । ते । घृतऽ-
वंतः । सुतासः । स्वाद्मन् । भवंतु । पीतये । मधूनि ॥ आ । मध्वः ।
अस्मै । असिचन् । अमत्रं । इंद्राय । पूर्णं । सः । हि । सत्यऽराधाः ।
सः । ववृधे । वरिमन् । आ । पृथिव्याः । अभि । क्रत्वा । नर्यः ।
पौंस्यैः । च ॥ वि । आनट् । इंद्रः । पृतनाः । सुऽओजाः । आ ।
अस्मै । यतंते । सख्याय । पूर्वीः । आ । स्म । रथं । न । पृतनासु ।

तिष्ठ । यं । भद्रया । सुऽमत्या । चोदयासे ॥ इति द्वितीयोऽनुवाकः ॥ –:: – ॥ अथ तृतीयोऽनुवाकः ॥ – :: – ॥ २३ ॥ प्र । देवऽत्रा । ब्रह्मणे । गातुः । एतु । अपः । अच्छ । मनसः । न । प्रऽयुक्ति । महीं । मित्रस्य । वरुणस्य । धासिं । पृथुऽज्रयसे । रीरध । सुऽवृक्ति ॥ अध्वर्यवः । हविष्मंतः । हि । भूत । अच्छ । अपः । इत । उशतीः । उशंतः । अव । याः । चष्टे । अरुणः । सुऽपर्णः । तं । आ । अस्यध्वं । ऊर्मिं । अद्य । सुऽहस्ताः ॥ अध्वर्यवः । अपः । इत । समुद्रं । अपां । नपातं । हविषा । यजध्वं । सः । वः । ददत् । ऊर्मिं । अद्य । सुऽपूतं । तस्मै । सोमं । मधुऽमंतं । सुनोत ॥ यः । अनिध्मः । दीदयत् । अप्ऽसु । अंतः । यं । विप्रासः । ईळते । अध्वरेषु । अपां । नपात् । मधुऽमतीः । अपः । दाः । याभिः । इंद्रः । ववृधे । वीर्याय ॥ याभिः । सोमः । मोदते । हर्षते । च । कल्याणीभिः । युवतिऽभिः । न । मर्यः । ताः । अध्वर्योइति । अपः । अच्छ । परा । इहि । यत् । आऽसिंचाः । ओषधीभिः । पुनीतात् ॥ २४ ॥ एव । इत् । यूने । युवतयः । नमंत । यत् । ईं । उशन् । उशतीः । एति । अच्छ । सं । जानते । मनसा । सं । चिकित्रे । अध्वर्यवः । धिषणा । आपः । च । देवीः ॥ यः । वः । वृताभ्यः । अकृणोत् । ऊँइति । लोकं । यः । वः । मह्याः । अभिऽशस्तेः । अमुंचत् । तस्मै । इंद्राय । मधुऽमंतं । ऊर्मिं । देवऽमादनं । प्र । हिणोतन । आपः ॥ प्र । अस्मै । हिनोत । मधुऽमंतं । ऊर्मिं । गर्भः । यः । वः । सिंधवः । मध्वः । उत्सः । घृतऽपृष्ठं । ईड्यं । अध्वरेषु । आपः । रेवतीः । शृणुत । हवं । मे ॥ तं । सिंधवः । मत्सरं । इंद्रऽपानं । ऊर्मिं । प्र । हेत । यः । उभेइति । इयर्ति । मदऽच्युतं । औशानं । नभःऽजां । परि । त्रिऽतंतुं । विऽचरंतं । उत्सं ॥ आऽववृततीः । अध । नु । द्विऽधाराः । गोषुऽयुधः । न । निऽयवं । चरंतीः । ऋषे । जनित्रीः । भुवनस्य । पत्नीः । अपः । वंदस्व । सऽवृधः । सऽयोनीः ॥ २५ ॥ हिनोत । नः । अध्वरं ।

देवऽयज्या । हिनोत । ब्रह्म । सनये । धनानां । ऋतस्य । योगे ।
वि । स्यध्वं । ऊधः । श्रुष्टीऽवरीः । भूतन । अस्मभ्यं । आपः ॥ आपः ।
रेवतीः । क्षयथ । हि । वस्वः । क्रतुं । च । भद्रं । बिभृथ । अमृतं ।
च । रायः । च । स्थ । सुऽअपत्यस्य । पत्नीः । सरस्वती । तत् ।
गृणते । वयः । धात् ॥ प्रति । यत् । आपः । अदृश्रं । आऽयतीः ।
घृतं । पयांसि । बिभ्रतीः । मधूनि । अध्वर्युऽभिः । मनसा । संऽ-
विदानाः । इंद्राय । सोमं । सुऽसुतं । भरंतीः ॥ आ । इमाः । अग्मन् ।
रेवतीः । जीवऽधन्याः । अध्वर्यवः । सादयत । सखायः । नि ।
बर्हिषि । धत्तन । सोम्यासः । अपां । नप्त्रा । संऽविदानासः । एनाः ॥
आ । अग्मन् । आपः । उशतीः । बर्हिः । आ । इदं । नि । अध्वरे ।
असदन् । देवऽयंतीः । अध्वर्यवः । सुनुत । इंद्राय । सोमं । अभूत् ।
ऊँइति । वः । सुऽशका । देवऽयज्या ॥ २६ ॥ आ । नः । देवानां ।
उप । वेतु । शंसः । विश्वेभिः । तुरैः । अवसे । यजत्रः । तेभिः ।
वयं । सुऽसखायः । भवेम । तरंतः । विश्वा । दुःऽइता । स्याम ॥
परि । चित् । मर्तः । द्रविणं । ममन्यात् । ऋतस्य । पथा । नमसा ।
आ । विवासेत् । उत । स्वेन । क्रतुना । सं । वदेत । श्रेयांसं ।
दक्षं । मनसा । जगृभ्यात् ॥ अधायि । धीतिः । असस्रग्रं । अंशाः ।
तीर्थे । न । दस्मं । उप । यंति । ऊमाः । अभि । आनश्म । सुवितस्य ।
शूषं । नवेदसः । अमृतानां । अभूम ॥ नित्यः । चाकन्यात् । स्वऽ-
पतिः । दमूनाः । यस्मै । ऊँइति । देवः । सविता । जजान । भगः ।
वा । गोभिः । अर्यमा । ईं । अनज्यात् । सः । अस्मै । चारुः ।
छदयत् । उत । स्यात् ॥ इयं । सा । भूयाः । उषसांऽइव । क्षाः ।
यत् । ह । क्षुऽमंतः । शवसा । संऽआयन् । अस्य । स्तुतिं । जरितुः ।
भिक्षमाणाः । आ । नः । शग्मासः । उप । यंतु । वाजाः ॥ २८ ॥
अस्य । इत् । एषा । सुऽमतिः । पप्रथाना । अभवत् । पूर्व्या ।
भूमना । गौः । अस्य । सऽनीळाः । असुरस्य । योनौ । समाने ।

आ । भरणे । बिभ्रमाणाः ॥ किं । स्वित् । वनं । कः । ऊँइति ।
सः । वृक्षः । आस । यतः । द्यावापृथिवीइति । निःऽततक्षुः ।
संतस्थानेइतिसंऽतस्थाने । अजरेइति । इतऊतीइतीतःऽऊती । अहानि ।
पूर्वीः । उषसः । जरंत ॥ न । एतावत् । एना । परः । अन्यत् ।
अस्ति । उक्षा । सः । द्यावापृथिवीइति । बिभर्ति । त्वचं । पवित्रं ।
कृणुत । स्वधाऽवान् । यत् । ईं । सूर्यं । न । हरितः । वहंति ॥
स्तेगः । न । क्षां । अति । एति । पृथ्वीं । मिहं । न । वातः । वि ।
ह । वाति । भूम । मित्रः । यत्र । वरुणः । अज्यमानः । अग्निः ।
वने । न । वि । असृष्ट । शोकं । स्तरीः । यत् । सूतः । सद्यः ।
अज्यमाना । व्यथिः । अव्यथीः । कृणुत । स्वऽगोपा ॥ पुत्रः । यत् ।
पूर्वः । पित्रोः । जनिष्ट । शम्यां । गौः । जगार । यत् । ह । पृच्छान् ।
उत । कण्वं । नृऽसदः । पुत्रं । आहुः । उत । श्यावः । धनं । आ ।
अदत्त । वाजी । प्र । कृष्णाय । रुशत् । अपिन्वत । ऊधः । ऋतं ।
अत्र । नकिः । अस्मै । अपीपेत् ॥ २८ ॥ प्र । सु । ग्मंता ।
धियसानस्य । सक्षणि । वरेभिः । वरान् । अभि । सु । प्रऽसीदतः ।
अस्माकं । इंद्रः । उभयं । जुजोषति । यत् । सोम्यस्य । अंधसः ।
बुबोधति ॥ वि । इंद्र । यासि । दिव्यानि । रोचना । वि ।
पार्थिवानि । रजसा । पुरुऽस्तुत । ये । त्वा । वहंति । मुहुः ।
अध्वरान् । उप । ते । सु । वन्वंतु । वग्वनान् । अराधसः ॥ तत् ।
इत् । मे । छन्त्सत् । वपुषः । वपुःऽतरं । पुत्रः । यत् । जानं ।
पित्रोः । अधिऽइयति । जाया । पतिं । वहति । वग्नुना । सुऽमत् ।
पुंसः । इत् । भद्रः । वहतुः । परिऽकृतः ॥ तत् । इत् । सधऽस्थं ।
अभि । चारु । दीधय । गावः । यत् । शासन् । वहतुं । न । धेनवः ।
माता । यत् । मंतुः । यूथस्य । पूर्व्या । अभि । वाणस्य । सप्तऽधातुः ।
इत् । जनः ॥ प्र । वः । अच्छ । रिरिचे । देवऽयुः । पदं । एकः ।
रुद्रेभिः । याति । तुर्वणिः । जरा । ना । ... । अमृतेषु । दावने ।

पारे । वः । ऊर्मिऽभ्यः । सिंचत । मधु ॥ २९ ॥ निऽधीयमानं । अपऽगूळ्हं । अप्ऽसु ॥ ० ॥ अक्षेत्रऽवित् । क्षेत्रऽविदं । हि । अप्राट् । सः । प्र । एति । क्षेत्रऽविदा । अनुऽशिष्टः ॥ एतत् । वै । भद्रं । अनुऽशासनस्य । उत । स्रुतिं । विंदति । अजसीनां ॥ अद्य । इत् । ऊँइति । प्र । आनीत् । अममन् । इमा । अहा । अपिऽवृतः । अधयत् । मातुः । ऊध्नः । आ । ईं । एनं । आप । जरिमा । युवानं । अहेळन् । वसुः । सुऽमनाः । बभूव ॥ एतानि । भद्रा । कलशा । क्रियाम । कुरुऽश्रवण । ददतः । मघानि । दानः । इत् । वः । मघऽवानः । सः । अस्तु । अयं । च । सोमः । हृदि । यं । बिभर्मि ॥ ३० ॥

इति सप्तमाष्टके सप्तमोध्यायः ॥ ७ ॥



अष्टक ७, अध्याय ८, मण्डल १०, अनुवाक ३, वर्ग २.



॥ अथ अष्टमोध्यायः ॥

हरिः ॐ ॥ प्र । मा । युयुज्रे । प्रऽयुजः । जनानां । वहामि । स्म । पूषणं । अंतरेण । विश्वे । देवासः । अध । मां । अरक्षन् । दुःऽशासुः । आ । अगात् । इति । घोषः । आसीत् ॥ ० ॥ नि । बाधते । अमतिः । नग्नता । जसुः । वेः । न । वेवीयते । मतिः ॥ ० ॥ सकृत् । सु । नः । मघऽवन् । इंद्र । मृळय । अध । पिताऽइव । नः । भव ॥ कुरुऽश्रवणं । अवृणि । राजानं । त्रासदस्यवं । मंहिष्ठं । वाघतां । ऋषिः ॥ यस्य । मा । हरितः । रथे । तिस्रः । वहंति । साधुऽया । स्तवै । सहस्रऽदक्षिणे ॥ १ ॥ यस्य । प्रऽस्वादसः । गिरः । उपमऽश्रवसः । पितुः । क्षेत्रं । न । रण्वं । ऊचुषे ॥ अधि । पुत्र । उपमऽ-

श्रवः । नपात् । मित्रऽअतिथेः । इहि । पितुः । ते । अस्मि । वंदिता ॥ यत् । इशीय । अमृतानां । उत । वा । मर्त्यानां । जीवेत् । इत् । मघऽवा । मम ॥ न । देवानां । अति । व्रतं । शतऽआत्मा । चन । जीवति । तथा । युजा । वि । ववृते ॥ २ ॥ प्रावेपाः । मा । बृहतः । मादयंति । प्रवातेऽजाः । इरिणे । ववृतानाः । सोमस्यऽइव । मौजऽवतस्य । भक्षः । विऽभीदकः । जागृविः । मह्यं । अच्छान् ॥ न । मा । मिमेथ । न । जिहीळे । एषा । शिवा । सखिऽभ्यः । उत । मह्यं । आसीत् । अक्षस्य । अहं । एकऽपरस्य । हेतोः । अनुऽव्रतां । अप । जायां । अरोधं ॥ द्वेष्टि । श्वश्रूः । अप । जाया । रुणद्धि । न । नाथितः । विदते । मर्डितारं । अश्वस्यऽइव । जरतः । वस्न्यस्य । न । अहं । विंदामि । कितवस्य । भोगं ॥ अन्ये । जायां । परि । मृशंति । अस्य । यस्य । अगृधत् । वेदने । वाजी । अक्षः । पिता । माता । भ्रातरः । एनं । आहुः । न । जानीमः । नयत । बद्धं । एतं ॥ यत् । आऽदीध्ये । न । दविषाणि । एभिः । परायत्ऽभ्यः । अव । हीये । सखिऽभ्यः । निऽउप्ताः । च । बभ्रवः । वाचं । अक्रत । एमि । इत् । एषां । निःऽकृतं । जारिणीऽइव ॥ ३ ॥ सभां । एति । कितवः । पृच्छमानः । जेष्यामि । इति । तन्वा । शूशुजानः । अक्षासः । अस्य । वि । तिरंति । कामं । प्रतिऽदीव्ने । दधतः । आ । कृतानि ॥ अक्षासः । इत् । अंकुशिनः । निऽतोदिनः । निऽकृत्वानः । तपनाः । तापयिष्णवः । कुमारऽदेष्णाः । जयतः । पुनःऽहनः । मध्वा । संऽपृक्ताः । कितवस्य । बर्हणा ॥ त्रिऽपंचाशः । क्रीळति । व्रातः । एषां । देवःऽइव । सविता । सत्यऽधर्मा । उग्रस्य । चित् । मन्यवे । न । नमंते । राजा । चित् । एभ्यः । नमः । इत् । कृणोति ॥ नीचा । वर्तंते । उपरि । स्फुरंति । अहस्तासः । हस्तऽवंतं । सहंते । दिव्याः । अंगाराः । इरिणे । निऽउप्ताः । शीताः । संतः । हृदयं । निः । दहंति ॥ जाया । तप्यते । कितवस्य । हीना । माता । पुत्रस्य । चरतः । क्व । स्वित् । ऋणऽ-

वा । बिभ्यत् । धनं । इच्छमानः । अन्येषां । अस्तं । उप । नक्तं ।
एति ॥ ४ ॥ स्त्रियं । दृष्ट्वाय । कितवं । ततापं । अन्येषां । जायां ।
सुऽकृतं । च । योनिं । पूर्वाह्णे । अश्वान् । युयुजे । हि । बभ्रून् ।
सः । अग्नेः । अंते । वृषलः । पपाद ॥ यः । वः । सेनाऽनीः । महतः ।
गणस्य । राजा । व्रातस्य । प्रथमः । बभूव । तस्मै । कृणोमि । न ।
धना । रुणध्मि । दश । अहं । प्राचीः । तत् । ऋतं । वदामि ॥
अक्षैः । मा । दीव्यः । कृषिं । इत् । कृषस्व । वित्ते । रमस्व । बहु ।
मन्यमानः । तत्र । गावः । कितव । तत्र । जाया । तत् । मे । वि ।
चष्टे । सविता । अयं । अर्यः ॥ मित्रं । कृणुध्वं । खलु । मृळत । नः ।
मा । नः । घोरेण । चरत । अभि । धृष्णु । नि । वः । न । मन्युः ।
विशतां । अरातिः । अन्यः । बभ्रूणां । प्रऽसितौ । नु । अस्तु ॥ ५ ॥
अबुध्रं । ऊँइति । त्ये । इंद्रऽवंतः । अग्नयः । ज्योतिः । भरंतः । उषसः ।
विऽउष्टिषु । महीइति । द्यावापृथिवीइति । चेततां । अपः । अद्य ।
देवानां । अवः । आ । वृणीमहे ॥ दिवःपृथिव्योः । अवः । आ । वृणीमहे ।
मातॄन् । सिंधून् । पर्वतान् । शर्यणाऽवतः । अनागाःऽत्वं । सूर्यं ।
उषसं । ईमहे । भद्रं । सोमः । सुवानः । अद्य । कृणोतु । नः ॥ द्यावा ।
नः । अद्य । पृथिवीइति । अनागसः । महीइति । त्रायेतां । सुविताय ।
मातरा । उषाः । उच्छंती । अप । बाधतां । अघं । स्वस्ति । अग्निं ।
संऽइधानं । ईमहे ॥ इयं । नः । उस्रा । प्रथमा । सुऽदेव्यं । रेवत् ।
सनिऽभ्यः । रेवती । वि । उच्छतु । आरे । मन्युं । दुःऽविदत्रस्य ।
धीमहि ॥ ० ॥ प्र । याः । सिस्रते । सूर्यस्य । रश्मिऽभिः । ज्योतिः ।
भरंतीः । उषसः । विऽउष्टिषु । भद्राः । नः । अद्य । श्रवसे । वि ।
उच्छत ॥ ० ॥ ६ ॥ अनमीवाः । उषसः । आ । चरंतु । नः । उत् ।
अग्नयः । जिहतां । ज्योतिषा । बृहत् । अयुक्षातां । अश्विना । तूतुजिं ।
रथं ॥ ० ॥ श्रेष्ठं । नः । अद्य । सवितः । वरेण्यं । भागं । आ ।
सुव । सः । हि । रत्नऽधाः । असि । रायः । जनित्री । धिषणा ।

उप । ब्रुवे ॥ ० ॥ पिपर्तु । मा । तत् । ऋतस्य । प्रऽवाचनं । देवानां । यत् । मनुष्याः । अमन्महि । विश्वाः । इत् । उस्राः । स्पट् । उत् । एति । सूर्यः ॥ ० ॥ अद्वेषः । अद्य । बर्हिषः । स्तरीमणि । ग्राव्णां । योगे । मन्मनः । साधे । ईमहे । आदित्यानां । शर्मणि । स्थाः । भुरण्यसि ॥ ० ॥ आ । नः । बर्हिः । सधऽमादे । बृहत् । दिवि । देवान् । ईळे । सादय । सप्त । होतॄन् ॥ ० ॥ सातये । भगं ॥ ० ॥ ७ ॥ ० ॥ वृधे । नः । यज्ञं । अवत । सऽजोषसः । बृहस्पतिं । पूषणं । अश्विना । भगं ॥ ० ॥ तत् । नः । देवाः । यच्छत । सुऽप्रवाचनं । छर्दिः । आदित्याः । सुऽभरं । नृऽपाय्यं । पश्वे । तोकाय । तनयाय । जीवसे ॥ ० ॥ विश्वे । अद्य । मरुतः । विश्वे । ऊती । विश्वे । भवंतु । अग्नयः । संऽइद्धाः । विश्वे । नः । देवाः । अवसा । आ । गमंतु । विश्वं । अस्तु । द्रविणं । वाजः । अस्मेइति ॥ यं । देवासः । अवथ । वाजऽसातौ । यं । त्रायध्वे । यं । पिपृथ । अति । अंहः । यः । वः । गोऽपीथे । न । भयस्य । वेद । ते । स्याम । देवऽवीतये । तुरासः ॥ ८ ॥ उषसानक्ता । बृहतीइति । सुऽपेशसा । द्यावाक्षामा । वरुणः । मित्रः । अर्यमा । इंद्रं । हुवे । मरुतः । पर्वतान् । अपः । आदित्यान् । द्यावापृथिवीइति । अपः । स्व१रितिस्वः ॥ द्यौः । च । नः । पृथिवी । च । प्रऽचेतसा । ऋतवरीइत्यृतऽवरी । रक्षतां । अंहसः । रिषः । मा । दुःऽविदत्रां । निःऽऋतिः । नः । ईशत । तत् । देवानां । अवः । अद्य । वृणीमहे ॥ विश्वस्मात् । नः । अदितिः । पातु । अंहसः । माता । मित्रस्य । वरुणस्य । रेवतः । स्वःऽवत् । ज्योतिः । अवृकं । नशीमहि ॥ ० ॥ ग्रावा । वदन् । अप । रक्षांसि । सेधतु । दुःऽस्वप्न्यं । निःऽऋतिं । विश्वं । अत्रिणं । आदित्यं । शर्म । मरुतां । अशीमहि ॥ ० ॥ आ । इंद्रः । बर्हिः । सीदतु । पिन्वतां । इळा । बृहस्पतिः । सामऽभिः । ऋक्वः । अर्चतु । सुऽप्रकेतं । जीवसे । मन्म । धीमहि ॥ ० ॥ ९ ॥ दिविऽस्पृशं । यज्ञं । अस्माकं । अश्विना ।

जीरऽअध्वरं । कृणुतं । सुम्नं । इष्टये । प्राचीनऽरश्मिं । आऽहुतं । घृतेन ॥ ० ॥ उप । ह्वये । सुऽहवं । मारुतं । गणं । पावकं । ऋष्वं । सख्याय । शंऽभुवं । रायः । पोषं । सौश्रवसाय । धीमहि ॥ ० ॥ अपां । पेरुं । जीवऽधन्यं । भरामहे । देवऽअव्यं । सुऽहवं । अध्वरऽश्रियं । सुऽरश्मिं । सोमं । इंद्रियं । यमीमहि ॥ ० ॥ सनेम । तत् । सुऽसनिता । सनित्वऽभिः । वयं । जीवाः । जीवऽपुत्राः । अनागसः । ब्रह्मऽद्विषः । विष्वक् । एनः । भरेरत ॥ ० ॥ ये । स्थ । मनोः । यज्ञियाः । ते । शृणोतन । यत् । वः । देवाः । ईमहे । तत् । ददातन । जैत्रं । क्रतुं । रयिऽमत् । वीरऽवत् । यशः ॥ ० ॥ १० ॥ महत् । अद्य । महतां । आ । वृणीमहे । अवः । देवानां । बृहतां । अनर्वणां । यथा । वसु । वीरऽजातं । नशामहै ॥ ० ॥ महः । अग्नेः । संऽइधानस्य । शर्मणि । अनागाः । मित्रे । वरुणे । स्वस्तये । श्रेष्ठे । स्याम । सवितुः । सवीमनि ॥ ० ॥ ये । सवितुः । सत्यऽसवस्य । विश्वे । मित्रस्य । व्रते । वरुणस्य । देवाः । ते । सौभगं । वीरऽवत् । गोऽमत् । अप्नः । दधातन । द्रविणं । चित्रं । अस्मेइति ॥ सविता । पश्चातात् । सविता । पुरस्तात् । सविता । उत्तरात्तात् । सविता । अधरात्तात् । सविता । नः । सुवतु । सर्वऽतातिं । सविता । नः । रासतां । दीर्घं । आयुः ॥ ११ ॥ नमः । मित्रस्य । वरुणस्य । चक्षसे । महः । देवाय । तत् । ऋतं । सपर्यत । दूरेऽदृशे । देवऽजाताय । केतवे । दिवः । पुत्राय । सूर्याय । शंसत ॥ सा । मा । सत्यऽउक्तिः । परि । पातु । विश्वतः । द्यावा । च । यत्र । ततनन् । अहानि । च । विश्वं । अन्यत् । नि । विशते । यत् । एजति । विश्वाहा । आपः । विश्वाहा । उत् । एति । सूर्यः ॥ न । ते । अदेवः । प्रऽदिवः । नि । वासते । यत् । एतशेभिः । पतरैः । रथर्यसि । प्राचीनं । अन्यत् । अनु । वर्तते । रजः । उत् । अन्येन । ज्योतिषा । यासि । सूर्य ॥ येन । सूर्य । ज्योतिषा । बाधसे । तमः । जगत् । च । विश्वं । उत्ऽइयर्षि । भानुना । तेन । अस्मत् ।

विश्वां । अनिरां । अनाहुतिं । अप । अमीवां । अप । दुःऽस्वप्न्यं । सुव ॥ विश्वस्य । हि । प्रऽइषितः । रक्षसि । व्रतं । अहेळयन् । उत्ऽचरसि । स्वधाः । अनु । यत् । अद्य । त्वा । सूर्य । उपऽब्रवामहै । तं । नः । देवाः । अनु । मंसीरत । क्रतुं । तं । नः । द्यावापृथिवीइति । तत् । नः । आपः । इंद्रः । शृण्वंतु । मरुतः । हवं । वचः । मा । शूनें । भूम । सूर्यस्य । संऽदृशि । भद्रं । जीवंतः । जरणां । अशीमहि ॥ १२ ॥ विश्वाहा । त्वा । सुऽमनसः । सुऽचक्षसः । प्रजाऽवंतः । अनमीवाः । अनागसः । उत्ऽयंतं । त्वा । मित्रऽमहः । दिवेऽदिवे । ज्योक् । जीवाः । प्रति । पश्येम । सूर्य ॥ महिं । ज्योतिः । बिभ्रतं । त्वा । विऽचक्षण । भास्वंतं । चक्षुषेऽचक्षुषे । मयः । आऽरोहंतं । बृहतः । पाजसः । परि । वयं । जीवाः । प्रति । पश्येम । सूर्य ॥ यस्य । ते । विश्वा । भुवनानि । केतुना । प्र । च । ईरते । नि । च । विशंते । अक्तुऽभिः । अनागाःऽत्वेन । हरिऽकेश । सूर्य । अह्नाऽअह्ना । नः । वस्यसाऽवस्यसा । उत् । इहि ॥ शं । नः । भव । चक्षसा । शं । नः । अह्ना । शं । भानुना । शं । हिमा । शं । घृणेन । यथा । शं । अध्वन् । शं । असत् । दुरोणे । तत् । सूर्य । द्रविणं । धेहि । चित्रं ॥ अस्माकं । देवाः । उभयाय । जन्मने । शर्म । यच्छत । द्विऽपदे । चतुःऽपदे । अदत् । पिबत् । ऊर्जयमानं । आशितं । तत् । अस्मेइति । शं । योः । अरपः । दधातन ॥ यत् । वः । देवाः । चकृम । जिह्वया । गुरु । मनसः । वा । प्रऽयुती । देवऽहेळनं । अरावा । यः । नः । अभि । दुच्छुनऽयते । तस्मिन् । तत् । एनः । वसवः । नि । धेतन ॥ १३ ॥ अस्मिन् । नः । इंद्र । पृत्सुतौ । यशस्वति । शिमीऽवति । क्रंदसि । प्र । अव । सातये । यत्र । गोऽसाता । धृषितेषु । स्वादिषु । विष्वक् । पतंति । दिद्यवः । नृऽसह्ये ॥ सः । नः । क्षुऽमंतं । सदने । वि । ऊर्णुहि । गोऽअर्णसं । रयिं । इंद्र । श्रवाय्यं । स्याम । ते । जयतः । शक्र । मेदिनः । यथा ।

वयं । उश्मसि । तत् । वसोइति । कृधि ॥ यः । नः । दासः । आर्यः ।
वा । पुरुऽस्तुत । अदेवः । इंद्र । युधये । चिकेतति । अस्माभिः ।
ते । सुऽसहाः । संतु । शत्रवः । त्वया । वयं । तान् । वनुयाम । संऽ-
गमे ॥ यः । दभ्रेभिः । हव्यः । यः । च । भूरिऽभिः । यः । अभीके ।
वरिवःऽवित् । नृऽसह्ये । तं । विऽस्वादे । सस्निं । अद्य । श्रुतं ।
नरं । अर्वांचं । इंद्रं । अवसे । करामहे ॥ स्वऽवृजं । हि । त्वां ।
अहं । इंद्र । शुश्रव । अननुऽदं । वृषभ । रध्रऽचोदनं । प्र । मुंचस्व ।
परि । कुत्सात् । इह । आ । गहि । किं । ऊंइति । त्वाऽवान् ।
मुष्कयोः । बद्धः । आसते ॥ १४ ॥ यः । वां । परिऽज्मा । सुऽवृत् ।
अश्विना । रथः । दोषां । उषसः । हव्यः । हविष्मता । शश्वत्ऽ-
तमासः । तं । ऊंइति । वां । इदं । वयं । पितुः । न । नाम । सुऽ-
हवं । हवामहे ॥ चोदयतं । सूनृताः । पिन्वतं । धियः । उत् । पुरंऽ-
धीः । ईरयतं । तत् । उश्मसि । यशसं । भागं । कृणुतं । नः ।
अश्विना । सोमं । न । चारुं । मघवत्ऽसु । नः । कृतं ॥ अमाऽ-
जुरः । चित् । भवथः । युवं । भगः । अनाशोः । चित् । अवितारा ।
अपमस्य । चित् । अंधस्य । चित् । नासत्या । कृशस्य । चित् ।
युवां । इत् । आहुः । भिषजा । रुतस्य । चित् ॥ युवं । च्यवानं ।
सनयं । यथा । रथं । पुनः । युवानं । चरथाय । तक्षथुः । निः ।
तौग्र्यं । ऊहथुः । अत्ऽभ्यः । परि । विश्वा । इत् । ता । वां ।
सवनेषु । प्रऽवाच्या ॥ पुराणा । वां । वीर्या । प्र । ब्रव । जने ।
अथोइति । ह । आसथुः । भिषजा । मयःऽभुवा । ता । वां । नु ।
नव्यौ । अवसे । करामहे । अयं । नासत्या । श्रत् । अरिः । यथा ।
दधत् ॥ १५ ॥ इयं । वां । अह्वे । शृणुतं । मे । अश्विना । पुत्रायऽ-
इव । पितरा । मह्यं । शिक्षतं । अनापिः । अज्ञाः । असजात्या ।
अमतिः । पुरा । तस्याः । अभिऽशस्तेः । अव । स्पृतं ॥ युवं । रथेन ।
विऽमदाय । शुंध्युवं । निः । ऊहथुः । पुरुऽमित्रस्य । योषणां । युवं ।

हवं । वध्रिऽमत्याः । अगच्छतं । युवं । सुऽस्तुतिं । चक्रथुः । पुरंऽधये ॥ युवं । विप्रस्य । जरणां । उपऽईयुषः । पुनरिति । कलेः । अकृणुतं । युवत् । वयः । युवं । वंदनं । ऋश्यऽदात् । उत् । ऊपथुः । युवं । सद्यः । विश्पलां । एतवे । कृथः ॥ युवं । ह । रेभं । वृषणा । गुहां । हितं । उत् । ऐरयतं । ममृऽवांसं । अश्विना । युवं । ऋबीसं । उत । तप्तं । अत्रये । ओमन्ऽवंतं । चक्रथुः । सप्तऽवध्रये ॥ युव । श्वेतं । पेदवे । अश्विना । अश्वं । नवऽभिः । वाजैः । नवती । च । वाजिनं । चकृत्यं । ददथुः । द्रवयत्ऽसखं । भगं । न । नृऽभ्यः । हव्यं । मयःऽभुवं ॥ १६ ॥ न । तं । राजानौ । अदिते । कुतः । चन । न । अंहः । अश्नोति । दुःऽइतं । नकिः । भयं । यं । अश्विना । सुऽहवा । रुद्रवर्तनीइतिरुद्रऽवर्तनी । पुरःऽरथं । कृणुथः । पत्न्या । सह ॥ आ । तेन । यातं । मनसः । जवीयसा । रथं । यं । वां । ऋभवः । चक्रुः । अश्विना । यस्य । योगे । दुहिता । जायते । दिवः । उभेइति । अहनीइति । सुदिनेइतिसुऽदिने । विवस्वतः ॥ ता । वर्तिः । यातं । जयुषा । वि । पर्वतं । अपिन्वतं । शयवे । धेनुः । अश्विना । वृकस्य । चित् । वर्तिकां । अंतः । आस्यात् । युवं । शचीभिः । ग्रसितां । अमुंचतं ॥ एतं । वां । स्तोमं । अश्विनौ । अकर्म । अतक्षाम । भृगवः । न । रथं । नि । अमृक्षाम । योषणां । न । मर्ये । नित्यं । न । सूनुं । तनयं । दधानाः ॥ १७ ॥ रथं । यांतं । कुह । कः । ह । वां । नरा । प्रति । द्युऽमंतं । सुविताय । भूषति । प्रातःऽयावानं । विऽभ्वं । विशेऽविशे । वस्तोःऽवस्तोः । वहमानं । धिया । शमि ॥ कुह । स्वित् । दोषा । कुह । वस्तोः । अश्विना । कुह । अभिऽपित्वं । करतः । कुह । ऊषतुः । कः । वां । शयुऽत्रा । विधवाऽइव । देवरं । मर्यं । न । योषा । कृणुते । सधऽस्थे । आ ॥ प्रातः । जरथेइति । जरणाऽइव । कापया । वस्तोःऽवस्तोः । यजता । गच्छथः । गृहं । कस्य । ध्वस्रा । भवथः । कस्य । वा । नरा । राजपुत्राऽइव । सवना । अव ।

गच्छथः ॥ युवां । मृगाऽइव । वारणा । मृगण्यवः । दोषा । वस्तोः ।
हविषा । नि । ह्वयामहे । युवं । होत्रां । ऋतुऽथा । जुह्वते । नरा ।
इषं । जनाय । वहथः । शुभः । पतीइति ॥ युवां । ह । घोषा । परि ।
अश्विना । यती । राज्ञः । ऊचे । दुहिता । पृच्छे । वां । नरा । भूतं ।
मे । अह्ने । उत । भूतं । अक्तवे । अश्वऽवते । रथिने । शक्तं ।
अर्वते ॥ १८ ॥ युवं । कवीइति । स्थः । परि । अश्विना । रथं ।
विशः । न । कुत्सः । जरितुः । नशायथः । युवोः । ह । मक्षा ।
परि । अश्विना । मधु । आसा । भरत । निःऽकृतं । न । योषणा ॥
युवं । ह । भुज्युं । युवं । अश्विना । वशं । युवं । शिंजारं । उशनां ।
उप । आरथुः । युवोः । ररावा । परि । सख्यं । आसते । युवोः ।
अहं । अवसा । सुम्नं । आ । चके ॥ युवं । ह । कृशं । युवं ।
अश्विना । शयुं । युवं । विधंतं । विधवां । उरुष्यथः । युवं । सनिऽभ्यः ।
स्तनयंतं । अश्विना । अप । व्रजं । ऊर्णुथः । सप्तऽआस्यं ॥ जनिष्ट ।
योषा । पतयत् । कनीनकः । वि । च । अरुहन् । वीरुधः । दंसनाः ।
अनु । आ । अस्मै । रीयंते । निवनाऽइव । सिंधवः । अस्मै । अह्ने ।
भवति । तत् । पतिऽत्वनं ॥ जीवं । रुदंति । वि । मयंते । अध्वरे ।
दीर्घां । अनु । प्रऽसितिं । दीधियुः । नरः । वामं । पितृऽभ्यः । ये ।
इदं । संऽएरिरे । मयः । पतिऽभ्यः । जनयः । परिऽस्वजे ॥ १९ ॥
न । तस्य । विद्म । तत् । ऊँइति । सु । प्र । वोचत । युवा । ह ।
यत् । युवत्याः । क्षेति । योनिषु । प्रियऽउस्रियस्य । वृषभस्य ।
रेतिनः । गृहं । गमेम । अश्विना । तत् । उश्मसि ॥ आ । वां ।
अगन् । सुऽमतिः । वाजिनीवसूइतिवाजिनीऽवसू । नि । अश्विना ।
हृत्ऽसु । कामाः । अयंसत । अभूतं । गोपा । मिथुना । शुभः ।
पतीइति । प्रियाः । अर्यम्णः । दुर्यान् । अशीमहि ॥ ० ॥ धत्तं । रयिं ।
सहऽवीरं । वचस्यवे । कृतं । तीर्थं । सुऽप्रपानं । शुभः । पतीइति ।
स्थाणुं । पथेऽस्थां । अप । दुःऽमतिं । हतं ॥ क्व । स्वित् । अद्य ।

कुतमासु । अश्विना । विष्णु । दस्रा । मादयेतेइति । शुभः । पतीइति । कः । ईं । नि । येमे । कुतमस्य । जग्मतुः । विप्रस्य । वा । यजमानस्य । वा । गृहं ॥ २० ॥ समानं । ऊँइति । त्यं । पुरुऽहूतं । उक्थ्यं । रथं । त्रिऽचक्रं । सवना । गनिग्मतं । परिऽज्मानं । विदथ्यं । सुवृक्तिऽभिः । वयं । विऽउष्टौ । उषसः । हवामहे ॥ प्रातःऽयुजं । नासत्या । अधि । तिष्ठथः । प्रातःऽयावानं । मधुऽवाहनं । रथं । विशः । येन । गच्छथः । यज्वरीः । नरा । कीरेः । चित् । यज्ञं । होतृऽमंतं । अश्विना ॥ अध्वर्युं । वा । मधुऽपाणिं । सुऽहस्त्यं । अग्निधं । वा । धृतऽदक्षं । दमूनसं । विप्रस्य । वा । यत् । सवनानि । गच्छंः ॥ ० ॥ मधुऽपेयं । आश्विना ॥ २१ ॥ अस्ताऽइव । सु । प्रऽतरं । लायं । अस्यन् । भूषन्ऽइव । प्र । भर । स्तोमं । अस्मै । वाचा । विप्राः । तरत । वाचं । अर्यः । नि । रमय । जरितरिति । सोमे । इंद्रं ॥ दोहेन । गां । उप । शिक्ष । सखायं । प्र । बोधय । जरितः । जारं । इंद्रं । कोशं । न । पूर्णं । वसुना । निऽऋष्टं । आ । च्यवय । मघऽदेयाय । शूरं ॥ किं । अंग । त्वा । मघऽवन् । भोजं । आहुः । शिशीहि । मा । शिशयं । त्वा । शृणोमि । अप्रस्वती । मम । धीः । अस्तु । शक्र । वसुऽविदं । भगं । इंद्र । आ । भर । नः ॥ त्वां । जनाः । ममऽसत्येषु । इंद्र । संऽतस्थानाः । वि । ह्वयंते । संऽईके । अत्र । युजं । कृणुते । यः । हविष्मान् । न । असुन्वता । सख्यं । वष्टि । शूरः ॥ धनं । न । स्पंद्रं । बहुलं । यः । अस्मै । तीव्रान् । सोमान् । आऽसुनोति । प्रयस्वान् । तस्मै । शत्रून् । सुऽतुकान् । प्रातः । अह्नः । नि । सुऽअष्ट्रान् । युवति । हंति । वृत्रं ॥ २२ ॥ यस्मिन् । वयं । दधिम । शंसं । इंद्रे । यः । शिश्राय । मघऽवा । कामं । अस्मेइति । आरात् । चित् । सन् । भयतां । अस्य । शत्रुः । नि । अस्मै । द्युम्ना । जन्या । नमंतां ॥ आरात् । शत्रुं । अप । बाधस्व । दूरं । उग्रः । यः । शंबः । पुरुऽहूत । तेन । अस्मेइति ।

धेहि । यवंऽमत् । गोऽमंत् । इंद्र । कृधि । धियं । जरित्रे । वाजंऽ-
रत्नां ॥ प्र । यं । अंतः । वृषऽसवासः । अग्मन् । तीव्राः । सोमाः ।
बहुलऽअंतासः । इंद्रं । न । अह । दामानं । मघऽवा । नि । यंसत् । नि ।
सुन्वते । वहति । भूरि । वामं ॥ उत । प्रऽहां । अतिऽदीव्य । जयाति ।
कृतं । यत् । श्वऽघ्नी । विऽचिनोति । काले । यः । देवऽकामः । न ।
धना । रुणद्धि । सं । इत् । तं । राया । सृजति । स्वधाऽवान् ॥ गोभिः ।
तरेम । अमतिं । दुःऽएवां । यवेन । क्षुधं । पुरुऽहूत । विश्वां । वयं ।
राजऽभिः । प्रथमा । धनानि । अस्माकेन । वृजनेन । जयेम ॥ बृहस्पतिः ।
नः । परि । पातु । पश्चात् । उत । उत्ऽतरस्मात् । अधरात् । अघऽयोः ।
इंद्रः । पुरस्तात् । उत । मध्यतः । नः । सखा । सखा । सखिऽभ्यः ।
वरिवः । कृणोतु ॥ इति तृतीयोऽनुवाकः ॥ – :: – ॥ अथ चतुर्थोऽ-
नुवाकः ॥ – :: – ॥ २३ ॥ अच्छ । मे । इंद्रं । मतयः । स्वःऽविदः ।
सध्रीचीः । विश्वाः । उशतीः । अनूषत । परि । स्वजंते । जनयः ।
यथा । पतिं । मर्यं । न । शुंध्युं । मघऽवानं । ऊतये ॥ न । घ ।
त्वद्रिक् । अप । वेति । मे । मनः । त्वे इति । इत् । कामं । पुरुऽ-
हूत । शिश्रय । राजाऽइव । दस्म । नि । सदः । अधि । बर्हिषि ।
अस्मिन् । सु । सोमे । अवऽपानं । अस्तु । ते ॥ विषुऽवृत् । इंद्रः ।
अमतेः । उत । क्षुधः । सः । इत् । रायः । मघऽवा । वस्वः । ईशते ।
तस्य । इत् । इमे । प्रवणे । सप्त । सिंधवः । वयः । वर्धंति ।
वृषभस्य । शुष्मिणः ॥ वयः । न । वृक्षं । सुऽपलाशं । आ । असदन् ।
सोमासः । इंद्रं । मंदिनः । चमूऽसदः । प्र । एषां । अनीकं । शवसा ।
दविद्युतत् । विदत् । स्वः । मनवे । ज्योतिः । आर्यं ॥ कृतं । न ।
श्वऽघ्नी । वि । चिनोति । देवने । संऽवर्गं । यत् । मघऽवा । सूर्यं ।
जयत् । न । तत् । ते । अन्यः । अनु । वीर्यं । शकत् । न । पुराणः ।
मघऽवन् । न । उत । नूतनः ॥ २४ ॥ विशंऽविशं । मघऽवा । परि ।
अशायत । जनानां । धेनाः । अवऽचाकशत् । वृषा । यस्य । अह ।

शक्रः । सवनेषु । रण्यति । सः । तीव्रैः । सोमैः । सहते । पृतन्यतः ॥
आपः । न । सिंधुं । अभि । यत् । संऽअक्षरन् । सोमासः । इंद्रं ।
कुल्याःऽइव । ह्रदं । वर्धति । विप्राः । महः । अस्य । सदने । यवं ।
न । वृष्टिः । दिव्येन । दानुना ॥ वृषा । न । क्रुद्धः । पतयत् ।
रजःऽसु । आ । यः । अर्यऽपत्नीः । अकृणोत् । इमाः । अपः । सः ।
सुन्वते । मघऽवा । जीरऽदानवे । अविंदत् । ज्योतिः । मनवे ।
हविष्मते ॥ उत् । जायतां । परशुः । ज्योतिषा । सह । भूयाः ।
ऋतस्य । सुऽदुघा । पुराणऽवत् । वि । रोचतां । अरुषः । भानुना ।
शुचिः । स्वः । न । शुक्रं । शुशुचीत । सत्ऽपतिः ॥ ० ॥ २५ ॥ ० ॥
स्वऽपतिः । मदाय । यः । धर्मणा । तुतुजानः । तुविष्मान् । प्रऽत्वक्षाणः ।
अति । विश्वा । सहांसि । अपारेण । महता । वृष्ण्येन ॥ सुऽस्थामा ।
रथः । सुऽयमा । हरीइति । ते । मिम्यक्ष । वज्रः । नृऽपते । गभस्तौ ।
शीभं । राजन् । सुऽपथा । आ । याहि । अर्वाङ् । वर्धाम । ते ।
पपुषः । वृष्ण्यानि ॥ आ । इंद्रऽवाहः । नृऽपतिं । वज्रऽबाहुं । उग्रं ।
उग्रासः । तविषासः । एनं । प्रऽत्वक्षसं । वृषभं । सत्यऽशुष्मं । आ ।
ईं । अस्मऽत्रा । सधऽमादः । वहंतु ॥ एव । पतिं । द्रोणऽसाचं ।
सऽचेतसं । ऊर्जः । स्कंभं । धरुणे । आ । वृषऽयसे । ओजः ।
कृष्व । सं । गृभाय । त्वेइति । अपि । असः । यथा । केऽनिपानां ।
इनः । वृधे ॥ गमन् । अस्मेइति । वसूनि । आ । हि । शंसिषं ।
सुऽआशिषं । भरं । आ । याहि । सोमिनः । त्वं । ईशिषे । सः ।
अस्मिन् । आ । सत्सि । बर्हिषि । अनाधृष्या । तव । पात्राणि ।
धर्मणा ॥ २६ ॥ पृथक् । प्र । आयन् । प्रथमाः । देवऽहूतयः ।
अकृण्वत । श्रवस्यानि । दुस्तरा । न । ये । शेकुः । यज्ञियां । नावं ।
आऽरुहं । ईर्मा । एव । ते । नि । आविशंत । केपयः ॥ एव । एव ।
अपाक् । अपरे । संतु । दुःऽध्यः । अश्वाः । येषां । दुःऽयुजः । आऽ
युयुज्रे । इत्था । ये । प्राक् । उपरे । संति । दावने । पुरूणि । यत्र ।

वयुनानि । भोजना ॥ गिरीन् । अज्रान् । रेजमानान् । अधारयत् ।
द्यौः । क्रंदत् । अंतरिक्षाणि । कोपयत् । समीचीनेइतिसम्ऽईचीने ।
धिषणेइति । वि । स्कभायति । वृष्णः । पीत्वा । मदे । उक्थानि ।
शंसति ॥ इमं । बिभर्मि । सुऽकृतं । ते । अंकुशं । येन । आऽरुजासि ।
मघऽवन् । शफऽआरुजः । अस्मिन् । सु । ते । सवने । अस्तु ।
ओक्यं । सुते । इष्टौ । मघऽवन् । बोधि । आऽभगः ॥ ० ॥ २७ ॥
दिवः । परि । प्रथमं । जज्ञे । अग्निः । अस्मत् । द्वितीयं । परि ।
जातऽवेदाः । तृतीयं । अप्ऽसु । नृऽमनाः । अजस्रं । इंधानः । एनं ।
जरते । सुऽआधीः ॥ विद्म । ते । अग्ने । त्रेधा । त्रयाणि । विद्म । ते ।
धाम । विऽभृता । पुरुऽत्रा । विद्म । ते । नाम । परमं । गुहा ।
यत् । विद्म । तं । उत्सं । यतः । आऽजगंथ ॥ समुद्रे । त्वा । नृऽ-
मनाः । अप्ऽसु । अंतः । नृऽचक्षाः । ईधे । दिवः । अग्ने । ऊधन् ।
तृतीये । त्वा । रजसि । तस्थिऽवांसं । अपां । उपऽस्थे । महिषाः ।
अवर्धन् ॥ अक्रंदत् । अग्निः । स्तनयन्ऽइव । द्यौः । क्षाम । रेरिहत् ।
वीरुधः । सम्ऽअंजन् । सद्यः । जज्ञानः । वि । हि । ईं । इद्धः ।
अख्यत् । आ । रोदसीइति । भानुना । भाति । अंतरिति ॥ श्रीणां ।
उत्ऽआरः । धरुणः । रयीणां । मनीषाणां । प्रऽअर्पणः । सोमऽ-
गोपाः । वसुः । सूनुः । सहसः । अप्ऽसु । राजा । वि । भाति ।
अग्रे । उषसां । इधानः । विश्वस्य । केतुः । भुवनस्य । गर्भः ॥ ० ॥
वीळु । चित् । अद्रिं । अभिनत् । पराऽयन् । जनाः । यत् । अग्निं ।
अयजंत । पंच ॥ २८ ॥ उशिक् । पावकः । अरतिः । सुऽमेधाः ॥ ० ॥
इयर्ति । धूमं । अरुषं । भरिभ्रत् । उत् । शुक्रेण । शोचिषा । द्यां ।
इनक्षन् ॥ दृशानः । रुक्मः । उर्विया । वि । अद्यौत् । दुःऽमर्षं ।
आयुः । श्रिये । रुचानः । अग्निः । अमृतः । अभवत् । वयःऽभिः ।
यत् । एनं । द्यौः । जनयत् । सुऽरेताः ॥ यः । ते । अद्य । कृणवत् ।
भद्रऽशोचे । अपूपं । देव । घृतऽवंतं । अग्ने । प्र । तं । नय । प्रऽतरं ।

वस्यः । अच्छ । अभि । सुम्नं । देवऽभक्तं । यविष्ठ ॥ आ । तं । भज । सौश्रवसेषु । अग्ने । उक्थेऽउक्थे । आ । भज । शस्यमाने ॥ ० ॥ उत् । जातेन । भिनदत् । उत् । जनिऽत्वैः ॥ त्वां । अग्ने । यजमानाः । अनु । द्यून् । विश्वा । वसु । दधिरे । वार्याणि । त्वया । सह । द्रविणं । इच्छमानाः ॥ ० ॥ अस्तावि । अग्निः । नरां । सुऽशेवः । वैश्वानरः । ऋषिऽभिः । सोमऽगोपाः ॥ ० ॥ २९ ॥

इति सप्तमाष्टके अष्टमोध्यायः ॥ ८ ॥

इति सप्तमाष्टकः संपूर्णः ॥ ७ ॥



॥ ॐ ॥



## अथ अष्टमाष्टके प्रथमोध्यायः

हरिः ॐ ॥ प्र । होता । जातः । महान् । नभःऽवित् । नऽसद्मा । सीदत् । अपां । उपऽस्थे । दधिः । यः । धायि । सः । ते । वयांसि । यंता । वसूनि । विधते । तनूऽपाः ॥ ० ॥ पशुं । न । नष्टं । पदैः । अनु । ग्मन् । गुहा । चतंतं । उशिजः । नमःऽभिः । इच्छंतः । धीराः । भृगवः । अविंदन् ॥ इमं । त्रितः । भूरि । आविंदत् । इच्छन् । वैभुऽवसः । मूर्धनि । अघ्न्यायाः । सः । शेऽवृधः । जातः । आ । हर्म्येषु । नाभिः । युवा । भवति । रोचनस्य ॥ ० ॥ नमःऽभिः । मंद्रं । यज्ञं । नेतारं । अध्वराणां । विशां । अकृण्वन् । अरतिं । पावकं । हव्यऽवाहं । दधतः । मानुषेषु ॥ प्र । भूः । जयंतं । महां । विपःऽधां । मूराः । अमूरं । पुरां । दर्माणं । नयंतः । गर्भं । वनां । धियं । धुः । हिरिऽश्मश्रुं । न । अर्वाणं । धनऽअर्चं ॥ १ ॥ नि । पस्त्यासु । त्रितः । स्तभुऽयन् । परिऽवीतः । योनौ । सीदत् । अंतरिति । अतः । संऽगृभ्य । विशां । दमूनाः । विऽधर्मणा ।

अयंत्रैः । ईयते । नृन् ॥ अस्य । अजरासः । दमां । अरित्राः । अर्चत्ऽ-धूमासः । अग्नयः । पावकाः । श्वितीचयः । श्वात्रासः । भुरण्यवः । वनऽसदः । वायवः । न । सोमाः ॥ प्र । जिह्वया । भरते । वेपः । अग्निः । प्र । वयुनानि । चेतसा । पृथिव्याः । तं । आयवः । शुचयंतं । पावकं । मंद्रं । होतारं । दधिरे । यजिष्ठं ॥ द्यावा । यं । अग्निं । पृथिवीइति । जनिष्टां । आपः । त्वष्टा । भृगवः । यं । सहःऽ-भिः । ईळेन्यं । प्रथमं । मातरिश्वा । देवाः । ततक्षुः । मनवे । यजत्रं ॥ यं । त्वा । देवाः । दधिरे । हव्यऽवाहं । पुरुऽस्पृहः । मानुषासः । यजत्रं । सः । यामन् । अग्ने । स्तुवते । वयः । धाः । प्र । देवऽयन् । यशसः । सं । हि । पूर्वीः ॥ २ ॥ जगृभ्म । ते । दक्षिणं । इंद्र । हस्तं । वसुऽयवः । वसुऽपते । वसूनां । विद्म । हि । त्वा । गोऽपतिं । शूर । गोनां । अस्मभ्यं । चित्रं । वृषणं । रयिं । दाः ॥ सुऽआयुधं । सुऽअवसं । सुऽनीथं । चतुःऽसमुद्रं । धरुणं । रयीणां । चर्कृत्यं । शंस्यं । भूरिऽवारं ॥ ० ॥ सुऽब्रह्माणं । देवऽवंतं । बृहंतं । उरुं । गभीरं । पृथुऽबुध्नं । इंद्र । श्रुतऽऋषिं । उग्रं । अभिमातिऽसहं ॥ ० ॥ सनत्ऽवाजं । विप्रऽवीरं । तरुत्रं । धनऽस्पृतं । शूशुऽवांसं । सुऽदक्षं । दस्युऽहनं । पूःऽभिदं । इंद्र । सत्यं ॥ ० ॥ अश्वऽवंतं । रथिनं । वीरऽवंतं । सहस्रिणं । शतिनं । वाजं । इंद्र । भद्रऽव्रातं । विप्रऽवीरं । स्वःऽसां ॥ ० ॥ ३ ॥ प्र । सप्तऽगुं । ऋतऽ-धीतिं । सुऽमेधां । बृहस्पतिं । मतिः । अच्छ । जिगाति । यः । आंगिरसः । नमसा । उपऽसद्यः ॥ ० ॥ वनीवानः । मम । दूतासः । इंद्रं । स्तोमाः । चरंति । सुऽमतीः । इयानाः । हृदिऽस्पृशः । मनसा । वच्यमानाः ॥ ० ॥ यत् । त्वा । यामि । दाद्धि । तत् । नः । इंद्र । बृहंतं । क्षयं । असमं । जनानां । अभि । तत् । द्यावापृथिवीइति । गृणीतां ॥ ० ॥ ४ ॥ अहं । भुवं । वसुनः । पूर्व्यः । पतिः । अहं । धनानि । सं । जयामि । शश्वतः । मां । हवंते । पितरं । न ।

जंतवः । अहं । दाशुषे । वि । भजामि । भोजनं ॥ अहं । इंद्रः । रोधः । वक्षः । अथर्वणः । त्रिताय । गाः । अजनयं । अहेः । अधि । अहं । दस्युभ्यः । परि । नृम्णं । आ । ददे । गोत्रा । शिक्षन् । दधीचे । मातरिश्वने ॥ मह्यं । त्वष्टा । वज्रं । अतक्षत् । आयसं । मयि । देवासः । अवृजन् । अपि । क्रतुं । मम । अनीकं । सूर्यस्यऽइव । दुस्तरं । मां । आर्यंति । कृतेन । कर्त्वेन । च ॥ अहं । एतं । गव्ययं । अश्व्यं । पशुं । पुरीषिणं । सायकेन । हिरण्ययं । पुरु । सहस्रा । नि । शिशामि । दाशुषे । यत् । मा । सोमासः । उक्थिनः । अमंदिषुः ॥ अहं । इंद्रः । न । परा । जिग्ये । इत् । धनं । न । मृत्यवे । अव । तस्थे । कदा । चन । सोमं । इत् । मा । सुन्वंतः । याचत । वसु । न । मे । पूरवः । सख्ये । रिषाथन ॥ ५ ॥ अहं । एतान् । शाश्वसतः । द्वाऽद्वा । इंद्रं । ये । वज्रं । युधये । अकृण्वत । आऽह्वयमानान् । अव । हन्मना । अहनं । दृळ्हा । वदन् । अनमस्युः । नमस्विनः ॥ अभि । इदं । एकं । एकः । अस्मि । निःषाट् । अभि । द्वा । किं । ऊँइति । त्रयः । करंति । खले । न । पर्षान् । प्रति । हन्मि । भूरि । किं । मा । निंदंति । शत्रवः । अनिंद्राः । अहं । गुंगुऽभ्यः । अतिथिऽग्वं । इष्करं । इषं । न । वृत्रऽतुरं । विक्षु । धारयं । यत् । पर्णयऽघ्ने । उत । वा । करंजऽहे । प्र । अहं । महे । वृत्रऽहत्ये । अशुश्रवि ॥ प्र । मे । नमी । साप्यः । इषे । भुजे । भूत् । गवां । एषे । सख्या । कृणुत । द्विता । दिद्युं । यत् । अस्य । संऽइथेषु । महयं । आत् । इत् । एनं । शंस्यं । उक्थ्यं । करं ॥ प्र । नेमस्मिन् । ददृशे । सोमः । अंतः । गोपाः । नेमं । आविः । अस्था । कृणोति । सः । तिग्मऽशृंगं । वृषभं । युयुत्सन् । द्रुहः । तस्थौ । बहुले । बद्धः । अंतः । इति ॥ आदित्यानां । वसूनां । रुद्रियाणां । देवः । देवानां । न । मिनामि । धाम । ते । मा । भद्राय । शवसे । ततक्षुः । अपराऽजितं । अस्तृतं । अषाळ्हं ॥ ६ ॥ अहं । दां । गृणते । पूर्व्यं । वसु । अहं । ब्रह्म । कृणवं । मह्यं ।

वर्धनं । अहं । भुवं । यजमानस्य । चोदिता । अयज्वनः । साक्षि । विश्वस्मिन् । भरे ॥ मां । धुः । इंद्रं । नाम । देवता । दिवः । च । ग्मः । च । अपां । च । जंतवः । अहं । हरीइति । वृषणा । विऽव्रता । रघूइति । अहं । वज्रं । शवसे । धृष्णु । आ । ददे ॥ अहं । अत्कं । कवये । शिश्नथं । हथैः । अहं । कुत्सं । आवं । आभिः । ऊतिऽभिः । अहं । शुष्णस्य । श्नथिता । वधः । यमं । न । यः । ररे । आर्यं । नाम । दस्यवे ॥ अहं । पिताऽइव । वेतसून् । अभिष्टये । तुग्रं । कुत्साय । स्मत्ऽइभं । च । रंधयं ॥ ० ॥ राजनि । प्र । यत् । भरे । तुजये । न । प्रिया । आऽधृषे ॥ अहं । रंधयं । मृगयं । श्रुतर्वणे । यत् । मा । अजिहीत । वयुना । चन । आनुषक् ॥ अहं । वेशं । नम्रं । आयवे । अकरं । अहं । सव्याय । पट्ऽगृभिं । अरंधयं ॥ ७ ॥ अहं । सः । यः । नवऽवास्त्वं । बृहत्ऽरथं । सं । वृत्राऽइव । दासं । वृत्रऽहा । अरुजं । यत् । वर्धयंतं । प्रथयंतं । आनुषक् । दूरे । पारे । रजसः । रोचना । अकरं ॥ अहं । सूर्यस्य । परि । यामि । आशुऽभिः । प्र । एतशेभिः । वहमानः । ओजसा । यत् । मा । सावः । मनुषः । आह । निःऽनिजे । ऋधक् । कृषे । दासं । कृत्व्यं । हथैः ॥ अहं । सप्तऽहा । नहुषः । नहुःऽतरः । प्र । अश्रवयं । शवसा । तुर्वशं । यदुं । अहं । नि । अन्यं । सहसा । सहः । करं । नव । व्राधतः । नवतिं । च । वक्षयं ॥ अहं । सप्त । स्रवतः । धारयं । वृषा । द्रवित्न्वः । पृथिव्यां । सीराः । अधि । अहं । अर्णांसि । वि । तिरामि । सुऽक्रतुः । युधा । विदं । मनवे । गातुं । इष्टये ॥ अहं । तत् । आसु । धारयं । यत् । आसु । न । देवः । चन । त्वष्टा । अधारयत् । रुशत् । स्पार्हं । गवां । ऊधःऽसु । वक्षणासु । आ । मधोः । मधु । श्वात्र्यं । सोमं । आऽशिरं ॥ एव । देवान् । इंद्रः । विव्ये । नॄन् । प्र । च्यौत्नेन । मघऽवा । सत्यऽराधाः ॥ ० ॥ हरिऽवः । शचीऽवः । अभि । तुरासः । [illegible] । गृणंति । [illegible] ॥ ० ॥ मंदमानाय ।

अंधसः । अर्च । विश्वानराय । विश्वऽशुवे । इंद्रस्य । यस्य । सुऽमखं । सहः । महि । श्रवः । नृम्णं । च । रोदसीइति । सपर्यतः ॥ सः । चित् । नु । सख्या । नर्यः । इनः । स्तुतः । चर्कृत्यः । इंद्रः । माऽवते । नरे । विश्वासु । धूःऽसु । वाजऽकृत्येषु । सत्ऽपते । वृत्रे । वा । अप्ऽसु । अभि । शूर । मंदसे ॥ के । ते । नरः । इंद्र । ये । ते । इषे । ये । ते । सुम्नं । सऽधन्यं । इयक्षान् । के । ते । वाजाय । असुर्याय । हिन्विरे । के । अप्ऽसु । स्वासु । उर्वरासु । पौंस्ये ॥ भुवः । त्वं । इंद्र । ब्रह्मणा । महान् । भुवः । विश्वेषु । सवनेषु । यज्ञियः । भुवः । नॄन् । च्यौत्नः । विश्वस्मिन् । भरे । ज्येष्ठः । च । मंत्रः । विश्वऽचर्षणे ॥ अव । नु । कं । ज्यायान् । यज्ञऽवनसः । महीं । ते । ओमात्रां । कृष्टयः । विदुः ॥ असः । नु । कं । अजरः । वर्धाः । च । विश्वा । इत् । एता । सवना । तूतुमा । कृषे ॥ एता । विश्वा । सवना । तूतुमा । कृषे । स्वयं । सूनोइति । सहसः । यानि । दधिषे । वराय । ते । पात्रं । धर्मणे । तना । यज्ञः । मंत्रः । ब्रह्म । उत्ऽयतं । वचः ॥ ये । ते । विप्र । ब्रह्मऽकृतः । सुते । सचा । वसूनां । च । वसुनः । च । दावने । प्र । ते । सुम्नस्य । मनसा । पथा । भुवन् । मदे । सुतस्य । सोम्यस्य । अंधसः ॥ ९ ॥ महत् । तत् । उल्बं । स्थविरं । तत् । आसीत् । येन । आऽविष्टितः । प्रऽविवेशिथ । अपः । विश्वाः । अपश्यत् । बहुधा । ते । अग्ने । जातऽवेदः । तन्वः । देवः । एकः ॥ कः । मा । ददर्श । कतमः । सः । देवः । यः । मे । तन्वः । बहुधा । परिऽअपश्यत् । क्व । अह । मित्रावरुणा । क्षियंति । अग्नेः । विश्वाः । संऽइधः । देवऽयानीः ॥ ऐच्छाम । त्वा । बहुधा । जातऽवेदः । प्रऽविष्टं । अग्ने । अप्ऽसु । ओषधीषु । तं । त्वा । यमः । अचिकेत् । चित्रभानोइतिचित्रऽभानो । दशऽअंतरुष्यात् । अतिऽरोचमानं ॥ होत्रात् । अहं । वरुण । बिभ्यत् । आयं । न । इत् । एव । मा । युनजन् । अत्र । देवाः । तस्य । मे । तन्वः । बहुधा । निऽविष्टाः ।

एतं । अर्थं । न । चिकेत । अहं । अग्निः ॥ आ । इहि । मनुः । देवऽयुः । यज्ञऽकामः । अरंऽकृत्य । तमसि । क्षेषि । अग्ने । सुऽगान् । पथः । कृणुहि । देवऽयानान् । वह । हव्यानि । सुऽमनस्यमानः ॥ १० ॥ अग्नेः । पूर्वे । भ्रातरः । अर्थं । एतं । रथीऽइव । अध्वानं । अनु । आ । अवरीवुरिति । तस्मात् । भिया । वरुण । दूरं । आयं । गौरः । न । क्षेप्नोः । अविजे । ज्यायाः ॥ कुर्मः । ते । आयुः । अजरं । यत् । अग्ने । यथा । युक्तः । जातऽवेदः । न । रिष्याः । अथ । वहासि । सुऽमनस्यमानः । भागं । देवेभ्यः । हविषः । सुऽजात ॥ प्रऽयाजान् । मे । अनुऽयाजान् । च । केवलान् । ऊर्जस्वंतं । हविषः । दत्त । भागं । घृतं । च । अपां । पुरुषं । च । ओषधीनां । अग्नेः । च । दीर्घं । आयुः । अस्तु । देवाः ॥ तव । प्रऽयाजाः । अनुऽयाजाः । च । केवले । ऊर्जस्वंतः । हविषः । संतु । भागाः । तव । अग्ने । यज्ञः । अयं । अस्तु । सर्वः । तुभ्यं । नमंतां । प्रऽदिशः । चतस्रः ॥ ११ ॥ विश्वे । देवाः । शास्तन । मा । यथा । इह । होता । वृतः । मनवै । यत् । निऽसद्य । प्र । मे । ब्रूत । भागऽधेयं । यथा । वः । येन । पथा । हव्यं । आ । वः । वहानि ॥ अहं । होता । नि । असीदं । यजीयान् । विश्वे । देवाः । मरुतः । मा । जुनंति । अहःऽअहः । अश्विना । आध्वर्यवं । वां । ब्रह्मा । संऽइत् । भवति । सा । आऽहुतिः । वां ॥ अयं । यः । होता । किः । ऊँइति । सः । यमस्य । कं । अपि । ऊहे । यत् । संऽअंजति । देवाः । अहःऽअहः । जायते । मासिऽमासि । अथ । देवाः । दधिरे । हव्यऽवाहं ॥ मां ॥ ० ॥ अपऽम्लुक्तं । बहु । कृच्छ्रा । चरंतं । अग्निः । विद्वान् । यज्ञं । नः । कल्पयाति । पंचऽयामं । त्रिऽवृतं । सप्तऽतंतुं ॥ आ । वः । यक्षि । अमृतऽत्वं । सुऽवीरं । यथा । वः । देवाः । वरिवः । कराणि । आ । बाह्वोः । वज्रं । इंद्रस्य । धेयां ॥ ० ॥ जयाति ॥ ॥ ० ॥ १२ ॥ यं । ऐच्छाम । मनसा । सः । अयं । आ । अगात् । यज्ञस्य । विद्वान् । परुषः । चिकित्वान् ॥ ० ॥ नि । हि । सत्सत ।

अंतरः । पूर्वः । अस्मत् ॥ अराधि । होता । निऽसदा । यजीयान् । अभि । प्रयांसि । सुऽधितानि । हि । ख्यत् । यजामहै । यज्ञियान् । हंत । देवान् । ईळामहै । ईड्यान् । आज्येन ॥ साध्वीं । अकः । देवऽवीतिं । नः । अद्य । यज्ञस्य । जिह्वां । अविदाम । गुह्यां । सः । आयुः । आ । अगात् । सुरभिः । वसानः । भद्रां । अकः । देवऽहूतिं । नः । अद्य ॥ तत् । अद्य । वाचः । प्रथमं । मसीय । येन । असुरान् । अभि । देवाः । असाम । ऊर्जऽअदः । उत । यज्ञियासः । पंचऽजनाः । मम । होत्रं । जुषध्वं ॥ पंच । जनाः । मम । होत्रं । जुषंतां ॥ ० ॥ १३ ॥ तंतुं । तन्वन् । रजसः । भानुं । अनु । इहि । ज्योतिष्मतः । पथः । रक्ष । धिया । कृतान् । अनुल्बणं । वयत । जोगुवां । अपः । मनुः । भव । जनय । दैव्यं । जनं ॥ अक्षऽनहः । नह्यतन । उत । सोम्याः । इष्कृणुध्वं । रशनाः । आ । उत । पिंशत । अष्टाऽवंधुरं । वहत । अभितः । रथं । येन । देवासः । अनयन् । अभि । प्रियं ॥ अश्मन्ऽवती । रीयते । सं । रभध्वं । उत् । तिष्ठत । प्र । तरत । सखायः । अत्र । जहाम । ये । असन् । अशेवाः । शिवान् । वयं । उत् । तरेम । अभि । वाजान् ॥ त्वष्टा । मायाः । वेत् । अपसां । अपःऽतमः । बिभ्रत् । पात्रा । देवऽपानानि । शंऽतमा । शिशीते । नूनं । परशुं । सुऽआयसं । येन । वृश्चात् । एतशः । ब्रह्मणः । पतिः ॥ सतः । नूनं । कवयः । सं । शिशीत । वाशीभिः । याभिः । अमृताय । तक्षथ । विद्वांसः । पदा । गुह्यानि । कर्तन । येन । देवासः । अमृतऽत्वं । आनशुः ॥ गर्भे । योषां । अदधुः । वत्सं । आसनि । अपीच्येन । मनसा । उत । जिह्वया । सः । विश्वाहा । सुऽमनाः । योग्याः । अभि । सिसासनिः । वनते । कारः । इत् । जितिं ॥ १४ ॥ तां । सु । ते । कीर्तिं । मघऽवन् । महिऽत्वा । यत् । त्वा । भीतेइति । रोदसीइति । अह्वयेतां । प्र । आवः । देवान् । आ । अतिरः । दासं । ओजः । प्रऽजायै । त्वस्यै । यत् ।

आशिक्षः । इंद्र ॥ यत् । अचरः । तन्वा । ववृधानः । बलानि । इंद्र । प्रऽब्रुवाणः । जनेषु । माया । इत् । सा । ते । यानि । युद्धानि । आहुः । न । अद्य । शत्रुं । ननु । पुरा । विवित्से ॥ के । ऊँइति । नु । ते । महिमनः । समस्य । अस्मत् । पूर्वे । ऋषयः । अंतं । आपुः । यत् । मातरं । च । पितरं । च । साकं । अजनयथाः । तन्वः । स्वायाः ॥ चत्वारि । ते । असुर्याणि । नाम । अदाभ्यानि । महिषस्य । संति । त्वं । अंग । तानि । विश्वानि । वित्से । येभिः । कर्माणि । मघऽवन् । चकर्थ ॥ त्वं । विश्वा । दधिषे । केवलानि । यानि । आविः । या । च । गुहा । वसूनि । कामं । इत् । मे । मघऽवन् । मा । वि । तारीः । त्वं । आऽज्ञाता । त्वं । इंद्र । असि । दाता ॥ यः । अदधात् । ज्योतिषि । ज्योतिः । अंतः । यः । असृजत् । मधुना । सं । मधूनि । अध । प्रियं । शूषं । इंद्राय । मन्म । ब्रह्मऽकृतः । बृहत्ऽउक्थात् । अवाचि ॥ १५ ॥ दूरे । तत् । नाम । गुह्यं । पराचैः ॥ ० ॥ अह्वयेतां । वयःऽधै । उत् । अस्तभ्नाः । पृथिवीं । द्यां । अभीके । भ्रातुः । पुत्रान् । मघऽवन् । तित्विषाणः ॥ महत् ॥ ० ॥ पुरुऽस्पृक् । येन । भूतं । जनयः । येन । भव्यं । प्रत्नं । जातं । ज्योतिः । यत् । अस्य । प्रियं । प्रियाः । सं । अविशंत । पंच ॥ आ । रोदसीइति । अपृणात् । आ । उत । मध्यं । पंच । देवान् । ऋतुऽशः । सप्तऽसप्त । चतुःऽत्रिंशता । पुरुधा । वि । चष्टे । सऽरूपेण । ज्योतिषा । विऽव्रतेन ॥ यत् । उषः । औच्छः । प्रथमा । विऽभानां । अजनयः । येन । पुष्टस्य । पुष्टं । यत् । ते । जामिऽत्वं । अवरं । परस्याः । महत् । महत्याः । असुरऽत्वं । एकं ॥ विऽधुं । दद्राणं । समने । बहूनां । युवानं । संतं । पलितः । जगार । देवस्य । पश्य । काव्यं । महिऽत्वा । अद्य । ममार । सः । ह्यः । सं । आन ॥ १६ ॥ शाक्मना । शाकः । अरुणः । सुऽपर्णः । आ । यः । महः । शूरः । सनात् । अनीळः । यत् । चिकेत । सत्यं । इत् । तत् ।

न । मोघं । वसु । स्पार्हं । उत । जेता । उत । दाता ॥ आ । एभिः । ददे । वृष्ण्या । पौंस्यानि । येभिः । औक्षत् । वृत्रऽहत्याय । वज्री । ये । कर्मणः । क्रियमाणस्य । मह्ना । ऋतेऽकर्मं । उत्ऽअजायंत । देवाः ॥ युजा । कर्माणि । जनयन् । विश्वऽओजाः । अशस्तिऽहा । विश्वऽमनाः । तुराषाट् । पीत्वी । सोमस्य । दिवः । आ । वृधानः । शूरः । निः । युधा । अधमत् । दस्यून् ॥ १७ ॥ इदं । ते । एकं । परः । ऊँइति । ते । एकं । तृतीयेन । ज्योतिषा । सं । विशस्व । संऽवेशने । तन्वः । चारुः । एधि । प्रियः । देवानां । परमे । जनित्रे । तनूः । ते । वाजिन् । तन्वं । नयंती । वामं । अस्मभ्यं । धातु । शर्म । तुभ्यं । अह्रुतः । महः । धरुणाय । देवान् । दिविऽइव । ज्योतिः । स्वं । आ । मिमीयाः ॥ वाजी । असि । वाजिनेन । सुऽवेनीः । सुवितः । स्तोमं । सुवितः । दिवं । गाः । सुवितः । धर्म । प्रथमा । अनु । सत्या । सुवितः । देवान् । सुवितः । अनु । पत्म ॥ महिम्नः । एषां । पितरः । चन । ईशिरे । देवाः । देवेषु । अदधुः । अपि । क्रतुं । सं । अविव्यचुः । उत । यानि । अत्विषुः । आ । एषां । तनूषु । नि । विविशुः । पुनरिति ॥ सहःऽभिः । विश्वं । परि । चक्रमुः । रजः । पूर्वा । धामानि । अमिता । मिमानाः । तनूषु । विश्वा । भुवना । नि । येमिरे । प्र । असारयंत । पुरुध । प्रऽजाः । अनु ॥ द्विधा । सूनवः । असुरं । स्वःऽविदं । आ । अस्थापयंत । तृतीयेन । कर्मणा । स्वां । प्रऽजां । पितरः । पित्र्यं । सहः । आ । अवरेषु । अदधुः । तंतुं । आऽततं ॥ नावा । न । क्षोदः । प्रऽदिशः । पृथिव्याः । स्वस्तिऽभिः । अति । दुःऽगानि । विश्वा । स्वां । प्रऽजां । बृहत्ऽउक्थः । महिऽत्वा । आ । अवरेषु । अदधात् । आ । परेषु ॥ १८ ॥ मा । प्र । गाम । पथः । वयं । मा । यज्ञात् । इंद्र । सोमिनः । मा । अंतरिति । स्थुः । नः । अरातयः ॥ यः । यज्ञस्य । प्रऽसाधनः । तंतुः । देवेषु । आऽततः । तं । आऽहुतं ।

नशीमहि ॥ मनः । नु । आ । हुवामहे । नाराशंसेन । सोमेन । पितॄणां । च । मन्मऽभिः ॥ आ । ते । एतु । मनः । पुनरिति । क्रत्वे । दक्षाय । जीवसे ॥ ० ॥ पुनः । नः । पितरः । मनः । ददातु । दैव्यः । जनः । जीवं । व्रातं । सचेमहि ॥ वयं । सोम । व्रते । तव । मनः । तनूषु । बिभ्रतः । प्रजाऽवन्तः । सचेमहि ॥ १९ ॥ यत् । ते । यमं । वैवस्वतं । मनः । जगाम । दूरकं । तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ यत् । ते । दिवं । यत् । पृथिवीं ॥ ० ॥ यत् । ते । भूमिं । चतुःऽभृष्टिं ॥ ० ॥ यत् । ते । चतस्रः । प्रऽदिशः ॥ ० ॥ यत् । ते । समुद्रं । अर्णवं ॥ ० ॥ यत् । ते । मरीचीः । प्रऽवतः ॥ ० ॥ २० ॥ यत् । ते । अपः । यत् । ओषधीः ॥ ० ॥ यत् । ते । सूर्यं । यत् । उषसं ॥ ० ॥ यत् । ते । पर्वतान् । बृहतः ॥ ० ॥ यत् । ते । विश्वं । इदं । जगत् ॥ ० ॥ यत् । ते । भूतं । च । भव्यं । च ॥ ० ॥ २१ ॥ प्र । तारि । आयुः । प्रऽतरं । नवीयः । स्थातारःऽइव । क्रतुऽमता । रथस्य । अध । च्यवानः । उत् । तवीति । अर्थं । पराऽतरं । सु । निःऽऋतिः । जिहीतां ॥ सामन् । नु । राये । निधिऽमत् । नु । अन्नं । करामहे । सु । पुरुध । श्रवांसि । ता । नः । विश्वानि । जरिता । ममत्तु ॥ ० ॥ अभि । सु । अर्यः । पौंस्यैः । भवेम । द्यौः । न । भूमिं । गिरयः । न । अज्रान् ॥ ० ॥ चिकेत ॥ ० ॥ मोइति । सु । नः । सोम । मृत्यवे । परा । दाः । पश्येम । नु । सूर्यं । उत्ऽचरन्तं । द्युऽभिः । हितः । जरिमा । सु । नः । अस्तु ॥ ० ॥ असुऽनीते । मनः । अस्मासु । धारय । जीवातवे । सु । प्र । तिर । नः । आयुः । रन्धि । नः । सूर्यस्य । संऽदृशि । घृतेन । त्वं । तन्वं । वर्धयस्व ॥ २२ ॥ असुऽनीते । पुनः । अस्मासु । चक्षुः । पुनरिति । प्राणं । इह । नः । धेहि । भोगं । ज्योक् । पश्येम । सूर्यं । उत्ऽचरन्तं । अनुऽमते । मृळय । नः । स्वस्ति ॥ पुनः । नः । असुं । पृथिवी । ददातु । पुनः ।

द्यौः । देवी । पुनः । अंतरिक्षं । पुनः । नः । सोमः । तन्वं । ददातु ।
पुनरिति । पूषा । पथ्यां । या । स्वस्तिः ॥ शं । रोदसीइति । सुऽ-
बंधवे । यह्वीइति । ऋतस्य । मातरा । भरतां । अप । यत् । रपः ।
द्यौः । पृथिवि । क्षमा । रपः । मोइति । सु । ते । किं । चन ।
आममत् ॥ अव । द्वकेइति । अव । त्रिका । दिवः । चरंति । भेषजा ।
क्षमा । चरिष्णु । एककं ॥ ० ॥ सं । इंद्र । ईरय । गां । अनड्वाहं ।
यः । आ । अवहत् । उशीनराण्याः । अनः ॥ ० ॥ २३ ॥ आ । जनं ।
त्वेषऽसंदृशं । माहीनानां । उपऽस्तुतं । अगन्म । बिभ्रतः । नमः ॥
असमातिं । निऽतोशनं । त्वेषं । निऽययिनं । रथं । भजेऽरथस्य ।
सत्ऽपतिं ॥ यः । जनान् । महिषान्ऽइव । अतिऽतस्थौ । पवीरवान् ।
उत । अपवीरवान् । युधा ॥ यस्य । इक्ष्वाकुः । उप । व्रते । रेवान् ।
मरायी । एधते । दिविऽइव । पंच । कृष्टयः ॥ इंद्र । क्षत्रा ।
असमातिषु । रथऽप्रोष्ठेषु । धारय । दिविऽइव । सूर्यं । दृशे ॥
अगस्त्यस्य । नत्ऽभ्यः । सप्तीइति । युनक्षि । रोहिता । पणीन् । नि ।
अक्रमीः । अभि । विश्वान् । राजन् । अराधसः ॥ २४ ॥ अयं । माता ।
अयं । पिता । अयं । जीवातुः । आ । अगमत् । इदं । तव । प्रऽसर्पणं ।
सुबंधोइतिसुऽबंधो । आ । इहि । निः । इहि ॥ यथा । युगं ।
वरत्रया । नह्यंति । धरुणाय । कं । एव । दाधार । ते । मनः ।
जीवातवे । न । मृत्यवे । अथोइति । अरिष्टऽतातये ॥ यथा । इयं ।
पृथिवी । मही । दाधार । इमान् । वनस्पतीन् ॥ ० ॥ यमात् । अहं ।
वैवस्वतात् । सुऽबंधोः । मनः । आ । अभरं ॥ ० ॥ न्यक् । वातः ।
अव । वाति । न्यक् । तपति । सूर्यः । नीचीनं । अघ्न्या । दुहे । न्यक् ।
भवतु । ते । रपः ॥ अयं । मे । हस्तः । भगऽवान् । अयं । मे । भगवत्ऽ-
तरः । अयं । मे । विश्वऽभेषजः । अयं । शिवऽअभिमर्शनः ॥ इति
चतुर्थोऽनुवाकः ॥ – :: – ॥ अथ पञ्चमोऽनुवाकः ॥ – :: – ॥
॥ २५ ॥ इदं । इत्था । रौद्रं । गूर्तऽवचाः । ब्रह्म । क्रत्वा ।

शच्या॑ । अ॒न्तः । आ॒जौ । क्राणा । यत् । अ॒स्य॒ । पि॒तरा॑ । मं॒ह॒ने॒ऽस्थाः । पर्ष॑त् । प॒क्थे । अह॑न् । आ । स॒प्त । होतॄ॑न् ॥ सः । इत् । दा॒नाय॑ । दभ्या॑य । व॒न्वन् । च्यवा॑नः । सूदैः॑ । अ॒मि॒मी॒त॒ । वेदि॑म् । तूर्व॑याणः । गू॒र्तऽव॑चःऽतमः । क्षोदः॑ । न । रेतः॑ । इ॒तःऽऊ॑ति । सि॒ञ्च॒त् ॥ मनः॑ । न । येषु॑ । हव॑नेषु । ति॒ग्मम् । विपः॑ । शच्या॑ । व॒नु॒थः । द्रव॑न्ता । आ । यः । शर्या॑भिः । तु॒वि॒ऽनृ॒म्णः । अ॒स्य॒ । अश्री॑णीत । आ॒ऽदिश॑म् । गभ॑स्तौ ॥ कृ॒ष्णा । यत् । गोषु॑ । अ॒रु॒णीषु॑ । सीद॑त् । दि॒वः । नपा॑ता । अ॒श्वि॒ना॒ । हु॒वे॒ । वा॒म् । वी॒तम् । मे॒ । य॒ज्ञम् । आ । ग॒त॒म् । मे॒ । अन्न॑म् । व॒व॒न्वांसा॑ । न । इष॑म् । अस्मृ॑तध्रू॒ इत्यस्मृ॑तऽध्रू ॥ प्रथि॑ष्ट । यस्य॑ । वी॒रऽक॑र्मम् । इ॒ष्णत् । अनु॑ऽस्थितम् । नु । नर्यः॑ । अप॑ । औ॒ह॒त् । पु॒नरिति॑ । तत् । आ । वृ॒ह॒ति॒ । यत् । क॒नाया॑ः । दु॒हि॒तुः । आः । अनु॑ऽभृतम् । अ॒न॒र्वा ॥ २९ ॥ म॒ध्या । यत् । कर्त्व॑म् । अभ॑वत् । अ॒भीके॑ । काम॑म् । कृ॒ण्वा॒ने । पि॒तरि॑ । यु॒व॒त्याम् । म॒ना॒नक् । रेतः॑ । ज॒हु॒तुः । वि॒ऽयन्ता॑ । सानौ॑ । नि॒ऽसि॑क्तम् । सु॒ऽकृ॒तस्य॑ । योनौ॑ ॥ पि॒ता । यत् । स्वाम् । दु॒हि॒तर॑म् । अ॒धि॒ऽस्कन् । क्ष्म॒या । रेतः॑ । सं॒ऽज॒ग्मा॒नः । नि । सि॒ञ्च॒त् । सु॒ऽआ॒ध्यः॑ । अ॒ज॒न॒य॒न् । ब्रह्म॑ । दे॒वाः । वास्तोः॑ । पति॑म् । व्र॒त॒ऽपाम् । निः । अ॒त॒क्ष॒न् ॥ सः । ई॒म् । वृषा॑ । न । फेन॑म् । अ॒स्य॒त् । आ॒जौ । स्मत् । आ । परा॑ । ऐ॒त् । अप॑ । द॒भ्रऽचे॑ताः । सर॑त् । प॒दा । न । दक्षि॑णा । प॒रा॒ऽवृक् । न । ताः । नु । मे॒ । पृ॒श॒न्यः॑ । ज॒गृ॒भ्रे॒ ॥ म॒क्षु । न । वह्निः॑ । प्र॒ऽजायाः॑ । उ॒प॒ब्दिः । अ॒ग्निम् । न । न॒ग्नः । उप॑ । सी॒द॒त् । ऊध॑ः । सनि॑ता । इ॒ध्मम् । सनि॑ता । उ॒त । वाज॑म् । सः । ध॒र्ता । ज॒ज्ञे॒ । सह॑सा । य॒वि॒ऽयुत् ॥ म॒क्षु । क॒नायाः॑ । स॒ख्यम् । नव॑ऽग्वाः । ऋ॒तम् । वद॑न्तः । ऋ॒तऽयु॑क्तिम् । अ॒ग्म॒न् । द्वि॒ऽबर्ह॑सः । ये । उप॑ । गोप॑म् । आ । अगुः॑ । अ॒द॒क्षि॒णासः॑ । अच्यु॑ता । दु॒धु॒क्ष॒न् ॥ २८ ॥ ० ॥ नवी॑यः । राध॑ः । न । रेतः॑ । ऋ॒तम् । इत् । तु॒र॒ण्य॒न् ॥ ० ॥ प॒श्वा । यत् । प॒श्चा । वि॒ऽयु॑ता । बु॒धन्त॑ । इति॑ । ब्रवी॑ति । व॒क्तरि॑ । ररा॑णः ।

वसोः । वसुऽत्वा । कारवः । अनेहा । विश्वं । विवेष्टि । द्रविणं । उप । क्षु ॥ तत् । इत् । नु । अस्य । परिऽसद्वानः । अग्मन् । पुरु । सदंतः । नार्सदं । बिभित्सन् । वि । शुष्णस्य । संऽग्रथितं । अनर्वा । विदत् । पुरुऽप्रजातस्य । गुहा । यत् ॥ भर्गः । ह । नाम । उत । यस्य । देवाः । स्वः । न । ये । त्रिऽसधस्थे । निऽसेदुः । अग्निः । ॥ ० ॥ जातऽवेदाः । श्रुधि । नः । होतः । ऋतस्य । होता । अध्रुक् ॥ उत । त्या । मे । रौद्रौ । अर्चिऽमंता । नासत्यौ । इंद्र । गर्तये । यजध्यै । मनुष्वत् । वृक्तऽबर्हिषे । रराणा । मंदूइति । हितऽप्रयसा । विक्षु । यज्यूइति ॥ २८ ॥ अयं । स्तुतः । राजा । वंदि । वेधाः । अपः । च । विप्रः । तरति । स्वऽसेतुः । सः । कक्षीवंतं । रेजयत् । सः । अग्निं । नेमिं । न । चक्रं । अर्वतः । रघुऽद्रु ॥ सः । द्विऽबंधुः । वैतरणः । यष्टा । सबःऽधुं । धेनुं । अस्वं । दुहध्यै । सं । यत् । मित्रावरुणा । वृंजे । उक्थैः । ज्येष्ठेभिः । अर्यमणं । वरूथैः ॥ तत्ऽबंधुः । सूरिः । दिवि । ते । धियंऽधाः । नाभानेदिष्ठः । रपति । प्र । वेनन् । सा । नः । नाभिः । परमा । अस्य । वा । घ । अहं । तत् । पश्चा । कतिथः । चित् । आस ॥ इयं । मे । नाभिः । इह । मे । सधऽस्थं । इमे । मे । देवाः । अयं । अस्मि । सर्वः । द्विऽजाः । अह । प्रथमऽजाः । ऋतस्य । इदं । धेनुः । अदुहत् । जायमाना ॥ अध । आसु । मंद्रः । अरतिः । विभाऽवा । अव । स्यति । द्विऽवर्तनिः । वनेषाट् । ऊर्ध्वा । यत् । श्रेणिः । न । शिशुः । दन् । मक्षु । स्थिरं । शेऽवृधं । सूत । माता ॥ २९ ॥ अध । गावः । उपऽमाति । कनायाः । अनु । श्वांतस्य । कस्य । चित् । परा । ईयुः । श्रुधि । त्वं । सुऽद्रविणः । नः । त्वं । याट् । आश्वऽघ्नस्य । ववृधे । सूनृताभिः ॥ अध । त्वं । इंद्र । विद्धि । अस्मान् । महः । राये । नृऽपते । वज्रऽबाहुः ॥ ० ॥ अनेहसः । ते । हरिऽवः । अभिष्टौ ॥ अध । यत् । राजाना । गोऽइष्टौ । सरत् । सरण्युः । कारवे ।

जरण्युः । विप्रः । प्रेष्ठः । सः । हि । एषां । बभूव । परां । च । वक्षत् । उत । पर्षत् । एनान् ॥ अधं । नु । अस्य । जेन्यस्य । पुष्टौ । वृथां । रेभंतः । ईमहे । तत् । ऊँइति । नु । सरण्युः । अस्य । सूनुः । अश्वः । विप्रः । च । असि । श्रवसः । च । सातौ ॥ युवोः । यदि । सख्याय । अस्मेइति । शर्धाय । स्तोमं । जुजुषे । नमस्वान् । विश्वत्र । यस्मिन् । आ । गिरः । संऽईचीः । पूर्वीःऽइव । गातुः । दाशत् । सूनृतायै ॥ सः । गृणानः । अत्ऽभिः । देवऽवान् । इति । सुऽबंधुः । नमसा । सुऽउक्तैः । वर्धत् । उक्थैः । वचःऽभिः । आ । हि । नूनं । वि । अध्वा । एति । पयसः । उस्रियायाः ॥ ते । ऊँइति । सु । नः । महः । यजत्राः । भूत । देवासः । ऊतये । सऽजोषाः । ये । वाजान् । अनयत । विऽयंतः । ये । स्थ । निऽचेतारः । अमूराः ॥ ३० ॥

इति अष्टमाष्टके प्रथमोऽध्यायः ॥ १ ॥



## अथ द्वितीयोऽध्यायः

हरिः ॐ ॥ ये । यज्ञेन । दक्षिणया । संऽअक्ताः । इंद्रस्य । सख्यं । अमृतऽत्वं । आनश । तेभ्यः । भद्रं । अंगिरसः । वः । अस्तु । प्रति । गृभ्णीत । मानवं । सुऽमेधसः ॥ ये । उत्ऽआजन् । पितरः । गोऽमयं । वसु । ऋतेन । अभिंदन् । परिऽवत्सरे । वलं । दीर्घायुऽत्वं ॥ ० ॥ ये । ऋतेन । सूर्यं । आ । अरोहयन् । दिवि । अप्रथयन् । पृथिवीं । मातरं । वि । सुप्रजाःऽत्वं ॥ ० ॥ अयं । नाभा । वदति । वल्गु । वः । गृहे । देवऽपुत्राः । ऋषयः । तत् । शृणोतन । सुऽब्रह्मण्यं ॥ ४ ॥ विऽरूपासः । इत् । ऋषयः । ते । इत् ।

गंभीरऽवेपसः । ते । अंगिरसः । सूनवः । ते । अग्नेः । परि । जज्ञिरे ॥ १ ॥ ये । अग्नेः । परि । जज्ञिरे । विऽरूपासः । दिवः । परि । नवऽग्वः । नु । दशऽग्वः । अंगिरःऽतमः । सचा । देवेषु । मंहते ॥ इंद्रेण । युजा । निः । सृजंत । वाघतः ॥ ० ॥ सहस्रं । मे । ददतः । अष्टऽकर्ण्यः ॥ ० ॥ प्र । नूनं । जायतां । अयं । मनुः । तोक्मऽइव । रोहतु । यः । सहस्रं । शतऽअश्वं । सद्यः । दानाय । मंहते ॥ न । तं । अश्नोति । कः । चन । दिवःऽइव । सानु । आऽरभं । सावर्ण्यस्य । दक्षिणा । वि । सिंधुःऽइव । पप्रथे ॥ उत । दासा । परिऽविषे । स्मद्दिष्टीइतिस्मत्ऽदिष्टी । गोऽपरीणसा । यदुः । तुर्वः । च । ममहे ॥ सहस्रऽदाः । ग्रामऽनीः । मा । रिषत् । मनुः । सूर्येण । अस्य । यतमाना । एतु । दक्षिणा । सावर्णेः । देवाः । प्र । तिरंतु । आयुः । यस्मिन् । अश्रांताः । असनाम । वाजं ॥ २ ॥ पराऽवतः । ये । दिधिषंते । आप्यं । मनुऽप्रीतासः । जनिम । विवस्वतः । ययातेः । ये । नहुष्यस्य । बर्हिषि । देवाः । आसते । ते । अधि । ब्रुवंतु । नः ॥ विश्वा । हि । वः । नमस्यानि । वंद्या । नामानि । देवाः । उत । यज्ञियानि । वः । ये । स्थ । जाताः । अदितेः । अत्ऽभ्यः । परि । ये । पृथिव्याः । ते । मे । इह । श्रुत । हवं ॥ येभ्यः । माता । मधुऽमत् । पिन्वते । पयः । पीयूषं । द्यौः । अदितिः । अद्रिऽबर्हाः । उक्थऽशुष्मान् । वृषऽभरान् । सुऽअप्नसः । तान् । आदित्यान् । अनु । मद । स्वस्तये ॥ नृऽचक्षसः । अनिऽमिषंतः । अर्हणा । बृहत् । देवासः । अमृतऽत्वं । आनशुः । ज्योतिःऽरथाः । अहिऽमायाः । अनागसः । दिवः । वर्ष्माणं । वसते । स्वस्तये ॥ संऽराजः । ये । सुऽवृधः । यज्ञं । आऽययुः । अपरिऽहृताः । दधिरे । दिवि । क्षयं । तान् । आ । विवास । नमसा । सुवृक्तिऽभिः । महः । आदित्यान् । अदितिं । स्वस्तये ॥ ३ ॥ कः । वः । स्तोमं । राधति । यं । जुजोषथ । विश्वे । देवासः । मनुषः ।

यति । स्थन । कः । वः । अध्वरं । तुविऽजाताः । अरं ।
करत् । यः । नः । पर्षत् । अति । अंहः । स्वस्तये ॥ येभ्यः । होत्रां ।
प्रथमां । आऽयेजे । मनुः । समिद्धऽअग्निः । मनसा । सप्त । होतृऽ-
भिः । ते । आदित्याः । अभयं । शर्म । यच्छत । सुऽगा । नः ।
कर्त । सुऽपथा । स्वस्तये ॥ ये । ईशिरे । भुवनस्य । प्रऽचेतसः ।
विश्वस्य । स्थातुः । जगतः । च । मंतवः । ते । नः । कृतात् । अकृतात् ।
एनसः । परि । अद्य । देवासः । पिपृत । स्वस्तये ॥ भरेषु । इंद्रं ।
सुऽहवं । हवामहे । अंहःऽमुचं । सुऽकृतं । दैव्यं । जनं । अग्निं । मित्रं ।
वरुणं । सातये । भगं । द्यावापृथिवीइति । मरुतः । स्वस्तये ॥ सुऽ-
त्रामाणं । पृथिवीं । द्यां । अनेहसं । सुऽशर्माणं । अदितिं । सुऽप्रणीतिं ।
दैवीं । नावं । सुऽअरित्रां । अनागसं । अस्रवंतीं । आ । रुहेम । स्वस्तये ॥
॥ ४ ॥ विश्वे । यजत्राः । अधि । वोचत । ऊतये । त्रायध्वं । नः । दुःऽ-
एवायाः । अभिऽहुतः । सत्यया । वः । देवऽहूत्या । हुवेम । शृण्वतः ।
देवाः । अवसे । स्वस्तये ॥ अप । अमीवां । अप । विश्वां । अनाहुतिं ।
अप । अरातिं । दुःऽविदत्रां । अघऽयतः । आरे । देवाः । द्वेषः ।
अस्मत् । युयोतन । उरु । नः । शर्म । यच्छत । स्वस्तये ॥ अरिष्टः ।
सः । मर्तः । विश्वः । एधते ॥ ० ॥ यं । आदित्यासः । नयथ ।
सुनीतिऽभिः । अति । विश्वानि । दुःऽइता । स्वस्तये ॥ ० ॥ शूरऽ-
साता । मरुतः । हिते । धने । प्रातःऽयावानं । रथं । इंद्र । सानसिं ।
अरिष्यंतं । आ । रुहेम । स्वस्तये ॥ स्वस्ति । नः । पथ्यासु । धन्वऽ-
ऽसु । स्वस्ति । अप्ऽसु । वृजने । स्वःऽवति । स्वस्ति । नः । पुत्रऽ-
कृथेषु । योनिषु । स्वस्ति । राये । मरुतः । दधातन ॥ स्वस्तिः । इत् ।
हि । प्रऽपथे । श्रेष्ठा । रेक्णस्वती । अभि । या । वामं । एति । सा ।
नः । अमा । सोइति । अरणे । नि । पातु । सुऽआवेशा । भवतु ।
देवऽगोपा ॥ एव । प्लतेः । सूनुः । अवीवृधत् । वः । विश्वे ।
आदित्याः । अदिते । मनीषी । ईशानासः । नरः । अमर्त्येन ।

अस्तावि । जनः । दिव्यः । गयेन ॥ ५ ॥ कथा । देवानां । कतमस्य ।
यामनि । सुऽमंतु । नाम । शृण्वतां । मनामहे । कः । मृळाति ।
कतमः । नः । मयः । करत् । कतमः । ऊती । अभि । आ ।
ववर्तति ॥ क्रतुऽयंति । क्रतवः । हृत्ऽसु । धीतयः । वेनंति । वेनाः ।
पतयंति । आ । दिशः । न । मर्डिता । विद्यते । अन्यः । एभ्यः ।
देवेषु । मे । अधि । कामाः । अयंसत ॥ नराशंसं । वा । पूषणं ।
अगोह्यं । अग्निं । देवऽइद्धं । अभि । अर्चसे । गिरा । सूर्यामासा ।
चंद्रमसा । यमं । दिवि । त्रितं । वातं । उषसं । अक्तुं । अश्विना ।
कथा । कविः । तुविऽरवान् । कया । गिरा । बृहस्पतिः । वावृधते ।
सुवृक्तिऽभिः । अजः । एकऽपात् । सुऽहवेभिः । ऋक्वऽभिः । अहिः ।
शृणोतु । बुध्न्यः । हवीमनि ॥ दक्षस्य । वा । अदिते । जन्मनि ।
व्रते । राजाना । मित्रावरुणा । आ । विवाससि । अतूर्तऽपंथाः ।
पुरुऽरथः । अर्यमा । सप्तऽहोता । विषुऽरूपेषु । जन्मऽसु ॥ ६ ॥ ते ।
नः । अर्वंतः । हवनऽश्रुतः । हवं । विश्वे । शृण्वंतु । वाजिनः । मितऽ-
द्रवः । सहस्रऽसाः । मेधसाताऽइव । त्मना । महः । ये । धनं । संऽ-
इथेषु । जभ्रिरे ॥ ० ॥ पुरंऽधिं । स्तोमैः । कृणुध्वं । सख्याय । पूषणं ।
ते । हि । देवस्य । सवितुः । सवीमनि । क्रतुं । सचंते । सऽचितः ।
सऽचेतसः ॥ त्रिः । सप्त । सस्राः । नद्यः । महीः । अपः । वनस्पतीन् ।
पर्वतान् । अग्निं । ऊतये । कृशानुं । अस्तॄन् । तिष्यं । सधऽस्थे ।
आ । रुद्रं । रुद्रेषु । रुद्रियं । हवामहे ॥ सरस्वती । सरयुः । सिंधुः ।
ऊर्मिऽभिः । महः । महीः । अवसा । आ । यंतु । वक्षणीः ॥ देवीः ।
आपः । मातरः । सूदयित्न्वः । घृतऽवत् । पयः । मधुऽमत् । नः ।
अर्चत ॥ उत । माता । बृहत्ऽदिवा । शृणोतु । नः । त्वष्टा । देवेभिः ।
जनिऽभिः । पिता । वचः । ऋभुक्षाः । वाजः । रथःऽपतिः । भगः ।
रण्वः । शंसः । शशमानस्य । पातु । नः ॥ ७ ॥ ० ॥ भद्रा । रुद्राणां ।
मरुतां । उपऽस्तुतिः । गोभिः । स्याम । यशसः । जनेषु । आ ।

सदा । देवासः । इळया । सचेमहि ॥ यां । मे । धियं । मरुतः । इंद्र । देवाः । अददात । वरुण । मित्र । यूयं । तां । पीपयत । पयसाऽइव । धेनुं । कुवित् । गिरः । अधि । रथे । वहाथ ॥ कुवित् । अंग । प्रति । यथा । चित् । अस्य । नः । सऽजात्यस्य । मरुतः । बुबोधथ । नाभा । यत्र । प्रथमं । संऽनसामहे । तत्र । जामिऽत्वं । अदितिः । दधातु । नः ॥ ० ॥ मातरा । महीइति । देवीइति । देवान् । जन्मना । यज्ञियेइति । इतः । उभेइति । बिभृतः । उभयं । भरीमऽभिः । पुरु । रेतांसि । पितृऽभिः । च । सिंचतः ॥ वि । सा । होत्रा । विश्वं । अश्नोति । वार्यं । बृहस्पतिः । अरमतिः । पनीयसी । ग्रावा । यत्र । मधुऽसुत् । उच्यते । बृहत् । अवीवशंत । मतिऽभिः । मनीषिणः ॥ एव । कविः । तुविऽरवान् । ऋतऽज्ञाः । द्रविणस्युः । द्रविणसः । चकानः । उक्थेभिः । अत्र । मतिऽभिः । च । विप्रः । अपीपयत् । गयः । दिव्यानि । जन्म ॥ ० ॥ ८ ॥ अग्निः । इंद्रः । वरुणः । मित्रः । अर्यमा । वायुः । पूषा । सरस्वती । सऽजोषसः । आदित्याः । विष्णुः । मरुतः । स्वः । बृहत् । सोमः । रुद्रः । अदितिः । ब्रह्मणः । पतिः ॥ इंद्राग्नीइति । वृत्रऽहत्येषु । सत्पतीइतिसत्ऽपती । मिथः । हिन्वाना । तन्वा । संऽओकसा । अंतरिक्षं । महि । आ । पप्रुः । ओजसा । सोमः । घृतऽश्रीः । महिमानं । ईरयन् ॥ तेषां । हि । मह्ना । महतां । अनर्वणां । स्तोमान् । इयर्मि । ऋतऽज्ञाः । ऋतऽवृधां । ये । अप्सवं । अर्णवं । चित्रऽराधसः । ते । नः । रासंतां । महये । सुऽमित्र्याः ॥ स्वःऽनरं । अंतरिक्षाणि । रोचना । द्यावाभूमीइति । पृथिवीं । स्कंभुः । ओजसा । पृक्षाःऽइव । महयंतः । सुऽरातयः । देवाः । स्तवंते । मनुषाय । सूरयः ॥ मित्राय । शिक्ष । वरुणाय । दाशुषे । या । संऽराजा । मनसा । न । प्रऽयुच्छतः । ययोः । धाम । धर्मणा । रोचते । बृहत् । ययोः । उभेइति । रोदसीइति । नाधसीइति । वृतौ ॥ ९ ॥ या । गौः । वर्तनिं । परिऽएति । निःऽकृतं । पयः ।

दुहाना । व्रतऽनीः । अवारतः । सा । प्रऽब्रुवाणा । वरुणाय । दाशुषे ।
देवेभ्यः । दाशत् । हविषा । विवस्वते ॥ दिवक्षसः । अग्निऽजिह्वाः ।
ऋतऽवृधः । ऋतस्य । योनिं । विऽमृशंतः । आसते । द्यां । स्कभित्वी ।
अपः । आ । चक्रुः । ओजसा । यज्ञं । जनित्वी । तन्वि । नि ।
ममृजुः ॥ परिऽक्षिता । पितरा । पूर्वजावरीइतिपूर्वऽजावरी । ऋतस्य ।
योना । क्षयतः । संऽओकसा । द्यावापृथिवीइति । वरुणाय । सव्रते-
इतिसऽव्रते । घृतऽवत् । पयः । महिषाय । पिन्वतः ॥ पर्जन्यावाता ।
वृषभा । पुरीषिणा । इंद्रवायूइति । वरुणः । मित्रः । अर्यमा । देवान् ।
आदित्यान् । अदितिं । हवामहे । ये । पार्थिवासः । दिव्यासः । अप्ऽ-
सु । ये ॥ त्वष्टारं । वायुं । ऋभवः । यः । ओहते । दैव्या । होतारौ ।
उषसं । स्वस्तये । बृहस्पतिं । वृत्रऽखादं । सुऽमेधसं । इंद्रियं ।
सोमं । धनऽसाः । ऊँइति । ईमहे ॥ १० ॥ ब्रह्म । गां । अश्वं ।
जनयंतः । ओषधीः । वनस्पतीन् । पृथिवीं । पर्वतान् । अपः । सूर्यं ।
दिवि । रोहयंतः । सुऽदानवः । आर्या । व्रता । विऽसृजंतः । अधि ।
क्षमि । भुज्युं । अंहसः । पिपृथः । निः । अश्विना । श्यावं । पुत्रं ।
वध्रिऽमत्याः । अजिन्वतं । कमऽद्युवं । विऽमदाय । ऊहथुः । युवं ।
विष्णाप्वं । विश्वकाय । अव । सृजथः ॥ पावीरवी । तन्यतुः । एकऽ-
पात् । अजः । दिवः । धर्ता । सिंधुः । आपः । समुद्रियः । विश्वे ।
देवासः । शृणवन् । वचांसि । मे । सरस्वती । सह । धीभिः । पुरंऽ-
ध्या ॥ ० ॥ रातिऽसाचः । अभिऽसाचः । स्वःऽविदः । स्वः । गिरः ।
ब्रह्म । सुऽउक्तं । जुषेरत । देवान् । वसिष्ठः । अमृतान् । ववंदे । ये ।
विश्वा । भुवना । अभि । प्रऽतस्थुः ॥ ० ॥ ११ ॥ देवान् । हुवे ।
बृहत्ऽश्रवसः । स्वस्तये । ज्योतिःऽकृतः । अध्वरस्य । प्रऽचेतसः ।
ये । ववृधुः । प्रऽतरं । विश्वऽवेदसः । इंद्रऽज्येष्ठासः । अमृताः ।
ऋतऽवृधः ॥ इंद्रऽप्रसूताः । वरुणऽप्रशिष्टाः । ये । सूर्यस्य । ज्योतिषः ।
भागं । आनशुः । मरुत्ऽगणे । वृजने । मन्म । धीमहि । माघोने ।

यज्ञं । जनयंत । सूरयः ॥ इंद्रः । वसुऽभिः । परि । पातु । नः । गयं । आदित्यैः । नः । अदितिः । शर्म । यच्छतु । रुद्रः । रुद्रेभिः । देवः । मृळयाति । नः । त्वष्टा । नः । ग्नाभिः । सुविताय । जिन्वतु ॥ अदितिः । द्यावापृथिवीइति । ऋतं । महत् । इंद्राविष्णूइति । मरुतः । स्वः । बृहत् । देवान् । आदित्यान् । अवसे । हवामहे । वसून् । रुद्रान् । सवितारं । सुऽदंससं ॥ सरस्वान् । धीभिः । वरुणः । धृतऽव्रतः । पूषा । विष्णुः । महिमा । वायुः । अश्विना । ब्रह्मऽकृतः । अमृताः । विश्वऽवेदसः । शर्म । नः । यंसन् । त्रिऽवरूथं । अंहसः ॥ १२ ॥

वृषा । यज्ञः । वृषणः । संतु । यज्ञियाः । वृषणः । देवाः । वृषणः । हविःऽकृतः । वृषणा । द्यावापृथिवीइति । ऋतवरीइत्यृतऽवरी । वृषा । पर्जन्यः । वृषणः । वृषऽस्तुभः ॥ अग्नीषोमा । वृषणा । वाजऽसातये । पुरुऽप्रशस्ता । वृषणौ । उप । ब्रुवे । यौ । ईजिरे । वृषणः । देवऽयज्यया । ता । नः । शर्म । त्रिऽवरूथं । वि । यंसतः ॥ धृतऽव्रताः । क्षत्रियाः । यज्ञनिःऽकृतः । बृहत्ऽदिवाः । अध्वराणां । अभिऽश्रियः । अग्निऽहोतारः । ऋतऽसापः । अद्रुहः । अपः । असृजन् । अनु । वृत्रऽतूर्ये ॥ द्यावापृथिवीइति । जनयन् । अभि । व्रता । आपः । ओषधीः । वनिनानि । यज्ञिया । अंतरिक्षं । स्वः । आ । पप्रुः । ऊतये । वशं । देवासः । तन्वि । नि । ममृजुः ॥ धर्तारः । दिवः । ऋभवः । सुऽहस्ताः । वातापर्जन्या । महिषस्य । तन्यतोः । आपः । ओषधीः । प्र । तिरंतु । नः । गिरः । भगः । रातिः । वाजिनः । यंतु । मे । हवं ॥ १३ ॥ समुद्रः । सिंधुः । रजः । अंतरिक्षं । अजः । एकऽपात् । तनयित्नुः । अर्णवः । अहिः । बुध्न्यः । शृणवत् । वचांसि । मे । विश्वे । देवासः । उत । सूरयः । मम ॥ स्याम । वः । मनवः । देवऽवीतये । प्रांचं । नः । यज्ञं । प्र । नयत । साधुऽया । आदित्याः । रुद्राः । वसवः । सुऽदानवः । इमा । ब्रह्म । शस्यमानानि । जिन्वत ॥ ॥ ० ॥ पुरःऽहिता । ऋतस्य । पंथां । अनु । एमि । साधुऽया ।

क्षेत्रस्य । पतिं । प्रतिऽवेशं । ईमहे । विश्वान् । देवान् । अमृतान् । अप्रऽयुच्छतः ॥ वसिष्ठासः । पितृऽवत् । वाचं । अक्रत । देवान् । ईळानाः । ऋषिऽवत् । स्वस्तये । प्रीताःऽइव । ज्ञातयः । कामं । आऽइत्य । अस्मेइति । देवासः । अव । धूनुत । वसु ॥ ० ॥ १४ ॥

इमां । धियं । सप्तऽशीर्ष्णीं । पिता । नः । ऋतऽप्रजातां । बृहतीं । अविंदत् । तुरीयं । स्वित् । जनयत् । विश्वऽजन्यः । अयास्यः । उक्थं । इंद्राय । शंसन् ॥ ऋतं । शंसंतः । ऋजु । दीध्यानाः ॥ ० ॥ विप्रं । पदं । अंगिरसः । दधानाः । यज्ञस्य । धाम । प्रथमं । मनंत ॥ हंसैःऽइव । सखिऽभिः । वावदत्ऽभिः । अश्मन्ऽमयानि । नहना । विऽअस्यन् । बृहस्पतिः । अभिऽकनिक्रदत् । गाः । उत । प्र । अस्तौत् । उत् । च । विद्वान् । अगायत् ॥ अवः । द्वाभ्यां । परः । एकया । गाः । गुहा । तिष्ठंतीः । अनृतस्य । सेतौ । बृहस्पतिः । तमसि । ज्योतिः । इच्छन् । उत् । उस्राः । आ । अकः । वि । हि । तिस्रः । आवरित्यावः ॥ विऽभिद्य । पुरं । शयथा । ईं । अपाचीं । निः । त्रीणि । साकं । उदऽधेः । अकृंतत् । बृहस्पतिः । उषसं । सूर्यं । गां । अर्कं । विवेद । स्तनयन्ऽइव । द्यौः ॥ इंद्रः । वलं । रक्षितारं । दुघानां । करेणऽइव । वि । चकर्त । रवेण । स्वेदांजिऽभिः । आऽशिरं । इच्छमानः । अरोदयत् । पणिं । आ । गाः । अमुष्णात् ॥ १५ ॥ सः । ईं । सत्येभिः । सखिऽभिः । शुचत्ऽभिः । गोऽधायसं । वि । धनऽसैः । अदर्दरीत्यदर्दः । ब्रह्मणः । पतिः । वृषऽभिः । वराहैः । घर्मऽस्वेदेभिः । द्रविणं । वि । आनट् ॥ ते । सत्येन । मनसा । गोऽपतिं । गाः । इयानासः । इषणयंत । धीभिः । बृहस्पतिः । मिथःऽअवद्यपेभिः । उत् । उस्रियाः । असृजत । स्वयुक्ऽभिः ॥ तं । वर्धयंतः । मतिऽभिः । शिवाभिः । सिंहंऽइव । नानदतं । सधऽस्थे । बृहस्पतिं । वृषणं । शूरऽसातौ । भरेऽभरे । अनु । मदेम । जिष्णुं ॥ यदा । वलं । अस्नतत । विश्वऽरूपं । आ । द्यां । अरुक्षत् ।

उत्ऽतरणि । सद्म । बृहस्पतिं । वृषणं । वर्धयंतः । नाना । संतः । बिभ्रतः । ज्योतिः । आसा ॥ सत्यां । आऽशिषं । कृणुत । वयःऽधै । कीरिं । चित् । हि । अवथः । स्वेभिः । एवैः । पश्चा । मृधः । अप । भवंतु । विश्वाः । तत् । रोदसीइति । शृणुतं । विश्वमिन्वेइतिविश्वंऽइन्वे ॥ इंद्रः । मह्ना । महतः । अर्णवस्य । वि । मूर्धानं । अभिनत् । अर्बुदस्य ॥ ० ॥ १६ ॥ उदप्ऽप्रुतः । न । वयः । रक्षमाणाः । वावदतः । अभ्रियस्यऽइव । घोषाः । गिरिऽभ्रजः । न । ऊर्मयः । मदंतः । बृहस्पतिं । अभि । अर्काः । अनावन् ॥ सं । गोभिः । आंगिरसः । नक्षमाणः । भगःऽइव । इत् । अर्यमणं । निनाय । जने । मित्रः । न । दंपतीइतिदंऽपती । अनक्ति । बृहस्पते । वाजय । आशून्ऽइव । आजौ ॥ साधुऽअर्याः । अतिथिनीः । इषिराः । स्पार्हाः । सुऽवर्णाः । अनवद्यऽरूपाः । बृहस्पतिः । पर्वतेभ्यः । विऽतूर्य । निः । गाः । ऊपे । यवंऽइव । स्थिविऽभ्यः ॥ आऽप्रुषायन् । मधुना । ऋतस्य । योनिं । अवऽक्षिपन् । अर्कः । उल्काम्ऽइव । द्योः । बृहस्पतिः । उद्धरन् । अश्मनः । गाः । भूम्याः । उद्नाऽइव । वि । त्वचं । बिभेद ॥ अप । ज्योतिषा । तमः । अंतरिक्षात् । उद्नः । शीपालंऽइव । वातः । आजत् । बृहस्पतिः । अनुऽमृश्य । वलस्य । अभ्रंऽइव । वातः । आ । चक्रे । आ । गाः ॥ यदा । वलस्य । पीयतः । जसुं । भेत् । बृहस्पतिः । अग्नितपःऽभिः । अर्कैः । दत्ऽभिः । न । जिह्वा । परिऽविष्टं । आदत् । आविः । निऽधीन् । अकृणोत् । उस्रियाणां ॥ १७ ॥ बृहस्पतिः । अमत । हि । त्यत् । आसां । नाम । स्वरीणां । सदने । गुहा । यत् । आंडाऽइव । भित्वा । शकुनस्य । गर्भं । उत् । उस्रियाः । पर्वतस्य । त्मना । आजत् ॥ अश्ना । अपिऽनद्धं । मधु । परि । अपश्यत् । मत्स्यं । न । दीने । उदनि । क्षियंतं । निः । तत् । जभार । चमसं । न । वृक्षात् । बृहस्पतिः । विऽरवेण । विऽकृत्य ॥ सः । उषां ।

अविंदत् । सः । स्व१रितिस्वः । सः । अग्निं । सः । अर्केण । वि । बबाधे । तमांसि । बृहस्पतिः । गोऽवपुषः । वलस्य । निः । मज्जानं । न । पर्वणः । जभार ॥ हिमाऽइव । पर्णा । मुषिता । वनानि । बृहस्पतिना । अकृपयत् । वलः । गाः । अनानुऽकृत्यं । अपुनरिति । चकार । यात् । सूर्यामासा । मिथः । उत्ऽचरातः ॥ अभि । श्यावं । न । कृशनेभिः । अश्वं । नक्षत्रेभिः । पितरः । द्यां । अपिंशन् । रात्र्यां । तमः । अदधुः । ज्योतिः । अहन् । बृहस्पतिः । भिनत् । अद्रिं । विदत् । गाः ॥ इदं । अकर्म । नमः । अभ्रियाय । यः । पूर्वीः । अनु । आऽनोनवीति । बृहस्पतिः । सः । हि । गोभिः । सः । अश्वैः । सः । वीरेभिः । सः । नृऽभिः । नः । वयः । धात् ॥ इति पञ्चमोऽनुवाकः ॥ – :: – ॥ अथ षष्ठोऽनुवाकः ॥ – :: – ॥ १८ ॥ भद्राः । अग्नेः । वध्रिऽअश्वस्य । संऽदृशः । वामी । प्रऽनीतिः । सुऽरणाः । उपऽइतयः । यत् । ईं । सुऽमित्राः । विशः । अग्रे । इंधते । घृतेन । आऽहुतः । जरते । दविद्युतत् ॥ घृतं । अग्नेः । वध्रिऽअश्वस्य । वर्धनं । घृतं । अन्नं । घृतं । ऊँइति । अस्य । मेदनं । घृतेन । आऽहुतः । उर्विया । वि । पप्रथे । सूर्यःऽइव । रोचते । सर्पिःऽआसुतिः ॥ यत् । ते । मनुः । यत् । अनीकं । सुऽमित्रः । संऽईधे । अग्ने । तत् । इदं । नवीयः । सः । रेवत् । शोच । सः । गिरः । जुषस्व । सः । वाजं । दर्षि । सः । इह । श्रवः । धाः ॥ यं । त्वा । पूर्वं । ईळितः । वध्रिऽअश्वः । संऽईधे । अग्ने । सः । इदं । जुषस्व । सः । नः । स्तिऽपाः । उत । भव । तनूऽपाः । दात्रं । रक्षस्व । यत् । इदं । ते । अस्मेइति । भव । द्युम्नी । वाध्रिऽअश्व । उत । गोपाः । मा । त्वा । तारीत् । अभिऽमातिः । जनानां । शूरःऽइव । धृष्णुः । च्यवनः । सुऽमित्रः । प्र । नु । वोचं । वाध्रिऽअश्वस्य । नाम । सं । अज्मया । पर्वत्या । वसूनि । दासा । वृत्राणि । आर्या । जिगेथ ॥ ० ॥ जनानां । त्वं । अग्ने । पृतनाऽयून् । अभि । स्याः ॥ १९ ॥ दीर्घऽतंतुः । बृहत्ऽ-

उक्षा । अयं । अग्निः । सहस्रऽस्तरीः । शतऽनीथः । ऋभ्वा । द्युऽमान् । द्युमत्ऽसु । नृऽभिः । मृज्यमानः । सुऽमित्रेषु । दीदयः । देवयत्ऽसु ॥ त्वेइति । धेनुः । सुऽदुघा । जातऽवेदः । असश्चताऽइव । समना । सबःऽधुक् । त्वं । नृऽभिः । दक्षिणावत्ऽभिः । अग्ने । सुऽमित्रेभिः । इध्यसे । देवयत्ऽभिः ॥ देवाः । चित् । ते । अमृताः । जातऽवेदः । महिमानं । वध्रिऽअश्व । प्र । वोचन् । यत् । संऽपृच्छं । मानुषीः । विशः । आयन् । त्वं । नृऽभिः । अजयः । त्वाऽवृधेभिः ॥ पिताऽइव । पुत्रं । अबिभः । उपऽस्थे । त्वां । अग्ने । वध्रिऽअश्वः । सपर्यन् । जुषाणः । अस्य । संऽइधं । यविष्ठ । उत । पूर्वान् । अवनोः । व्राधतः । चित् ॥ शश्वत् । अग्निः । वध्रिऽअश्वस्य । शत्रून् । नृऽभिः । जिगाय । सुतसोमवत्ऽभिः । समनं । चित् । अदहः । चित्रभानोइतिचित्रऽभानो । अव । व्राधतं । अभिनत् । वृधः । चित् । अयं । अग्निः । वध्रिऽअश्वस्य । वृत्रऽहा । सनकात् । प्रऽइद्धः । नमसा । उपऽवाक्यः । सः । नः । अजामीन् । उत । वा । विऽजामीन् । अभि । तिष्ठ । शर्धतः । वाध्रिऽअश्व ॥ २० ॥ ० ॥ जुषस्व । इळः । पदे । प्रति । हर्य । घृताचीं । वर्ष्मन् । पृथिव्याः । सुदिनऽत्वे । अह्नां । ऊर्ध्वः । भव । सुक्रतोइतिसुऽक्रतो । देवऽयज्या ॥ आ । देवानां । अग्रऽयावा । इह । यातु । नराशंसः । विश्वऽरूपेभिः । अश्वैः । ऋतस्य । पथा । नमसा । मियेधः । देवेभ्यः । देवऽतमः । सुसूदत् ॥ शश्वत्ऽतमं । ईळते । दूत्याय । हविष्मंतः । मनुष्यासः । अग्निं । वहिष्ठैः । अश्वैः । सुऽवृता । रथेन । आ । देवान् । वक्षि । नि । सद । इह । होता ॥ वि । प्रथतां । देवऽजुष्टं । तिरश्चा । दीर्घं । द्राघ्मा । सुरभि । भूतु । अस्मेइति । अहेळता । मनसा । देव । बर्हिः । इंद्रऽज्येष्ठान् । उशतः । यक्षि । देवान् ॥ दिवः । वा । सानु । स्पृशत । वरीयः । पृथिव्या । वा । मात्रया । वि । श्रयध्वं । उशतीः । द्वारः । महिना । महत्ऽभिः । देवं । रथं । रथऽयुः । धारयध्वं ॥ २१ ॥

देवीइति । दिवः । दुहितरा । सुशिल्पेइतिसुऽशिल्पे । उषसानक्ता । सदतां । नि । योनौ । आ । वां । देवासः । उशतीइति । उशंतः । उरौ । सीदंतु । सुभगेइतिसुऽभगे । उपऽस्थे ॥ ऊर्ध्वः । ग्रावा । बृहत् । अग्निः । संऽइद्धः । प्रिया । धामानि । अदितेः । उपऽस्थे । पुरःऽहितौ । ऋत्विजा । यज्ञे । अस्मिन् । विदुःऽतरा । द्रविणं । आ । यजेथां ॥ तिस्रः । देवीः । बर्हिः । इदं । वरीयः । आ । सीदत । चकृम । वः । स्योनं । मनुष्वत् । यज्ञं । सुऽधिता । हवींषि । इळा । देवी । घृतऽपदी । जुषंत ॥ देव । त्वष्टः । यत् । ह । चारुऽत्वं । आनट् । यत् । अंगिरसां । अभवः । सचाऽभूः । सः । देवानां । पाथः । उप । प्र । विद्वान् । उशन् । यक्षि । द्रविणःऽदः । सुऽरत्नः ॥ वनस्पते । रशनया । निऽयूय । देवानां । पाथः । उप । वाक्षि । विद्वान् । स्वदाति । देवः । कृणवत् । हवींषि । अवतां । द्यावापृथिवीइति । हवं । मे ॥ आ । अग्ने । वह । वरुणं । इष्टये । नः । इंद्रं । दिवः । मरुतः । अंतरिक्षात् । सीदंतु । बर्हिः । विश्वे । आ । यजत्राः ॥ ॥ ० ॥ २२ ॥ बृहस्पते । प्रथमं । वाचः । अग्रं । यत् । प्र । ऐरत । नामऽधेयं । दधानाः । यत् । एषां । श्रेष्ठं । यत् । अरिप्रं । आसीत् । प्रेणा । तत् । एषां । निऽहितं । गुहा । आविः ॥ सक्तुंऽइव । तितउना । पुनंतः । यत्र । धीराः । मनसा । वाचं । अक्रत । अत्र । सखायः । सख्यानि । जानते । भद्रा । एषां । लक्ष्मीः । निऽहिता । अधि । वाचि ॥ यज्ञेन । वाचः । पदऽवीयं । आयन् । तां । अनु । अविंदन् । ऋषिषु । प्रऽविष्टां । तां । आऽभृत्य । वि । अदधुः । पुरुऽत्रा । तां । सप्त । रेभाः । अभि । सं । नवंते ॥ उत । त्वः । पश्यन् । न । ददर्श । वाचं । उत । त्वः । शृण्वन् । न । शृणोति । एनां । उतोइति । त्वस्मै । तन्वं । वि । सस्रे ॥ ० ॥ उत । त्वं । सख्ये । स्थिरऽपीतं । आहुः । न । एनं । हिन्वंति । अपि । वाजिनेषु । अधेन्वा । चरति । मायया । एषः । वाचं । शुश्रुऽवान् । अफलां । अपुष्पां ॥ २३ ॥ यः ।

तित्याजं । सचिऽविदं । सखायं । न । तस्य । वाचि । अपि । भागः । अस्ति । यत् । ईं । शृणोति । अलकं । शृणोति । नहि । प्रऽवेदं । सुऽकृतस्य । पंथां ॥ अक्षण्ऽवंतः । कर्णऽवंतः । सखायः । मनःऽजवेषु । असमाः । बभूवुः । आदघ्नासः । उपऽकक्षासः । ऊँइति । त्वे । हृदाःऽइव । स्नात्वाः । ऊँइति । त्वे । ददृश्रे । हृदा । तष्टेषु । मनसः । जवेषु । यत् । ब्राह्मणाः । संऽयजंते । सखायः । अत्र । अह । त्वं । वि । जहुः । वेद्याभिः । ओहऽब्रह्माणः । वि । चरंति । ऊँइति । त्वे ॥ इमे । ये । न । अर्वाक् । न । परः । चरंति । न । ब्राह्मणासः । न । सुतेऽकरासः । ते । एते । वाचं । अभिऽपद्य । पापया । सिरीः । तंत्रं । तन्वते । अप्रऽजज्ञयः ॥ सर्वे । नंदंति । यशसा । आऽगतेन । सभाऽसहेन । सख्या । सखायः । किल्बिषऽस्पृत् । पितुऽसनिः । हि । एषां । अरं । हितः । भवति । वाजिनाय ॥ ऋचां । त्वः । पोषं । आस्ते । पुपुष्वान् । गायत्रं । त्वः । गायति । शक्वरीषु । ब्रह्मा । त्वः । वदति । जातऽविद्यां । यज्ञस्य । मात्रां । वि । मिमीते । ऊँइति । त्वः ॥ २४ ॥

इति अष्टमाष्टके द्वितीयोऽध्यायः ॥ २ ॥



## अथ तृतीयोऽध्यायः

हरिः ॐ ॥ देवानां । नु । वयं । जाना । प्र । वोचाम । विपन्यया । उक्थेषु । शस्यमानेषु । यः । पश्यात् । उत्ऽतरे । युगे ॥ ब्रह्मणः । पतिः । एता । सं । कर्मारःऽइव । अधमत् । देवानां । पूर्व्ये । युगे । असतः । सत् । अजायत ॥ देवानां । युगे । प्रथमे ॥ ० ॥ तत् । आशाः । अनु । अजायंत । तत् । उत्तानऽपदः । परि ॥ भूः ।

जज्ञे । उत्तानऽपदः । भुवः । आशाः । अजायंत । अदितेः । दक्षः । अजायत । दक्षात् । ऊँइतिं । अदितिः । परि ॥ अदितिः । हि । अजनिष्ट । दक्ष । या । दुहिता । तव । तां । देवाः । अनु । अजायंत । भद्राः । अमृतऽबंधवः ॥ १ ॥ यत् । देवाः । अदः । सलिले । सुऽसंरब्धाः । अतिष्ठत । अत्र । वः । नृत्यतांऽइव । तीव्रः । रेणुः । अप । आयत ॥ यत् । देवाः । यतयः । यथा । भुवनानि । अपिन्वत । अत्र । समुद्रे । आ । गूळ्हं । आ । सूर्यं । अजभर्तन ॥ अष्टौ । पुत्रासः । अदितेः । ये । जाताः । तन्वः । परि । देवान् । उप । प्र । ऐत् । सप्तऽभिः । परा । मार्तांडं । आस्यत् ॥ सप्तऽभिः । पुत्रैः । अदितिः । उप । प्र । ऐत् । पूर्व्यं । युगं । प्रऽजायै । मृत्यवे । त्वत् । पुनः । मार्तांडं । आ । अभरत् ॥ २ ॥ जनिष्ठाः । उग्रः । सहसे । तुराय । मंद्रः । ओजिष्ठः । बहुलऽअभिमानः । अवर्धन् । इंद्रं । मरुतः । चित् । अत्र । माता । यत् । वीरं । दधनत् । धनिष्ठा ॥ द्रुहः । निऽसत्ता । पृशनी । चित् । एवैः । पुरु । शंसेन । ववृधुः । ते । इंद्रं । अभिवृंताऽइव । ता । महाऽपदेन । ध्वांतात् । प्रऽपित्वात् । उत् । अरंत । गर्भाः ॥ ऋष्वा । ते । पादा । प्र । यत् । जिगासि । अवर्धन् । वाजाः । उत । ये । चित् । अत्र । त्वं । इंद्र । सालावृकान् । सहस्रं । आसन् । दधिषे । अश्विना । आ । ववृत्याः ॥ समना । तूर्णिः । उप । यासि । यज्ञं । आ । नासत्या । सख्याय । वक्षि । वसाव्यां । इंद्र । धारयः । सहस्रा । अश्विना । शूर । ददतुः । मघानि ॥ मंदमानः । ऋतात् । अधि । प्रऽजायै । सखिऽभिः । इंद्रः । इषिरेभिः । अर्थं । आ । आभिः । हि । मायाः । उप । दस्युं । आ । अगात् । मिहः । प्र । तम्राः । अवपत् । तमांसि ॥ ३ ॥ सऽनामाना । चित् । ध्वसयः । नि । अस्मै । अव । अहन् । इंद्रः । उषसः । यथा । अनः । ऋष्वैः । अगच्छः । सखिऽभिः । निऽकामैः । साकं । प्रतिऽस्था । हृद्या । जघंथ ॥ त्वं । जघंथ । नमुचिं । मखस्युं । दासं ।

कृण्वानः । ऋषये । विऽमायं । त्वं । चकर्थ । मनवे । स्योनान् । पथः । देवऽत्रा । अंजसाऽइव । यानान् ॥ त्वं । एतानि । पप्रिषे । वि । नाम । ईशानः । इंद्र । दधिषे । गभस्तौ । अनु । त्वा । देवाः । शवसा । मदंति । उपरिऽबुध्नान् । वनिनः । चकर्थ ॥ चक्रं । यत् । अस्य । अप्ऽसु । आ । निऽसत्तं । उतोइति । तत् । अस्मै । मधु । इत् । चच्छद्यात् । पृथिव्यां । अतिऽसितं । यत् । ऊधः । पयः । गोषु । अदधाः । ओषधीषु ॥ अश्वात् । इयाय । इति । यत् । वदंति । ओजसः । जातं । उत । मन्ये । एनं । मन्योः । इयाय । हर्म्येषु । तस्थौ । यतः । प्रऽजज्ञे । इंद्रः । अस्य । वेद ॥ वयः । सुऽपर्णाः । उप । सेदुः । इंद्रं । प्रियऽमेधाः । ऋषयः । नाधमानाः । अप । ध्वांतं । ऊर्णुहि । पूर्धि । चक्षुः । मुमुग्धि । अस्मान् । निधयाऽइव । बद्धान् ॥ ४ ॥ वसूनां । वा । चकृषे । इयक्षन् । धिया । वा । यज्ञैः । वा । रोदस्योः । अर्वतः । वा । ये । रयिऽमंतः । सातौ । वनुं । वा । ये । सुऽश्रुणं । सुऽश्रुतः । धुरितिधुः ॥ हवः । एषां । असुरः । नक्षत । द्यां । श्रवस्यता । मनसा । निंसत । क्षां । चक्षाणाः । यत्र । सुविताय । देवाः । द्यौः । न । वारेभिः । कृणवंत । स्वैः ॥ इयं । एषां । अमृतानां । गीः । सर्वऽताता । ये । कृपणंत । रत्नं । धियं । च । यज्ञं । च । साधंतः । ते । नः । धांतु । वसव्यं । असामि ॥ आ । तत् । ते । इंद्र । आयवः । पनंत । अभि । ये । ऊर्वं । गोऽमंतं । तितृत्सान् । सकृत्ऽस्वं । ये । पुरुऽपुत्रां । महीं । सहस्रऽधारां । बृहतीं । दुधुक्षन् ॥ शचीऽवः । इंद्रं । अवसे । कृणुध्वं । अनानतं । दमयंतं । पृतन्यून् । ऋभुक्षणं । मघऽवानं । सुऽवृक्ति । भर्ता । यः । वज्रं । नर्यं । पुरुऽक्षुः ॥ यत् । ववान । पुरुऽतमं । पुराषाट् । आ । वृत्रऽहा । इंद्रः । नामानि । अप्राः । अचैति । प्रऽसहः । पतिः । तुविष्मान् । यत् । ईं । उश्मसि । कर्तवे । करत् । तत् ॥ ५ ॥ प्र । सु । वः । आपः । महिमानं । उत्ऽतमं । कारुः । वोचाति । सदने ।

विवस्वतः । प्र । सप्तऽसप्त । त्रेधा । हि । चक्रमुः । प्र । सृत्वरीणां । अति । सिंधुः । ओजसा ॥ प्र । ते । अरदत् । वरुणः । यातवे । पथः । सिंधोइति । यत् । वाजान् । अभि । अद्रवः । त्वं । भूम्याः । अधि । प्रऽवता । यासि । सानुना । यत् । एषां । अग्रं । जगतां । इरज्यसि ॥ दिवि । स्वनः । यतते । भूम्या । उपरि । अनंतं । शुष्मं । उत् । इयर्ति । भानुना । अभ्रात्ऽइव । प्र । स्तनयंति । वृष्टयः । सिंधुः । यत् । एति । वृषभः । न । रोरुवत् ॥ अभि । त्वा । सिंधोइति । शिशुं । इत् । न । मातरः । वाश्राः । अर्षंति । पयसाऽइव । धेनवः । राजाऽइव । युध्वा । नयसि । त्वं । इत् । सिचौ । यत् । आसां । अग्रं । प्रऽवतां । इनक्षसि ॥ इमं । मे । गंगे । यमुने । सरस्वति । शुतुद्रि । स्तोमं । सचत । परुष्णि । आ । असिक्न्या । मरुत्ऽवृधे । वितस्तया । आर्जीकीये । शृणुहि । आ । सुऽसोमया ॥ ६ ॥ तृष्टऽअमया । प्रथमं । यातवे । सऽजूः । सुऽसर्त्वा । रसया । श्वेत्या । त्या । त्वं । सिंधोइति । कुभया । गोऽमतीं । क्रुमुं । मेहत्नवा । सऽरथं । याभिः । ईयसे ॥ ऋजीती । एनी । रुशती । महिऽत्वा । परि । ज्रयांसि । भरते । रजांसि । अदब्धा । सिंधुः । अपसां । अपःऽतमा । अश्वा । न । चित्रा । वपुषीऽइव । दर्शता ॥ सुऽअश्वा । सिंधुः । सुऽरथा । सुऽवासाः । हिरण्ययी । सुऽकृता । वाजिनीऽवती । ऊर्णाऽवती । युवतिः । सीलमाऽवती । उत । अधि । वस्ते । सुऽभगा । मधुऽवृधं ॥ सुऽखं । रथं । युयुजे । सिंधुः । अश्विनं । तेन । वाजं । सनिषत् । अस्मिन् । आजौ । महान् । हि । अस्य । महिमा । पनस्यते । अदब्धस्य । स्वऽयशसः । विऽरप्शिनः ॥ ७ ॥ आ । वः । ऋंजसे । ऊर्जां । विऽउष्टिषु । इंद्रं । मरुतः । रोदसीइति । अनक्तन । उभेइति । यथा । नः । अहनीइति । सचाऽभुवा । सदःऽसदः । वरिवस्यातः । उत्ऽभिदा ॥ तत् । ऊंइति । श्रेष्ठं । सवनं । सुनोतन । अत्यः । न । हस्तऽयतः । अद्रिः । सोतरि । विदत् । हि ।

अर्यः । अभिऽभूति । पौंस्यं । महः । राये । चित् । तरुते । यत् । अर्वतः ॥ तत् । इत् । हि । अस्य । सवनं । विवेः । अपः । यथा । पुरा । मनवे । गातुं । अश्रेत् । गोऽअर्णसि । त्वाष्ट्रे । अश्वऽनिर्निजि । प्र । ईं । अध्वरेषु । अध्वरान् । अशिश्रयुः ॥ अप । हत । रक्षसः । भंगुरऽवतः । स्कभायत । निःऽऋतिं । सेधत । अमतिं । आ । नः । रयिं । सर्वऽवीरं । सुनोतन । देवऽअव्यं । भरत । श्लोकं । अद्रयः ॥ दिवः । चित् । आ । वः । अमवत्ऽतरेभ्यः । विऽभ्वना । चित् । आशुपःऽतरेभ्यः । वायोः । चित् । आ । सोमरभःऽतरेभ्यः । अग्नेः । चित् । अर्च । पितुकृत्ऽतरेभ्यः ॥ ८ ॥ भुरंतु । नः । यशसः । सोतु । अंधसः । ग्रावाणः । वाचा । दिविता । दिवित्मता । नरः । यत्र । दुहते । काम्यं । मधु । आऽघोषयंतः । अभितः । मिथःऽतुरः ॥ सुन्वंति । सोमं । रथिरासः । अद्रयः । निः । अस्य । रसं । गोऽइषः । दुहंति । ते । दुहंति । ऊधः । उपऽसेचनाय । कं । नरः । हव्या । न । मर्जयंते । आसऽभिः ॥ एते । नरः । सुऽअपसः । अभूतन । ये । इंद्राय । सुनुथ । सोमं । अद्रयः । वामंऽवामं । वः । दिव्याय । धाम्ने । वसुऽवसु । वः । पार्थिवाय । सुन्वते ॥ ९ ॥ अभ्रऽप्रुषः । न । वाचा । प्रुष । वसु । हविष्मंतः । न । यज्ञाः । विऽजानुषः । सुऽमारुतं । न । ब्रह्माणं । अर्हसे । गणं । अस्तोषि । एषां । न । शोभसे ॥ श्रिये । मर्यासः । अंजीन् । अकृण्वत । सुऽमारुतं । न । पूर्वीः । अति । क्षपः । दिवः । पुत्रासः । एताः । न । येतिरे । आदित्यासः । ते । अक्राः । न । ववृधुः ॥ प्र । ये । दिवः । पृथिव्याः । न । बर्हणा । त्मना । रिरिचे । अभ्रात् । न । सूर्यः । पाजस्वंतः । न । वीराः । पनस्यवः । रिशादसः । न । मर्याः । अभिऽद्यवः ॥ युष्माकं । बुध्ने । अपां । न । यामनि । विथुर्यति । न । मही । श्रथर्यति । विश्वऽप्सुः । यज्ञः । अर्वाक् । अयं । सु । वः । प्रयस्वंतः । न । सत्राचः । आ । गत ॥ यूयं । धूःऽसु । प्रऽयुजः । न । रश्मिऽ

भिः । ज्योतिष्मंतः । न । भासा । विऽउष्टिषु । श्येनासः । न । स्वऽयशसः । रिशादसः । प्रवासः । न । प्रऽसितासः । परिऽप्रुषः ॥ १० ॥ प्र । यत् । वहध्वे । मरुतः । पराकात् । यूयं । महः । संऽवरणस्य । वस्वः । विदानासः । वसवः । राध्यस्य । आरात् । चित् । द्वेषः । सनुतः । युयोत ॥ ये । उत्ऽऋचि । यज्ञे । अध्वरेऽस्थाः । मरुत्ऽभ्यः । न । मानुषः । ददाशत् । रेवत् । सः । वयः । दधते । सुऽवीरं । सः । देवानां । अपि । गोऽपीथे । अस्तु ॥ ० ॥ आदित्येन । नाम्ना । शंऽभविष्ठाः । ते । नः । अवंतु । रथऽतूः । मनीषां । महः । च । यामन् । अध्वरे । चकानाः ॥ ११ ॥ विप्रासः । न । मन्मऽभिः । सुऽआध्यः । देवऽअव्यः । न । यज्ञैः । सुऽअप्नसः । राजानः । न । चित्राः । सुऽसंदृशः । क्षितीनां । न । मर्याः । अरेपसः ॥ अग्निः । न । ये । भ्राजसा । रुक्मऽवक्षसः । वातासः । न । स्वऽयुजः । सद्यःऽऊतयः । प्रऽज्ञातारः । न । ज्येष्ठाः । सुऽनीतयः । सुऽशर्माणः । न । सोमाः । ऋतं । यते ॥ वातासः । न । ये । धुनयः । जिगत्नवः । अग्नीनां । न । जिह्वाः । विऽरोकिणः । वर्मणऽवंतः । न । योधाः । शिमीऽवंतः । पितॄणां । न । शंसाः । सुऽरातयः ॥ रथानां । न । ये । अराः । सऽनाभयः । जिगीवांसः । न । शूराः । अभिऽद्यवः । वरेऽयवः । न । मर्याः । घृतऽप्रुषः । अभिऽस्वर्तारः । अर्कं । न । सुऽस्तुभः ॥ अश्वासः । न । ये । ज्येष्ठासः । आशवः । दिधिषवः । न । रथ्यः । सुऽदानवः । आपः । न । निम्नैः । उदऽभिः । जिगत्नवः । विश्वऽरूपाः । अंगिरसः । न । सामऽभिः ॥ १२ ॥ ग्रावाणः । न । सूरयः । सिंधुऽमातरः । आऽदर्दिरासः । अद्रयः । न । विश्वहा । शिशूलाः । न । क्रीळयः । सुऽमातरः । महाऽग्रामः । न । यामन् । उत । त्विषा ॥ उषसां । न । केतवः । अध्वरऽश्रियः । शुभंऽयवः । न । अंजिऽभिः । वि । अश्वितन् । सिंधवः । न । ययियः । भ्राजत्ऽऋष्टयः । पराऽवतः । न । योजनानि । ममिरे ॥ सुऽभागान् । नः । देवाः । कृणुत ।

सुऽरत्नान् । अस्मान् । स्तोतृन् । मरुतः । वृधानाः ॥ ० ॥ गात । सनात् । हि । वः । रत्नऽधेयानि । संति ॥ १३ ॥ अपश्यं । अस्य । महतः । महिऽत्वं । अमर्त्यस्य । मर्त्यासु । विक्षु । नाना । हनूइति । विभृतेइतिविऽभृते । सं । भरतेइति । असिन्वतीइति । बप्संतीइति । भूरि । अत्तः ॥ गुहा । शिरः । निऽहितं । ऋधक् । अक्षीइति । असिन्वन् । अत्ति । जिह्वया । वनानि । अत्राणि । अस्मै । पट्ऽभिः । सं । भरंति । उत्तानऽहस्ताः । नमसा । अधि । विक्षु ॥ प्र । मातुः । प्रऽतरं । गुह्यं । इच्छन् । कुमारः । न । वीरुधः । सर्पत् । उर्वीः । ससं । न । पक्वं । अविदत् । शुचंतं । रिरिह्वांसं । रिपः । उपऽस्थे । अंतः । इति ॥ तत् । वां । ऋतं । रोदसीइति । प्र । ब्रवीमि । जायमानः । मातरा । गर्भः । अत्ति । न । अहं । देवस्य । मर्त्यः । चिकेत । अग्निः । अंग । विऽचेताः । सः । प्रऽचेताः ॥ यः । अस्मै । अन्नं । तृषु । आऽदधाति । आज्यैः । घृतैः । जुहोति । पुष्यति । तस्मै । सहस्रं । अक्षऽभिः । वि । चक्षे । अग्ने । विश्वतः । प्रत्यङ् । असि । त्वं ॥ किं । देवेषु । त्यजः । एनः । चकर्थ । अग्ने । पृच्छामि । नु । त्वां । अविद्वान् । अक्रीळन् । क्रीळन् । हरिः । अत्तवे । अदन् । वि । पर्वऽशः । चकर्त । गांऽइव । असिः ॥ विषूचः । अश्वान् । युयुजे । वनेऽजाः । ऋजीतिऽभिः । रशनाभिः । गृभीतान् । चक्षदे । मित्रः । वसुऽभिः । सुऽजातः । सं । आनृधे । पर्वऽभिः । वृधानः ॥ १४ ॥

अग्निः । सप्तिं । वाजंऽभरं । ददाति । अग्निः । वीरं । श्रुत्यं । कर्मनिःऽस्थां । अग्निः । रोदसीइति । वि । चरत् । संऽअंजन् । अग्निः । नारीं । वीरऽकुक्षिं । पुरंऽधिं ॥ अग्नेः । अप्नसः । संऽइत् । अस्तु । भद्रा । अग्निः । महीइति । रोदसीइति । आ । विवेश । अग्निः । एकं । चोदयत् । समत्ऽसु । अग्निः । वृत्राणि । दयते । पुरूणि ॥ अग्निः । ह । त्यं । जरतः । कर्णं । आव । अग्निः । अत्ऽभ्यः । निः । अदहत् । जरूथं । अग्निः । अत्रिं । घर्मे । उरुष्यत् । अंतः । अग्निः । नृऽमेधं । प्रऽजया ।

असृजत् । सं ॥ अग्निः । दात् । द्रविणं । वीरऽपेशाः । अग्निः । ऋषिं । यः । सहस्रा । सनोति । अग्निः । दिवि । हव्यं । आ । ततान । अग्नेः । धामानि । विऽभृता । पुरुऽत्रा ॥ अग्निं । उक्थैः । ऋषयः । वि । ह्वयंते । अग्निं । नरः । यामनि । बाधितासः । अग्निं । वयः । अंतरिक्षे । पतंतः । अग्निः । सहस्रा । परि । याति । गोनां ॥ अग्निं । विशः । ईळते । मानुषीः । याः । अग्निं । मनुषः । नहुषः । वि । जाताः । अग्निः । गांधर्वीं । पथ्यां । ऋतस्य । अग्नेः । गव्यूतिः । घृते । आ । निऽसत्ता ॥ अग्नये । ब्रह्म । ऋभवः । ततक्षुः । अग्निं । महां । अवोचाम । सुऽवृक्तिं । अग्ने । प्र । अव । जरितारं । यविष्ठ ॥ ० ॥ १५ ॥

यः । इमा । विश्वा । भुवनानि । जुह्वत् । ऋषिः । होता । नि । असीदत् । पिता । नः । सः । आऽशिषा । द्रविणं । इच्छमानः । प्रथमऽच्छत् । अवरान् । आ । विवेश ॥ किं । स्वित् । आसीत् । अधिऽस्थानं । आऽरंभणं । कतमत् । स्वित् । कथा । आसीत् । यतः । भूमिं । जनयन् । विश्वऽकर्मा । वि । द्यां । और्णोत् । महिना । विश्वऽचक्षाः ॥ विश्वतःऽचक्षुः । उत । विश्वतःऽमुखः । विश्वतःऽबाहुः । उत । विश्वतःऽपात् । सं । बाहुऽभ्यां । धमति । सं । पतत्रैः । द्यावाभूमीइति । जनयन् । देवः । एकः ॥ ० ॥ मनीषिणः । मनसा । पृच्छत । इत् । ऊँइति । तत् । यत् । अधिऽअतिष्ठत् । भुवनानि । धारयन् ॥ या । ते । धामानि । परमाणि । या । अवमा । या । मध्यमा । विश्वऽकर्मन् । उत । इमा । शिक्ष । सखिऽभ्यः । हविषि । स्वधाऽवः । स्वयं । यजस्व । तन्वं । वृधानः ॥ विश्वऽकर्मन् । हविषा । ववृधानः । स्वयं । यजस्व । पृथिवीं । उत । द्यां । मुह्यंतु । अन्ये । अभितः । जनासः । इह । अस्माकं । मघऽवा । सूरिः । अस्तु ॥ वाचः । पतिं । विश्वऽकर्माणं । ऊतये । मनःऽजुवं । वाजे । अद्य । हुवेम । सः । नः । विश्वानि । हवनानि । जोषत् । विश्वऽशंभूः । अवसे । साधुऽकर्मा ॥ १६ ॥ चक्षुषः । पिता । मनसा ।

हि । धीरः । घृतं । एनेइति । अजनत् । नम्नमानेइति । यदा । इत् । अंताः । अदंदहंत । पूर्वे । आत् । इत् । द्यावापृथिवीइति । अप्रथेतां ॥ विश्वऽकर्मा । विऽमनाः । आत् । विऽहायाः । धाता । विऽधाता । परमा । उत । संऽदृक् । तेषां । इष्टानि । सं । इषा । मदंति । यत्र । सप्तऽऋषीन् । परः । एकं । आहुः ॥ यः । नः । पिता । जनिता । यः । विऽधाता । धामानि । वेद । भुवनानि । विश्वा । यः । देवानां । नामऽधाः । एकः । एव । तं । संऽप्रश्नं । भुवना । यंति । अन्या ॥ ते । आ । अयजंत । द्रविणं । सं । अस्मै । ऋषयः । पूर्वे । जरितारः । न । भूना । असूर्ते । सूर्ते । रजसि । निऽसत्ते । ये । भूतानि । संऽअकृण्वन् । इमानि ॥ परः । दिवा । परः । एना । पृथिव्या । परः । देवेभिः । असुरैः । यत् । अस्ति । कं । स्वित् । गर्भं । प्रथमं । दध्रे । आपः । यत्र । देवाः । संऽअपश्यंत । विश्वे ॥ तं । इत् ॥ ० ॥ संऽअगच्छंत । विश्वे । अजस्य । नाभौ । अधि । एकं । अर्पितं । यस्मिन् । विश्वानि । भुवनानि । तस्थुः ॥ न । तं । विदाथ । यः । इमा । जजान । अन्यत् । युष्माकं । अंतरं । बभूव । नीहारेण । प्रावृताः । जल्प्या । च । असुऽतृपः । उक्थऽशासः । चरंति ॥ १७ ॥ यः । ते । मन्योइति । अविधत् । वज्र । सायक । सहः । ओजः । पुष्यति । विश्वं । आनुषक् । सह्याम । दासं । आर्यं । त्वया । युजा । सहःऽकृतेन । सहसा । सहस्वता ॥ मन्युः । इंद्रः । मन्युः । एव । आस । देवः । मन्युः । होता । वरुणः । जातऽवेदाः । मन्युं । विशः । इळते । मानुषीः । याः । पाहि । नः । मन्योइति । तपसा । सऽजोषाः ॥ अभि । इहि । मन्योइति । तवसः । तवीयान् । तपसा । युजा । वि । जहि । शत्रून् । अमित्रऽहा । वृत्रऽहा । दस्युऽहा । च । विश्वा । वसूनि । आ । भर । त्वं । नः ॥ त्वं । हि । मन्योइति । अभिभूतिऽओजाः । स्वयंऽभूः । भामः । अभिमातिऽसहः । विश्वऽचर्षणिः । सहुरिः । सहावान् । अस्मासु । ओजः । पृतनासु । धेहि ॥ अभागः । सन् । अप । पराऽइतः । अस्मि । तव । क्रत्वा ।

तविषस्य । प्रचेतइतिप्रऽचेतः । तं । त्वा । मन्योइति । अक्रतुः ।
जिहीळ । अहं । स्वा । तनूः । बलऽदेयाय । मा । आ । इहि ॥
अयं । ते । अस्मि । उप । मा । आ । इहि । अर्वाङ् । प्रतीचीनः ।
सहुरे । विश्वऽधायः । मन्योइति । वज्रिन् । अभि । मां । आ ।
ववृत्स्व । हनाव । दस्यून् । उत । बोधि । आपेः ॥ अभि ।
प्र । इहि । दक्षिणतः । भव । मे । अध । वृत्राणि । जंघनाव ।
भूरि । जुहोमि । ते । धरुणं । मध्वः । अग्रं । उभौ । उपऽअंशु । प्रथमा ।
पिबाव ॥ १८ ॥ त्वया । मन्योइति । सऽरथं । आऽरुजंतः ।
हर्षमाणासः । धृषिताः । मरुत्वः । तिग्मऽइषवः । आयुधा । संऽ-
शिशानाः । अभि । प्र । यंतु । नरः । अग्निऽरूपाः ॥ अग्निःऽइव ।
मन्योइति । त्विषितः । सहस्व । सेनाऽनीः । नः । सहुरे । हूतः ।
एधि । हत्वाय । शत्रून् । वि । भजस्व । वेदः । ओजः । मिमानः ।
वि । मृधः । नुदस्व ॥ सहस्व । मन्योइति । अभिऽमातिं । अस्मेइति ।
रुजन् । मृणन् । प्रऽमृणन् । प्र । इहि । शत्रून् । उग्रं । ते । पाजः ।
ननु । आ । रुरुध्रे । वशी । वशं । नयसे । एकऽज । त्वं ॥ एकः ।
बहूनां । असि । मन्योइति । ईळितः । विशंऽविशं । युधये । सं ।
शिशाधि । अकृत्तऽरुक् । त्वया । युजा । वयं । द्युऽमंतं । घोषं ।
विऽजयाय । कृण्महे ॥ विजेषऽकृत् । इंद्रःऽइव । अनवऽब्रवः । अस्माकं ।
मन्योइति । अधिऽपाः । भव । इह । प्रियं । ते । नाम । सहुरे ।
गृणीमसि ॥ ० ॥ आऽवभूथ ॥ आऽभूत्या । सहऽजाः । वज्र । सायक ।
सहः । बिभर्षि । अभिऽभूते । उत्ऽतरं । क्रत्वा । नः । मन्योइति ।
सह । मेदी । एधि । महाऽधनस्य । पुरुऽहूत । संऽसृजि ॥ संऽसृष्टं ।
धनं । उभयं । संऽआकृतं । अस्मभ्यं । दत्तां । वरुणः । च । मन्युः ।
भियं । दधानाः । हृदयेषु । शत्रवः । पराऽजितासः । अप । नि ।
लयंतां ॥ इति षष्ठोऽनुवाकः ॥ – :: – ॥ अथ सप्तमोनुवाकः ॥
॥ – :: – ॥ १९ ॥ सत्येन । उत्तंभिता । भूमिः । सूर्येण । उत्तंभिता ।

द्यौः। ऋतेन। आदित्याः। तिष्ठंति। दिवि। सोमः। अधि। श्रितः॥ सोमेन। आदित्याः। बलिनः। सोमेन। पृथिवी। मही। अथोइति। नक्षत्राणां। एषां। उपऽस्थे। सोमः। आऽहितः॥ सोमं। मन्यते। पपिऽवान्। यत्। संऽपिंषंति। ओषधिं। सोमं। यं। ब्रह्माणः। विदुः। न। तस्य। अश्नाति। कः। चन॥ आच्छत्ऽविधानैः। गुपितः। बार्हतैः। सोम। रक्षितः। ग्राव्णां। इत्। शृण्वन्। तिष्ठसि। न। ते। अश्नाति। पार्थिवः॥ यत्। त्वा। देव। प्रऽपिबंति। ततः। आ। प्यायसे। पुनरिति। वायुः। सोमस्य। रक्षिता। समानां। मासः। आऽकृतिः॥ २०॥ रैभी। आसीत्। अनुऽदेयी। नाराशंसी। निऽओचनी। सूर्यायाः। भद्रं। इत्। वासः। गाथया। एति। परिऽकृतं॥ चित्तिः। आः। उपऽबर्हणं। चक्षुः। आः। अभिऽअंजनं। द्यौः। भूमिः। कोशः। आसीत्। यत्। अयात्। सूर्या। पतिं॥ स्तोमाः। आसन्। प्रतिऽधयः। कुरीरं। छंदः। ओपशः। सूर्यायाः। अश्विना। वरा। अग्निः। आसीत्। पुरःऽगवः॥ सोमः। वधूऽयुः। अभवत्। अश्विना। आस्तां। उभा। वरा। सूर्यां। यत्। पत्ये। शंसंतीं। मनसा। सविता। अददात्॥ मनः। अस्याः। अनः। आसीत्। द्यौः। आसीत्। उत। छदिः। शुक्रौ। अनड्वाहौ। आस्तां॥ ०॥ गृहं॥ २१॥ ऋक्ऽसामाभ्यां। अभिऽहितौ। गावौ। ते। सामनौ। इतः। श्रोत्रं। ते। चक्रेइति। आस्तां। दिवि। पंथाः। चराचरः॥ शुचीइति। ते। चक्रेइति। यात्याः। विऽआनः। अक्षः। आऽहतः। अनः। मनस्मयं। सूर्या। आ। अरोहत्। प्रऽयती। पतिं॥ सूर्यायाः। वहतुः। प्र। अगात्। सविता। यं। अवऽअसृजत्। अघासु। हन्यंते। गावः। अर्जुन्योः। परि। उह्यते॥ यत्। अश्विना। पृच्छमानौ। अयातं। त्रिऽचक्रेण। वहतुं। सूर्यायाः। विश्वे। देवाः। अनु। तत्। वां। अजानन्। पुत्रः। पितरौ। अवृणीत। पूषा॥ यत्। अयातं। शुभः। पतीइति। वरेऽयं। सूर्यां। उप। क्व। एकं। चक्रं। वां। आसीत्।

के । देष्ट्राय । तस्थथुः ॥ २२ ॥ द्वेइति । ते । चक्रेइति । सूर्ये । ब्रह्माणः । ऋतुऽथा । विदुः । अथ । एकं । चक्रं । यत् । गुहा । तत् । अद्धातयः । इत् । विदुः ॥ सूर्यायै । देवेभ्यः । मित्राय । वरुणाय । च । ये । भूतस्य । प्रऽचेतसः । इदं । तेभ्यः । अकरं । नमः ॥ पूर्वंऽअपरं । चरतः । मायया । एतौ । शिशूइति । क्रीळंतौ । परि । यातः । अध्वरं । विश्वानि । अन्यः । भुवना । अभिऽचष्टे । ऋतून् । अन्यः । विऽदधत् । जायते । पुनरिति ॥ नवःऽनवः । भवति । जायमानः । अह्नां । केतुः । उषसां । एति । अग्रं । भागं । देवेभ्यः । वि । दधाति । आऽयन् । प्र । चंद्रमाः । तिरते । दीर्घं । आयुः ॥ सुऽकिंशुकं । शल्मलिं । विश्वऽरूपं । हिरण्यऽवर्णं । सुऽवृतं । सुऽचक्रं । आ । रोह । सूर्ये । अमृतस्य । लोकं । स्योनं । पत्ये । वहतुं । कृणुष्व ॥ २३ ॥ उत् । ईर्ष्व । अतः । पतिऽवती । हि । एषा । विश्वऽवसुं । नमसा । गीःऽभिः । ईळे । अन्यां । इच्छ । पितृऽसदं । विऽअक्तां । सः । ते । भागः । जनुषा । तस्य । विद्धि ॥ ० ॥ विश्ववसोइतिविश्वऽवसो । नमसा । ईळामहे । त्वा । अन्यां । इच्छ । प्रऽफर्व्यं । सं । जायां । पत्या । सृज ॥ अनृक्षराः । ऋजवः । संतु । पंथाः । येभिः । सखायः । यंति । नः । वरेऽयं । सं । अर्यमा । सं । भगः । नः । निनीयात् । सं । जाःऽपत्यं । सुऽयमं । अस्तु । देवाः ॥ प्र । त्वा । मुंचामि । वरुणस्य । पाशात् । येन । त्वा । अबध्नात् । सविता । सुऽशेवः । ऋतस्य । योनौ । सुऽकृतस्य । लोके । अरिष्टां । त्वा । सह । पत्या । दधामि ॥ प्र । इतः । मुंचामि । न । अमुतः । सुऽबद्धां । अमुतः । करं । यथा । इयं । इंद्र । मीढ्वः । सुऽपुत्रा । सुऽभगा । असति ॥ २४ ॥ पूषा । त्वा । इतः । नयतु । हस्तऽगृह्य । अश्विना । त्वा । प्र । वहतां । रथेन । गृहान् । गच्छ । गृहऽपत्नी । यथा । असः । वशिनी । त्वं । विदथं । आ । वदासि ॥ इह । प्रियं । प्रऽजया । ते । सं । ऋध्यतां । अस्मिन् । गृहे । गार्हऽपत्याय । जागृहि । एना । पत्या । तन्वं । सं ।

सृजस्व । अधं । जिव्रीइति । विदथं । आ । वदाथः ॥ नीलऽलोहितं । भवति । कृत्या । आसक्तिः । वि । अज्यते । एधंते । अस्याः । ज्ञातयः । पतिः । बंधेषु । बध्यते ॥ परा । देहि । शामुल्यं । ब्रह्मऽभ्यः । वि । भज । वसु । कृत्या । एषा । पत्ऽवती । भूत्वी । आ । जाया । विशते । पतिं ॥ अश्रीरा । तनूः । भवति । रुशती । पापया । अमुया । पतिः । यत् । वध्वः । वासंसा । स्वं । अंगं । अभिऽधित्संते ॥ २५ ॥ ये । वध्वः । चंद्रं । वहतुं । यक्ष्माः । यंति । जनात् । अनु । पुनरिति । तान् । यज्ञियाः । देवाः । नयंतु । यतः । आऽगताः ॥ मा । विदन् । परिऽपंथिनः । ये । आऽसीदंति । दंपतीइतिदंऽपती । सुऽगेभिः । दुःऽगं । अति । इतां । अप । द्रांतु । अरातयः ॥ सुऽमंगलीः । इयं । वधूः । इमां । संऽएत । पश्यंत । सौभाग्यं । अस्यै । दत्वाय । अथ । अस्तं । वि । परा । इतन ॥ तृष्टं । एतत् । कटुकं । एतत् । अपाष्ठऽवत् । विषऽवत् । न । एतत् । अत्तवे । सूर्यां । यः । ब्रह्मा । विद्यात् । सः । इत् । वाधूऽयं । अर्हति ॥ आऽशसनं । विऽशसनं । अथोइति । अधिऽविकर्तनं । सूर्यायाः । पश्य । रूपाणि । तानि । ब्रह्मा । तु । शुंधति ॥ २६ ॥ गृभ्णामि । ते । सौभगऽत्वाय । हस्तं । मया । पत्या । जरत्ऽअष्टिः । यथा । असः । भगः । अर्यमा । सविता । पुरंऽधिः । मह्यं । त्वा । अदुः । गार्हऽपत्याय । देवाः ॥ तां । पूषन् । शिवऽतमां । आ । ईरयस्व । यस्यां । बीजं । मनुष्याः । वपंति । या । नः । ऊरूइति । उशती । विऽश्रयाते । यस्यां । उशंतः । प्रऽहराम । शेपं ॥ तुभ्यं । अग्रे । परि । अवहन् । सूर्यां । वहतुना । सह । पुनरिति । पतिऽभ्यः । जायां । दाः । अग्ने । प्रऽजया । सह ॥ पुनरिति । पत्नीं । अग्निः । अदात् । आयुषा । सह । वर्चसा । दीर्घऽआयुः । अस्याः । यः । पतिः । जीवाति । शरदः । शतं ॥ सोमः । प्रथमः । विविदे । गंधर्वः । विविदे । उत्ऽतरः । तृतीयः । अग्निः । ते । पतिः । तुरीयः । ते । मनुष्यऽजाः ॥ २७ ॥ सोमः । ददत् ।

गंधर्वाय । गंधर्वः । ददत् । अग्नये । रयिं । च । पुत्रान् । च । अदात् । अग्निः । मह्यं । अथोइति । इमां ॥ इह । एव । स्तं । मा । वि । यौष्टं । विश्वं । आयुः । वि । अश्नुतं । क्रीळंतौ । पुत्रैः । नप्तृऽभिः । मोदमानौ । स्वे । गृहे ॥ आ । नः । प्रऽजां । जनयतु । प्रजाऽपतिः । आऽजरसाय । सं । अनक्तु । अर्यमा । अदुःऽमंगलीः । पतिऽलोकं । आ । विश ॥ ० ॥ अघोरऽचक्षुः । अपतिऽघ्नी । एधि । शिवा । पशुऽभ्यः । सुऽमनाः । सुऽवर्चाः । वीरऽसूः । देवऽकामा । स्योना ॥ ० ॥ इमां । त्वं । इंद्र । मीढ्वः । सुऽपुत्रां । सुऽभगां । कृणु । दश । अस्यां । पुत्रान् । आ । धेहि । पतिं । एकादशं । कृधि ॥ संऽराज्ञी । श्वशुरे । भव । संऽराज्ञी । श्वश्र्वां । भव । ननांदरि । संऽराज्ञी । भव । संऽराज्ञी । अधि । देवृषु ॥ सं । अंजंतु । विश्वे । देवाः । सं । आपः । हृदयानि । नौ । सं । मातरिश्वा । सं । धाता । सं । ऊँइति । देष्ट्री । दधातु । नौ ॥ २८ ॥

इति अष्टमाष्टके तृतीयोध्यायः ॥ ३ ॥



## अथ चतुर्थोध्यायः

हरिः ॐ ॥ वि । हि । सोतोः । असृक्षत । न । इंद्रं । देवं । अमंसत । यत्र । अमदत् । वृषाकपिः । अर्यः । पुष्टेषु । मत्ऽसखा । विश्वस्मात् । इंद्रः । उत्ऽतरः ॥ परा । हि । इंद्र । धावसि । वृषाकपेः । अति । व्यथिः । नोइति । अह । प्र । विंदसि । अन्यत्र । सोमऽपीतये ॥ ० ॥ किं । अयं । त्वां । वृषाकपिः । चकार । हरितः । मृगः । यस्मै । इरस्यसि । इत् । ऊँइति । नु । अर्यः । वा । पुष्टिऽ-

मत् । वसु ॥ ० ॥ यं । इमं । त्वं । वृषाकपिं । प्रियं । इंद्र । अभिऽ-
रक्षसि । श्वा । नु । अस्य । जंभिषत् । अपि । कर्णे । वराहऽयुः ॥ ० ॥
प्रिया । तष्टानि । मे । कपिः । विऽअक्ता । वि । अदूदुषत् । शिरः ।
नु । अस्य । राविषं । न । सुऽगं । दुःऽकृते । भुवं ॥ ० ॥ १ ॥ न ।
मत् । स्त्री । सुभसत्ऽतरा । न । सुयाशुऽतरा । भुवत् । न । मत् ।
प्रतिऽच्यवीयसी । न । सक्थि । उत्ऽयमीयसी ॥ ० ॥ उवे । अंब ।
सुलाभिके । यथाऽइव । अंग । भविष्यति । भसत् । मे । अंब ।
सक्थि । मे । शिरः । मे । विऽइव । हृष्यति ॥ ० ॥ किं । सुबाहो-
इतिसुऽबाहो । सुऽअंगुरे । पृथुस्तोइतिपृथुऽस्तो । पृथुऽजघने । किं ।
शूरऽपत्नि । नः । त्वं । अभि । अमीषि । वृषाकपिं ॥ ० ॥ अवीराऽ-
इव । मां । अयं । शरारुः । अभि । मन्यते । उत । अहं । अस्मि ।
वीरिणी । इंद्रऽपत्नी । मरुत्ऽसखा ॥ ० ॥ संऽहोत्रं । स्म । पुरा ।
नारी । समनं । वा । अव । गच्छति । वेधाः । ऋतस्य । वीरिणी ।
इंद्रऽपत्नी । महीयते ॥ ० ॥ २ ॥ इंद्राणीं । आसु । नारिषु । सुऽ-
भगां । अहं । अश्रवं । नहि । अस्याः । अपरं । चन । जरसा । मरते ।
पतिः ॥ ० ॥ न । अहं । इंद्राणि । रारण । सख्युः । वृषाकपेः ।
ऋते । यस्य । इदं । अप्यं । हविः । प्रियं । देवेषु । गच्छति ॥ ० ॥
वृषाकपायि । रेवति । सुऽपुत्रे । आत् । ऊँइति । सुऽस्नुषे । घसत् ।
ते । इंद्रः । उक्षणः । प्रियं । काचित्ऽकरं । हविः ॥ ० ॥ उक्षणः ।
हि । मे । पंचऽदश । साकं । पचंति । विंशतिं । उत । अहं । अद्मि ।
पीवः । इत् । उभा । कुक्षीइति । पृणंति । मे ॥ ० ॥ वृषभः । न ।
तिग्मऽशृंगः । अंतः । यूथेषु । रोरुवत् । मंथः । ते । इंद्र । शं ।
हृदे । यं । ते । सुनोति । भावयुः ॥ ० ॥ ३ ॥ न । सः । ईशे ।
यस्य । रंबते । अंतरा । सक्थ्या । कपृत् । सः । इत् । ईशे । यस्य ।
रोमशं । निऽसेदुषः । विऽजृंभते ॥ ० ॥ अयं । इंद्र । वृषाकपिः ।
परस्वंतं । हतं । विदत् । आसिं । सूनां । नवं । चरुं । आत् । एधस्य ।

अनः । आऽचितं ॥ ० ॥ अयं । एमि । विऽचाकशत् । विऽचिन्वन् । दासं । आर्यं । पिबामि । पाकऽसुत्वनः । अभि । धीरं । अचाकशं ॥ ० ॥ धन्व । च । यत् । कृंतत्रं । च । कति । स्वित् । ता । वि । योजना । नेदीयसः । वृषाकपे । अस्तं । आ । इहि । गृहान् । उप ॥ ० ॥ पुनः । आ । इहि । वृषाकपे । सुविता । कल्पयावहै । यः । एषः । स्वप्नऽनंशनः । अस्तं । एषि । पथा । पुनः ॥ ० ॥ यत् । उदंचः । वृषाकपे । गृहं । इंद्र । अजगंतन । क्व । स्यः । पुल्वघः । मृगः । कं । अगन् । जनऽयोपनः ॥ ० ॥ पर्शुः । ह । नाम । मानवी । साकं । ससूव । विंशतिं । भद्रं । भल । त्यस्यै । अभूत् । यस्याः । उदरं । आमयत् ॥ ० ॥ ४ ॥ रक्षःऽहनं । वाजिनं । आ । जिघर्मि । मित्रं । प्रथिष्ठं । उप । यामि । शर्म । शिशानः । अग्निः । क्रतुऽभिः । संऽइद्धः ॥ ० ॥ अयःऽदंष्ट्रः । अर्चिषा । यातुऽधानान् । उप । स्पृश । जातऽवेदः । संऽइद्धः । आ । जिह्वया । मूरऽदेवान् । रभस्व । क्रव्यऽअदः । वृक्त्वी । अपि । धत्स्व । आसन् ॥ उभा । उभयाविन् । उप । धेहि । दंष्ट्रा । हिंस्रः । शिशानः । अवरं । परं । च । उत । अंतरिक्षे । परि । याहि । राजन् । जंभैः । सं । धेहि । अभि । यातुऽधानान् ॥ यज्ञैः । इषूः । संऽनममानः । अग्ने । वाचा । शल्यान् । अशनिऽभिः । दिहानः । ताभिः । विध्य । हृदये । यातुऽधानान् । प्रतीचः । बाहून् । प्रति । भंग्धि । एषां ॥ अग्ने । त्वचं । यातुऽधानस्य । भिंधि । हिंस्रा । अशनिः । हरसा । हंतु । एनं । प्र । पर्वाणि । जातऽवेदः । शृणीहि । क्रव्यऽअत् । क्रविष्णुः । वि । चिनोतु । वृक्णं ॥ ५ ॥ यत्र । इदानीं । पश्यसि । जातऽवेदः । तिष्ठंतं । अग्ने । उत । वा । चरंतं । यत् । वा । अंतरिक्षे । पथिऽभिः । पतंतं । तं । अस्ता । विध्य । शर्वा । शिशानः ॥ उत । आऽलब्धं । स्पृणुहि । जातऽवेदः । आऽलेभानात् । ऋष्टिऽभिः । यातुऽधानात् । अग्ने । पूर्वः । नि । जहि । शोशुचानः । आमऽअदः । क्ष्विंकाः । तं । अदंतु । एनीः ॥ इह । प्र । ब्रूहि । यतमः । सः । अग्ने । यः ।

यातुऽधानः। यः। इदं। कृणोति। तं। आ। रभस्व। संऽइधा। यविष्ठ। नृऽचक्षसः। चक्षुषे। रंधय। एनं॥ तीक्ष्णेन। अग्ने। चक्षुषा। रक्ष। यज्ञं। प्रांचं। वसुऽभ्यः। प्र। नय। प्रचेतइतिप्रऽचेतः। हिंस्रं। रक्षांसि। अभि। शोशुचानं। मा। त्वा। दभन्। यातुऽधानाः। नृऽचक्षः॥ नृऽचक्षाः। रक्षः। परि। पश्य। विक्षु। तस्य। त्रीणि। प्रति। शृणीहि। अग्रा। तस्य। अग्ने। पृष्टीः। हरसा। शृणीहि। त्रेधा। मूलं। यातुऽधानस्य। वृश्च॥ ६॥ त्रिः। यातुऽधानः। प्रऽसितिं। ते। एतु। ऋतं। यः। अग्ने। अनृतेन। हंति। तं। अर्चिषा। स्फूर्जयन्। जातऽवेदः। संऽअक्षं। एनं। गृणते। नि। वृंग्धि॥ तत्। अग्ने। चक्षुः। प्रति। धेहि। रेभे। शफऽआरुजं। येन। पश्यसि। यातुऽधानं। अथर्वऽवत्। ज्योतिषा। दैव्येन। सत्यं। धूर्वंतं। अचितं। नि। ओष॥ यत्। अग्ने। अद्य। मिथुना। शपातः। यत्। वाचः। तृष्टं। जनयंत। रेभाः। मन्योः। मनसः। शरव्या। जायते। या। तया। विध्य। हृदये। यातुऽधानान्॥ परा। शृणीहि। तपसा। यातुऽधानान्। परा। अग्ने। रक्षः। हरसा। शृणीहि। परा। अर्चिषा। मूरऽदेवान्। शृणीहि। परा। असुऽतृपः। अभि। शोशुचानः॥ परा। अद्य। देवाः। वृजिनं। शृणंतु। प्रत्यक्। एनं। शपथाः। यंतु। तृष्टाः। वाचाऽस्तेनं। शरवः। ऋच्छंतु। मर्मन्। विश्वस्य। एतु। प्रऽसितिं। यातुऽधानः॥ ७॥ यः। पौरुषेयेण। क्रविषा। संऽअंक्ते। यः। अश्व्येन। पशुना। यातुऽधानः। यः। अघ्न्यायाः। भरति। क्षीरं। अग्ने। तेषां। शीर्षाणि। हरसा। अपि। वृश्च॥ संवत्सरीणं। पयः। उस्त्रियायाः। तस्य। मा। अशीत्। यातुऽधानः। नृऽचक्षः। पीयूषं। अग्ने। यतमः। तितृप्सात्। तं। प्रत्यंचं। अर्चिषा। विध्य। मर्मन्॥ विषं। गवां। यातुऽधानाः। पिबंतु। आ। वृश्च्यतां। अदितये। दुःऽएवाः। परा। एनान्। देवः। सविता। ददातु। परा। भागं। ओषधीनां। जयंतां॥ सनात्।

अग्ने । मृणासि । यातुऽधानान् । न । त्वा । रक्षांसि । पृतनासु । जिग्युः । अनु । दह । सहऽमूरान् । क्रव्यऽअदः । मा । ते । हेत्याः । मुक्षत । दैव्यायाः ॥ त्वं । नः । अग्ने । अधरात् । उदक्तात् । त्वं । पश्चात् । उत । रक्ष । पुरस्तात् । प्रति । ते । ते । अजरासः । तपिष्ठाः । अघऽशंसं । शोशुचतः । दहंतु ॥ ८ ॥ पश्चात् । पुरस्तात् । अधरात् । उदक्तात् । कविः । काव्येन । परि । पाहि । राजन् । सखे । सखायं । अजरः । जरिम्णे । अग्ने । मर्तान् । अमर्त्यः । त्वं । नः ॥ परि । त्वा । अग्ने । पुरं । वयं । विप्रं । सहस्य । धीमहि । धृषत्ऽवर्णं । दिवेऽदिवे । हंतारं । भंगुरऽवतां ॥ विषेण । भंगुरऽवतः । प्रति । स्म । रक्षसः । दह । अग्ने । तिग्मेन । शोचिषा । तपुःऽअग्राभिः । ऋष्टिऽभिः ॥ प्रति । अग्ने । मिथुना । दह । यातुऽधाना । किमीदिना । सं । त्वा । शिशामि । जागृहि । अदब्धं । विप्र । मन्मऽभिः ॥ प्रति । अग्ने । हरसा । हरः । शृणीहि । विश्वतः । प्रति । यातुऽधानस्य । रक्षसः । बलं । वि । रुज । वीर्यं ॥ ९ ॥ हविः । पांतं । अजरं । स्वःऽविदि । दिविऽस्पृशि । आऽहुतं । जुष्टं । अग्नौ । तस्य । भर्मणे । भुवनाय । देवाः । धर्मणे । कं । स्वधया । पप्रथंत ॥ गीर्णं । भुवनं । तमसा । अपऽगूळ्हं । आविः । स्वः । अभवत् । जाते । अग्नौ । तस्य । देवाः । पृथिवी । द्यौः । उत । आपः । अरणयन् । ओषधीः । सख्ये । अस्य ॥ देवेभिः । नु । इषितः । यज्ञियेभिः । अग्निं । स्तोषाणि । अजरं । बृहंतं । यः । भानुना । पृथिवीं । द्यां । उत । इमां । आऽततान । रोदसीइति । अंतरिक्षं ॥ यः । होता । आसीत् । प्रथमः । देवऽजुष्टः । यं । संऽआंजन् । आज्येन । वृणानाः । सः । पतत्रि । इत्वरं । स्थाः । जगत् । यत् । श्वात्रं । अग्निः । अकृणोत् । जातऽवेदाः ॥ यत् । जातऽवेदः । भुवनस्य । मूर्धन् । अतिष्ठः । अग्ने । सह । रोचनेन । तं । त्वा । अहेम । मतिऽभिः । गीःऽभिः । उक्थैः । सः । यज्ञियः । अभवः । रोदसिऽप्राः ॥ १० ॥ मूर्धा । भुवः । भवति । नक्तं । अग्निः । ततः ।

सूर्यः । जायते । प्रातः । उत्ऽयन् । मायां । ऊँइति । तु । यज्ञियानां । एतां । अपः । यत् । तूर्णिः । चरति । प्रऽजानन् ॥ दृशेन्यः । यः । महिना । संऽइद्धः । अरोचत । दिविऽयोनिः । विभाऽवा । तस्मिन् । अग्नौ । सूक्तऽवाकेन । देवाः । हविः । विश्वे । आ । अजुहवुः । तनूऽपाः ॥ सूक्तऽवाकं । प्रथमं । आत् । इत् । अग्निं । आत् । इत् । हविः । अजनयंत । देवाः । सः । एषां । यज्ञः । अभवत् । तनूऽपाः । तं । द्यौः । वेद । तं । पृथिवी । तं । आपः ॥ यं । देवासः । अजनयंत । अग्निं । यस्मिन् । आ । अजुहवुः । भुवनानि । विश्वा । सः । अर्चिषा । ॥ ० ॥ ऋजुऽयमानः । अतपत् । महिऽत्वा । स्तोमेन । हि । दिवि । देवासः । अग्निं । अजीजनन् । शक्तिऽभिः । रोदसिऽप्रां । तं । ऊँइति । अकृण्वन् । त्रेधा । भुवे । कं । सः । ओषधीः । पचति । विश्वऽरूपाः ॥ ११ ॥ यदा । इत् । एनं । अदधुः । यज्ञियासः । दिवि । देवाः । सूर्यं । आदितेयं । यदा । चरिष्णूइति । मिथुनौ । अभूतां । आत् । इत् । प्र । अपश्यन् । भुवनानि । विश्वा ॥ विश्वस्मै । अग्निं । भुवनाय । देवाः । वैश्वानरं । केतुं । अह्नां । अकृण्वन् । आ । यः । ततान । उषसः । विऽभातीः । अपोइति । ऊर्णोति । तमः । अर्चिषा । यन् ॥ वैश्वानरं । कवयः । यज्ञियासः । अग्निं । देवाः । अजनयन् । अजुर्यं । नक्षत्रं । प्रत्नं । अमिनत् । चरिष्णु । यक्षस्य । अधिऽअक्षं । तविषं । बृहंतं ॥ वैश्वानरं । विश्वहा । दीदिऽवांसं । मंत्रैः । अग्निं । कविं । अच्छ । वदामः । यः । महिम्ना । परिऽबभूव । उर्वीइति । उत । अवस्तात् । उत । देवः । परस्तात् ॥ द्वेइति । स्रुतीइति । अशृणवं । पितॄणां । अहं । देवानां । उत । मर्त्यानां । ताभ्यां । इदं । विश्वं । एजत् । सं । एति । यत् । अंतरा । पितरं । मातरं । च ॥ १२ ॥ द्वेइति । समीचीइतिसंऽईची । बिभृतः । चरंतं । शीर्षतः । जातं । मनसा । विऽसृष्टं । सः । प्रत्यङ् । विश्वा । भुवनानि । तस्थौ । अप्रऽयुच्छन् । तरणिः । भ्राजमानः ॥ यत्र । वदेतेइति । अवरः । परः ।

च । यज्ञऽन्योः । कतरः । नौ । वि । वेद । आ । शकुः । इत् । सधऽमादे । सखायः । नक्षंत । यज्ञं । कः । इदं । वि । वोचत् ॥ कति । अग्नयः । कति । सूर्यासः । कति । उषसः । कति । ऊँइति । स्वित् । आपः । न । उपऽस्पिजं । वः । पितरः । वदामि । पृच्छामि । वः । कवयः । विद्मने । कं ॥ यावत्ऽमात्रं । उषसः । न । प्रतीकं । सुऽपर्ण्यः । वसंते । मातरिश्वः । तावत् । दधाति । उप । यज्ञं । आऽयन् । ब्राह्मणः । होतुः । अवरः । निऽसीदन् ॥ १३ ॥ इंद्रं । स्तव । नृऽतमं । यस्य । मह्ना । विऽबबाधे । रोचना । वि । ज्मः । अतान् । आ । यः । पप्रौ । चर्षणिऽधृत् । वरःऽभिः । प्र । सिंधुऽभ्यः । रिरिचानः । महिऽत्वा ॥ सः । सूर्यः । परि । उरु । वरांसि । आ । इंद्रः । ववृत्यात् । रथ्याऽइव । चक्रा । अतिष्ठंतं । अपस्यं । न । सर्गं । कृष्णा । तमांसि । त्विष्या । जघान ॥ समानं । अस्मै । अनपऽवृत् । अर्च । क्ष्मया । दिवः । असमं । ब्रह्म । नव्यं । वि । यः । पृष्ठाऽइव । जनिमानि । अर्यः । इंद्रः । चिकाय । न । सखायं । ईषे ॥ इंद्राय । गिरः । अनिशितऽसर्गाः । अपः । प्र । ईरयं । सगरस्य । बुध्नात् । यः । अक्षेणऽइव । चक्रिया । शचीभिः । विष्वक् । तस्तंभ । पृथिवीं । उत । द्यां ॥ आपांतऽमन्युः । तृपलऽप्रभर्मा । धुनिः । शिमीऽवान् । शरुऽमान् । ऋजीषी । सोमः । विश्वानि । अतसा । वनानि । न । अर्वाक् । इंद्रं । प्रतिऽमानानि । देभुः ॥ १४ ॥ न । यस्य । द्यावापृथिवीइति । न । धन्व । न । अंतरिक्षं । न । अद्रयः । सोमः । अक्षारिति । यत् । अस्य । मन्युः । अधिऽनीयमानः । शृणाति । वीळु । रुजति । स्थिराणि ॥ जघान । वृत्रं । स्वऽधितिः । वनाऽइव । रुरोज । पुरः । अरदत् । न । सिंधून् । बिभेद । गिरिं । नवं । इत् । न । कुंभं । आ । गाः । इंद्रः । अकृणुत । स्वयुक्ऽभिः ॥ त्वं । ह । त्यत् । ऋणऽयाः । इंद्र । धीरः । असिः । न । पर्व । वृजिना । गृणासि । प्र । ये । मित्रस्य । वरुणस्य । धाम । युजं । न । जनाः ।

मिनंति । मित्रं ॥ प्र । ये । मित्रं । प्र । अर्यमणं । दुःऽएवाः । प्र । संऽगिरः । प्र । वरुणं । मिनंति । नि । अमित्रेषु । वधं । इंद्र । तुम्रं । वृषन् । वृषाणं । अरुषं । शिशीहि ॥ इंद्रः । दिवः । इंद्रः । ईशे । पृथिव्याः । इंद्रः । अपां । इंद्रः । इत् । पर्वतानां । इंद्रः । वृधां । इंद्रः । इत् । मेधिराणां । इंद्रः । क्षेमे । योगे । हव्यः । इंद्रः ॥ १५ ॥ प्र । अक्तुऽभ्यः । इंद्रः । प्र । वृधः । अहःऽभ्यः । प्र । अंतरिक्षात् । प्र । समुद्रस्य । धासेः । प्र । वातस्य । प्रथसः । प्र । ज्मः । अंतात् । प्र । सिंधुऽभ्यः । रिरिचे । प्र । क्षितिऽभ्यः ॥ प्र । शोशुचत्याः । उषसः । न । केतुः । असिन्वा । ते । वर्ततां । इंद्र । हेतिः । अश्माऽइव । विध्य । दिवः । आ । सृजानः । तपिष्ठेन । हेषसा । द्रोघऽमित्रान् ॥ अनु । अह । मासाः । अनु । इत् । वनानि । अनु । ओषधीः । अनु । पर्वतासः । अनु । इंद्रं । रोदसीइति । वावशानेइति । अनु । आपः । अजिहत । जायमानं ॥ कर्हि । स्वित् । सा । ते । इंद्र । चेत्या । असत् । अघस्य । यत् । भिनदः । रक्षः । आऽईषत् । मित्रऽक्रुवः । यत् । शसने । न । गावः । पृथिव्याः । आऽपृक् । अमुया । शयंते ॥ शत्रुऽयंतः । अभि । ये । नः । ततस्रे । महि । व्राधंतः । ओगणासः । इंद्र । अंधेन । अमित्राः । तमसा । सचंतां । सुऽज्योतिषः । अक्तवः । तान् । अभि । स्युरितिस्युः ॥ पुरूणि । हि । त्वा । सवना । जनानां । ब्रह्माणि । मंदन् । गृणतां । ऋषीणां । इमां । आऽघोषन् । अवसा । सऽहूतिं । तिरः । विश्वान् । अर्चतः । याहि । अर्वाङ् ॥ एव । ते । वयं । इंद्र । भुंजतीनां । विद्याम । सुऽमतीनां । नवानां । ॥ ० ॥ विश्वामित्राः ॥ ० ॥ १६ ॥ सहस्रऽशीर्षा । पुरुषः । सहस्रऽअक्षः । सहस्रऽपात् । सः । भूमिं । विश्वतः । वृत्वा । अति । अतिष्ठत् । दशऽअंगुलं ॥ पुरुषः । एव । इदं । सर्वं । यत् । भूतं । यत् । च । भव्यं । उत । अमृतऽत्वस्य । ईशानः । यत् । अन्नेन । अतिऽरोहति ॥ एतावान् । अस्य । महिमा । अतः । ज्यायान् । च ।

पुरुषः । पादः । अस्य । विश्वा । भूतानि । त्रिऽपात् । अस्य । अमृतं । दिवि ॥ त्रिऽपात् । ऊर्ध्वः । उत् । ऐत् । पुरुषः । पादः । अस्य । इह । अभवत् । पुनरिति । ततः । विष्वङ् । वि । अक्रामत् । साशनानशनेइति । अभि ॥ तस्मात् । विऽराट् । अजायत । विऽराजः । अधि । पुरुषः । सः । जातः । अति । अरिच्यत । पश्चात् । भूमिं । अथोइति । पुरः ॥ १७ ॥ यत् । पुरुषेण । हविषा । देवाः । यज्ञं । अतन्वत । वसंतः । अस्य । आसीत् । आज्यं । ग्रीष्मः । इध्मः । शरत् । हविः ॥ तं । यज्ञं । बर्हिषि । प्र । औक्षन् । पुरुषं । जातं । अग्रतः । तेन । देवाः । अयजंत । साध्याः । ऋषयः । च । ये ॥ तस्मात् । यज्ञात् । सर्वऽहुतः । संऽभृतं । पृषत्ऽआज्यं । पशून् । तान् । चक्रे । वायव्यान् । आरण्यान् । ग्राम्याः । च । ये ॥ ० ॥ ऋचः । सामानि । जज्ञिरे । छंदांसि । जज्ञिरे । तस्मात् । यजुः । तस्मात् । अजायत ॥ तस्मात् । अश्वाः । अजायंत । ये । के । च । उभयादतः । गावः । ह । जज्ञिरे । तस्मात् । तस्मात् । जाताः । अजावयः ॥ १८ ॥ यत् । पुरुषं । वि । अदधुः । कतिधा । वि । अकल्पयन् । मुखं । किं । अस्य । कौ । बाहूइति । कौ । ऊरूइति । पादौ । उच्येतेइति ॥ ब्राह्मणः । अस्य । मुखं । आसीत् । बाहूइति । राजन्यः । कृतः । ऊरूइति । तत् । अस्य । यत् । वैश्यः । पत्ऽभ्यां । शूद्रः । अजायत ॥ चंद्रमाः । मनसः । जातः । चक्षोः । सूर्यः । अजायत । मुखात् । इंद्रः । च । अग्निः । च । प्राणात् । वायुः । अजायत ॥ नाभ्याः । आसीत् । अंतरिक्षं । शीर्ष्णः । द्यौः । सं । अवर्तत । पत्ऽभ्यां । भूमिः । दिशः । श्रोत्रात् । तथा । लोकान् । अकल्पयन् ॥ सप्त । अस्य । आसन् । परिऽधयः । त्रिः । सप्त । संऽइधः । कृताः । देवाः । यत् । यज्ञं । तन्वानाः । अबध्नन् । पुरुषं । पशुं ॥ यज्ञेन । यज्ञं । अयजंत । देवाः । तानि । धर्माणि । प्रथमानि । आसन् । ते । ह । नाकं । महिमानः । सचंत । यत्र । पूर्वे । साध्याः । संति । देवाः ॥ १९ ॥

इति सप्तमोऽनुवाकः ॥ – :: – ॥ अथ अष्टमोऽनुवाकः ॥ – :: – ॥

सं । जागृवत्ऽभिः । जरमाणः । इध्यते । दमे । दमूनाः । इषयन् । इळः । पदे । विश्वस्य । होता । हविषः । वरेण्यः । विऽभुः । विभाऽवा । सुऽसखा । सखिऽयते ॥ सः । दर्शतऽश्रीः । अतिथिः । गृहेऽगृहे । वनेऽवने । शिश्रिये । तक्वीःऽइव । जनंऽजनं । जन्यः । न । अति । मन्यते । विशः । आ । क्षेति । विश्यः । विशंऽविशं ॥ सुऽदक्षः । दक्षैः । क्रतुना । असि । सुऽक्रतुः । अग्ने । कविः । काव्येन । असि । विश्वऽवित् । वसुः । वसूनां । क्षयसि । त्वं । इकः । इत् । द्यावा । च । यानि । पृथिवीइति । च । पुष्यतः ॥ प्रऽजानन् । अग्ने । तव । योनिं । ऋत्वियं । इळायाः । पदे । घृतऽवंतं । आ । असदः । आ । ते । चिकित्रे । उषसांऽइव । एतयः । अरेपसः । सूर्यस्यऽइव । रश्मयः । तव । श्रियः । वर्ष्यस्यऽइव । विऽद्युतः । चित्राः । चिकित्रे । उषसां । न । केतवः । यत् । ओषधीः । अभिऽसृष्टः । वनानि । च । परि । स्वयं । चिनुषे । अन्नं । आस्ये ॥ २० ॥ तं । ओषधीः । दधिरे । गर्भं । ऋत्वियं । तं । आपः । अग्निं । जनयंत । मातरः । तं । इत् । समानं । वनिनः । च । वीरुधः । अंतःऽवतीः । च । सुवते । च । विश्वहा ॥ वातऽउपधूतः । इषितः । वशान् । अनु । तृषु । यत् । अन्ना । वेविषत् । विऽतिष्ठसे । आ । ते । यतंते । रथ्यः । यथा । पृथक् । शर्धांसि । अग्ने । अजराणि । धक्षतः ॥ मेधाऽकारं । विदथस्य । प्रऽसाधनं । अग्निं । होतारं । परिऽभूतमं । मतिं । तं । इत् । अर्भे । हविषि । आ । समानं । इत् । तं । इत् । महे । वृणते । न । अन्यं । त्वत् ॥ त्वां । इत् । अत्र । वृणते । त्वाऽयवः । होतारं । अग्ने । विदथेषु । वेधसः । यत् । देवऽयंतः । दधति । प्रयांसि । ते । हविष्मंतः । मनवः । वृक्तऽबर्हिषः ॥ ० ॥ २१ ॥ ० ॥ मर्तः । सम्ऽइधा । दाशत् । उत । वा । हविःऽकृति । तस्य । होता । भवसि । यासि । दूत्यं । उप । ब्रूषे । यजसि । अध्वरिऽयसि ॥ इमाः । अस्मै । मतयः । वाचः ।

अस्मत् । आ । ऋचः । गिरः । सुऽस्तुतयः । सं । अग्मत । वसुऽयवः । वसवे । जातऽवेदसे । वृद्धासु । चित् । वर्धनः । यासु । चाकनत् ॥ इमां । प्रत्नाय । सुऽस्तुतिं । नवीयसीं । वोचेयं । अस्मै । उशते । शृणोतु । नः । भूयाः । अंतरा । हृदि । अस्य । निऽस्पृशे ॥ ० ॥ यस्मिन् । अश्वासः । ऋषभासः । उक्षणः । वशाः । मेषाः । अवऽसृष्टासः । आऽहुताः । कीलालऽपे । सोमऽपृष्ठाय । वेधसे । हृदा । मतिं । जनये । चारुं । अग्नये ॥ अहावि । अग्ने । हविः । आस्ये । ते । स्रुचिऽइव । घृतं । चम्विऽइव । सोमः । वाजऽसनिं । रयिं । अस्मेइति । सुऽवीरं । प्रऽशस्तं । धेहि । यशसं । बृहंतं ॥ २२ ॥ यज्ञस्य । वः । रथ्यं । विश्पतिं । विशां । होतारं । अक्तोः । अतिथिं । विभाऽवसुं । शोचन् । शुष्कासु । हरिणीषु । जर्भुरत् । वृषा । केतुः । यजतः । द्यां । अशायत ॥ इमं । अंजःपां । उभये । अकृण्वत । धर्माणं । अग्निं । विदथस्य । साधनं । अक्तुं । न । यह्वं । उषसः । पुरःऽहितं । तनूऽनपातं । अरुषस्य । निंसते ॥ बट् । अस्य । नीथा । वि । पणेः । च । मन्महे । वयाः । अस्य । प्रऽहुताः । आसुः । अत्तवे । यदा । घोरासः । अमृतऽत्वं । आशत । आत् । इत् । जनस्य । दैव्यस्य । चर्किरन् ॥ ऋतस्य । हि । प्रऽसितिः । द्यौः । उरु । व्यचः । नमः । मही । अरमतिः । पनीयसी । इंद्रः । मित्रः । वरुणः । सं । चिकित्रिरे । अथोइति । भगः । सविता । पूतऽदक्षसः । प्र । रुद्रेण । ययिना । यंति । सिंधवः । तिरः । महीं । अरमतिं । दधन्विरे । येभिः । परिऽज्मा । परिऽयन् । उरु । ज्रयः । वि । रोरुवत् । जठरे । विश्वं । उक्षते ॥ २३ ॥ क्राणाः । रुद्राः । मरुतः । विश्वऽकृष्टयः । दिवः । श्येनासः । असुरस्य । नीळयः । तेभिः । चष्टे । वरुणः । मित्रः । अर्यमा । इंद्रः । देवेभिः । अर्वशेभिः । अर्वशः ॥ इंद्रे । भुजं । शशमानासः । आशत । सूरः । दृशीके । वृषणः । च । पौंस्ये । प्र । ये । नु । अस्य । अर्हणा । ततक्षिरे । युजं । वज्रं । नृऽसदनेषु । कारवः ॥ सूरः । चित् । आ ।

हरितः। अस्य। रीरमत्। इंद्रात्। आ। कः। चित्। भयते। तवीयसः। भीमस्य। वृष्णः। जठरात्। अभिऽश्वसः। दिवेऽदिवे। सहुरिः। स्तन्। अबाधितः॥ स्तोमं। वः। अद्य। रुद्राय। शिक्वसे। क्षयत्ऽवीराय। नमसा। दिदिष्टन। येभिः। शिवः। स्वऽवान्। एवयावऽभिः। दिवः। सिसक्ति। स्वऽयशाः। निकामऽभिः॥ ते। हि। प्रऽजायाः। अभरंत। वि। श्रवः। बृहस्पतिः। वृषभः। सोमऽजामयः॥ ०॥ वि। धारयत्। देवाः। दक्षैः। भृगवः। सं। चिकित्रिरे॥ २४॥ ०॥ भूरिऽरेतसा। नराशंसः। चतुःऽअंगः। यमः। अदितिः। देवः। त्वष्टा। द्रविणःऽदाः। ऋभुक्षणः। प्र। रोदसीइति। मरुतः। विष्णुः। अर्हिरे॥ उत। स्यः। नः। उशिजां। उर्विया। कविः। अहिः। शृणोतु। बुध्न्यः। हवीमनि। सूर्यामासा। विऽचरंता। दिविऽक्षिता। धिया। शमीनहुषीइति। अस्य। बोधतं॥ प्र। नः। पूषा। चरथं। विश्वऽदेव्यः। अपां। नपात्। अवतु। वायुः। इष्टये। आत्मानं। वस्यः। अभि। वातं। अर्चत। तत्। अश्विना। सुऽहवा। यामनि। श्रुतं॥ विशां। आसां। अभयानां। अधिऽक्षितं। गीःऽभिः। ऊँइति। स्वऽयशसं। गृणीमसि। ग्नाभिः। विश्वाभिः। अदितिं। अनर्वणं। अक्तोः। युवानं। नृऽमनाः। अध। पतिं॥ रेभत्। अत्र। जनुषा। पूर्वः। अंगिराः। ग्रावाणः। ऊर्ध्वाः। अभि। चक्षुः। अध्वरं। येभिः। विऽहायाः। अभवत्। विचक्षणः। पाथः। सुऽमेकं। स्वऽधितिः। वनन्ऽवति॥ २५॥ मही। द्यावापृथिवीइति। भूतं। उर्वीइति। नारीइति। यह्वीइति। न। रोदसीइति। सदं। नः। तेभिः। नः। पातं। सह्यसः। एभिः। नः। पातं। शूषणि॥ यज्ञेऽयज्ञे। सः। मर्त्यः। देवान्। सपर्यति। यः। सुम्नैः। दीर्घश्रुत्ऽतमः। आऽविवासति। एनान्॥ विश्वेषां। इरज्यवः। देवानां। वाः। महः। विश्वे। हि। विश्वऽमहसः। विश्वे। यज्ञेषु। यज्ञियाः॥ ते। घ। राजानः। अमृतस्य। मंद्राः। अर्यमा। मित्रः।

वरुणः । परिऽज्मा । कत् । रुद्रः । नृणां । स्तुतः । मरुतः । पूषणः ।
भगः ॥ उत । नः । नक्तं । अपां । वृषण्वसूइतिवृषण्ऽवसू । सूर्यामासा ।
सदनाय । सऽधन्या । सचा । यत् । सादि । एषां । अहिः । बुध्नेषु ।
बुध्न्यः ॥ २६ ॥ उत । नः । देवौ । अश्विना । शुभः । पतीइति ।
धामऽभिः । मित्रावरुणौ । उरुष्यतां ॥ ० ॥ आर्ति । धन्वऽइव । दुःऽ-
इता ॥ उत । नः । रुद्रा । चित् । मृळतां । अश्विना । विश्वे । देवासः ।
रथःपतिः । भगः । ऋभुः । वाजः । ऋभुक्षणः । परिऽज्मा । विश्वऽ-
वेदसः ॥ ऋभुः । ऋभुक्षाः । ऋभुः । विधतः । मदः । आ । ते ।
हरीइति । जूजुवानस्य । वाजिना । दुस्तरं । यस्य । साम । चित् ।
ऋधक् । यज्ञः । न । मानुषः ॥ कृधि । नः । अह्रयः । देव ।
सवितरिति । सः । च । स्तुषे । मघोनां । सहोइति । नः । इंद्रः ।
वह्निऽभिः । नि । एषां । चर्षणीनां । चक्रं । रश्मिं । न । योयुवे ॥
आ । एषु । द्यावापृथिवीइति । धातं । महत् । अस्मेइति । वीरेषु ।
विश्वऽचर्षणि । श्रवः । पृक्षं । वाजस्य । सातये । पृक्षं । राया ।
उत । तुर्वणे ॥ २७ ॥ एतं । शंसं । इंद्र । अस्मऽयुः । त्वं ।
कूऽचित् । संतं । सहसाऽवन् । अभिष्टये । सदा । पाहि । अभिष्टये ।
मेदतां । वेदता । वसोइति ॥ एतं । मे । स्तोमं । तना । न ।
सूर्ये । द्युतत्ऽयामानं । ववृधंत । नृणां । संऽवननं । न । अश्व्यं ।
तष्टाऽइव । अनपऽच्युतं ॥ ववर्त । येषां । राया । युक्ता ।
एषां । हिरण्ययी । नेमऽधिता । न । पौंस्या । वृथाऽइव ।
विष्ऽअंता ॥ प्र । तत् । दुःऽशीमे । पृथवाने । वेने । प्र । रामे । वोचं ।
असुरे । मघवत्ऽसु । ये । युक्ताय । पंच । शता । अस्मऽयु । पथा ।
विऽश्राविं । एषां । अधि । इत् । नु । अत्र । सप्ततिं । च । सप्त । च ॥
सद्यः । दिदिष्ट । तान्वः । सद्यः । दिदिष्ट । पार्थ्यः । सद्यः । दिदिष्ट ।
मायवः ॥ २८ ॥ प्र । एते । वदंतु । प्र । वयं । वदाम । ग्रावऽभ्यः ।
वाचं । वदत । वदत्ऽभ्यः । यत् । अद्रयः । पर्वताः । साकं । आशवः ।

श्लोकं । घोषं । भरथ । इंद्राय । सोमिनः ॥ एते । वदंति । शतऽवत् । सहस्रऽवत् । अभि । क्रंदंति । हरितेभिः । आसऽभिः । विष्ट्वी । ग्रावाणः । सुऽकृतः । सुऽकृत्यया । होतुः । चित् । पूर्वः । हविःऽअद्यं । आशत ॥ एते । वदंति । अविदन् । अना । मधु । नि । ऊंखयंते । अधि । पक्के । आमिषि । वृक्षस्य । शाखां । अरुणस्य । बप्सतः । ते । सूर्भर्वाः । वृषभाः । प्र । ईं । अराविषुः ॥ बृहत् । वदंति । मदिरेण । मंदिना । इंद्रं । क्रोशंतः । अविदन् । अना । मधु । संऽरभ्य । धीराः । स्वसृऽभिः । अनर्तिषुः । आऽघोषयंतः । पृथिवीं । उपब्दिऽभिः ॥ सुऽपर्णाः । वाचं । अक्रत । उप । द्यवि । आऽखरे । कृष्णाः । इषिराः । अनर्तिषुः । न्यक् । नि । यंति । उपरस्य । निःऽकृतं । पुरु । रेतः । दधिरे । सूर्यऽश्वितः ॥ २९ ॥ उग्राःऽइव । प्रऽवहंतः । संऽआयमुः । साकं । युक्ताः । वृषणः । बिभ्रतः । धुरः । यत् । श्वसंतः । जग्रसानाः । अराविषुः । शृण्वे । एषां । प्रोथथः । अर्वताऽइव ॥ दशावनिऽभ्यः । दशऽकक्ष्येभ्यः । दशऽयोक्त्रेभ्यः । दशऽयोजनेभ्यः । दशाभीशुऽभ्यः । अर्चत । अजरेभ्यः । दश । धुरः । दश । युक्ताः । वहत्ऽभ्यः ॥ ते । अद्रयः । दशऽयंत्रासः । आशवः । तेषां । आऽधानं । परि । एति । हर्यतं । ते । ऊँइति । सुतस्य । सोम्यस्य । अंधसः । अंशोः । पीयूषं । प्रथमस्य । भेजिरे ॥ ते । सोमऽअदः । हरीइति । इंद्रस्य । निंसते । अंशुं । दुहंतः । अधि । आसते । गवि । तेभिः । दुग्धं । पपिऽवान् । सोम्यं । मधु । इंद्रः । वर्धते । प्रथते । वृषऽयते ॥ वृषा । वः । अंशुः । न । किल । रिषाथन । इळाऽवंतः । सदं । इत् । स्थन । आशिताः । रैवत्याऽइव । महसा । चारवः । स्थन । यस्य । ग्रावाणः । अजुषध्वं । अध्वरं ॥ ३० ॥ तृदिलाः । अतृदिलासः । अद्रयः । अश्रमणाः । अशृथिताः । अमृत्यवः । अनातुराः । अजराः । स्थ । अमविष्णवः । सुऽपीवसः । अतृषिताः । अतृष्णऽजः ॥ ध्रुवाः । एव । वः । पितरः । युगेऽयुगे । क्षेमऽकामासः । सदसः । न । युंजते । अजुर्यासः ।

हरि॒ऽसाचः । हरि॑द्र्वः । आ । द्यां । रवेण । पृ॒थि॒वीं । अ॒शु॒श्र॒वु॒ः ॥ तत् । इत् । व॒दं॒ति॒ । अद्र॑यः । वि॒ऽमोच॑ने । याम॑न् । अ॒ञ्ज॒ःपाऽइव । घ॒ । इत् । उ॒प॒ब्दि॒ऽभिः । वप॑तः । वी॒जंऽइव । धा॒न्य॒ऽकृतः । पृ॒चंति॑ । सोम॑ं । न । मि॒नं॒ति॒ । बप्सतः ॥ सु॒ते । अ॒ध्व॒रे । अधि॑ । वाच॑ं । अ॒क्र॒त॒ । आ । क्री॒ळय॑ः । न । मा॒तर॑ं । तु॒दं॒तः । वि । सु । मुं॒च॒ । सु॒सु॒ऽवु॒षः । म॒नी॒षां । वि । व॒र्त॒तां । अद्र॑यः । चाय॑मानाः ॥ ३१ ॥

इति अष्टमाष्टके चतुर्थोध्यायः ॥ ४ ॥



## अथ पञ्चमोध्यायः

हरिः ॐ ॥ ह॒ये । जाये॑ । मन॑सा । तिष्ठ॑ । घो॒रे॒ । वचां॑सि । मि॒श्रा । कृ॒ण॒वा॒व॒है॒ । नु । न । नौ॒ । मं॒त्राः । अनु॑दितासः । ए॒ते । मय॑ः । क॒र॒न् । पर॑ऽतरे । च॒न । अह॑न् ॥ किं । ए॒ता । वा॒चा । कृ॒ण॒व॒ । तव॑ । अ॒हं । प्र । अ॒क्र॒मि॒षं । उ॒षसा॑ं । अ॒ग्रि॒याऽइ॑व । पुरू॑रवः । पुन॑ः । अस्तं॑ । परा॑ । इ॒हि॒ । दु॒ःऽआ॒प॒ना । वात॑ःऽइव । अ॒हं । अ॒स्मि॒ ॥ इषु॑ः । न । श्रि॒ये । इ॒षु॒ऽधेः । अ॒स॒ना । गो॒ऽसाः । श॒त॒ऽसाः । न । रंहि॑ः । अ॒वी॒रे॑ । क्रतौ॑ । वि । द॒वि॒द्यु॒त॒त् । न । उरा॑ । न । मा॒युं । चि॒त॒यं॒त॒ । धुन॑यः ॥ सा । वसु॑ । दध॑ती । श्वशु॑राय । वय॑ः । उष॑ः । यदि॑ । वष्टि॑ । अंति॑ऽगृहात् । अस्तं॑ । न॒न॒क्षे॒ । यस्मि॑न् । चा॒कन् । दिवा॑ । नक्तं॑ । श्न॒थि॒ता । वै॒त॒सेन॑ ॥ त्रिः । स्म॒ । मा॒ । अह्न॑ः । श्न॒थ॒य॒ः । वै॒त॒सेन॑ । उ॒त । स्म॒ । मे॒ । अव्य॑त्यै । पृ॒णा॒सि॒ । पुरू॑रवः । अनु॑ । ते॒ । केत॑ं । आ॒यं॒ । राजा॑ । मे॒ । वी॒र॒ । त॒न्व॑ः । तत् । आ॒सीः ॥ १ ॥ या । सु॒ऽजू॒र्णिः । श्रेणि॑ः । सु॒म्ने॒ऽआ॑पिः । ह्र॒दे॒ऽच॑क्षुः । न । ग्रं॒थिनी॑ । च॒र॒ण्युः ।

ताः । अंजयः । अरुणयः । न । सस्रुः । श्रिये । गावः । न । धेनवः । अनवंत ॥ सं । अस्मिन् । जायमानेः । आसत । ग्नाः । उत । ईं । अवर्धन् । नद्यः । स्वऽगूर्ताः । महे । यत् । त्वा । पुरूरवः । रणाय । अवर्धयन् । दस्युऽहत्याय । देवाः ॥ सचा । यत् । आसु । जहतीषु । अत्कं । अमानुषीषु । मानुषः । निऽसेवे । अप । स्म । मत् । तरसंती । न । भुज्युः । ताः । अत्रसन् । रथऽस्पृशः । न । अश्वाः ॥ यत् । आसु । मर्तः । अमृतासु । निऽस्पृक् । सं । क्षोणीभिः । क्रतुऽभिः । न । पृंक्ते । ताः । आतयः । न । तन्वः । शुंभत । स्वाः । अश्वासः । न । क्रीळयः । दंदशानाः ॥ विऽद्युत् । न । या । पतंती । दविद्योत् । भरंती । मे । अप्या । काम्यानि । जनिष्टोइति । अपः । नर्यः । सुऽजातः । प्र । उर्वशी । तिरत । दीर्घं । आयुः ॥ २ ॥ जज्ञिषे । इत्था । गोऽपीथ्याय । हि । दधाथ । तत् । पुरूरवः । मे । ओजः । अशासं । त्वा । विदुषी । सस्मिन् । अहन् । न । मे । आ । अशृणोः । किं । अभुक् । वदासि ॥ कदा । सूनुः । पितरं । जातः । इच्छात् । चक्रन् । न । अश्रु । वर्तयत् । विऽजानन् । कः । दंपतीइतिदंऽपती । सऽमनसा । वि । यूयोत् । अध । यत् । अग्निः । श्वशुरेषु । दीदयत् ॥ प्रति । ब्रवाणि । वर्तयते । अश्रु । चक्रन् । न । क्रंदत् । आऽध्ये । शिवायै । प्र । तत् । ते । हिनव । यत् । ते । अस्मेइति । परा । इहि । अस्तं । नहि । मूर । मा । आपः ॥ सुऽदेवः । अद्य । प्रऽपतेत् । अनावृत् । पराऽवतं । परमां । गंतवै । ऊँइति । अध । शयीत । निःऽऋतेः । उपऽस्थे । अध । एनं । वृकाः । रभसासः । अद्युः ॥ पुरूरवः । मा । मृथाः । मा । प्र । पप्तः । मा । त्वा । वृकासः । अशिवासः । ऊँइति । क्षन् । न । वै । स्त्रैणानि । सख्यानि । संति । सालावृकाणां । हृदयानि । एता ॥ ३ ॥ यत् । विऽरूपा । अचरं । मर्त्येषु । अवसं । रात्रीः । शरदः । चतस्रः । घृतस्य । स्तोकं । सकृत् । अह्नः । आश्नां । तात् । एव । इदं । ततृपाणा । चरामि ॥ अंतरिक्षऽ-

प्रां । रजसः । विऽमानीं । उप । शिक्षामि । उर्वशीं । वसिष्ठः । उप । त्वा । रातिः । सुऽकृतस्य । तिष्ठात् । नि । वर्तस्व । हृदयं । तप्यते । मे ॥ इति । त्वा । देवाः । इमे । आहुः । ऐळ । यथा । ईं । एतत् । भवसि । मृत्युऽबंधुः । प्रऽजा । ते । देवान् । हविषा । यजाति । स्वःऽगे । ऊँइति । त्वं । अपि । मादयासे ॥ ४ ॥ प्र । ते । महे । विदथे । शंसिषं । हरीइति । प्र । ते । वन्वे । वनुषः । हर्यतं । मदं । घृतं । न । यः । हरिऽभिः । चारु । सेचते । आ । त्वा । विशंतु । हरिऽवर्पसं । गिरः ॥ हरिं । हि । योनिं । अभि । ये । संऽअस्वरन् । हिन्वंतः । हरीइति । दिव्यं । यथा । सदः । आ । यं । पृणंति । हरिऽभिः । न । धेनवः । इंद्राय । शूषं । हरिऽवंतं । अर्चत ॥ सः । अस्य । वज्रः । हरितः । यः । आयसः । हरिः । निऽकामः । हरिः । आ । गभस्त्योः । द्युम्नी । सुऽशिप्रः । हरिमन्युऽसायकः । इंद्रे । नि । रूपा । हरिता । मिमिक्षिरे ॥ दिवि । न । केतुः । अधि । धायि । हर्यतः । विव्यचत् । वज्रः । हरितः । न । रंह्या । तुदत् । अहिं । हरिऽशिप्रः । यः । आयसः । सहस्रऽशोकाः । अभवत् । हरिऽभरः ॥ त्वंऽत्वं । अहर्यथाः । उपऽस्तुतः । पूर्वेभिः । इंद्र । हरिऽकेश । यज्वऽभिः । त्वं । हर्यसि । तव । विश्वं । उक्थ्यं । असामि । राधः । हरिऽजात । हर्यतं ॥ ५ ॥ ता । वज्रिणं । मंदिनं । स्तोम्यं । मदे । इंद्रं । रथे । वहतः । हर्यता । हरीइति । पुरूणि । अस्मै । सवनानि । हर्यते । इंद्राय । सोमाः । हरयः । दधन्विरे ॥ अरं । कामाय । हरयः । दधन्विरे । स्थिराय । हिन्वन् । हरयः । हरीइति । तुरा । अर्वत्ऽभिः । यः । हरिऽभिः । जोषं । ईयते । सः । अस्य । कामं । हरिऽवंतं । आनशे ॥ हरिऽश्मशारुः । हरिऽकेशः । आयसः । तुरःऽपेये । यः । हरिऽपाः । अवर्धत ॥ ० ॥ वाजिनीऽवसुः । अति । विश्वा । दुःऽइता । पारिषत् । हरीइति ॥ स्रुवाऽइव । यस्य । हरिणीइति । विऽपेततुः । शिप्रेइति । वाजाय । हरिणीइति । दविध्वतः । प्र । यत् । कृते ।

चमसे । मर्मृजत् । हरीइति । पीत्वा । मदस्य । हर्यतस्य । अंधसः ॥ उत । स्म । सद्म । हर्यतस्य । पस्त्योः । अत्यः । न । वाजं । हरिऽवान् । अचिक्रदत् । मही । चित् । हि । धिषणा । अहर्यत् । ओजसा । बृहत् । वयः । दधिषे । हर्यतः । चित् । आ ॥ ६ ॥ आ । रोदसीइति । हर्यमाणः । महिऽत्वा । नव्यंऽनव्यं । हर्यसि । मन्म । नु । प्रियं । प्र । पस्त्यं । असुर । हर्यतं । गोः । आविः । कृधि । हरये । सूर्याय ॥ आ । त्वा । हर्यतं । प्रऽयुजः । जनानां । रथे । वहंतु । हरिऽशिप्रं । इंद्र । पिब । यथा । प्रतिऽभृतस्य । मध्वः । हर्यन् । यज्ञं । सधऽमादे । दशऽओणिं ॥ अपाः । पूर्वेषां । हरिऽवः । सुतानां । अथोइति । इदं । सवनं । केवलं । ते । ममद्धि । सोमं । मधुऽमंतं । इंद्र । सत्रा । वृषन् । जठरे । आ । वृषस्व ॥ ७ ॥ याः । ओषधीः । पूर्वाः । जाताः । देवेभ्यः । त्रिऽयुगं । पुरा । मनै । नु । बभ्रूणां । अहं । शतं । धामानि । सप्त । च ॥ शतं । वः । अंब । धामानि । सहस्रं । उत । वः । रुहः । अध । शतऽक्रत्वः । यूयं । इमं । मे । अगदं । कृत ॥ ओषधीः । प्रति । मोदध्वं । पुष्पऽवतीः । प्रऽसूवरीः । अश्वाःऽइव । सऽजित्वरीः । वीरुधः । पारयिष्णवः ॥ ओषधीः । इति । मातरः । तत् । वः । देवीः । उप । ब्रुवे । सनेयं । अश्वं । गां । वासः । आत्मानं । तव । पुरुष ॥ अश्वत्थे । वः । निऽसदनं । पर्णे । वः । वसतिः । कृता । गोऽभाजः । इत् । किल । असथ । यत् । सनवथ । पुरुषं ॥ ८ ॥ यत्र । ओषधीः । संऽअग्मत । राजानः । समितौऽइव । विप्रः । सः । उच्यते । भिषक् । रक्षःऽहा । अमीवऽचातनः ॥ अश्वऽवतीं । सोमऽवतीं । ऊर्जयंतीं । उत्ऽओजसं । आ । अवित्सि । सर्वाः । ओषधीः । अस्मै । अरिष्टऽतातये ॥ उत् । शुष्माः । ओषधीनां । गावः । गोस्थात्ऽइव । ईरते । धनं । सनिष्यंतीनां । आत्मानं । तव । पुरुष ॥ इष्कृतिः । नाम । वः । माता । अथोइति । यूयं । स्थ । निःऽकृतीः । सीराः । पतत्रिणीः । स्थन । यत् । आमयति । निः । कृथ ॥ अति ।

विश्वाः । परिऽस्थाः । स्तेनःऽइव । व्रजं । अक्रमुः । ओषधीः । प्र ।
अचुच्यवुः । यत् । किं । च । तन्वः । रपः ॥ ९ ॥ यत् । इमाः ।
वाजयन् । अहं । ओषधीः । हस्ते । आऽदधे । आत्मा । यक्ष्मस्य ।
नश्यति । पुरा । जीवऽगृभः । यथा ॥ यस्य । ओषधीः । प्रऽसर्पथ ।
अंगंऽअंगं । परुःऽपरुः । ततः । यक्ष्मं । वि । बाधध्वे । उग्रः ।
मध्यमशीःऽइव ॥ साकं । यक्ष्म । प्र । पत । चाषेण । किकिदीविना ।
साकं । वातस्य । ध्राज्या । साकं । नश्य । निऽहाकया ॥ अन्या । वः ।
अन्यां । अवतु । अन्या । अन्यस्याः । उप । अवत । ताः । सर्वाः । संऽ-
विदानाः । इदं । मे । प्र । अवत । वचः ॥ या । फलिनीः । याः ।
अफलाः । अपुष्पाः । याः । च । पुष्पिणीः । बृहस्पतिऽप्रसूताः । ताः ।
नः । मुंचंतु । अंहसः ॥ १० ॥ मुंचंतु । मा । शपथ्यात् । अथोइति ।
वरुण्यात् । उत । अथोइति । यमस्य । पड्बीशात् । सर्वस्मात् ।
देवऽकिल्बिषात् ॥ अवऽपतंतीः । अवदन् । दिवः । ओषधयः । परि ।
यं । जीवं । अश्नवामहै । न । सः । रिष्याति । पुरुषः ॥ याः ।
ओषधीः । सोमऽराज्ञीः । बह्वीः । शतऽविचक्षणाः । तासां । त्वं ।
असि । उत्ऽतमा । अरं । कामाय । शं । हृदे ॥ ० ॥ विऽस्थिताः ।
पृथिवीं । अनु । बृहस्पतिऽप्रसूताः । अस्यै । सं । दत्त । वीर्यं ॥ मा ।
वः । रिषत् । खनिता । यस्मै । च । अहं । खनामि । वः । द्विऽपत् ।
चतुःऽपत् । अस्माकं । सर्वं । अस्तु । अनातुरं ॥ याः । च । इदं ।
उपऽशृण्वंति । याः । च । दूरं । पराऽगताः । सर्वाः । संऽगत्य ।
वीरुधः ॥ ० ॥ ओषधयः । सं । वदंते । सोमेन । सह । राज्ञा ।
यस्मै । कृणोति । ब्राह्मणः । तं । राजन् । पारयामसि ॥ त्वं । उत्ऽ-
तमा । असि । ओषधे । तव । वृक्षाः । उपस्तयः । उपस्तिः । अस्तु ।
सः । अस्माकं । यः । अस्मान् । अभिऽदासति ॥ ११ ॥ बृहस्पते ।
प्रति । मे । देवतां । इहि । मित्रः । वा । यत् । वरुणः । वा । असि ।
पूषा । आदित्यैः । वा । यत् । वसुऽभिः । मरुत्वान् । सः । पर्जन्यं ।

शंऽतंनवे । वृषय ॥ आ । देवः । दूतः । अजिरः । चिकित्वान् । त्वत् । देवऽआपे । अभि । मां । अगच्छत् । प्रतीचीनः । प्रति । मां । आ । ववृत्स्व । दधामि । ते । द्युऽमतीं । वाचं । आसन् ॥ अस्मेइति । धेहि । द्युऽमतीं । वाचं । आसन् । बृहस्पते । अनमीवां । इषिरां । यया । वृष्टिं । शंऽतंनवे । वनाव । दिवः । द्रप्सः । मधुऽमान् । आ । विवेश ॥ आ । नः । द्रप्साः । मधुऽमंतः । विशंतु । इंद्र । देहि । अधिऽरथं । सहस्रं । नि । सीद । होत्रं । ऋतुऽथा । यजस्व । देवान् । देवऽआपे । हविषा । सपर्य ॥ आर्ष्टिषेणः । होत्रं । ऋषिः । निऽसीदन् । देवऽआपिः । देवऽसुमतिं । चिकित्वान् । सः । उत्ऽतरस्मात् । अधरं । समुद्रं । अपः । दिव्याः । असृजत् । वर्ष्याः । अभि ॥ अस्मिन् । समुद्रे । अधि । उत्ऽतरस्मिन् । आपः । देवेभिः । निऽवृताः । अतिष्ठन् । ताः । अद्रवन् । आर्ष्टिषेणेन । सृष्टाः । देवऽआपिना । प्रऽइषिताः । मृक्षिणीषु ॥ १२ ॥ यत् । देवऽआपिः । शंऽतंनवे । पुरःऽहितः । होत्राय । वृतः । कृपयन् । अदीधेत् । देवऽश्रुतं । वृष्टिऽवनिं । रराणः । बृहस्पतिः । वाचं । अस्मै । अयच्छत् ॥ यं । त्वा । देवऽआपिः । शुशुचानः । अग्ने । आर्ष्टिषेणः । मनुष्यः । संऽईधे । विश्वेभिः । देवैः । अनुऽमद्यमानः । प्र । पर्जन्यं । ईरय । वृष्टिऽमंतं ॥ त्वां । पूर्वे । ऋषयः । गीःऽभिः । आयन् । त्वां । अध्वरेषु । पुरुऽहूत । विश्वे । सहस्राणि । अधिऽरथानि । अस्मेइति । आ । नः । यज्ञं । रोहित्ऽअश्व । उप । याहि ॥ एतानि । अग्ने । नवतिः । नव । त्वेइति । आऽहुतानि । अधिऽरथा । सहस्रा । तेभिः । वर्धस्व । तन्वः । शूर । पूर्वीः । दिवः । नः । वृष्टिं । इषितः । रिरीहि ॥ एतानि । अग्ने । नवतिं । सहस्रा । सं । प्र । यच्छ । वृष्णे । इंद्राय । भागं । विद्वान् । पथः । ऋतुऽशः । देवऽयानान् । अपि । औलानं । दिवि । देवेषु । धेहि ॥ अग्ने । बाधस्व । वि । मृधः । वि । दुःऽगहा । अप । अमीवां । अप । रक्षांसि । सेध । अस्मात् । समुद्रात् । बृहतः । दिवः । नः ।

अपां । भूमानं । उप । नः । सृज । इह ॥ १३ ॥ कं । नः । चित्रं । इषण्यसि । चिकित्वान् । पृथुऽग्मानं । वाश्रं । ववृधध्यै । कत् । तस्य । दातु । शवसः । विऽउष्टौ । तक्षत् । वज्रं । वृत्रऽतुरं । अपिन्वत् ॥ सः । हि । द्युता । विऽद्युता । वेति । साम । पृथुं । योनिं । असुरऽत्वा । आ । ससाद । सः । सऽनीळेभिः । प्रऽसहानः । अस्य । भ्रातुः । न । ऋते । सप्तथस्य । मायाः ॥ सः । वाजं । याता । अपदुःऽपदा । यन् । स्वःऽसाता । परि । सदत् । सनिष्यन् । अनर्वा । यत् । शतऽदुरस्य । वेदः । घ्नन् । शिश्नऽदेवान् । अभि । वर्पसा । भूत् ॥ सः । यह्व्यः । अवनीः । गोषु । अर्वा । आ । जुहोति । प्रऽधन्यासु । सस्निः । अपादः । यत्र । युज्यासः । अरथाः । द्रोणिऽअश्वासः । ईरते । घृतं । वारितिवाः ॥ सः । रुद्रेभिः । अशस्तऽवारः । ऋभ्वा । हित्वी । गयं । आरेऽअवद्यः । आ । अगात् । वम्रस्य । मन्ये । मिथुना । विवव्रीइति-विऽवव्री । अन्नं । अभिऽइत्य । अरोदयत् । मुषायन् ॥ सः । इत् । दासं । तुविऽरवं । पतिः । दन् । षट्ऽअक्षं । त्रिऽशीर्षाणं । दमन्यत् । अस्य । त्रितः । नु । ओजसा । वृधानः । विपा । वराहं । अयःऽअग्रया । हन्निति हन् ॥ १४ ॥ सः । द्रुह्वणे । मनुषे । ऊर्ध्वसानः । आ । साविषत् । अर्शसानाय । शरुं । सः । नृऽतमः । नहुषः । अस्मत् । सुऽजातः । पुरः । अभिनत् । अर्हन् । दस्युऽहत्ये ॥ सः । अभ्रियः । न । यवसे । उदन्यन् । क्षयाय । गातुं । विदत् । नः । अस्मेइति । उप । यत् । सीदत् । इंदुं । शरीरैः । श्येनः । अयःऽअपाष्टिः । हंति । दस्यून् ॥ सः । व्राधतः । शवसानेभिः । अस्य । कुत्साय । शुष्णं । कृपणे । परा । अदात् । अयं । कविं । अनयत् । शस्यमानं । अत्कं । यः । अस्य । सनिता । उत । नृणां ॥ अयं । दशस्यन् । नर्येभिः । अस्य । दस्मः । देवेभिः । वरुणः । न । मायी । अयं । कनीनः । ऋतुऽपाः । अवेदि । अमिमीत । अररुं । यः । चतुःऽपात् ॥ अस्य । स्तोमेभिः । औशिजः । ऋजिश्वा । व्रजं । दरयत् । वृषभेण । पिप्रोः ।

सुत्वा । यत् । यजतः । दीदयत् । गीः । पुरः । इयानः । अभि । वपसा । भूत् ॥ एव । महः । असुर । वक्षथाय । वम्रकः । पट्ऽभिः । उप । सर्पत् । इंद्रं । सः । इयानः । करति । स्वस्ति । अस्मै ॥ ० ॥ इति अष्टमोऽनुवाकः ॥ – :: – ॥ अथ नवमोऽनुवाकः ॥ – :: – ॥ ॥ १५ ॥ इंद्रं । दृह्य । मघऽवन् । त्वाऽवंत् । इत् । भुजे । इह । स्तुतः । सुतऽपाः । बोधि । नः । वृधे । देवेभिः । नः । सविता । प्र । अवतु । श्रुतं । आ । सर्वऽतातिं । अदितिं । वृणीमहे ॥ भराय । सु । भरत । भागं । ऋत्वियं । प्र । वायवे । शुचिऽपे । क्रंदत्ऽइष्टये । गौरस्य । यः । पयसः । पीतिं । आनशे ॥ ० ॥ आ । नः । देवः । सविता । साविषत् । वयः । ऋजुऽयते । यजमानाय । सुन्वते । यथा । देवान् । प्रतिऽभूषेम । पाकऽवत् ॥ ० ॥ इंद्रः । अस्मेइति । सुऽमनाः । अस्तु । विश्वहा । राजा । सोमः । सुवितस्य । अधि । एतु । नः । यथाऽयथा । मित्रऽधितानि । संऽदधुः ॥ ० ॥ इंद्रः । उक्थेन । शवसा । परुः । दधे । बृहस्पते । प्रऽतरीता । असि । आयुषः । यज्ञः । मनुः । प्रऽमतिः । नः । पिता । हि । कं ॥ ० ॥ इंद्रस्य । नु । सुऽकृतं । दैव्यं । सहः । अग्निः । गृहे । जरिता । मेधिरः । कविः । यज्ञः । च । भूत् । विदथे । चारुः । अंतमः ॥ ० ॥ १६ ॥ न । वः । गुहा । चकृम । भूरि । दुःऽकृतं । न । आविःऽत्यं । वसवः । देवऽहेळनं । माकिः । नः । देवाः । अनृतस्य । वपसः ॥ ० ॥ अप । अमीवां । सविता । साविषत् । न्यक् । वरीयः । इत् । अप । सेधंतु । अद्रयः ॥ ० ॥ ऊर्ध्वः । ग्रावा । वसवः । अस्तु । सोतरि । विश्वा । द्वेषांसि । सनुतः । युयोत । सः । नः । देवः । सविता । पायुः । ईड्यः ॥ ० ॥ ऊर्जं । गावः । यवसे । पीवः । अत्तन । ऋतस्य । याः । सदने । कोशे । अङ्ध्वे । तनूः । एव । तन्वः । अस्तु । भेषजं ॥ ० ॥ क्रतुऽप्रावा । जरिता । शश्वतां । अवः । इंद्रः । इत् । भद्रा । प्रऽमतिः । सुतऽवतां । पूर्णं । ऊधः । दिव्यं । यस्य ।

सिक्तये ॥ ० ॥ चित्रः । ते । भानुः । क्रतुऽप्राः । अभिष्टिः । संति ।
स्पृधः । जरणिऽप्राः । अधृष्टाः । रजिष्ठया । रज्या । पश्वः । आ ।
गोः । तूतूर्षति । परि । अग्रं । दुवस्युः ॥ १७ ॥ उत् । बुध्यध्वं ।
सऽमनसः । सखायः । सं । अग्निं । इंध्वं । बहवः । सऽनीळाः ॥ ० ॥
इंद्रऽवतः । अवसे । नि । ह्वये । वः ॥ मंद्रा । कृणुध्वं । धियः । आ ।
तनुध्वं । नावं । अरित्रऽपरणीं । कृणुध्वं । इष्कृणुध्वं । आयुधा । अरं ।
कृणुध्वं । प्रांचं । यज्ञं । प्र । नयत । सखायः ॥ युनक्त । सीरा । वि ।
युगा । तनुध्वं । कृते । योनौ । वपत । इह । बीजं । गिरा । च । श्रुष्टिः ।
सऽभराः । असत् । नः । नेदीयः । इत् । सृण्यः । पक्वं । आ । इयात् ॥
सीरा । युंजंति । कवयः । युगा । वि । तन्वते । पृथक् । धीराः ।
देवेषु । सुम्नऽया ॥ निः । आऽहावान् । कृणोतन । सं । वरत्राः ।
दधातन । सिंचामहै । अवतं । उद्रिणं । वयं । सुऽसेकं । अनुपऽक्षितं ॥
इष्कृतऽआहावं । अवतं । सुऽवरत्रं । सुऽसेचनं । उद्रिणं । सिंचे ।
अक्षितं ॥ १८ ॥ प्रीणीत । अश्वान् । हितं । जयाथ । स्वस्तिऽवाहं ।
रथं । इत् । कृणुध्वं । द्रोणऽआहावं । अवतं । अश्मऽचक्रं । अंसत्रऽ-
कोशं । सिंचत । नृऽपानं ॥ व्रजं । कृणुध्वं । सः । हि । वः । नृऽ-
पानः । वर्म । सीव्यध्वं । बहुला । पृथूनि । पुरः । कृणुध्वं । आयसीः ।
अधृष्टाः । मा । वः । सुस्रोत् । चमसः । दृंहत । तं ॥ आ । वः ।
धियं । यज्ञियां । वर्ते । ऊतये । देवाः । देवीं । यजतां । यज्ञियां ।
इह ॥ ० ॥ आ । तु । सिंच । हरिं । ईं । द्रोः । उपऽस्थे । वाशीभिः ।
तक्षत । अश्मन्ऽमयीभिः । परि । स्वजध्वं । दश । कक्ष्याभिः ।
उभेइति । धुरौ । प्रति । वह्निं । युनक्त ॥ उभेइति । धुरौ । वह्निः ।
आऽपिब्दमानः । अंतः । योनाऽइव । चरति । द्विऽजानिः । वनस्पतिं ।
वने । आ । अस्थापयध्वं । नि । सु । दधिध्वं । अखनंतः । उत्सं ॥
कपृत् । नरः । कपृथं । उत् । दधातन । चोदयत । खुदत । वाजऽ-
सातये । निष्टिग्र्यः । पुत्रं । आ । च्यवय । ऊतये । इंद्रं । सऽबाधः ।

इह । सोमऽपीतये ॥ १९ ॥ प्र । ते । रथं । मिथुऽकृतं । इंद्रः । अवतु । धृष्णुऽया । अस्मिन् । आजौ । पुरुऽहूत । श्रवाय्ये । धनऽभक्षेषु । नः । अव ॥ उत् । स्म । वातः । वहति । वासः । अस्याः । अधिऽरथं । यत् । अजयत् । सहस्रं । रथीः । अभूत् । मुद्गलानी । गोऽइष्टौ । भरे । कृतं । वि । अचेत् । इंद्रऽसेना ॥ अंतः । यच्छ । जिघांसतः । वज्रं । इंद्र । अभिऽदासतः । दासस्य । वा । मघऽवन् । आर्यस्य । वा । सनुतः । यवय । वधं ॥ उद्नः । ह्रदं । अपिबत् । जर्हृषाणः । कूटं । स्म । तृहत् । अभिऽमातिं । एति । प्र । मुष्कऽभारः । श्रवः । इच्छमानः । अजिरं । बाहूइति । अभरत् । सिसासन् ॥ नि । अक्रंदयन् । उपऽयंतः । एनं । अमेहयन् । वृषभं । मध्ये । आजेः । तेन । सूभर्वं । शतऽवत् । सहस्रं । गवां । मुद्गलः । प्रऽधने । जिगाय ॥ ककर्दवे । वृषभः । युक्तः । आसीत् । अवावचीत् । सारथिः । अस्य । केशी । दुधेः । युक्तस्य । द्रवतः । सह । अनसा । ऋच्छंति । स्म । निःऽपदः । मुद्गलानीं ॥ २० ॥ उत । प्रऽधिं । उत् । अहन् । अस्य । विद्वान् । उप । अयुनक् । वंसगं । अत्र । शिक्षन् । इंद्रः । उत् । आवत् । पतिं । अघ्न्यानां । अरंहत । पद्याभिः । ककुत्ऽमान् ॥ शुनं । अष्ट्राऽवी । अचरत् । कपर्दी । वरत्रायां । दारु । आऽनह्यमानः । नृम्णानि । कृण्वन् । बहवे । जनाय । गाः । पस्पशानः । तविषीः । अधत्त ॥ इमं । तं । पश्य । वृषभस्य । युंजं । काष्ठायाः । मध्ये । द्रुऽघनं । शयानं । येन । जिगाय । शतऽवत् । सहस्रं । गवां । मुद्गलः । पृतनाज्येषु ॥ आरे । अघा । कः । नु । इत्था । ददर्श । यं । युंजंति । तं । ऊंइति । आ । अस्थापयंति । न । अस्मै । तृणं । न । उदकं । आ । भरंति । उत्ऽतरः । धुरः । वहति । प्रऽदेदिशत् ॥ परिवृक्ताऽइव । पतिऽविद्यं । आनट् । पीप्याना । कूचक्रेणऽइव । सिंचन् । एषऽएष्या । चित् । रथ्या । जयेम । सुऽमंगलं । सिनऽवत् । अस्तु । सातं ॥ त्वं । विश्वस्य । जगतः । चक्षुः । इंद्र । असि । चक्षुषः । वृषा । यत् ।

आजिं । वृषणा । सिसासंसि । चोदयन् । वघ्रिणा । युजा ॥ २१ ॥
आशुः । शिशानः । वृषभः । न । भीमः । घनाघनः । क्षोभणः ।
चर्षणीनां । संऽक्रंदनः । अनिऽमिषः । एकऽवीरः । शतं । सेनाः ।
अजयत् । साकं । इंद्रः ॥ संऽक्रंदनेन । अनिऽमिषेण । जिष्णुना । युत्ऽ-
कारेण । दुःऽच्यवनेन । धृष्णुना । तत् । इंद्रेण । जयत । तत् ।
सहध्वं । युधः । नरः । इषुऽहस्तेन । वृष्णा ॥ सः । इषुऽहस्तैः । सः ।
निषंगिऽभिः । वशी । संऽस्रष्टा । सः । युधः । इंद्रः । गणेन । संसृष्टऽ-
जित् । सोमऽपाः । बाहुऽशर्धी । उग्रऽधन्वा । प्रतिऽहिताभिः । अस्ता ॥
बृहस्पते । परि । दीय । रथेन । रक्षःऽहा । अमित्रान् । अपऽ-
बाधमानः । प्रऽभंजन् । सेनाः । प्रऽमृणः । युधा । जयन् । अस्माकं ।
एधि । अविता । रथानां ॥ बलऽविज्ञायः । स्थविरः । प्रऽवीरः ।
सहस्वान् । वाजी । सहमानः । उग्रः । अभिऽवीरः । अभिऽसत्वा । सहःऽ-
जाः । जैत्रं । इंद्र । रथं । आ । तिष्ठ । गोऽवित् ॥ गोत्रऽभिदं । गोऽविदं ।
वज्रऽबाहुं । जयंतं । अज्म । प्रऽमृणंतं । ओजसा । इमं । सऽजाताः ।
अनु । वीरयध्वं । इंद्रं । सखायः । अनु । सं । रभध्वं ॥ २२ ॥
अभि । गोत्राणि । सहसा । गाहमानः । अदयः । वीरः । शतऽमन्युः ।
इंद्रः । दुःऽच्यवनः । पृतनाषाट् । अयुध्यः । अस्माकं । सेनाः । अवतु ।
प्र । युत्ऽसु ॥ इंद्रः । आसां । नेता । बृहस्पतिः । दक्षिणा । यज्ञः । पुरः ।
एतु । सोमः । देवऽसेनानां । अभिऽभंजतीनां । जयंतीनां । मरुतः ।
यंतु । अग्रं ॥ इंद्रस्य । वृष्णः । वरुणस्य । राज्ञः । आदित्यानां । मरुतां ।
शर्धः । उग्रं । महाऽमनसां । भुवनऽच्यवानां । घोषः । देवानां ।
जयतां । उत् । अस्थात् ॥ उत् । हर्षय । मघऽवन् । आयुधानि । उत् ।
सत्वनां । मामकानां । मनांसि । उत् । वृत्रऽहन् । वाजिनां ।
वाजिनानि । उत् । रथानां । जयतां । यंतु । घोषाः ॥ अस्माकं । इंद्रः ।
संऽऋतेषु । ध्वजेषु । अस्माकं । याः । इषवः । ताः । जयंतु । अस्माकं ।
वीराः । उत्ऽतरे । भवंतु । अस्मान् । ऊँइति । देवाः । अवत ।

हवेषु ॥ अमीषां । चित्तं । प्रतिऽलोभयंती । गृहाण । अंगानि । अप्वे । परा । इहि । अभि । प्र । इहि । निः । दह । हृत्ऽसु । शोकैः ॥ ० ॥ प्र । इत । जयत । नरः । इंद्रः । वः । शर्म । यच्छतु । उग्राः । वः । संतु । बाहवः । अनाधृष्याः । यथा । असथ ॥ २३ ॥ असावि । सोमः । पुरुऽहूत । तुभ्यं । हरिऽभ्यां । यज्ञं । उप । याहि । तूयं । तुभ्यं । गिरः । विप्रऽवीराः । इयानाः । दधन्विरे । इंद्र । पिब । सुतस्य ॥ अप्ऽसु । धूतस्य । हरिऽवः । पिब । इह । नृऽभिः । सुतस्य । जठरं । पृणस्व । मिमिक्षुः । यं । अद्रयः । इंद्र । तुभ्यं । तेभिः । वर्द्धस्व । मदं । उक्थऽवाहः ॥ प्र । उग्रां । पीतिं । वृष्णे । इयर्मि । सत्यां । प्रऽयै । सुतस्य । हरिऽअश्व । तुभ्यं । इंद्र । धेनाभिः । इह । मादयस्व । धीभिः । विश्वाभिः । शच्या । गृणानः ॥ ऊती । शचीऽवः । तव । वीर्येण । वयः । दधानाः । उशिजः । ऋतऽज्ञाः । प्रजाऽवत् । इंद्र । मनुषः । दुरोणे । तस्थुः । गृणंतः । सधऽमाद्यासः ॥ प्रनीतिऽभिः । ते । हरिऽअश्व । सुऽस्तोः । सुऽसुम्नस्य । पुरुऽरुचः । जनासः । मंहिष्ठां । ऊतिं । विऽतिरे । दधानाः । स्तोतारः । इंद्र । तव । सूनृताभिः ॥ २४ ॥ उप । ब्रह्माणि । हरिऽवः । हरिऽभ्यां । सोमस्य । याहि । पीतये । सुतस्य । इंद्र । त्वा । यज्ञः । क्षममाणं । आनट् । दाश्वान् । असि । अध्वरस्य । प्रऽकेतः ॥ सहस्रऽवाजं । अभिमातिऽसहं । सुतेऽरणं । मघऽवानं । सुऽवृक्ति । उप । भूषंति । गिरः । अप्रतिऽइतं । इंद्रं । नमस्याः । जरितुः । पनंत ॥ सप्त । आपः । देवीः । सुऽरणाः । अमृक्ताः । याभिः । सिंधुं । अतरः । इंद्र । पूःऽभित् । नवतिं । स्रोत्याः । नव । च । स्रवंतीः । देवेभ्यः । गातुं । मनुषे । च । विंदः ॥ अपः । महीः । अभिऽशस्तेः । अमुंचः । अजागः । आसु । अधि । देवः । एकः । इंद्र । याः । त्वं । वृत्रऽतूर्ये । चकर्थ । ताभिः । विश्वऽआयुः । तन्वं । पुपुष्याः ॥ वीरेण्यः । क्रतुः । इंद्रः । सुऽशस्तिः । उत । अपि । धेना । पुरुऽहूतं । ईट्टे ॥ आर्दयत् ।

वृत्रं । अकृणोत् । ऊँइति । लोकं । ससहे । शक्रः । पृतनाः । अभिष्टिः ॥ ० ॥ २५ ॥ कदा । वसोइति । स्तोत्रं । हर्यते । आ । अव । श्मशा । रुधत् । वारितिवाः । दीर्घं । सुतं । वाताप्याय ॥ हरीइति । यस्य । सुऽयुजा । विऽव्रता । वेः । अवैता । अनु । शेपा । उभा । रजीइति । न । केशिना । पतिः । दन् ॥ अप । योः । इंद्रः । पापजे । आ । मर्तः । न । शश्रमाणः । बिभीवान् । शुभे । यत् । युयुजे । तविषीऽवान् ॥ सचा । आयोः । इंद्रः । चर्कृषे । आ । उपानसः । सपर्यन् । नदयोः । विऽव्रतयोः । शूरः । इंद्रः ॥ अधि । यः । तस्थौ । केशऽवंता । व्यचस्वंता । न । पुष्ट्यै । वनोति । शिप्राभ्यां । शिप्रिणीऽवान् ॥ २६ ॥ प्र । अस्तौत् । ऋष्वऽओजाः । ऋष्वेभिः । ततक्ष । शूरः । शवसा । ऋभुः । न । क्रतुऽभिः । मातरिश्वा ॥ वज्रं । यः । चक्रे । सुऽहनाय । दस्यवे । हिरीमशः । हिरीमान् । अरुतऽहनुः । अद्भुतं । न । रजः ॥ अव । नः । वृजिना । शिशीहि । ऋचा । वनेम । अनृचः । न । अब्रह्मा । यज्ञः । ऋधक् । जोषति । त्वेइति ॥ ऊर्ध्वा । यत् । ते । त्रेतिनी । भूत् । यज्ञस्य । धूःऽसु । सद्मन् । सऽजूः । नावं । स्वऽयशसं । सचा । आयोः ॥ श्रिये । ते । पृश्निः । उपऽसेचनी । भूत् । श्रिये । दर्विः । अरेपाः । ययां । स्वे । पात्रे । सिंचसे । उत् ॥ शतं । वा । यत् । असुर्य । प्रति । त्वा । सुऽमित्रः । इत्था । अस्तौत् । दुःऽमित्रः । इत्था । अस्तौत् । आवः । यत् । दस्युऽहत्ये । कुत्सऽपुत्रं । प्र ॥ ० ॥ कुत्सऽवत्सं ॥ २७ ॥

इति अष्टमाष्टके पञ्चमोध्यायः ॥ ५ ॥



## ॥ अथ षष्ठोऽध्यायः ॥

हरिः ॐ ॥ उभौ । ऊँइति । नूनं । तत् । इत् । अर्थयेथेइति । वि । तन्वाथेइति । धियः । वस्त्रा । अपसाऽइव । सध्रीचीना । यातंवे । प्र । ईं । अजीगरिति । सुदिनाऽइव । पृक्षः । आ । तंसयेथेइति ॥ उष्टाराऽइव । फर्वरेषु । श्रयेथेइति । प्रायोगाऽइव । श्वात्र्या । शासुः । आ । इथः । दूताऽइव । हि । स्थः । हि । यशसा । जनेषु । मा । अपं । स्थातं । महिषाऽइव । अवऽपानात् ॥ साकंऽयुजा । शकुनस्यंऽइव । पक्षा । पश्वाऽइव । चित्रा । यजुः । आ । गमिष्टं । अग्निःऽइव । देवऽयोः । दीदिऽवांसा । परिज्मानाऽइव । यजथः । पुरुऽत्रा ॥ आपीइति । वः । अस्मेइति । पितराऽइव । पुत्रा । उग्राऽइव । रुचा । नृपतीइवेतिनृपतीऽइव । तुर्यै ॥ इर्याऽइव । पुष्ट्यै । किरणाऽइव । भुज्यै । श्रुष्टीवानाइव । हवं । आ । गमिष्टं । वंसगाऽइव । पूषर्या । शिंबाता । मित्राऽइव । ऋता । शतरा । शातंपंता ॥ वाजाऽइव । उच्चा । वयसा । घर्म्येऽस्था । मेषाऽइव । इषा । सपर्या । पुरीषा ॥ १ ॥ सृण्याऽइव । जर्भरीइति । तुर्फरीतूइति । नैतोशाऽइव । तुर्फरीइति । पर्फरीका । उदन्यजाऽइव । जेमना । मदेरूइति । ता । मे । जरायु । अजरं । मरायु ॥ पज्राऽइव । चर्चरं । जारं । मरायु । क्षद्मऽइव । अर्थेषु । तर्तरीथः । उग्रा । ऋभूइति । न । आपत् । खरमज्रा । खरऽज्रुः । वायुः । न । पर्फरत् । क्षयत् । रयीणां ॥ घर्माऽइव । मधु । जठरे । सनेरूइति । भगैऽअविता । तुर्फरीइति । फारिवा । अरं । पतराऽइव । चचरा । चंद्रऽनिर्निक् । मनःऽऋंगा । मनन्या । न । जग्मीइति ॥ बृहंताऽइव । गंभरेषु । प्रतिऽस्थां । पादाऽइव । गाधं । तरते ।

विदाथः । कर्णाऽइव । शासुः । अनु । हि । स्मरांथः । अंशांऽइव । नः । भजत । चित्रं । अप्नः ॥ आरंगराऽईव । मधुं । आ । ईरयेथेइति । सारघाऽईव । गवि । नीचीनऽबारे । कीनाराऽइव । स्वेदं । आऽसिस्विदाना । क्षामऽइव । ऊर्जा । सुयवसऽअत् । सचेथेइति ॥ ऋध्याम । स्तोमं । सनुयाम । वाजं । आ । नः । मंत्रं । सऽरथा । इह । उप । यातं । यशः । न । पक्वं । मधुं । गोषु । अंतः । आ । भूतऽअंशः । अश्विनोः । कामं । अप्राः ॥ २ ॥ आविः । अभूत् । महि । माघोनं । एषां । विश्वं । जीवं । तमसः । निः । अमोचि । महि । ज्योतिः । पितृऽभिः । दत्तं । आ । अगात् । उरुः । पंथाः । दक्षिणायाः । अदर्शि ॥ उच्चा । दिवि । दक्षिणाऽवंतः । अस्थुः । ये । अश्वऽदाः । सह । ते । सूर्येण । हिरण्यऽदाः । अमृतऽत्वं । भजंते । वासःऽदाः । सोम । प्र । तिरंते । आयुः ॥ दैवी । पूर्तिः । दक्षिणा । देवऽयज्या । न । कवऽअरिभ्यः । नहि । ते । पृणंति । अथ । नरः । प्रयतऽदक्षिणासः । अवद्यऽभिया । बहवः । पृणंति ॥ शतऽधारं । वायुं । अर्कं । स्वःऽविदं । नृऽचक्षसः । ते । अभि । चक्षते । हविः । ये । पृणंति । प्र । च । यच्छंति । संऽगमे । ते । दक्षिणां । दुहते । सप्तऽमातरं ॥ दक्षिणाऽवान् । प्रथमः । हूतः । एति । दक्षिणाऽवान् । ग्रामऽनीः । अग्रं । एति । तं । एव । मन्ये । नृऽपतिं । जनानां । यः । प्रथमः । दक्षिणां । आऽविवाय ॥ ३ ॥ तं । एव । ऋषिं । तं । ऊँइति । ब्रह्माणं । आहुः । यज्ञऽन्यं । सामऽगां । उक्थऽशसं । सः । शुक्रस्य । तन्वः । वेद । तिस्रः । यः । प्रथमः । दक्षिणया । रराध ॥ दक्षिणा । अश्वं । दक्षिणा । गां । ददाति । दक्षिणा । चंद्रं । उत् । यत् । हिरण्यं । दक्षिणा । अन्नं । वनुते । यः । नः । आत्मा । दक्षिणां । वर्म । कृणुते । विऽजानन् ॥ न । भोजाः । मम्रुः । न । निऽअर्थं । ईयुः । न । रिष्यंति । न । व्यथंते । ह । भोजाः । इदं । यत् । विश्वं । भुवनं । स्वः । इतिस्वः । च । एतत् । सर्वं । दक्षिणा । एभ्यः ।

दुदाति ॥ भोजाः । जिग्युः । सुरभिं । योनिं । अग्रे । भोजाः । जिग्युः । वध्वं । या । सुऽवासाः । भोजाः । जिग्युः । अंतःऽपेयं । सुरायाः । भोजाः । जिग्युः । ये । अहूताः । प्रऽयंति ॥ भोजाय । अश्वं । सं । मृजंति । आशुं । भोजाय । आस्ते । कन्या । शुंभमाना । भोजस्य । इदं । पुष्करिणीऽइव । वेश्म । परिऽकृतं । देवमानाऽइव । चित्रं ॥ भोजं । अश्वाः । सुष्ठुऽवाहः । वहंति । सुऽवृत् । रथः । वर्तते । दक्षिणायाः । भोजं । देवासः । अवत । भरेषु । भोजः । शत्रून् । संऽअनीकेषु । जेता ॥ ४ ॥ किं । इच्छंती । सरमा । प्र । इदं । आनट् । दूरे । हि । अध्वा । जगुरिः । पराचैः । का । अस्मेऽहितिः । का । परिऽतक्म्या । आसीत् । कथं । रसायाः । अतरः । पयांसि ॥ इंद्रस्य । दूतीः । इषिता । चरामि । महः । इच्छंती । पणयः । निऽधीन् । वः । अतिऽस्कदः । भियसा । तत् । नः । आवत् । तथा । रसायाः । अतरं । पयांसि ॥ कीदृङ् । इंद्रः । सरमे । का । दृशीका । यस्य । इदं । दूतीः । असरः । पराकात् । आ । च । गच्छात् । मित्रं । एन । दधाम । अथ । गवां । गोऽपतिः । नः । भवाति ॥ ० ॥ दभ्यं । दभत् । सः ॥ ० ॥ असरं । पराकात् । न । तं । गूहंति । स्रवतः । गभीराः । हताः । इंद्रेण । पणयः । शयध्वे ॥ इमाः । गावः । सरमे । याः । ऐच्छः । परि । दिवः । अंतान् । सुऽभगे । पतंती । कः । ते । एनाः । अव । सृजात् । अयुध्वी । उत । अस्माकं । आयुधा । संति । तिग्मा ॥ ५ ॥ असेन्या । वः । पणयः । वचांसि । अनिषव्याः । तन्वः । संतु । पापीः । अधृष्टः । वः । एतवै । अस्तु । पंथाः । बृहस्पतिः । वः । उभया । न । मृळात् ॥ अयं । निऽधिः । सरमे । अद्रिऽबुध्नः । गोभिः । अश्वेभिः । वसुऽभिः । निऽऋष्टः । रक्षंति । तं । पणयः । ये । सुऽगोपाः । रेकु । पदं । अलकं । आ । जगंथ ॥ आ । इह । गमन् । ऋषयः । सोमऽशिताः । अयास्यः । अंगिरसः । नवऽग्वाः । ते । एतं । ऊर्वं । वि । भजंत । गोनां । अथ । एतत् । वचः । पणयः ।

वमन् । इत् ॥ एव । च । त्वं । सरमे । आऽजगंथ । प्रऽबाधिता ।
सहसा । दैव्येन । स्वसारं । त्वा । कृणवै । मा । पुनः । गाः । अप ।
ते । गवां । सुऽभगे । भजाम ॥ न । अहं । वेद । भ्रातृऽत्वं । नो इति ।
स्वसृऽत्वं । इंद्रः । विदुः । अंगिरसः । च । घोराः । गोऽकामाः ।
मे । अच्छदयन् । यत् । आयं । अप । अतः । इत । पणयः । वरीयः ।
दूरं । इत । पणयः । वरीयः । उत् । गावः । यंतु । मिनतीः । ऋतेन ।
बृहस्पतिः । याः । अविंदत् । निऽगूळ्हाः । सोमः । ग्रावाणः । ऋषयः ।
च । विप्राः ॥ ६ ॥ ते । अवदन् । प्रथमाः । ब्रह्मऽकिल्बिषे । अकूपारः ।
सलिलः । मातरिश्वा । वीळुऽहराः । तपः । उग्रः । मयःऽभूः । आपः ।
देवीः । प्रथमऽजाः । ऋतेन ॥ सोमः । राजा । प्रथमः । ब्रह्मऽजायां ।
पुनरिति । प्र । अयच्छत् । अहृणीयमानः । अनुऽअर्तिता । वरुणः ।
मित्रः । आसीत् । अग्निः । होता । हस्तऽगृह्य । आ । निनाय ।
हस्तेन । एव । ग्राह्यः । आऽधिः । अस्याः । ब्रह्मऽजाया । इयं । इति ।
च । इत् । अवोचन् । न । दूताय । प्रऽह्ये । तस्थे । एषा । तथा ।
राष्ट्रं । गुपितं । क्षत्रियस्य ॥ देवाः । एतस्यां । अवदंत । पूर्वे । सप्तऽ-
ऋषयः । तपसे । ये । निऽसेदुः । भीमा । जाया । ब्राह्मणस्य । उपऽ-
नीता । दुःऽधां । दधाति । परमे । विऽओमन् ॥ ब्रह्मऽचारी । चरति ।
वेविषत् । विषः । सः । देवानां । भवति । एकं । अंगं । तेन । जायां ।
अनु । अविंदत् । बृहस्पतिः । सोमेन । नीतां । जुह्वं । न । देवाः ।
पुनः । वै । देवाः । अददुः । पुनः । मनुष्याः । उत । राजानः ।
सत्यं । कृण्वानाः । ब्रह्मऽजायां । पुनः । ददुः ॥ पुनःऽदाय । ब्रह्मऽ-
जायां । कृत्वी । देवैः । निऽकिल्बिषं । ऊर्जं । पृथिव्याः । भक्त्वाय ।
उरुगायं । उप । आसते ॥ ७ ॥ संऽइद्धः । अद्य । मनुषः । दुरोणे ।
देवः । देवान् । यजसि । जातऽवेदः । आ । च । वह । मित्रऽमहः ।
चिकित्वान् । त्वं । दूतः । कविः । असि । प्रऽचेताः ॥ तनूऽनपात् ।
पथः । ऋतस्य । यानान् । मध्वा । संऽअंजन् । स्वदय । सुऽजिह्व ।

मन्मानि । धीभिः । उत । यज्ञं । ऋंधन् । देवऽत्रा । च । कृणुहि । अध्वरं । नः ॥ आऽजुह्वानः । नः । ईड्यः । वंद्यः । च । आ । याहि । अग्ने । वसुऽभिः । सऽजोषाः । त्वं । देवानां । असि । यह्व । होता । सः । एनान् । यक्षि । इषितः । यजीयान् ॥ प्राचीनं । बर्हिः । प्रऽदिशा । पृथिव्याः । वस्तोः । अस्याः । वृज्यते । अग्रे । अह्नां ॥ ० ॥ देवेभ्यः । अदितये । स्योनं ॥ व्यचःऽस्वत्तरं । उर्विया । वि । श्रयंतां । पतिऽभ्यः । न । जनयः । शुंभमानाः । देवीः । द्वारः । बृहतीः । विश्वंऽइन्वाः । देवेभ्यः । भवत । सुप्रऽअयनाः ॥ ८ ॥ आ । सुस्वयंतीइति । यजतेइति । उपाकेइति ॥ ० ॥ दिव्येइति । योषणेइति । बृहतीइति । सुरुक्मेइतिसुरुक्मे । अधि । श्रियं । शुक्रऽपिशं । दधानेइति ॥ ८ ॥ सुऽवाचा । मिमाना । यज्ञं । मनुषः । यजध्यै । प्रऽचोदयंता । विदथेषु । कारूइति । प्राचीनं । ज्योतिः । प्रऽदिशा । दिशंता ॥ आ । नः । यज्ञं । भारती । तूयं । एतु । इळा । मनुष्वत् । इह । चेतयंती । तिस्रः । देवीः । बर्हिः । आ । इदं । स्योनं । सरस्वती । सुऽअपसः । सदंतु ॥ यः । इमेइति । द्यावापृथिवीइति । जनित्रीइति । रूपैः । अपिंशत् । भुवनानि । विश्वा । तं । अद्य । होतः । इषितः । यजीयान् । देवं । त्वष्टारं । इह । यक्षि । विद्वान् ॥ उपऽअवसृज । त्मन्या । संऽअंजन् । देवानां । पाथः । ऋतुऽथा । हवींषि । वनस्पतिः । शमिता । देवः । अग्निः । स्वदंतु । हव्यं । मधुना । घृतेन ॥ सद्यः । जातः । वि । अमिमीत । यज्ञं । अग्निः । देवानां । अभवत् । पुरःऽगाः । अस्य । होतुः । प्रऽदिशि । ऋतस्य । वाचि । स्वाहाऽकृतं । हविः । अदंतु । देवाः ॥ ९ ॥ मनीषिणः । प्र । भरध्वं । मनीषां । यथाऽयथा । मतयः । संति । नृणां । इंद्रं । सत्यैः । आ । ईरयाम । कृतेभिः । सः । हि । वीरः । गिर्वणस्युः । विदानः ॥ ऋतस्य । हि । सदसः । धीतिः । अद्यौत् । सं । गार्ष्टेयः । वृषभः । गोभिः । आनट् । उत् । अतिष्ठत् । तविषेण । रवेण । महांति । चित् ।

सं । विऽव्याच । रजांसि ॥ इंद्रः । किल । श्रुत्यै । अस्य । वेद । सः । हि । जिष्णुः । पथिऽकृत् । सूर्याय । आत् । मेनां । कृण्वन् । अच्युतः । भुवत् । गोः । पतिः । दिवः । सनऽजाः । अप्रतिऽइतः ॥ ० ॥ व्रता । अमिनात् । अंगिरःऽभिः । गृणानः । पुरूणि । चित् । नि । ततान । रजांसि । दाधार । यः । धरुणं । सत्यऽताता ॥ इंद्रः । दिवः । प्रतिऽमानं । पृथिव्याः । विश्वा । वेद । सवना । हंति । शुष्णं । महीं । चित् । द्यां । आ । अतनात् । सूर्येण । चास्कंभ । चित् । स्कंभनेन । स्कभीयान् ॥ १० ॥ वज्रेण । हि । वृत्रऽहा । वृत्रं । अस्तः । अदेवस्य । शूशुवानस्य । मायाः । वि । धृष्णोइति । अत्र । धृषता । जघंथ । अथ । अभवः । मघऽवन् । बाहुऽओजाः ॥ सचंत । यत् । उषसः । सूर्येण । चित्रां । अस्य । केतवः । रां । अविंदन् । आ । यत् । नक्षत्रं । ददृशे । दिवः । न । पुनः । यतः । नकिः । अद्धा । नु । वेद ॥ दूरं । किल । प्रथमाः । जग्मुः । आसां । इंद्रस्य । याः । प्रऽसत्रे । सस्रुः । आपः । क्व । स्वित् । अग्रं । क्व । बुध्नः । आसां । आपः । मध्यं । क्व । वः । नूनं । अंतः ॥ सृजः । सिंधून् । अहिना । जग्रसानान् । आत् । इत् । एताः । प्र । विविज्रे । जवेन । मुमुक्षमाणाः । उत । याः । मुमुच्रे । अध । इत् । एताः । न । रमंते । निऽतिक्ताः ॥ सध्रीचीः । सिंधुं । उशतीःऽइव । आयन् । सनात् । जारः । आरितः । पूःऽभित् । आसां । अस्तं । आ । ते । पार्थिवा । वसूनि । अस्मेइति । जग्मुः । सूनृताः । इंद्र । पूर्वीः ॥ ११ ॥ इंद्रं । पिब । प्रतिऽकामं । सुतस्य । प्रातःऽसावः । तव । हि । पूर्वऽपीतिः । हर्षस्व । हंतवे । शूर । शत्रून् । उक्थेभिः । ते । वीर्या । प्र । ब्रवाम ॥ यः । ते । रथः । मनसः । जवीयान् । आ । इंद्र । तेन । सोमऽपेयाय । याहि । तूयं । आ । ते । हरयः । प्र । द्रवंतु । येभिः । यासि । वृषऽभिः । मंदमानः ॥ हरित्वता । वर्चसा । सूर्यस्य । श्रेष्ठैः । रूपैः । तन्वं । स्पर्शयस्व । अस्माभिः । इंद्र । सखिऽभिः । हुवानः । सध्रीचीनः ।

मादयस्व । निऽसद्य ॥ यस्य । त्यत् । ते । महिमानं । मदेषु । इमेइति । महीइति । रोदसीइति । न । अविविक्तां । तत् । ओकः । आ । हरिऽभिः । इंद्र । युक्तैः । प्रियेभिः । याहि । प्रियं । अन्नं । अच्छं ॥ यस्य । शश्वत् । पपिऽवान् । इंद्र । शत्रून् । अननुऽकृत्या । रण्या । चकर्थ । सः । ते । पुरंऽधिं । तविषीं । इयर्ति । सः । ते । मदाय । सुतः । इंद्र । सोमः ॥ १२ ॥ इदं । ते । पात्रं । सनंऽवित्तं । इंद्र । पिब । सोमं । एना । शतक्रतोइतिशतऽक्रतो । पूर्णः । आऽहावः । मदिरस्य । मध्वः । यं । विश्वे । इत् । अभिऽहर्यंति । देवाः ॥ वि । हि । त्वां । इंद्र । पुरुधा । जनासः । हितऽप्रयसः । वृषभ । ह्वयंते । अस्माकं । ते । मधुमत्ऽतमानि । इमा । भुवन् । सवना । तेषु । हर्य ॥ प्र । ते । इंद्र । पूर्व्याणि । प्र । नूनं । वीर्या । वोचं । प्रथमा । कृतानि । सतीनऽमन्युः । अश्रथयः । अद्रिं । सुऽवेदनां । अकृणोः । ब्रह्मणे । गां ॥ नि । सु । सीद । गणऽपते । गणेषु । त्वां । आहुः । विप्रऽतमं । कवीनां । न । ऋते । त्वत् । क्रियते । किं । चन । आरे । महां । अर्कं । मघऽवन् । चित्रं । अर्च ॥ अभिऽख्या । नः । मघऽवन् । नाधमानान् । सखे । बोधि । वसुऽपते । सखीनां । रणं । कृधि । रणऽकृत् । सत्यऽशुष्म । अभक्ते । चित् । आ । भज । राये । अस्मान् ॥ इति नवमोऽनुवाकः ॥ – :: – ॥ अथ दशमोऽनुवाकः ॥ ॥ – :: – ॥ १३ ॥ तं । अस्य । द्यावापृथिवीइति । सऽचेतसा । विश्वेभिः । देवैः । अनु । शुष्मं । आवतां । यत् । ऐत् । कृण्वानः । महिमानं । इंद्रियं । पीत्वी । सोमस्य । क्रतुऽमान् । अवर्धत ॥ तं । अस्य । विष्णुः । महिमानं । ओजसा । अंशुं । दधन्वान् । मधुनः । वि । रप्शते । देवेभिः । इंद्रः । मघऽवा । सयावऽभिः । वृत्रं । जघन्वान् । अभवत् । वरेण्यः ॥ वृत्रेण । यत् । अहिना । बिभ्रत् । आयुधा । संऽअस्थिथाः । युधये । शंसं । आऽविदे । विश्वे । ते । अत्र । मरुतः । सह । त्मना । अवर्धन् । उग्र । महिमानं । इंद्रियं ॥ जज्ञानः ।

एव । वि । अबाधत । स्पृधः । प्र । अपश्यत् । वीरः । अभि । पौंस्यं । रणं । अवृश्चत् । अद्रिं । अव । सऽस्यदः । सृजत् । अस्तभ्नात् । नाकं । सुऽपस्यया । पृथुं ॥ आत् । इंद्रः । सत्रा । तविषीः । अपत्यत । वरीयः । द्यावापृथिवीइति । अबाधत । अव । अभरत् । धृषितः । वज्रं । आयसं । शेवं । मित्राय । वरुणाय । दाशुषे ॥ १४ ॥ इंद्रस्य । अत्र । तविषीभ्यः । विऽरप्शिनः । ऋघायतः । अरंहयंत । मन्यवे । वृत्रं । यत् । उग्रः । वि । अवृश्चत् । ओजसा । अपः । बिभ्रतं । तमसा । परिऽवृतं ॥ या । वीर्याणि । प्रथमानि । कर्त्वा । महिऽत्वेभिः । यतमानौ । संऽईयतुः । ध्वांतं । तमः । अव । दध्वसे । हते । इंद्रः । मह्ना । पूर्वऽहूतौ । अपत्यत ॥ विश्वे । देवासः । अध । वृष्ण्यानि । ते । अवर्धयन् । सोमऽवत्या । वचस्यया । रुद्धं । वृत्रं । अहिं । इंद्रस्य । हन्मना । अग्निः । न । जंभैः । तृषु । अन्नं । आवयत् ॥ भूरि । दक्षेभिः । वचनेभिः । ऋक्वऽभिः । सख्येभिः । सख्यानि । प्र । वोचत । इंद्रः । धुनिं । च । चुमुरिं । च । दंभयन् । श्रद्धाऽमनस्या । शृणुते । दभीतये ॥ त्वं । पुरूणि । आ । भर । सुऽअश्व्या । येभिः । मंसै । निऽवचनानि । शंसन् । सुऽगेभिः । विश्वा । दुःऽइता । तरेम । विदाइति । सु । नः । उर्विया । गाधं । अद्य ॥ १५ ॥ घर्मा । संऽअंता । त्रिऽवृतं । वि । आपतुः । तयोः । जुष्टिं । मातरिश्वा । जगाम । दिवः । पयः । दिधिषाणाः । अवेषन् । विदुः । देवाः । सहऽसामानं । अर्कं ॥ तिस्रः । देष्ट्राय । निःऽऋतीः । उप । आसते । दीर्घऽश्रुतः । वि । हि । जानंति । वह्नयः । तासां । नि । चिक्युः । कवयः । निऽदानं । परेषु । याः । गुह्येषु । व्रतेषु ॥ चतुःऽकपर्दा । युवतिः । सुऽपेशाः । घृतऽप्रतीका । वयुनानि । वस्ते । तस्यां । सुऽपर्णा । वृषणा । नि । सेदतुः । यत्र । देवाः । दधिरे । भागऽधेयं ॥ एकः । सुऽपर्णः । सः । समुद्रं । आ । विवेश । सः । इदं । विश्वं । भुवनं । वि । चष्टे । तं । पाकेन । मनसा । अपश्यं ।

अंतितः । तं । माता । रेळ्हि । सः । ऊँइति । रेळ्हि । मातरं ॥ सुऽपर्णं । विप्राः । कवयः । वचःऽभिः । एकं । संतं । बहुधा । कल्पयंति । छंदांसि । च । दधतः । अध्वरेषु । ग्रहान् । सोमस्य । मिमते । द्वादश ॥ १६ ॥ षट्ऽत्रिंशान् । च । चतुरः । कल्पयंतः । छंदांसि । च । दधतः । आऽद्वादशं । यज्ञं । विऽमाय । कवयः । मनीषा । ऋक्ऽसामाभ्यां । प्र । रथं । वर्तयंति ॥ चतुःऽदश । अन्ये । महिमानः । अस्य । तं । धीराः । वाचा । प्र । नयंति । सप्त । आप्रानं । तीर्थं । कः । इह । प्र । वोचत् । येन । पथा । प्रऽपिबंते । सुतस्य ॥ सहस्रधा । पंचऽदशानि । उक्था । यावत् । द्यावापृथिवीइति । तावत् । इत् । तत् । सहस्रधा । महिमानः । सहस्रं । यावत् । ब्रह्म । विऽस्थितं । तावती । वाक् ॥ कः । छंदसां । योगं । आ । वेद । धीरः । कः । धिष्ण्यां । प्रति । वाचं । पपाद । कं । ऋत्विजां । अष्टमं । शूरं । आहुः । हरीइति । इंद्रस्य । नि । चिकाय । कः । स्वित् ॥ भूम्याः । अंतं । परि । एके । चरंति । रथस्य । धूःऽसु । युक्तासः । अस्थुः । श्रमस्य । दायं । वि । भजंति । एभ्यः । यदा । यमः । भवति । हर्म्ये । हितः ॥ १७ ॥ चित्रः । इत् । शिशोः । तरुणस्य । वक्षथः । न । यः । मातरौ । अपिऽएति । धातवे । अनूधाः । यदि । जाजनत् । अध । च । नु । ववक्ष । सद्यः । महि । दूत्यं । चरन् ॥ अग्निः । ह । नाम । धायि । दन् । अपःऽतमः । सं । यः । वना । युवते । भस्मना । दता । अभिऽप्रमुरा । जुह्वा । सुऽअध्वरः । इनः । न । प्रोथमानः । यवसे । वृषा ॥ तं । वः । विं । न । द्रुऽसदं । देवं । अंधसः । इंदुं । प्रोथंतं । प्रऽवपंतं । अर्णवं । आसा । वह्निं । न । शोचिषा । विऽरप्शिनं । महिऽव्रतं । न । सरजंतं । अध्वनः ॥ वि । यस्य । ते । ज्रयसानस्य । अजर । धक्षोः । न । वाताः । परि । सन्ति । अच्युताः । आ । रण्वासः । युयुधयः । न । सत्वनं । त्रितं । नशंत । प्र । शिषंतः । इष्टये ॥ सः । इत् । अग्निः । कण्वऽतमः ।

कण्वऽसखा ॥ ० ॥ अग्निः । पातु । गृणतः । अग्निः । सूरीन् । अग्निः । ददातु । तेषाँ । अवः । नः ॥ १८ ॥ वाजिन्ऽतमाय । सह्यसे । सुऽपित्र्य । तृषु । च्यवानः । अनु । जातऽवेदसे । अनुद्रे । चित् । यः । धृषता । वरं । सते । महिन्ऽतमाय । धन्वना । इत् । अविष्यते ॥ एव । अग्निः । मर्तैः । सह । सूरिऽभिः । वसुः । स्तवे । सहसः । सूनरः । नृऽभिः । मित्रासः । न । ये । सुऽधिताः । ऋतऽयवः । द्यावः । न । द्युम्नैः । अभि । संति । मानुषान् ॥ ऊर्जः । नपात् । सहसाऽवन् । इति । त्वा । उपऽस्तुतस्य । वंदते । वृषा । वाक् ॥ ० ॥ इति । त्वा । अग्ने । वृष्टिऽहव्यस्य । पुत्राः । उपऽस्तुतासः । ऋषयः । अवोचन् । तान् । च । पाहि । गृणतः । च । सूरीन् । वषट् । वषट् । इति । ऊर्ध्वासः । अनक्षन् । नमः । नमः ॥ ० ॥ १९ ॥ पिब । सोमं । महते । इंद्रियाय । पिब । वृत्राय । हंतवे । शविष्ठ । पिब । राये । शवसे । हूयमानः । पिब । मध्वः । तृपत् । इंद्र । आ । वृषस्व ॥ अस्य । पिब । क्षुऽमतः । प्रऽस्थितस्य । इंद्र । सोमस्य । वरं । आ । सुतस्य । स्वस्तिऽदाः । मनसा । मादयस्व । अर्वाचीनः । रेवते । सौभगाय ॥ ममत्तु । त्वा । दिव्यः । सोमः । इंद्र । ममत्तु । यः । सूयते । पार्थिवेषु । ममत्तु । येन । वरिवः । चकर्थ । ममत्तु । येन । निऽरिणासि । शत्रून् ॥ आ । द्विऽबर्हाः । अमिनः । यातु । इंद्रः । वृषा । हरिऽभ्यां । परिऽसिक्तं । अंधः । गवि । आ । सुतस्य । प्रऽभृतस्य । मध्वः । सत्रा । खेदां । अरुशऽहा । आ । वृषस्व ॥ नि । तिग्मानि । भ्राशयन् । भ्राश्यानि ॥ ० ॥ उग्राय । ते । सहः । बलं । ददामि । प्रतिऽइत्य । शत्रून् । विऽगदेषु । वृश्च ॥ २० ॥ वि । अर्यः । इंद्र । तनुहि । श्रवांसि । ओजः । स्थिराऽइव । धन्वनः । अभिऽमातीः । अस्मद्र्यक् । ववृधानः । सहःऽभिः । अनिऽभृष्टः । तन्वं । वावृधस्व ॥ इदं । हविः । मघऽवन् । तुभ्यं । रातं । प्रति । संऽराट् । अहृणानः । गृभाय । तुभ्यं । सुतः । मघऽवन् । तुभ्यं । पक्वः । अद्धि ।

इंद्र । पिर्ब । च । प्रऽस्थितस्य ॥ आ । इत् । इंद्र । प्रऽस्थिता । इमा । हवींषि । चर्नः । दधिष्व । पचता । उत । सोमं । प्रयस्वंतः । प्रति । हर्यामसि । त्वा । सत्याः । संतु । यजमानस्य । कामाः ॥ प्र । इंद्राग्निऽभ्यां । सुऽवचस्यां । इयर्मि । सिंधौऽइव । प्र । ईरयं । नावं । अर्कैः । अयाःऽइव । परि । चरंति । देवाः । ये । अस्मभ्यं । धनऽदाः । उत्ऽभिदः । च ॥ २१ ॥ न । वै । ऊँइति । देवाः । क्षुधं । इत् । वधं । ददुः । उत । आशितं । उप । गच्छंति । मृत्यवः । उतोइति । रयिः । पृणतः । न । उप । दस्यति । उत । अपृणन् । मर्डितारं । न । विंदते ॥ यः । आध्राय । चकमानाय । पित्वः । अन्नऽवान् । सन् । रफितार्य । उपऽजग्मुषे । स्थिरं । मनः । कृणुते । सेवते । पुरा । उतोइति । चित् । सः । मर्डितारं । न । विंदते ॥ सः । इत् । भोजः । यः । गृहवे । ददाति । अन्नऽकामाय । चरते । कृशाय । अरं । अस्मै । भवति । यामऽहूतौ । उत । अपरीषु । कृणुते । सखायं ॥ न । सः । सखा । यः । न । ददाति । सख्ये । सचाऽभुवे । सचमानाय । पित्वः । अप । अस्मात् । प्र । इयात् । न । तत् । ओकः । अस्ति । पृणंतं । अन्यं । अरणं । चित् । इच्छेत् ॥ पृणीयात् । इत् । नाधमानाय । तव्यान् । द्राघीयांसं । अनु । पश्येत । पंथां । ओइति । हि । वर्तंते । रथ्याऽइव । चक्रा । अन्यंऽअन्यं । उप । तिष्ठंत । रायः ॥ २२ ॥ मोघं । अन्नं । विंदते । अप्रऽचेताः । सत्यं । ब्रवीमि । वधः । इत् । सः । तस्य । न । अर्यमणं । पुष्यति । नोइति । सखायं । केवलऽअघः । भवति । केवलऽआदी ॥ कृषन् । इत् । फालः । आशितं । कृणोति । यन् । अध्वानं । अप । वृंक्ते । चरित्रैः । वदन् । ब्रह्मा । अवदतः । वनीयान् । पृणन् । आपिः । अपृणंतं । अभि । स्यात् ॥ एकऽपात् । भूयः । द्विऽपदः । वि । चक्रमे । द्विऽपात् । त्रिऽपादं । अभि । एति । पश्चात् । चतुःऽपात् । एति । द्विऽपदां । अभिऽस्वरे । संऽपश्यन् । पंक्तीः । उपऽतिष्ठमानः । समौ । चित् । हस्तौ । न । समं । विविष्टः ।

संऽमातरा । चित् । न । समं । दुह्रातेइति । यमयोः । चित् । न । समा । वीर्याणि । ज्ञातीइति । चित् । संतौ । न । समं । पृणीतः ॥ २३ ॥ अग्ने । हंसि । नि । अत्रिणं । दीद्यत् । मर्त्येषु । आ । स्वे । क्षये । शुचिऽव्रत ॥ उत् । तिष्ठसि । सुऽआहुतः । घृतानि । प्रति । मोदसे । यत् । त्वा । स्रुचः । संऽअस्थिरन् ॥ सः । आऽहुतः । वि । रोचते । अग्निः । ईळेन्यः । गिरा । स्रुचा । प्रतीकं । अज्यते ॥ घृतेन । अग्निः । सं । अज्यते । मधुऽप्रतीकः । आऽहुतः । रोचमानः । विभाऽवसुः ॥ जरमाणः । सं । इध्यसे । देवेभ्यः । हव्यऽवाहन । तं । त्वा । हवंत । मर्त्याः ॥ २४ ॥ तं । मर्ताः । अमर्त्यं । घृतेन । अग्निं । सपर्यत । अदाभ्यं । गृहऽपतिं ॥ अदाभ्येन । शोचिषा । अग्ने । रक्षः । त्वं । दह । गोपाः । ऋतस्य । दीदिहि ॥ सः । त्वं । अग्ने । प्रतीकेन । प्रति । ओष । यातुऽधान्यः । उरुऽक्षयेषु । दीद्यत् ॥ तं । त्वा । गीःऽभिः । उरुऽक्षयाः । हव्यऽवाहं । सं । ईधिरे । यजिष्ठं । मानुषे । जने ॥ २५ ॥ इति । वै । इति । मे । मनः । गां । अश्वं । सनुयां । इति । कुवित् । सोमस्य । अपां । इति ॥ प्र । वाताःऽइव । दोधतः । उत् । मा । पीताः । अयंसत ॥ ० ॥ रथं । अश्वाःऽइव । आशवः ॥ ० ॥ उप । मा । मतिः । अस्थित । वाश्रा । पुत्रंऽइव । प्रियं ॥ ० ॥ अहं । तष्टाऽइव । वंधुरं । परि । अचामि । हृदा । मतिं ॥ ० ॥ नहि । मे । अक्षिऽपत् । चन । अच्छान्त्सुः । पंच । कृष्टयः ॥ ० ॥ २६ ॥ नहि । मे । रोदसीइति । उभेइति । अन्यं । पक्षं । चन । प्रति ॥ ० ॥ अभि । द्यां । महिना । भुवं । अभि । इमां । पृथिवीं । महीं ॥ ० ॥ हंत । अहं । पृथिवीं । इमां । नि । दधानि । इह । वा । इह । वा ॥ ० ॥ ओषं । इत् । पृथिवीं । अहं । जंघनानि ॥ ० ॥ दिवि । मे । अन्यः । पक्षः । अधः । अन्यं । अचीकृषं ॥ ० ॥ अहं । अस्मि । महाऽमहः । अभिऽनभ्यं । उत्ऽईषितः ॥ ० ॥ गृहः । यामि । अरंऽकृतः । देवेभ्यः । हव्यऽवाहनः ॥ ० ॥ २७ ॥

इति अष्टमाष्टके षष्ठोऽध्यायः ॥ ६ ॥

## ॥ अथ सप्तमोऽध्यायः ॥

हरिः ॐ ॥ तत् । इत् । आस । भुवनेषु । ज्येष्ठं । यतः । जज्ञे । उग्रः । त्वेषऽनृम्णः । सद्यः । जज्ञानः । नि । रिणाति । शत्रून् । अनु । यं । विश्वे । मदंति । ऊमाः ॥ ववृधानः । शवसा । भूरिऽओजाः । शत्रुः । दासाय । भियसं । दधाति । अविऽअनत् । च । विऽअनत् । च । सस्नि । सं । ते । नवंत । प्रऽभृता । मदेषु ॥ त्वेइति । क्रतुं । अपि । वृंजंति । विश्वे । द्विः । यत् । एते । त्रिः । भवंति । ऊमाः । स्वादोः । स्वादीयः । स्वादुना । सृज । सं । अदः । सु । मधु । मधुना । अभि । योधीः ॥ इति । चित् । हि । त्वा । धना । जयंतं । मदेऽमदे । अनुऽमदंति । विप्राः । ओजीयः । धृष्णोइति । स्थिरं । आ । तनुष्व । मा । त्वा । दभन् । यातुऽधानाः । दुःऽएवाः ॥ त्वया । वयं । शाशद्महे । रणेषु । प्रऽपश्यंतः । युधेन्यानि । भूरि । चोदयामि । ते । आयुधा । वचःऽभिः । सं । ते । शिशामि । ब्रह्मणा । वयांसि ॥ १ ॥ स्तुषेय्यं । पुरुऽवर्पसं । ऋभ्वं । इनऽतमं । आप्त्यं । आप्त्यानां । आ । दर्शते । शवसा । सप्त । दानून् । प्र । साक्षते । प्रतिऽमानानि । भूरि ॥ नि । तत् । दधिषे । अवरं । परं । च । यस्मिन् । आविथ । अवसा । दुरोणे । आ । मातरा । स्थापयसे । जिगत्नूइति । अतः । इनोषि । कर्वरा । पुरूणि ॥ इमा । ब्रह्म । बृहत्ऽदिवः । विवक्ति । इंद्राय । शूषं । अग्रियः । स्वःऽसाः । महः । गोत्रस्य । क्षयति । स्वऽराजः ॥ ० ॥ एव । महान् । बृहत्ऽदिवः । अथर्वा । अवोचत् । स्वां । तन्वं । इंद्रं । एव । स्वसारः । मातरिभ्वरीः । अरिप्राः । हिन्वंति । च । शवसा । वर्धयंति । च ॥ २ ॥ हिरण्यऽगर्भः ।

सं । अवर्तत । अग्रे । भूतस्य । जातः । पतिः । एकः । आसीत् ।
सः । दाधार । पृथिवीं । द्यां । उत । इमां । कस्मै । देवाय ।
हविषा । विधेम ॥ यः । आत्मऽदाः । बलऽदाः । यस्य । विश्वे । उपऽ-
आसते । प्रऽशिषं । यस्य । देवाः । यस्य । छाया । अमृतं । यस्य ।
मृत्युः ॥ ० ॥ यः । प्राणतः । निऽमिषतः । महिऽत्वा । एकः । इत् ।
राजा । जगतः । बभूव । यः । ईशे । अस्य । द्विऽपदः । चतुःऽपदः ।
॥ ० ॥ यस्य । इमे । हिमऽवंतः । महिऽत्वा । यस्य । समुद्रं । रसया ।
सह । आहुः । यस्य । इमाः । प्रऽदिशः । यस्य । बाहूइति ॥ ० ॥ येन ।
द्यौः । उग्रा । पृथिवी । च । दृळ्हा । येन । स्व१रितिस्वः । स्तभितं ।
येन । नाकः । यः । अंतरिक्षे । रजसः । विऽमानः ॥ ० ॥ ३ ॥ यं ।
क्रंदसीइति । अवसा । तस्तभानेइति । अभि । ऐक्षेतां । मनसा ।
रेजमानेइति । यत्र । अधि । सूरः । उत्ऽइतः । विऽभाति ॥ ० ॥
आपः । ह । यत् । बृहतीः । विश्वं । आयन् । गर्भं । दधानाः ।
जनयंतीः । अग्निं । ततः । देवानां । सं । अवर्तत । असुः । एकः ॥ ० ॥
यः । चित् । आपः । महिना । परिऽअपश्यत् । दक्षं । दधानाः ।
जनयंतीः । यज्ञं । यः । देवेषु । अधि । देवः । एकः । आसीत् ॥ ० ॥
मा । नः । हिंसीत् । जनिता । यः । पृथिव्याः । यः । वा । दिवं ।
सत्यऽधर्मा । जजान । यः । च । अपः । चंद्राः । बृहतीः । जजान ॥ ० ॥
प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूव । यत्कामास्तेजुहुमस्त-
न्नोअस्तुवयंस्यामपतयोरयीणां ॥ ४ ॥ वसुं । न । चित्रऽमहसं ।
गृणीषे । वामं । शेवं । अतिथिं । अद्विषेण्यं । सः । रासते । शुरुधः ।
विश्वऽधायसः । अग्निः । होता । गृहऽपतिः । सुऽवीर्यं ॥ जुषाणः ।
अग्ने । प्रति । हर्य । मे । वचः । विश्वानि । विद्वान् । वयुनानि ।
सुक्रतोइतिसुऽक्रतो । घृतऽनिर्निक् । ब्रह्मणे । गातुं । आ । ईरय ।
तव । देवाः । अजनयन् । अनु । व्रतं ॥ सप्त । धामानि । परिऽयन् ।
अमर्त्यः । दाशत् । दाशुषे । सुऽकृते । ममहस्व । सुऽवीरेण । रयिणा ।

अग्ने । सुऽआभुवा । यः । ते । आनट् । सम्ऽइधा । तं । जुषस्व ॥ ० ॥
हविष्मंतः । ईळते । सप्त । वाजिनं । शृण्वंतं । अग्निं । घृतऽपृष्ठं ।
उक्षणं । पृणंतं । देवं । पृणते । सुऽवीर्यं ॥ त्वं । दूतः । प्रथमः ।
वरेण्यः । सः । हूयमानः । अमृताय । मत्स्व । त्वां । मर्जयन् । मरुतः ।
दाशुषः । गृहे । त्वां । स्तोमेभिः । भृगवः । वि । रुरुचुः ॥ ५ ॥ इषं ।
दुहन् । सुऽदुघां । विश्वऽधायसं । यज्ञऽप्रिये । यजमानाय । सुक्रतो-
इतिसुऽक्रतो । अग्ने । घृतऽस्नुः । त्रिः । ऋतानि । दीद्यत् । वर्तिः ।
यज्ञं । परिऽयन् । सुक्रतुऽयसे ॥ त्वां । इत् । अस्याः । उषसः । विऽ-
उष्टिषु । दूतं । कृण्वानाः । अयजंत । मानुषाः । त्वां । देवाः ।
महयाय्याय । ववृधुः । आज्यं । अग्ने । निऽमृजंतः । अध्वरे ॥ नि ।
त्वा । वसिष्ठाः । अह्वंत । वाजिनं । गृणंतः । अग्ने । विदथेषु ।
वेधसः ॥ ० ॥ धारय ॥ ० ॥ ६ ॥ अयं । वेनः । चोदयत् । पृश्निऽ-
गर्भाः । ज्योतिःऽजरायुः । रजसः । विऽमाने । इमं । अपां । संऽ-
गमे । सूर्यस्य । शिशुं । न । विप्राः । मतिऽभिः । रिहंति ॥ समुद्रात् ।
ऊर्मिं । उत् । इयर्ति । वेनः । नभःऽजाः । पृष्ठं । हर्यतस्य । दर्शि ।
ऋतस्य । सानौ । अधि । विष्टपि । भ्राट् । समानं । योनिं ।
अभि । अनूषत । व्राः ॥ समानं । पूर्वीः । अभि । वावशानाः ।
तिष्ठन् । वत्सस्य । मातरः । सऽनीळाः ॥ ० ॥ चक्रमाणाः ।
रिहंति । मध्वः । अमृतस्य । वाणीः । जानंतः । रूपं । अकृपंत ।
विप्राः । मृगस्य । घोषं । महिषस्य । हि । ग्मन् । ऋतेन । यंतः ।
अधि । सिंधुं । अस्थुः । विदत् । गंधर्वः । अमृतानि । नाम ॥ अप्सराः ।
जारं । उपऽसिष्मियाणा । योषा । बिभर्ति । परमे । विऽओमन् ।
चरत् । प्रियस्य । योनिषु । प्रियः । सन् । सीदत् । पक्षे । हिरण्यये ।
सः । वेनः ॥ ७ ॥ नाके । सुऽपर्णं । उप । यत् । पतंतं । हृदा ।
वेनंतः । अभि । अचक्षत । त्वा । हिरण्यऽपक्षं । वरुणस्य । दूतं ।
यमस्य । योनौ । शकुनं । भुरण्युं ॥ ० ॥ प्रत्यङ् । चित्रा । बिभ्रत् ।

अस्य । आयुधानि ॥ ० ॥ नाम । जनत । प्रियाणि ॥ द्रप्सः । समुद्रं ।
अभि । यत् । जिगाति । पश्यन् । गृध्रस्य । चक्षसा । विऽधर्मन् ॥ ० ॥
चकानः । तृतीये । चक्रे । रजसि । प्रियाणि ॥ ८ ॥ इमं । नः । अग्ने ।
उप । यज्ञं । आ । इहि । पंचऽयामं । त्रिऽवृतं । सप्तऽतंतुं । असः ।
हव्यऽवाट् । उत । नः । पुरःऽगाः । ज्योक् । एव । दीर्घं । तमः ।
आ । अशयिष्ठाः ॥ अदेवात् । देवः । प्रऽचता । गुहा । यन् । प्रऽ-
पश्यमानः । अमृतऽत्वं । एमि । शिवं । यत् । संतं । अशिवः । जहामि ।
स्वात् । सख्यात् । अरणीं । नाभिं । एमि ॥ पश्यन् । अन्यस्याः ।
अतिथिं । वयायाः । ऋतस्य । धाम । वि । मिमे । पुरूणि । शंसामि ।
पित्रे । असुराय । शेवं । अयज्ञियात् । यज्ञियं । भागं । एमि ॥ बह्वीः ।
समाः । अकरं । अंतः । अस्मिन् । इंद्रं । वृणानः । पितरं । जहामि ।
अग्निः । सोमः । वरुणः । ते । च्यवंते । परिऽआवर्त् । राष्ट्रं ।
तत् । अवामि । आऽयन् ॥ निःऽमायाः । ॐइति । त्ये । असुराः ।
अभवन् । त्वं । च । मा । वरुण । कामयासे । ऋतेन । राजन् ।
अनृतं । विऽविंचन् । मम । राष्ट्रस्य । अधिऽपत्यं । आ । इहि ॥ ९ ॥
इदं । स्वः । इदं । इत् । आस । वामं । अयं । प्रऽकाशः । उरु ।
अंतरिक्षं । हनाव । वृत्रं । निःऽएहि । सोम । हविः । त्वा । संतं ।
हविषा । यजाम ॥ कविः । कविऽत्वा । दिवि । रूपं । आ । असजत् ।
अप्रऽभूती । वरुणः । निः । अपः । सृजत् । क्षेमं । कृण्वानाः । जनयः ।
न । सिंधवः । ताः । अस्य । वर्णं । शुचयः । भरिभ्रति ॥ ताः । अस्य ।
ज्येष्ठं । इंद्रियं । सचंते । ताः । ईं । आ । क्षेति । स्वधया । मदंतीः ।
ताः । ईं । विशः । न । राजानं । वृणानाः । बीभत्सुवः । अप । वृत्रात् ।
अतिष्ठन् ॥ बीभत्सूनां । सऽयुजं । हंसं । आहुः । अपां । दिव्यानां ।
सख्ये । चरंतं । अनुऽस्तुभं । अनु । चर्चूर्यमाणं । इंद्रं । नि । चिक्युः ।
कवयः । मनीषा ॥ १० ॥ अहं । रुद्रेभिः । वसुऽभिः । चरामि ।
अहं । आदित्यैः । उत । विश्वऽदेवैः । अहं । मित्रावरुणा । उभा ।

बिभर्मि । अहं । इंद्राग्नीइति । अहं । अश्विना । उभा ॥ अहं । सोमं । आहनसं । बिभर्मि । अहं । त्वष्टारं । उत । पूषणं । भगं । अहं । दधामि । द्रविणं । हविष्मते । सुप्रऽअव्ये । यजमानाय । सुन्वते ॥ अहं । राष्ट्री । संऽगमनी । वसूनां । चिकितुषी । प्रथमा । यज्ञियानां । तां । मा । देवाः । वि । अदधुः । पुरुऽत्रा । भूरिऽस्थात्रां । भूरि । आऽवेशयंतीं ॥ मया । सः । अन्नं । अत्ति । यः । विऽपश्यति । यः । प्राणिति । यः । ईं । शृणोति । उक्तं । अमंतवः । मां । ते । उप । क्षियंति । श्रुधि । श्रुत । श्रद्धिऽवं । ते । वदामि ॥ अहं । एव । स्वयं । इदं । वदामि । जुष्टं । देवेभिः । उत । मानुषेभिः । यं । कामये । तंऽतं । उग्रं । कृणोमि । तं । ब्रह्माणं । तं । ऋषिं । तं । सुऽमेधां ॥ ११ ॥ अहं । रुद्राय । धनुः । आ । तनोमि । ब्रह्मऽद्विषे । शरवे । हंतवै । ऊँइति । अहं । जनाय । सऽमदं । कृणोमि । अहं । द्यावापृथिवीइति । आ । विवेश । अहं । सुवे । पितरं । अस्य । मूर्धन् । मम । योनिः । अप्ऽसु । अंतरिति । समुद्रे । ततः । वि । तिष्ठे । भुवना । अनु । विश्वा । उत । अमूं । द्यां । वर्ष्मणा । उप । स्पृशामि ॥ अहं । एव । वातःऽइव । प्र । वामि । आऽरभमाणा । भुवनानि । विश्वा ॥ ० ॥ एतावती । महिना । सं । बभूव ॥ १२ ॥ न । तं । अंहः । न । दुःऽइतं । देवासः । अष्ट । मर्त्यं । सऽजोषसः । यं । अर्यमा । मित्रः । नयंति । वरुणः । अति । द्विषः ॥ तत् । हि । वयं । वृणीमहे ॥ ० ॥ येन । निः । अंहसः । यूयं । पाथ । नेथ । च । मर्त्यं । अति । द्विषः ॥ ते । नूनं । नः । अयं । ऊतये ॥ ० ॥ नयिष्ठाः । ऊँइति । नः । नेषणि । पर्षिष्ठाः । ऊँइति । नः । पर्षणि । अति । द्विषः ॥ यूयं । विश्वं । परि । पाथ ॥ ० ॥ युष्माकं । शर्मणि । प्रिये । स्याम । सुऽप्रनीतयः । अति । द्विषः ॥ आदित्यासः । अति । स्रिधः ॥ ० ॥ उग्रं । मरुत्ऽभिः । रुद्रं । हुवेम । इंद्रं । अग्निं । स्वस्तये । अति । द्विषः ॥ नेतारः । ऊँइति । सु । नः । तिरः ॥ ० ॥ अति । विश्वानि । दुःऽइता । राजानः ।

चर्षणीनां । अति । द्विषः ॥ शुनं । अस्मभ्यं । ऊतये ॥ ० ॥ शर्म ।
यच्छंतु । सऽप्रथः । आदित्यासः । यत् । ईमहे । अति । द्विषः ॥ ० ॥
॥ १३ ॥ रात्री । वि । अख्यत् । आऽयती । पुरुऽत्रा । देवी । अक्षऽ-
भिः । विश्वाः । अधि । श्रियः । अधित ॥ आ । उरु । अप्राः ।
अमर्त्याः । निऽवतः । देवी । उत्ऽवतः । ज्योतिषा । बाधते । तमः ॥
निः । ऊँ इति । स्वसारं । अकृत । उषसं । देवी । आऽयती । अप ।
इत् । ऊँ इति । हासते । तमः ॥ सा । नः । अद्य । यस्याः । वयं ।
नि । ते । यामन् । अविक्ष्महि । वृक्षे । न । वसतिं । वयः ॥ नि ।
ग्रामासः । अविक्षत । नि । पत्ऽवंतः । नि । पक्षिणः । नि । श्येनासः ।
चित् । अर्थिनः ॥ यवय । वृक्यं । वृकं । यवय । स्तेनं । ऊर्म्ये । अथ ।
नः । सुऽतरा । भव ॥ उप । मा । पेपिशत् । तमः । कृष्णं । विऽ-
अक्तं । अस्थित । उषः । ऋणाऽइव । यातय ॥ उप । ते । गाःऽइव ।
आ । अकरं । वृणीष्व । दुहितः । दिवः । रात्रि । स्तोमं । न ।
जिग्युषे ॥ १४ ॥ मम । अग्ने । वर्चः । विऽहवेषु । अस्तु । वयं ।
त्वा । इंधानाः । तन्वं । पुषेम । मह्यं । नमंतां । प्रऽदिशः । चतस्रः ।
त्वया । अधिऽअक्षेण । पृतनाः । जयेम ॥ मम । देवाः । विऽहवे ।
संतु । सर्वे । इंद्रऽवंतः । मरुतः । विष्णुः । अग्निः । मम । अंतरिक्षं ।
उरुऽलोकं । अस्तु । मह्यं । वातः । पवतां । कामे । अस्मिन् ॥ मयि ।
देवाः । द्रविणं । आ । यजंतां । मयि । आऽशीः । अस्तु । मयि ।
देवऽहूतिः । दैव्याः । होतारः । वनुषंत । पूर्वे । अरिष्टाः । स्याम ।
तन्वा । सुऽवीराः ॥ मह्यं । यजंतु । मम । यानि । हव्या । आऽकूतिः ।
सत्या । मनसः । मे । अस्तु । एनः । मा । नि । गां । कतमत् ।
चन । अहं । विश्वे । देवासः । अधि । वोचत । नः ॥ देवीः । षट् ।
उर्वीः । उरु । नः । कृणोत । विश्वे । देवासः । इह । वीरयध्वं । मा ।
हास्महि । प्रऽजया । मा । तनूभिः । मा । रधाम । द्विषते । सोम ।
राजन् ॥ १५ ॥ अग्ने । मन्युं । प्रतिऽनुदन् । परेषां । अदब्धः ।

गोपाः । परि । पाहि । नः । त्वं । प्रत्यंचः । यंतु । निऽगुतः । पुनरिति । ते । अमा । एषां । चित्तं । प्रऽबुधा । वि । नेशत् ॥ धाता । धातृणां । भुवनस्य । यः । पतिः । देवं । त्रातारं । अभिमातिऽसहं । इमं । यज्ञं । अश्विना । उभा । बृहस्पतिः । देवाः । पांतु । यजमानं । निऽअर्थात् ॥ उरुऽव्यचाः । नः । महिषः । शर्म । यंसत् । अस्मिन् । हवे । पुरुऽहूतः । पुरुऽक्षुः । सः । नः । प्रऽजायै । हरिऽअश्व । मृळय । इंद्र । मा । नः । रिरिषः । मा । परा । दाः ॥ ये । नः । सऽपत्नाः । अप । ते । भवंतु । इंद्राग्निऽभ्यां । अव । बाधामहे । तान् । वसवः । रुद्राः । आदित्याः । उपरिऽस्पृशं । मा । उग्रं । चेत्तारं । अधिऽराजं । अक्रन् ॥ इति दशमोऽनुवाकः ॥ – :: – ॥ अथ एकादशोऽनुवाकः ॥ – :: – ॥ १६ ॥ न । असत् । आसीत् । नोइति । सत् । आसीत् । तदानीं । न । आसीत् । रजः । नोइति । विऽओम । परः । यत् । किं । आ । अवरीवरिति । कुह । कस्य । शर्मन् । अंभः । किं । आसीत् । गहनं । गभीरं ॥ न । मृत्युः । आसीत् । अमृतं । न । तर्हि । न । रात्र्याः । अह्नः । आसीत् । प्रऽकेतः । आनीत् । अवातं । स्वधया । तत् । एकं । तस्मात् । ह । अन्यत् । न । परः । किं । चन । आस ॥ तमः । आसीत् । तमसा । गूळ्हं । अग्रे । अप्रऽकेतं । सलिलं । सर्वं । आः । इदं । तुच्छ्येन । आभु । अपिऽहितं । यत् । आसीत् । तपसः । तत् । महिना । अजायत । एकं ॥ कामः । तत् । अग्रे । सं । अवर्तत । अधि । मनसः । रेतः । प्रथमं । यत् । आसीत् । सतः । बंधुं । असति । निः । अविंदन् । हृदि । प्रतिऽइष्य । कवयः । मनीषा ॥ तिरश्चीनः । विऽततः । रश्मिः । एषां । अधः । स्वित् । आसी३त् । उपरि । स्वित् । आसी३त् । रेतःऽधाः । आसन् । महिमानः । आसन् । स्वधा । अवस्तात् । प्रऽयतिः । परस्तात् ॥ ० ॥ कुतः । आऽजाता । कुतः । इयं । विऽसृष्टिः । अर्वाक् । देवाः । अस्य । विऽसर्जनेन । अथ । कः । वेद । यतः । आऽबभूव ॥ इयं । विऽसृष्टिः । यतः । आऽबभूव ।

यदि । वा । दधे । यदि । वा । न । यः । अस्य । अधिऽअक्षः । परमे । विऽओमन् । सः । अंग । वेद ॥ ० ॥ वेद ॥ १७ ॥ यः । यज्ञः । विश्वतः । तंतुऽभिः । ततः । एकऽशतं । देवऽकर्मेभिः । आऽयतः । इमे । वयंति । पितरः । ये । आऽययुः । प्र । वय । अप । वय । इति । आसते । तते ॥ पुमान् । एनं । तनुते । उत् । कृणत्ति । पुमान् । वि । तत्ने । अधि । नाके । अस्मिन् । इमे । मयूखाः । उप । सेदुः । ऊँइति । सदः । सामानि । चक्रुः । तसराणि । ओतवे ॥ का । आसीत् । प्रऽमा । प्रतिऽमा । किं । निऽदानं । आज्यं । किं । आसीत् । परिऽधिः । कः । आसीत् । च्छंदः । किं । आसीत् । प्रउगं । किं । उक्थं । यत् । देवाः । देवं । अयजंत । विश्वे ॥ अग्नेः । गायत्री । अभवत् । सऽयुग्वा । उष्णिहया । सविता । सं । बभूव । अनुऽस्तुभा । सोमः । उक्थैः । महस्वान् । बृहस्पतेः । बृहती । वाचं । आवत् ॥ विऽराट् । मित्रावरुणयोः । अभिऽश्रीः । इंद्रस्य । त्रिऽस्तुप् । इह । भागः । अह्नः । विश्वान् । देवान् । जगती । आ । विवेश । तेन । चाक्लृप्रे । ऋषयः । मनुष्याः ॥ चाक्लृप्रे । तेन । ऋषयः । मनुष्याः । यज्ञे । जाते । पितरः । नः । पुराणे । पश्यन् । मन्ये । मनसा । चक्षसा । तान् । ये । इमं । यज्ञं । अयजंत । पूर्वे ॥ सहऽस्तोमाः । सहऽच्छंदसः । आऽवृतः । सहऽप्रमाः । ऋषयः । सप्त । दैव्याः । पूर्वेषां । पंथां । अनुऽदृश्य । धीराः । अनुऽआलेभिरे । रथ्यः । न । रश्मीन् ॥ १८ ॥ अप । प्राचः । इंद्र । विश्वान् । अमित्रान् । अप । अपाचः । अभिऽभूते । नुदस्व । अप । उदीचः । अप । शूर । अधराचः । उरौ । यथा । तव । शर्मन् । मदेम ॥ कुवित् । अंग । यवऽमंतः । यवं । चित् । यथा । दांति । अनुऽपूर्वं । विऽयूय । इहऽइह । एषां । कृणुहि । भोजनानि । ये । बर्हिषः । नमःऽवृक्तिं । न । जग्मुः ॥ नहि । स्थूरि । ऋतुऽथा । यातं । अस्ति । न । उत । श्रवः । विविदे । संऽगमेषु ॥ ० ॥ युवं । सुरामं । अश्विना ।

नमुचौ । आसुरे । सचा । विऽपिपाना । शुभः । पतीइति । इंद्रं । कर्मऽसु । आवतं ॥ पुत्रंऽइव । पितरौ । अश्विना । उभा । इंद्र । आवथुः । काव्यैः । दंसनाभिः । यत् । सुरामं । वि । अपिबः । शचीभिः । सरस्वती । त्वा । मघऽवन् । अभिष्णक् ॥ ० ॥ ॥ १९ ॥ ईजानं । इत् । द्यौः । गूर्तऽवसुः । ईजानं । भूमिः । अभि । प्रऽभूषणि । ईजानं । देवौ । अश्विनौ । अभि । सुम्नैः । अवर्धतां ॥ ता । वां । मित्रावरुणा । धारयत्क्षितीइतिधारयत्ऽक्षिती । सुऽसुम्ना । इषितत्वता । यजामसि । युवोः । क्राणाय । सख्यैः । अभि । स्याम । रक्षसः ॥ अध । चित् । नु । यत् । दिधिषामहे । वां । अभि । प्रियं । रेक्णः । पत्यमानाः । दद्वान् । वा । यत् । पुष्यति । रेक्णः । सं । ऊँइति । आरन् । नकिः । अस्य । मघानि ॥ असौ । अन्यः । असुर । सूयत । द्यौः ॥ ० ॥ मूर्धा । रथस्य । चाकन् । न । एतावता । एनसा । अंतकऽध्रुक् ॥ अस्मिन् । सु । एतत् । शक्रऽपूते । एनः । हिते । मित्रे । निऽगतान् । हंति । वीरान् । अवोः । वा । यत् । धात् । तनूषु । अव । प्रियासु । यज्ञियासु । अर्वा ॥ युवोः । हि । माता । अदितिः । विऽचेतसा । द्यौः । न । भूमिः । पयसा । पुपूतनि । अव । प्रिया । दिदिष्टन । सूरः । निनिक्त । रश्मिऽभिः ॥ युवं । हि । अप्नऽराजौ । असीदतं । तिष्ठत् । रथं । न । धूःऽसदं । वनऽसदं । ताः । नः । कणूकऽयंतीः । नृऽमेधः । तत्रे । अंहसः । सुऽमेधः । तत्रे । अंहसः ॥ २० ॥ प्रोइति । सु । अस्मै । पुरःऽरथं । इंद्राय । शूषं । अर्चत । अभीके । चित् । ऊँइति । लोकऽकृत् । संऽगे । समत्ऽसु । वृत्रऽहा । अस्माकं । बोधि । चोदिता । नभंतां । अन्यकेषां । ज्याकाः । अधि । धन्वऽसु ॥ त्वं । सिंधून् । अव । असृजः । अधराचः । अहन् । अहिं । अशत्रुः । इंद्र । जज्ञिषे । विश्वं । पुष्यसि । वार्यं । तं । त्वा । परि । स्वजामहे ॥ ० ॥ वि । सु । विश्वाः । अरातयः । अर्यः । नशंत । नः । धियः । अस्तां । असि । शत्रवे । वधं । यः । नः । इंद्र । जिघां-

सति । या । ते । रातिः । ददिः । वसु ॥ ० ॥ यः । नः । इंद्र ।
अभितः । जनः । वृकऽयुः । आऽदिदेशति । अधःऽपदं । तं । ईं ।
कृधि । विऽबाधः । असि । ससहिः ॥ ० ॥ अभिऽदासति । सऽ-
नाभिः । यः । च । निष्ट्यः । अव । तस्य । बलं । तिर । महीऽइव ।
द्यौः । अध । त्मना ॥ ० ॥ सखिऽत्वं । आ । रभामहे । ऋतस्य ।
नः । पथा । नय । अति । विश्वानि । दुःऽइता ॥ ० ॥ अस्मभ्यं । सु ।
त्वं । इंद्र । तां । शिक्ष । या । दोहते । प्रति । वरं । जरित्रे ।
अच्छिद्रऽऊध्नी । पीपयत् । यथा । नः ॥ ० ॥ २१ ॥ उभेइति । यत् ।
इंद्र । रोदसीइति । आऽपप्राथ । उषाःऽइव । महान् । त्वा । महीनां ।
संऽराजं । चर्षणीनां । देवी । जनित्री । अजीजनत् । भद्रा । जनित्री ।
अजीजनत् ॥ अव । स्म । दुःऽहनायतः । मर्तस्य । तनुहि । स्थिरं ॥ ० ॥
अव । त्याः । बृहतीः । इषः । विश्वऽचंद्राः । अमित्रऽहन् । शचीभिः ।
शक्र । धूनुहि । इंद्र । विश्वाभिः । ऊतिऽभिः ॥ ० ॥ अव । यत् । त्वं ।
शतक्रतोइतिशतऽक्रतो । इंद्र । विश्वानि । धूनुषे । रयिं । न ।
सुन्वते । सचा । सहस्रिणीभिः । ऊतिऽभिः ॥ ० ॥ अव । स्वेदाःऽ-
इव । अभितः । विष्वक् । पतंतु । दिद्यवः । दूर्वायाःऽइव । तंतवः ।
वि । अस्मत् । एतु । दुःऽमतिः ॥ ० ॥ दीर्घं । हि । अंकुशं । यथा ।
शक्तिं । बिभर्षि । मंतुऽमः । पूर्वेण । मघऽवन् । पदा । अजः । वयां ।
यथा । यमः ॥ ० ॥ नकिः । देवाः । मिनीमसि । नकिः । आ ।
योपयामसि । मंत्रऽश्रुत्यं । चरामसि । पक्षेभिः । अपिऽकक्षेभिः ।
अत्र । अभि । सं । रभामहे ॥ २२ ॥ यस्मिन् । वृक्षे । सुऽपलाशे ।
देवैः । संऽपिबते । यमः । अत्र । नः । विश्पतिः । पिता । पुराणान् ।
अनु । वेनति ॥ पुराणान् । अनुऽवेनंतं । चरंतं । पापया । अमुया ।
असुऽयन् । अभि । अचाकशं । तस्मै । अस्पृहयं । पुनरिति ॥ यं ।
कुमार । नवं । रथं । अचक्रं । मनसा । अकृणोः । एकऽईषं । विश्वतः ।
प्राचं । अपश्यन् । अधि । तिष्ठसि ॥ यं । कुमार । प्र । अवर्तयः ।

रथं । विप्रेभ्यः । परि । तं । साम । अनु । प्र । अवर्तत । सं । इतः । नावि । आऽहितं ॥ कः । कुमारं । अजनयत् । रथं । कः । निः । अवर्तयत् । कः । स्वित् । तत् । अद्य । नः । ब्रूयात् । अनुऽदेयी । यथा । अभवत् ॥ यथा । अभवत् । अनुऽदेयी । ततः । अग्रं । अजायत । पुरस्तात् । बुध्नः । आऽततः । पश्चात् । निःऽअयनं । कृतं ॥ इदं । यमस्य । सदनं । देवऽमानं । यत् । उच्यते । इयं । अस्य । धम्यते । नाळीः । अयं । गीःऽभिः । परिऽकृतः ॥ २३ ॥ केशी । अग्निं । केशी । विषं । केशी । बिभर्ति । रोदसीइति । केशी । विश्वं । स्वः । दृशे । केशी । इदं । ज्योतिः । उच्यते ॥ मुनयः । वातऽरशनाः । पिशंगा । वसते । मला । वातस्य । अनु । ध्राजिं । यंति । यत् । देवासः । अविक्षत ॥ उत्ऽमदिताः । मौनेयेन । वातान् । आ । तस्थिम । वयं । शरीरा । इत् । अस्माकं । यूयं । मर्तासः । अभि । पश्यथ ॥ अंतरिक्षेण । पतति । विश्वा । रूपा । अवऽचाकशत् । मुनिः । देवस्यऽदेवस्य । सौकृत्याय । सखा । हितः ॥ वातस्य । अश्वः । वायोः । सखा । अथोइति । देवऽइषितः । मुनिः । उभौ । समुद्रौ । आ । क्षेति । यः । च । पूर्वः । उत । अपरः ॥ अप्सरसां । गंधर्वाणां । मृगाणां । चरणे । चरन् । केशी । केतस्य । विद्वान् । सखा । स्वादुः । मदिन्ऽतमः ॥ वायुः । अस्मै । उप । अमंथत् । पिनष्टि । स्म । कुनन्नमा । केशी । विषस्य । पात्रेण । यत् । रुद्रेण । अपिबत् । सह ॥ २४ ॥ उत । देवाः । अवऽहितं । देवाः । उत् । नयथ । पुनरिति । उत । आगः । चकुषं । देवाः । देवाः । जीवयथ । पुनरिति ॥ द्वौ । इमौ । वातौ । वातः । आ । सिंधोः । आ । पराऽवतः । दक्षं । ते । अन्यः । वातु । परा । अन्यः । वातु । यत् । रपः ॥ आ । वात । वाहि । भेषजं । वि । वात । वाहि । यत् । रपः । त्वं । हि । विश्वऽभेषजः । देवानां । दूतः । ईयसे ॥ आ । त्वा । अगमं । शंतातिऽभिः । अथोइति । अरिष्टतातिऽभिः । दक्षं । ते ।

भद्रं । आ । अभार्षं । परा । यक्ष्मं । सुवामि । ते ॥ त्रायंतां । इह । देवाः । त्रायंतां । मरुतां । गणः । त्रायंतां । विश्वां । भूतानि । यथा । अयं । अरपाः । असंत् ॥ आपः । इत् । वै । ऊँइति । भेषजीः । आपः । अमीवऽचातंनीः । आपः । सर्वस्य । भेषजीः । ताः । ते । कृण्वतु । भेषजं ॥ हस्ताभ्यां । दर्शऽशाखाभ्यां । जिह्वा । वाचः । पुरःऽगवी । अनामयित्नुऽभ्यां । त्वा । ताभ्यां । त्वा । उप । स्पृशामसि ॥ २५ ॥ तव । त्ये । इंद्र । सख्येषु । वह्नयः । ऋतं । मन्वानाः । वि । अदर्दिरुः । वलं । यत्र । दशस्यन् । उषसः । रिणन् । अपः । कुत्साय । मन्मंन् । अह्यः । च । दंसयः ॥ अव । असृजः । प्रऽस्वः । श्वंचयः । गिरीन् । उत् । आजः । उस्राः । अपिबः । मधुं । प्रियं । अवर्धयः । वनिनः । अस्य । दंसंसा । शुशोच । सूर्यः । ऋतऽजातया । गिरा ॥ वि । सूर्यः । मध्ये । अमुचत् । रथं । दिवः । विदत् । दासाय । प्रतिऽमानं । आर्यः । दृळ्हानि । पिप्रोः । असुरस्य । मायिनः । इंद्रः । वि । आस्यत् । चकृऽवान् । ऋजिश्वंना ॥ अनाधृष्टानि । धृषितः । वि । आस्यत् । निऽधीन् । अदेवान् । अमृणत् । अयास्यः । मासाऽइव । सूर्यः । वसु । पुर्यं । आ । ददे । गृणानः । शत्रून् । अशृणात् । विरुक्मता ॥ अयुद्धऽसेनः । विऽभ्वा । विऽभिंदता । दाशत् । वृत्रऽहा । तुज्यानि । तेजते । इंद्रस्य । वज्रात् । अबिभेत् । अभिऽश्नथः । प्र । अक्रामत् । शुंध्यूः । अजंहात् । उषाः । अनः ॥ एता । त्या । ते । श्रुत्यानि । केवला । यत् । एकः । एकं । अकृणोः । अयज्ञं । मासां । विऽधानं । अदधाः । अधि । द्यवि । त्वया । विऽभिन्नं । भरति । प्रऽधिं । पिता ॥ २६ ॥ सूर्यऽरश्मिः । हरिऽकेशः । पुरस्तात् । सविता । ज्योतिः । उत् । अयान् । अजस्रं । तस्य । पूषा । प्रऽसवे । याति । विद्वान् । संऽपश्यन् । विश्वा । भुवनानि । गोपाः ॥ नृऽचक्षाः । एषः । दिवः । मध्ये । आस्ते । आपप्रिऽवान् । रोदसीइति । अंतरिक्षं । सः । विश्वाचीः । अभि । चष्टे । घृताचीः । अंतरा । पूर्वं । अपरं । च । केतुं ॥ ० ॥ विश्वां ।

रूपा । अभि । चष्टे । शचीभिः ॥ ० ॥ इंद्रः । न । तस्थौ । संऽअरे । धनानां ॥ विश्वऽवसुं । सोम । गंधर्वं । आपः । ददृशुषीः । तत् । ऋतेन । वि । आयन् । तत् । अनुऽअवैत् । इंद्रः । ररहाणः । आसां । परि । सूर्यस्य । परिऽधीन् । अपश्यत् ॥ विश्वऽवसुः । अभि । तत् । नः । गृणातु । दिव्यः । गंधर्वः । रजसः । विऽमानः ॥ ० ॥ धियः । हिन्वानः । धियः । इत् । नः । अव्याः ॥ सस्निं । अविदत् । चरणे । नदीनां । अप । अवृणोत् । दुरः । अश्मऽव्रजानां । प्र । आसां । गंधर्वः । अमृतानि । वोचत् । इंद्रः । दक्षं । परि । जानात् । अहीनां ॥ २७ ॥ अग्ने । तव । श्रवः । वयः । महि । भ्राजंते । अर्चयः । विभावसोइतिविभाऽवसो । बृहद्भानोइतिबृहत्ऽभानो । शवसा । वाजं । उक्थ्यं । दधासि । दाशुषे । कवे ॥ पावकऽवर्चाः । शुक्रऽवर्चाः । अनूनऽवर्चाः । उत् । इयर्षि । भानुना । पुत्रः । मातरा । विऽचरन् । उप । अवसि । पृणक्षि । रोदसीइति । उभेइति ॥ ऊर्जः । नपात् । जातऽवेदः । सुशस्तिऽभिः । मंदस्व । धीतिऽभिः । हितः । त्वेइति । इषः । सं । दधुः । भूरिऽवर्पसः । चित्रऽऊतयः । वामऽजाताः ॥ इरज्यन् । अग्ने । प्रथयस्व । जंतुऽभिः । अस्मेइति । रायः । अमर्त्य । सः । दर्शतस्य । वपुषः । वि । राजसि । पृणक्षि । सानसिं । क्रतुं ॥ इष्कर्तारं । अध्वरस्य । प्रऽचेतसं । क्षयंतं । राधसः । महः । रातिं । वामस्य । सुऽभगां । महीं । इषं । दधासि । सानसिं । रयिं ॥ ऋतऽवानं । महिषं । विश्वऽदर्शतं ॥ ० ॥ श्रुत्ऽकर्ण । सप्रथःऽतमं । त्वा । गिरा । दैव्यं । मानुषा । युगा ॥ २८ ॥ अग्ने । अच्छ । वद । इह । नः । प्रत्यङ् । नः । सुऽमनाः । भव । प्र । नः । यच्छ । विशः । पते । धनऽदाः । असि । नः । त्वं ॥ प्र । नः । यच्छतु । अर्यमा । प्र । भगः । प्र । बृहस्पतिः । प्र । देवाः । प्र । उत । सूनृता । रायः । देवी । ददातु । नः ॥ सोमं । राजानं । अवसे । अग्निं । गीःऽभिः । हवामहे । आदित्यान् । विष्णुं । सूर्यं । ब्रह्माणं । च । बृहस्पतिं ॥ इंद्रवायूइति ।

बृहस्पतिं । सुऽहवा । इह । हवामहे । । यथा । नः । सर्वः । इत् । जनः । संऽगत्यां । सुऽमनाः । असत् ॥ अर्यमणं । बृहस्पतिं । इंद्रं । दानाय । चोदय । वातं । विष्णुं । सरस्वतीं । सवितारं । च । वाजिनं ॥ ० ॥ अग्निऽभिः । ब्रह्म । यज्ञं । च । वर्धय । त्वं । नः । देवऽतातये । रायः । दानाय । चोदय ॥ २९ ॥ अयं । अग्ने । जरिता । त्वेइति । अभूत् । अपि । सहसः । सूनोइति । नहि । अन्यत् । अस्ति । आप्यं । भद्रं । हि । शर्म । त्रिऽवरूथं । अस्ति । ते । आरे । हिंसानां । अप । दिद्युं । आ । कृधि ॥ प्रऽवत् । ते । अग्ने । जनिम । पितुऽयतः । साचीऽइव । विश्वा । भुवना । नि । ऋंजसे । प्र । सप्तयः । प्र । सनिषंत । नः । धियः । पुरः । चरंति । पशुपाःऽइव । त्मना ॥ उत । वै । ऊँइति । परि । वृणक्षि । बप्संत् । बहोः । अग्ने । उलपस्य । स्वधाऽवः । उत । खिल्याः । उर्वराणां । भवंति । मा । ते । हेतिं । तविषीं । चुक्रुधाम ॥ यत् । उत्ऽवतः । निऽवतः । यासि । बप्संत् । पृथक् । एषि । प्रगर्धिनीऽइव । सेना । यदा । ते ॥ ० ॥ वताऽइव । श्मश्रु । वपसि । प्र । भूम । प्रति । अस्य । श्रेणयः । ददृश्रे । एकं । निऽयानं । बहवः । रथासः । बाहूइति । यत् । अग्ने । अनुऽमर्मृजानः । न्यंङ् । उत्तानां । अनुऽएषि । भूमिं ॥ उत् । ते । शुष्माः । जिहतां । उत् । ते । अर्चिः । उत् । ते । अग्ने । शशमानस्य । वाजाः । उत् । श्वंचस्व । नि । नम । वर्धमानः । आ । त्वा । अद्य । विश्वे । वसवः । सदंतु ॥ अपां । इदं । निऽअयनं । समुद्रस्य । निऽवेशनं । अन्यं । कृणुष्व । इतः । पंथां । तेन । याहि । वशान् । अनु ॥ आऽअयने । ते । पराऽइतः । पंथां । तेन । याहि । वशान् । अनु ॥ आऽअयने । ते । पराऽअयने । दूर्वाः । रोहंतु । पुष्पिणीः । ह्रदाः । च । पुंडरीकाणि । समुद्रस्य । गृहाः । इमे ॥ ३० ॥

इति अष्टमाष्टके सप्तमोध्यायः ॥ ७ ॥

## अथ अष्टमोऽध्यायः

हरिः ॐ ॥ त्यं । चित् । अत्रिं । ऋतऽजुरं । अर्थं । अश्वं । न । यातवे । कक्षीवंतं । यदिं । पुनरीति । रथं । न । कृणुथः । नवं ॥ त्यं । चित् । अश्वं । न । वाजिनं । अरेणवः । यं । अत्नत । दृळ्हं । ग्रंथिं । न । वि । स्यतं । अत्रिं । यविष्ठं । आ । रजः ॥ नरा । दंसिष्ठौ । अत्रये । शुभ्रा । सिसासतं । धियः । अथ । हि । वां । दिवः । नरा । पुनरिति । स्तोमः । न । विऽशसे ॥ चिते । तत् । वां । सुऽराधसा । रातिः । सुऽमतिः । अश्विना । आ । यत् । नः । सदने । पृथौ । समने । पर्षथः । नरा ॥ युवं । भुज्युं । समुद्रे । आ । रजसः । पारे । ईखितं । यातं । अच्छं । पतत्रिऽभिः । नासत्या । सातये । कृतं ॥ आ । वां । सुम्नैः । शंयूइवेतिशंयूऽइव । मंहिष्ठा । विश्वऽवेदसा । सं । अस्मेइति । भूषतं । नरा । उत्सं । न । पिप्युषीः । इषः ॥ १ ॥ अयं । हि । ते । अमर्त्यः । इंदुः । अत्यः । न । पत्यते । दक्षः । विश्वऽआयुः । वेधसे ॥ अयं । अस्मासु । काव्यः । ऋभुः । वज्रः । दास्वते । अयं । बिभर्ति । ऊर्ध्वऽकृशनं । मदं । ऋभुः । न । कृत्व्यं । मदं ॥ घृषुः । श्येनाय । कृत्वने । आसु । स्वासु । वंसगः । अव । दीधेत् । अहीशुवः ॥ यं । सुऽपर्णः । पराऽवतः । श्येनस्य । पुत्रः । आ । अभरत् । शतऽचक्रं । यः । अह्यः । वर्तनिः ॥ यं । ते । श्येनः । चारुं । अवृकं । पदा । आ । अभरत् । अरुणं । मानं । अंधसः । एना । वयः । वि । तारि । आयुः । जीवसे । एना । जागार । बंधुता ॥ एव । तत् । इंद्रः । इंदुना । देवेषु । चित् । धारयाते । महि । त्यजः । क्रत्वा ॥ ० ॥ सुकृतोइतिसुऽकृतो । क्रत्वा । अयं । अस्मत् । आ । सुतः ॥ २ ॥ इमां । खनामि । ओषधिं । वीरुधं । बलवत्ऽतमां । यया । सऽपत्नीं ।

बाधते । यया । संऽविंदते । पतिं ॥ उत्तानऽपर्णे । सुऽभगे । देवऽजूते । सहस्वति । सऽपत्नीं । मे । परा । धम । पतिं । मे । केवलं । कुरु ॥ उत्ऽतरा । अहं । उत्ऽतरे । उत्ऽतरा । इत् । उत्ऽतराभ्यः ॥ अथ । सऽपत्नी । या । मम । अधरा । सा । अधराभ्यः ॥ नहि । अस्याः । नाम । गृभ्णामि । नोइति । अस्मिन् । रमते । जने । परां । एव । पराऽवतं । सऽपत्नीं । गमयामसि ॥ अहं । अस्मि । सहमाना । अथ । त्वं । असि । ससहिः । उभेइति । सहस्वतीइति । भूत्वी । सऽपत्नीं । मे । सहावहै ॥ उप । ते । अधां । सहमानां । अभि । त्वा । अधां । सहीयसा । मां । अनु । प्र । ते । मनः । वत्सं । गौःऽइव । धावतु । पथा । वाःऽइव । धावतु ॥ ३ ॥ अरण्यानि । अरण्यानि । असौ । या । प्रऽइव । नश्यसि । कथा । ग्रामं । न । पृच्छसि । न । त्वा । ःऽइव । विंदतीइँ ॥ वृषऽरवाय । वदते । यत् । उपऽअवति । चिच्चिकः । आघाटिभिःऽइव । धावयन् । अरण्यानिः । महीयते ॥ उत । गावःऽइव । अदंति । उत । वेश्मऽइव । दृश्यते । उतोइति । अरण्यानिः । सायं । शकटीःऽइव । सर्जति ॥ गां । अंग । एषः । आ । ह्वयति । दारु । अंग । एषः । अप । अवधीत् । वसन् । अरण्यान्यां । सायं । अक्रुक्षत् । इति । मन्यते ॥ न । वै । अरण्यानिः । हंति । अन्यः । च । इत् । न । अभिऽगच्छति । स्वादोः । फलस्य । जग्ध्वाय । यथाऽकामं । नि । पद्यते ॥ आंजनऽगंधिं । सुरभिं । बहुऽअन्नां । अकृषिऽवलां । प्र । अहं । मृगाणां । मातरं । अरण्यनिं । अशंसिषं ॥ ४ ॥ श्रत् । ते । दधामि । प्रथमाय । मन्यवे । अहन् । यत् । वृत्रं । नर्यं । विवेः । अपः । उभेइति । यत् । त्वा । भवतः । रोदसीइति । अनु । रेजते । शुष्मात् । पृथिवी । चित् । अद्रिऽवः ॥ त्वं । मायाभिः । अनवद्य । मायिनं । श्रवस्यता । मनसा । वृत्रं । अर्दयः । त्वां । इत् । नरः । वृणते । गोऽइष्टिषु । त्वां । विश्वासु । हव्यासु । इष्टिषु ॥ आ । एषु । चाकंधि । पुरुऽहूत । सूरिषु । वृधासः । ये । मघऽवन् । आनशुः । मघं ।

अर्चति । तोके । तनये । परिष्टिषु । मेधऽसाता । वाजिनं । अह्रये ।
धने ॥ सः । इत् । नु । रायः । सुऽभृतस्य । चाकनत् । मदं । यः ।
अस्य । रंह्यं । चिकेतति । त्वाऽवृधः । मघऽवन् । दाशुऽअध्वरः ।
मक्षु । सः । वाजं । भरते । धना । नृऽभिः ॥ त्वं । शर्धाय । महिना ।
गृणानः । ऊरु । कृधि । मघऽवन् । शग्धि । रायः । त्वं । नः । मित्रः ।
वरुणः । न । मायी । पित्वः । न । दस्म । दयसे । विऽभक्ता ॥ ५ ॥
सुस्वानासः । इंद्र । स्तुमसि । त्वा । ससऽवांसः । च । तुविऽनृम्ण ।
वाजं । आ । नः । भर । सुवितं । यस्य । चाकन् । त्मना । तना ।
सनुयाम । त्वाऽऊताः ॥ ऋष्वः । त्वं । इंद्र । शूर । जातः ॥ ० ॥
बिभृमसि । प्रऽस्रवणे । न । सोमं ॥ अर्यः । वा । गिरः । अभि ।
अर्च । विद्वान् । ऋषीणां । विप्रः । सुऽमतिं । चकानः । ते । स्याम ।
ये । रणयंत । सोमैः । एना । उत । तुभ्यं । रथऽओळ्ह । भक्षैः ॥
इमा । ब्रह्म । इंद्र । तुभ्यं । शंसि । दाः । नृऽभ्यः । नृणां । शूर ।
शवः । तेभिः । भव । सऽक्रतुः । येषु । चाकन् । उत । त्रायस्व ।
गृणतः । उत । स्तीन् ॥ श्रुधि । हवं । इंद्र । शूर । पृथ्याः । उत ।
स्तवसे । वेन्यस्य । अर्कैः । आ । यः । ते । योनिं । घृतऽवंतं । अस्वाः ।
ऊर्मिः । न । निम्नैः । द्रवयंत । वक्राः ॥ ६ ॥ सविता । यंत्रैः ।
पृथिवीं । अरम्णात् । अस्कंभने । सविता । द्यां । अदृंहत् । अश्वंऽ-
इव । अधुक्षत् । धुनिं । अंतरिक्षं । अतूर्ते । बद्धं । सविता । समुद्रं ॥
यत्र । समुद्रः । स्कभितः । वि । औनत् । अपां । नपात् । सविता ।
तस्य । वेद । अतः । भूः । अतः । आः । उत्थितं । रजः । अतः ।
द्यावापृथिवीइति । अप्रथेतां ॥ पश्चा । इदं । अन्यत् । अभवत् । यजत्रं ।
अमर्त्यस्य । भुवनस्य । भूना । सुऽपर्णः । अंग । सवितुः । गरुत्मान् ।
पूर्वः । जातः । सः । ऊँइति । अस्य । अनु । धर्म ॥ गावःऽइव ।
ग्रामं । युयुधिःऽइव । अश्वान् । वाश्राऽइव । वत्सं । सुऽमनाः ।
दुहाना । पतिःऽइव । जायां । अभि । नः । नि । एतु । धर्ता । दिवः ।

सविता । विश्वऽवारः ॥ हिरण्यऽस्तूपः । सवितः । यथा । त्वा । आंगिरसः । जुह्वे । वाजे । अस्मिन् : एव । त्वा । अर्चन् । अवसे । वंदमानः । सोमस्यऽइव । अंशुं । प्रति । जागर । अहं ॥ ७ ॥ संऽइद्धः । चित् । सं । इध्यसे । देवेभ्यः । हव्यऽवाहन । आदित्यैः । रुद्रैः । वसुऽभिः । नः । आ । गहि । मृळीकाय । नः । आ । गहि ॥ ० ॥ मर्तासः । त्वा । संऽइधान । हवामहे । मृळीकाय । हवामहे ॥ त्वां । ऊँइति । जातऽवेदसं । विश्वऽवारं । गृणे । धिया । अग्ने । देवान् । आ । वह । नः । प्रियऽव्रतान् । मृळीकाय । प्रियऽव्रतान् ॥ अग्निः । देवः । देवानां । अभवत् । पुरःऽहितः । अग्निं । मनुष्याः । ऋषयः । सं । ईधिरे । अग्निं । महः । धनऽसातौ । अहं । हुवे । मृळीकं । धनऽसातये ॥ अग्निः । अत्रिं । भरत्ऽवाजं । गविष्ठिरं । प्र । आवत् । नः । कण्वं । त्रसदस्युं । आऽहवे । अग्निं । वसिष्ठः । हवते । पुरःऽहितः । मृळीकाय । पुरःऽहितः ॥ ८ ॥ श्रद्धया । अग्निः । सं । इध्यते । श्रद्धया । हूयते । हविः । श्रद्धां । भगस्य । मूर्धनि । वचसा । आ । वेदयामसि ॥ प्रियं । श्रद्धे । ददतः । प्रियं । श्रद्धे । दिदासतः । प्रियं । भोजेषु । यज्वऽसु । इदं । मे । उदितं । कृधि ॥ यथा । देवाः । असुरेषु । श्रद्धां । उग्रेषु । चक्रिरे ॥ एवं । भोजेषु । यज्वऽसु । अस्माकं । उदितं । कृधि । श्रद्धां । देवाः । यजमानाः । वायुऽगोपाः । उप । आसते । श्रद्धां । हृदय्यया । आऽकूत्या । श्रद्धया । विंदते । वसु ॥ श्रद्धां । प्रातः । हवामहे । श्रद्धां । मध्यंदिनं । परि । श्रद्धां । सूर्यस्य । निऽम्रुचि । श्रद्धे । श्रत् । धापय । इह । नः ॥ ९ ॥ शासः । इत्था । महान् । असि । अमित्रऽखादः । अद्भुतः । न । यस्य । हन्यते । सखा । न । जीयते । कदा । चन ॥ स्वस्तिऽदाः । विशः । पतिः । वृत्रऽहा । विऽमृधः । वशी । वृषा । इंद्रः । पुरः । एतु । नः । सोमऽपाः । अभयंऽकरः ॥ वि । रक्षः । वि । मृधः । जहि । वि । वृत्रस्य । हनूइति । रुज । वि । मन्युं । इंद्र । वृत्रऽहन् ।

अमित्रस्य । अभिऽदासतः ॥ वि । नः । इंद्र । मृधः । जहि । नीचा । यच्छ । पृतन्यतः । यः । अस्मान् । अभिऽदासति । अधरं । गमय । तमः ॥ अप । इंद्र । द्विषतः । मनः । अप । जिज्यासतः । वधं । वि । मन्योः । शर्म । यच्छ । वरीयः । यवय । वधं ॥ १० ॥ ईंखयंतीः । अपस्युवः । इंद्रं । जातं । उप । आसते । भेजानासः । सुऽवीर्यं ॥ त्वं । इंद्र । बलात् । अधि । सहसः । जातः । ओजसः । त्वं । वृषन् । वृषा । इत् । असि ॥ त्वं । इंद्र । असि । वृत्रऽहा । वि । अंतरिक्षं । अतिरः । उत् । द्यां । अस्तभ्नाः । ओजसा ॥ त्वं । इंद्र । सऽजोषसं । अर्कं । बिभर्षि । बाह्वोः । वज्रं । शिशानः । ओजसा ॥ त्वं । इंद्र । अभिऽभूः । असि । विश्वा । जातानि । ओजसा । सः । विश्वाः । भुवः । आ । अभवः ॥ ११ ॥ सोमः । एकेभ्यः । पवते । घृतं । एके । उप । आसते । येभ्यः । मधु । प्रऽधावति । तान् । चित् । एव । अपि । गच्छतात् ॥ तपसा । ये । अनाधृष्याः । तपसा । ये । स्वः । ययुः । तपः । ये । चक्रिरे । महः ॥ ० ॥ ये । युध्यंते । प्रऽधनेषु । शूरासः । ये । तनूऽत्यजः । ये । वा । सहस्रऽदक्षिणाः ॥ ० ॥ ये । चित् । पूर्वे । ऋतऽसापः । ऋतऽवानः । ऋतऽवृधः । पितृन् । तपस्वतः । यम ॥ ० ॥ सहस्रऽनीथाः । कवयः । ये । गोपायंति । सूर्यं । ऋषीन् । तपस्वतः । यम । तपःऽजान् । अपि । गच्छतात् ॥ १२ ॥ अरायि । काणे । विऽकटे । गिरिं । गच्छ । सदान्वे । शिरिंबिठस्य । सत्वऽभिः । तेभिः । त्वा । चातयामसि ॥ चत्तोइतिं । इतः । चत्ता । अमुतः । सर्वा । भ्रूणानि । आरुषी । अराय्यं । ब्रह्मणः । पते । तीक्ष्णऽशृंग । उत्ऽऋषन् । इहि ॥ अदः । यत् । दारु । प्लवते । सिंधोः । पारे । अपुरुषं । तत् । आ । रभस्व । दुर्हनोइतिदुःऽहनो । तेन । गच्छ । परःऽतरं । यत् । ह । प्राचीः । अजगंत । उरः । मंडूरऽधाणिकीः । हताः । इंद्रस्य । शत्रवः । सर्वे । बद्बदऽयाशवः ॥ परि । इमे । गां ।

अनेषत । परि । अग्निं । अहृषत । देवेषु । अकृत । श्रवः । कः ।
इमान् । आ । दधर्षति ॥ १३ ॥ अग्निं । हिन्वंतु । नः । धियः ।
सप्तिं । आशुंऽइव । आजिषु । तेन । जेष्म । धनंऽधनं ॥ यया । गाः ।
आऽकरामहे । सेनया । अग्ने । तव । ऊत्या । तां । नः । हिन्व ।
मघत्तये ॥ आ । अग्ने । स्थूरं । रयिं । भर । पृथुं । गोऽमंतं । अश्विनं ।
अङ्धि । खं । वर्तय । पणिं ॥ अग्ने । नक्षत्रं । अजरं । आ । सूर्यं ।
रोहयः । दिवि । दधत् । ज्योतिः । जनेभ्यः ॥ अग्ने । केतुः । विशां ।
असि । प्रेष्ठः । श्रेष्ठः । उपस्थऽसत् । बोध । स्तोत्रे । वयः । दधत् ॥
॥ १४ ॥ इमा । नु । कं । भुवना । सीसधाम । इंद्रः । च । विश्वे ।
च । देवाः । यज्ञं । च । नः । तन्वं । च । प्रऽजां । च । आदित्यैः ।
इंद्रः । सह । चीक्लृपाति ॥ आदित्यैः । इंद्रः । सऽगणः । मरुत्ऽभिः ।
अस्माकं । भूतु । अविता । तनूनां । हत्वाय । देवाः । असुरान् ।
यत् । आयन् । देवाः । देवऽत्वं । अभिऽरक्षमाणाः ॥ प्रत्यंचं । अर्कं ।
अनयत् । शचीभिः ॥ ० ॥ १५ ॥ सूर्यः । नः । दिवः । पातु । वातः ।
अंतरिक्षात् । अग्निः । नः । पार्थिवेभ्यः ॥ जोष । सवितः । यस्य ।
ते । हरः । शतं । सवान् । अर्हति । पाहि । नः । दिद्युतः । पतंत्याः ॥
चक्षुः । नः । देवः । सविता । चक्षुः । नः । उत । पर्वतः । चक्षुः ।
धाता । दधातु । नः ॥ चक्षुः । नः । धेहि । चक्षुषे । चक्षुः । विऽ-
ख्यै । तनूभ्यः । सं । च । इदं । वि । च । पश्येम ॥ ० ॥ वि ।
पश्येम । नृऽचक्षसः ॥ १६ ॥ उत् । असौ । सूर्यः । अगात् । उत् । अयं ।
मामकः । भगः । अहं । तत् । विद्वला । पतिं । अभि । असाक्षि ।
विऽसहिः ॥ अहं । केतुः । अहं । मूर्धा । अहं । उग्रा । विऽवाचनी ।
मम । इत् । अनु । क्रतुं । पतिः । सेहानायाः । उपऽआचरेत् ॥ मम ।
पुत्राः । शत्रुऽहनः । अथो इति । मे । दुहिता । विऽराट् । उत ।
अहं । अस्मि । संऽजया । पत्यौ । मे । श्लोकः । उत्ऽतमः । येन ।
इंद्रः । हविषा । कृत्वी । अभवत् । द्युम्नी । उत्ऽतमः । इदं । तत् ।

अक्रि । देवाः । असपत्ना । किल । अभुवं ॥ असपत्ना । सपत्नऽघ्नी । जयंती । अभिऽभूवरी । आ । अवृक्ष । अन्यासां । वर्चः । राधः । अस्थेयसांऽइव ॥ सं । अजैषं । इमाः । अहं । सऽपत्नीः । अभिऽभूवरी । यथा । अहं । अस्य । वीरस्य । विऽराजानि । जनस्य । च ॥ १७ ॥ तीव्रस्य । अभिऽवयसः । अस्य । पाहि । सर्वऽरथा । वि । हरीइति । इह । मुंच । इंद्र । मा । त्वा । यजमानासः । अन्ये । नि । रीरमन् । तुभ्यं । इमे । सुतासः ॥ तुभ्यं । सुताः । तुभ्यं । ऊँइति । सोत्वासः । त्वां । गिरः । श्वात्र्याः । आ । ह्वयंति । इंद्र । इदं । अद्य । सवनं । जुषाणः । विश्वस्य । विद्वान् । इह । पाहि । सोमं ॥ यः । उशता । मनसा । सोमं । अस्मै । सर्वऽहृदा । देवऽकामः । सुनोति । न । गाः । इंद्रः । तस्य । परा । ददाति । प्रऽशस्तं । इत् । चारुं । अस्मै । कृणोति ॥ अनुऽस्पष्टः । भवति । एषः । अस्य । यः । अस्मै । रेवान् । न । सुनोति । सोमं । निः । अरत्नौ । मघऽवा । तं । दधाति । ब्रह्मऽद्विषः । हंति । अननुऽदिष्टः ॥ अश्वऽयंतः । गव्यंतः । वाजयंतः । हवामहे । त्वा । उपऽगंतवै । ऊँइति । आऽभूषंतः । ते । सुऽमतौ । नवायां । वयं । इंद्र । त्वा । शुनं । हुवेम ॥ १८ ॥ मुंचामि । त्वा । हविषा । जीवनाय । कं । अज्ञातऽयक्ष्मात् । उत । राजऽयक्ष्मात् । ग्राहिः । जग्राह । यदि । वा । एतत् । एनं । तस्याः । इंद्राग्नीइति । प्र । मुमुक्तं । एनं । यदि । क्षितऽआयुः । यदि । वा । पराऽइतः । यदि । मृत्योः । अंतिकं । निऽइतः । एव । तं । आ । हरामि । निःऽऋतेः । उपऽस्थात् । अस्पार्षं । एनं । शतऽशारदाय ॥ सहस्रऽअक्षेण । शतऽशारदेन । शतऽआयुषा । हविषा । आ । अहार्षं । एनं । शतं । यथा । इमं । शरदः । नयाति । इंद्रः । विश्वस्य । दुःऽइतस्य । पारं ॥ शतं । जीव । शरदः । वर्धमानः । शतं । हेमंतान् । शतं । ऊँइति । वसंतान् । शतं । इंद्राग्नीइति । सविता । बृहस्पतिः । शतऽआयुषा । हविषा । इमं । पुनः । दुः ॥ आ ।

अहार्षं । त्वा । अविदं । त्वा । पुनः । आ । अगाः । पुनःऽनव । सर्वऽअंग । सर्वं । ते । चक्षुः । सर्वं । आयुः । च । ते । विदं ॥ १९ ॥
ब्रह्मणा । अग्निः । संऽविदानः । रक्षःऽहा । बाधतां । इतः । अमीवा । यः । ते । गर्भं । दुःऽनामा । योनिं । आऽशये ॥ ० ॥ अग्निः । तं । ब्रह्मणा । सह । निः । क्रव्यऽअदं । अनीनशत् ॥ यः । ते । हंति । पतयंतं । निऽसत्स्नुं । यः । सरीसृपं । जातं । यः । ते । जिघांसति । तं । इतः । नाशयामसि ॥ यः । ते । ऊरूइति । विऽहरति । अंतरा । दंपतीइतिदंऽपती । शये । योनिं । यः । अंतः । आऽरेळिह ॥ ० ॥ यः । त्वा । भ्राता । पतिः । भूत्वा । जारः । भूत्वा । निऽपद्यते ॥ ० ॥ प्रऽजां ॥ ॥ ० ॥ यः । त्वा । स्वप्नेन । तमसा । मोहयित्वा । निऽपद्यते ॥ २० ॥
अक्षीभ्यां । ते । नासिकाभ्यां । कर्णाभ्यां । छुबुकात् । अधि । यक्ष्मं । शीर्षण्यं । मस्तिष्कात् । जिह्वायाः । वि । वृहामि । ते ॥ ग्रीवाभ्यः । ते । उष्णिहाभ्यः । कीकसाभ्यः । अनूक्यात् । यक्ष्मं । दोषण्यं । अंसाभ्यां । बाहुऽभ्यां ॥ ० ॥ आंत्रेभ्यः । ते । गुदाभ्यः । वनिष्ठोः । हृदयात् । अधि । यक्ष्मं । मतस्नाभ्यां । यक्नः । प्लाशिऽभ्यः ॥ ० ॥ ऊरुऽभ्यां । ते । अष्ठीवत्ऽभ्यां । पार्ष्णिऽभ्यां । प्रऽपदाभ्यां । यक्ष्मं । श्रोणिऽभ्यां । भासदात् । भंससः ॥ ० ॥ मेहनात् । वनंऽकरणात् । लोमऽभ्यः । ते । नखेभ्यः । यक्ष्मं । सर्वस्मात् । आत्मनः । तं । इदं ॥ ० ॥अंगात्ऽअंगात् । लोम्नःऽलोम्नः । जातं । पर्वणिऽपर्वणि ॥ ० ॥ २१ ॥ अप । इहि । मनसः । पते । अप । क्राम । परः । चर । परः । निःऽऋत्यै । आ । चक्ष्व । बहुधा । जीवतः । मनः ॥ भद्रं । वै । वरं । वृणुते । भद्रं । युंजंति । दक्षिणं । भद्रं । वैवस्वते । चक्षुः । बहुऽत्रा । जीवतः । मनः ॥ यत् । आऽशसा । निःऽशसा । अभिऽशसा । उपऽआरिम । जाग्रतः । यत् । स्वपंतः ॥ अग्निः । तत् । विश्वानि । अप । दुःऽकृतानि । अजुष्टानि । आरे । अस्मत् । दधातु । यत् । इंद्र । ब्रह्मणः । पते । अभिऽद्रोहं । चरामसि ॥ प्रऽचेताः । नः । आंगिरसः । द्विषतां । पातु । अंहसः ॥ ० ॥ जाग्रत्ऽ-

स्वप्नः । सम्ऽकल्पः । पापः । यं । द्विष्मः । तं । सः । ऋच्छतु । यः । नः । द्वेष्टि । तं । ऋच्छतु ॥ २२ ॥ देवाः । कपोतः । इषितः । यत् । इच्छन् । दूतः । निःऽऋत्याः । इदं । आऽजगाम । तस्मै । अर्चाम । कृणवाम । निःऽकृतिं । शं । नः । अस्तु । द्विऽपदे । शं । चतुःऽपदे ॥ शिवः । कपोतः । इषितः । नः । अस्तु । अनागाः । देवाः । शकुनः । गृहेषु । अग्निः । हि । विप्रः । जुषतां । हविः । नः । परि । हेतिः । पक्षिणी । नः । वृणक्तु ॥ हेतिः । पक्षिणी । न । दभाति । अस्मान् । आष्ट्र्यां । पदं । कृणुते । अग्निऽधाने । शं । नः । गोभ्यः । च । पुरुषेभ्यः । च । अस्तु । मा । नः । हिंसीत् । इह । देवाः । कपोतः ॥ यत् । उलूकः । वदति । मोघं । एतत् । यत् । कपोतः । पदं । अग्नौ । कृणोति । यस्य । दूतः । प्रऽहितः । एषः । एतत् । तस्मै । यमाय । नमः । अस्तु । मृत्यवे ॥ ऋचा । कपोतं । नुदत । प्रऽनोदं । इषं । मदंतः । परि । गां । नयध्वं । सम्ऽयोपयंतः । दुःऽइतानि । विश्वा । हित्वा । नः । ऊर्जं । प्र । पतात् । पतिष्ठः ॥ २३ ॥ ऋषभं । मा । समानानां । सऽपत्नानां । विऽससहिं । हंतारं । शत्रूणां । कृधि । विऽराजं । गोऽपतिं । गवां ॥ अहं । अस्मि । सपत्नऽहा । इंद्रःऽइव । अरिष्टः । अक्षतः । अधः । सऽपत्नाः । मे । पदोः । इमे । सर्वे । अभिऽस्थिताः ॥ अत्र । एव । वः । अपि । नह्यामि । उभेइति । आर्त्नीइवेत्यार्त्नीऽइव । ज्यया । वाचः । पते । नि । सेध । इमान् । यथा । मत् । अधरं । वदान् ॥ अभिऽभूः । अहं । आ । अगमं । विश्वऽकर्मेण । धाम्ना । आ । वः । चित्तं । आ । वः । व्रतं । आ । वः । अहं । संऽइति । ददे ॥ योगऽक्षेमं । वः । आऽदाय । अहं । भूयासं । उत्ऽतमः । आ । वः । मूर्धानं । अक्रमीं । अधःऽपदात् । मे । उत् । वदत । मंडूकाःऽइव । उदकात् । मंडूकाः । उदकात्ऽइव ॥ २४ ॥ तुभ्यं । इदं । इंद्र । परि । सिच्यते । मधु । त्वं । सुतस्य । कलशस्य । राजसि । त्वं । रयिं । पुरुऽवीरां । ऊँइति । नः । कृधि । त्वं । तपः ।

परिऽतप्यं । अजयः । स्वरितिस्वः ॥ स्वःऽजितं । महि । मंदानं । अंधसः । हवामहे । परि । शक्रं । सुतान् । उप । इमं । नः । यज्ञं । इह । बोधि । आ । गहि । स्पृधः । जयंतं । मघऽवानं । ईमहे ॥ सोमस्य । राज्ञः । वरुणस्य । धर्मणि । बृहस्पतेः । अनुऽमत्याः । ऊँइति । शर्मणि । तव । अहं । अद्य । मघऽवन् । उपऽस्तुतौ । धातः । विऽधातरितिविऽधातः । कलशान् । अभक्षयं ॥ प्रऽसूतः । भक्षं । अकरं । चरौ । अपि । स्तोमं । च । इमं । प्रथमः । सूरिः । उत् । मृजे । सुते । सातेन । यदि । आ । अगमं । वां । प्रति । विश्वामित्रजमदग्नीइति । दमे ॥ २५ ॥ वातस्य । नु । महिमानं । रथस्य । रुजन् । एति । स्तनयन् । अस्य । घोषः । दिविऽस्पृक् । याति । अरुणानि । कृण्वन् । उतोइति । एति । पृथिव्या । रेणुं । अस्यन् ॥ सं । प्र । ईरते । अनु । वातस्य । विऽस्थाः । आ । एनं । गच्छंति । समनं । न । योषाः । ताभिः । सऽयुक् । सऽरथं । देवः । ईयते । अस्य । विश्वस्य । भुवनस्य । राजा ॥ अंतरिक्षे । पथिऽभिः । ईयमानः । न । नि । विशते । कतमत् । चन । अहरिति ॥ अपां । सखा । प्रथमऽजाः । ऋतऽवा । क्व । स्वित् । जातः । कुतः । आ । बभूव । आत्मा । देवानां । भुवनस्य । गर्भः । यथाऽवशं । चरति । देवः । एषः । घोषाः । इत् । अस्य । शृण्विरे । न । रूपं । तस्मै । वाताय । हविषा । विधेम ॥ २६ ॥ मयःऽभूः । वातः । अभि । वातु । उस्राः । ऊर्जस्वतीः । ओषधीः । आ । रिशंतां । पीवस्वतीः । जीवऽधन्याः । पिबंतु । अवसाय । पत्ऽवते । रुद्र । मृळ ॥ याः । सऽरूपाः । विऽरूपाः । एकऽरूपाः । यासां । अग्निः । इष्ट्या । नामानि । वेद । याः । अंगिरसः । तपसा । इह । चक्रुः । ताभ्यः । पर्जन्य । महि । शर्म । यच्छ ॥ याः । देवेषु । तन्वं । ऐरयंत । यासां । सोमः । विश्वा । रूपाणि । वेद ॥ ० ॥ प्रजाऽवतीः । इंद्र । गोऽस्थे । रिरीहि । प्रजाऽपतिः । मह्यं । एताः । रराणः । विश्वैः । देवैः । पितृऽभिः । संऽविदानः । शिवाः । सतीः । उप । नः । गोऽस्थं । आ ।

